**अनुभावः**–१ अनुभववदस्यार्थोऽनुसंधेयः । २ कोषदण्डादिजातो राज्ञां तेजोविशेष इति नीतिशास्त्रज्ञाः । ३ रसव्यञ्जको भ्रूभङ्गादिरित्यालंकारिकाः । ४ सामर्थ्यमिति केचिदाहुः । (वाच०)

**अनुभूतिः**–अनुभववदस्यार्थोऽनुसंधेयः । (भा०प०५२) अनुभूतिः प्रत्यक्षात्मिकैवेति चार्वाका आहुः । अनुमितिरपीति काणादसौगतौ । उपमितिरपीति केचिन्नैयायिकैकदेशिनः । अर्थापत्तिरपीति प्राभाकराः । अनुपलब्धिरपीति भट्टवेदान्तिनः । संभवरूपा, ऐतिह्यरूपा चापीति पौराणिकाः । (दि० १।३) (सि०च० २०) चेष्टाऽपीति तान्त्रिकाः । (सि०च० २०)

**अनुमतिः**– १ अनुज्ञा । यथा, अनुमत्या व्यपेयादित्यादौ । २ कलाहीनचन्द्रवती शुक्लचतुर्दशीयुक्ता पूर्णिमातिथिरिति याज्ञिका आहुः । ( वाच०)

**अनुमानम्**–(प्रमाणम्) १ अनुमितिकरणम् । (गौ० वृ०) (त०सं०) अनुमितिकरणं द्विविधम् । तत्र प्रथमं व्याप्तिज्ञानम् । (गौ० वृ० १।१।५) यथा पर्वतो वह्निमान् धूमादित्यादौ 'धूमो वह्निव्याप्यः' इति व्याप्तिज्ञानमनुमितिकरणं भवति । (त०कौ० १०) द्वितीयं तु लिङ्गपरामर्शः । यथा

---

१ तत्रोक्तम्–भावं मनोगतं साक्षात्स्वगतं व्यञ्जयन्ति ये । तेऽनुभावा इति ख्याताः, इति । उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् । लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः, इति च । (वाच०)

२ अत्र, मितेन लिङ्गेनार्थस्य पश्चान्मानमनुमानमिति व्युत्पत्तिः । ( वात्स्या० १।१।३ ) अनुमानस्य द्वे अङ्गे । व्याप्तिः, पक्षधर्मता चेति । तत्र व्याप्त्या साध्यसामान्यसिद्धिः । हेतोः पक्षधर्मताबलात् साध्यस्य पक्षधर्मत्वविशेषः सिध्यति । पक्षधर्मेण धूमवत्त्वेनाग्निरपि पर्वतसंबद्ध एवानुमीयते । ( त० भा० १४ )

३ भाष्यकारा अपि 'अनुमानं च [ क ] लिङ्गलिङ्गिनोः संबन्धदर्शनम्' । (वात्स्या० १।१।५) [ ख ] प्रत्यक्षेणाप्रत्यक्षस्य संबद्धस्य प्रतिपत्तिः, इत्याहुः । ( वात्स्या० २।२।२ )

४ तच्च, तत्पूर्वकमित्यनेन लक्ष्यते ( गौ० सू० १।१।५ ) एतस्य करणत्वाभिधानं च, व्यापारवदसाधारणकारणं करणमिति प्राचीनमतानुसारेण । अस्मिन् मतेऽनुमितिकरणत्वस्य 'जनकतयाऽनुमितित्वावच्छिन्नजनकत्वे सत्यनुमितित्वावच्छिन्नजनकम्' इत्यर्थः । (वाक्य० ) अत्र व्यापारस्तृतीयलिङ्गपरामर्शो ज्ञेयः । ( त० कौ० )

५ अत्र च, फलायोगव्यवच्छिन्नं कारणं करणमिति नवीनमतानुसारेणैतस्य करणत्वाभिधानमिति विज्ञेयम् ।

'वह्निव्याप्यधूमवानयम्' इति ज्ञानमनुमितेः करणं भवति । ( चि० २ ) ( त० भा० ) ( त० सं० ) अनुमानं द्विविधम् । स्वार्थम्[1], परार्थम्[2] । आद्यं स्वानुमितिहेतुः[3] । द्वितीयं परानुमितिहेतुः[4] । ( त० सं० ) प्रकारान्तरेणानुमानं त्रिविधम् । पूर्ववत्[5], शेषवत्[6], सामान्यतो[7] दृष्टम् । एवं केवलान्वयि, केवलव्यतिरेकि, अन्वयव्यतिरेकि इत्यपि त्रिविधमनुमानमनेनैव विभागेन बोध्यम् । (गौ० १।१।५) वीतमवीतमिति भेदेन द्विविधमनुमानमिति सांख्याः । मीमांसकास्तु, अन्वयव्यतिरेक्याख्यमेकमेवानुमानमस्ति । केवलान्वयि, केवलव्यतिरेकि वाऽनुमानं नास्तीत्याहुः । (म०प्र० १८) अनुमानस्य द्वे अङ्गे । व्याप्तिः, पक्षधर्मता चेति । (म० प्र० २।२३) २ लिङ्गम् । ( चि० २ )

---

१ अत्र व्युत्पत्तिः 'स्वस्यैवार्थः प्रयोजनं ( अनुमितिः ) यस्मात्तत् स्वार्थम्' इति द्रष्टव्या ।

२ अत्र व्युत्पत्तिः 'परस्य प्रतिवादिनो मध्यस्थस्य वा अर्थोऽनुमित्यात्मकं प्रयोजनं संशयनिवृत्तिर्वा यस्मात्तत् परार्थम्' इति द्रष्टव्या ।

३ तथा हि । यत्र स्वयमेव भूयोदर्शनेन 'यत्र धूमस्तत्राग्निरिति' महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते धूमं पश्यन् 'यत्र धूमस्तत्राग्निः' इति व्याप्तिं स्मरति । तदनन्तरं 'वह्निव्याप्यधूमवान्पर्वतः' इति ज्ञानमुत्पद्यते । अयं लिङ्गपरामर्श इत्युच्यते । तस्मात् 'पर्वतो वह्निमान्' इति ज्ञानम् अनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् । ( त० सं० )

४ तथा हि । यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयवोपेतं वाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् । ( त० सं० )

५ अत्र व्युत्पत्तिः 'पूर्वं कारणं तद्वत्' इति । तदर्थस्तु [ क ] कारणलिङ्गकम् । यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम् । ( गौ० वृ० १।१।५ ) [ ख ] यत्र कारणेन कार्यमनुमीयते । यथा मेघोन्नत्या 'भविष्यति वृष्टिः' इति । ( वात्स्या० १।१।५)

६ अत्र व्युत्पत्तिः 'शेषः कार्यं तद्वत्' इति । तदर्थस्तु [ क ] कार्यलिङ्गकम् । यथा नदीवृद्ध्या वृष्ट्यनुमानम् । ( गौ० वृ० १।१।५) [ ख ] यत्र कार्येण कारणमनुमीयते । पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमीयते 'भूता वृष्टिः' इति । ( वात्स्या० १।१।५ )

७ कार्यकारणभिन्नलिङ्गकमित्यर्थः । यथा पृथिवीत्वेन द्रव्यत्वानुमानम् । ( गौ० वृ० १।१।५) यथा वा इच्छादिभिरात्मानुमानम् । इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति । ( वात्स्या० १।१।५)

**अनु[1]मितिः**–( अनुभवः ) [ क ] व्याप्तिविशिष्टपक्षधर्मताज्ञाने[2]जन्यं ज्ञानम् । ( चि० २ )

[ ख ] परामर्शजन्यं ज्ञानम् । (त० सं०)

[ ग ] लिङ्गज्ञानजन्यं लिङ्गिज्ञानम् । ( त० कौ० )

[ घ ] व्याप्तिज्ञानकरणकं ज्ञानम् (मु०) यथा पर्वते धूमेन वह्निसाधने, पर्वते धूमज्ञानानन्तरं 'पर्वतो वह्निमान्' इति ज्ञानम् । (त० कौ०) (त० सं०) अनुमितिर्द्वेधा[3] । पक्षतावच्छेदकसाध्ययोः सामानाधिकरण्यमात्रावगाहिनी, तयोरवच्छेद्यावच्छेदकभावावगाहिनी च । ( ग० पक्ष० ) प्रकारान्तरेणानुमितिर्द्विविधा । लाघवज्ञानसहकृताऽनुमितिः, इतरबाधग्रहसहकृताऽनुमितिश्चेति । ( ख० )

**अनुयोगिता**–१ स्वरूपसंबन्धविशेषः[4] । यथा भूतले घटसत्तादशायां भूतलनिष्ठा भूतलस्वरूपा संयोगसंबन्धस्यानुयोगिता । ( स्व० ) २ अभावत्वात्मिका । ( ग० सि० ) यथा 'घटो नास्ति' इति प्रतीतिविषयेऽभावे घटनिष्ठप्रतियोगितानिरूपिताऽनुयोगिता । ( स्व० )

**अनुवादः**[5]–( अर्थवादः ) [क] विधिविहितस्यानुवचनम् । (गौ० २।६४)

---

१ लक्षणं च [क] अनुमितित्वमेव । तच्च 'अनुमिनोमि' इत्यनुभवसिद्धो जातिविशेषः । [ख] जन्यशब्दधीजन्यत्वव्यभिचारिणी या जन्यज्ञानजन्यत्वाव्यभिचारिणी च जातिः (अनुमितित्वम्) तद्वदनुभवात्मम् । (न्या० म० २।१४) (त० प्र०) पदप्रयोजनादिकं तु तत एव ज्ञेयम् ।

२ अत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानेन* जन्यमिति विग्रहः । तदर्थश्च व्याप्तिविशिष्टपक्षधर्मत्वविषयताशालिनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यत्वे सति ज्ञानम् । ( वाक्य० ) व्याप्तिनिष्ठप्रकारतानिरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्नविशेष्यता तच्छालिज्ञानजन्यं ज्ञानमिति निर्गलितोऽर्थः । (दि० २।१३८)

३ अत्रेदमवधेयम् । 'पर्वतो वह्निमान्' इत्याद्यनुमितौ यदा वह्निपर्वतत्वयोः सामानाधिकरण्यमात्रं विवक्षितं तदा साऽनुमितिः सामानाधिकरण्यमात्रावगाहिनी । यदा तु तयोर्व्याप्यव्यापकभावो विवक्षितस्तदाऽवच्छेद्यावच्छेदकभावावगाहिनी भवतीति ।

४ इयमपि स्वरूपसंबन्धविशेष एवेति केचिन्नैयायिका वदन्ति । अखण्डोपाधिरित्यन्ये वदन्ति ।

५ प्राप्तस्यानु पश्चात् कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम् । (गौ० वृ० २।६५)

---

* तादृशज्ञानं च परामर्शशब्दव्याख्यानावसरे निरूपयिष्यामः । अत्रेदं बोध्यम्–ज्ञानलक्षणसंनिकर्षसत्त्वेऽपि, तस्य दुर्बलत्वेन परामर्शानन्तरं पर्वते वह्न्यनुमितिरेव, न तु प्रत्यक्षमिति । ( म० प्र० ७३ )

विध्यनुवचनं चानुवादो विहितानुवचनं च । पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः । ....किमर्थं पुनर्विहितमनूद्यते । अधिकारार्थम् । विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा, विधिशेषो वाऽभिधीयते । विहितानन्तरार्थोऽपि चानुवादो भवति ।........लोकेपि चानुवादः । पचतु पचतु भवानित्यभ्यासः । क्षिप्रं पच्यतामिति वा, अङ्ग ! पच्यतामित्यध्येषणार्थम् । पच्यतामेवेति वाऽवधारणार्थम् । ( वात्स्या० २।१।६४ )

[ ख ] प्रमाणान्तरेणावधृतस्यार्थस्य प्रतिपादकः । यथा, अग्निर्हिमस्य भेषजमित्यादिः । ( सि० च० ३३ ) ( म० प्र० ६४ ) अन्यरीत्याऽनुवादस्त्रिविधः । भूतार्थानुवादः, स्तुत्यर्थानुवादः, गुणानुवादश्चेति । आद्यो यथा, सदेव सौम्य इदमग्र आसीदित्यादिः; वज्रहस्तः पुरंदर इत्यादिश्च । द्वितीयः, वायुर्वै क्षेपिष्ठेत्यादिः । तृतीयः, अग्निहोत्रं जुहोतीति वाक्येन प्राप्तस्याग्निहोत्रहोमस्य 'दध्ना जुहोति' इत्यादि वाक्यमनुवादः । (वाच०)

**अनुवादकत्वम्**—गृहीतग्राह्यनुभवमात्रजनकत्वम् । ( कु० व्या० ३ )

**अनुवाद्यता**—प्रमाणान्तरसिद्धस्य किंचिद्धर्मविधानार्थं पुनरुपन्यास्यता । यथा पर्वतो वह्निमानित्यादौ पर्वतरूपोद्देश्यस्य सिद्धत्वेऽपि वह्निमत्त्वरूपधर्मविधानार्थमुपन्यासः । ( वाच० )

**अनुवृत्तत्वम्**—१ सामानाधिकरण्यम् । ( ग० सव्य० ) यथा धूमानुवृत्तो वह्निरित्यादौ वह्नौ धूमानुवृत्तत्वम् । २ धारातः प्राप्तत्वम् । यथा विज्ञानवादिबौद्धमते विज्ञानसंतानस्यानुवृत्तत्वम् । ( स्व० )

---

१ भेषजं विरोधीत्यर्थः । अत्र, हिमविरोधित्वस्याग्नौ प्रत्यक्षावगतत्वादेतद्वाक्यस्यानुवादकत्वमिति बोध्यम् । ( लौ० भा० )

२ अयं च विधिसमभिव्याहाराभावेऽप्यनुवादोऽस्तीति वृत्तावुच्यते । ( गौ० वृ० २।६५ )

३ अत्र तादृशहोमे दध्यधिकरणकत्वमात्रं गुणो विधीयत इति बोध्यम् ।

४ *स्वसमानाधिकरणस्वाव्यवहितपूर्ववर्तिस्वसमानाकारनिश्चयविषयविषयकतद्बुद्धिजन्यकतत्प्रकारकानुभवमात्रजनकत्वमिति यावत् । ( कु० व्या० ३ )

---

* अत्र स्वपदमनुभवादिपरम् । ( कु० )

**अनुवृत्तिः**—दवीयस्थानान्तरस्थितस्य (पदस्य) सर्वत्रानुसंधानम्। (दि॰ ४। १८८) तच्च,व्याकरणादौ पूर्वसूत्रस्थपदस्योत्तरसूत्रे आकाङ्क्षापूरणार्थमनुसंधानम्। यथा 'इको यणचि' इत्यतोऽचीति सप्तम्यन्तपदस्य 'आद्गुणः' इत्यादावनुवृत्तिः। अनुवृत्तिस्त्रिधा। सिंहावलोकितवत्, मण्डूकप्लुतिवत्, गङ्गास्रोतोवत्, इति (दि॰ ४।१८८)

**अनुव्यवसायः**—व्यवसायगोचरं प्रत्यक्षम्। (म॰प्र॰१९) यथा घटज्ञानानन्तरं 'घटमहं जानामि' इति मानसं ज्ञानम्। (स्व॰) २ ज्ञातताऽवभासकं ब्रह्मचैतन्यमिति मायावादिनः। (पञ्च॰ कूट॰)

**अनुशासनम्**—१ गमकम्। यथा अथ शब्दानुशासनमित्यादौ। (स्व॰) २ यथार्थज्ञापनम्। यथा, ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपन्हुते तद्द्विगुणं तन्मनोरनुशासनमित्यादौ। ३ दण्डनम्। यथा, एष स्तेनानुशासी राजेत्यादौ। (विक्रमोर्वशी.) ४ देशनया प्रवर्तना। यथा पुत्रं धर्ममनुशास्तीत्यादौ धात्वर्थः। (श॰ प्र॰ ९९)

**अनुषङ्गः**—१ अविनाभावः। यथा सुखं दुःखानुषङ्गाद्दुःखमेवेत्यादौ। (त॰ भा॰ ४१) २ नेदीयस्थानान्तरस्थितस्य (पदस्य) क्वचिदनुसंधानम्। (दि॰ ४।१८८) यथा पञ्चावयववाक्येषु उपनयवाक्यस्थस्य 'अयम्' इति पदस्य 'तस्माद्वह्निमान्' इति निगमनवाक्येऽनुषङ्गः। (स्व॰) ३ [क] प्रसङ्गः। स चान्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविधयाऽन्यसिद्धिः। यथा, क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते। नित्यक्रियां तथा चान्ये ह्यनुषङ्गफलां श्रुतिमित्यादौ। (वाच॰)

[ख] अन्यार्थं प्रवृत्तस्य नान्तरीयकफलजनकत्वमित्यपि केचिद्वदन्ति।

---

१ तदर्थश्च, [क] ज्ञापकम्। [ख] ज्ञानम्।

२ अत्र, पुत्रनिष्ठस्य देशनया प्रवर्तनस्यानुकूलव्यापारवानित्यर्थः। तथाविधो व्यापारः 'संध्यां विधेहि, समिधमाधेहि' इत्याद्युपदेशरूपः। (श॰ प्र॰ ९९)

३ सा च यथा, विप्रवधमात्राभिप्रायेण तन्नान्तरीयकविधया अवगोरणदण्डनिपातनप्रायश्चित्तसिद्धिः।

४ नान्तरीयकत्वं च तत्सत्तानियतसत्ताकत्वम्।

**अनेकद्रव्यत्वम्**–[ क ] अनेकद्रव्याश्रिताश्रितत्वम् ।
[ ख ] अवयवबहुत्वाधीनमहत्त्वाश्रयत्वम् । ( वै० उ० ४।१।६ )
[ ग ] अनेकसमवेतसमवेतत्वम् । ( वै० वि० ४।१।६ )
[ घ ] पारिमाण्डल्याभावविशिष्टद्रव्यत्वम् । ( सि० च० २० )
[ ङ ] अणुभिन्नद्रव्यत्वम् । ( दि० १।९४ ) यथा प्रत्यक्षे महत्त्वं कारणम्, अनेकद्रव्यत्वमन्यथासिद्धम् ( मुक्ता० १।९४ ) इत्यादौ त्र्यणुकादिघटपर्यन्तानामनेकद्रव्यत्वम् । ( ख० )

**अनेकत्वम्**–१ एकत्वभिन्नसंख्याविशिष्टत्वम् । (दि० गु० १९२) यथा, अनेके ब्राह्मणाः सन्तीत्यादौ ब्राह्मणानामनेकत्वम् । २ अपेक्षाबुद्धिविशेषविषयत्वम् । यथा, अस्मिन् द्रव्येऽनेके गुणाः सन्तीत्यादावनेकत्वम् । (ख०)

**अनेकाश्रितगुणत्वम्**–[ क ] एकत्वभिन्नसंख्याविशिष्टधर्मिवृत्तिगुणत्वम् ।
[ ख ] स्वाश्रयप्रतियोगिकान्योन्याभावसमानाधिकरणगुणत्वमिति केचिद्वदन्ति । ( दि० गु० १९२ )
[ ग ] एकत्वानवच्छिन्नवृत्तिकगुणत्वमित्यपि कश्चित् । ( ल०व० ३६ )

**अनैकान्तिकः**–( हेत्वाभासः ) [ क ] एकमात्रव्याप्तिग्राहकसहचारस्यैका-

---

१ अत्र 'अनेकं द्रव्यमाश्रयो यस्य तदनेकद्रव्यं, तस्य भावः' इति विग्रहः । (वै०उ० ४।१।६)

२ स्वसमवेतसमवेतत्वसंबंधेन नानाद्रव्यवत्त्वमित्यर्थः । (राम० १) तद्यथा, स्वशब्देन परमाणवो गृह्यन्ते, तत्समवेतं द्व्यणुकम्, तत्समवेतत्वं त्र्यणुके वर्तत इति अनेन संबन्धेन परमाण्वात्मकनानाद्रव्यवत्त्वं त्र्यणुकेऽस्तीति त्र्यणुकादीनामनेकद्रव्यत्वं विज्ञेयम् ।

३ अनेकाश्रितगुणाश्च संयोगो, विभागो, द्वित्वादिकाः संख्या, द्विपृथक्त्वादयः । (भा०प०गु०)

४ 'घटः पटेन संयुक्तः' इति व्यवहारात्संयोगस्य द्विष्ठत्वं प्रतीयते । तथा च स्वं संयोगस्तदाश्रयो घटस्तत्प्रतियोगिको योऽन्योन्याभावः ( घटभेदः ) तत्समानाधिकरणत्वं (तदाश्रयः पटस्तद्वृत्तित्वं) संयोगे वर्तत इति संयोगादीनामनेकाश्रितत्वं (अनेकवृत्तित्वम्) संभवतीति बोध्यम् । ( कि० टी० )

५ अत्र व्युत्पत्तिः, एकस्य साध्यस्य तदभावस्य वा योऽन्तः सहचारोऽव्यभिचरितसहचार एकान्तः, तस्येत्यैकान्तिकः । (गौ० वृ० १।४५) अनैकान्तिकः सव्यभिचारशब्देन व्यवह्रियते, वैशेषिकमते तु संदिग्ध इत्युच्यते च इति बोध्यम् । अनैकान्तिकलक्षणं च [ क ] साधारणाद्यन्यतमत्वम् । ( मु० ) ( वाक्य० ) [ ख ] सव्यभिचारत्वात्मकदोषवत्त्वम् । शिष्टं सर्वं तु सव्यभिचारलक्षणव्याख्यानावसरे संपादयिष्यते ।

न्तिकस्तदन्योऽनैकान्तिकः । (गौ०वृ० १।४९) निदर्शनम् [ क ] नित्यः शब्दोऽस्पर्शत्वात्....नित्यत्वमप्येकोऽन्तः । अनित्यत्वमप्येकोऽन्तः । एकस्मिन्नन्ते विद्यत इत्यैकान्तिकः । विपर्ययादनैकान्तिकः । उभयान्तव्यापकत्वादिति । (वात्स्या० १।२।४६) [ख] यस्माद्विषाणी तस्माद्गौरिति चानैकान्तिकस्योदाहरणम्। ( वै० ३।१।१७) [ग] यथा वा धूमवान्वह्नेरित्यत्र वह्निरनैकान्तिकः । ( त० सं० )

[ ख ] साध्यसंदेहजनकपक्षधर्मताज्ञानविषयः । वै० वि० ३।१।१९ ) ( त० व० )

[ ग ] साध्यसंशये हेतुः । स द्विविधः । साधारणः, असाधारणः । ( त० भा० ४८ ) प्रकारान्तरेणानैकान्तिकस्त्रिविधः, साधारणः, असाधारणः, अनुपसंहारी । ( गौ० वृ० १।४९ ) ( भा० प० ७३ ) ( त० सं० )

**अनैकान्तिकत्वम्**—सव्यभिचारत्ववदस्यार्थोऽनुसंधेयः ।

**अन्तः**— १ संबन्धः । यथा 'ते विभक्त्यन्ताः पदम्' इत्यत्र । ( गौ० वृ० २।१२३) २ ध्वंसः । यथा सादिरनन्तः प्रध्वंस इत्यादावन्तः । ( त० सं० ) ३ पदस्य चरमावयव इति शाब्दिकाः । ४ निर्णय इति वेदान्तिनो वदन्ति । ५ स्वरूपम् । ६ स्वभावः । ७ सीमा । ८ निकटम् । ९ मनोहरम्, इति काव्यज्ञाः ।

**अन्तःकरणम्**–१ मनोवदस्यार्थोऽनुसंधेयः । (प० मा०) २ ज्ञानसुखा-

---

१ तत्रोच्यते । पक्षे सहचरत्वाद्वा साध्यतद्रहितत्वयोः । सामान्याद्वा विशेषाद्वा संशयो भवति त्रिधा । ४९ । तदर्थश्च—साध्यतदभावयोः पक्ष एव हेतुसाहचर्यदर्शनात् संशयो भवति, यथा सर्वमनित्यं प्रमेयत्वादित्यादौ (अयमनुपसंहारी)। सामान्यधर्मदर्शनादपि संशयो भवति, यथा घटः क्षितित्ववान् द्रव्यत्वादित्यादौ । द्रव्यत्वं हि क्षितित्ववति घटादौ तदभाववति जलादौ च वर्तत इति साधारणधर्मदर्शनादेवात्र संशय इति । (अयं साधारणानैकान्तिकः)। विशेषधर्मदर्शनादपि संशयो भवति, यथा शब्दोऽनित्यः शब्दत्वादित्यादौ ( अयमसाधारणो हेतुः)। ( त० व० २।३।४९ ) ( वै० उ० ३।१।१५ )

२ इदं लक्षणद्वयं च प्राचीनमतानुसारेणोक्तमिति ज्ञेयम् । नवीनमतानुसारेण लक्षणं तु सव्यभिचारत्वशब्दव्याख्यानावसरे संपादयिष्यते ।

दिसाधनमाभ्यन्तरं मनोबुद्धिचित्तादिपदाभिलप्यमानमिन्द्रियमिति मायावादिनः आहुः । (वाच०)

**अन्तरम्**–१ मनः । २ अवकाशः । ३ अवधिः । ४ परिधानांशुकम् । ५ अन्तर्धानम् । ६ भेदः । ७ परस्परवैलक्षण्यरूपविशेषः । ८ तादर्थ्यम् । ९ छिद्रम् । १० आत्मीयम् । ११ विनाऽर्थः । १२ बहिरर्थः । १३ व्यवधानम् । १४ मध्यम् । १५ सदृशम् । १६ आसन्नं च । (वाच०)

**अन्तर्धानम्**–स्वनिष्ठो योऽन्यकर्तृकदर्शनविषयताविरहस्तदुद्देश्यको व्यापारः । यथोपाध्यायादन्तर्धत्ते[2] छात्र इत्यादौ धात्वर्थः । (ग० व्यु० ५)

**अन्तिकत्वम्**–दैशिकमपरत्वम् । (मु० ९३) यथा, दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते इत्यादौ । (भा० प० ४७) तद्धि प्रयागस्य जनस्थानमपेक्ष्य वाराणस्यन्तिकत्वम् । (स्व०)

**अन्त्यः**–१ अवसाने वर्तमानः । यथा विशेषैः[3] । (मु० १।३७) २ पूर्वस्मिन्सति यस्मात्परो नास्ति सोऽन्त्य इति शाब्दिका वदन्ति ।

**अन्त्यावयवित्वम्**–[क] द्रव्यानारम्भकद्रव्यत्वम् । (दि० १।७१) [ख] द्रव्यानारम्भकत्वे सति कार्यद्रव्यत्वम् । (त० कौ० ३)

---

१ तन्मते अन्तःकरणं चतुर्विधम् । तदुक्तम्–मनोबुद्धिरहंकारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया इमे, इत्युक्तकार्यभेदात् । अन्यत्र व्यक्तमुक्तम्–यदा तु संकल्पविकल्पकृत्यं तदः भवेत्तन्मन इत्यभिख्यम् । स्यद्बुद्धिसंज्ञं च यदा तु वेत्ति सुनिश्चितं संशयरूपहीनम् । अनुसंधानरूपं तच्चित्तं च परिकीर्तितम् । अहंकृत्यात्मवृत्त्या तु तदहंकारतां गतम्, इति । (वाच०)

२ अत्र, पञ्चम्यर्थः कर्तृत्वनिरूपकत्वम् । तस्य अन्तर्धिघटकदर्शनेऽन्वयः । एवं च उपाध्यायकर्तृकदर्शनविषयतायाः यः स्वनिष्ठोऽभावस्तदुद्देश्यकव्यापारकर्ता छात्र इत्यन्वयबोधः । (ग० व्यु० ५) छात्रो हि 'मामुपाध्यायो न पश्यतु' इतीच्छया दर्शनाभावप्रयोजकं व्यापारं करोतीति फलितार्थः ।

३ इदमत्राकूतम् । परमाण्वादिनित्यपदार्थव्यावर्तकत्वेन परमाण्वादौ विशेषाख्यः पदार्थः सिद्धान्ते स्वीकृतोऽस्ति, तथा च तत्तद्विशेषव्यावृत्त्यर्थमपि विशेषान्तरस्वीकारेऽनवस्था स्यात् । अतः परमाण्वादिवृत्तितत्तद्विशेषः स्वस्य स्वयमेव व्यावर्तकः, तदपेक्षया विशेषान्तरं नास्तीति विशेषोऽन्त्यो भवतीति ।

[ग] अवयवजन्यत्वे सत्यवयव्यजनकत्वम् । (सि० च० ६) यथा घटादेरन्त्यावयवित्वम् । (स्व०)

**अन्यतमम्**– [क] तत्तदवृत्तिशून्यम् । (ग० कूट०)

[ख] भेदकूटावच्छिन्नप्रतियोगिताकभेदवत् । यथा घटो घटपटस्तम्भान्यतमो भवति । (स्व०)

[ग] बहूनां मध्ये निर्धारितमेकं वस्तु इति शाब्दिका वदन्ति ।

**अन्यतरत्**–[क] भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत् । यथा घटो घटपटान्यतरो भवति । (स्व०)

[ख] द्वयोर्मध्ये निर्धारितमेकं वस्तु इति शाब्दिका वदन्ति ।

**अन्यत्वम्**–१ भेदः । यथा, उत्थितं सदृशेऽन्यच्च कबन्धेभ्यो न किंचनेत्यादौ । यथा वा घटः पटादन्य इत्यादौ । एवमितरत्वं भिन्नत्वमित्यादि बोध्यम् । (स्व०) २ सादृश्यम् । यथा 'नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्' इत्यादौ । (वाच०)

**अन्यथा**– १ अभावः । यथा, अन्यथानुपपत्तिरित्यादौ । (स्व०) २ अन्यप्रकारः । यथा 'यदभावि न तद्भावि भावि चेन्न तदन्यथा' इत्यादौ (वाच०)

**अन्यथाख्यातिः**–१ (ख्यातिः) अयथार्थानुभवः । (नील० ३७) (सि०

---

१ इदमत्राकूतम् । परमाण्वादिकपालपर्यन्ता अवयवा द्रव्यान्तरमारभन्ते, घटस्तु न किंचिद्द्रव्यान्तरमुत्पादयितुं क्षमत इति घटस्यान्त्यावयवित्वमिति ।

२ तत्तद्भिन्नभिन्न इति स्पष्टार्थः । इत्थं च घटपटस्तम्भैतद्भेदवान् यः (पाषाणः) तद्भेदो घटे वर्तत इति विज्ञेयम् ।

३ अत्रेदं बोध्यम् । अन्यथाख्यातिर्भ्रमः । स च यस्य यद्धर्मवत्त्वेन ज्ञानमुचितं तस्य तद्भिन्नधर्मेण ज्ञानम् । यथा 'ह्रदो वह्निमान्' इति ज्ञानम्* ।

---

* तच्च विशिष्टमेकं ज्ञानम्, प्रवर्तकत्वादिति नैयायिकाः । मीमांसकादयस्तु, तत्र ज्ञानद्वयम् । वह्निज्ञानम्, ह्रदज्ञानं च । असंसर्गाग्रहवशाच्च तयोः विशिष्टज्ञानकार्यकारिता । सति च ह्रदे वह्नेरसंसर्गज्ञाने तत्र न प्रवृत्तिरिस्यतोऽसंसर्गाग्रह एव तत्प्रवर्तकः । अप्रवृत्तिस्तु तदभावे इत्याहुः । केचिद्वेदान्तिनस्तु, धर्मिणोऽसंनिकर्षस्थले नान्यथाख्यातिः, किं तु अलौकिकपदार्थान्तरोत्पत्त्या तस्य लौकिकं प्रत्यक्षं जायते । यथा, इदं रजतमिति ज्ञानमित्याहुः । (वाच०)

च० १९ ) २ भ्रमात्मकज्ञानीयप्रकारता । यथा 'इदं रजतम्' इति ज्ञाने रजतत्वस्य तादृशप्रकारता । (ख० ) तत्र, रजतत्वप्रकारकत्वावच्छेदेन शुक्तिविशेष्यकत्वमन्यथाख्यातिरिति केचित् ( ? ) । ( मू० म० १ ) वाचस्पतिमिश्रास्तु शुक्तौ 'इदं रजतम्' इति ज्ञाने प्रसिद्धशुक्तिरजतत्वयोरलीक एव समवायो भासत इत्यसत्ख्यातिमङ्गीचक्रुः । (सि०च० १९)

**अन्यथाऽनुपपत्तिः**[1]–स्वाभावप्रयोज्यासंभवः । यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ रात्रिभोजनानङ्गीकारे रात्रिभोजनाभावप्रयोज्यपीनत्वासंभवात्मिका पीनत्वान्यथानुपपत्तिः । अत्र 'दिवाऽभोक्तुर्देवदत्तस्य पीनत्वं रात्रिभोजनं विनाऽनुपपन्नम् ( असंभवि )' इति ज्ञानात् दिवाभोजनाकर्तृवृत्तिपीनत्वेन रात्रिभोजनं कल्प्यते । तथा च भोजनस्य (साध्यस्य) पीनत्वव्यापकतया व्यापकाभावस्य च व्याप्याभावव्याप्यतया साध्याभाव-(रात्रिभोजनाभाव) व्यापकीभूताभाव-(दिवाभोजनाकर्तृवृत्तिपीनत्वाभाव )प्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानात् 'देवदत्तो रात्रिभोजी' इत्यनुमितिरूपा-[2]ऽर्थापत्तिरुदेति । (वाच०)

**अन्यथासिद्धः**–अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतः । यथा अवश्यक्लृप्तनियतपूर्ववर्तिभिर्दण्डादिभिरेव घटरूपकार्यसंभवे तत्सहभूतं दण्डत्वं घटं प्रति अन्यथासिद्धम् । ( सि०च० २० ) (प्र० प्र०) अन्यथासिद्धस्त्रिविधः । तत्र प्रथमः[3], येन सहैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तेन तं प्रति सोऽन्यथासिद्धः । यथा तन्तुना, तन्तुरूपं तन्तुत्वं च पटं प्रति अन्यथासिद्धम् । यथा वा घटं प्रति दण्डेन, दण्डरूपं दण्डत्वं चान्यथासिद्धम् । दण्डेन सहैव दण्डरूपस्य दण्डत्वस्य वा घटं प्रति पूर्व-

---

१ इयं चार्थापत्तिप्रमाणमनुमान एवान्तर्भवतीति विज्ञेयम् ।

२ अत्रानुमानं च 'देवदत्तो रात्रिभोजी दिवाऽभुञ्जानत्वे सति पीनत्वात्' इति बोध्यम् ।

३ अत्र, सहितत्वमेकज्ञानविषयत्वमिति बोध्यम् । किं च, येनेत्यस्य 'स्वतन्त्रान्वयव्यतिरेकशालिना' इति, यस्येत्यस्य तु 'स्वतन्त्रान्वयव्यतिरेकशून्यस्य' इति च विशेषणं बोध्यम् । तेन, नाऽतथाभूतेन तन्तुत्वेन तन्तोरन्यथासिद्धिः । न वा, तन्तुसंयोगस्य तन्तुना सहान्यथासिद्धिः इति । परे तु इतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालि यत्तदन्यथासिद्धमित्याहुः । ( नील० १६ )

भावग्रहात् । द्वितीयः, अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति सोऽन्यथासिद्धः । यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव घटं प्रत्याकाशस्य पूर्ववृत्तित्वग्रहात् घटं प्रत्याकाशोऽन्यथासिद्धः[1] । एवं कुलालपिताऽपि पुत्रकृतघटं प्रत्यन्यथासिद्धः[2] । तृतीयः, अन्यत्र क्लृप्तनियतपूर्ववृत्तिनैव कार्यसंभवे तत्सहभूतोऽन्यथासिद्धः । यथा पाकजस्थले गन्धं प्रति रूपप्रागभावः[3] । यथावा घटविशेषं प्रति दैवादागतो रासभः[4] । ( त० कौ० ७ ) ( त० दी० १६ ) प्रकारान्तरेणान्यथासिद्धं पञ्चविधम् । तत्र प्रथममन्यथासिद्धमाह । यत्कार्यं प्रति कारणस्य पूर्ववृत्तित्वं येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धम् । यथा घटं प्रति दण्डत्वम्[5] । द्वितीयमन्यथासिद्धमाह । यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तु स्वकारणमादायान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम् । यथा घटं प्रति दण्डरूपम्[6] । तृतीयमन्यथासिद्धमाह । अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य । चतुर्थमन्यथासिद्धमाह । यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटं प्रति

---

१ आकाशस्य आकाशत्वेन घटं प्रति पूर्ववृत्तित्वं ग्राह्यम् । आकाशत्वं च शब्दसमवायिकारणत्वम्, तच्च शब्दनियतपूर्ववृत्तित्वघटितमिति भावः । ( त० कौ० ७ )

२ कुलालं ( पुत्रं ) प्रति पूर्ववृत्तित्वे ज्ञाते एव घटं प्रति कुलालपितुः पूर्ववृत्तित्वग्रहात्, घटं प्रति कुलालपिताऽन्यथासिद्ध इति भावः । ( त० कौ० ७ )

३ अपाकजस्थले गन्धं प्रति क्लृप्तनियतपूर्ववर्तिना गन्धप्रागभावेनैव पाकजस्थलेऽपि गन्धात्मककार्यसंभवे रूपप्रागभावोऽन्यथासिद्ध इत्यर्थः । ( नील० १६ )

४ तथा हि—घटविशेषादन्यत्र घटान्तरे क्लृप्तनियतपूर्ववृत्तिदण्डचक्रादेरेव घटविशेषस्यापि संभवे दण्डचक्रादिसहभूतो दैवादागतो रासभोऽन्यथासिद्धः । ( त० कौ० ७ )

५ अत्र घटं प्रति दण्डस्य कारणत्वं दण्डत्वेनैव गृह्यत इति दण्डत्वमन्यथासिद्धमिति बोध्यम् ।

६ अत्र, दण्डरूपस्य स्वातन्त्र्येणान्वयव्यतिरेकौ ( दण्डरूपसत्त्वे घटसत्त्वम्, दण्डरूपाभावे घटाभाव इति ) न स्तः, किंतु दण्डरूपस्य कारणं दण्डमादायैवान्वयव्यतिरेकौ ( दण्डसत्त्वे घटसत्त्वम्, दण्डाभावे घटाभाव इति ) गृह्येते इति घटं प्रति दण्डरूपमन्यथासिद्धमिति बोध्यम् ।

कुलालपितुः । पञ्चममन्यथासिद्धमाह । अवश्यक्लृप्त[1]नियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथा[2]सिद्धम् । यथा घटादिकं प्रति रासभादीति । (भा० प० श्लो० १९–२२) (मु० १।१४) अन्यथासिद्धस्त्रिविध इति मणिकारमतम् । नवीनास्तु, 'लघु[3]नियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम्' इत्यनुगतैकलक्षणेनैकविधमेवान्यथासिद्धम् । एवं च त्रिधा पञ्चधेति प्रकारौ शिष्यबुद्धिवैशद्यार्थम्, इत्याहुः । ( नील० १६–१७ )

**अन्यथा[4]सिद्धिः**–पूर्वोक्तेष्वन्यथासिद्धेषु वर्तमानस्तत्तद्धर्मविशेषः । ( ख० )

**अन्योन्यम्**–क्रियाव्यतिहारविषयत्वम् । व्यतिहारश्च विनिमयः, परस्परकरणमिति यावत् । ( ल० म० ) यथा 'अन्योन्यं पुष्करैरामृशन्त' इति माघः । ( सि० कौ० त० )

**अन्यो[5]न्याभावः**–( अभावः ) [ क ] नित्यत्वे सत्यत्यन्ताभावभिन्नत्वे सत्यभावः ( ग० सि० )

---

१ परेतु, अत्र अवश्यक्लृप्तत्वं लघुनियतपूर्ववर्तित्वं* बोध्यम् । तेन, पाकजगन्धोत्पत्तिं प्रति अवश्यक्लृप्तपूर्ववर्तिनः पाकजरूपप्रागभावस्य कारणत्वनिरासः, गन्धप्रागभावस्याऽन्यथासिद्धत्वनिरासश्चेत्याहुः । ( दि० १।५४ )

२ पञ्चस्वन्यथासिद्धेषु पञ्चममावश्यकम् । अन्येषां चतुर्णां ( दण्डत्व दण्डरूप आकाश कुलालपितॄणाम् ) अनेन पञ्चमान्यथासिद्धेनैव संग्रहादिति बोध्यम् । ( भा० प० श्लो० २२) ( मु० ५४ ) ( दि० ) ( राम० १।५४ )

३ अत्र लघुत्वं च त्रिविधम् । शरीरकृतम्, उपस्थितिकृतम्, संबन्धकृतं चेति । तत्र प्रथमम्, प्रत्यक्षं प्रत्यनेकद्रव्यत्वापेक्षया महत्त्वस्य कारणत्वे लघुत्वमस्ति । द्वितीयम्, गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावस्य कारणत्वे लघुत्वम् । गन्धस्य प्रतियोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयम्, घटं प्रति दण्डत्वदण्डरूपाद्यपेक्षया दण्डादेः कारणत्वे लघुत्वम् । स्वाश्रयदण्डसंयोगादिरूपपरंपराया गुरुत्वात् । (नील० १७)

४ इयं च कारणत्वसंपादिका न भवति, अपि तु कारणत्वविघटिका भवतीति ज्ञेयम् ।

५ अत्र व्युत्पत्तिः–[ क ] 'अन्योन्यस्मिन् तादात्म्येनाभावोऽभवनम्' इति । ( वै० सा० द० ३३४) [ ख ] 'अन्योन्यस्मिन् अन्योन्यस्याभावः' इति । स च (अन्योऽन्याभावः) भेदः । भेदो हि घटे पटस्य, पटे घटस्य च सदाऽस्तीति नित्यः । प्रतियोगिसमानाधिकरणश्चायमभावो भवति, 'घटो न भूतलम्' इति प्रतीत्या घटाधिकरणेऽपि भूतले घट-

---

* अत्र लघुत्वप्रकारस्तूत्तरस्मिन्नेव पङ्क्तिव्याख्याने व्यक्तीभवितेत्यत्रैव विरम्यते ।

[ख]-अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभावः। (सर्व० औलु० १११) [ग] अधिकरणे प्रतियोगितावच्छेदकारोपहेतुकनिषेधधीविषयः। (प० च०) स च [क] तादात्म्याभावः[1]। यथा असन्नश्वो गवात्मना। अघटः पट इति। (प० च०) (वै० उ० ९।१।४) यथा वा घटः पटात्मा न भवतीति। (सर्व० औलु० ११२) [ख] तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावः[2]। (त० सं०) (ग० सि०) (त० कौ० २१) [ग] 'इदमिदं न भवति, इदमेतद्भिन्नम्' इति प्रतीतिसाक्षिकोऽभावः। (न्या० म० १।११) यथा 'घटः पटो न भवति' इति प्रतीतिसाक्षिको भेदः। (ग० सि०) (प्र० प्र०) अन्योन्याभावो वस्तुस्वरूप एव, न तु पृथगिति मध्वाचार्यानुयायिन आहुः।

---

भेदस्य विद्यमानत्वात्*। अन्योन्याभावग्रहेऽधिकरणयोग्यतामात्रं तन्त्रम्। (वै० उ० ९।१।४) (९।१।८) यथा, पिशाचभेदाधिकरणे स्तम्भे योग्यतायाः सत्त्वेन 'स्तम्भः पिशाचो न' इति ग्रह ('चाक्षुषग्रहः) उपपद्यते। (मु० १।१२७) नव्यास्तु, ध्वंसप्रागभावयोरिवान्योन्याभावस्यापि प्रतियोगितावच्छेदकसंबन्धे मानाभावः। अत्यन्ताभावस्य तु प्रतियोगितावच्छेदकसंबन्धः स्वीक्रियते, 'संयोगेन समवायेन वा घटो नास्ति' इति प्रतीतेः। इत्थं चान्योन्याभावत्वमखण्डोपाधिरित्याहुः। (म० प्र० १२) (ल० व०) (ग० सि० २।५५)

---

१ अत्र तादात्म्यं च प्रतियोगितावच्छेदकधर्मः। (प० च०) स च धर्मः 'अघटः पटः' इत्यादौ घटत्वादिरेवेति बोध्यम्।

२ घटः पटो न भवतीत्यादितो 'घटात्मा पटो न भवति' इत्यर्थो बोध्यते। एवं च घटतादात्म्यस्याभावः, घटतादात्म्येनावच्छिन्ना या घटनिष्ठा प्रतियोगिता तन्निरूपको भेदो वा पटे वर्तते इत्यवधेयम्।

---

* अत्रेदमवधेयम्—न हि कंचिदभावं प्रति येन केनाऽपि संबन्धेन प्रतियोगिनो विरोधिता,.........किंतु प्रतियोगितावच्छेदकसंबन्धेनैव प्रतियोगी अभावस्य विरोधी। तथा च अन्योन्याभावस्य प्रतियोगिताऽवच्छेदकः संबन्धस्तादात्म्याख्य एव (अत एवायमभावः 'तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकः' इत्युच्यते) तेन संबन्धेन च घटस्य स्वस्मिन्नेव सत्त्वेन भूतलादावसत्त्वात्तत्र घटान्योन्याभावो वर्तत इति। (वै० वि० ९।१।४)

**अन्योन्याश्रयः**–तर्कविशेषः । ( सर्व० अक्ष० ११३ ) स च स्वापेक्षापेक्षितत्वनिमित्तकोऽनिष्टप्रसङ्गः । अपेक्षा च ज्ञप्तौ, उत्पत्तौ, स्थितौ च ग्राह्या । तत्र ज्ञप्तौ यथा, घटोऽयं यद्येतद्घटज्ञानजन्यज्ञानविषयः स्यात् तदैतद्घटभिन्नः स्यादिति । तत्र स्वज्ञानस्य स्वज्ञानजन्यत्वेनानिष्टं प्रसज्येत स्वापेक्षापेक्षितज्ञानत्वात् स्वापेक्षितघटज्ञानविषयस्य तज्जनकज्ञानविषयाद्भेदरूपमनिष्टं च सज्येत । अतो घटस्य घटभेदप्रसङ्गोऽनिष्टः । उत्पत्तौ यथा, घटोऽयं यद्येतद्घट-(जन्य?)जन्यः स्यात् तदैतद्घटभिन्नः स्यादित्यादि । एतद्घटस्योत्पत्तौ एतद्घट-(जन्य?)सापेक्षत्वे कारणस्य कार्याद्भेदनियततया एतद्घटस्य एतद्घटभेदरूपोऽनिष्टः प्रसङ्गः । स्थितौ यथा, घटोऽयं यद्येतद्घट-(वृत्ति?)वृत्तिः स्यात्तदा तथात्वेनोपलभ्येत । न च तथोपलभ्यते । तथात्वे च घटस्य घटवृत्तित्वापत्तिरनिष्टा प्रसज्येतेति । एतेषु ज्ञप्तिविषयतयैव प्रायशोऽनिष्टप्रसङ्गः, सर्वत्र तन्मूलकमेव स्वग्रहसापेक्षग्रह-( सापेक्षग्रह ?)कत्वमन्योन्याश्रयत्वं तत्र तत्र व्यवह्रियते । अत एव, परस्परज्ञानसापेक्षज्ञानाश्रयोऽन्योन्याश्रय इति स्मार्तैरुक्तम्[1] । ( वाच० )

**अन्वयः**–१ साध्यम् । यथा, अन्वयेन व्यतिरेकेण च व्याप्तिमदन्वयव्यतिरेकि, इत्यादौ । (त० सं०) २ अन्वयव्याप्तिः । ( वाक्य०) यथा 'यत्र यत्र धूमस्तत्राग्निः' इति साहचर्यनियमः । ( त० सं० ) यथा वा हेतुव्यापकसाध्यसामानाधिकरण्यम् । (न्या० बो० १९) ३ कोटिद्वयसहचरितत्वज्ञानम्[2] । (ग०सत्प्र० २१) यथा धूमवान्वह्नेरित्यादौ 'अयं धूमधूमाभावसमानाधिकरणवह्निमान्' इति ( भ्रमात्मकं ) ज्ञानम् । (ख०) ४ [क] कारणाऽधिकरणे कार्यस्य सत्त्वम् । (राम० ९२) यथा यत्सत्त्वे (कारणसत्त्वे ) यत्सत्त्वम् ( कार्यसत्त्वम् ), इत्यन्वयः । ( ख० ) [ ख ] कार्यकारणयोः साध्यसाधनयोर्वा साहचर्यम् । ( सि० च० २।

१ अत्र, अन्योन्यपदस्य तज्ज्ञाने, तदुत्पत्तौ, तत्स्थितौ च लक्षणा । तदाश्रयोऽन्योन्याश्रय इति त्रितयसाधारणो विग्रहः । एवं चान्योन्यसंबन्धिनो ज्ञानोत्पत्तिस्थित्येतदन्यतमस्याऽऽश्रय इत्यर्थः । ( वाच० )

२ इदं ज्ञानं च साधारणधर्मवत्ताज्ञानविधया संशये प्रयोजकमिति, प्राचीनमते साधारणानैकान्तिकलक्षणे ह्युपयुज्यते इति च विज्ञेयम् । ( चि० सव्य० २।१० )

२६ ) तत्र कार्यकारणयोः साहचर्यं च स्वस्वव्याप्येतरयावत्कारणसत्त्वे यत्सत्त्वेऽवश्यं यत्सत्त्वमिति[1] । (त० प्र०) साध्यसाधनयोर्यथा, 'पर्वतो वह्निमान्धूमात्' इत्यादौ धूमवन्ह्योः साहचर्यम् 'यत्र धूमस्तत्राग्निः' इति ।
[ ग ] केचित्तु, कार्ये कारणस्यानुसरणम् ।
[ घ ] कार्यसत्तापादकस्वसत्ताकस्य कारणस्य कार्ये स्थितिः ।
[ ङ ] स्वसत्तानियतसत्तावत्कार्यसंबन्ध इत्याहुः । ५ हेत्वभाववति कार्यान्वयज्ञानम्[2] । ( मू० म० १ ) ६ शाब्दबोधीयसंसर्गताख्यविषयतावान्[3] । यथा 'घटमानय' इति वाक्यजन्यशाब्दबोधे घटानयनादीनां पदार्थानां परस्परं संबन्धः । (स्व०) ७ वृत्तिः, ८ आनुकूल्यम्, ९ संततिरिति काव्यज्ञा वदन्ति । ( वाच० )

**अन्वयदृष्टान्तः**[4]–( दृष्टान्तः ) [ क ] निश्चितसाध्यवान् । ( वाक्य० २ )
[ ख ] पक्षे हेतुप्रत्यक्षानन्तरं यदन्तर्भावेण साध्यनिरूपितव्याप्तिः स्मर्यते सः । यथा पर्वते धूमेन वह्निसाधने महानसोऽन्वयदृष्टान्तः । ( ख० )

**अन्वयव्यतिरेकि**[5]– ( लिङ्गम् ) [ क ] गृहीतान्वयव्यतिरेकिसाध्यकम् । ( दीधि० २।१९६ )

---

१ यथा चक्रादिघटितसामग्रीसमवहितदण्डादिसत्त्वे घटसत्त्वमिति ।

२ व्यभिचारज्ञानमिति यावत् इति नव्या आहुः । ( मू० म० १ )

३ अयं चान्वयो द्विविधः । भेदान्वयः, अभेदान्वयः । आद्यो 'राज्ञः पुरुषः' इत्यादौ राजपदार्थपुरुषपदार्थयोः । द्वितीयो 'नीलो घटः' इत्यादौ नीलपदार्थघटपदार्थयोः (ग०व्यु०का० १)

४ सपक्षवदस्यार्थोऽनुसंधेय इति मम भाति ।

५ अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं भवति । पञ्चरूपाणि च पक्षधर्मत्वम् , सपक्षे सत्त्वम्, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्*, असत्प्रतिपक्षत्वं† चेति । (सि० च० २।२६) (त०कौ० २।१२) एतानि पञ्च रूपाणि च वह्निसाध्यकधूमादावन्वयव्यतिरेकिण्येव विद्यन्ते। केवलान्वयिनि विपक्षाद्व्यावृत्तिर्नास्ति, विपक्षाप्रसिद्धेः । केवलव्यतिरेकिणि तु सपक्षसत्त्वं नास्ति, सपक्षाप्रसिद्धेः । ( त० कौ० १२ )

---

* अत्र व्युत्पत्तिः 'अबाधितो विषयः साध्यं यस्येत्यबाधितविषयस्तस्य भावोऽबाधितविषयत्वम्' इति । अत्राबाधितविषयत्वं च प्रमाणान्तरेणाप्रमितसाध्याभावकत्वं बोध्यम् । (त०कौ०१२) ( सि० च० २।२६ )

† असत्प्रतिपक्षत्वं च साध्याभावसाधकहेत्वन्तरशून्यत्वं बोध्यम् । (त० कौ० १२ ) ( सि० च० २।२७ )

[ ख ] सत्सपक्षविपक्षो हेतुः । यथा वह्निमान् धूमादित्यादौ । (मु० २।१९)[1]

[ ग ] अन्वयेन व्यतिरेकेण च व्याप्तिमत् । ( त० सं० )[2]

[ घ ] यत्रान्वयव्याप्तिर्व्यतिरेकव्याप्तिश्च विद्यते तत् । यथा वह्निमान्धूमादित्यादौ[3] निरुक्तपञ्चरूपोपपन्नो धूमः । ( प्र० प्र० ) ( त० कौ० १२ )

**अन्वयव्यतिरेकी**–( अवयवः ) [ क ] प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः । ( गौ० वृ० १।३४ )

[ ख ] अन्वयव्यतिरेकोदाहरणाकाङ्क्षाप्रयोजकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवः ।

[ ग ] पक्षसपक्षसतो विपक्षासतो हेतुवचनम् । ( चि० अव० २।७९)[4] यथा पर्वतो वह्निमान्धूमादित्यत्र 'धूमात्' इति पदम् । ( ख० )

**अन्वयव्यभिचारः**–( व्यभिचारः ) कारणसमवधानाव्यवहितोत्तरक्षणावच्छेदेन कारणतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कार्याभाववत्त्वम्[5] । (ख०) यथा समाप्तिं प्रति मङ्गलस्य कारणत्वे वक्तव्ये कादम्बर्यादावाशङ्कितोऽन्वयव्यभिचारः । ( त० दी० १।१ )

**अन्वयव्याप्तिः**[6]–( व्याप्तिः ) [ क ] प्रकृतहेतुनिष्ठा प्रकृतसाध्यनिरूपिता व्याप्तिः ( ग० सामा० २३ )

---

१ अत्र सपक्षस्य महानसादेः, विपक्षस्य जलह्रदादेश्च सत्त्वात् , इति । ( मु० २।१९ )

२ अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमदित्यर्थः । (नील० २।२३ )

३ अत्र पर्वतः पक्षः, तस्य वन्हिमत्त्वं साध्यम्, 'धूमात्' इति हेतुः । तस्मिन (हेतौ) 'यत्र यत्र धूमस्तत्र तत्र वन्हिर्यथा महानसादौ' इत्यन्वयव्याप्तिः, 'यत्र यत्र* वह्न्यभावस्तत्र तत्र धूमाभावः यथा जलह्रदादौ' इति व्यतिरेकव्याप्तिश्चास्तीति ज्ञेयम् । ( त० कौ० १२ )

४ अयं त्वन्वयव्यतिरेकिहेतुर्न्यायावयवश्चेति ज्ञेयम् । ( गौ० १।३४ )

५ कारणसत्त्वे कार्याभाव इति संक्षिप्तार्थः ।

६ अन्वयनिरूपिता व्याप्तिरित्यर्थः । (ग० सामा०) अन्वयव्याप्तावयं नियमः 'अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते' इति द्रष्टव्यः ।

---

* अत्रेदं बोध्यम्– अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः, इति । ( त० कौ० १२ ) ( सि० च० २।२६ )

[ ख ] हेतुसाध्ययोर्व्याप्तिः । ( त० दी० २।२३ ) यथा 'यत्र धूमस्तत्राग्निः' इति साहचर्यनियमः[1] । ( त० सं० ) सा चात्यन्ताभावान्योन्याभावभेदेन भिन्ना[2], अव्यभिचरितसामानाधिकरण्यं[3] व्यापकसामानाधिकरण्यरूपा । ( ग० सामा० २३ )

**अन्वयिहेतुः**[4]– ( अवयवः ) [ क ] उदाहरणसाधर्म्यात्[5]साध्यसाधनं हेतुः । ( गौ० १।१।३४ ) उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः । साध्ये प्रतिसंधाय धर्ममुदाहरणे च प्रतिसंधाय तस्य साधनतावचनं हेतुः । उत्पत्तिधर्मकत्वादिति, उत्पत्तिधर्मकमनित्यं दृष्टमिति । ( वात्स्या० १।१।३४ )

[ ख ] ज्ञातान्वयव्याप्तिकहेतुबोधको हेत्ववयवः । ( गौ० वृ० १।३४ ) यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ 'धूमात्' इति शब्दः । (ख०)

**अन्वय्युदाहरणम्**[6]–( उदाहरणम् ) [ क ] साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्तः । ( गौ० १।१।३६ ) साध्येन साधर्म्यं समानधर्मता साध्यसाधर्म्यात्कारणात्तद्धर्मभावी दृष्टान्त इति ।....स चोदाहरणमिष्यते । तत्र यदुत्पद्यते तदुत्पत्तिधर्मकं तच्च भूत्वा न भवत्यात्मानं जहाति निरुध्यत इत्य-

---

१ धूमव्यापकवह्निसामानाधिकरण्यमित्यर्थः । ( न्या० बो० २।१४ )

२ तद्भेद तत्स्वरूप तल्लक्षणप्रपञ्चश्च व्याप्तिशब्दव्याख्यानावसरे सविस्तरं संपादयिष्यते इत्यत्रैव विरम्यते ।

३ साध्यवदन्यावृत्तित्व हेतुव्यापकसाध्यसामानाधिकरण्यादिरूपेत्यर्थः । (न्या० बो० २।१४)

४ तल्लक्षणं चान्वयिहेतुत्वमेव । तच्च [ क ] अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारण *साध्याविषयकशाब्दधीजनक प्रतीतान्वयसाध्यसाधनवाचक हेतुविभक्तिमच्छब्दत्वम् । [ ख ] अन्वयव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनक हेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् । ( चि० २।७९ )

५ उदाहरणसाधर्म्यमुदाहरणबोध्यान्वयव्याप्तिः, ततोऽन्वयी हेतुर्ज्ञातव्यः । गौ०वृ० १।३४ )

६ तल्लक्षणं चान्वय्युदाहरणत्वमेव । तच्च [ क ] साध्यसाधनसंबन्धबोधजनकत्वम् । (चि० अव २।८०) [ ख ] अन्वयव्याप्तिबोधकत्वम् । (दीधि० २।१७७) तच्च, एतद्योयो धूमवान्ससोऽग्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० २।२३–२४)

---

* अर्थप्रयोजनादिकं च 'हेतु'शब्दव्याख्यानावसरे संपादयिष्यते ।

नित्यम्। एवम् उत्पत्तिधर्मकत्वं साधनम्, अनित्यत्वं साध्यम्। सोऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते। तं दृष्टान्ते उपलभमानः शब्देऽप्यनुमिनोति। शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदित्युदाह्रियते। तेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम्। (वात्स्या० १।१।३६)

[ख] साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः, साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत्। (गौ० वृ० १।३९)

[ग] प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्टसाध्यबोधकवाक्यम्। (नील० २२) यथा पर्वतो वह्निमान्धूमान्महानसवदित्यादौ 'यो यो धूमवान्स स वह्निमान्' इति वाक्यम्। (त० सं० २)

**अन्वय्युपनयः**[1]–[क] उदाहरणापेक्षस्तथेत्युपसंहारः[2] साध्यस्योपनयः। (गौ० १।१।३८) उदाहरणापेक्ष उदाहरणतन्त्रः। साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टम्। तथा शब्द उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। (वात्स्या० १।१।३८)

[ख] तथेति साध्यस्योपसंहारः। यथा पर्वतो वह्निमान्धूमादित्यत्र 'वह्निव्याप्यधूमवानयम्' इति वा 'तथा चायम्' इति वोपन्यासः (गौ० वृ० १।३७)

**अन्ववसर्गः**–कामचारानुज्ञानम्[3]। यथा अपि सिञ्च, अपि स्तुहीत्यादौ 'यथेष्टं कुर्याः' इत्याद्यर्थोऽपिना द्योत्यते, न तु कुत्राप्यनुज्ञया प्रतिरोधः क्रियत इति (वाच०)

**अन्वाख्यानम्**–तात्पर्यावधारणार्थं प्रतिपादनम्। यथा वस्त्वन्वाख्यानं, क्रियान्वाख्यानमित्यादौ। (वा० च०)

---

१ तल्लक्षणं चान्वय्युपनयत्वमेव। तच्च साध्यव्याप्यविशिष्टपक्षबोधकावयवत्वम्। (चि० अव०)

२ उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्यः। (वात्स्या० १।१।३८)

३ 'यथेष्टं क्रियताम्' इत्येवंरूपाऽनुज्ञेत्यर्थः।

**अन्वाचयः**–( द्वन्द्वसमासः ) उद्देश्यसिद्ध्याऽनुद्देश्यसिद्ध्यर्थोपदेशः । यथा भिक्षां गच्छ, यदि गां पश्येस्तां चानयेत्यादौ । ( वाच० )

**अन्वादेशः**–[ क ] पूर्वोपात्तस्य किंचित्कार्यान्तरं विधातुं पुनरुपदेशः । यथा 'अनेन व्याकरणमधीतम्, न्यायमेनं पाठय' इति न्यायपाठनार्थं पुनरुपदेशः । ( सि० कौ० ) ( वाच० )

[ ख ] कथितकथनम् । ( वाच० )

**अन्विताभिधानवादः**–शक्तिज्ञानाविषयस्य शाब्दबोधाविषयत्वनियम इति वादः । ( कृष्ण० शक्ति० )

**अन्वीक्षा**–प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणम् । यथा आन्वीक्षिकी न्यायविद्येत्यादावन्वीक्षा । ( वात्स्या० १।१।१ )

**अपकर्षः**–१ विद्यमानधर्मापचयः । तथा च साध्यसाधनान्यतरस्याभावप्रसञ्जनम् । यथा अपकर्षसमो जातिरित्यादौ ( गौ० वृ० ५।४ ) २ गुरुनिष्ठजातिविशेषः । यथा टीकाकृन्मते 'अयमस्मादपकृष्टः' इत्यादिप्रतीतिसंभवेन 'महत्त्वत्वं चापकर्षानाश्रयपरिमाणत्वम्' इत्यत्रापकर्षः । (राम० १।९८) ३ उचितधर्मापेक्षातो हीनता । यथा, उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः, इत्यादौ । (मनु० १०।४२) ४ स्वकर्तव्यकालात् पूर्वकाले करणम् । यथा, मरणोत्तरं मृताहे मासि मासि कर्तव्यानां मृताहनिमित्तकमासिकादीनां द्वादशाहेषु एकाहेषु च कर्तव्यत्वोक्तेः सर्वापकर्ष इति

---

१ अत्र भिक्षायामेवोद्देशः, नतु गवानयने । तत्सिद्ध्युत्तरं गवानयनमनुद्दिष्टमपि साध्यतया निर्दिष्टम् । इति । (वाच० )

२ भट्टमते च 'इतरान्वितघटो घटपदशक्यः' इत्येतादृशमेव शक्तिज्ञानं शाब्दबोधप्रयोजकम् । एवं च शाब्दबोधे पदार्थसंसर्गस्यापि पदशक्यत्वमङ्गीकुर्वन्ति । ( ग० शक्ति० ५ ) एवमेतन्मते वाक्येपि शक्तिं स्वीकुर्वन्ति इति विज्ञेयम् । इदं च प्राभाकरमतम्, न तु भट्टमतमिति बहवो ग्रन्थकारा वदन्ति ।

३ आकर्षणमित्यर्थः ।

४ तदुक्तम्–मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति । द्वादशाहेन वा कुर्यादेकाहे द्वादशाथ वा, इति ( स्मृतिः )

धर्मज्ञाः । ९ परसूत्रपदानामन्वयार्थं पूर्वसूत्रे आकर्षणमिति शाब्दिका वदन्ति । ( वाच० )

**अपकर्षसमः**–( जातिः ) [ क ] साध्ये धर्माभावं दृष्टान्तात्प्रसञ्जयतोऽपकर्षसमः । लोष्टः खलु क्रियावानविभुर्दृष्टः, काममात्मापि क्रियावानविभुरस्तु । विपर्यये वा विशेषो वक्तव्य इति । ( वात्स्या० ५।१।४ )

[ ख ] पक्षदृष्टान्तान्यतरस्मिन्व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनम् । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात्कृतकत्वादनित्यः शब्दस्तदा कृतकत्वानित्यत्वसहचरितघटधर्मरूपवत्त्वव्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात् । आद्येऽसिद्धिदेशना । द्वितीये बाधदेशना । एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वं च व्यावर्तेत इति दृष्टान्ते साध्यसाधनविकल्पदेशनाऽऽभासाऽपीयम् । ( गौ० वृ० ५।४ )

[ ग ] परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्याभावसाधनम् । यथा शब्दोऽनित्यः कृतकत्वाद्घटवदित्यादौ यदि कृतकत्वेन शब्दो घटवदनित्यः स्यात्तर्हि तेनैव शब्दो घटवदश्रावणोऽपि स्यादिति । (नील० ४३)

**अपक्षेपणम्**–(कर्म) अधोदेशसंयोगहेतुः कर्म । (त० सं०) (त०कौ० २०)[1]

**अपगमः**–स्पन्दः । ( ग० हेतु० ) यथा वृक्षादपैतीत्यादौ धात्वर्थः । ( ख० )

**अपचिकीर्षा**–( द्रोहः ) अहितेच्छा । ( ग० व्यु० ४ )

**अपदेशः**– १ कथनम् । ( गौ० वृ० ३।९४ ) यथा 'नोत्पत्तिकारणानपदेशात्' इत्यादौ । ( गौ० ३।९४ ) २ हेतुः । ( वै० उ० ३।१।३ ) यथा 'सोऽनपदेशः' इत्यादौ । (वै० ३।१।३)

**अपरत्वम्**–( गुणः ) अपरव्यवहारेऽसाधारणं कारणम् । ( त० सं० ) ( त० कौ० ६ )[2] यथा अयं कनिष्ठः, अयं समीप इत्यादौ कनिष्ठसमी-

---

१ तल्लक्षणं च अधोदेशसंयोगजनकक्रियानुकूलक्रियात्वम् ( ? ) । ( ल० व० ३८ )

२ अपरव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वं लक्षणमित्यर्थः । ( वाक्य० )

पयोरपरत्वम् । ( वाक्य० ) तद्द्विविधम् । दिक्कृतम्, कालकृतम् । समीपस्थे दिक्कृतमपरत्वम् । कनिष्ठे कालकृतमपरत्वम् । ( त० सं० ) पर्यायान्तरेणाप्यपरत्वप्रपञ्चः कथ्यते । तद्यथा, यो यदपेक्षया संनिहितस्तत्र तदवधिकमपरत्वं दिक्कृतम् । अत्र दिक्पिण्डसंयोगोऽसमवायिकारणम्, संनिहितत्वज्ञानं निमित्तम्, तन्नाशश्च तन्नाशनिमित्तम् । दिक्कृतमपरत्वं मूर्तद्रव्यमात्रवृत्ति भवति ।

यो यदपेक्षया कनिष्ठस्तत्र तदवधिकमपरत्वं कालकृतम् । अत्र कालपिण्डसंयोगोऽसमवायिकारणम्, कनिष्ठत्वज्ञानं निनिमित्तम्, तन्नाशश्च तन्नाशनिमित्तम् । कालकृतमपरत्वं तु जन्यद्रव्यमात्रवृत्ति भवति (त० कौ० ६) ( सि० च० १।१८ )

**अपरत्वम्**—अल्पदेशवृत्तित्वम् । ( मु० १।३४ ) यथा घटत्वजातेर्द्रव्यत्वपृथिवीत्वे अपेक्ष्याल्पदेशवृत्तित्वम् । ( ख० )

**अपवर्गः**—१ अस्यार्थो निःश्रेयसवदनुसंधेयः । २ फलप्राप्तिः । यथा अपवर्गे तृतीयेत्यादौ ।

**अपवादः**— १ बाधनसाधनं वस्तुमात्रम् । २ विशेषशास्त्रम् । यथा, मा हिंस्यात्सर्वाभूतानीत्युत्सर्गस्य 'वायव्यंश्वेतमालभेत' इति शास्त्रमपवादः । ३ मिथ्याभूतपदार्थनिवारणार्थमुपदेशविशेष इति मायावादिन आहुः ।

---

१ अत्र दिक्कृतत्वं च [ क ] ज्ञायमानदिग्जन्यत्वम् । (वाक्य०) [ ख ] अल्पतरमूर्तसंयोगविशिष्टशरीरज्ञानादपरत्वमुत्पद्यत इति* । ( सि० च० १।१८) यथा 'झळकीग्रामात्सोलपुरापेक्षया भीमानदी स्वसमवायिसंयुक्तसंयोगेनाल्पतरदेशसंयोगवती' इति ज्ञानेन दैशिकमपरत्वमुत्पद्यते । अधिकं तु ( वै० उ० ७।२।२१ ) तत्र द्रष्टव्यम् ।

२ अत्र कालकृतत्वं च [ क ] स्वसमवायिसंयुक्तसंयोगसंबन्धेन रविक्रियाप्रकारककालविषयकज्ञानजन्यत्वम् । ( वाक्य० ) [ख] अल्पतरदिवाकरक्रियाविशिष्टशरीरज्ञानात्† अपरत्वोत्पत्तिरिति । ( सि० च० १।१८ )।

---

* 'इदमस्मात्संनिकृष्टम्' इत्यपेक्षाबुद्ध्या जन्यते। (दि० १) अवलोकनीयाऽत्र दिक्शब्दव्याख्या ।

† 'अयमस्मादल्पतरकालसंबद्धः' इत्यपेक्षाबुद्ध्या जन्यते । (दि० १) अवलोकनीयात्र कालशब्दव्याख्या ।

४ मिथ्यावाद इति सांख्याः । ५ निन्दा, निरासनं वेति काव्यज्ञाः । (वाच०)

**अपशब्दः**—शक्तिवैकल्यप्रमादादिना साधुशब्दस्यान्यथोच्चारणसाध्योऽपभ्रंशशब्दः । यथा, म्लेच्छो ह वा नाम यदपशब्दः । (श्रुतिः)

**अपसिद्धान्तः**—(निग्रहस्थानम्) [क] सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गः । (गौ० ५।२।२३) कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययादनियमात्कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति, न सतो विनाशो, नासदात्मानं लभते, नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति—एकप्रकृतीदं व्यक्तम् विकाराणामन्वयदर्शनात्, मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम् । तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते । तस्मात्समन्वयदर्शनात्सुखादिभिरेकप्रकृतीदं शरीरमिति । एवमुक्तवाननुयुज्यते । .... .... एवं प्रत्यवस्थितो यदि सतश्चात्महानम्, असतश्चात्मलाभमभ्युपैति तदस्यापसिद्धान्तो निग्रहस्थानं भवति । अथ नाभ्युपैति पक्षोऽस्य न सिध्यति । (वात्स्या० ५।२।२४)

[ख] कथायां स्वीकृतसिद्धान्तप्रच्यवः । तथा च सांख्यमतेन अहं वदिष्यामीत्यभ्युपेत्यारब्धायां कथायामाविर्भावस्याविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाविर्भावस्यासत उत्पत्तिं यद्यभ्युपैति तदाऽपसिद्धान्तः । (गौ० वृ० ५।२।२३) (दि० १)

[ग] एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् । (नील० ४३) सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्ते । (गौ० वृ० ५।२।२३)

**अपह्नवः**—[क] अबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रति-

---

१ तदुक्तं हरिणा—त एव शक्तिवैकल्यप्रमादालसतादिभिः । अन्यथोच्चारिताः शब्दा अपशब्दा इतीरिताः, इति ।

२ सिद्धान्तादपध्वंसोऽपसिद्धान्त इत्यर्थः । (त० भा० ५१)

पादनेच्छा । यथा कलिङ्गेषु दृष्टोसि, नाहं कलिङ्गाञ्जगामेत्यादावत्यन्तापह्नवः । ( ग० व्यु० ल० )[1]

[ ख ] सत्त्वेन ज्ञातस्यापि वस्तुनोऽसत्त्वेन कथनम् । स द्विविधः । शब्दतोऽर्थतश्चेति । तत्र 'मिथ्यैव तत्' इति शब्दतः । अर्थतस्तु 'नाभिजानाम्यहम्, तत्र तदा न मम स्थितिः' इति ( वाच० )

**अपादानत्वम्**[2]–( कारकम् ) यद्धातूपस्थाप्ययादृशार्थे विग्रहवाक्यस्थपञ्चम्याः स्वार्थोऽनुभावयितुं शक्यः स तद्धातूपस्थाप्यतादृशक्रियायामपादानत्वमुच्यते । यथा वृक्षात्पतति[3] इत्यादौ वृक्षादेरपादानत्वम् । ( श० प्र० ७९ ) तच्च १ [ क ] क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम्[4] । ( ग० अव० )

[ ख ] स्वनिष्ठ[5]भेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । ( ग० व्यु० ५।२१ )

---

१ अत्र च कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकम्, तेन विना तदसंभवात् । अत्यन्तापह्नवः स्वरूपसन्नेव ( न तु ज्ञातः ) लिट्साधुतानियामकः । ( गा० व्यु० ल० )

२ अपगमाय आदीयतेऽवधित्वेनेति व्युत्पत्तिः ( वाच० ) अपादानशब्दस्तु तत्तत्कर्मानधिकरणत्वे सति तत्तत्कर्मजन्यविभागाश्रये शक्त इत्यवधेयम् । ( श० प्र०७९ )

३ अस्माद्वाक्यात् 'वृक्षा*वधिकविभागानुकूलपतनकर्ता' इत्यन्वयबुद्धौ धातूपस्थाप्यपतने पञ्चम्युपस्थाप्यो विभागः स्वानुकूलत्वसंबन्धेन प्रकार इति स ( विभागः ) एव तत्रापादानत्वमिति विज्ञेयम् । ( श० प्र० ७९)

४ परसमवेतक्रियाजन्यविभागाश्रयत्वमित्यर्थः । यथा भूभृतो गङ्गाऽवतरतीत्यादौ भूभृतो गङ्गासमवेतक्रियाजन्यविभागाश्रयत्वादपादानत्वम् । गङ्गायामतिव्याप्तिवारणाय परसमवेतेति क्रियायां विशेषणम् । (म०प्र० ६ ) वृक्षात्पर्णं पततीत्यादौ तु पर्णक्रियया वृक्षपर्णयोर्विभागो जायते । तत्र क्रिया पर्णमात्रनिष्ठा, विभागस्तूभयनिष्ठेति वृक्षस्य क्रियाऽनाश्रयत्वं विभागाश्रयत्वं च संगच्छत इत्यवधेयम् ।

५ अत्र स्वं विभागाश्रयो वृक्षः, तन्निष्ठः 'क्रियावतो ( पर्णात् ) भेदः, तत्प्रतियोगि क्रियावत्, तन्निष्ठायाः प्रतियोगिताया अवच्छेदिका क्रिया, तज्जन्यविभागाश्रयत्वं वृक्षस्येति । अत्र क्रियायां स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वविशेषणेन पर्णादेःस्वनिष्ठवृक्षादिविभागपतनापादानत्वनिरास इति ज्ञेयम् । (ग० व्यु० ५।२१)

---

* अभावधित्वं च स्वरूपसंबन्धप्रभेदः, पदार्थान्तरं वेत्यन्यदेतत् ।

[ग] परकीयक्रियाजन्यविभागाश्रयत्वम्। (का० व्या० ९) यथा वृक्षात्पर्णं पततीत्यादौ वृक्षादेरपादानता।[1] क्वचित् अवधित्वम्। यथा वृक्षाद्विभजते इत्यादौ वृक्षादेरपादानता।[2] (गा० व्यु० ५।२१) शाब्दिकमते अपादानं च [क] ध्रुवमपायेऽपादानम्।[3] पाणिनिसूत्रे १।४।२४) [ख] विश्लेषाश्रयत्वे सति विश्लेषजनकधात्वर्थतत्तक्रियाऽनाश्रयः।(वै०सा०) [ग] अवधिभावोपगमव्यापारम् (ल० म०)

आपादानं त्रिविधम्। निर्दिष्टविषयम्, उपात्तविषयम्, अपेक्षितक्रियं चेति। तत्राद्यम्, यत्र साक्षात् (मुख्यवृत्त्या)धातुना गतिः(विभागजनकक्रिया)निर्दिश्यते तन्निर्दिष्टविषयम्। यथाऽश्वात्पतति। द्वितीयम्, यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्।[4] यथा बलहकाद्विद्योतते विद्यु-

१ अत्र पञ्चम्या विभागजनकत्वम्, अन्योन्याभावप्रतियोगितावच्छेदकत्वं चार्थः। विभागे, अन्योन्याभावे च वृक्षोऽन्वेति। (का० व्या० ९) तथा च वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं तन्निष्ठविभागजनकं च यत् पतनं तदाश्रयः पर्णमित्याकारको बोधः। (ग०व्यु० ५।२१)

२ अत्र वृक्षाद्यवधिकत्वविशिष्टविभागनिरूपितमेवाश्रयत्वमाख्यातेन बोध्यते। अतो 'वृक्षः स्वस्माद्विजते' इति न प्रयोगः। (ग०व्यु०५।२१) विशेषस्तु 'पञ्चमी' शब्दव्याख्याने व्यक्तीभविष्यति।

३ अपाये विभागे ध्रुवं निश्चलम्, प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिक्रियाशून्यमित्यर्थः।(का० व्या०९) तत्रोक्तं हरिणा—अपाये यदुदासीनं चलं वा यदिवाऽचलम्। ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते। पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ। तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते। उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे। विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते। मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्, इति।

४ समभिव्याहृतधातुनोपात्तो लक्षितो गतिरूपो विषयो यत्रेतिव्युत्पत्तिः। (वै० सा० द० १९२) स्वविषयक्रियाघटितश्रूयमाणक्रियान्तरमित्यर्थः।

५ अत्र 'निःसृत्य' इत्यध्याहार्यम्। तथा च निःसरणाङ्गे विद्योतने द्युतिः (द्युत्धातुः) वर्तते*। (वै०सा०) एवं च बलाहकाद्विद्योतते विद्युत् इत्यादिवाक्यात् 'बलाहकावधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनम्' इति बोधः। (वै० सा० द० १९२) (ल० म० १०८)

* द्युतिश्च लक्षणया निःसरणपूर्वकविद्योतनबोधक इति यावत्। (वै० सा० द० १९२)

दित्यादौ । तृतीयम्, अपेक्षिता क्रिया यत्र तदपेक्षितक्रियम्[2] । यथा कुतो भवान्? पाटलिपुत्रादित्यादौ । अन्ये ( नैयायिकाः ) त्वित्थं व्याचक्षते—यत्र विभागस्तज्जनकक्रिया चोभयं धातुनाऽभिधीयते तत् आद्यम् । यत्र विभागोऽध्याहृतधातुनाऽभिधीयते तत् द्वितीयम् । यत्र तूभयमध्याहृतधात्वभिधेयम् तत् तृतीयम्, इति । (वै०सा०द० १९२।१९३)

**अपानः**–( वायुः ) [ क ] गुदादीनामध उन्नयनादपानः । (दि०१।८९)

[ ख ] मलादेरधो नयनादपानः । ( सि० च० १।८)

**अपार्थकम्**– ( निग्रहस्थानम् ) [ क ] पौर्वापर्यायोगादप्रतिसंबद्धार्थम् । ( गौ० ५।१३ ) यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसंबन्धार्थत्वं गृह्यते तत्समुदायोऽर्थस्यापायादपार्थकम् । यथा दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः, अथ रौरुकमेतत्कुमार्याः पाय्यम्, तस्याः पिता अप्रतिशीन इति । ( वात्स्या० ५।२।१० )

[ ख ] अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षादिशून्यबोधजनकपदम् । उदाहरणं तु अयोग्याऽनासन्नाऽनाकाङ्क्षवाक्यम् । ( गौ० वृ० ५ । १३ ) ( दि० १ )

[ ग ] परस्परानन्वितार्थकपदसमूहः । यथा शब्दो घटः पटो नित्यमनित्यं च प्रमेयत्वात्, इत्यादि । ( नील० पत्रे० ४५ )

[ घ ] यादृशशाब्दबोधत्वावच्छेदेनाहार्यत्वं तादृशबुद्ध्यर्थं प्रयुक्तः पदसमूहः । ( श० प्र० )

**अपि**–( अव्ययम् ) १ संभावना । २ संदेहः । ३ निन्दा । ४ प्रश्नः । ५ समुच्चयः । ६ अल्पपदार्थः । ७ कामचारानुज्ञा । ८ अवधारणम् । ९ पुनरर्थः । ( वाच० )

**अपूर्वम्**–[क] यागस्य (कर्मणः)काचिदुत्तरावस्था फलैकनाश्या । (ल०म०)

[ ख ] यागादिजन्यः स्वर्गादिजनकः कश्चन गुणविशेषः । तं गुणविशे-

---

१ अनुपात्तधात्वर्थक्रियासाकाङ्क्षमित्यर्थः । ( वै० सा० द० १९२)

२ अत्रागमनमर्थम् 'आगतः' इति पदं वाऽध्याहृत्यान्वयः कार्यः ( वै० सा० द० १९२ )

षमपूर्वमिति मीमांसका वदन्ति । प्रारब्धकर्मेति वेदान्तिनः । धर्माधर्मा-विति नैयायिकाः । अदृष्टमिति वैशेषिकाः । पुण्यपापे इति पौराणिका-श्चेति । अपूर्वं दर्शपूर्णमासयोर्द्विविधम् । परमापूर्वम्, कलिकापूर्वम् । (दि० गु० २३९) प्रकारान्तरेणाप्यपूर्वं मीमांसकमते त्रिविधम् । प्रधा-नापूर्वम्, अङ्गापूर्वम्, कलिकापूर्वं चेति । तत्र दर्शपूर्णमासाद्यपूर्वं प्रधाना-पूर्वम्, तदेव परमापूर्वम् । प्रयाजाद्यङ्गजन्यापूर्वं अङ्गापूर्वम् । तदवान्तरक्रि-याकूटजन्यमपूर्वं कलिकापूर्वम्, तच्च व्रीहिप्रोक्षणाभ्युक्षणादिजन्यं द्रव्यनि-ष्ठमिति मीमांसकाः । तज्जन्यसंस्कारविशेष एव कलिकापूर्वतया व्यवह्रियते स चात्मनिष्ठ इति नैयायिकाः । कलिकापूर्वं च परमापूर्वं जनयित्वा न-श्यति, अङ्गापूर्वैस्तु परमापूर्वे विशेष आधीयते इति भेदः । तथा चाङ्गापूर्व-सहितं परमापूर्वं विशिष्टफलं जनयति, तद्विहीनं तु स्वल्पं फलम् । अत्रेदमवधेयम्—परमापूर्वं च नित्यकर्मणि पण्डापूर्वत्वेन मीमांसकैर्व्यवह्रियते, संध्यावन्दनस्य किंचित्फलाजनकत्वात् । नैयायिकास्तु, अर्थवादोपस्थापित-ब्रह्मलोकादिप्राप्तिरूपफलजननान्न तत्रापूर्वस्य फलाजनकत्वेन पण्डत्वमि-त्याहुः । ( वाच० ) विस्तरस्तु चिन्तामणिशब्दखण्डे, कुसुमाञ्जलिप्रथम-स्तबके चावलोकनीयः ।

**अपूर्वविधिः**—( विधिः ) [ क ] अप्राप्तप्रापको[1] विधिः । स च यागादी-नामिष्टसाधनत्वस्य कृतिसाध्यत्वस्य वा बोधको लिङादिशब्दः । यथा स्वर्ग-कामो यजेतेत्यादौ । ( सि० च० ३३ ) ( वाच० )

[ ख ] प्रमाणान्तरेणाप्राप्तप्रापको[2] लिङादिपदवेदनीयः शब्दविशेषः । यथा स्वर्गकामो यजेतेति लिङादियुक्तं वाक्यम् । अपूर्वविधिश्चतुर्विधः । क-

---

१ अप्राप्तप्रापकत्वं च प्राथमिकप्रवृत्तिजनकप्रतीतिजनकत्वम्, प्रमाणान्तरजन्यप्रतीत्यविषयवि-षयकप्रतीतिजनकत्वं वा ।

२ इदं यजनं तु केनाऽपि प्रमाणान्तरेण न बोधितम् । (सि० च० ३३)
अत्रेदं बोध्यम्—लिङा यागादाविष्टसाधनत्वं बोध्यत इति नैयायिकाः, कार्यत्वेनापूर्वं बोध्यत इति प्राभाकरा मन्यन्ते । ( वाच० )

र्मविधिः, गुणविधिः, विनियोगविधिः, प्रयोगविधिश्चेति । तत्राग्निहोत्रं जुहोतीत्यादौ यागरूपे कर्मणि इष्टसाधनतायाः, कृतिसाध्यतायाः, भावनाया वा मतभेदेन बोधनात् कर्मविधित्वम् ।

द्रव्यदेवतादिविधायकविधिर्गुणविधिः । यथा दध्ना जुहोतीत्यादिवाक्यम् । प्राप्तस्याग्निहोत्रस्यानुवादेनाप्राप्तगुणरूपद्रव्यादेः(दध्यादेः)विधानात् ।

विनियोजनाद्विनियोगविधिः । यथा, ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यादि । अत्र ऐन्द्र्या ऋचः गार्हपत्योपस्थाने विनियोजनात् विनियोगविधिः ।

'एवं कृत्वा एवं कुर्यात्' इत्यादिप्रयोगज्ञापको विधिः प्रयोगविधिः । यथा अधीत्य स्नायादित्यादि, उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यादि च । अयं च विशिष्टविधिरिति भेदः ( वाच० )

**अपेक्षा**–१ आकाङ्क्षा, सा च शाब्दबोधप्रयोजनिका । २ असामर्थ्यम् । अस्यामपेक्षायां च प्रायशो वृत्तिर्नेष्यते[1] । यथा प्रवीरं पुत्रकाम्यति, ऋद्धस्य राजमातङ्ग इत्यादौ प्रत्ययसमासौ न स्तः । ३ प्रयोजकत्वम् । तच्च ज्ञाने, स्थितौ, उत्पत्तौ वा इतरस्यानुरोधित्वम् । ज्ञानादिकार्ये च यस्य यत्पदार्थान्तरज्ञानाद्यनुरोधस्तस्य तदपेक्षा । अत एव तर्कग्रन्थे जगदीशेन "स्वापेक्षापादकः प्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तौ, उत्पत्तौ, स्थितौ च ग्राह्या" इत्याद्युक्तम् । अधिकं तु अन्योन्याश्रयशब्दव्याख्याने द्रष्टव्यम् । ४ अपेक्षाबुद्धिवदस्यार्थोऽनुसंधेयः । ५ अनुरोधः । यथा सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिरित्यादौ, इति धर्मज्ञाः । ६ स्पृहा । यथा, समुपोढेषु कामेषु निरपेक्षः परिव्रजेदित्यादौ ( मनुः ६ । ४१ ) इति काव्यज्ञाः ।

---

१ तत्रोक्तम्– सापेक्षे प्रत्ययो न स्यात् समासो वा कथंचन । सापेक्षं तद्विजानीयादसमस्तविशेषणम्, इति ।

**अपेक्षाबुद्धिः**[1]–( बुद्धिः ) [ क ] नानैकत्वसमूहालम्बनरूपा बुद्धिः । ( वै० उ ०४।१।११ )

[ ख ] अनेकैकत्वबुद्धिः[2] । (भा०प०गु०श्लो० ११०) सा च 'अयमेकः, अयमेकः' इत्याकारिका बुद्धिः । (मु० गु० २०४) यथा सेनावनादिबुद्धिः[3] ( त० व० )

**अपोहः**–१ अतद्व्यावृत्तिः । यथा विज्ञानवादिबौद्धमते नीलत्वादिर्धर्मो[4]ऽनीलव्यावृत्तिरूपः । ( दि० १ ) २ अपरतर्कनिरासाय कृतो विपरीततर्कः । ३ त्याग इति काव्यज्ञा वदन्ति । ( वाच० )[5]

---

१ अपेक्षाबुद्धिः क्षणत्रयावस्थायिनी इति सिद्धान्तः । तल्लक्षणं च विनाशकविनाशप्रतियोगिबुद्धित्वम् । ( सर्व० औलु० ) द्वित्वादिकं* त्वपेक्षाबुद्धिजन्यम् । ( वै० उ० ४।१।११ ) अपेक्षाबुद्धेरिच्छादिजनकत्वं नास्तीत्यवश्यं मन्तव्यम् । अन्यथा तेनैव तस्या नाशात् क्षणत्रयावस्थायित्वमेव न स्यात् इति केचित् । ( भवा० २९० ) विस्तरस्तु ( वै०उ० ७।२८ ) तत्र द्रष्टव्यः ।

२ अनेकानि च तान्येकत्वानि तेषां बुद्धिरिति विग्रहः ।

३ अत्र अश्वादिसमूहः सेना, वृक्षसमूहो वनम् । तथा च ' सेना, वनम्'इत्यादिबुद्धिविशेषविषयत्वं सेनात्ववनत्वादि । ( म० प्र० ४।४६ )

४ तन्मतेऽयं धर्मोऽपारमार्थिक एवेति, सर्वस्यापि विज्ञानरूपत्वं क्षणिकत्वं चेति च ज्ञेयम् ।

५ यथा, शुश्रूषा श्रवणं चैव ग्रहणं धारणा तथा । ऊहोऽपोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः, इति हेमचन्द्रोक्तो बुद्धिगुणभेदः । यथा वा स्वयमूहापोहासमर्थ इत्यादौ च । ( वाच० )

---

* अत्रेदं बोध्यम्– द्वित्वादिकं परार्धान्तमपेक्षात्मकबुद्ध्या जन्यते, तन्नाशेन तु नश्यति च । अपेक्षाबुद्धेर्द्वित्वादेश्चोत्पत्तिनाशादिप्रकारस्तु द्वित्वशब्दव्याख्यानावसरे व्यक्तीभविष्यति ।

अत्रेदं विचार्यते–यद्यपि द्वित्वादिसमवायः प्रत्येकं घटादावस्ति, तथापि 'एको द्वौ'इति ज्ञानाभावात् 'एको न द्वौ' इति ज्ञानाच्च द्वित्वादीनां पर्याप्तिस्वरूपः कश्चित्संबन्धोऽनेकाश्रयोऽङ्गीक्रियते । पर्याप्तिसंबन्धेन च प्रत्येकं घटादौ न द्वित्वादि । तादृशसंबन्धश्चापेक्षाबुद्धिसापेक्षः । तेन तत्सत्त्वे तथाज्ञानम्, तदसत्त्वे न तथाज्ञानम् । इति ( वाच० ) वस्तुतस्तु, द्वित्वादिकं तु न संख्या, किंत्वपेक्षाबुद्धिविशेषविषयत्वमेव । तच्चापेक्षाबुद्ध्यधीनमिति न कोपि दोष इति तु वयम् ।

**अप्रतिपत्तिः**– [क] आरम्भविषये नारम्भः । परेण स्थापितं वा न प्रतिषेधति । प्रतिषेधं वा नोद्धरति । (वात्स्या० १।२।६०)

[ख] प्रकृताज्ञानम् । (गौ० वृ० १।१९)

**अप्रतिभा**–(निग्रहस्थानम्) [क] उत्तरस्याप्रतिपत्तिरप्रतिभा । (गौ० ५।२।१९) परपक्षप्रतिषेध उत्तरम् । तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति । (वात्स्या० ५।२।१९)

[ख] उत्तरार्हे परोक्तं बुद्ध्वापि यत्रोत्तरसमये उत्तरं न प्रतिपद्यते तत्राप्रतिभा (गौ० वृ० ५।६१) (दि० १)

[ग] उत्तरापरिस्फूर्तिः । (त० भा० ५१)

[घ] उत्तरार्हे परोक्तं बुद्ध्वाप्युत्तरस्यास्फूर्तिवशात्तूष्णीम्भावः । (नील० ४५–४६)

**अप्रधानकर्मत्वम्**–(कर्मत्वम्) परंपरया धात्वर्थतावच्छेदकफलशालित्वम् । (ग० व्यु० २) (श० प्र० ९६) यथा गां दोग्धि पय इत्यादौ गवादेरप्रधानकर्मत्वम् (ग० व्यु० २)

**अप्रधानत्वम्**–१ गौणत्ववदस्यार्थोऽनुसंधेयः । २ कर्मणोऽप्रधानत्वं च अप्रधानक्रियाफलाश्रयत्वम् । ३ प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानतेति भाट्टाः । (वाच०)

---

१ इयं चाननुभाषणाज्ञानादिनिग्रहस्थानप्रयोज्या । (वात्स्या० ५।२।६१)

२ अत्र विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुहधात्वर्थः । तथा च धात्वर्थव्यापारांशे साक्षाद्विशेषणस्य (साक्षाद्धात्वर्थतावच्छेदकस्य) क्षरणस्याश्रयः पय एव, गोस्तु तादृशक्षरणांशे विशेषणीभूतस्य (परंपरया धात्वर्थतावच्छेदकस्य) विभागस्याश्रय इति गोरप्रधानकर्मत्वं बोध्यम् । (ग० व्यु० २) 'शब्दशक्तिप्रकाशकारास्तु, मोचनानुकूलव्यापारो दुहेरर्थः । मोचनं च बहिःक्षरणानुकूला क्रिया । तादृशक्रियायाः साक्षाद्धात्वर्थतावच्छेदकीभूताया आश्रयो गौरिति गोः प्रधानकर्मत्वम् । पयसस्तु, परंपरया धात्वर्थतावच्छेदकीभूतबहिःक्षरणात्मकफलाश्रयत्वेन गौणकर्मत्वमित्यङ्गीचक्रुः । (श० प्र० ९८) अत एव पयःप्रभृतेर्गौणकर्मत्वसंपत्तये 'अकथितं च' (पा० १।४।५१) इति सूत्रान्तरम् । (श०प्र० ९६)

**अप्रमा**–( बुद्धिः ) [ क ] तच्छून्ये तन्मतिः ( भा० प० गु० श्लो० १२८ )

[ ख ] प्रमाणाभासजन्योऽयथार्थानुभवः। (त० कौ० ६)

[ ग ] यत्र यन्नास्ति तत्र तस्य ज्ञानम्।

[ घ ] तदभाववति तत्प्रकारकानुभवः। (चि० १।१०) यथा पुरोवर्तिन्येव अरजते शुक्त्यादौ 'इदं रजतम्' इति रजतारोपः। ( त० भा० ४० ) सा त्रिविधा। संशयः, विपर्ययः, तर्कः। (त०सं० ) ( त० भा० ४० ) प्रकारान्तरेणाप्रमा द्वेधा। भ्रमः, संशयश्च। तत्र भ्रमो विपर्ययतर्कावित्युच्यते, तौ तु निश्चयरूपौ। ( त०कौ० ६ ) (भा० प० श्लो० १२८–१२९ ) ( मु०गु० २०९ )

**अप्राप्तकालम्**–( निग्रहस्थानम् ) [ क ] अवयवविपर्यासवचनमप्राप्तकालम्। ( गौ० ५।५४ ) प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात्क्रमः। तत्रावयवविपर्यासेन वचनमप्राप्तकालमसंबन्धार्थकालं निग्रहस्थानमिति। ( वात्स्या० ५।२।११ )

[ ख ] समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानम्। ( गौ० वृ० ५।५४ ) ( दि० १।२२)

[ ग ] अवयवानां व्युत्क्रमेण कथनम्। यथा शब्दत्वात् शब्दोऽनित्य इत्यादि। ( नील० ४५)

**अप्राप्तिसमः**– ( जातिः ) [ क ] साध्यमप्राप्य वा हेतोरप्राप्त्याऽसाधक-

---

१ इयं च दोषाज्जन्यते। दोषास्तु पित्तमण्डूकवसाञ्जनादयो नानाविधाः। तथा हि। क्वचित्पित्तभ्रमे पित्तं दोषः, क्वचि चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः, क्वचिच्च वंशोरगभ्रमे मण्डूकवसाञ्जनमित्येवंरूपा दोषा अननुगता एव भ्रान्तिजनका इति। ( भा० प० श्लो० १३२ ( मु० गु० २११ ) अधिकं तु भ्रमशब्दव्याख्यानावसरे संपादयिष्यते।

२ तत्रायं क्रमः–वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः। प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः। प्रतिवादिनः स्वपक्षसाधनम्, तत्र हेत्वाभासोद्धरणं चेति तृतीयः पादः। जयपराजयव्यवस्था चतुर्थः पादः। एवं प्रतिज्ञाहेत्वादीनां क्रमः। तत्र सभाक्षोभव्यामोहादिना व्यस्ताभिधानमप्राप्तकालमिति। ( गौ० वृ० ५।५४ )

त्वाच्चाप्राप्तिसमः। ( गौ० ५।१।७ ) हेतुः प्राप्य वा साध्यं साधयेद-प्राप्य वा। अप्राप्य साधकं न भवति। नाप्राप्तः प्रदीपः प्रकाशयतीति। अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः। ( वात्स्या० ५।१।७ ) (नील० ४४) [ ख ] अप्राप्त्याऽसाधकत्वादनिष्टापादनम्। ( गौ० वृ० ५।७ ) यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते, किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न?। उभयोरविशेषात् इति दोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्। तथा चाप्राप्तत्वाविशेषात्सर्वः सर्वं साधयेदिति। अयमेव हेतुः साध्याभावं किमिति न साधयेत्? इत्यत्र विनिगमकाभावादिति। ( नील० ४४)

**अफलत्वम्**—मुख्यफलाजनकत्वम्। ( मू० म० १ ) यथा स्वर्गोद्देशेन कृतस्य चैत्यवन्दनादेरफलत्वम्। ( ख० )

**अभावः**[2]—१( पदार्थः ) असमवायत्वे सत्यसमवायः[3]। (सर्व० औलु० १११)

---

१ यदि चाप्राप्तं लिङ्गं साध्यबुद्धिं जनयति, साध्याभावबुद्धिमेव किं तेन न जनयेत्। अप्राप्तत्वाविशेषात्, इति।
अयं चाप्राप्तिसमः प्रतिकूलतर्कदेशनाभास इति बोध्यम्। ( गौ० वृ० ५।७ )

२ भावभिन्नः* पदार्थ इत्यर्थः। अत्राभावलक्षणं च वक्ष्यमाणमभावत्वमेवेति बोध्यम्। अभावविषये केचन नियमाः संभवन्ति। तत्र प्रथमः—अवच्छेदकभेदोऽभावभेदनियामक इति। द्वितीयः— विशेषाभावकूटानां सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं स्वीक्रियत इति। (दीधि० २) तृतीयः—अभावप्रत्यक्षं प्रति योग्यानुपलब्धिः कारणम्। तथाहि—'यद्यत्र घटः स्यात्तर्ह्युपलभ्येत' इति तर्कितया घटसत्त्वस्य प्रसक्त्या आपादिताया घटविषयकोपलब्धेरभावो घटाभावप्रत्यक्षे इन्द्रियस्य † सहकारी इति। चतुर्थः—एकप्रतियोगिकयोरप्यत्यन्ताभावान्योन्याभावयोः प्रतियोगितावच्छेदकधर्मप्रतियोगितावच्छेदकसंसर्गभेदात् बहुत्वम्। तत्र प्रतियोगितावच्छेदकसंसर्गभेदादत्यन्ताभावबहुत्वम्, प्रतियोगितावच्छेदकधर्मभेदादन्योन्याभावबहुत्वम् इति योजना। तदेव दर्शयामः—केवलदेवदत्ताभावाद्दण्डविशिष्टदेवदत्ताभावो-

---

* अत्र भावत्वं च [ क ] द्रव्यादिषट्कान्यतमत्वम्। [ ख ] समवाय एकार्थसमवाय एतदन्यतरसंबन्धेन सत्तावत्त्वम् ( ल० व० २–३ )

† भट्टास्तु, अभावो नेन्द्रियग्राह्यः, क्लृप्तसंनिकर्षाणामभावात्। किं तु अनुपलब्धिरूपप्रमाणगम्य इत्याहुः।

अभावश्चतुर्विधः । प्रागभावः, प्रध्वंसः, अत्यन्ताभावः, अन्योन्याभावश्चेति ( त० सं० )

ऽतिरिक्तः, एकसत्वेऽपि 'द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगेन घटवति ( भूतले ) समवायसंबन्धेन घटाभावः, तत्तद्घटाभावाद्घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्चातिरिक्तः । एवमन्योन्याभावभेदोऽपि बोध्यः । एवं यत्र विशेषणभावः, विशेष्याभावः, उभयाभावो वा तत्र विशिष्टाभावोऽधिको ज्ञेयः ।

अत्यन्ताभावाभावः, ध्वंसप्रागभावः, प्रागभावध्वंसश्च नातिरिक्तः । अपि तु प्रतियोगिस्वरूप एवेति प्राञ्चः । नव्यास्तु तत्रात्यन्ताभावाभावोऽतिरिक्त एव । तृतीयाभावश्च प्रथमाभावरूप इति नानवस्थेति प्राहुः । अन्योन्याभावाभावस्तु स्वप्रतियोगिभेदप्रतियोगितावच्छेदकरूप इति बोध्यम् ।

सौन्दडोपाध्यायः 'घटत्वेन पटो नास्ति' इति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावं स्वीकरोति । इतरे नैयायिकास्तु तं न स्वीकुर्वन्ति, किं तु पूर्वोक्तप्रतीतौ ('घटत्वेन पटो नास्ति' इति प्रतीतौ) पटवृत्तिघटत्वाभावमेव विषयं केवलान्वयिनं मन्यन्ते ।

केवलाधिकरणादेव ( यस्मिन्भूतलात्मकेऽधिकरणे घटो नास्तीत्यादिप्रत्ययस्तस्मात् ) 'नास्ति' इति व्यवहारोपपत्तावभावो न पदार्थान्तरम्, किं त्वधिकरणात्मक एवेति प्राभाकरा आहुः। ( त० दी० ) ( मु० ) ( सि० च० ) ( न्या० म० )

३ समवायभिन्नत्वे सति समवायशून्य इत्यर्थः ।

१ अत्रेदं बोध्यम्--प्रागभावस्योत्तरावधिकत्वम् । प्रध्वंसस्य पूर्वावधिकत्वम् । अन्योन्याभावस्य प्रतियोगिसमानाधिकरणत्वम् । अत्यन्ताभावस्य तु त्रितयवैधर्म्यमतश्चतुर्थोऽयमभावः । ( वै०उ० ९।१।५ ) अत्यन्ताभावोऽन्योन्याभावश्च प्रत्येकं द्विविधः । एकमात्रपर्याप्तवृत्तिकधर्मावच्छिन्नप्रतियोगिताकः, व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकश्च । तत्राद्यो यथा घटत्वावच्छिन्नाभावः* । द्वितीयः, एकघटवति द्वित्वावच्छिन्नाभावः† । ( न्या० म० १।१२ )

अन्येऽपि केचिदत्यन्ताभावभेदाः प्रदर्श्यन्ते । सामान्याभावश्च, स्वान्यूनानतिरिक्तवृत्तित्व स्वनिष्ठावच्छेदकतानिरूपितत्वोभयसंबन्धेन सामान्यधर्मविशिष्टप्रतियोगिताकाभावः । विशेषाभावश्च, उक्तोभयसंबन्धेन विशेषधर्मविशिष्टप्रतियोगिताकाभावः । व्यधिकरणधर्माव-

* घटत्वादेः प्रत्येकमपि पर्याप्तत्वात् । एकत्रापि 'अयं घटः' इति घटत्वप्रतीतेः । (म०प्र०१३)

† घटवति 'घटपटौ न स्तः' एकघटवति 'न घटौ,' 'घटौ न घटपटौ' 'एको न द्वौ' इति प्रतीतिभ्यः एकघटवति द्वित्वावच्छिन्नोभयात्यन्ताभावस्य, एकस्मिन्नुभयान्योन्याभावस्य च सत्वात् । ( न्या० म० १।१२ ) ( म० प्र० १३ )

प्रकारान्तरेणाभावो द्विधा । संसर्गाभावः, अन्योन्याभावः । आद्यस्त्रिविधः । प्रागभावः, प्रध्वंसः, अत्यन्ताभावः । इति । (भा० प० श्लो० १२) (त० कौ० २१) द्वितीयस्त्वेकविध एवेति । (मु० १।४१)

२ [ क ] व्याप्तिसापेक्षोऽनुमानम् । तच्च विरोध्यभावज्ञानाधीनं विरोध्यन्तरकल्पनम् । यथा नकुलाभावज्ञाने नकुलविरोधिनो व्यालस्य कल्पनम् ।

[ ख ] कारणाभावादिना कार्याभावादिज्ञानम् । (गौ० वृ० २।६९–७०)

**अभावत्वम्**–[ क ] 'इदमिह नास्ति, इदमिदं न भवति' इत्यादिप्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेषः । (दीधि० २)

[ ख ] प्रतियोगिज्ञानाधीनज्ञानविषयत्वम् । (सि० च० ४) (ल० व० ४)

[ ग ] द्रव्यादिषट्कान्योन्याभाववत्त्वम् (मु० १।४१)

[ घ ] भावभिन्नत्वम् । (वाक्य० १) (सि० च० १।४)

[ ङ ] समवाय एकार्थसमवाय (सामानाधिकरण्य) एतदन्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताऽभाव इति नव्याः । (दि० १।४१)

[ च ] भावव्यावृत्तोऽखण्डोपाधिः, अनुयोगिताविशेषो वा इति संप्रदायः । (मू० म० १) (सि० च० ४) (दि० १।४१)

---

च्छिन्नाभावश्च, स्वाश्रयावृत्तित्व स्वनिष्ठावच्छेदकतानिरूपितत्वोभयसंबन्धेन किंचिद्धर्मविशिष्टप्रतियोगिताकाभावः । विशेषरूपेण सामान्याभावश्च, स्वसामानाधिकरण्य स्वाधिकरणवृत्त्यभावप्रतियोगित्वोभयसंबन्धेन प्रतियोगित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावः । सामान्यरूपेण विशेषाभावश्च, स्वसामानाधिकरण्य स्वाधिकरणवृत्त्यभावाप्रतियोगित्वोभयसंबन्धेन प्रतियोगित्वविशिष्टधर्मावच्छिन्नप्रतियोगिताकाभावः । (ल० व० ३८–३९)

---

१ अत्र संसर्गाभावत्वं च [ क ] तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वमिति संप्रदायः । [ ख ] भेदेतराभावत्वमिति नव्याः । (प० मा०)

२ अत्रायमाशयः–'न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्' (गौ० ५।६९) इत्यत्राभावस्य प्रमाणान्तरत्वं केचिदाशशङ्किरे । तन्न । अभावनिष्ठव्याप्तेरनुमानाङ्गत्वे विरोधाभावात् । तेनाभावस्यानुमानान्तर्गतत्वमेव, न तु प्रमाणान्तरत्वमिति । (गौ० सू० २।६९–७०)

**अभिघातः**–( संयोगः ) यः संयोगः शब्दनिमित्तकारणं भवति, यज्जनितं कर्म संयोगिनोः परस्परविभागहेतुश्च भवति स संयोगविशेषोऽभिघातः । ( वै० उ० ५।२।१ ) यथा कुठाराद्यभिघातः । ( वै० वि० ५।२।१ )

**अभिचारः**– मारणम् । शत्रुवध इत्यर्थः । यथा श्येनेनाभिचरन्यजेतेत्यादावभिचारः ।

**अभिधा**–१ संकेतवदस्यार्थोऽनुसंधेयः । ( दि० १ ) २ संकेतग्राह्योऽधिकः पदार्थ इति मीमांसका आहुः । ( न्या० म० ४।३ ) तत्र, फलजनकव्यापाररूपा शब्दनिष्ठा भावनेति भट्टाः ।

---

१ अत्र विप्रतिपद्यन्ते । हिंसा च, मरणोद्देश्यकोऽदृष्टाद्वारकमरणानुकूलव्यापारः । तेन श्येनस्य न हिंसात्वम्, अदृष्टद्वारकत्वात् । एवं च श्येनेनाभिचन् यजेतेत्यादौ बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादेर्विशिष्टस्य विध्यर्थत्वेऽपि तादृशविध्यर्थान्वयबोधो* भवत्येव इति प्राञ्चो नैयायिका आहुः । नव्यास्तु, श्येनस्याभिचारतया पापजनकत्वस्मरणात् मरणोद्देश्यकं मरणप्रयोजकव्यापारमात्रं हिंसेति निर्वचनीयम्, न त्वदृष्टाद्वारकत्वविशेषणेनापि घटितम् । तेन च श्येनस्य हिंसात्वमस्त्येव । तथाच विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे एका शक्तिरयुक्ता । किंतु बलवदनिष्टाननुबन्धित्वम्, इष्टसाधनत्वम्, कृतिसाध्यत्वं चैतत्रिषु पृथक् शक्तित्रयं स्वीकृत्य क्वचित् कस्यचित्, क्वचित् कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम् । एवं च श्येनेनेत्यादौ बलवदनिष्टाननुबन्धित्वस्य (अविवक्षितत्वात्) बोधो न भवत्येवेत्याहुः । केचित्तु, श्येनो हि न हिंसा, किंतु श्येनस्य फलं हिंसा । सा च साक्षान्मरणानुकूलव्यापारः । स च ( व्यापारः ) श्येनजन्यः खड्गाघातादिरूपः, स एवाभिचारपदार्थः † । तस्य पापजनकत्वम् । एवं च श्येनेनाभिचरन् यजेतेत्यादौ श्येनस्य हिंसात्वाभावेन बलवदनिष्टाननुबन्धित्वमपि विधिप्रत्ययेन बोध्यत इत्याहुः । ( दि० ) ( राम० २२९ )

---

* अत्रायमभिप्रायः—प्रथमं श्येनः, ततो वधः, ततोऽपूर्वम्, ततो मरणमिति स्थितिः । तथाच श्येनो न स्वरूपतो निषिद्धः, किंतु फलत इति बलवदनिष्टाननुबन्धित्वमप्यक्षतम् । तथापि वधाच्च नरक इति न तत्रास्तिकानां प्रवृत्तिरिति । ( न्या० म० ४।२७ ) ( म० प्र० ६० )

† अत्रेदमाकूतम्—प्रथमं श्येनः, ततस्तज्जन्यमपूर्वम्, ततः खड्गाघातादिरूपा हिंसा, तदव्यवहितोत्तरमेव मरणमिति । अत्र श्येनस्य वैधत्वात्पापाजनकत्वेऽपि अग्रिमपापं प्रतिसंधाय सन्तो न प्रवर्तन्त इति । ( दि० २२९ )

**अभिधेयत्वम्**–[क] भगवदिच्छारूपशब्दशक्तिविषयत्वम्[1]। (न्या० मं० २।१९)

[ख] शब्दशक्तिविषयत्वम्। (त० प्र० २) (दि० १)

[ग] शब्दशक्यत्वम्। (दीधि० २) यथा घटपटादेः सर्वस्याभिधेयत्वम्। (ख०)

**अभिनयः**–साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया। यथा हस्तचेष्टादिना बदरघटाद्याकारेण'अल्पस्तनी, स्थूलस्तनी'इति प्रदर्शनम्। (काव्य० टी० २)

**अभिप्रायः**–इच्छावदस्यार्थोऽनुसंधेयः। (दि० गु०)

**अभिभवः**–१ [क] बलवत्सजातीयसंबन्धः। यथा सुवर्णरूपस्याभिभवः[2]। (वै० उ० २।१।७) (दि० १।२) (प० मा०)

[ख] बलवत्सजातीयग्रहणकृतमग्रहणम्। यथा सुवर्णगतरूपवृत्तिशुक्लत्वभास्वरत्वयोरभिभवः। सुवर्णगतरूपस्याप्यभिभव इत्येके। (वै० उ० ४।१।९) २ पराजयप्राप्तिरभिभव इति काव्यज्ञा वदन्ति।

**अभिमानः**–१ (दोषः) अपकारिण्यकिंचित्करस्यात्मनि द्वेषः। (गौ० वृ० ४।३) २ भ्रम इत्यस्मद्गुरुचरणाः (भिकुशास्त्रिणः) प्राहुः।

**अभिलाषः**–विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः। यथा हरिर्भक्तिमभिलषतीत्यादावभिलषतेरर्थः (ल० म० १०२)

**अभिविधिः**–१ अभिव्याप्तिवदस्यार्थोऽनुसंधेयः। (श० प्र० ११७) २ व्यापकत्वम्। यथा आसकलाद्ब्रह्मेत्यादावाङ्द्योत्योऽभिविधिरूपः संबन्धः पञ्चम्यर्थः। 'सकलव्यापकं ब्रह्म'इति बोधः। अभिविधिर्द्विविधः। कालिकः, दैशिकश्च। तत्राद्यो यथा, कार्तिक्याश्चैत्रं यावच्छीतमित्यादौ।

---

१ तच्च सर्वत्रैव वर्तते, सर्वस्यैव भगवदिच्छाविषयत्वात्। वस्तुपदशक्यत्वात्। (न्या० म० २।१९)

२ तदुक्तम्–भूसंसर्गवशाच्चान्यद्रूपं नैव प्रकाशते इति। (वै० उ० २।१।७)

अत्र चैत्रपदं तदन्त्यकालपरम् । एवंच कार्तिकीप्रभृतिचैत्रान्तकालव्यापकं शीतमिति बोधः ।

द्वितीयं यथा, काशीतः पाटलिपुत्रं यावद्वृष्टो देव इत्यादौ । अत्र काशीप्रभृतिपाटलिपुत्रान्तदेशव्यापकत्वं वृष्टौ प्रतीयते । अनयोः (दैशिककालिकयोरभिविध्योः ) तात्पर्यवशात्कदाचिद्व्यापकत्वं तद्भिन्नकालावृत्तित्वविशिष्टं तद्भिन्नदेशावृत्तित्वविशिष्टं च प्रतीयत इति बोध्यम् । ( ल० म० ११३)

**अभिव्याप्तिः**—१ अभिविधिः । स च तदारम्भकयावदवयवावच्छेदेन तत्संयुक्तत्वम् । यथा, गृहं यावद्धनं तवेत्यत्र यावदित्यस्यार्थः । २ तद्वृत्त्यधिकरणता—(मासवृत्त्यधिकरणता) वच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणकालवृत्तित्वम्, तथाविधयत्किंचिद्यावत्त्वव्यापकं वा । यथा मासं सुप्यते इत्यादौ मासादेरभिव्याप्तिर्द्वितीयार्थः । ३ तद्वृत्त्यधिकरणता—( क्रोशगम्यदेशवृत्त्यधिकरणता ) वच्छेदकीभूतयावत्त्वपर्याप्त्यधिकरणदेशवृत्तित्वम्, तथाविधयत्किंचिद्यावत्त्वव्यापकं वा । यथा क्रोशं गम्यते इत्यादौ क्रोशादेरभिव्याप्तिर्द्वितीयार्थः ( श० प्र० ११७–११८ )

**अभिहितान्वयवादः**—शाब्दबोधाविषयस्य शक्तिज्ञानाविषयत्वनियम इति

---

१ अत्र 'गृहाभिव्याप्तं स्वद्धनम्'इत्याकारो बोधः । ( श० प्र० ११७ )

२ अत्र 'कालाध्वनोरत्यन्तसंयोगे' (पा० सू० २।३।५) इत्यनेन द्वितीया । 'मासाभिव्याप्तः स्वापः' इति बोधः । ( श० प्र० ११७ )

३ अत्र 'क्रोशाभिव्याप्तगतेः कर्मत्वम्'इति बोधः । ( श० प्र० ११७ )

४ अत्र 'अभिहितानां पदोपस्थितानामर्थानामन्वयः संसर्गः संसर्गमर्यादया वाक्यार्थबोधे विषयो भवति इति वादः कथनम्'इति व्युत्पत्तिः । भट्टतार्किकाणां मतमेतत् । तन्मते प्रत्येकं तत्तदर्थेषु गृहीतशक्तिकान्येव पदान्याकाङ्क्षादिसहकृतया तत्तत्पदवृत्त्यैव (शक्त्या लक्षणया वा ) परस्परान्वितं विशिष्टमेकमर्थं* बोधयन्ति, इति । अयमेव वाक्यार्थबोध इति, शाब्दबोध इति चोच्यते । ( स्व० ) किंच, ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादौ तप्रत्ययः प्रकृत्यर्थोपरक्तां भावनामभिधत्त इति सिद्धे व्युत्पत्तिमभ्युपगच्छतां भट्टाचार्याणां सिद्धान्त इति विज्ञेयम् । ( सर्व० जैमि० १३४ )

---

* विशिष्टार्थबोधनेऽतिरिक्ताया वाक्यशक्तेरपेक्षा नास्तीति भावः ।

वादः । ( ख० ) यथा, तात्पर्यार्थोऽपि केषुचित् ( काव्यप्र० उ० २ ) इत्यादौ ।

**अभीष्टत्वम्**—स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् । ( मू० म० १ ) यथा सुखस्याभीष्टत्वम् । ( ख० )

**अभेदः**—तादात्म्यम् । तच्च स्ववृत्त्यसाधारणधर्मः[1] । यथा 'नीलो घटः' इत्यादौ घटे तन्नीलत्वरूपं तादात्म्यम् । ( ग० व्यु० १ )

**अभ्यर्थना**—अधीष्टवदस्यार्थोऽनुसंधेयः । ( वै० सा० द० १३१ ) अधीष्टशब्दस्तु 'लिङ्' शब्दव्याख्यानावसरे व्याख्यास्यते ।

**अभ्यासः**—१ [ क ] पुनःपुनः संशीलनम् । ( सर्व० रामा० ९९ ) [ ख ] पौनःपुन्यम् । यथा समाधिविशेषाभ्यासादित्यादौ विषयान्तरानभिष्वङ्गस्याभ्यासः । ( गौ० वृ० ४।१०३ )

---

१ अत्रासाधारण्यं चैकमात्रवृत्तित्वम् । तच्च * स्वसामानाधिकरण्य स्वप्रतियोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टं यत्तदन्यत्वम् ( ग० व्यु० १ )

---

* अत्रायमाशयः—स्वपदेन यदा एतद्घटभेदो गृह्यते तदा स्वस्य प्रतियोगी एतद्घट एव भवति, तत्र एतन्नीलत्वात्मकं तादात्म्यं वर्तत इति स्वप्रतियोगिवृत्तित्वसत्त्वेऽपि स्वसामानाधिकरण्यं (स्वमेतद्घटभेदः, स्वस्याधिकरणं नत्वेतद्घटो भवति किं तु घटान्तरं पटादिकमेव वा भवति, तत्र पूर्वोक्तं तादात्म्यं न वर्तत इति हेतोः) नास्तीति तादृशोभयसंबन्धेन तादृशभेदविशिष्टं न भवतीति तदन्यत्वं संपद्यते ।

यदा तु स्वपदेन घटसामान्यभेदः ( घटत्वावच्छिन्नप्रतियोगिताकभेदः ) पटादिभेदश्चैतयोर्मध्ये पटादिभेदो गृह्यते तदा स्वं पटादिभेदः, स्वस्याधिकरणमेतद्घटो भवति, तत्र एतद्व्यक्तिवृत्तिनीलत्वात्मकं तादात्म्यं वर्तत इति स्वसामानाधिकरण्यसत्त्वेऽपि स्वप्रतियोगिवृत्तित्वं ( स्वप्रतियोगिपटे तादृशतादात्म्यं न वर्तत इति हेतोः ) नास्तीति तादृशोभयसंबन्धेन तादृशभेदविशिष्टं न भवतीति तदन्यत्वं संपद्यते ।

यदा घटसामान्यभेदो गृह्यते तदा स्वप्रतियोगी एतद्घटोऽपि भवतीति तत्र तादात्म्यसत्त्वेन स्वप्रतियोगिवृत्तित्वसंभवेऽपि स्वसामानाधिकरण्यं ( स्वं घटसामान्यभेदः, स्वस्याधिकरणं पटादिकमेव ( न त्वेतद्घटोऽपि ) तत्र तादात्म्यं न वर्तत इति हेतोः) नास्तीति भेदविशिष्टान्यत्वं संपद्यते । घटसामान्यभेदस्य प्रतियोगि यदा घटान्तरं ( एतद्घटभिन्नो घटः ) गृह्यते तदा तत्र तादृशतादात्म्यं नास्तीति स्वप्रतियोगिवृत्तित्वं स्वसामानाधिकरण्यं चैतदुभयं नास्तीति तादृशभेदविशिष्टान्यत्वं सुतरां संपद्यत इति सूक्ष्मदर्शिबुद्धिवैशद्येनेतत् ।

[ ग ] संस्कारबाहुल्यम् ।

[ घ ] दृढतरसंस्कार इति केचित् । ( गौ० वृ० ३।११३ )

[ ङ ] एकप्रकाराऽसकृदुक्तिरभ्यास इति मध्वाचार्यानुयायिनो वेदान्तिनः ।

२ विहितयोर्द्वयोः पूर्वोऽभ्यास इति शाब्दिका वदन्ति ।

**अभ्यासदशा**–१ विशेषदर्शनाधिकरणकालः । २ प्राथमिकज्ञानसमानाकारज्ञानान्तराधिकरणकालः । यथा द्वितीयादिजलज्ञानकालः । ( स्व० )

**अभ्युपगमः**–१ निश्चयविशेषः । (मू० म० १) २ स्वीकारः । ( स्व० ) यथा, अस्तु द्रव्यं शब्दः, इति । ( वात्स्या० १।१।३१ ) यथा वा, सूत्रकृताऽभ्युपगतमित्यादावभ्युपगमः । (गौ० वृ० १।१।३१)

**अभ्युपगमसिद्धान्तः**–( सिद्धान्तः ) [ क ] अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः । ( गौ० १।३१ ) यत्र किंचिदर्थजातमभ्युपगम्यते अस्तु द्रव्यं शब्दः, स तु नित्योऽथानित्य इति द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते । सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति । ( वात्स्या० १।१।३१ )

[ ख ] साक्षादसूत्रिताभ्युपगमः । यथा मनस इन्द्रियत्वमिति । ( गौ० वृ० १।३१ )

[ ग ] तन्त्रान्तरसिद्धः स्वयमभ्युपगतः । यथा वैशेषिकाभ्युपगतस्य मनसीन्द्रियत्वस्य नैयायिकेनाभ्युपगम इति । ( प्र० प्र० )

**अमर्षः**–( दोषः ) कृतापराधेऽसमर्थस्य द्वेषः ( गौ० वृ० ४।३ )

**अमूर्तगुणत्वम्**–[ क ] मूर्तगुणवृत्तिः संस्कारत्वान्या गुणत्वव्याप्या च या जातिस्तच्छून्यगुणत्वम् ।

---

१ अमूर्तगुणाश्च बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः, भावना, शब्दश्चेति दश सन्ति । ( भा० प० गु० १९२ )

२ अत्र तादृशी जाती रूपत्वरसत्वादिर्भवति, तच्छून्यत्वं बुद्ध्यादौ वर्तत इति लक्षणसमन्वयः ।

[ ख ] मूर्तत्वाभावव्याप्यतावच्छेदिका[1] परिमाणावृत्तिश्च या जातिस्तद्वत्त्वम् । ( दि० गु० १९२ )

[ ग ] मूर्तावृत्तिः संख्यादिपञ्चकभिन्नो यो गुणस्तत्त्वम् । (ल० व० ३६)

**अयथार्थबुद्धिः**–( बुद्धिः ) [ क ] अर्थव्यभिचार्यप्रमाणजन्यं ज्ञानम् । ( त० भा० )

[ ख ] प्रमाणाभासजन्यं ज्ञानम् । ( त० कौ० ६ )

[ ग ] तच्छून्ये तन्मतिः । ( भा० प० गु० श्लो० १२८ )

[ घ ] यत्र यन्नास्ति तत्र तस्य ज्ञानम् ।

[ ङ ] तदभाववति तत्प्रकारकं ज्ञानम्[2][3] । ( चि० १।१० ) यथा शुक्तौ 'इदं रजतम्' इति ज्ञानम्[4] (स्व०) अयथार्थज्ञानमेवाप्रसिद्धम्, पुरोवर्तिज्ञानरजतत्वस्मरणाभ्यामेव रजतानयने प्रवृत्त्युपपत्तेरिति मीमांसका वदन्ति । ( सि० च० १।१९ )

**अयथार्थानुभवः**–अप्रमावदस्यार्थोऽनुसंधेयः । ( मु० ) ( सि० च० )

**अयुतसिद्धम्**–ययोर्द्वयोर्मध्ये एकमविनश्यद्[5]अपराश्रितमेवावतिष्ठते तावयुतसिद्धौ । तौ च पञ्चविधौ । यथा अवयवा[6]वयविनौ, गुणगुणिनौ, क्रिया-

१ यत्र यत्र बुद्ध्यादयोऽमूर्तगुणास्तत्र तत्र मूर्तत्वाभाव इति नियमेन बुद्धित्वसुखत्वादिजातिर्मूर्तत्वाभावस्य व्याप्यतावच्छेदिका भवतीति बोध्यम् ।

२ अत्रायथार्थत्वं च [ क ] तदभाववति तत्प्रकारकत्वम् । [ ख ] *प्रकारव्यधिकरणविषयताकत्वम् । ( चि० १ )

३ एतानि पूर्वोक्तानि पञ्च लक्षणानि स्मृतिसाधारणान्यपि भवन्ति, इति बोध्यम् ।

४ शुक्तौ 'इदं रजतम्' इति ज्ञाने प्रसिद्धशुक्तिरजतत्वयोरलीक एव समवायो भासत इत्यसत्ख्यातिं वाचस्पतिमिश्रा अङ्गीचक्रुः । ( सि० च० १।१९ )

५ नाशपर्यन्तमित्यर्थः । ( वाक्य० )

६ अत्रेदं बोध्यम्–न हि घटाद्यवयवी कपालाद्यवयवासंबन्धः सन् तिष्ठति । (वै० वि० ७।२। १३) अतः, अवयव्यादयो हि अविनश्यन्तो अवयवाद्याश्रिता एवावतिष्ठन्ते । अवयवादिनाशानन्तरं विनश्यन्तस्तु क्षणमात्रं निराश्रिता एवावतिष्ठन्त इति । ( त० कौ० २० )

* स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता तत्तन्निरूपकत्वमित्यर्थः । (ग० सामा०)

क्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति । (त० सं० ) (त० कौ० २० ) (त० भा० पृ० ३ )

**अर्जनम्**—स्वत्वजनकव्यापारः । यथा याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदिति श्रुतौ धात्वर्थः । ( श० प्र० ८९ )

**अर्थः**–१ अर्थ इति द्रव्यगुणकर्मसु । (वै० ८।२।३) एतस्य व्याख्या–[ क ] एतेषां द्रव्यगुणकर्मणामर्थ्यमानत्वं तेन तेन विधिनोक्तम् । तेन तेषु त्रिषु वैशेषिकाणामर्थ इति परिभाषा । अर्थपदेन त्रयाणामुपस्थितेः । तदुक्तं प्रशस्तदेवाचार्यैः, 'त्रयाणामर्थशब्दाभिधेयत्वं च' इति (वै० उ० ८।२।३) [ ख ] अर्थ इति शब्दो द्रव्यगुणकर्मसु वर्तते, स च तत्र पारिभाषिकः । गौतमीये तु 'रूपरसगन्धस्पर्शाः पृथिव्यादिगुणास्तदर्थाः' इति........ अतः पञ्चेन्द्रियग्राह्येषु पञ्चसु गुणेष्वपि अर्थशब्दस्य परिभाषान्तरं समानतन्त्रसिद्धम् । ( वै० वि० ८।२।३ ) २ [ क ] यत्परः शब्दः सः । (चि० ) यथा षट् पदार्थाः[२] । ते च द्रव्यगुणकर्मसामान्यविशेषसमवायाः । ( त० भा० २७ ) ( वै० १।१।४ )

[ ख ] वृत्त्या पदप्रतिपाद्यः । (ग०शक्ति० ) यथा घटशब्दस्यार्थः कम्बुग्रीवादिमान् । ( स्व० ) ३ प्रकारः ( वाक्य० ) यथा अर्थाबाधो[३] योग्यतेत्यादावर्थः प्रकारः । ४ निवृत्तिः । यथा, अनुमानं परार्थमित्यादौ[४] । (चि० अव० २।७६) ५ यदाकाङ्क्षया यत्प्रवर्तते स (फलम्) तस्यार्थः । ( मू० म० १ ) ६ विधिजन्यबोधविषयः ( धर्मः ) अर्थ इति मीमांसका आहुः । ७ धनमर्थ इति लौकिकजना वदन्ति ।

---

१ अयं च शब्दार्थ इत्युच्यते । ( चि० ४ ) ( ग० शक्ति० ) अयमर्थो नैयायिकमते द्विविधः । वाच्यः, लक्ष्य इति । व्यङ्ग्योऽपि तृतीयोऽर्थ इत्यालंकारिका आहुः । (काव्य० २)

२ प्रमाणादयोऽ-( गौतमसूत्रपठिताः ) प्यत्रैवान्तर्भवन्ति, तथापि प्रयोजनवशाद्भेदेन निरूपिताः, इति बोध्यम् ( त० भा० २७ )

३ अत्र, जलेन सिञ्चतीत्यादौ जलकरणकत्वरूपप्रकारस्य सेचनक्रियायामबाध इति बोध्यम् ।

४ अत्र, परस्य मध्यस्थस्यार्थः संशयस्य निवृत्तिर्यस्मादिति व्युत्पत्त्याऽनुमानस्य संशयनिवृत्तिफलकत्वरूपं परार्थत्वं युज्यत इति बोध्यम् ।

**अर्थनिश्चयप्रसङ्गः**—तत्कार्यनिष्कम्पप्रवृत्त्यादिप्रसङ्गः । ( ग० बाध० )

**अर्थपुनरुक्तम्**— ( निग्रहस्थानम् ) १ अर्थस्य पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । ( गौ० ५।२।१४ ) समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानम् । यथा घटः कलश इति । ( गौ० वृ० ५।१७ ) यथा वा, अनित्यः शब्दो निरोधधर्मको ध्वान इति । (वात्स्या० ५।२।१४ ) २ [क] अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् । (गौ० ५।१८) निदर्शनम् । उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति । तच्च पुनरुक्तं वेदितव्यम् । अर्थसंप्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति । (वात्स्या० ५।२।१६ )

[ख] यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्य तेन रूपेण पुनरभिधानम् । यथा वह्निरुष्ण इति, उष्णो वह्निरिति । एवं बहिरस्ति 'गेहे नास्ति' इति विध्याक्षिप्तोक्तिः । जीवन् गेहे नास्ति 'बहिरस्ति' इति निषेधाक्षिप्तोक्तिः । ( गौ० वृ० ५।१८ )

**अर्थवादः**—( शब्दः ) [क] विधिभिन्नः शब्दः । (न्या० म० ४।३० )

---

१ एतस्य प्रमादादिना संभवः । ( गौ० वृ० ५।५७ )

२ पूर्वपदाक्षिप्तोक्तिरियम् । ( गौ० वृ० ५।५८ )

३ उत्तरपदाक्षिप्तोक्तिरियम् । ( गौ० वृ० ५।५८ )

४ अर्थस्य प्रयोजनस्य वादनम् । विध्यर्थप्रशंसापरं वचनमित्यर्थः । अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थे शीघ्रं प्रवृत्तये प्रशंसति । ( गौ० वृ० २।६३ ) निषिद्धार्थे शीघ्रं निवृत्तये निन्दति च । स चायं ( अर्थवादः ) लोके वेदे च समानः । ( त० कौ० ४।१७ ) तत्र लौकिकः, ओदनकामस्तण्डुलं पचेत, तृप्तिकामस्तण्डुलौदनं भुञ्जीतेत्यादौ विध्यर्थस्य तण्डुलपाककरणस्य, तण्डुलौदनभोजनरूपस्य च स्तावकं 'तण्डुलपाक ऋषिभिः पूर्वं स्वर्गार्थं कृतः, ओदनममृतम्' इत्यादि वाक्यम् । एवं कफज्वरपीडितो दुग्धं न पिबेदित्यादिनिषेधविधिस्थलेऽपि दुग्धपानस्य निन्दकं 'पशुभिर्भक्षितेनापथ्यतृणादिना दुग्धं जन्यते, तच्च विषरूपमित्यादिकं वाक्यम् । वैदिकोदाहरणानि स्वत्रैव प्रदर्शितान्येवेति तत्प्रदर्शनमुपेक्षितम् ।

[ ख ] विधिनिषेधभिन्नः शब्दः । यथा आदित्यो यूपः[1], अग्निर्हिमस्य[2] भेषजम्, वज्रहस्तः पुरंदरे[3] इत्यादि । ( त० कौ० ४। पृ० १७ )

[ ग ] प्राशस्त्यनिन्दाऽन्यतरपरं वाक्यम् । ( लौ० भा० ) यथा वायुर्वै[4] क्षेपिष्ठा देवतेत्यादिः । सोऽरोदीदित्यादिर्वा[5] । अर्थवादश्चतुर्विधः । स्तुतिः, निन्दा, परकृतिः, पुराकल्पः । (गौ० २।६४) प्रकारान्तरेण स त्रिविधः[6]। गुणवादः, अनुवादः, भूतार्थवादश्चेति । (न्या०म० ४। पृ० ३०) मीमांसकास्तु विधिशेषः, निषेधशेषश्चेत्यर्थवादं द्वैविध्येन विभेजिरे । (लौ०भा०)

**अर्थान्तरम्**– ( निग्रहस्थानम् ) [ क ] प्रकृतादर्थादसंबद्धार्थमर्थान्तरम् । (गौ०५।१०) यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात् । नित्यः शब्दः, अस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम् । पदं च नामाख्यातोपसर्गनिपाताः । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम, क्रियाकारकसमुदायः । कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम् । धात्वर्थमात्रं च कालाभिधानविशिष्टम् । प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः । उत्सृज्यमानक्रियाऽवद्योतका उपसर्गाः । इत्येवमादि, तदर्थान्तरं वेदितव्यम् । ( वात्स्या० ५।२।७ ) ( नील० पृ० ४५ )

---

१ गुणवादोदाहरणमिदमिति ज्ञेयम् । ( लौ० भा० )

२ अनुवादोदाहरणमिदमिति ज्ञेयम् । ( लौ० भा० )

३ भूतार्थवादोदाहरणमिदमिति ज्ञेयम् । ( लौ० भा० )

४ अत्र च 'वायव्यंश्वेतमालभेत भूतिकामो, वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति' । (कृष्णयजुःसंहिता २।१।१) इत्यादौ वायुर्वै क्षेपिष्ठेत्यर्थवादो हि वायव्यंश्वेतमालभेतेत्यादिविधिविहितं श्वेतपश्वालम्भनं 'श्वेतपशुकरणको यागः प्रशस्तः' इति प्रशंसतीति विज्ञेयम् ।

५ सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम् । (कृष्णयजुः० १।५।१) इति वाक्यं तु 'कृतावृत्विग्भ्यो रजतं न देयम्' इति निषिद्धं रजतदक्षिणादानं निन्दतीति बोध्यम् ।

६ तदुक्तम्–विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः, इति । (न्या० म० ४। पृ० ३१)

[ख] प्रकृतोपयुक्तमर्थमुपेक्ष्यासंबद्धार्थाभिधानम्, प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः । यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा शब्दो गुणः स चाकाशस्येत्यादि । ( गौ० वृ० ५।१० ) ( त० भा० पृ० ९१ ) ( दि० १। पृ० २२ )

**अर्थापत्तिः**–( अनुमानम् ) [क] वाक्यार्थसंप्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव । ( वात्स्या० २।२।२ )

[ख] अनुपपद्यमानेनार्थेनोपपादककल्पनम् । यथा वृष्ट्या मेघज्ञानम् । ( गौ० वृ० २।६९ ) यथा वा, पीनो देवदत्तो दिवा न भुङ्क्ते इति प्रत्ययान्तरं दिवसाऽभोजिनः पीनत्वं रात्रिभोजनमन्तरेणानुपपन्नमिति

---

१ अर्थापत्तिश्च नैयायिकानां सांख्यानां च मते व्यतिरेकव्याप्तिज्ञानम्,* तदधीनानुमितिर्वा, आपादकज्ञानाधीना आपाद्यनिश्चयरूपाऽनुभूतिर्वा भवतीति न प्रमाणान्तरम् । मीमांसकमते तु ‘ कल्पयामि, ’ ‘ अर्थापयामि ’ इति विलक्षणानुभवात्सा अनुमितिभिन्नैवार्थापत्तिर्भवति, अनुपपत्तिज्ञानात्मकं तत्करणं वा भवतीति अर्थापत्तिः प्रमाणान्तरं मन्यन्ते मीमांसकाः ( प्राभाकाराः ) । तेषामयमाशयः–[क] ‘अर्थस्य रात्रिभोजित्वरूपार्थस्य ( शब्दादनुक्तस्यापि ) आपत्तिः कल्पना’ इति विग्रहेण प्रमापरत्वमर्थापत्तिपदस्य । अनुमितिभिन्नप्रमितिरिति यावत् । ‘अर्थस्य रात्रिभोजनादेरापत्तिः कल्पना यस्याः’ इति विग्रहेण च पीनत्वाद्यनुपपत्तिज्ञानात्मककरणपरत्वम् । एवं च उपपाद्यज्ञानेनोपपादककल्पनम् । तत्रोपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । येन विना यत् अनुपपन्नं तत् तत्रोपपाद्यम् । यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम् । पीनत्वमुपपाद्यम्, रात्रिभोजनमुपपादकम् । इत्थं च रात्रिभोजनादिविषयकप्रमितिरूपकल्पनात्मके फले, तत्करणे च पीनत्वाद्यनुपपत्तिज्ञानरूपे अर्थापत्तिशब्दो वर्तते । ( चि० २। पृ० ६३–७५ ) ( म० प्र० पृ० ६५ ) ( वाच० ) [ख] पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र ‘ यद्विना यदनुपपन्नं तत् तदुपपादकम् ’ इति रात्रिभोजनमुपपादकम्, पीनत्वमुपपाद्यम् । उपपादकज्ञानं फलम्, उपपाद्यज्ञानं करणम् । फलकरणयोरर्थापत्तिशब्दो वर्तते । फले ‘ अर्थस्यापत्तिः कल्पना ’ इति व्युत्पत्तिः । करणे तु ‘ अर्थस्यापत्तिः कल्पना यस्याः ’ इति व्युत्पत्तिर्द्रष्टव्येति । ( त० दी० ) ( नील० पृ० ३४ )

२ अत्र, उपपादककल्पनं हि विना व्याप्तिज्ञानं न संभवति । वृष्टित्वादावपि मेघजन्यत्वव्याप्तिरस्त्येवेति बोध्यम् । ( गौ० वृ० २।७० )

---

* अर्थापत्तिपदं च केवलव्यतिरेकिण एव ( हेतोः ) नामान्तरम् । ( न्या० म० ४। पृ० ३२ )

तत्कल्पयति। तत्रानुपपत्तिज्ञानमर्थापत्तिर्भवति ।(न्या० म०४। पृ० ३२) यथा वा, पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा दिवाऽभुञ्जानस्य पीनत्वं रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्तिज्ञानमर्थापत्तिः, ततो देवदत्तो रात्रौ भुङ्क्ते इत्यनुभवो भवति। (सि०च०पृ० ३३) (त०कौ०पृ० १७) [ग] यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न भवतीति, किमत्र प्रसज्यते? । सत्सु भवतीति । (वात्स्या० २।२।१)

अत्र विप्रतिपत्तिः—अर्थापत्तिं प्रमाणान्तरं मन्यन्ते केचन मीमांसकाः (प्राभाकराः)। अर्थापत्तिरनुमानान्तर्गतैव, न तु प्रमाणान्तरमिति नैयायिका वैशेषिकाश्च प्राहुः। अर्थापत्तिर्द्विविधा [क] दृष्टार्थापत्तिः, श्रुतार्था-

---

१ मीमांसकानामयमाशयः—[क] पीनो देवदत्तो दिवा न भुङ्क्ते इति दृष्टे श्रुते वा रात्रिभोजनं कल्प्यते। दिवाऽभुञ्जानत्वे सति पीनत्वं रात्रिभोजनमन्तरेण नोपपद्यते। अतः पीनत्वान्यथाऽनुपपत्तिप्रसूताऽर्थापत्तिरेव रात्रिभोजने प्रमाणम् प्रत्यक्षादिभ्यो भिन्नम्, रात्रिभोजनस्य प्रत्यक्षाद्यविषयत्वात्। (त० भा० पृ० १९) [ख] यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतम्, जीविनो गृहासत्त्वं च प्रत्यक्षादवगतम्, तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यते इति।

तदप्यनुमानेन गतार्थत्वान्नेष्यते (नैयायिकैः)। तथाहि—[क] यत्र जीवित्वस्य बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतम् तत्रान्यतरसिद्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासत इति। [ख] पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य रात्रिभोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं सिध्यति इति। (मु० गु० पृ० २२०)

२ अनुमानं तु केवलव्यतिरेक्यनुमानम् (व्यतिरेकव्याप्तिज्ञानम्)। तद्यथा—'देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति *पीनत्वात् यन्नैवं तन्नैवम् (यस्तु रात्रौ न भुङ्क्ते स दिवाऽभुञ्जानत्वे सति पीनो न भवति) यथा दिवा रात्रौ चाभोजी' इति। (न्या० म० पृ० ३२) (भा० प०श्लो० १४५) (त०कौ०२।पृ० १७) (चि० ३। पृ० ६३-७५) (त०दी० पृ० ३४)

---

* अत्र, दिवामात्रभोजिनि पीने व्यभिचारवारणाय हेतौ सत्यन्तं दलम्। अहोरात्राभोजिन्यपीने व्यभिचारवारणाय 'पीनत्वात्' इति विशेष्यदलम्। अत्र पीनत्वपदं योगरोगाद्यजन्यपीनत्वपरम्। तेन भोजनशून्ये योगिनि रोगिणि च पीने न व्यभिचारः, इति बोध्यम्। (नील० पृ० ३४)।

पत्तिश्च । तत्र, दिवा न भुङ्क्ते इत्यर्थे दृष्टे (प्रत्यक्षतो ज्ञाते) दृष्टार्थापत्तिः । दिवा न भुङ्क्ते इति शब्दादवगते श्रुतार्थापत्तिः । (नील० पृ० ३४)

[ख] अर्थापत्तिर्द्विविधा दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्च । तत्र दृष्टार्थापत्तिस्तावत्—जीविनो देवदत्तस्य गृहासत्त्वमुपलभ्य बहिःसत्त्वं कल्पयति, गृहेऽसतो बहिरप्यसत्त्वे जीवित्वस्यानुपपत्तेः । इयं च दृष्टार्थापत्तिरनुमानमेव । भवति हि जीविनो गृहासत्त्वं बहिःसत्त्वेन सहचरितम्; स्वशरीर एव च सुकरो व्याप्तिग्रहः । अत्रायं प्रयोगः—'देवदत्तो बहिर्विद्यते जीवित्वे सति गृहेऽसत्त्वात्' इति ।

श्रुतार्थापत्तिस्तु—[क] पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवाऽभुञ्जानस्य रात्रावप्यभोजने पीनत्वमेवानुपपन्नमिति रात्रिभोजनं कल्पयति । श्रुतार्थापत्तिरप्यनुमितानुमानम्, पीनो देवदत्त इत्यादिवाक्येन पीनत्वमनुमाय तेनैव लिङ्गेन रात्रिभोजनानुमानात् । अयमत्र प्रयोगः—'देवदत्तो रात्रौ भुङ्क्ते दिवाऽभोजित्वे सति पीनत्वात्' इति (त० व० पृ० ९८–९९)

[ख] श्रूयमाणशब्दस्यान्वयबोधकत्वं योग्यताघटकोपस्थापकेन शब्देन विनाऽनुपपद्यमानं तं कल्पयित्वा यत्रान्वयबोधं जनयति तत् श्रुतार्थापत्तिः । द्वारमित्यादौ 'पिधेहि' इति शब्दकल्पनं श्रुतार्थापत्तिरेव । शब्दश्च यद्यपि श्रूयमाणो बाधितस्तथाप्यभिप्रायस्थः कल्प्यते । (चि० २।पृ० ७९)

**अर्थापत्तिसमः**—(जातिः) [क] अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः । (गौ० ५।२१) अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदिति स्थापिते पक्षेऽर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः । यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इति, अर्थादापद्यते 'नित्यसाधर्म्यान्नित्यः' इति, अस्ति त्वस्य नित्येन साधर्म्यमस्पर्शत्वमिति । (वात्स्या० ५।१।२१)

[ख] अर्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानम् । अयमाशयः-

---

१ सर्वदोषदेशनाभासश्चायम् इति विज्ञेयम् (गौ० वृ० ५।२१)

अर्थापत्तिर्ह्युक्तेनानुक्तमाक्षिपति । यथा, शब्दोऽनित्य इत्युक्तेऽर्थादापद्यतेऽन्यन्नित्यम् । तथाच दृष्टान्तासिद्धिर्विरोधश्च । कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नम् अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा । अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः । ( गौ० वृ० ५।२१ )

[ ग ] अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् । यथा शब्दोऽनित्यः कार्यत्वादित्यादौ शब्दस्यानित्यसाधर्म्यादनित्यत्वं यदि तदाऽर्थापत्त्या सिद्धं नित्यसाधर्म्यान्नित्यत्वमपि । एकतरावधारणे नियामकाभावादिति । ( नील० पृ० ४४ )

**अलम्**—१ समर्थम् । यथा सुखायालं, समर्थं, योग्यं, वा भोजनमित्यादौ । २ वैफल्यम् । यथा अलमनेनेत्यादौ ( श० प्र० पृ० १२६ )

**अलंकारः**—१ शब्दार्थभूषणमनुप्रासोपमादिः । स च बहुविधः । २ हारादि भूषणमलंकार इति काव्यज्ञा वदन्ति ।

**अलीकत्वम्**—१ ज्ञानाविषयत्वम् । यथा शशशृङ्गादेरलीकत्वम् ( स० ) २ अन्यव्यावृत्तिः । यथा नास्तिकमते 'अयं घटः' इति ज्ञाने विषयीभूतस्य घटात्वादेरलीकत्वम् । ( म० प्र० १।पृ० ९ )

---

१ अत्र, अलमादिपदार्थैकदेशे सामर्थ्ये सुखादिनिरूपितत्वं चतुर्थ्या बोध्यते ( श० प्र० १२६ )

२ अत्रालंकारत्वं च, रसादिभिन्नं यद्व्यङ्ग्यं तद्भिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयतासंबन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्, इति । अत्र, अनुप्रासादिविशिष्टशब्दज्ञानात्, उपमादिविशिष्टार्थज्ञानाच्च चमत्कृतिर्जायत इति लक्षणसमन्वयो बोध्यः ( अलंकारचन्द्रिकायाम् )

३ तदुक्तम्—'शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः । रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत्' इति ।

४ अत्र, वेदान्तिनस्तु शशशृङ्गकूर्मरोमादीनि तुच्छशब्देन व्यवहरन्तीति बोध्यम् ।

५ अयं भावः—अघटव्यावृत्तिरेव घटे घटत्वम्, न तु भावरूपम् । अभावस्तु तुच्छ एवेति नास्तिकैरभ्युपगम्यते, इति । ( म० प्र० १।पृ० ९ ) अत्र नैयायिकाः, नास्तिकमते शशशृङ्गाद्यलीकमसत्ख्याख्या सिध्यति । सा चासत्ख्यातिः, ज्ञानविषयत्वस्यास्तित्वव्याप्यतया असत्ख्यातिविषयत्वस्य संनिकृष्टभेदप्रतियोगितावच्छेदकत्वासिद्धेः अनुपपन्नेत्याहुः । ( म० प्र० पृ० १७ )

**अलौकिकत्वम्**–१ [ क ] लोकावगतेष्टसाधनताश्रयान्यत्वम् । यथा 'नमस्कारादिकं ( मङ्गलम् ) वेदबोधितसमाप्तिसाधनताकम्, समाप्त्युद्देश्यकालौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत्' ( मू० म० मङ्ग० १। पृ० १६ ) इत्यादावाचारस्य मङ्गलस्य वाऽलौकिकत्वम् ।

[ ख ] उपाध्यायास्तु, लोकावगतबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताश्रयान्यत्वम् इत्याहुः। ( मू० म० मङ्ग० १।पृ० १७ )

[ ग ] रागतोऽप्राप्तत्वमित्यस्मद्गुरुचरणाः प्राहुः । २ वेदबोधितेष्टसाधनताकत्वमिति मीमांसकाः । ( मू० म० १ )

**अलौकिकप्रत्यक्षम्**–( प्रत्यक्षम् ) अलौकिकसंनिकर्षजन्यं प्रत्यक्षम् । यथा धूमत्वज्ञानानन्तरं सामान्यलक्षणप्रत्यासत्त्या जायमानं 'सर्वे धूमा धूमत्ववन्तः' इति धूमत्वाश्रयसकलधूमविषयकं प्रत्यक्षम् । (मु० १। पृ० १२७)

**अवक्षेपणम्**–( कर्म ) अपक्षेपणवदस्यार्थोऽनुसंधेयः ।

**अवगाहनम्**–[ क ] विषयिता । यथा, 'घटवद्भूतलम्' इति ज्ञानं घटाद्यवगाहीत्यादाववगाहनं विषयिता भवति । ( ख० )

[ ख ] विषयीकरणमित्यपि केचिद्वदन्ति ।

**अवच्छिन्नत्वम्**–१ व्यापकत्वम् । ( मू० म० १ ) यथा ह्रदे वह्निमत्ताबुद्धिनिरूपितप्रतिबन्धकतायां 'ह्रदो न वह्निमान्' इति निश्चयीयविषयिताया अवच्छिन्नत्वम् । ( ग० सामा० ) २ सामानाधिकरण्यम् । यथा 'वह्निव्याप्यधूमवान्पर्वतः' इति परामर्शनिरूपितयोर्धूमनिष्ठविषयतयोरवच्छे-

---

१ अत्र लोकशब्दार्थश्च वेद–तदुपजीविप्रमाणातिरिक्तप्रमाणम् ( मू० म० मङ्गल० १।१६ )

२ अत्र संनिकर्षेऽलौकिकत्वं च [ क ] सामान्यलक्षण-ज्ञानलक्षण-योगज-एतदन्यतमत्वम् । [ ख ] विषयताविशेषो वा ।

३ अवच्छिन्नत्वावच्छेदकत्वयोः (स्वरूपसंबन्धरूपयोः) तुल्यवित्तिवेद्यत्वेन साकाङ्क्षत्वेन च परस्परं निरूप्यनिरूपकभावो बोध्यः, तथा चावच्छेदकतानिरूपकताकत्वमेवावच्छिन्नत्वमित्युक्त्यैव निर्वाहेऽवच्छिन्नत्वनिरुक्तिः शिष्यबुद्धिवैशद्यायेति सर्वं समञ्जसम् ।

४ अत्रेदं बोध्यम्– मध्यवृत्तिविषयतयोर्भेदपक्षे, पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमनिष्ठप्रकारत्वस्य व्याप्तिनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वस्य च परस्परमवच्छेद्यावच्छेदकभावः सामानाधिकरण्यात्मकः स्वीकृत इति ।

द्यावच्छेदकभावः। ३ स्वरूपसंबन्धविशेषः। यथा 'अग्रे वृक्षः कपिसंयोगी, न मूले' इत्यादौ कपिसंयोगस्याग्रावच्छिन्नत्वम्। (ख०) ४ [क] 'इदमेतद्विशिष्टे एतत्प्रकारकम्' इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः। (स च संसर्गमर्यादया प्रविष्टः)। यथा तद्विशिष्टविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं प्रामाण्यम् (मू० म० प्रा० १ पृ० २३६) इत्यादौ सत्यरजते 'इदं रजतम्' इति ज्ञाननिष्ठयोरिदंत्ववद्विशेष्यकत्वरजतत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावः।

[ख] 'इदमेतद्विशेष्यकत्वांशे एतत्प्रकारकम्' इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः। यथा तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारताशाल्यनुभवस्तत्प्रमेत्यादौ। (मू० म० प्र० सि० पृ० ४०३) ५ विशिष्टत्वम्। यथा, घटत्वावच्छिन्नो घट इत्यादौ घटस्य घटत्वावच्छिन्नत्वम् ६ साहित्यम्। यथा, शरीरावच्छिन्ने आत्मनि भोगो जायत इत्यादौ आत्मनः शरीरावच्छिन्नत्वम्। ७ [क] अनुकूलत्वम्, प्रयोजकत्वं वा। यथा, फलावच्छिन्नव्यापारो धात्वर्थ इत्यादौ व्यापारस्य फलावच्छिन्नत्वम्। (ख०) [ख] संबन्ध इति शाब्दिका वदन्ति। (वै० सा० द०) ८ इयत्ताकरणम्। यथा द्रोणावच्छिन्नो व्रीहिरित्यादौ। ९ सीमाकरणम्। यथा गृहावच्छिन्न आकाशः, कर्णशष्कुल्यवच्छिन्न आकाश इत्यादौ। एवमन्तःकरणावच्छिन्नं चैतन्यं जीव इति मायावादिमतेऽपि ज्ञेयम्। (वाच०)

---

१ तच्च किंचिन्निष्ठावच्छेदकतानिरूपकताकत्वम्,* क्वचिच्च—सामानाधिकरण्यम्, व्यावर्तकत्वम्, नियम्यं च समुदितं व्यस्तं वा यथायथं यथाव्यवहारं योज्यम्। अत्रोदाहरणं तु घटत्वावच्छिन्नकार्यतानिरूपितकारणतेत्यादौ घटनिष्ठकार्यताया घटत्वावच्छिन्नत्वम्, घटो नास्तीत्यादौ घटाभावीयप्रतियोगिताया घटत्वावच्छिन्नकत्वम्, इत्यादि यथासंभवमूह्यम्। क्वचिच्च विषयतारूपम्। यथा, यद्रूपावच्छिन्नविषयतेत्यादौ 'वह्न्यभाववान् ह्रदः' इति ज्ञानीयह्रदनिष्ठविषयताया वह्न्यभावविशिष्टह्रदत्वावच्छिन्नत्वम्, इत्यादि स्वयं कल्पनीयमिति विस्तरभयादत्रैव विरम्यते।

२ वृक्षसंबन्ध्यग्रभागवृत्तित्वमित्यर्थः।

३ अत्रायं नियमः—ययोर्विषयितयोर्निरूप्यनिरूपकभावस्तयोरवच्छेद्यावच्छेदकभाव इति।

---

* एतदादि सर्वमवच्छेद्यस्वरूपमेवेति नैयायिकसिद्धान्तः।

**अवच्छेदः**—१ प्रतियोगि । यथा, अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनादित्यादौ (कु० ३।श्लो० २२।टी०) २ व्याप्तिः । यथा पक्षतावच्छेदकावच्छेदेन[1] साध्यसिद्धावित्यादौ साध्यनिरूपिता पक्षतावच्छेदकनिष्ठा व्याप्तिः । ३ इयत्ताकरणम् । यथा, अग्रावच्छेदेन कपिसंयोगः, मूलावच्छेदेन कपिसंयोगाभाव इत्यादौ । ४ अवधारणम् । यथा शब्दार्थानामवच्छेदे (शब्दार्थस्यानवच्छेदे) विशेषस्मृतिहेतव इत्यादौ । ५ इयत्ताकरणसाधनम्[2] । यथा, अग्रे वृक्षः कपिसंयोगी न मूले इत्यादौ संयोगादेरव्याप्यवृत्तित्वनियामको वृक्षैकावयवो मूलाग्रादिप्रदेशः । (वाच०) यथा वा, इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालोऽप्यवच्छेदो भवति ।

**अवच्छेदकत्वम्**[3]—१ स्वरूपसंबन्धविशेषः । स च क्वचित्—[क] प्रतियोग्यंशप्रकारीभूतधर्मत्वम् । यथा प्रमेयधूमाभावप्रतियोगिताया अवच्छेदकत्वं धूमत्वे[4] । क्वचित्—

[ख] अनतिरिक्तवृत्तित्वम्[5] । तच्च द्विविधम् । तत्राद्यम्, तच्छून्यावृत्तित्वे सति तदधिकरणवृत्त्यभावाप्रतियोगित्वम् । यथा घटाभावप्रतियोगिताया अवच्छेदकत्वं घटत्वे । द्वितीयं तु व्यावर्तकत्व[6]—सामानाधिकरण्य—स्व-

---

१ अत्र व्यापकत्वमप्यवच्छेदशब्दस्यार्थः संभवति । तथा च 'पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यसिद्धौ' इति बोधः ।

२ अत्रार्थे अवच्छिद्यतेऽनेनेति करणे घञ् । तेनावच्छेदकशब्दार्थः संपन्न इति ज्ञेयम् ।

३ समानाधिकरणयोरेव धर्मयोरवच्छेद्यावच्छेदकभाव इति सामान्यनियमो बाहुल्येन प्रवर्तत इत्येतत्सुधीभिश्चिन्त्यम् ।

४ अत्रायं नियमः—'संभवति लघौ गुरौ तदभावात्' इति । तेन गुरुभूते प्रमेयत्वविशिष्टधूमत्वेऽवच्छेदकत्वमनादृत्य शुद्धधूमत्व एवावच्छेदकत्वं स्वीकृतमिति ज्ञेयम् ।

५ अत्रायं नियमः—'अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वम्' इति । तेन अतिप्रसक्ते द्रव्यत्वादौ घटाभावीयप्रतियोगिताया अवच्छेदकत्वनिरासः ।

अनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वं च यद्यपि न स्वरूपसंबन्धरूपावच्छेदकत्वेऽन्तर्भवेत्तथाप्युदाहरणानुरोधेन तत् अन्तर्निवेशितम् । वस्तुतस्तु, तत्तन्निष्ठमवच्छेदकत्वं च तत्तद्वृत्तिविशेषमेवेति नैवानुगमय्य निर्वक्तुं शक्यमिति तु वयम् ।

६ अत्र च, इतरभेदानुमितिजनकज्ञानविषयत्वात्मकव्यावर्तकतायामवच्छेदकत्वं परंपरासंबन्धो बोध्यः ।

निष्ठावच्छेद्यताकत्व—एतत्त्रितयसंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम् । यथा घटकारणताया अवच्छेदकत्वं दण्डत्वे । क्वचित्—

[ ग ] तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वम् । यथा मूले वृक्षे न कपिसंयोगः, शाखायामित्यादौ वृक्षाधिकरणस्य मूलस्य वृक्षनिष्ठकपिसंयोगाभावावच्छेदकत्वम्, वृक्षाधिकरणस्य शाखादेर्वृक्षनिष्ठकपिसंयोगावच्छेदकत्वं च । (ल०व० पृ० २२) यथा वा, इह पर्वते नितम्बे हुताशनः, न शिखरे इत्यत्र नितम्बरूपदेशस्य हुताशनावच्छेदकत्वम्, शिखरस्य तु हुताशनाभावावच्छेदकत्वं च । यथा वा, इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालेऽपि गवाभावस्यावच्छेदकत्वम् । २ अवच्छेदकत्वाख्यो विषयतात्मकः स्वरूपसंबन्धविशेषः । यथा पर्वते वह्निसाधने पर्वतत्वस्य 'पर्वतो वह्निमान्' इत्यनुमित्यात्मकज्ञानीयवह्निनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकत्वम् । ३ स्वाश्रयजन्यत्वम्, स्वाश्रयविशेषणत्वं वा । यथा धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यादौ फले धात्वर्थताया अवच्छेदकत्वम् । (स्व०) शाब्दिकास्तु, फलावच्छिन्नव्यापार इत्यादौ 'फलसंबन्धिव्यापारः' इति बोधोदयात् संबन्ध एवात्रावच्छेदकत्वमित्याहुः । ( वै०सा०द०सु० ) ४ व्यापकत्वम् । यथा, पर्वतत्वावच्छेदेन वह्नौ साध्ये पर्वतो वह्निमानि-

---

१ अत्रावच्छेदकत्वं च स्वाश्रयसंबन्धित्वम् । स्वं अवच्छेद्यत्वेनाभिमतः कपिसंयोगाभावादिः ।

२ देशकालयोरवच्छेदकत्वं तु स्वरूपसंबन्धरूपमेवेति नियमोऽत्र ज्ञेयः ।

३ अत्रायं विशेषः—संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमिति मते एतस्यावच्छेदकत्वम् इति ।

४ अत्रेदं बोध्यम् । 'देशे वृत्तौ कालस्यावच्छेदकत्वम्,' 'काले वृत्तौ देशस्यावच्छेदकत्वम्' इति नियमेन गवाभावावच्छेदकत्वं कदाचिद्देशस्य, कदाचित्तु कालस्यापि संभवति इति । किंचात्र 'अवच्छेद्याधिकरणसंबन्धिनोऽवच्छेद्याधिकरणस्यैवावच्छेदकत्वम्' इति नियमोऽप्यङ्गीकर्तव्यः । तेन प्रलयस्य गवावच्छेदकत्वापत्त्यसंभवः । ( ग० च० १ स्वलक्षण० )

५ स्वं धात्वर्थता । अत्रेदं बोध्यम् । न्यायनये ग्रामं गच्छतीत्यादौ संयोगावच्छिन्नव्यापारात्मकविशिष्टस्य धात्वर्थत्वात्स्वाश्रयव्यापारजन्यत्वात्मकं तादृशव्यापारविशेषणत्वात्मकं चावच्छेदकत्वं संयोगात्मकफलस्य संगच्छत इति ।

स्यादौ पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगत्वस्य अवगाहमानं संसर्गतावच्छेदकत्वम् । (ल० व० पृ० २२) ५ व्याप्यत्वम् । यथा, यद्रूपावच्छिन्नविषयतानिरूपितविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका तद्रूपावच्छिन्नत्वमिति हेत्वाभाससामान्यलक्षणे 'ह्रदो न वह्निमान्' इति निश्चयीयविषयितायां 'ह्रदो वह्निमान्' इत्यनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताया अवच्छेदकत्वम् । ६ तदधिकरणावृत्तित्वेन ज्ञायमानत्वम्³ । (वै० उ०९।१।८) यथा घटत्वेन⁴ पटो नास्तीत्यादौ घटत्वे पटनिष्ठप्रतियोगिताया अवच्छेदकत्वम् (त्त० ) ७ विशेषणत्वम् । यथा वक्तृज्ञानावच्छेदकतयेत्यादौ । (कु० ३। श्लो० १४। व्या०ता०पृ० ३४) ८ नियामकत्वमेवावच्छेदकत्वमिति केचिद्वदन्ति । (वाच०)

सामान्यतोऽवच्छेद्यावच्छेदकभावो द्विविधः । स्वरूपसंबन्धरूपः, व्याप्यव्यापकभावश्च । तत्राद्यो यथा, इदानीं चत्वरे गौर्नास्तीत्यादावेतत्कालगवाभावयोरवच्छेद्यावच्छेदकभावः । (त्त०) यथा वा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ मूलादिसंयोगाद्योरवच्छेद्यावच्छेदकभावः । द्वितीयो यथा—

---

१ अत्र, पर्वतत्वव्यापकवह्निप्रतियोगिकसंयोगस्याप्रसिद्ध्या तादृशसंयोगत्वे संसर्गताया अवच्छेदकत्वं न भासते, अपितु केवलसंयोगे एव पर्वतत्वव्यापकत्वं संसर्गताऽवच्छेदकत्वेन (अवच्छेदककोटिप्रविष्टानामप्यवच्छेदकत्वमिति पक्षे) भासते इति तु वयम् ।

२ स्वव्यापकतत्कत्वमित्यर्थः । (ग० सामा०प० ९) क्वचिच्च, स्वव्यापकतत्कान्यत्व—तत्सामानाधिकरण्य—एतदुभयाभाववत्त्वम् । तेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वं संगच्छते (ग० च० द्वितीयस्वलक्षण० प० १७)

३ यद्यप्येतस्यार्थान्तराभिप्रायेणोच्चारितस्यात्र ग्रहणं नोपस्कारसंदर्भमनुसरति तथाप्यत्रार्थेऽपि नियोक्तुं युज्यत इति मयाऽयं शब्दोऽत्र गृहीत इति बोध्यम् । ज्ञायमानत्वमित्यत्र ज्ञानपदं प्रमापरम् । तेन घटत्वादेः समानाधिकरणधर्मस्य घटाद्यभावीयप्रतियोगितावच्छेदकत्वनिरासः ।

४ अत्र 'तृतीयान्तोल्लेख्यस्यावच्छेदकत्वम्' इति नियममनुसृत्य केवलान्वयी व्यधिकरणधर्मावच्छिन्नाभावः सौन्दडोपाध्यायेन स्वीकृतः । गङ्गेशोपाध्यायादयो नैयायिकास्तु नेमं व्यधिकरणधर्मावच्छिन्नाभावं स्वीचक्रुरिति विज्ञेयम् ।

५ अत्र 'एतत्कालावच्छेदेन (एतत्काले) गवाभावः' इति शाब्दबोधो भवतीति बोध्यम् ।

पृथिवी रूपवतीत्यादौ[1] रूपपृथिवीत्वयोरवच्छेद्यावच्छेदकभावः । ( ग० पक्ष० पृ० २० )

**अवच्छेद्यत्वम्**–अवच्छिन्नत्ववदस्यार्थोऽनुसंधेयः ।

**अवच्छेद्यावच्छेदकभावावगाहिनी**[2]–( अनुमितिः ) [ क ] पक्षतावच्छेदकाक्रान्तयावद्व्यक्तिविषयकानुमितिरिति[3] प्राञ्चो नैयायिका वदन्ति । [ ख ] पक्षतावच्छेदकव्यापकत्वविशिष्टसाध्यतावच्छेदकसंबन्धावच्छिन्ना साध्यतावच्छेदकावच्छिन्ना या विधेयता तच्छालिनी अनुमितिरिति नवीननैयायिकाः प्राहुः । यथा पर्वतत्वावच्छेदेन वह्नौ साध्ये 'पर्वतो वह्निमान्'[4] इत्यनुमितिः । ( ग० पक्ष० पृ० २० )

**अवधानम्**–चित्तस्य विलक्षणः संबन्धविशेषः । तद्द्विविधम् । अनुपेक्षणीयत्वम्, विषयान्तरसंचाराराहित्यं च । ( त० प्र० २ ) यथा शिष्यावधानाय चिकीर्षितं प्रतिजानीते इत्यादौ । ( म० प्र० १ । प० ३ )

**अवधारणम्**[5]–तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् । ( गौ० वृ० १।४० )

---

१ अत्र 'पृथिवीत्वव्यापकं रूपम्' इति शाब्दो बोधो भवतीति बोध्यम् ।

२ अत्रेदमवधेयम् । यत्र देशकालयोः पक्षतावच्छेदकता । यथा मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ, उत्पत्तिकालावच्छिन्नो घटो गन्धवानित्यादौ च तत्र स्वरूपसंबन्धरूपावच्छेद्यावच्छेदकभावावगाहिन्येवानुमितिर्भवति । यत्र तु देशकालभिन्नानां पक्षतावच्छेदकता । यथा पर्वतो वह्निमानित्यादौ, पृथिवी रूपवतीत्यादौ च तत्र व्याप्यव्यापकभावरूपावच्छेद्यावच्छेदकभावावगाहिन्यनुमितिर्भवतीति । ( ग० पक्ष० पृ० २० )

३ इयं च, देशकालभिन्नानां यत्र पक्षतावच्छेदकता तादृशस्थलीयेति ज्ञेयम् । एवमुत्तरत्रापि ।

४ अत्र, नवीनमते पक्षतावच्छेदकव्यापकत्वं साध्ये साध्यसंबन्धे वा संसर्गतया संसर्गतावच्छेदकतया च यथाक्रमं भासते । अतः, अवच्छेदकावच्छेदेनानुमितेर्न 'पर्वतत्वाद्यवच्छिन्नवह्निमान् पर्वतः' इत्याकारकता इति बोध्यम् । ( ग० पक्ष० पृ० २० )

५ अत्रावधारणत्वं च [ १ ] निश्चयनिष्ठो विषयताविशेषः । ( मू० म० १ ) [ २ ] अवधारणत्वं न निर्णयत्वम्, किंतु उत्कटनिश्चयत्वम् । औत्कट्यं च विषयताविशेष इति मिश्राः* । ( ग० सत्प्र० पृ० १७–१८ )

---

* अयं भावः–तन्मते व्याप्यदर्शनाधीनज्ञानानन्तरमेव 'अवधारयामि' इत्यनुव्यवसायोदयेन व्याप्यदर्शनात्मकविशेषदर्शनजन्ये एव प्रत्यक्षे अनुमित्यात्मके च ज्ञानेऽवधारणत्वं स्वीक्रियते, न तु निश्चयसामान्ये, इति ।

यथा घटे 'अयं घटः इति' घटत्वाप्रकारकं घटत्वप्रकारकं ज्ञानम् ( निर्णयः ) अर्थस्यावधारणम् । ( ख० )

**अवधित्वम्**–१ [ क ] संबन्धविशेषः । यथा वृक्षाद्विभजत इत्यादौ द्रव्यनिष्ठमवधित्वं पञ्चम्यर्थः । ( दीधि० २ । अव० पृ० १७९ )

[ ख ] स्वरूपसंबन्धविशेषः । यथा वृक्षाद्विभजत इत्यादौ वृक्षादेरवधित्वात्मकमपादानत्वम् । ( ग० व्यु० ५ ) २ सीमात्वम्[1] । ( वाच० )

**अवधिमत्त्वम्**–संबन्धविशेषः । यथा वृक्षाद्विभजते इत्यादौ धात्वर्थविभागेऽवधिमत्त्वं पञ्चम्यर्थः, वृक्षात्पर्णं पततीत्यादौ[2] च विभागेऽवधिमत्त्वं संबन्धः । ( दीधि० २ । अव० । पृ० १७९ ) ( ग० व्यु० ५ )

**अवयवः**–( द्रव्यावयवः ) द्रव्यस्य समवायिकारणम् । ( त० दी० पृ० ४० ) यथा अवयवावयविनोः संबन्धः समवाय इत्यादौ कपालं घटस्यावयवः, तन्तुश्च पटस्यावयवः । ( ख० ) स चावयवः परमाणूनारभ्य कपालपर्यन्तं, तन्तुपर्यन्तं चानेकधा ।

**अवयवः**[3]–( न्यायावयवः ) [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपनयनमुपमानम्, सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । सोऽयं परमो न्याय इति । ( वात्स्या० १।१।१ )

---

१ तच्च स्वाभिधेयापेक्षया विभागाश्रयत्वम् । सीमा च त्रिविधा । कालकृता, देशकृता, बुद्धिकृता च । तत्र प्रथमा—मासात्पूर्वं घट इत्यादौ । द्वितीया–नद्या वनमित्यादौ । ( वनस्य नद्यपेक्षविभागाश्रयत्वात्तथात्वम् ) तृतीया तु–माथुराः पाटलिपुत्रेभ्य आढ्यतरा इत्यादौ । ( वाच० )

२ अत्र विभागः, अधिकरणताप्रयोजकत्वं च पञ्चम्यर्थः । विभागेऽवधिमत्त्वसंबन्धेन प्रकृत्यर्थान्वयः । तद्विशिष्टविभागस्य निरूपितत्वविशेषसंबन्धेनाधिकरणतायामन्वयः । तस्याश्च पतनक्रियायामन्वयः ( ग० व्यु० ५ )

३ तल्लक्षणं च वक्ष्यमाणमवयवत्वमेव ।

[ ख ] अर्थसाधकभावात्तु, प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति। ( वात्स्या० १।१।३२ )

[ ग ] परार्थानुमानवाक्यैकदेशः । ( सर्व० अक्ष० पृ० ११३ ) ते चावयवाः पञ्च[1] । प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनं चेति। (गौ० १।१।३२) (त०भा०प०४३) (त०सं०) (सर्व०अक्ष०)

प्रतिज्ञाहेतूदाहरणानि त्रयोऽवयवा इति मीमांसका[2] आहुः। (म०प्र०२।पृ०३३)

हेतूदाहरणोपनयनानि एते, त्रयोऽवयवा इति केचित् मन्यन्ते । (वाच०)

उदाहरणोपनयौ द्वाववयवाविति बौद्धा आहुः। ( म० प्र० २। प०३३ )

जि[3]ज्ञासा, संशयः, शक्यप्राप्तिः, प्रयोजनं, संशयव्युदासश्चेति ऐ[4]ते प्रतिज्ञादिसाहिता दशावयवा इत्यतिप्राचीननैयायिका आहुः । ( म० प्र० २ । प०३३ ) ( चि० प्र० प० ९२ ) । ( गौ० वृ० १।३२ ) ( वात्स्या० १।१।३२ )

अवयवप्रयोगे विशेषो ज्ञेयः—केवलव्यतिरेकिण्यनुमाने प्रतिज्ञाहेतू तुल्यौ[5]वे-

---

१ उक्तं च—अवयवाः पञ्च, प्रतिज्ञादिभेदात्, इति ( न्या० म० २। पृ० २४ ) एते प्रतिज्ञादयः पञ्च अनुमानस्यावयवा इव अवयवाः, न तु समवायिकारणम् । शब्दस्याकाशसमवेतत्वात् । (त० भा० पृ० ४३)

२ केचित्तु (मीमांसकाः) उदाहरणान्तास्त्रय एवावयवा इत्याहुः । तन्न । तृतीयलिङ्गपरामर्शस्य व्याप्तपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात् । तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात् । न च हेतुवचनादेव तदवगमः । तस्य 'को हेतुः' इत्याकाङ्क्षायां प्रवृत्तत्वेन हेतुस्वरूपोपस्थापकस्यातत्परत्वात् । ( चि० २ । पृ० ८१ )

३ जिज्ञासादीनामर्थश्च तात्पर्यटीकायाम्—प्रयोजनं हानोपादानोपेक्षाबुद्धयः, तत्प्रवर्तिका जिज्ञासा, तज्जनकः संशयः, प्रमाणानां जननसामर्थ्यं शक्यप्राप्तिः, संशयव्युदासस्तर्कः, इति । ( गौ० वृ० १।३२ ) (वात्स्या० १।१।३२ ) तत्र विप्रतिपत्तिर्जिज्ञासेति कश्चित् । मञ्जरीप्रकाशकारास्तु, पदवाक्यप्रमाणानां ज्ञानजननप्रयोजकत्वं शक्यप्राप्तिः, कथायां यदुद्देश्यं तत्प्रयोजनमित्याहुः । ( म० प्र० २ । प० ३३ )

४ एते जिज्ञासादयः पञ्च न न्यायावयवाः, अवयवलक्षणाभावात् ( न्यायाघटकत्वाच्च ) किं तु न्यायाङ्गतयोपयुज्यन्ते । ( चि०२ । पृ०८३ ) ( गौ० वृ०१।३२ ) ( वात्स्या०१।१।३२ )

५ अन्वयव्यतिरेक्यनुमाने केवलान्वय्यनुमाने च यादृशाकारौ प्रतिज्ञाहेतू भवतस्तादृशाकाराविवेत्यर्थः ।

व, उदाहरणोपनयनिगमनानि तु भिद्यन्ते । यथा, जीवशरीरं सात्मकं प्राणादिमत्त्वादित्यत्र 'यत् सात्मकं न भवति तत् प्राणादिमन्न भवति यथा घटः' इत्युदाहरणम्, 'नचेदं जीवशरीरं प्राणादिमन्न भवति' इत्युपनयः, 'तस्मान्न तथा' इति निगमनम्, इति । ( त० कौ० २ । पृ० १३ )

**अवयवत्वम्**— ( न्यायावयवत्वम् ) [ क ] प्रतिज्ञाद्यन्यतमत्वम्[1] । ( गौ० वृ० १।३२ ) ( न्या० म० २।प० २४ ) ( न्या० बो० पृ० १९ ) ( म० प्र० २ । प० ३३ )

[ ख ] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यत्वम्[2] । ( चि० अव० पृ० ७६ )

[ ग ] न्यायान्तर्गतत्वे[3] सति प्रतिज्ञाद्यन्यतमत्वम्[4] ।

[ घ ] प्रतिज्ञाद्यघटकत्वे[5] सत्युभय[6]घटकभागद्वयाघटितत्वम् । (दीधि० २।

---

१ प्रतिज्ञाद्यन्यतमत्वं प्रतिज्ञादिभेदपञ्चकाभाववत्त्वमित्यर्थः । प्रतिज्ञायां हेत्वादिभेदचतुष्टयसत्त्वेऽपि स्वभेदाभावाद्भेदपञ्चकाभाववत्त्वं संपद्यते । एवं हेतावपीति लक्षणसमन्वयः । ( म० प्र० २ । पृ० ३३ )

२ तदर्थश्च—अनुमितेश्चरमं कारणं यः परामर्शः, तस्य प्रयोजकं शाब्दज्ञानम् (न्यायात्मकप्रतिज्ञादिपञ्चवाक्यजन्यं तावदर्थविषयकं विशिष्टवैशिष्ट्यावगाहिज्ञानम्, समूहालम्बनात्मकं वा), तस्य जनकं शाब्दज्ञानम् (प्रत्येकावयवजन्यज्ञानम्), तस्य जनकं वाक्यम्, तत्त्वम्, इति ।

३ न्यायान्तर्गतत्वं च [ क ] स्वाविषयकप्रतीत्यविषयन्यायकत्वम् । [ ख ] न्यायत्वाश्रयत्वं वा । [ ग ] प्रतिज्ञोत्तरहेत्वादिघटितवाक्यपञ्चकानुपूर्वीविशेषावच्छिन्नभेदप्रतियोगितावच्छेदकत्वम् । [ घ ] तादृशानुपूर्वीविशेषप्रकारकनिश्चयत्वसमनियतकारणतावच्छेदकविषयिताकत्वम् । ( ग० अव० )

४ प्रतिज्ञाद्यन्यतमत्वं च, प्रतिज्ञात्वाद्यवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकं यद्यत्तदवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदको यः, प्रतिज्ञादिभेदपञ्चकानुयोगितावच्छेदकं यद्यद्रूपं तदवच्छिन्नानुयोगिताकभेदप्रतियोगितावच्छेदकीभूतो धर्मस्तद्रूपत्वम् । (ग० अव०)

५ प्रतिज्ञाद्यघटकत्वं च मिलितभेदपञ्चकानुयोगितावच्छेदकभिन्नधर्मवत्त्वम् । ( ग० अव० )

६ उभयं च प्रतिज्ञाहेतू, हेतूदाहरणे, उदाहरणोपनयौ, उपनयनिगमने इति विशिष्य वक्तव्यम् । ( दीधि० २।पृ० १६६ )

पृ० १६६ ) यथा पर्वतस्य पक्षत्वे वह्नेः साध्यत्वे धूमस्य हेतुत्वे 'पर्वतो वह्निमान्' इति प्रतिज्ञावाक्यस्य, 'धूमात्' इति हेतुवाक्यस्य चावयवत्वम्। एवमुदाहरणादेरप्यवयवत्वं ज्ञेयम्। (स्व०)

[ ङ ] प्रतिज्ञादिप्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञानजनकवाक्यत्वमित्यपि केचित्। ( दीधि० अव० पृ० १६६ )

**अवयवि**–जन्यद्रव्यम्। ( त० दी० प० ४० ) यथा घटपटादि। ( स्व० )

**अवरोधः**– गतिप्रतिरोधहेत्वावरणम्। यथा गामवरुणद्धि व्रजमित्यत्रावरुधेरर्थः। ( श० प्र० पृ० ९९ )[1]

**अवर्ण्यसमः**[2]– ( जातिः ) [ क ] स्थापनीयो वर्ण्यः, विपर्ययादवर्ण्यः[3], तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः। ( वात्स्या० ५।१।४ )

[ ख ] पक्षेऽसंदिग्धसाध्यकत्वापादनम्। दृष्टान्ते हेतोर्यादृशत्वं तादृशो हेतुरेव गमक इत्यभिमानेन एवमापादनम्। दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः स चेन्न पक्षे तदा गमकहेत्वभावात्स्वरूपासिद्धिः स्यादतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्यः। तथाच संदिग्धसाध्यकत्वलक्षणपक्षत्वाभावादाश्रयासिद्धिः। ( गौ० वृ० ५।४ )

[ ग ] साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतया[4] साधनम्। यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वमात्मन्यसिद्धम्। तथा च तुल्यतया यथाऽसिद्धेन क्रियाहेतुगुणेनात्मनि क्रियावत्त्वं साध्यते तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते?, नियामकाभावादिति। (नील० पृ० ४३)

---

१ अत्र, गोगतिप्रतिरोधस्यानुकूलं यद्व्रजस्यावरणं तत्कृतिमानित्यन्वयः। ( श० प्र० पृ० ९९ )

२ अत्रावर्ण्यत्वेन समोऽवर्ण्यसम इति व्युत्पत्तिः। असिद्धिदेशनाभासोऽयम्। (गौ० वृ० ५।४)

३ अवर्ण्यत्वं संदिग्धसाध्यकत्वाभावः। ( गौ० वृ० ५।४ )

४ तुल्यतासाधनमिति पाठान्तरम्। ( नील० पृ० ४३ )

**अवश्यम्**–१ अप्राप्त्यभावः ( ख० ) यथा एतेष्वावश्यकस्त्वसावित्यादौ । ( भा० प० श्लो० २२ ) २ अशक्यनिवारणम् । ३ निश्चय इत्यपि केचित् । ( वाच० )

**अवश्यक्लृप्तत्वम्**– लघूपस्थितिकत्वम् । यथा पाकजस्थले गन्धं प्रति जनकत्वे गन्धप्रागभावस्य ( गन्धं प्रति रूपप्रागभावस्य जनकत्वमपेक्ष्य ) अवश्यक्लृप्तत्वम् । ( ख० )

**अवसरः**–( संगतिः ) [ क ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्या अनन्तरवक्तव्यत्वम् । यथा प्रत्यक्षनिरूपणान्तरं तत्कार्यत्वेनानुमानोपमानयोरुभयोर्निरूपणप्राप्तौ बहुवादिसंमतत्वेन प्रथममनुमान एव जिज्ञासोदयेनानुमाननिरूपणेन प्रतिबन्धकजिज्ञासानिवृत्तावसरसंगत्योपमाननिरूपणम् । ( राम० ३ । पृ० १७० )

[ ख ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वम् । ( वै०सा० द० )

[ ग ] प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ सत्यामवश्यवक्तव्यत्वम् । यथाऽनुमाननिरूपणानन्तरं तादृशजिज्ञासानिवृत्तावश्यवक्तव्यत्वज्ञानात् 'किं वक्तव्यम्' इति श्रोतुर्जिज्ञासानन्तरमुपमाननिरूपणम्, इति ।

[ घ ] जिज्ञासितार्थसिद्धत्वमिति केचित् । ( भवा० )

**अवस्था**–कालकृतः परिणामः । सा चावस्था 'जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यति' इति भावविकारः षड्विध इति यास्को वक्ति । अविद्यास्मितरागद्वेषाभिनिवेशभेदेन पञ्चविधेति योगिनः । अनागतावस्थाऽभिव्यक्त्यवस्थातिरोहितावस्थेति त्रिविधेति सांख्याः । जाग्रत्स्वप्नसुषुप्तिरूपा त्रिविधा, मोक्षावस्था चेति चतुर्विधेति वेदान्तिनः । कौमारपौगण्डकैशोरयौवनबाल्यतारुण्यवृद्धत्ववर्षीयस्त्वभेदेनाष्टविधेति पौराणिकाः। बाल्यकौमारयौवनवृद्धत्वभेदेन चतुर्विधेति भिषजः । अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंलापश्च । उन्मादोऽथव्याधिर्जडतासृतिरिति दश कामदशा इति भेदेन दशविधेत्यालंकारिका आहुः । ( वाच० )

**अवाची**–( दिक् ) दक्षिणावदस्यार्थोऽनुसंधेयः ।

**अवान्तरप्रलयः**–(प्रलयः) खण्डप्रलयवदस्यार्थोऽनुसंधेयः । ( त० दी० १। प० १० )

**अविज्ञातार्थम्**–( निग्रहस्थानम् ) [ क ] परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् । ( गौ० ५।५२ ) यद्वाक्यं परिषदा प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन । तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानमिति । ( वात्स्या० ५।२।९ )

[ ख ] अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगः । ( गौ० वृ० ५।५२ ) ( दि० १।पृ० २२ )

[ ग ] परिषत्प्रतिवाद्यबोधप्रयोजकपदप्रयोगः । तच्च क्लिष्टान्वयमप्रसिद्धार्थकं त्वरितोच्चारितमित्यादिरूपम् । ( नील० पृ० ४९ )

**अविद्या**–ज्ञानाभावः । अत्र मतभेदेन बहुप्रकाराः सन्ति, विस्तरभयान्नोच्यन्ते ।

**अविवेकः**–१ विवेकाभावः । २ अन्योन्यतादात्म्यारोपरूपं मिथ्याज्ञानमिति सांख्याः ।

---

१ एतस्य त्रेधा संभवः । असाधारणतन्त्रमात्रप्रसिद्धम्, अतिप्रसक्तयोगमनपेक्षितरूढिकम्, श्लिष्टं चेति । तत्राद्यं यथा–पञ्च स्कन्धादयो बौद्धानाम् । तत्र रूपादयः पञ्चेन्द्रियाणि च रूपस्कन्धः, सविकल्पकं संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानस्कन्ध इति । द्वितीयं यथा–*कश्यपतनयाधृतिहेतुरयं (भूधरोऽयम्) त्रिनयनसमाननामधेयवान् ( अग्निमान् ) तत्केतुमत्त्वात् (तस्य अग्नेः केतुर्धूमस्तद्वत्त्वात्) इत्यादीति† । तृतीयं यथा–श्वेतो धावति ( श्वा इतो धावति ) इत्यादि । एवम् अतिद्रुतोच्चारितादिकमपीति । ( गौ० वृ० ५। ५२ )

२ अत्र च 'पराज्ञानापादनेन मम जयो भविष्यति' इति भ्रमादुक्तिसंभवः । (गौ०वृ०५।५३)

---

* धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिरिति कोशात् कश्यपतनया भूरिति भावः ।

† पर्वतो वह्निमान् धूमवत्त्वादिति यावत् ।

**अविशेषसमः**[1]–( जातिः ) [ **क** ] एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः । ( गौ० ५।२३ ) एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते । कथम् । सद्भावोपपत्तेः । एको धर्मः सद्भावः सर्वस्योपपद्यते । सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात्प्रत्यवस्थानमविशेषसमः । ( वात्स्या० ५।१।२३ )

[ **ख** ] सन्मात्रवृत्तिधर्मेणाविशेषापादनम् । ( गौ० वृ० ५।२३ )

[ **ग** ] सर्वाविशेषप्रसङ्गोद्भावनम् । यथा शब्दोऽनित्यः कृतकत्वादित्यादौ यदि कृतकत्वादिनाऽनित्यघटादिसाधर्म्येण शब्दस्यानित्यत्वं तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात् । मदुक्तसाधर्म्येण तत्सिध्यति, न तु त्वदुक्तेनेत्यत्र विनिगमकाभावादिति । (नील० पृ० ४४)

**अव्ययम्**–[ **क** ] संकेतसंबन्धेन अव्ययपदवत् । यथा स्वराद्यव्ययम् । ( स्व० ) तत्र कानिचिदव्ययानि सार्थमुदाह्रियन्ते–लक्षणवीप्सेत्थंभावेष्वभिर्भागे परिप्रती । अनुरेषु सहार्थे च हीने उपश्च कथ्यते । १ । समया, निकषा चाव्ययं सामीप्यार्थकम् । तेन तद्योगे, समया ग्राममित्यादौ 'ग्रामस्य समीपम्' इत्यन्वये ग्रामावधिकत्वं तत्प्रतियोगिकत्वं वा द्वितीयया बोध्यते । विद्यामृतेऽन्तरेणान्तरा विना वा नरः शोच्य इत्यादौ ऋतेप्रभृत्यव्ययानामत्यन्ताभावस्तद्वैशिष्ट्यं वाऽर्थ इति 'विद्यात्यन्ताभाववान् नरः शोच्य इत्यन्वये' अत्यन्ताभावेऽन्वितं प्रतियोगित्वम् । गगनमृते द्रव्यं न शब्दवदित्यादौ तूक्ताव्ययानां भेदोऽप्यर्थः । तेन 'गगनभिन्नद्रव्यं न शब्दवत्' इत्याकारकस्तत्र बोधः । हा पुत्रमित्यत्र हाऽव्ययस्यार्थे कष्टे द्वितीयान्तेन पुत्रसमवेतत्वं बोध्यते । धिक् पुत्रमित्यत्र धिगर्थगर्हायां पुत्रविषयित्वम् । उपर्युपरि गृहं पताकेत्यत्र द्विरुक्तस्योपरिनिपातस्य संनिकृष्टोर्ध्वभागार्थकत्वेन 'गृहस्य संनिकृष्टोर्ध्वभागे पताका'

---

१ अत्र, अविशेषेण समोऽविशेषसम इति व्युत्पत्तिः । (स्व०) प्रतिकूलतर्कदेशनाभासोऽयमिति बोध्यम् । ( गौ० वृ० ५।२३ )

इत्यर्थः । अधोधो मेघमम्भः, अध्यधि शिखरं घन इत्यत्राप्युक्तदिशै[1]वान्वयः । नदीं यावन्मम पुरं गृहं यावद्वनं तवेत्यत्र यावदित्यव्ययस्य मर्यादा, अभिविधिश्च क्रमेणार्थः । तेन 'नदीपर्यन्तं मत्पुरम्', 'गृहाभिव्याप्तं त्वद्वनम्' इत्याकारस्तत्र बोधः । ( श० प्र० पृ० ११६–११७ ) इत्यादि तत्तद्ग्रन्थाज्ज्ञेयम्, विस्तरभयान्नोच्यत इति ।

[ ख ] सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न [2]व्येति तदव्ययम्, इति शाब्दिका आहुः ।

**अव्ययीभावः**–( समासः ) [ क ] यः समासः स्वोत्तरपदोपस्थाप्येन यदर्थेनान्वितस्य यदर्थस्य बोधकाव्ययपू[3]र्वभागकः स तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः स्त्रीपुंलिङ्गवि[4]वर्जितः । यथा गृहे निर्मक्षिक[5]म्, उपकुम्भमित्यादावव्ययीभावः । ( श० प्र० पृ० ९२ )

[ ख ] अमादेशं विना श्रूयमाणष[6]ष्ठी स्वार्थे यत्समासार्थस्यान्वयबोधं प्रत्य-

---

१ द्विरुपर्यधोऽधीनां सामीप्यवाचितायां तद्योगे द्वितीयानुशिष्टेः*। ( श० प्र० पृ० ११७ )

२ विविधं रूपं प्राप्नोतीत्यर्थः ।

३ अर्धशरीरमित्यादौ (तत्पुरुषे) उत्तरपदार्थान्वितस्वार्थबोधकमप्यर्धपदं नाव्ययमिति न तत्रातिप्रसङ्गः । ( श० प्र० पृ० ५२ )

४ निर्मक्षिका भूमिः, निर्मनुष्यो देश इत्यादौ तु मक्षिकादेरभाववन्तं बोधयन्नपि निर्मक्षिकादिकस्तत्पुरुषो† न तादृशार्थे स्त्रीपुंलिङ्गकार्यविधुर इति तत्र न प्रसङ्गः । (श०प्र०पृ० ५२)

५ अत्र हि [ क ] मक्षिकाया अभावः, कुम्भादेश्च सामीप्यादिर्मक्षिकादिपदप्राग्वर्तिना निराद्यव्ययेनानुभाव्यते । ( श० प्र० पृ०५२ )[ ख ] उत्तरपदलक्षणया 'कुम्भसंबन्धि सामीप्यम्', 'मक्षिकाप्रतियोगिकोऽभावः' इति बोधात् नियमतः पूर्वपदार्थविशेष्यकबोधजनकत्वसत्त्वेन लक्षणसमन्वयः । म० प्र० ४ । पृ० ४३ )

६ तदर्थश्च–श्रूयमाणैव षष्ठी स्वार्थे समासान्तरार्थस्यान्वयबोधनेऽसमर्था, न तु लुप्ताऽपि । ( श० प्र० पृ० ५३ )

---

* अत्र प्रमाणम्–उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते, इति ।

† अत्र मक्षिकाभ्यो निष्क्रान्ता निर्मक्षिकेति तत्पुरुषो ज्ञेयः ।

समर्था स एव वाऽव्ययीभावः । यथा कृतयोरक्षेपरि[1] व्यर्थत्वम्, स्निग्धस्योपगङ्गं[2] पावित्र्यम्, अनुगङ्गेन[3] संचारः, उपगङ्गेषु[4] पूतत्वम्, उपकुम्भादानीतमित्यादावव्ययीभावः[5] । ( श० प्र० पृ० ५३ )

[ ग ] नियमतः[6] पूर्वपदार्थविशेष्यकबोधजनकसमासः । म० प्र० ४ । पृ० ४३ )

**अव्यवहितपूर्वत्वम्**— [ क ] तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम्[7] । ( दीधि० पक्ष० पृ० १२९ )

[ ख ] तत्प्रागभावाधिकरणकालप्रागभावानधिकरणत्वे सति तत्प्रागभाव-[8]

---

१ अत्र त्वव्ययीभावार्थस्य लुप्तापि षष्ठी स्वार्थेऽन्वयबोधने समर्था । 'कृतयोरेकाक्ष-अन्यथापातनयोर्निष्फलत्वम्' इत्यन्वये लुप्तषष्ठ्यैव पातनस्य संबन्धप्रत्यायनात् । ( श० प्र० पृ० ५३ )

२ अत्र 'स्निग्धस्य गङ्गासमीपस्य पवित्रत्वम्' इत्याद्यन्वये समीपादेः संबन्धः श्रुतयाप्यमादेशवशादेव षष्ठ्याऽनुभाव्यते इति न तत्र उपगङ्गाद्यव्ययीभावेऽव्याप्तिः । ( श० प्र० पृ० ५३ )

३ अत्र (अनुगङ्गेन संचारः, उपगङ्गेषु पूतत्वम्, उपकुम्भादानीतमित्यादौ) अमादेशं विनापि श्रूयमाणाभिस्तृतीयासप्तम्यादिसुब्भिरव्ययीभावार्थस्य करणत्वाधिकरणत्वादिकं बोध्यत इति षष्ठीपर्यन्तानुसरणमिति बोध्यम् ( श० प्र० पृ० ५३ )

४ अत्र ( अनुगङ्गेन संचारः, उपगङ्गेषु पूतत्वमित्यादौ ) "तृतीयासप्तम्योर्बहुलम्" (पाणि० २।४।८४) इति सूत्रेण तृतीयासप्तम्योर्बाहुल्येनामादेशविधानात्, प्रकृतेऽव्ययीभावत्वसत्त्वेऽप्यमादेशाभाव इति बोध्यम् ।

५ अत्राव्ययीभावत्वसत्त्वेऽपि "नाव्ययीभावादतोऽम्त्वपञ्चम्याः" (पाणि०२।४।८३) इत्यमादेशविधायकसूत्रे 'अपञ्चम्याः' इत्युक्तेरमादेशाभाव इति बोध्यम् ।

६ अत्र, अर्धपिप्पल्यादितत्पुरुषवारणाय 'नियमतः' इत्युक्तम् । तथा च तत्पुरुषे नियमतः पूर्वपदार्थविशेष्यकबोधजनकत्वाभावान्नातिव्याप्तिः, राजपुरुष इत्यादौ तथाबोधाभावात् । ( म० प्र० ४ । पृ० ४३ )

७ अत्र तत्पदेन क्षणद्वयावस्थायि ज्ञानादिकं ग्राह्यम् । विग्रहस्तु—तस्य ( ज्ञानादेः ) उत्पत्तेः क्षणे उत्पत्तिर्यस्य स तदुत्पत्तिक्षणोत्पत्तिकः, सचासौ ध्वंसश्च, तस्य प्रतियोगि, तस्य भावः, इति । ज्ञानाद्युत्पत्तिक्षणे यस्य ध्वंस उत्पद्यते तत्त्वमिति विग्रहार्थः ।

८ इदं लक्षणं प्रागभावानभ्युपगन्तृनयेऽपि संगच्छते इति विज्ञेयम् । (ग० पक्ष० पृ० ४४)

९ अत्र सत्यन्तदलेन अव्यवधानम्, विशेष्यदलेन तु पूर्वत्वं बोध्यत इति विज्ञेयम् । इदमव्यवहितपूर्वत्वं च प्रागभावाङ्गीकर्तृपक्षे एव संगच्छते इत्यवधेयम् ।

वत्त्वम् । ( ग० पक्ष०प०४१ ) यथा विशेषणज्ञानस्य विशिष्टज्ञानाव्यवहितपूर्वत्वम् । यथा वा परामर्शस्यानुमित्यव्यवहितपूर्वत्वम् । ( स० )

**अव्यवहितोत्तरत्वम्**—स्वाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणत्वसामान्याभाववत्त्वे सति[1] स्वाधिकरणक्षणध्वंसाधिकरणत्वम्[2] । ( ग० पक्ष० पृ० ४२ ) यथा विशिष्टज्ञानस्य विशेषणज्ञानाव्यवहितोत्तरत्वम् । यथा वा अनुमितेः परामर्शाव्यवहितोत्तरत्वम् । (स०)

**अव्यापकविषयिताशून्यत्वम्**[3]—यद्रूपावच्छिन्ननिरूपितविषयितात्वं विशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्ननिरूपितविषयिताशून्यत्वम्[4] । यथा ह्रदो वह्निमानित्यादौ वन्ह्यभाववद्ध्रदरूपबाधविषयकस्य 'ह्रदो न वह्निमान्' इति निश्चयस्य अव्यापकीभूतजातित्वाद्यवच्छिन्ननिरूपितविषयिताशून्यत्वम् । ( ग० सामा० २ लक्षणे )

**अव्याप्तिः**—( लक्षणदोषः ) १ [ क ] लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम्[5] । ( न्या० बो०१। प० ३ )

---

१ अत्र सत्यन्तेन दलेन अव्यवधानम्, विशेष्यदलेन तूत्तरत्वं गम्यते इति ज्ञेयम् ।

२ इदं विशिष्टलक्षणं च ज्ञानाद्युत्पत्तिद्वितीयक्षणसाधारणम् । (ग० पक्ष० पृ० ४२) तृतीयक्षणसाधारणं तु ज्ञानादेस्तृतीयक्षणे विनाशेन, स्वध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणक्षणध्वंसाधिकरणत्वरूपं ज्ञानाद्यव्यवहितोत्तरत्वम् । (दिधि० २ । पृ० १२७)

३ इदं च निश्चयस्य विशेषणं गदाधर्या हेत्वाभाससामान्यनिरुक्तौ द्वितीयलक्षणे ह्युपयुज्यते । उपयोगस्तु, ह्रदो वह्निमान् धूमादित्यादौ जातित्वेन ह्रदत्वाद्यवगाहिनो 'जातिमान् वह्न्यभाववान्' इति निश्चयस्य प्रतिबन्धकत्ववारणरूप इति बोध्यम् ।

४ स्वभिन्नत्व—स्वनिरूपितसंसर्गतान्यविषयतानिरूपितत्व—एतदुभयसंबन्धेन यद्रूपावच्छिन्नविषयताविशिष्टयद्रूपावच्छिन्नविषयतानिरूपितविषयितात्वं तादृशविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयतानिरूपितविषयिताशून्यत्वं निष्कृष्टार्थं इत्यस्मद्गुरुचरणाः प्राहुः । अधिकं तु क्रोडपत्रादितो ज्ञेयम् ।

५ अत्र, गोः कपिलत्वं लक्षणमित्युक्तौ गौर्लक्ष्या भवति, लक्ष्यतावच्छेदकं गोत्वम्, तस्य समानाधिकरणः ( गोत्वस्याधिकरणे शुक्लगवि वर्तमानः ) कपिलत्वस्यात्यन्ताभावः, तस्य प्रतियोगि कपिलत्वं भवति, तस्य (प्रतियोगिनः ) भावः कपिलत्वे वर्तेत इति द्रष्टव्यम् ।

[ ख ] लक्ष्यैकदेशावृत्तित्वम्[1] । यथा गोः कपिलत्वस्य ( लक्षणत्वाङ्गीकारे शुक्लगवि कपिलत्वस्याभावेन ) अव्याप्तिः । ( त० दी० १।पृ० ४) [ ग ] लक्ष्यैकदेशे लक्षणस्यावर्तनम् । यथा ' शिखासूत्रवान् ब्राह्मणः ' इत्यस्य लक्षणस्य संन्यासिन्यव्याप्तिः[2] । ( त० कौ० पृ० २१ ) २ भागासिद्धत्वम्[3] । यथा गोर्लक्षणस्य शबलत्वस्य भागासिद्धिः । ( त०भा० पृ० ५० ) ( नील० १। पृ० ४ )

**अव्याप्यवृत्तिगुणत्वम्**[4]—अव्याप्यवृत्तिवृत्तिर्गुणत्वव्याप्या च या जातिस्तादृशजातिमत्त्वम् । (दि० गु०पृ०१९४) तादृशी जातिस्तु बुद्धित्व-शब्दत्वादिः । ( ख० )

**अव्याप्यवृत्तित्वम्**—स्वात्यन्ताभावसमानाधिकरणत्वम्[5] । ( त० दी० १। पृ० १३ ) ( मू० म० ) ( ग० ) यथा वृक्षे कपिसंयोगतदत्यन्ताभावयो[6]रव्याप्यवृत्तित्वम् । यथा वा संयोगेन द्रव्यस्याव्याप्यवृत्तित्वमते, पर्वते वह्नितदभावयोरव्याप्यवृत्तित्वम् । ( ख० )

---

१ लक्षणतावच्छेदकत्वाभिमतसंबन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थः । ( नील० १ । पृ० ४ )

२ संन्यासिनः शिखासूत्रवत्त्वाभावादिति भावः । ( त० कौ० पृ० २१ )

३ इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेण । विस्तरस्तु लक्षणशब्दव्याख्यानावसरे संपादयिष्यते ।

४ अव्याप्यवृत्तिगुणाश्च बुद्ध्यादयोऽष्टौ, शब्दः, भावना, संयोगः, विभागश्चेति । एते गुणा प्रादेशिकगुणा इत्यपि व्यवह्रियन्त इति विज्ञेयम् । ( भा० प० गु० श्लो० १०० )

५ स्वस्यात्यन्ताभावेन सहैकाधिकरणे वर्तमानत्वमित्यर्थः । ( ख० ) स्वप्रतियोगित्व–स्वसामानाधिकरण्य–एतदुभयसंबन्धेनाभाववत्त्वमिति निष्कर्षः* । (नील० १ । पृ०१३)

६ अत्रायमाशयः— ' अग्रे वृक्षः कपिसंयोगी न मूले ' इति प्रतीत्या एकस्मिन्नप्यधिकरणे ( वृक्षे ) कपिसंयोगकपिसंयोगाभावयोरग्रमूलात्मकप्रदेशविशेषावच्छेदेन विद्यमानत्वात्तयोरव्याप्यवृत्तित्वं संगच्छत इति ।

---

* तदर्थश्च–स्वशब्देन कपिसंयोगाभावो गृह्यते, स्वस्य प्रतियोगी कपिसंयोगस्तत्त्वं कपिसंयोगे वर्तते । तथा–स्वसामानाधिकरण्यमपि (स्वस्य कपिसंयोगाभावस्य सामानाधिकरण्यमेकाधिकरणे वर्तमानत्वमपि) वर्तत इति, एतादृशोभयसंबन्धेन कपिसंयोगाभाववत्त्वं कपिसंयोगे वर्तत इति कपिसंयोगोऽव्याप्यवृत्तिर्भवति । एवं कपिसंयोगाभावेऽप्यव्याप्यवृत्तित्वं स्वयमूह्यम् ।

**अशिष्टः**—यो यदा वेदनिषिद्धकर्ता स तदा अशिष्टः। यथा बौद्धपाषण्डादिरशिष्टः। चि० १।पृ० १०८–१०९)

**अस्**—( धातुः ) [ क ] कालसंबन्धविशेषः । यथा चैत्रोऽस्तीत्यादौ धात्वर्थः। ( स्व० )

[ ख ] शाब्दिकास्तु, स्वधारणानुकूलो व्यापारः असूधात्वर्थ इत्याहुः। (वै० सा० धा० पृ०९० )

**असंप्रज्ञातः**— १ यथार्थज्ञानाऽविषयः। ( स्व० ) २ ज्ञेयज्ञानज्ञातृभेदशून्यो निर्विकल्पकरूपः समाधिरिति योगशास्त्रविद आहुः। ( वाच० )

**असंबन्धः**—१ असमवेतत्वम्। यथा समवायेऽभावे चासंबन्धः। ( नील० १। पृ० ६ ) २ परस्परावच्छेद्यावच्छेदकभावापन्नविषयितानिरूपकत्वशून्यत्वम्। ( ग० अव० ) यथा 'सुन्दरः पुरुषो दण्डी' इति

---

१ यदाह वाक्यपदीये—आत्मानमात्मना* बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः, इति।

२ तदर्थः—[ क ] प्रतियोगित्व–अनुयोगित्व–एतदन्यतरसंबन्धेन समवायाभावः† ( नील० १। पृ० ६) (दि०१। पृ० ३६) [ ख ] प्रतियोगित्व–अनुयोगित्व–अन्यतरसंबन्धावच्छिन्नावच्छेदकतानिरूपितप्रतियोगिताकभेदः, इति। ( ल० व० पृ० ३)

३ अयं चैकवाक्यत्वविघटको 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' इति जैमिनिसूत्र–( न० व० )घटकासंबन्धपदस्यार्थ इति विज्ञेयम्।

---

* अत्रायमाशयः—आत्मा द्विविधः। शरीरात्मा, अन्तरात्मा चेति। अन्तरात्मा अन्तःकरणावच्छिन्नात्मा। शरीरात्मा शरीरावच्छिन्नात्मा। तत्रान्तरात्मा तत्कर्म करोति, येन शरीरात्मा सुखदुःखे अनुभवतीति हेतोः, जानाति इच्छतीत्यादौ ज्ञानेच्छाद्यनुकूलव्यापारस्य धात्वर्थत्वेऽपि फलव्यापारयोर्वैयधिकरण्येन सकर्मकत्वमुपपद्यत इति ( वै० सा० द० धा०पृ०९१)

† अयमाशयः—यस्मिन् किंचिदपि वस्तु समवायेन संबन्धेन न वर्तते, यश्च कस्मिंश्चिदपि वस्तुनि समवायेन संबन्धेन न वर्तते तत्रायमसंबन्धः। यथा समवाये, अभावे च न किंचिद्वस्तु समवायेन वर्तते, सोऽपि (समवायोऽभावश्च) न कस्मिंश्चिदपि वस्तुनि समवायेन संबन्धेन वर्तेत इति समवाये, अभावे चाऽयमसंबन्धोऽस्ति।

स च (असंबन्धः) समवायत्वस्य, अभावत्वस्य च जातित्वे बाधक इति न्यायसिद्धान्तः।

वाक्यशाब्दजन्यबोधे पुरुषांशे दण्डसौन्दर्ययोर्विशेषणतया युगपद्भानस्वीकारेऽसंबन्धः । (स्व०)

**असंभवः**–( लक्षणदोषः )१ [ क ] लक्ष्यतावच्छेदकव्यापकीभूतो योऽभावस्तत्प्रतियोगित्वम् । ( न्या० बो० १ । पृ० ३)

[ ख ] लक्ष्यमात्रावृत्तित्वम् । यथा गोरेकशफत्वरूपलक्षणस्यासंभवः । ( त० दी० १। पृ० ४)

[ ग ] लक्ष्ये क्वापि लक्षणस्यावर्तनम् । यथा शुण्डदण्डवान् ब्राह्मण इति लक्षणस्यासंभवः । ( त० कौ० पृ०२१) २ स्वरूपासिद्धिः । यथा गोरेकशफत्वस्य लक्षणत्वे स्वरूपासिद्ध्यात्मको हेत्वाभासः । ( त० भा० पृ०१० )

**असंसर्गाग्रहः**–१ बाधग्रहः प्रतिबन्धकग्रहो वाऽसंसर्गः, तस्याभावः । यथा प्राभाकरमते कार्यतावाचकलिङादिपदासमभिव्याहारस्थले व्यवहारस्त्वसंसर्गाग्रहादेवेत्यत्र (म० प्र० ४) । २ भेदाज्ञानम् । यथा सांख्यमते बुद्धिपुरुषयोरसंसर्गाग्रहात्कर्तृत्वाद्यभिमान इत्यत्र । (दि० १। आत्म० प० १०९)३ केचित्तु, असंसर्गस्य परस्परसंबन्धाभावस्याग्रहोऽबोधः । यथा मीमांसकमते इदं रजतमित्यादौ 'इदम्' इति 'रजतम्' इति च ज्ञानद्वयस्यापि प्रवृत्तिजनकताप्रयोजकत्वेन परस्परसंबन्धाभावस्याबोध इत्याहुः । ( वाच० )

---

१ वस्तुतस्त्वेतादृशवाक्यस्वरसात्सौन्दर्यस्य विशेष्यतावच्छेदकत्वेन, दण्डस्य विशेषणत्वेन भानाङ्गीकारे तु नायमसंबन्धदोषः । अपि तु पुरुषः सुन्दरो दण्डीत्यादावेव तादृशदोष इति ज्ञेयम् ।

२ यत्र यत्र लक्ष्यतावच्छेदकं (गोत्वम्) तत्र तत्रैकशफत्वस्याभाव इति व्याप्तेः एकशफत्वाभावो लक्ष्यतावच्छेदकस्य व्यापको भवतीति तत्प्रतियोगित्वमेकशफत्वे वर्तत इति बोध्यम् ।

३ संबन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभाव इत्यर्थः । ( नील० १। पृ०४ )

४ कस्यापि ब्राह्मणस्य शुण्डदण्डाभावादसंभव इति भावः । ( त० कौ० पृ० २१ )

५ इदं च लक्षणस्य व्यावर्तकत्वाभिप्रायेणेति विज्ञेयम् । ( नील० १। पृ० ४ ) तथाहि–गौरितरेभ्यो भिद्यते एकशफत्वादित्यत्रैकशफत्वात्मकहेतोः स्वरूपासिद्धिः । एतत्प्रपञ्चस्तु लक्षणशब्दव्याख्यानावसरे संपादयिष्यते ।

**असत्**–१ सत्तावद्भिन्नः । यथा प्राचीननैयायिकमते सामान्यादिचतुष्टयमसत् । २ तत्कालीनस्वजनकाभावप्रतियोगि । यथा घटपटादिकार्यं स्वस्वोत्पत्तेः प्रागसत् । ( वै० उ० ९।१।१ ) ३ यत् कालसामान्यासंबन्धि तत् । यथा शशशृङ्गकूर्मरोमादि, इति मध्वाचार्यानुयायिनो वेदान्तिनः । ( स्व० ) ४ नामरूपाभ्यामव्याकृतं कारणात्मना स्थितं सूक्ष्मरूपमव्यक्तमिति मायावादिनः । ५ अर्थक्रियाऽकारी ( अकिंचित्करः) अभावादिरिति बौद्धा आहुः । ( वाच० )

**असदर्थविषयकत्वम्**–विशेष्यावृत्तिप्रकारकत्वम् । यथा शुक्तौ 'इदं रजतम्' इति ज्ञानस्य(विशेष्यभूतशुक्तौ रजतत्वस्यावृत्तित्वेन) असदर्थविषयकत्वम्।(स्व०)

**असद्धेतुः**–( हेतुः ) हेत्वाभासवदस्यार्थोऽनुसंधेयः ।

**असमर्थविशेषणः**–( स्वरूपासिद्धः ) यद्धेतुघटकं यत् विशेषणं साध्यसाधनेऽप्रयोजकं भवति तद्विशेषणविशिष्टः स हेतुः । (स्व०) यथा शब्दो नित्यो गुणत्वे सत्यकारणत्वादिति । ( त० भा० पृ०४६ )

**असमर्थविशेष्यः**–( स्वरूपासिद्धः ) यद्धेतुघटकं यत् विशेष्यं साध्यसाधनेऽप्रयोजकं भवति तद्विशेष्यघटितः स हेतुः । ( स्व० ) यथा शब्दो नित्योऽकारणत्वे सति गुणत्वादिति । ( त० भा० पृ० ४६–४७ )

**असमवायिगुणत्वम्**–ज्ञानाद्यतिरिक्तभावकार्यासमवायिकारणगुणत्वम् । (ल० व०पृ०३७ )

---

१ अत्र च गुणत्वविशिष्टमकारणत्वं हेतुः, तत्र विशेषणं गुणत्वं तु न साध्यसाधने प्रयोजकं भवति, विशेष्याकारणत्वस्यैव नित्यत्वसाधनसामर्थ्यात् । ( त० भा० पृ० ४६ )

२ अत्र चाकारणत्वविशिष्टं गुणत्वं हेतुः, तत्र विशेष्यं गुणत्वं तु न प्रकृतसाध्यसाधने प्रयोजकम्, विशेषणमात्रस्यैव (अकारणत्वस्य ) नित्यत्वसाधने समर्थत्वात् । (त०भा०पृ०४७)

३ असमवायिकारणगुणाश्च रूपम्, रसः, गन्धः, स्पर्शः, एकत्वम्, परिमाणम्, एकपृथक्त्वम्, स्नेहः, शब्दः, स्थितिस्थापकश्चेति । ( भा० प० गु० श्लो०८८ ) ( मु० ) ( दि० गु० पृ० १९४ )

४ आत्मविशेषगुणानां कुत्राप्यसमवायिकारणत्वं नास्तीति नियमेन तेषामसमवायिकारणत्ववारणाय ज्ञानाद्यतिरिक्तेति गुणविशेषणम् । ( मुक्ता० १। पृ० ५०–५१ )

**असमवायिकारणम्**—( कारणम् ) [ क ] समवायिकारणे प्रत्यासन्नं कारणम् । ( प्र० प्र० ) ( भा० प० श्लो० १८) (त० कौ० १।पृ०८ ) [ ख ] कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति कारणं यत्तत् । यथा तन्तुसंयोगः पटस्यासमवायिकारणम्, तन्तुरूपं च पटगतरूपस्यासमवायिकारणम् । ( त० सं० ) एवं च असमवायिकारणता द्विविधा । कार्यैकार्थसमवायात्, कारणैकार्थसमवायात् । तत्र प्रथमा

१ तल्लक्षणं च [ क ]समवायसंबन्धावच्छिन्नकार्यतानिरूपिता या समवाय-स्वसमवायिसमवेतत्व-एतदन्यतरसंबन्धावच्छिन्ना कारणता तदाश्रयत्वम् । (न्या० बो०१। पृ० १०) (वाक्य० १। पृ०११)( दि०१ ) (वै० उ० १०।२।३ ) ( वै० वि० ५।२।२४ ) [ ख ] समवाय-स्वसमवायिसमवेतत्व-एतदन्यतरसंबन्धेन समवायिकारणवृत्तिकारणत्वम् (ल० व० पृ० ४) अत्रेदमवधेयम्—असमवायिनः कार्यसहभावेन हेतुत्वमित्यनुभवः । ( प० मा० ) (दि०)

२ कार्यैकार्थ-*कारणैकार्थ-एतदन्यतरप्रत्यासत्त्या कारणं ज्ञानादिभिन्नं†यत् तत् असमवायिकारणम्, इति पर्यवसितोऽर्थः । ( मु० १। पृ० ५१ )

३ अत्र तन्तुसंयोगस्य पटसमवायिकारणेषु तन्तुषु प्रत्यासन्नत्वात् कारणत्वाच्च तन्तुसंयोगः पटस्यासमवायिकारणमिति ज्ञेयम् ( त० कौ० १।पृ०८ )

४ अत्र, [ क ] तन्तुरूपस्य परंपरया पटादौ प्रत्यासन्नत्वात् । ( प्र० प्र० ) [ ख ] तन्तुरूपस्य पटरूपादिसमवायिकारणे पटे स्वाश्रयसमवेतत्वेन प्रत्यासन्नत्वात् कारणत्वाच्च लक्षणसमन्वयो बोध्यः ( त० कौ० १।पृ०८ )

५ अत्रेदं बोध्यम्—असमवायिकारणता च गुणकर्ममात्रवृत्तिर्भवति । ( भा०प० श्लो० २३ ) गुणकर्मातिरिक्ते न वर्तत इति भावः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि नोक्तिविरोधः ।

६ इयं च असमवायिकारणता 'लघ्वी'इति संज्ञां लभते । लघुप्रतिपत्तिकत्वात् । ( वै० उ० २।१।२२ )

* कार्यैकार्थप्रत्यासत्तिरत्र [ क ] समवायसंबन्धेन कार्यसामानाधिकरण्यम् । ( सि० च० १।पृ०२१ ) [ ख ] समवायसंबन्धः । ( दि०१।पृ०५१ )

कारणैकार्थप्रत्यासत्तिश्चात्र [ क ] स्वसमवायिसमवायसंबन्धेन कार्यसामानाधिकरण्यम् । (सि० च० १।पृ०२१ ) [ ख ] स्वसमवायिसमवेतत्वसंबन्धः । ( दि० १।पृ०५१ )

† अत्रायं सिद्धान्तः ' आत्मविशेषगुणानां (ज्ञानादीनाम्) कुत्राप्यसमवायिकारणत्वं नास्ति ' इति, ( दि० १।पृ० ५१ ) ( मु० १।पृ० ५०।५१ ) ( राम०१।पृ० ५० ) तेन असमवायिकारणत्वनिरासाय ज्ञानादीनां पर्युदासः ।

यथा आत्ममनःसंयोगस्य[2] ज्ञानादिकं प्रति, तन्तुसंयोगस्य[1] तु पटं प्रति कारणता । द्वितीया यथा तन्तुरूपाणां[3] पटरूपं प्रति कारणता । (वै० उ० २।१।२२) (९।२।२४) (त० भा० पृ० ४)

**असाधारणः**[4]–( हेत्वाभासः ) [ क ] सपक्षविपक्षव्यावृत्तो हेतुः । ( गौ० वृ० १।४९ ) ( भा० प० २। श्लो० ७४ ) ( त० सं० ) ( चि० २।पृ०८७ )

[ ख ] सपक्ष[5]विपक्षव्यावृत्तत्वे सति पक्ष[6]वृत्तिः । यथा शब्दो नित्यः शब्दत्वा[7]दिति ।

---

१ तत्र, कार्येण पटेन सह, कारणस्य तन्तुसंयोगस्य एकस्मिन् तन्तौ प्रत्यासत्तिरस्ति, इति लक्षणसमन्वयो बोध्यः। ( मु० १।पृ०५० )

२ इयं च असमवायिकारणता 'महती'इति संज्ञां लभते । गुरुप्रतिपत्तिकत्वात् । ( वै० उ० २।१।२२ )

३ तथाहि-स्वगतरूपादिकं प्रति समवायिकारणं पटः, तेन सह तन्तुरूपस्यैकस्मिन्तन्तौ प्रत्यासत्तिरस्ति इत्यसमवायिकारणता संगच्छते । ( मु० १।पृ०५० )

४ स चानैकान्तिकप्रभेद इति ज्ञेयम् । लक्षणं तु वक्ष्यमाणमसाधारणत्वमेव ।

५ अत्र, सपक्षो निश्चितसाध्यवान् । विपक्षो निश्चितसाध्याभाववान् । पक्षः संदिग्धसाध्यवान् इत्यर्थो बोध्यः । ( गौ० वृ० १।४५ )

६ इदं लक्षणद्वयं च ( क–ख–इत्यत्र निद्यमानम् ) प्राचीनमतानुसारेणेति विज्ञेयम् । तन्मते पक्षवृत्तित्वे सति साध्यव्यापकीभूताभावप्रतियोगित्वमेवासाधारण्यम्* । विरोधस्तु ( हेत्वाभासदोषः ) साध्यासमानाधिकरण्यरूपोऽन्वयव्याप्तिग्रहविरोधीति । (दीधि०२। पृ०१९७)

७ अत्र शब्दत्वं हि सपक्षाद्गगनादेः, विपक्षाच्च घटादेर्व्यावृत्तम्, पक्षे शब्दे च वर्तत इत्यसाधारणम् (चि० २।पृ०८८) । अत्र (प्राचीनमते) असाधारणत्वज्ञानं हि साक्षादनुमितिप्रतिबन्धकम् । तथाहि–शब्दत्वं हि नान्वयी हेतुः, दृष्टान्ताभावात् । किंतु व्यतिरेकी । तथाच, यो ( हेतुः ) यद्धर्मवतो व्यावृत्तः स स्वाश्रये तद्धर्माभावं साधयति । यथा धूमो वन्ह्यभाववतो जलह्रदादेर्व्यावृत्तः स्वाश्रये पर्वतादौ वन्ह्यभावाभावं (वन्हिम् ) साधयति । तथा, शब्दत्वं नित्यत्ववतो गगनादेः सपक्षाद्व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावं ( अनित्यत्वम् ) सा-

---

* इदं च साक्षादनुमितिविरोधि । ( दीधि० २। पृ०१९७ ) तद्विरोधित्वं च असाधारणत्वशब्दव्याख्यानावसरे प्रदर्शयिष्यते ।

[ ग ] साध्यासमानाधिकरणो हेतुः । यथा शब्दो नित्यः शब्दत्वादित्यादौ नित्यत्वासमानाधिकरणं शब्दत्वमसाधारणो हेतुः । (मु० २। पृ० १९९) (गौ० वृ० १।४९)

**असाधारणकारणत्वम्**–[ क ] कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । (त० प्र०) (वाक्य० १। पृ० १०)

[ ख ] कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम्[2] । यथा घटत्वावच्छिन्नं प्रति दण्डस्यासाधारणकारणत्वम् । (न्या० बो० १। पृ० ८)

[ ग ] साधारणकारणभिन्नकारणत्वम् । (म० प्र० १। पृ० ९)

**असाधारणत्वम्**[3]–१ (हेतुदोषः) [ क ] सर्वसपक्षव्यावृत्तत्वम्[4] । (चि० २। सव्य० पृ० ८९) (मु० २। पृ० १९९)

---

धयेत् । एवं नित्यत्वाभाववतो घटादेर्विपक्षात् व्यावृत्तमिति स्वाश्रये शब्दे नित्यत्वाभावाभावं (नित्यत्वम्) अपि साधयेत् । परंतु, नचैकत्र शब्दे नित्यत्वानित्यत्वयोः संभवः, तयोर्विरोधात् । तस्माच्छब्दत्वेऽसाधारणत्वज्ञाने सति न साध्यानुमितिरिति । (त० कौ० २। पृ० १३–१४) (चि० २। पृ० ८८) (दीधि० २। पृ० १९६–१९७)

१ इदं लक्षणं च नवीनमतानुसारेणोक्तम् (प्राचीनमते त्वयं हेतुर्विरुद्ध एवेति मन्तव्यम्)। नवीनमतेऽसाधारण्यं साध्यासामानाधिकरण्यम् । एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम् । (गौ० वृ० १।४५)

२ अत्रेदं बोध्यम्–'कार्यमात्रं प्रति कारणं कालादि' इत्येव व्यवहारात्कालादीनां साधारणकारणत्वम् । 'दण्डादिकं कार्यमात्रं प्रति कारणम्' इति न व्यवहारः, अपि तु 'घटादिकं प्रति कारणं दण्डादि' इत्येव व्यवहाराद्दण्डादीनां, कार्यत्वातिरिक्तो यो धर्मः (घटत्वादिः) तदवच्छिन्ना या घटनिष्ठा कार्यता तन्निरूपितकारणतावत्त्वादसाधारणकारणत्वमिति ।

३ तच्चासाधारणानैकान्तिकहेत्वाभासनिष्ठो दोष इति विज्ञेयम् ।

४ प्राचीनमते सपक्षो निश्चितसाध्यवान्, तद्व्यावृत्तत्वं तदवृत्तित्वमिति विज्ञेयम् । अत्रायं प्राचीनमताभिप्रायः–शब्दो नित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यम्, तत्र (निश्चितसाध्यवति पक्षे) हेतोर्निश्चयात्, इति । इदमत्राकूतम्–पक्षे साध्यसंदेहदशायामेवासाधारणस्य हेत्वाभासता, न तु निश्चयदशायाम् । तदा पक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावात् इत्यनित्यदोषत्वं तस्येति । (दि० २। पृ० १५९) (दिधि० २। पृ० १९५) नवीनमते तु सपक्षः साध्यवान्, तद्व्यावृत्तत्वं

[ ख ] ज्ञाननिष्ठप्रकृतसाध्यविरोध्युन्नायकतानतिरिक्तवृत्तिः प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितयादृशविशिष्टविषयता तादृशविशिष्टवत्प्रकृतहेतुत्वम् ।(ग० असा०) तच्च प्रकृतहेतुनिष्ठं साध्यव्यापकीभूताभावप्रतियोगित्वम् । (ग० सामा०)

---

तद्वृत्तित्वग्रहविरोधित्वम् । विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयसामानाधिकरण्यग्रहविरोधितावच्छेदकं रूपमिति निष्कर्षः । (दीधि० २। पृ० १९७) नवीनानामयमाशयः– सद्धेतावपि पक्षे साध्यसंदेहदशायामसाधारण्यस्य, प्रकृतपरामर्शकालिकविरुद्धपरामर्शदशायां सत्प्रतिपक्षस्य च स्वीकारे बाधभ्रमदशायां बाधस्याप्यङ्गीकारापत्तिः । न हि वैषम्ये युक्तिं पश्यामः । एवं चात्र सपक्षपदं केवलसाध्यवत्परम् (न तु निश्चयगर्भम्)। शब्दो नित्यः शब्दत्वादित्यादिसाध्यवदवृत्तिहेतोरेव लक्ष्यतेति न कोपि दोष इति । (नील० २। पृ० २५) नवीनाः पुनरेवं वर्णयन्ति–सामग्रीद्वयविरोधेन हेत्वभावस्य साध्याभावव्यापकताग्रहविरोधोऽसाधारणस्य दूषकताबीजम् । तथाहि–वृत्तिमता हेतुना क्वचिदपि वर्तितव्यम् । तत्र चावश्यं साध्यतदभावयोरन्यतरेण भवितव्यम् । न च तत्र हेत्वभावः संभवति । अतोऽवश्यमन्यतराव्यापकत्वं तस्य । एवंविधविरोधध्रौव्ये साध्येन तदभावेन च हेत्वभावस्य सहचारज्ञानं नैकतरनिरूपितामपि व्यापकतां ग्राहयति, मिथो विरोधात विरोधिपरामर्शद्वयमिव साध्यतदभावौ । एवं च वृत्तिमत्त्वविशेषितं हेतोर्यावद्विपक्षव्यावृत्तत्वम्, वृत्तिमत्प्रतियोगित्वविशेषितं वा हेत्वभावस्य यावत्सपक्षविपक्षवृत्तित्वमसाधारण्यमिति योजयन्ति । (दीधि० २। पृ० १९७–१९८).

अत्रेदं बोध्यम्–सर्वसपक्षव्यावृत्तत्वं च मणिकृतां विरुद्धत्वम्, मणिकृतां यदसाधारणत्वं तदेव दीधितिकृन्मते विरुद्धत्वम्, इति अवधारणार्थं पुनःपुनरनूद्यते ।

१ एतज्ज्ञानं चानुमितेः साक्षात्प्रतिबन्धकम्, व्यतिरेकसत्प्रतिपक्षरूपत्वात्*। तथाहि–शब्दत्वं हि नान्वयी हेतुः, क्वचिदपि नित्ये शब्दत्वस्यादृष्टेः, किंतु व्यतिरेकि । तथा च नित्यत्वाभावव्यापको (व्यापकत्वेन ज्ञातः) यः शब्दत्वाभावस्तत्प्रतियोगितया साध्यं साधयेत् । तथा नित्यत्वव्यापकीभूताभावप्रतियोगितया साध्याभावमपि साधयेत् । न च द्वयोर्विरुद्धयोरेकत्र निर्णयः, किंतु परस्परप्रतिबन्धात् द्वयोरेवानिर्णय इति ध्येयम् । (न्या० म० २। पृ० २०) (दीधि० २। पृ० १९७)

२ इदं च मणिकृन्मताभिप्रायेण । दीधितिकृन्मते स्वयं विरोध एव । मणिकृन्मते विरोधस्तु साध्यासामानाधिकरण्यमेवेति सूक्ष्मतरमेतदिति पुनःपुनरनूद्यते । (स्व०) (दीधि० पृ० १९७)

---

* अयमाशयः– [ क ] साध्यतदभावानुमित्यनुगुणव्यतिरेकव्याप्तिद्वयसहितपक्षधर्मताज्ञानवि-

(दीधि० २। पृ० १९७) इदमेव (साध्यव्यापकीभूताभावप्रतियोगित्वम्) सपक्षव्यावृत्तत्वं गायन्ति । यथा शब्दो नित्यः शब्दत्वादित्यादौ शब्दत्वस्य (नित्यत्वव्यापकीभूताभावप्रतियोगिनः) असाधारणत्वम् । (न्या० म० २। पृ० २०) २ असाधारणकारणत्ववदर्थो द्रष्टव्यः ।

**असाधारणधर्मः**—लक्ष्यतावच्छेदकसमनियतो धर्मः । यथा गोर्लक्षणं हि सास्नादिमत्त्वम्, स एवासाधारणधर्म इत्युच्यते । (त०दी० १। पृ० ४) स द्विविधः । व्यावर्तकः, अव्यावर्तकश्च । आद्यो गोः सास्नादिमत्त्वम् । द्वितीयः सप्तपदार्थानामभिधेयत्वम् । (सि० च० १। पृ० ९)

**असाधारण्यम्**—असाधारणत्ववदस्यार्थोऽनुसंधेयः । (ख०)

**असाधुत्वम्**—महाजनपरिगृहीतव्याकरण—स्मृतिनिषिद्धत्वम् । (चि० ४) यथा, अचीक्रमतेत्यादिप्रयोगस्य स्वर्णस्तेयादेश्च यथाक्रममसाधुत्वम् । (ख०)

**असामर्थ्यम्**—वृत्त्यघटकपदार्थान्वितस्वार्थबोधकत्वे सति वृत्तिजन्यबोधीयप्र-

---

१ अत्र धर्मेऽसाधारणत्वं च [ क ] तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम् ( त० प्र० १ ) [ ख ] लक्ष्यतावच्छेदकसमनियतत्वम् । (त०दी०पृ० ४) लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः । (नील० १।पृ०४) भवति हि सास्नादिमत्त्वं लक्ष्यतावच्छेदकीभूतगोत्वस्य व्यापको व्याप्यश्च, इति ।

२ अयमाशयः—सप्तपदार्थातिरिक्तपदार्थाप्रसिद्ध्या तद्भेदासंभवेनाऽभिधेयत्वस्य व्यावर्तकत्वं न संभवतीति ।

३ इदमेव 'सापेक्षत्वम्' 'अपेक्षा' वेत्युच्यते, समासाद्यसाधुत्वे प्रयोजकं च भवतीति बोध्यम् ।

४ वृत्तिशब्देनात्र वैयाकरणसंमताः कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तयो गृह्यन्ते ।

५ अत्र स्वार्थश्च स्वीयवृत्तिग्रहे ( शक्तिग्रहे ) विशेष्यः इति विवक्षणीयः । अत एव शरैः शातितपत्रः, चैत्रस्य दासभार्येत्यादौ न समस्यमानस्य शातित-दासपदादेः सापेक्षता, पदार्थैकदेशशातन-दासत्वादावेव शरकरणकत्व-चैत्रनिरूपितत्वादीनामन्वयात् । (ग० व्यु० का० १। पत्रे १४ )

---

षयत्वादित्यर्थः । शब्दे नित्यत्वतदभावोभयव्यापकीभूताभावप्रतियोगिशब्दत्ववत्ताज्ञानस्य नित्यत्वतदभावानुमित्यननुकूलत्वात् । व्यापकनिवृत्तौ तद्व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । (म०प्र०२। पृ० २६) [ख] एतज्ज्ञानं च साध्याभावनिरूपितव्यतिरेकव्याप्तिज्ञानरूपतया साध्यवत्ताबुद्धौ तदभावव्याप्यवत्ताज्ञानमुद्रया साक्षात्प्रतिबन्धकं भवति, इति ।

कारताश्रयस्वार्थबोधकत्वम् । यथा ऋद्धस्य राजमातङ्ग इत्यादौ राजपदस्य (ऋद्धपदार्थस्य राजपदार्थेनान्वये विवक्षिते) असामर्थ्यम् । (ग० व्यु० का० १। पृ० १४)

असिद्धः[3]–(हेत्वाभासः) [क] यत्र व्याप्तिः पक्षधर्मत्वं वा नास्ति सोऽसिद्धः । (वै० वि० ३।१।१९)

[ख] व्याप्ति-पक्षधर्मताऽन्यतररहितो हेतुः । (प्र०प्र०) यथा घटो द्रव्यं श्रावणत्वादित्यादौ श्रावणत्वादिर्हेतुरसिद्धः । (ख०) असिद्धस्त्रिविधः । आश्रयासिद्धः, स्वरूपासिद्धः, व्याप्यत्वासिद्धश्चेति । (त० सं०) (त० कौ० २। पृ० १४) (प्र० प्र०) (भा० प० श्लो० ७६)

असिद्धिः[4]–(हेतुदोषः) [क] परामर्शप्रतिबन्धकज्ञानविषयो धर्मः । (त० कौ० २। पृ० १४)

[ख] व्यभिचाराद्यन्य-परामर्शप्रतिबन्धकतावच्छेदकधर्मवत्त्वम् । (न्या० म० २। पृ० २१)

[ग] साधारण्यासाधारण्यानुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परा-

---

१ ऋद्धो राजमातङ्ग इत्यादौ मातङ्गपदस्य सापेक्षत्ववारणाय विशेष्यदलम् । तथाच, ऋद्धस्य राजमातङ्ग इत्यादौ वृत्तिः (राजमातङ्ग इति समासवृत्तिः) तदघटकं पदं (ऋद्धस्येति पदम्) तदर्थान्वितः स्वार्थः (राजपदार्थः.) तद्बोधकत्वे सति, वृत्तिजन्यो बोधः ('राज्ञो मातङ्गः' इति बोधः) तादृशबोधे प्रकारताश्रयः (विशेषणम्, राजा) तद्बोधकत्वं राजपदेऽस्ति, इति लक्षणसमन्वयः ।

२ अत्र ऋद्धपदार्थस्य राजपदार्थेऽन्वयो न भवति, सामर्थ्याभावात् । तत्तदर्थविशेष्यकान्वयबोधं प्रति तत्तत्सामर्थ्यस्य प्रयोजकत्वात् । 'समर्थः पदविधिः' (पा० सू० २।१।१) इति सूत्रव्याख्यानावसरे तथैवोक्तत्वादिति । एवं च राजमातङ्ग इति समासोऽसाधुरेव, राजपदस्य समासाघटकर्द्धपदसापेक्षत्वादिति ।

३ अयं साध्यसम इत्युच्यते । (वात्स्या० १।२।४९) (गौ० वृ० १।४८) (गौ०वृ०५।४) लक्षणं तु वक्ष्यमाणासिद्धिमत्त्वमेव ।

४ अत्रेदं बोध्यम्–यत्र योऽसिद्धिस्तत्र तद्व्याप्योप्यसिद्धिरेव, इति । (वै० वि० ३।१।१५)

मर्शविरोधितावच्छेदकं रूपमसिद्धिः। (दीधि० २। पृ० २१५–२१६) सा चासिद्धिः [ १ ] आश्रयासिद्ध्याद्यन्यतमा। ( मु० २। पृ० १६१) ( गौ० वृ० १।४८ ) ( चि० २। पृ० १०२ ) यथा काञ्चनमयह्रदः काञ्चनमयवह्निमान्काञ्चनमयधूमादित्यादौ काञ्चनमयत्वाभाववद्ध्रदादिः। ( ख० ) [ २ ] उदयनाचार्यास्तु, पक्षधर्मताज्ञानाभावः, व्याप्तस्य पक्षधर्मतया प्रमितिः सिद्धिस्तदभावो वाऽसिद्धिरित्याहुः। (ग० बाध०) असिद्धिस्त्रिविधा। आश्रयासिद्धिः, स्वरूपासिद्धिः, व्याप्यत्वासिद्धिश्चेति। ( चि० २। पृ० १०२ ) (गौ० वृ० १।४८) (वै०वि० ३।१।१५) (न्या० म० २। पृ० २१ )

**असूया**–१ [ क ] गुणिनि दोषाविष्करणम्। यथा शत्रवेऽसूयतीत्यादौ धात्वर्थः। (ग० व्यु० का० ४)

[ख] शाब्दिकास्तु, शौचाचारादिगुणविषये दम्भादिकृततत्त्वरूपदोषारोपा-

---

१ यद्वा [ क ] साधारण्याद्यनिरूपितया ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकरूपमसिद्धिः (दीधि० २। पृ० २१७) [ ख ] विशिष्टपक्षविशिष्टसाध्यविशिष्टसाधनविषयताबहिर्भावेन यत्साधारण्यादिविषयत्वं तच्छून्यज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकरूपम्। [ ग ] केचित्तु, विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहाविरोधित्वे सति यद्व्याप्तिग्रहविरोधिज्ञानं तदन्यज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकरूपमित्याहुः। [ घ ] विशिष्टपक्षविशिष्टसाधनवैशिष्ट्यविशिष्टसाध्यग्रहविरोधिज्ञानभिन्नवृत्ति यद्व्याप्तिग्रहविरोधितावच्छेदकं यच्च विशिष्टपक्षज्ञानत्वस्य विशिष्टसाध्यज्ञानत्वस्य विशिष्टसाधनज्ञानत्वस्य चाव्यापकं व्याप्तिग्रहविरोधितावच्छेदकं तदुभयशून्यस्य, तादृशग्रहविरोधिज्ञानभिन्नवृत्तित्वे सति तादृशामव्यापकं यद्व्याप्तिग्रहविरोधितावच्छेदकं तच्छून्यस्य वा ज्ञानस्य विषयतया परामर्शविरोधितावच्छेदकं रूपम्, । इत्यादि ( दीधि० २)

२ आश्रयासिद्धिः, स्वरूपासिद्धिः, व्याप्यत्वासिद्धिश्चैतासामन्यतमेत्यर्थः। (ख०)अत्र परामर्शविषयाभावत्वेनानुगतेन त्रयाणामसिद्धत्वेन संग्रहो महर्षिणा कृत इति न विभागविरोधः, हेत्वाभासाधिक्यं वा। अत एव, ये व्याप्तिविरह-पक्षधर्मताविरहरूपास्तेऽसिद्धिभेदमध्यमध्यासते, तदन्ये च यथायथं व्यभिचारादय इति सिद्धान्तप्रवादोऽपि। (चि० २।पृ० १०२)

३ इयं च कोपमूलिका। ( ल० म० पृ० १०३ )

४ अत्र विषयताविशेष एव चतुर्थ्यर्थः। ( ग० व्यु० का० ४ )

नुकूलश्चित्तवृत्तिविशेषः । यथा हरयेऽसूयतीत्यादौ, इत्याहुः । (ल० म० पृ० १०३) २ [क] परगुणादौ द्वेषः । (गौ० वृ० ४।३)

[ख] गुणद्वेषः । यथा पुत्रायासूयतीत्यत्र[1] धात्वर्थः । (श०प्र०पृ० ८७)

**अस्तित्वम्**–[क] कालसंबन्धित्वम् । (दि० १) (प० मा०) यथा घटोऽस्तीत्यादौ घटादेरस्तित्वम् । (ख०)

[ख] 'अस्' शब्दवदस्यार्थोऽनुसंधेयः । (ख०)

**अस्मद्**–'अहम्' शब्दवदस्यार्थोऽनुसंधेयः ।

**अहंकारः**–१ अहमित्यभिमानः । स च शरीरादिविषयको मिथ्याज्ञानमुच्यते[2] । (गौ० वृ० ४।६८) २ अभिमानाश्रयोऽन्तःकरणमहंकार इति मायावादिनः । ३ महत्तत्त्वजन्यः पञ्चतन्मात्रादीनां कारणं तत्त्वविशेषोऽहंकार इति सांख्याः[3] ।

**अहः**–१ संपूर्णादित्यमण्डलदर्शनयोग्यः कालः । (वै० उ०) यथा अहो अहोभिर्महिमा हिमागमे इत्यादौ । (नैषध०) २ क्वचित्, दिनरात्रिसमुदितः कालः । यथा मासैर्द्वादशभिर्वर्षं दिव्यं तदहरुच्यते । (सू० सि०) यथा वा, विप्रः शुध्येद्दशाहेन द्वादशाहेन भूमिपः, इत्यादौ । (मनु० ५।८३)

**अहम्**–[क] तत्कालीनस्वातन्त्र्योच्चारयितृचैत्रत्वादिविशिष्टः[4] । (दि० ४ पृ० १७८–१७९)

---

१ अत्र 'पुत्रस्य गुणं द्वेष्टि' इत्याकारको बोधः । (श० प्र० पृ० ८७)

२ तच्च दोषनिमित्तानां शरीरादीनां तत्त्वस्य अनात्मत्वस्य ज्ञानान्निवर्तते । आत्मत्वेन हि शरीरादौ मुह्यन् रञ्जनीयेषु रज्यति, कोपनीयेषु कुप्यति । (गौ० वृ० ४।६४)

३ तन्मते वैकारिक-तामस-भेदेन द्विविधोऽहंकार इति बोध्यम् । बादरायणाचार्यास्तु, वैकारिक-तैजस-तामस-भेदेन त्रिविधोऽहंकार इति प्राहुः ।

४ अत्र, स्वातन्त्र्योक्तया च 'वाच्यस्त्वया मद्वचनात्स राजा' इत्यादौ न मत्पदात्कवेर्बोधः । (दि० ४।पृ० १७९) अत्र स्वतन्त्रोच्चारणं च, वाक्यान्तरस्थक्रियाकर्मतया स्वघटितवाक्यार्थप्रत्यायनेच्छानधीनस्वोच्चारणम् । (ग० शक्ति० पृ० २७)

[ख] स्वोच्चारणकर्तृतावच्छेदकधर्मावच्छिन्नः । यथा, अहं गच्छामीत्यादावस्मदर्थः । (ग० शक्ति० पृ० २६–२७)

**अहेतुसमः**–(जातिः) [क] त्रैकाल्यासिद्धेर्हेतोरहेतुसमः । (गौ० ५।१।१८) हेतुः साधनम् । तत् साध्यात्पूर्वम्, पश्चात्, सह वा भवेत्? । यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम् । अथ पश्चात्, असति साधने कस्येदं साध्यम् । अथ युगपत्साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति हेतुना न विशिष्यते । अहेतुना साधर्म्यात्प्रत्यवस्थानमहेतुसमः । (वात्स्या० ५।१।१८) (नील०पृ० ४४) [ख] कालसंबन्धखण्डनेनाहेतुतया प्रत्यवस्थानम् । अयमर्थः–दण्डादिकं घटादेर्न पूर्ववर्तितया कारणम्, तदानीं घटादेरभावात् कस्य कारणं स्यात्? । अत एव न घटाद्युत्तरकालवर्तितयाऽपि । न वा समानकालवर्तितया, तुल्यकालवर्तिनोः सव्येतरविषाणयोरिवाविनिगमनापत्तेः । कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसंग्रहः । (गौ०वृ० ५।१।१८) [ग] कालत्रयेपि हेतुत्वासंभवेनाहेतुत्वकथनम् । (नील० पृ० ४४)

## आ.

**आकर्षणम्**– गतिहेतुविकर्षणम् । यथा शाखां ग्राममाकर्षतीत्यत्र धात्वर्थः । (श० प्र० पृ० ९९)

**आकस्मिकम्**– यत्किंचित्कारणानियम्यम् । (दि० १। पृ० ६३) यथा अकस्मादेव भवति कार्यं न किंचिदपेक्षमिति तदेतन्मतमित्यादौ। (गौ०सू०?)

**आकाङ्क्षा**–[क] अभिधानापर्यवसानम् । (चि०)

---

१ प्रतिकूलतर्कदेशनाऽऽभासोऽयम् इति बोध्यम् । (गौ० वृ० ५।१८)

२ हेतुसमेति पाठे तु कालत्रयेपि हेतुत्वस्यासंभवकथनं हेतुसमेत्यर्थः । (नील० पृ० ४४)

३ अत्र 'ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवान्' इति बोधः । विकर्षणं नम्रीकरणम् । (श० प्र० पृ० ९९)

४ इयं च ज्ञाता सती शाब्दबोधे शब्दस्य सहकारिणी । अत एव गौरश्वः पुरुषो हस्तीत्यादौ नान्वयबोधः, आकाङ्क्षाविरहात् । (त० कौ० ४। पृ० १७) (त० सं०)

५ तदर्थस्तु, यस्य येन विना स्वार्थान्वयाननुभावकत्वम्, तस्य तदपर्यवसानम्, इति । (चि०)

[ख] स्वरूपयोग्यत्वे सत्यजनितान्वयबोधजनकत्वम्। (तर्का० ४।पृ० १०) [ग] यत्पदं यत्पदेन सह यादृशानुभवजनकं भवेत्, तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा। भवति हि, नामपदम् उत्तरवर्तिविभक्तिपदेनैव सहान्वयबोधकम्, अतस्तत्समभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा। (न्या० म० ४।पृ० २१)

[घ] पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वम्। (त० सं० ४) (कु०) (मु० ४।पृ० १८८)

[ङ] यस्य पदस्य येन पदेन विनाऽन्वयबोधजनकत्वं नास्ति, तस्य पदस्य तेन पदेन समभिव्याहार आकाङ्क्षा। (त० कौ० २।पृ० १६) (प्र० प्र०) यथा (१) घटमानयेत्यादौ क्रियापदकारकपदयोराकाङ्क्षा। वस्तुतस्तु (२) प्रत्यये प्रकृत्युत्तरत्वमेवाकाङ्क्षा। (मु० ४।पृ० १८८) यथा वा वैयाकरणमते विभक्तिधात्वाख्यातक्रियाकारकपदानां परस्परं विना परस्परस्य न स्वार्थान्वयानुभावकत्वम्। (वाच०)

---

१ तेन 'घटः-कर्मत्वम्-आनयनम्-कृतिः' इत्यत्र नान्वयबोधः, स्वरूपायोग्यत्वात्।

२ तेन "अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्" इत्यत्र 'राज्ञः पुरुषः' इति नान्वयबोधः, पुत्रेण जनितान्वयबोधकत्वात्। (तर्का० ४। पृ० १०)

३ अत एव "घटः, कर्मत्वम्, आनयनम्, कृतिः" इति वाक्यात् "घटमानय" इतिवत् न 'घटकर्मकानयनानुकूलकृतिमान्' इति बोधः। आकाङ्क्षाविरहात् (न्या०म०४।पृ०२१)

४ तदर्थश्च [क] अव्यवहितोत्तरत्वादिसंबंधेन यत्पदे यत्पदप्रकारकज्ञानव्यतिरेकप्रयुक्तो हि यादृशशाब्दबोधाभावस्तादृशशाब्दबोधे तत्पदे तत्पदवत्त्वमाकाङ्क्षा। * (न्या० बो० ४। पृ० २०) [ख] यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वम्। (नील० ४। पृ० ३२) (मु०)

५ अत्र कारकपदस्य क्रियापदेन विना 'घटकर्मकमानयनम्' इत्यन्वयबोधजनकत्वाभावात्कारकपदस्य क्रियापदेन सहाकाङ्क्षा। एवं क्रियापदस्य कारकपदेनापि सह बोध्या। (प्र० प्र०) (त० कौ० पृ० १६—१७)

---

* तद्यथा, 'घटम्' इत्यादिस्थले 'अव्यवहितोत्तरत्वादिसंबन्धेन अम्पदं घटपदवत्' इत्याकारकस्य अम्पदविशेष्यकघटपदप्रकारकज्ञानस्य सत्त्वे 'घटीयं कर्मत्वम्' इति बोधो जायते। 'अम् घट' इति विपरीतोच्चारणे तु तादृशज्ञानाभावात्तादृशशाब्दबोधो न जायते, अतस्तादृशाकाङ्क्षाज्ञानं शाब्दबोधे कारणम्। (न्या० बो० ४।पृ० २०)

[ च ] प्रकृतान्वयबोधसमानाकारस्वजन्यान्वयबोधविरहः[1] । ( न्या० म० ४।पृ०२२ )

[ छ ] पदार्थसंसर्गावगमप्रागभावः । ( कु० ३ )

[ ज ] समभिव्याहृतपदस्मारितपदार्थजिज्ञासा । यथा घटमित्युक्ते 'आनय पश्य' इति, आनयेत्युक्ते 'घटं पटं वा' इति जिज्ञासादयः । ( कु० टी० १३ )

[ झ ] एकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छेति शाब्दिका वदन्ति ।

[ ञ ] पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षेति मायावादिनः। ( वेदा० प० ) । आकाङ्क्षा द्विविधा । उत्थाप्याकाङ्क्षा । उत्थिताकाङ्क्षा चेति । ( ख० )

**आकारः**–१ विषयता, निरूप्यनिरूपकभावापन्नतत्तद्विषयता वा । यथा 'अयं घटः' इत्याकारकं ज्ञानमित्यादौ तादृशविषयता । ( वाक्यार्थ० २।पृ० २० ) २ अभेदः (तादात्म्यम्) यथा, इत्याकारकं ज्ञानमित्यादौ । (वाक्यार्थ०) यथा वा 'तथा चायम्' इत्याकार उपनय इत्यादौ (दीधि० पृ० १७०) ३ अभिनयः । उदाहरणं तु पूर्वोक्तमेव ( इत्याकार उपनय इति ) ४ अवयवसंस्थानविशेष इति काव्यज्ञा वदन्ति । ५ सांख्यास्तु, अभेदस्थानीयः पदार्थविशेषः, विषयिताविशेषो वा । यथा यत्संबद्धं सत् तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षमित्यादौ, इत्याहुः । (सां० सू०) ६ वर्णविशेष आकार इति शाब्दिकाः ।

**आकारकत्वम्**–विषयिताविशेषः । यथा 'घटपदात् घटत्वविशिष्टो बोद्धव्यः' इत्याकारकत्वविशिष्टेच्छेत्यादौ । ( म० प्र०४।पृ०३७ )

---

१ अतो 'घटमानयति' इति पदं एकदाऽन्वयबोधे जनिते नान्वयबोधान्तरं जनयति, स्वजन्यान्वयबोधवैधुर्यविरहात् ।

इतः सर्वे स्वरूपसन्तः शाब्दबोधे हेतवः, न तु ज्ञाता इति ज्ञेयम् । (न्या०म०४।पृ०२२)

**आकाशम्**–( द्रव्यम् ) [ क ] संयोगाजन्यजन्यविशेषगुणसमानाधिकरण-विशेषाधिकरणम् । ( सर्व० औलू० पृ० १०६ )

[ ख ] शब्दसमवायिकारणम् ।

---

१ लक्षणं चाकाशत्वमेव। तच्च शब्दसमवायिकारणत्वम् । (त०कौ०१।पृ०७)(मु०१।पृ० ५२) आकाशसत्त्वे प्रमाणमनुमानम् । तच्च [ क ] शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे सति* समवायिकारणवत्त्वाद्यन्नैवं तन्नैवं यथा रूपमिति । (सि०च० १। पृ०९) [ख] यद्यप्याकाशोऽतीन्द्रियस्तथापि विलक्षणशब्दात्मककार्यान्यथानुपपत्त्या स च स्वीकरणीयः । प्र० प्र० ) [ ग ] 'शब्दो गुणः चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यजातिमत्त्वात्स्पर्शवत्' 'शब्दो द्रव्यसमवेतो गुणत्वात्संयोगवत्' इत्यनुमानेन शब्दस्य द्रव्यसमवेतत्वे सिद्धे पृथिव्याद्यष्टसु द्रव्येषु शब्दाधिकरणत्वस्य बाधात् शब्दाधिकरणं नवमं द्रव्यं गगननामकं सिध्यति । ( मु० १। पृ० ८६–८७ ) ( वै० सू० २।१।२७) ( वै० उ० २।१।२७ ) [ घ ] शाब्दिकास्तु, 'इदं नक्षत्रचक्रमत्र तिष्ठति,'† 'अत्रैतदभावः' इति निर्दिष्टवस्तुविषये पृथिव्यादेराधारत्वासंभवेन तदाधारस्यैवाकाशसंज्ञकत्वम्, इत्याहुः । (ल० म० ) [ ङ० ] सांख्यास्तु, निष्क्रमणादिकं कर्म आकाशानुमापकम्, इति‡ आहुः । ( वै० सू० २।१।२० ) ( त० व० पृ० १२८ )

अत्रेदं बोध्यम्–[क] प्रदेशवद्द्रव्यसंयोगात् 'अयमाकाशस्य प्रदेशः' इति व्यवहारो भवति, इति। ( त० व० पृ० १२८ ) [ख] कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् । ( गौ० २।२।१८ )

२ तदन्वयश्च—संयोगाजन्यो यो जन्यविशेषगुणः ( विभागजः शब्दः ) तत्समानाधिकरणो विशेषः (पदार्थप्रभेदः) तदधिकरणत्वमाकाशेऽस्तीति । अत्र, जन्यविशेषगुणः (पाकज–रूपादिः ) तत्समानाधिकरणविशेषाधिकरणे पार्थिवपरमाणावतिव्याप्तिवारणाय संयोगाजन्येति, परमात्मन्यतिव्याप्तिवारणाय जन्येति च विशेषगुणविशेषणम्, इति बोध्यम् ।

---

* अत्र 'द्रव्याश्रितत्वात्' इत्यपि हेत्वन्तरं ज्ञेयम् । ( दि० १। पृ० ८६ )

† तत्रोक्तं हरिणा– आधारशक्तिः प्रथमा सर्वसंयोगिनामयम् । इदमत्रेति भावानामभावानां च कल्प्यते ॥ १ ॥ व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते । कालात्क्रिया विभज्यन्ते आकाशात्सर्वमूर्तयः ॥ २ ॥ एतावानेव भेदोऽयमभेदोपनिबन्धनः, इति ॥ ( वाक्यप० )

‡ निष्क्रमणप्रवेशनाद्युत्क्षेपणधर्मवत्त्वादाकाशसिद्धिरिति सांख्यादयो मन्यन्ते । एतदभिप्रायेण सुश्रुते उक्तम्–अन्तरिक्षात्तु, शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता चेति । वेदान्तिनोऽपि, शब्दः श्रोत्रेन्द्रियं चापि छिद्राणि च विविक्तता । वियतो दर्शिता एते गुणा गुणविचारिभिः, इत्याहुः ( वाच० )

[ग] शब्दगुणकम् । तच्चैकं विभु नित्यं च । तच्च लाघवादेकम्, सर्वत्र कार्योपलम्भाद्विभु, विभुत्वाच्च नित्यम् । तथापि कर्णशष्कुल्यवच्छिन्नं सत् शब्दग्राहकश्रोत्रेन्द्रियात्मकम् । (त० कौ० १।पृ०३) (भा० प० श्लो० ४५–४६ (वै० सू० २।१।२८–३०) आकाशे, षड्गुणास्तिष्ठन्ति । संख्या, परममहत्परिमाणम्, एकपृथक्त्वम्, संयोगः, विभागः, शब्दश्चेति । (वै० सू० २।१।३१) । (भा० प० श्लो० ३३) (त० भा०पृ०३०) (त० कौ०पृ०३) (त० सं०)

**आकुञ्चनम्**–(कर्म) [क] शरीरसंनिकृष्टसंयोगहेतुः कर्म । (त०सं०) (त० कौ० पृ०२०)

[ख] सत्यारम्भकसंयोगेऽप्यन्यसंयोगकारणम् । अङ्गकौटिल्यजनकं कर्माकुञ्चनमुच्यते । (त० व० पृ०२४१)

**आकृतिः**–[क] आकृतिर्जातिलिङ्गाख्या । (गौ० २।२।७०) यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात् । सा च नाना सत्त्वानां तदवयवानां च नियताद्व्यूहादिति । नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गं शिरसा पादेन गामनुमिन्वन्ति । नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति । (वात्स्या० २।२।७०)

[ख] अवयवसंस्थानविशेषः । यथा घटस्य कम्बुग्रीवादिराकृतिः । (गौ० वृ० २।१२४) (दि०४।पृ०१७८)

[ग] रूपक्रियादिविशिष्टमवयवसंस्थानं जातिलिङ्गमेवाकृतिरिति शाब्दिका वदन्ति । आकृतिरेव शक्यार्थ इति केचित् (पतञ्जलिप्रभृतयः) मन्यन्ते । (गौ० २।२।६९) (वाच०)

---

१ अत्र विभुत्वं च [क] परममहत्परिमाणयोगः । (वै०उ० ७।१।२२) (मु० १।पृ० १७) [ख] सर्वमूर्तद्रव्यसंयोगित्वम् । इदमेव सर्वगतत्वमित्युच्यते । (मु० १ । पृ० ५७)

२ लक्षणं च स्वसंनिकृष्टदेशसंयोगजनकक्रियानुकूलक्रियात्वम् । (ल० व० पृ० ३८)

३ वक्रतासंपादकं कर्मेत्यर्थः । (त० दी० पृ० ३९)

४ तदर्थश्च–जातिलिङ्गमित्याख्या । यस्या जातेर्गोत्वादेर्हि सास्नादिसंस्थानविशेषो लिङ्गम् । तस्य परंपरया द्रव्यवृत्तित्वम् । (गौ० वृ० २।१३३) (वाच०)

**आक्षेपः**—१ अर्थापत्तिः । ( न्या० म० ४।पृ०६ ) ( नील० पृ०२८ ) २ समानवित्तिवेद्यत्वमाक्षेप इति गुरवः ( न्या० म० ४।पृ०६ ) ३ आक्षेपश्चानुमानमर्थापत्तिर्वेति भट्टाः । ( ग० शक्ति० )

**आख्या**—संज्ञात्मकं नाम । यथा, पश्चादुमाख्यां सुमुखी जगामेत्यादौ । (कुमा०)

**आख्यातम्**[3]—१ [ क ] कृतिराख्यातार्थः । यथा चैत्रस्तण्डुलं पचतीत्यादौ तिबर्थः ।

[ ख ] क्रियाजनकव्यापारमात्रमिति भट्टमीमांसकाः । (म०प्र०)

[ ग ] उत्पादना, सा चोत्पादककृतेति रत्नकोशकृत् । (चि० ४)

[ घ ] १ कर्ता कर्म चाऽऽख्यातार्थ इति शाब्दिका वदन्ति । ( म० प्र० पृ० ९९ ) २ वर्तमानादिकालः । (म०प्र० पृ० ९९) ३ एकत्वादिसंख्या । ( चि० ४ )

**आगमः**—१ वेद-शास्त्र-मन्त्रादिः । यथा आगमः खल्वपि ब्राह्मणेन निष्का-

---

१ अत्र बहूनां विप्रतिपत्तिरुदाह्रियते—गवादिपदानां गोत्व एव शक्तिः, व्यक्तिलाभस्त्वाक्षेपादिति मीमांसकाः । तत्र, गोत्वं हि स्वाश्रयं विनानुपपन्नमिति तमाक्षिपतीति भट्टाः ।(न्या० म० ४।पृ०६ )( मु० ४।पृ०१७०) (त० दी० ४।पृ०२८) ग० शक्ति०पृ०४१ ) जातिवाचकपदाज्जातिबोधः शाब्दः, व्यक्तिबोधस्त्वौपादानिक*एवेति श्रीकरमतम् । व्यक्तेरपि बोधः शब्दादेव, न त्वाक्षेपादितः । व्यक्तिशाब्दबोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति, लक्षणात एव तदुपपत्तिरिति मण्डनाचार्यमतम् । ( ग० शक्ति० पृ०४६ )

२ अनुमितिरित्यर्थः । ( म० प्र० ४।पृ०३९ )

३ आख्यातत्वं दशलकारसाधारणम् । (लौ०भा०) "तिङ्"प्रत्ययानाम् ' आख्यातम् ' इति संज्ञा । अतोऽत्राख्यातपदेन तिप्, तस्, झि, इत्यादयोऽष्टादश प्रत्यया वैयाकरणसंमता गृह्यन्ते । अत एवाख्यातलक्षणादिप्रपञ्चस्तु 'तिङ्' प्रत्ययव्याख्यानावसरे एव वक्ष्यत इति स तस्मादेव ज्ञातव्यः ।

४ सर्वत्र आख्यातार्थो भावनेति मीमांसकाः । मणिकृतस्तु (गङ्गेशोपाध्यायाः), जानातीत्यादौ यत्नो नाख्यातस्यार्थः, किं तु कालसंख्ये उभे एवेत्याहुः ( न्या० म० ४ । पृ०१९ ) हरिणा तूक्तम्—व्यापारो भावना सैवोत्पादना सैव च क्रिया, इति ।

५ तत्रोक्तम्–सिद्धं सिद्धैः प्रमाणैस्तु हितं चात्र परत्र वा । आगमः शास्त्रमाप्तानामाप्तास्तत्त्वार्थवेदिनः, इति ।

---

* अत्रौपादानिकत्वं च उपादानमत्रार्थापत्तिस्तत्प्रयोज्यत्वम्, जातिकारणत्वं वा । (ग०शक्ति० पृ० ४६ )

रणो धर्मः षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेत्यादौ। (म०भा०) २ प्रत्ययादेशभिन्नत्वे सति साक्षाल्लक्ष्यसंस्कारकतया शास्त्रविहितः प्रकृतिप्रत्ययानुपघातको यः (अट्, इट्, इत्यादिः) स आगम इति शाब्दिका वदन्ति।

**आगमनम्**–१ [क] किंचिद्देशावधिकविभागजनकक्रिया। यथा संवत्सरे व्यतीते तु पुनरागमनाय चेत्यादौ।

[ख] प्रयोक्तृसंनिकृष्टप्रदेशानुयोगिकसंयोगानुकूलव्यापारः। यथा अयं देवदत्तोऽत्रागच्छतीत्यादौ। (ख०) २ प्राप्तिः। यथा, एतत्ते सर्वमाख्यातं वैरस्यागमनं महत्, इत्यादौ। (रामा०) ३ उत्पत्तिः। यथा आगमापायिनो नित्या इत्यादौ। (गीता०) (वाच०)

**आग्नेयी**–(दिक्) उदयगिरिसंनिहिता सुमेरुव्यवहिता च दिक्। (वै० वि०२।२।१०) यथा मुम्बापुरीत आग्नेय्यां दिशि झळकीग्रामः। (ख०)

**आचारः**–१ प्रवृत्तिविषयत्वम्। (मू० म० १। पृ० १०१) यथा, तथैव शिष्टाचारात्, (चि० १। पृ० १००) इत्यादौ। २ क्रिया। ३कृतिः। यथा अलौकिकाविगीतशिष्टाचारविषयत्वमित्यादौ। (दि० १। पृ०९) ४ गुरूक्तस्यार्थस्याङ्गीकरणमाचार इति योगाचारबौद्धा वदन्ति। (सर्व० बौद्ध० पृ०१९)

**आङ्**–(अव्ययम्) १ ईषदर्थः। यथा आताम्रः, आपिङ्गल इत्यादौ। २ अभिव्याप्तिः। यथा, ब्रह्मास्त्या सकलात् इत्यादौ। ३ सीमा। यथा, आ समुद्रक्षितीशानामा नाकरथवर्त्मनामित्यादौ। ४ अभ्यासः। आवृत्तिरित्यादौ। (वाच०)

**आज्ञा**–१[क] यस्या इच्छाया भङ्गे भयं सा। (कु०९) यथा गच्छतु भवान्देशान्तरमिति राजाज्ञा। (ख०)

[ख] वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम्। यथा शूलं विश, विषं भुङ्क्ष्वेत्यादिराजवाक्यस्थलीयलोडर्थः।

---

१ अत्र सदाचारलक्षणमुक्तम्–विद्वेषरागरहिता अनुतिष्ठन्ति यं द्विजाः। विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः, इति। (म० प्र० ३)

[ग] अभिप्रायः । यथा कुर्या इत्यादौ लिङ्र्थः । (कु०टी १ श्लो १२)

[घ] भयजनकेच्छा, लिङादिघटितं वा वाक्यं वा आज्ञेति शाब्दिकाः । (वै० सा० द० ल० पृ० १३१)

[ङ] निकृष्टस्य भृत्यादेः क्रियादौ प्रवृत्त्यर्थव्यापारविशेषः । यथा आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतके तथेत्यादौ, इत्यपि कश्चिद्वक्ति। २ लग्नावधिदशमभाव आज्ञेति ज्योतिःशास्त्रज्ञाः । ३ भ्रूमध्यस्थं सुषुम्नानाड्यन्तर्गतमाज्ञाचक्रमिति तान्त्रिकाः । (वाच०)

**आत्मनेपदम्**–(तिङ्) [क] यङन्तस्य धातोरर्थस्य स्वार्थकर्तृत्वबोधनक्षममाख्यातम् । यथा चैत्रः पापच्यते इत्यादावात्मनेपदम् । (श० प्र० पृ० ११४)

[ख] आत्मगामिफलबोधकस्तिङादिः । यथा, इदमहं संप्रददे इत्यादौ । (स्व०) आत्मनेपदार्थस्तु–१ [क] क्वचित्, कर्मत्वमात्मनेपदार्थः । यथा कर्मत्वं च गम्यते ग्रामः, त्यज्यते ग्राम इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगवि-

---

१ अत्रेदं बोध्यम्–परस्मै–आत्मने एतदुभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्रात्मनेपदम्, यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु । तत्र सूत्रं प्रमाणम्–"स्वरितञितः कर्त्रभिप्राये क्रियाफले" (पा० सू० १ । ३ । ७२) इति । तदर्थश्च [क] 'कर्तारमभिप्रैति संबध्नाति' इति व्युत्पत्त्या कर्तृसंबन्धे क्रियाफल एवात्मनेपदम् इति । तदनुसृत्यैव दानादिस्थले स्वगते फले 'ददे' इत्येवम्, परगते तु 'ददानि' इत्येवं वाक्यं प्रयुञ्जते वृद्धाः । [ख] चिन्तामणिकृतस्तु (गङ्गेशोपाध्यायाः), यत्र क्रियाफले कर्तुरभिप्राय इच्छा तत्रैवात्मनेपदम्, इति । तेन याजकाद्यैर्दक्षिणादिलाभेच्छयैव यागादिकरणे 'यजन्ति याजकाः, पठन्ति पाठकाः' इति परस्मैपदम् । परगतस्याऽपि यागादिफलस्येच्छया तत्करणे तु 'यजन्ते याजकाः' इत्यादिकः साधुरेव प्रयोगः । अत एव 'पितृस्वर्गकामः पुष्करिण्या यजेत' इत्यादावप्यात्मनेपदम्, 'धनकामो गणपतिम्, मोक्षकामोऽर्चयेच्छङ्करम्' इत्यादौ च परस्मैपदं संगच्छते इत्याहुः । (श० प्र० पृ० १४५)

२ पापच्यते इत्यादिकमेव पौनःपुन्यविशिष्टस्य पाकादेः कर्तृत्वं बोधयति । ननु, पापच्यति इत्यादिकम्, इति ज्ञेयम् । (श० प्र० पृ० १४४)

३ चैत्रेण गम्यते ग्राम इत्यत्र तृतीयार्थः तत्कर्तृत्वरूपमाधेयत्वम्, तस्य धात्वर्थे संयोगात्मकफलावच्छिन्ने स्पन्दलक्षणे व्यापारेऽन्वयः, तस्य च जन्यतासंबन्धेनात्मनेपदार्थसंयोगरूपफले, तस्य चाश्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वय इति 'चैत्रवृत्तिर्यः संयो-

भागादिरेव विशेष्यतया तिङ्वाच्यः । [ ख ] आत्मनेपदार्थः कर्मेति शाब्दिका वदन्ति । २ क्वचित्, कर्तृत्वम् । यथा ऋत्विग्यजत इत्यादौ । ( ग० व्यु० ल० पृ० १३० )

**आत्मा**—( द्रव्यम् ) [ क ] आत्मत्वसामान्यवान् । (त०कौ० १। पृ०३) [ ख ] ज्ञानाधिकरणम् । (त०सं०) यथा “आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः” इत्यादिश्रुतौ । आत्मा द्विविधः । जीवात्मा, परमात्मा चेति । तत्राद्यः—प्रतिशरीरं भिन्नो विभुर्नित्यश्च, कर्ता भोक्ता च । द्वितीयः—ईश्वरः सर्वज्ञः एक एव । (त० सं०) (त० कौ०) आत्मा चाप्रत्यक्ष एवेति वैशेषिकाः । ( वै० ८।१।२ ) नैयायिकास्तु,

---

गावच्छिन्नस्पन्दः, तज्जन्यसंयोगवान् ग्रामः’ इत्याकारकः शाब्दबोधः । चैत्रेण त्यज्यते ग्राम इत्यत्र संयोगस्थाने विभागमन्तर्भाव्य बोध उपपादनीयः । (ग० व्यु० ल० पृ० १३० )

१ लक्षणं च [ क ] आत्मत्वमेव । तच्च अमूर्तसमवेतद्रव्यत्वापरजातिः । ( सर्व० औलू० पृ० १०६ ) [ ख ] समवायेन ज्ञानेच्छादिमत्त्वम् । (वाक्य० पृ० ५ )

२ अत्र बहवो विप्रतिपद्यन्ते । तथाहि—देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जनाः, लोकायतिकाश्च प्रतिपन्नाः । इन्द्रियाण्येव चेतनान्यात्मेत्यपरे चार्वाकैकदेशिनः । मन एवात्मेत्यन्ये चार्वाकाः । मुख्यः प्राण एवात्मेतीतरे चार्वाकाः । पुत्र एवात्मेति केचित् । देहातिरिक्तदेहपरिमाण आत्मेति दिगम्बरा आर्हताश्च । शून्यमेवात्मेति माध्यमिकाः । क्षणिकं विज्ञानमेवात्मेति योगाचाराः । ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मेति सौत्रान्तिकाः । क्षणिकबाह्यार्थ एवात्मेति क्षणभङ्गुरवादिनो वैभाषिकाः । अव्यापक इति जैनाः । अस्ति देहादिव्यतिरिक्तः संसारी कर्ता भोक्तेति तार्किकाः । प्रकाश्य इति नैयायिकाः । भोक्तैव केवलम्, न कर्तेति सांख्याः । अस्ति तद्व्यतिरिक्त ईश्वरः सर्वज्ञः सर्वशक्तिरिति योगिनः । आत्मा स भोक्तुरिति मायावादिनः । अणुक्षेत्रज्ञादिपदवेदनीय इति शैवाः । (सि० च० १। पृ० १२–१४ )

३ तत्र प्रमाणं श्रुतिः—सा च ‘द्वे ब्रह्मणी वेदितव्ये, परं चापरमेव च’ इति । ‘तमेवं विदित्वाऽतिमृत्युमेति’ इति च ( म० प्र० पृ० ३ )

४ तत्र प्रमाणम्—गुणविशिष्टमात्मान्तरमीश्वरः, इति ( वात्स्या० ४ । १ । २१ )

५ किंतु आत्मा अनुमानगम्य एव । तच्चानुमानम्, ‘करणव्यापारः सकर्तृकः करणव्यापारत्वात् छिदिक्रियायां वास्यादिव्यापारवत्’ इति करणव्यापारेण कर्तुरनुमानगम्यत्वे तत्साजात्यात् ‘ज्ञानक्रियाकरणमपि सकर्तृकं करणत्वात्’ इति चक्षुरादिना ज्ञानसाधनेनात्मनोऽनुमानम् । ( वाच० )

तत्र जीवात्मैव मानसप्रत्यक्षविषय इति प्राहुः । ( भा० प० श्लो० ९०-९१ ) अन्यत्सर्वं जीवात्म-परमात्म-शब्दव्याख्यानावसरे व्यक्तीभविष्यति ।

**आत्माश्रयः**— ( तर्कः ) [ क ] स्वस्य स्वापेक्षापादकः प्रसङ्गः । ( जग० तर्क० ) यथा कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वं साधारणकारणत्वमित्यादौ । ( स्व० )

[ ख ] स्वस्य स्वापेक्षितत्वेऽनिष्टप्रसङ्गः ( दोषः ) । स चोत्पत्ति-स्थिति-ज्ञप्तिद्वारा त्रेधा । क्रमेण यथा—'यद्ययं घट एतद्घटजन्यः स्यात्तदैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यात् ', 'यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात्', 'यद्ययं घट एतद्घटज्ञानाभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यात्, एतद्घटभिन्नः स्यादिति वा' सर्वत्रापाद्यम् । (गौ०वृ० १।३९)

[ ग ] स्वज्ञाने स्वज्ञानापेक्षया आत्माश्रयः । ( कृष्ण. )

**आदिः**—१ तत्प्रागभावाधिकरणकालः । (स्व०) यथा, आदौ द्रव्यं स्वीकुरु इत्यादौ । यथा वा, आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते इत्यादौ । २ कारणम् । यथा "आदिमत्त्वादैन्द्रियकत्वात्कृतकवदुपचाराच्च" (गौ० २।२।१४) इत्यादौ । ३ उत्पत्तिः । यथा अनादिः प्रागभाव इत्यादौ । ४ परस्मिन्सति यस्मात्पूर्वो नास्ति स आदिरिति शाब्दिका वदन्ति ।

**आदेशः**—१ आज्ञा । २ स्थान्यर्थाभिधानसमर्थ इति शाब्दिका वदन्ति । ३ कथनम्, उपदेशो वा । यथा " अथात आदेशः " इत्यादौ, इति वेदान्तिन आहुः ।

**आधारता**—अधिकरणतावदस्यार्थोऽनुसंधेयः ।

**आधिक्यम्**—व्यतिरेकवदस्याऽर्थोऽनुसंधेयः । ( श० प्र० पृ० १२८ )

---

१ अत्र, एकं कार्यत्वमवच्छेदकम्, अपरं त्ववच्छेद्यम् । तथा च अवच्छेदकज्ञानं विना अवच्छेद्यज्ञानं न भवति, अवच्छेद्यज्ञानं विनाप्यवच्छेदकज्ञानं न भवति च, परस्परसापेक्षत्वादिसात्माश्रय इति बोध्यम् ।

२ अत्र 'आदीयतेऽस्मात्' इति व्युत्पत्तिर्द्रष्टव्या । ( वात्स्या० २।२।१४ )

**आधिदैविकम्**[१]–दैवकृतम् । (ख०) यथा वातादिनिबन्धनं दुःखम् । (वाच०)

**आधुनिकी**–(लक्षणा) पूर्वपूर्वं ताद्रूप्येणाप्रत्यायकत्वादाधुनिकी । यथा घटत्वादिना पटादिपदस्य लक्षणा । (श० प्र० पृ० ३१)

**आधेयता**–[क] 'आधेयम्' इति प्रतीतिनियामको धर्मविशेषः (वृत्तित्वम्) । यथा भूतलं घटवदित्यादौ घटे भूतलाधेयता । (ख०)

[ख] प्रकारताविशेष इति केचिद्वदन्ति । (ग० पक्ष०)

[ग] अखण्डोपाधिरित्यन्ये वदन्ति ।

**आध्यात्मिकवायुः**[२]–प्राणाख्यो वायुः । यथा वृक्षादीनां शरीरत्वे आध्यात्मिकवायुसंबन्धः प्रमाणमित्यादौ । (मु० १ । पृ० ७१)

**आनन्तर्यम्**–१ ध्वंसाधिकरणकालवृत्तित्वम् । (त० प्र० २) यथा वैशाखमासस्य चैत्रानन्तर्यम् । यथा वा, 'अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते' इत्यादावथशब्दार्थोऽवयवान्तनिरूपणानन्तर्यं हेत्वाभासनिरूपणे बोध्यते । (ख०) २ अव्यवधानम् । यथा आनन्तर्यात्त्वयोन्यास्तु तथा बाह्येष्वपि क्रमात् (मनुः) इत्यादौ । (वाच०)

**आनन्दः**–१ सुखम् । यथा "रसो वै सः । रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्यादौ । (ब्रह्मोप०) २ दुःखाभावः[३] । यथा परमात्मन्यानन्दानङ्गीकारपक्षेऽपि "भारापगमे सुखी संवृत्तः" इत्यादाविव दुःखाभावरूप आनन्दः । (मु० १ । पृ० १०३)

**आनुपूर्वी**–तदुत्तरत्वविशिष्टतदुत्तरत्वादिः । यथा घटमानयेत्यक्षराणामानुपूर्वी । यथा वा, उचितानुपूर्वी प्रतिज्ञोत्तरहेतूत्तरोदाहरणोत्तरोपनयोत्तरनिगमनत्वरूपेत्यादौ । (ग० अव० पत्र० ४)

---

१ अत्र 'देवान् (वातादीन्) अधिकृत्य प्रवृत्तम्' इति व्युत्पत्तिर्द्रष्टव्या ।

२ अत्र 'आत्मानं मनः शरीरादिकमधिकृत्य' इति व्युत्पत्तिर्द्रष्टव्या । अयं च विषयवायावन्तर्भवति, इति विज्ञेयम् ।

३ अत्र, आनन्दशब्दो लक्षणया दुःखाभावबोधक इति ज्ञेयम् ।

**आनुषङ्गिकम्**[1]—उद्देश्यान्तरप्रवृत्तस्य तत्कर्मनान्तरीयकतया प्राप्तः प्रासङ्गिकोऽनुद्देश्यः कार्यविशेषः । यथा भो बटो ! भिक्षामट, यदि गां पश्येस्तां चानयेत्यादौ ।

**आन्वीक्षिकी**[2]—प्रत्यक्षागमाश्रितमनुमानं साऽन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी । न्यायविद्या[3], न्यायशास्त्रम् । (वात्स्या० १।१।१) यथा महर्षिगौतमप्रणीतं न्यायदर्शनम् । (स्व०)

**आपः**[4]—(द्रव्यम्) [क] रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धाः । (वै०२।१।२) [ख] अप्त्वसामान्ययुक्ताः[5] । (त०भा० पृ०२७) (त०कौ० १। पृ०२) यथा, आपः स्वभावतो मेध्याः किं पुनर्वह्नियोगत इत्यादौ । (स्व०) [ग] शीतस्पर्शवत्यः । (वै० २।२।५) (त०सं०) आपो द्विविधाः । नित्याः, अनित्याश्च । तत्र नित्याः परमाणुरूपाः । अनित्यास्तु कार्यरूपाः । अनित्यास्त्रिविधाः । शरीरम्, इन्द्रियम्, विषयश्च । तत्र शरीरमयोनिजं वरुणलोके प्रसिद्धम् । इन्द्रियम् रसग्राहकं रसनम्, तच्च जिह्वाग्रवर्ति । विषयः

---

१ अत्र, भिक्षार्थं प्रवृत्तस्य दैवात् गोदर्शनात्तस्या आनयनमानुषङ्गिकम्, तत्रोद्देश्यत्वाभावादिति बोध्यम् । (वाच०)

२ अत्र व्युत्पत्तिः [क] प्रत्यक्षागमाभ्यामीक्षितस्य अनु ईक्षणमन्वीक्षा, तथा प्रवर्तत इत्यान्वीक्षिकी (वात्स्या० १।१।१) [ख] श्रवणात् अनु (पश्चात्) ईक्षा अन्वीक्षा (उन्नयनम्), तन्निर्वाहिका आन्वीक्षिकी इति । (गौ० वृ० १।१।१)

३ एतस्या विद्यायाः प्रमाण-प्रयोजनादिकं तु 'न्याय' शब्दव्याख्यानावसरे संपादितमिस्यत्रैव विरम्यते ।

४ तल्लक्षणं च [क] अभास्वरशुक्लेतररूपासमानाधिकरणा (नैमित्तिकद्रवत्ववदवृत्तिर्वा) रूपवद्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या च या जातिः (जलत्वम्) तद्वत्त्वम्, इत्यादि । (वै० उ० २।१।२) (मु० १। पृ० ७४) [ख] नीलासमानाधिकरणा भास्वरशुक्लासमानाधिकरणा रूपवद्वृत्तिर्द्रव्यत्वसाक्षाद्व्याप्या च या जातिः (जलत्वम्) तद्वत्त्वम्, इत्यादि । (वै० वि० २।१।२) [ग] शीतस्पर्शसमानाधिकरणा द्रव्यत्वापरा च या जातिः (जलत्वम्) तद्वत्त्वम् । (त० दी० १। पृ० ८)

५ अत्र, अप्त्वसामान्यं च सरित्सागरसमवेतत्वे सति सलिलसमवेतसामान्यम् । (सर्व० औलू० पृ० १०६)

सरित्समुद्रादिर्हिमकरकादिश्च[1] । (त० सं०) (भा० प० श्लो० ४१) (त० भा० पृ० २७) (त० कौ० १ । पृ० २) अप्सु चतुर्दश गुणा वर्तन्ते । अभास्वरं शुक्लरूपम्, मधुरो रसः, शीतः स्पर्शः, संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, गुरुत्वम्, सांसिद्धिकं द्रवत्वम्, स्नेहः, वेगश्चेति । स्थितिस्थापकाख्यसंस्कारोपि जले वर्तत इति केचित् । ( त० कौ० १ । पृ० २ ) ( त० भा० पृ० २७ ) (भा० प० श्लो० ३१)

---

१ अत्रेदं बोध्यम्— हिमकरकादीनां सांसिद्धिकं द्रवत्वमस्त्येव, परंतु [ क ] तेषामदृष्टविशेषेण घनीभावात्सांसिद्धिकद्रवत्वप्रतिबन्धमात्रं कल्प्यत इति विज्ञेयम् । ( मु० ) (सि० च०) [ख] दिव्यतेजःसंयोगात्तु तत्र द्रवत्वप्रतिरोधः । काठिन्यप्रतीतिस्तु तत्र भ्रान्तिरेव । [ ग ] केचित्तु, दिव्यतेजःसंयोगाज्जलपरमाणुभ्यां द्व्यणुकम्, तैश्च त्रसरेण्वादिकं क्रमेण हिमादौ जायते, तादृशद्व्यणुकादिकं च द्रवत्वरहितं कठिनमेवेति हिमादौ काठिन्यप्रतीतिर्न भ्रान्तिरित्याहुः । (वै० वि० २।१। २) तत्र करकाया उपत्तिकारणं तज्जन्यगुणाश्च भावप्रकाशे दर्शिताः, यथा—दिव्यवाय्वग्निसंयोगात्संहताः खात्पतन्ति याः । पाषाणखण्डवच्चापस्ताः कारक्योऽमृतोपमाः ॥ करकाजं जलं रूक्षं विशदं गुरु सुस्थिरम् । दारुणं शीतलं सान्द्रं पित्तहृत् कफवातकृत्, इति । ( वाच० )

२ अत्राभास्वरं च पराप्रकाशकम् । (प० मा०) वियति विक्षेपे जले धवलिमोपलब्धेर्जले शुक्लरूपमेव । (मु० १। पृ० ७५) यदि तु वियति विक्षिप्तजले उपलभ्यमानो धवलिमा तेजोगत एव तत्र भासत इत्युच्येत तदा घटगतरूपमपि तेजोगतमेव किं न स्यात् ? इति । (स्व०) कालिन्दीजलादौ नीलिमोपलब्धिस्त्वाश्रयौपाधिकी भ्रान्तिरेवेति ( मु० १। पत्र० ७५ )

यद्यपि जले कोऽपि रसो नानुभूयते तथापि हरीतक्यादिकषायद्रव्यभक्षणानन्तरं जलमाधुर्यमनुभूयत एव, तस्य तद्व्यञ्जकत्वात् । न च, जलसंयोगात् हरीतक्यादावेव माधुर्योत्पत्तिरिति वाच्यम् । पात्रस्थहरीतक्यादावपि जलसंयोगेन मधुरिमोत्पत्त्यापत्तेः । हरीतक्यां चामलक्यामिव कषाय एव रसोऽनुभूयते च । कर्कटीभक्षणानन्तरं—जलस्य या तिक्ततोपलब्धिः सा कर्कट्या एव, जलमन्तरेणापि तद्ग्रहात् । जम्बीररसादावम्लोपलब्धिः, करवेल्ल-(करवीर-) रसादौ तिक्तत्वोपलब्धिश्च एतेन व्याख्याता ।

सूरकरादिसंयोगाज्जले यदुष्णस्पर्शः प्रतीयते सोऽपि सूरकरादेरेव ।

स्नेहस्तु जले एव । घृतादावपि तदुपष्टम्भकजलस्यैव स्नेहः । स्नेहप्रकर्षाच्च (तादृशस्नेहस्योत्कृष्टत्वेन ) घृतादेर्दहनानुकूलत्वम् ।

सक्तुसिकतादौ पिण्डीभावः संग्रहनामकः संयोगविशेषो द्रवत्वस्नेहकारित एव, इति । (वै० वि० २।१।२ ) (वै० उ० २।१।२ ) ( मु० १। पृ० ७५ )

आपो वायुविशेषा एव, न तु द्रव्यान्तरमित्याधुनिका हूणविद्याविशारदा वदन्ति । तन्न सह्यते नैयायिकैरित्यलं तदुपपत्तिदोषोपन्यासेन । (स्व०)

**आप्तः**[1]**–** [क] आप्तः खलु साक्षात्कृतधर्मा । ऋष्यार्यम्लेच्छानां समानं लक्षणम् । तथा च सर्वेषां व्यवहाराः प्रवर्तन्त इति । (वात्स्या० १।१।७)

[ख] प्रकृतवाक्यार्थयथार्थज्ञानवान् । (गौ० वृ० १।७) यथा आप्तोपदेशः शब्दः (प्रमाणशब्दः) इत्यादावाप्तः । (गौ० १।१।७)

[ग] यथाभूतस्याबाधितार्थस्योपदेष्टा पुरुषः । (त० भा० पृ० १७) (प्र० प्र०) (सि० च० ४। पृ० ३०)

[घ] यथार्थवक्ता । (त० सं० ४) यथा सत्यवतीसुतव्यास-गौतमादिराप्तः । (स्व०)

[ङ] अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् । रागादिवशादपि नान्यथावादी यः स आप्तः, इति चरके पतञ्जलिः । (ल० म० पत्र. २)

**आप्तोपदेशः–** (प्रमाणशब्दः) [क] यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः (शब्दः) । (वात्स्या० १।१।७)

[ख] प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्दः । (गौ० वृ० १।१।७) यथा ब्रह्मसूत्र–न्यायसूत्रादिराप्तोपदेशः । (स्व०)

**आभासः**[2]**–** (निग्रहस्थानम्) व्यभिचारादावसिद्ध्याद्युद्भावनम् । (गौ०वृ० ५।६९) यथा पर्वतो धूमवान्वह्नेरित्यादौ वह्निः स्वरूपासिद्धः स्यादिति । (स्व०)

**आभासः–** १ योऽप्रमाजनकः सः । (ग० बाध० ५–६) यथा 'तत्प्रयुक्तं सामान्यतो दृष्टस्याप्याभासत्वमिति बाधस्यासाङ्कर्यात्' (चि० २। पृ० १०९) इत्यादावाभासः । २ प्रतिकूलः, विरुद्धो वा । यथा तर्काभासः, प्रमाणाभासः, न्यायाभासः, इत्यादौ । (कु० ५।३) (वात्स्या० १।१।१)

---

१ साक्षात्करणमाप्तिस्तया प्रवर्तत इत्याप्त इत्यर्थः । (वात्स्या० १।१।७) अत्राप्तत्वं च प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् । (न्या० बो० ४। पृ० १९)

२ निरनुयोज्यानुयोगप्रभेदोऽयमिति विज्ञेयम् । (गौ० वृ० ५।६५)

(त०कौ०पृ० ६) ३ भ्रमः । यथा शुक्तौ रजताभास इत्यादौ । ४ ज्ञानविषयः । यथा हेत्वाभास[1] इत्यादौ हेतुदोषः । (स्व०) ५ उपाधितुल्यतया भासमानं प्रतिबिम्बम्[2] आभास इति मायावादिन आहुः ।

**आमन्त्रितत्वम्**—स्व[3]कर्तव्यत्वप्रकारकधीजनकं प्रत्याख्यानार्हं[4] यत् वाक्यं[5] तत्प्रतिपाद्यत्वम् । यथा पुत्रोत्सवे भवान् भुञ्जीत[6]इत्यादौ लिङर्थः । (श०प्र० पृ० १५६) वैयाकरणास्तु, आमन्त्रणं कामचारानुज्ञा । तदर्थश्च १ [क] स्वेच्छया प्रवृत्तस्येतरत्र प्रवृत्तिप्रतिबन्धफलकस्वाभिलषितविषयकप्रवृत्त्यनुकूलो व्यापारः ।

[ख] स्वाभिलषिते कामचारेण प्रवृत्तस्येष्टसाधनताबोधनम् । यथा इहासीते[7]ति । २ अनुज्ञातुः प्रवृत्तप्रयोजनस्येतरप्रवृत्तिप्रतिबन्धनैतत्प्रवृत्तिविषये इष्टसाधनताबोधनम् । यथा आरब्धं कुरुत, तत्कुरुष्व यथाहितमित्यादावामन्त्रणं लिङर्थः, इत्याहुः । (वै०सा०द०पृ० १३१–१३२)

**आम्नायः**—१ सम्य[8]गभ्यासः । २ सम्यक् पाठः । ३ वेदः ।

---

१ अत्र, हेतावाभासत इति व्युत्पत्त्या आभासपदं हेतुनिष्ठदोषपरम्, इति ज्ञेयम् । (न्या० र० सामा०)

२ तत्रोक्तम्—बुद्धिवृत्तिचिदाभासौ द्वावेतौ व्याप्नुतो घटम् । तत्राज्ञानं धिया नश्येदाभासात्तु घटः स्फुरेत्, इति । (वाच०)

३ अत्र स्वपदं निरुक्तप्रतिपाद्यत्वाभिमतभवदादिपरम् । (श० प्र० पृ० १५६)

४ वाक्ये प्रत्याख्यानार्हत्वं च प्रत्यवायाजनकप्रत्याख्यानकत्वम्, यत्प्रत्याख्याने कामचारस्तत् (वाक्यम्) आमन्त्रणमिति स्मृतेः । (श० प्र० पृ० १५६)

५ तादृशं वाक्यं च 'भवताऽत्र भोक्तव्यम्' इत्यामन्त्रणरूपम् । तत्प्रतिपाद्यो भवदादिः, इति विज्ञेयम् ।

६ अत्र, लिङर्थामन्त्रितत्वैकदेशे स्वकर्तव्यत्वबोधे धात्वर्थो विशेष्यकत्वेनान्वेति । तथा च 'पुत्रोत्सवनिमित्तकभोजनधर्मिकस्वकर्तव्यत्वधीजनकवाक्यप्रतिपाद्यो भवान्' इत्याकारो बोधः । (स्व०) एवम्,–बाले युद्धात्त्वरयेस्त्वम्, जलाद्धिमं समुद्धरेः इत्यादावप्युक्तरीत्यैवान्वयो द्रष्टव्यः । (श० प्र० १५६)

७ अत्र, उपवेशनादिव्यापारे इष्टसाधनताज्ञानात्प्रवृत्तावितरत्राप्रवृत्तिरर्थतः फलति, इति बोध्यम् (वै० सा० द० पृ० १३१)

८ अत्र सम्यक्त्वं च नियमधारणपूर्वकत्वम्, गुरुमुखश्रवणपूर्वकत्वं चेति बोध्यम् (वाच०)

**आयतनम्**–१ अवच्छेदकम्। (नील० पृ० ७) यथा आत्मनो भोगायतनं शरीरमित्यादौ। २ प्रतिमेति वैदिका वदन्ति। यथा देवतायतनानि हसन्ति रुदन्तीत्याद्याथर्वणश्रुतौ। ३ आश्रयः स्थानं वेति बौद्धकाव्यज्ञा आहुः।

**आयोजनम्**–१ कर्म। यथा, कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेरित्यादौ। (कु० ५।१) (दि० १। पृ० १९) २ व्याख्यानम्। यथा, वेदास्तदर्थविद्व्याख्याताः, महाजनपरिगृहीतवाक्यत्वादित्यादौ। (कु० ५।९)

**आरब्धकर्म**–१ तत्सामग्रीसंपादनम्। ( मू० म० १। पृ० २४ ) यथा घटादिस्थले दण्डचक्रादिरूपसामग्रीसंपादनम्। ( स्व० ) २ [ **क** ] चरमवर्णसमूहो ग्रन्थः। ( मू० म० १। पृ० २३ ) यथा ग्रन्थस्थले ' तच्चेदम् ( मङ्गलम् ) आरब्धकर्माङ्गम्, कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात् प्रयाजादिवत् ' ( चि० १। पृ० १९ ) इत्यादावारब्धकर्म।

[ **ख** ] केचित्तु, कण्ठताल्वाद्यभिघात–दृष्टप्रतिबन्धकाभावादिरेवारब्धकर्मेत्याहुः।

[ **ग** ] अन्ये तु, चरमवर्णपर्यन्तवर्णसमूहरूपो ग्रन्थ एवारब्धकर्मेत्याहुः। (मू० म० १। पृ० २४) ३ वेदान्तिनस्तु, फलदानाय संमुखः पुण्यपापान्यतरात्मकोऽदृष्टविशेषः। यथा, प्रारब्धकर्मणो भोगादेव परिक्षय इत्यादौ प्रारब्धकर्म, इति वदन्ति। ( स्व० )

**आरम्भः**–१ आद्यप्रवृत्तिः। (प्र०प्र० १। पृ० २)। यथा, अथेदमारभ्यत इत्यादावारम्भः। ( स्व० ) २ अप्रवृत्तस्य आद्या प्रवृत्तिः। यथा सृष्ट्यारम्भः। ३ कर्तव्यकर्मचिकीर्षेति मीमांसकाः। ( मू० म० १ ) ४ औत्सुक्यमारम्भ इति नाटकालंकारज्ञा वदन्ति।

**आराधनम्**–[ **क** ] गौरवितनिष्ठप्रीतिहेतुभूता क्रिया। ( त० प्र० २ ) ( ग० शक्ति० )

---

१ इदं जैमिनीयं लक्षणम्। ( म० प्र० १। पृ० २ )

२ तदुक्तं प्रतापरुद्रे–औत्सुक्यमात्रमारम्भः परिरम्भाय भूयसे, इति।

३ अत्र गौरवितवृत्तित्वमुपलक्षणम्। ( कृष्ण० श० ) तत्र गौरवं स्वाराध्यत्वावगाही ज्ञानप्रभेदः, अयं (पूर्वोक्तज्ञानप्रभेदः) भक्तिरित्युच्यते। ( श० प्र० पृ० ९५ )

[ ख ] गौरवितप्रीतिहेतुक्रिया । ( कि० व० ४ )

[ ग ] गौरवप्रयुक्तप्रीत्य[1]वच्छिन्नक्रिया[2] । यथा, पितरमाराधयति, उपास्ते, पूजयतीत्या[3]दौ धात्वर्थः । (श० प्र० पृ० ९९ )

**आरोपः**—भ्रमवदस्यार्थोऽनुसंधेयः ।

**आलस्यम्**—१ कृतेरभावः । ( सि० च० १। पृ० ३ ) २ आलस्यं गुणविशेष इति केचिदाहुः ।

**आलोकः**—१ सूर्यादितेजःप्रकाशः । यथा, गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोरित्यादौ । ( भा० प० श्लो० ५६ ) २ दर्शनम् । यथा, यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतामित्यादौ । ( शाकु० )

**आलोचनम्**—१ विशेषधर्मादिना विवेचनम् । २ चाक्षुषज्ञानम् । ३ सांख्यास्तु, सामान्यविशेषशून्यतया इन्द्रियजन्यो निर्विकल्पकस्थानीयोऽन्तःकरणवृत्तिविशेष इत्याहुः । ( वाच० )

**आवरणम्**—१ प्राप्तिप्रतिषेधः । (वात्स्या० १।२।४९) २ अविद्येति मायावादिनो जगुः । ३ बाह्यं तम इति माध्वाः । ४ आच्छादनमिति काव्यज्ञाः ।

**आवापः**—१ आनयनम् । २ आक्षेप इति केचित् । यथा, 'घटं नय, गामानय' इत्यावापोद्वापाभ्यामित्यादौ । ३ प्रधानहोम आवाप इति याज्ञिका आहुः । ( वाच० )

**आविर्भावः**—१उत्पत्तिः । यथा मृदो [4]घटस्याविर्भावः । २ सांख्यास्तु, प्रका-

---

१ अत्रेदं बोध्यम्— परमात्मानमाराधयतीत्यादौ तु गौरवप्रयुक्तक्रियामात्रमाराधनम् ( तदेव लक्षणया धात्वर्थः) । तेन न, परमात्मनः प्रीतिविरहात्स्योग्यत्वापत्तिः । (श०प्र०पृ० ९५)

२ अत्रायं विशेषो ज्ञेयः— पित्रादिसेवायाश्च मन्त्रकरणकत्वाभावान्न तत्र 'पितरं यजते' इत्यादिकः प्रयोगः । ( श० प्र० पृ० ९५ )

३ अत्र, धात्वर्थनिविष्टयोर्गौरवप्रीत्योः क्रमेण विषयत्वाधेयत्वाभ्यां पित्रादेरन्वयः । तेन 'पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया तद्वान्' इत्येवं बुद्धिः ( श०प्र०पृ०९५ )

४ अत्र सांख्या मायावादिवेदान्तिनश्चाहुः,—एकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते । न पुनरसतामुत्पादः सतां वा निरोधः, इति । नैयायिकास्तु, क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदात् कार्यस्य कारणाद्भिन्नतया कारणादुत्पत्तिरिति प्राहुः । ( सां० कौ० ) ( वाच० )

शात्मिकाऽभिव्यक्तिराविर्भावः । यथा कूर्मशरीरादङ्गानामाविर्भाव इत्याहुः। ( वाच० )

**आवृत्तिः**–१ पुनः पुनरभ्यासः । यथा 'आवृत्तिरसकृदुपदेशात्' (ब्र० सू० ४।१।१) इत्यादौ श्रोतव्यो मन्तव्य इति श्रवणादीनामावृत्तिः । २ भूय एकजातीयक्रियाकरणम् । यथा, आवृत्तिः सर्वशास्त्राणां बोधादपि गरीयसी (उद्भटः) इत्यादौ । ३ स्वस्थानस्थितस्य (पदस्य) पुनरनुसंधानम् । ( दि० ४। पृ० १८८ ) यथा 'हलन्त्यम्' ( १।३।३ ) इति पाणिनिसूत्रस्यान्योन्याश्रयदोषवारणाय पुनरनुसंधानम् ।

**आशंसनम्**–आशीर्वादस्यार्थोऽनुसंधेयः ।

**आशीः**–[ क ] वक्त्रिच्छाविषयत्वम् । यथा 'घटमानय' इत्यादौ लिङ्र्थः । ( तर्का० ४। पृ० १४ ) यथा वा, आयुराशास्तेयं यजमानोऽसौ ( तैत्तिरीयब्राह्मणे । ३।५।१० ) इत्यादावाङ्पूर्वकशासूधात्वर्थः ।

[ ख ] शाब्दिकास्तु, हितविषयिका लोडाद्यन्तशब्दप्रयोक्त्रिच्छा । यथा भवतु ते शिवप्रसाद इत्यादौ लोडर्थः, इत्याहुः । (वै०सा०द०पृ० १२९)

[ ग ] इष्टार्थाविष्करणमिति कश्चिद्वक्ति । यथा 'यां वै कांचन यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा, (शत० ब्रा० १।३।१।२६) इत्यादौ । ( वाच० )

**आशीर्लिङ्**–( लिङ् ) या आशंसनस्य भावित्वस्य च बोधिका तिङ्, सा आशीर्लिङुच्यते । यथा भूयात् भूयास्तामित्यादावाशीर्लिङ् । ( श० प्र० पृ० १६२ )

---

१ अत्र 'घटकर्मकमदिच्छाविषयानयनानुकूलकृतिमांस्त्वम्' इत्यर्थः । तर्का० ४ । पृ० १४ )

२ अत्र 'हितविषयकमदिच्छाविषयो यस्त्वत्संबन्धिशिवप्रसादस्तत्कर्तृकं भवनम्' इति बोधः । ( वै० सा० द० पृ०१२९ )

३ तेन, जीवतु भवानित्यादौ तु तुबादिकं आशंसनीयत्वस्य बोधकमपि, न भावित्वस्य। भावित्वस्य बोधकोऽपि लडादिर्नाशंसनीयत्वस्य बोधकः,इति न तत्र (लोट्लडादौ) अतिप्रसङ्गः ।

४ अत्र च, अष्टादशैवाशीर्लिङः प्रकृत्यर्थस्याशंसां भावित्वं चानुभावयन्तीति लक्षणसमन्वयो बोध्यः ( श० प्र० पृ० १६२ ) ·

**आश्रयत्वम्**–अधिकरणतावदस्यार्थोऽनुसंधेयः ।

**आश्रयासिद्धः**[1]–( हेत्वाभासः ) [ क ] यस्य हेतोराश्रयो[२] नावगम्यते सः । [ ख ] यस्य हेतोः पक्षोऽप्रसिद्धः सः । स च (आश्रयासिद्धः) पक्षतावच्छेदकाभाववत्पक्षकः । यथा गगनारविन्दं[३] सुरभ्यरविन्दत्वात्सरोजारविन्दवदित्यत्रारविन्दत्वमाश्रयासिद्धम् । (त०सं०) (प्र० प्र०) ( त०कौ० २ । पृ० १४ ) ( त० भा० पृ० ४९ )

**आश्रयासिद्धिः**[४]–( हेतुदोषः) ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपम् ( दीधि० २। पृ० २१७ ) तच्च रूपम् [ १ ] पक्षतावच्छेदकविशिष्टपक्षासिद्धिः । [ २ ] पक्षतावच्छेदकाभाववान् पक्षः । [ ३ ] पक्षे पक्षतावच्छेदकस्याभावः । (न्या०बो०२। पृ० १८ ) यथा गगनं कमलं सुरभि कमलत्वादित्यत्र कमले पक्षे गगनीयत्वाभावः । ( न्या० म० २ । पृ० २१ ) यथा वा, काञ्चनमयः पर्वतो[५] वह्निमा-

---

१ तदर्थः—आश्रयस्य (पक्षस्य) असिद्धिः (पक्षे पक्षतावच्छेदकस्याभावः) तद्वान्, इति । एतल्लक्षणं च वक्ष्यमाणाश्रयासिद्धिमत्त्वमेवेति बोध्यम् । ( वाक्य० २ । पृ० १७ )

२ अनन्तरोदाहरणे गगनारविन्दमाश्रयः, स च नास्त्येव । ( त०भा०पृ० ४५ ) ( त०सं० )

३ अत्र च अरविन्दे पक्षे गगनीयत्वं पक्षतावच्छेदकं नास्तीत्यरविन्दत्वं हेतुराश्रयासिद्धः । आश्रयासिद्धस्य हेत्वाभासत्वं त्वित्थम्—आश्रयासिद्धत्वज्ञानं च *परामर्शप्रतिबन्धकम्, 'अरविन्दे गगनीयत्वं नास्ति ' इति ज्ञाने ' सुरभित्वव्याप्यारविन्दत्ववत् गगनारविन्दम् ' इति परामर्शासंभवात् । एतस्य ( परामर्शस्य ) अरविन्दे गगनीयत्वसंबन्धावगाहित्वात्, इति । ( त०कौ० २ । पृ० १४ ) तथा च, अरविन्दे गगनीयत्वाभावे निश्चिते गगनीयत्वविशिष्टारविन्दे सौरभ्यानुमितिप्रतिबन्धः फलम्, (न्या० बो० २ । पृ० १८ )

४ अत्रायमर्थः—आश्रयविशेषणासिद्ध्या चाश्रयासिद्धिः† असंकीर्णा । (चि० २।पृ० १०३)

५ अत्र ' पर्वतो न काञ्चनमयः' इति ज्ञाने विद्यमाने, काञ्चनमये पर्वते परामर्श–( 'वह्निव्याप्यधूमवान् काञ्चनमयपर्वतः ' इति परामर्श—)प्रतिबन्धः फलमिति बोध्यम् । ( मु० २ । पृ० १६१ )

---

* अत्र, आश्रयासिद्धत्वज्ञानस्य पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहिग्रहप्रतिबन्धकत्वेन परामर्शप्रतिबन्धकत्वमिति ज्ञेयम् ।

† इतरहेत्वाभासदोषेभ्योऽतिरिक्ता ।

नित्यादौ पर्वते काञ्चनमयत्वस्याभावः। ( मु० २ । पृ० १६१) (गौ० वृ० १ । ४८) यथा वा, अनित्यगगनं रूपवत् इत्यादौ गगनादेर्नित्यत्वादिकम् आश्रयासिद्धिः। ( दीधि० २ । पृ० २१७ )

**आसत्तिः**–१ [ क ] एकेनैव पुंसा ( पदानाम् ) अविलम्बेनोच्चारितत्वम्। (त० भा० ४ । पृ० १८ )

[ ख ] पदानामविलम्बेनोच्चारणम्। ( त० सं० ) यथा गामानय शुक्लां दण्डेनेति वाक्ये पदानामविलम्बेनोच्चारणात् संनिधिरूपाऽऽसत्तिः। ( त० कौ० ४। पृ०१७ ) (भा० प० श्लो० ८४)

[ ग ] प्रकृतान्वयबोधानुकूलाव्यवधानाभावं आसत्तिरिति प्राञ्चः। नव्यास्तु, नैतादृश्या आसत्तेर्ज्ञानं शाब्दबोधे कारणम्, किंतु अव्यवहितपदतात्पर्यमासत्तिः, तज्ज्ञानं शाब्दबोधे कारणमित्याहुः। (न्या०म० ४।२३–२४) ( म० प्र० ४ । पृ० ५७ )

[ घ ] अव्यवधानेनान्वयप्रतियोग्युपस्थितिः। ( चि० ४ ) (तर्का०४। पृ० १३ )

[ ङ ] यत्पदार्थेन सह यत्पदार्थस्यान्वयोऽपेक्षितस्तयोरव्यवधानेनोपस्थितिः। ( मु० ४। पृ० १८९ )

---

१ एतस्य ज्ञानं च शाब्दबोधस्य जनकमिति विज्ञेयम्। अत एव एकैकशः प्रहरे प्रहरेऽसहोच्चारिते गामानयेत्यादौ नान्वयबोधः। संनिधेरभावात्, इति (त० कौ० ४। पृ० १७) ( त० सं० )

२ तदर्थश्च [ क ] अविलम्बेन पदार्थोपस्थितिः। ( त० दी० ४ । पृ० ३२ ) [ ख ] तत्पदे तत्पदाव्यवहितत्वम्। तथा च गोपदनिष्ठं अमूपदाव्यवहितत्वम्, गोपदे अमूपदसंनिधिरित्यर्थः। ( वाक्य० पृ० १९ ) ( त० कौ० ४ । पृ० १७ )

३ अन्वयप्रतियोग्युपस्थापकपदयोरव्यवधानमित्यर्थः। तेन गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादौ नातिव्याप्तिः। ( म० प्र० ४। पृ० ५७ )

४ इदं लक्षणत्रयं (क, ख, ग, इत्यत्र विद्यमानम्) प्राचीनमतमनुसृत्योक्तमिति बोध्यम्।

५ तत्तात्पर्यं च 'एतत्पदं एतत्पदाव्यवहितोत्तरमभिसंदधातु' इत्यभिसंधापयितुरिच्छा। अत एव मौनिश्लोकेऽप्यासत्तिः, वक्तुरभावेप्यनुसंधातुः सत्त्वात्। शुकवाक्ये च भगवत्तात्पर्यमादायैव गतिः, इति। ( न्या० म० ४ । पृ० २४ )

[ च ] वृत्त्या ( शक्तिलक्षणाऽन्यतरसंबन्धेन ) पदजन्यपदार्थोपस्थितिः । ( न्या० म० ४ । पृ० २४ ) २ प्रत्यक्षजनकः संनिकर्षः । यथा, आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते इत्यादौ । ( भा० प० श्लो० ६९ )

**आस्तिकः**–१ परलोकाद्यस्तित्ववादी । यथा सत्यवतीसुतो व्यासः । (स्व०) २ जरत्कारमुनिपुत्र ऋषिविशेष इति पौराणिका आहुः । ( वाच० )

**आहार्यम्**–१ ( प्रत्यक्षम् ) [ क ] स्वविरोधिधर्मधर्मितावच्छेदककं स्वप्रकारकं ज्ञानम् । यथा 'निर्वह्निः पर्वतो वह्निमान्' इति ज्ञानम् । ( ग० सामा० २ । पृ० १९ )

[ ख ] स्वविरुद्धधर्मावच्छिन्नधर्मितावच्छेदककं स्वावच्छिन्नप्रकारकं ज्ञानम् । (स्व०) यथा धूमव्यभिचारविशिष्टवन्ह्यादिधर्मितावच्छेदकको, धूमव्याप्यतया वन्ह्यादिप्रकारको 'धूमव्यभिचारिवह्निमान् धूमव्याप्यवह्निमान्' इत्याकारको ग्रहः । ( ग० सामा० २। पृ० १४ )

[ ग ] स्वस्मिन्स्वावृत्तित्वावच्छिन्नप्रकारकं ज्ञानम् । यथा 'पर्वतः पर्वतावृत्तिमान्' इति ज्ञानम् । ( ग० सामा० २। पृ० १९ )

---

१ सा च ( घ, ङ, च, इत्यत्र प्रदर्शितोपस्थितिः ) स्वरूपसती शाब्दबोधहेतुः, न तु ज्ञाता, इति बोध्यम् । (न्या० म० ४। पृ० २४) ( म० प्र० ४। पृ० ५७ )

२ आस्तिकास्तु वेदन्ति-मीमांसकादयो बहवः, नास्तिकेभ्यो विभिन्नमतिकाश्चेति बोध्यम् ।

३ तथा हि– स्वं ( वह्निः ) तस्य विरोधी धर्मः ( वह्न्यभावः ) स एव धर्मिताऽवच्छेदको यस्मिन् ( ज्ञाने ) तत् ।
किंच,— स्वं ( वह्निः ) स एव प्रकारो ( विशेषणं ) च यस्मिन् ( ज्ञाने ) तत्, इति विग्रह–अर्थ-समन्वया विज्ञेयाः ।

४ अत्र, स्वं ( धूमव्याप्यत्वम् ) तद्विरुद्धो धर्मः (धूमव्यभिचारः) तदवच्छिन्नः (वन्ह्यादिः) स एव धर्मितावच्छेदको यत्र ( ग्रहे ) सः ।
किंच,—स्वं ( धूमव्याप्यत्वम्) तदवच्छिन्नः (तेन रूपेण वन्ह्यादिः) स एव प्रकारो यस्मिन् ( ग्रहे ) सः, इति विग्रह–अर्थ लक्षणसमन्वया विज्ञेयाः ।

५ अत्र स्वपदं पर्वतपरम् । तथा च–एतज्ज्ञानस्य, पर्वते पर्वतावृत्तित्वविशिष्टप्रकारकत्वेन आहार्यत्वं संपद्यते इति बोध्यम् ।

[घ] स्वविषयकेच्छाव्यवहितोत्तरक्षणोत्पन्नप्रत्यक्षम् । (ग० सत्प्र० पत्रे १७) [ङ] बाधकालीनेच्छाजन्यं ज्ञानम् । यथा ह्रदो वह्निमान्धूमादित्यादौ 'ह्रदो वन्ह्यभाववान्' इति ज्ञानम् । (ख०) २ व्याप्यम् । यथा 'कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च' इत्यादौ । ( सांख्यकारिकायाम् ) ३ लौकिक औपासनिकोऽग्निराहार्य इति याजका वदन्ति । (वाच०)

## इ.

**इच्छा**–(गुणः) इच्छात्वसामान्यवती । (प्र० प्र० १७)(त०कौ० पृ० १८) सा च यथा–'इदं मे भूयात्' इत्येवंरूपः कामोऽभिलाषो वा । (त० सं०) इच्छा द्विविधा । फलविषयिणी, तदुपायविषयिणी चेति ( भा० प०

---

१ अत्र, स्वमाहार्यम् । तथा च विषयत्व–स्वाव्यवहितोत्तरत्व–एतदुभयसंबन्धेनेच्छावच्छिन्न-प्रत्यक्षमित्यनुगमो बोध्यः । ( ग० सत्प्र० पत्रे १७ )

२ अत्र च, 'ह्रदो वह्निमान्' इत्यनुमित्यनन्तरं* 'ह्रदे वन्ह्यभावप्रत्यक्षं मे जायताम्' इतीच्छासत्वे केवलं 'ह्रदो वन्ह्यभाववान्' इत्याहार्यप्रत्यक्षमुत्पद्यत इति बोध्यम् ।
इदं त्ववधेयम्–आहार्यात्मकं ज्ञानं प्रत्यक्षमेवेति नैयायिकानां सिद्धान्तः । शाब्दबोधात्मकमपीत्यालंकारिका वदन्ति, इति ।

३ सा च मनोग्राह्या, आत्ममात्रवृत्तिश्चेति विज्ञेयम् । (भा० प० श्लो० ५८ ।) (३२–३४) इच्छालक्षणं च [ क ] प्रवृत्तेः साक्षादनुकूलत्वम् । (वाक्य० पृ० २१ ) [ख] यत्नसंस्कारभिन्नत्वे सति संबन्धानवच्छिन्नप्रकारताकत्वम् । ( ल० व० पृ० ३५ )

४ स चात्मधर्म इति नैयायिकसिद्धान्तः† । 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इति श्रुतेः, स (कामः) मनोधर्म इति सांख्या मायावादिनश्चाहुः ।

५ अत्र मुख्यं फलं तु सुखं दुःखाभावश्च । तथा च फलेच्छां प्रति फलज्ञानमात्रं‡ कारणम् । अत एव फलस्य स्वतः पुरुषार्थत्वं संभवति, इति बोध्यम् । ( भा० प० श्लो० १४७ ) ( मु० गु० पृ० २२०–२२१ ) ( त० कौ० पृ० १८ )

६ उपायेच्छां प्रति स्वेष्टसाधनताज्ञानं कारणम् । ( भा० प० श्लो० १४७ ) ( मु० गु० पृ०

---

* अत्र, इयमनुमितिरेव बाधात्मिकेति ज्ञेयम् । बाधत्वं तु विरुद्धधर्मप्रकारकत्वमेवेति सर्वमनवद्यम् ।

† अत्रेदमुक्तम्–'आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः । कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया' इति ।

‡ अत्रेदं रहस्यम्–सुखस्यैव चरमफलत्वेन सुखाद्यात्मकफलानन्तरं फलान्तराभावात् सुखेच्छाया नेष्टसाधनत्वज्ञानापेक्षा, अपि तु सुखज्ञानेनैव सुखेच्छोत्पद्यते, इति ।

श्लो० १४७ ) ( मु० पृ० २२० ) ( त० कौ० पृ० १८ ) पुनरपि नित्यानित्यभेदेनेच्छा द्विविधा । तत्र जीवेच्छाऽनित्या । ईश्वरेच्छा तु नित्या, 'सर्वं जगद्भूयात्' इति समूहालम्बनात्मिका चेति । मायावादिनस्तु, व्योमादिवत्साऽनित्येत्याहुः । ( वाच० )

**इतरबाधग्रहः**— साध्यतावच्छेदकव्याप्ययत्किंचिद्धर्मावच्छिन्नेतरसाध्यतावच्छेदकविशिष्टाभाववत्पक्षविषयकं ज्ञानम् । यथा पर्वतो वह्निमानित्यादौ 'महानसीयेतरवन्ह्यभाववान्पर्वतः' इति ज्ञानम् । ( स्व० )

**इतरबाधग्रहसहकृताऽनुमितिः**—(अनुमितिः) सामान्यधर्मावच्छिन्नस्य साध्यत्वे विशेषधर्मावच्छिन्नेतरबाधग्रहसत्त्वे जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः । यथा पर्वते धूमेन शुद्धवन्हित्वावच्छिन्नस्य साधने (पर्वतो वह्निमानित्यदौ ) 'पर्वतो महानसीयवह्निमान्' इत्यनुमितिः । ( स्व० )

**इतरेतरः**—( द्वन्द्वसमासः ) एकवचनान्यसुब्राकाङ्क्षः समासः । यथा, धवखदिरौ छिन्दीत्यादावितरेतरद्वन्द्वः । ( श० प्र० पृ० ६६ )

**इतरेतरत्**—अन्योन्यशब्दवदस्यार्थोऽनुसंधेयः । ( ल० म० )

**इति**—( अव्ययम् )१ हेतुः । २ प्रकाशनम् । ३ निदर्शनम् । ४ प्रकारः ।

---

२२१ ) ( त० कौ० पृ० १८ ) यथा स्वर्गात्मकफलस्य उपायो यागः, तद्विषयकेच्छां प्रति 'यागो मम इष्टस्य (स्वर्गात्मकफलस्य) साधनम्' इति ज्ञानं कारणम् ।

१ तथा हि—साध्यतावच्छेदकमत्र ( वह्नित्वम् ) तद्व्याप्यो यत्किंचिद्धर्मः ( महानसीयत्वम् ) तदवच्छिन्नः ( महानसीयवन्हिः ) तस्मादितरो यः साध्यतावच्छेदकविशिष्टः ( चत्वरीयपर्वतीयादिर्वन्हिः ) तदभाववान् पक्षः ( पर्वतः ) तद्विषयकं ज्ञानम्, इति ।

२ अत्र च, तादृशबाधग्रहकाले सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शादपि विशेषधर्मावच्छिन्नविधेयकानुमितिः स्वीक्रियत इति नैयायिकसिद्धान्तो ज्ञेयः ।

३ अत्र हि धवखदिरावगतौ द्विवचनादिः प्रमाणम् । (श० प्र० पृ० ६६)
अत्रेदं बोध्यम्—धवखदिराविति स्वरूपद्वयप्रतीतेर्न लक्षणा शक्तिर्वेति नैयायिकसिद्धान्तः । मीमांसकाश्च, धवखदिरावित्यादौ उत्तरपदे धवखदिरादिसाहित्याश्रये लक्षणामाहुः । वैयाकरणास्तु तादृशसाहित्याश्रये शक्तिमाहुः । ( न्या० म० ४ । पृ० १३ )

५ अनुकर्षः । ६ समाप्तिः । ७ प्रकरणम् । ८ स्वरूपम् । ९ सांनिध्यम् । १० विवक्षानियमः । ११ मतम् । १२ प्रत्यक्षम् । १३ अवधारणम् । १४ व्यवस्था । १५ परामर्शः । १६ मानम् । १७ इत्थमर्थः । १८ प्रकर्षः । १९ उपक्रमः । तत्र हेतौ उदाहरणम्—इतीव धारामवधीर्य, 'इति स्म सा कारुतरेण लेखितम्' । (नैष०) प्रकाशार्थे यथा, इतिहरि । प्रकारे यथा, 'इति मदमदनाभ्यां रागिणः स्पष्टरागाः' । (माघ०) । प्रकरणे यथा, इतिकृत्यमितिकर्तव्यम्, इतिवृत्तम् । इदमर्थे यथा, विरोधिसिद्धमितिकर्तुमुद्यतम्, इत्यादि । (वाच०)

**इतिकर्तव्यता**—इत्थंकर्तव्यता, परिपाटीयुक्तकर्तव्यतेत्यर्थः । यथा, मीमांसकमते स्वर्गकामो यजेतेत्यादौ लिङ्ख्यातबोध्याया अर्थभावनाया अपेक्ष्या प्रयाजाद्यङ्गजातात्मिका इतिकर्तव्यता भवति । (लौ० भा० पृ० १०) यथा वा—ओदनकामः पचेदित्यत्र लिङा भावनाऽभिधीयते । तत्र 'किं भावयेत्, कथं भावयेत्' इति भाव्याद्याकाङ्क्षायां तृणफूत्कारादिभिरुपकारं संपाद्य पाकेनौदनं भावयेत् (ओदनं कुर्यात्) इति भाव्याद्यन्वयेन वाक्यार्थः संपद्यते । (लौ० भा० टी० पृ० १०)

---

अत्रायं विशेषो ज्ञेयः—स्वरूपाख्यार्थद्योतकता त्रिधा । शब्दस्वरूपद्योतकता, प्रातिपदिकार्थद्योतकता, वाक्यार्थद्योतकता चेति । तत्र शब्दस्वरूपद्योतकत्वे तद्योगे न प्रथमा । यथा 'कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते' इत्यादौ । प्रातिपदिकार्थद्योतकत्वे तु प्रथमा भवति । यथा 'चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम् । विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः' (माघः १) इत्यादौ । वाक्यार्थद्योतकत्वे च न प्रथमा । यथा 'भूसत्तायामितीदृशम्,' । (भर्तृ०) 'श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका' इत्यादौ । (मीमांसा० का०) (वाच०)

२ 'एवं सर्वं विधायेदमितिकर्तव्यमात्मनः । युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः' (मनु० ७।१४२) इत्यादावितिकर्तव्यता । अत्र 'कर्तव्यस्य इति (प्रकारः) इतिकर्तव्यता' इति व्युत्पत्तिर्द्रष्टव्या । तदर्थश्च—कर्तव्यसामान्यस्य भेदकः कर्तव्यविशेषः । यथा मीमांसकमते प्राशस्त्यं शब्दभावनायां इतिकर्तव्यतात्वेनान्वयं लभते, इति (लौ० भा० टी० पृ० ८)

**इतिहासः**[1][2]–पुरावृत्तप्रकाशको ग्रन्थविशेषः । यथा महाभारतादिः । (वाच०)

**इदम्**–प्रत्यक्षबुद्धिविषयः[3] । (दि० ४ । पृ० १७९) (ग० शक्ति०) यथा 'अयम्, उदयति विततोर्ध्वरश्मिजालः,' (माघ०) 'इदं किलाव्याजमनोहरं वपुः' (शाकु०) इत्यादाविदंपदार्थः ।

**इन्द्रियम्**[4]–[क] स्वविषयग्रहणलक्षणानीन्द्रियाणीति । (वात्स्या० १।१।१२) [ख] शरीरसंयुक्तं ज्ञानकारणमतीन्द्रियम् । (त० कौ० पृ० ३) (प्र० प्र० पृ० ११)

---

१ तत्राम्नायते—'वाकोवाक्येतिहासपुराणः पञ्चमो वेदानां वेदः' । (छान्दो०) 'स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि । आख्यानानीतिहासांश्च पुराणानि खिलानि च' इति । (मनु० ३।२३२)

२ तल्लक्षणं च—धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते, इति । (वाच०)

३ अत्रेदं बोध्यम्–इदमः संनिकृष्टवाचित्वम्* । संनिकृष्टत्वं च बुद्धिमात्रेण, तच्च ज्ञानलक्षणया (प्रत्यासत्त्या) स्मरणादिना च भवति । यथा 'कौमुदीयं विरच्यते' इत्यत्र भाविन्यपि कौमुदी बुद्ध्या संनिधापितत्वेन इदमा निर्दिश्यते । (वाच०)

४ तच्च प्रत्यक्षप्रमाणमित्युच्यते† । (त०कौ०पृ० ८) (त० सं०) इन्द्रियसत्त्वे प्रमाणं चानुमानम् । तच्च, ज्ञानक्रिया सकरणिका क्रियात्वात् छिदिक्रियावत्, इति । (वाच०) लक्षणं चेन्द्रियत्वमेव । तच्च [क] स्मृत्यजनकज्ञानजनकमनःसंयोगाश्रयत्वम् । (चि०) (प०मा०) (वै०उ० ४।२।१) [ख] शब्देतरोद्भूत‡विशेषगुणानाश्रयत्वे सति ज्ञानका-

---

* तत्रोक्तम्—'अस्येति प्रत्यक्षादिसंनिधापितस्य जगत इदमा निर्देशः' इति । (शारी० भा०)

† अयमाशयः–यदा निर्विकल्पकरूपा प्रमा फलं तदा इन्द्रियं करणम् । तद्यथा–आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, 'इन्द्रियाणां वस्तु प्राप्य कारित्वम् (ज्ञानकारित्वम्)' इति नियमात् ततोऽर्थसंनिकृष्टेनेन्द्रियेण निर्विकल्पकज्ञानं जन्यते । तस्य ज्ञानस्येन्द्रियं करणम्, छिदाया इव परशुः । इन्द्रियार्थसंनिकर्षोऽवान्तरव्यापारः, छिदाकरणस्य परशोरिव दारुसंयोगः । निर्विकल्पकं ज्ञानं फलम्, परशोरिव छिदा, इति (त० भा० पृ० ६)

‡ अत्रेदं बोध्यम्–शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वम्, तदभावकूटश्चोद्भूतत्वमिति । (मु० १। पृ० ११९)

[ ग ] साक्षात्कारमात्रवृत्तिधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयव्यापारवदतीन्द्रियम् । ( प० च० ) इन्द्रियं द्विविधम् । अन्तरिन्द्रियम्, बहिरिन्द्रियं च । तत्राद्यं मनः । द्वितीयं घ्राणादि पञ्चविधम्—घ्राणम्, रसनम्, चक्षुः, श्रोत्रम्, त्वक् चेति । एवं चेन्द्रियाणि षट् । ( प्र० प्र० पृ० ११ ) ( गौ० वृ० १।१।१२ ) ( त० भा० पृ० २६ ) तत्र ( षट्स्विन्द्रियेषु मध्ये ) घ्राण-रसन-श्रोत्राणि द्रव्याग्राहकाणि ( अपि तु गुणमात्रग्राहकाणि) । चक्षुस्त्वङ्मनांसि तु द्रव्यग्राहकाणि ( गुणग्राहका-

रणमनःसंयोगाश्रयत्वम्* । ( त० प्र० १ ) ( वाक्य० पृ० ३ ) ( त० दी० १। पृ० ७ ) ( वै० उ० ४।२।१ ) ( वै० वि० ४।२।१ ) [ ग ] ज्ञानासमानाधिकरणो ज्ञानकारणं यो मनःसंयोगस्तदाश्रयत्वम् । चक्षुरादिमनःसंयोगमादायैव लक्षणसमन्वयः । ( म० प्र० १। पृ०१३) [घ] घ्राणाद्यन्यान्यत्वम् । [ ङ ] प्रत्यक्षजनकतावच्छेदकतयेन्द्रियत्वमखण्डोपाधिरित्यन्ये । ( गौ० वृ० १।१।१२ ) [ च ] सांख्यास्तु, इन्द्रियत्वं च [ १ ] सात्त्विकाहंकारोपादानत्वम् । ( न्या० म० १। पृ० ७ ) [ २ ] अहंकारकार्यत्वे सति कारणत्वम्, इत्याहुः । ( वाच० )

१ तदुक्तम्— घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि† भूतेभ्यः । ( गौ० १।१।१२ )

२ केचित्तु, इन्द्रियाणि दश । ज्ञानेन्द्रियाणि,‡ कर्मेन्द्रियाणि च । तत्र ज्ञानेन्द्रियाणि घ्राणादीनि । कर्मेन्द्रियाणि तु, वाक्पाणिपादपायूपस्थानि इत्याहुः ( वाच० )

* तदर्थश्च—शब्दादितरे ये उद्भूता विशेषसंज्ञकाश्च गुणास्तेषाममाश्रयत्वे सति, ज्ञानस्य कारणीभूतो यो मनःसंयोगः ( इन्द्रियैर्मनसः संयोगः ) तदाश्रयत्वम् ।

सत्यन्तदलतात्पर्यं तु, शब्दभिन्न उद्भूतो विशेषसंज्ञकश्च गुणो न कस्मिंश्चिदपीन्द्रिये तिष्ठति । अनुद्भूतविशेषगुणस्तु (अनुद्भूतरूपादिः) वर्तत एवेति ।

नक्तंचरनयनरश्मिस्तु ( व्याघ्रादिनयनरश्मिः ) तेजोन्तरमेव । तस्य चक्षुष्ट्वे तु 'शब्द-रूपेतदितरोद्भूतविशेषगुणानाश्रयत्वे सति' इति विशेषणं देयम् । ( वै०उ० ४।२।१ )

† अत्र 'भोगसाधनानीन्द्रियाणि' ( वात्स्या० १।१।९ ) इति भाष्यकार आह । इन्द्रियविषयास्तु गन्ध-रस-रूप-स्पर्श-शब्दाः, इति । ( गौ० १।१।१४ )

‡ तत्रोक्तम्—[ क ] ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि । वाक्पाणिपादपाय्वन्धुसंज्ञान्याहुर्मनीषिणः ॥ वचनादानगतयो विसर्गानन्दसंयुताः । कर्मेन्द्रियार्थाः संप्रोक्ताः, इति । ( शा० ति० ) अन्धु लिङ्गम् । ( राघवभट्टः ) [ ख ] हस्तौ पादावुपस्थं च जिह्वा पायुस्तथैव च । कर्मेन्द्रियाणि पञ्चैव, इति । ( शब्द० ) ( वाच० )

ण्यापि ) । ( प्र० प्र० पृ० १२ ) (त० कौ० १। पृ० १०) अत्र के-चित्तु मनो नेन्द्रियम्, इत्याहुः । वैशेषिकैः साधितं मनस इन्द्रियत्वं नैयायिका अप्यभ्युपगच्छन्ति । ( प्र० प्र० पृ० २१ ) ( त० भा० पृ० ४२–४३ )

**इन्द्रियार्थसंनिकर्षः**[1]–प्रत्यक्षात्मकज्ञानहेतुरिन्द्रियस्य विषयेण संबन्धः । ( राम० १। पृ० १२८ ) स च द्विविधः । लौकिकः, अलौकिकश्च । तत्राद्यः षड्विधः[2] । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । तत्र, चक्षुषा 'इह घटोऽस्ति' इति 'घटोऽयम्' इति वा घटप्रत्यक्षजनने संयोगः[3] संनिकर्ष उपयुज्यते । 'घटे रूपादिकमस्ति' इति घटरूपादिप्रत्यक्षजनने संयुक्तसमवायः[4] । 'घटगतरूपे रूपत्वाद्यस्ति' इति रूपत्वादिसामान्य[5]प्रत्यक्षे सं-

१ लक्षणं च संयोगाद्यन्यतमत्वम् । ( त० प्र० ) अत्रेदमवधेयम्–यदा निर्विकल्पकज्ञानानन्तरं सविकल्पकं ज्ञानमुत्पद्यते तदा इन्द्रियार्थसंनिकर्षः करणम्, निर्विकल्पकज्ञानमवान्तरव्यापारः, सविकल्पकज्ञानं फलम्, इति । ( त० भा० पृ० ६ ) विस्तरस्तु ( वै० उ० ८।१।४–५ ) तत्रानुसंधेयः ।

२ स च [ क ] लौकिकप्रत्यक्षे कारणम् ( त०कौ०पृ० ८) [ख] षडिन्द्रियसहकारी, इति । (प्र० प्र० पृ० ३) (न्या०म० १। पृ० ७) वक्ष्यमाणमलौकिकसंनिकर्षत्रयं तु षडिन्द्रियसहकारीति संप्रदायविदः । मनस एव सहकारीति शूलपाणिमिश्राः । (त०कौ०१।पृ० ९)

३ द्रव्यचाक्षुष-स्पार्शन-मानसेष्विन्द्रियसंयोग एव संनिकर्षः । (न्या० म० १।पृ० ७) (सि० च० १।पृ० २२) चक्षुरादेर्घटादिना संयोगसत्त्वादिति भावः । एवं मनसा संयोगेनात्मग्रहः 'अहमस्मि' इति । ( त० कौ०१। पृ० ८ ) अत्रायं नियमः 'आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन (विषयेण), ततः संनिकृष्टेनेन्द्रियेण निर्विकल्पकप्रत्यक्षमुत्पद्यते' इत्यनुसंधेयः । ( त० भा० पृ० ६ ) ( प्र० प्र० )

४ द्रव्यसमवेत*चाक्षुष-स्पार्शन-मानस-रासन-घ्राणजेष्विन्द्रियसंयुक्तसमवाय एव संनिकर्षः । (सि० च० १। पृ० २२ ) चक्षुरादिसंयुक्ते घटे रूपादीनां समवायादिति भावः । ( त० कौ० १। पृ० ९ )

५ शब्देतरगुण-कर्म-एतद्गता जातिरित्यर्थः । ( न्या० म० १। पृ० ७ ) अत्रायं नियम

* शब्देतरगुणाः, कर्म, द्रव्यगता जातिः, संयुक्तसमवायेन गृह्यते ( न्या० म० १। पृ० ७ )

युक्तसमवेतसमवायः[१] । श्रोत्रेण 'कर्णे ध्वनिः पतति' इति, 'इह वीणाशब्दोऽस्ति' इति वा शब्दसाक्षात्कारे समवायः[२] । श्रोत्रेण शब्दत्वसामान्यप्रत्यक्षे[३] समवेतसमवायः[४] । समवायप्रत्यक्षे, 'इह भूतले घटो नास्ति' इति अभावप्रत्यक्षे च विशेषणविशेष्यभावः[५] ( विशेषणता[६], विशेष्यता च )

---

'येनेन्द्रियेण यत् गृह्यते तेनेन्द्रियेण तद्गतं सामान्यम्, तत्समवायः, तदभावश्च गृह्यते' इत्यनुसंधेयः । ( त० कौ० १ । पृ० १० )

१ द्रव्यसमवेतसमवेतस्य चाक्षुष-रासन-घ्राणज-स्पार्शन-मानसेष्विन्द्रियसंयुक्तसमवेतसमवाय एव संनिकर्षः । चक्षुरादिसंयुक्ते घटे समवेतं रूपादि, तत्र रूपत्वादेः समवायादिति भावः । (सि०च० १। पृ० २२)

२ यथा हि— कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । तत्र ध्वनिशब्दस्य समवायस्य सत्त्वादिति भावः । ( न्या० म० १। पृ० ८ ) ( प्र० प्र० पृ० ४ ) ( त० कौ० १। पृ० ९ )

३ 'इह शब्दे शब्दत्व-गुणत्वादिकमस्ति' इति प्रत्यक्षे इत्यर्थः ।

४ अत्र, श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायादिति भावः । ( त० कौ० १। पृ० ९ )

५ तच्च संयोगसंयुक्तसमवायसंयुक्तसमवेतसमवायविशेषणसंयुक्तविशेषणतादि । ( मू० म० ) यदा चक्षुःसंयुक्ते भूतले घटाद्यभावो गृह्यते 'इह भूतले घटो नास्ति' इति तदा चक्षुःसंयुक्तस्य भूतलस्य घटाद्यभावो विशेष्यम्, भूतलं विशेषणम् ( अत्र चक्षुःसंयुक्तविशेष्यत्वं संनिकर्षः ) । यदा मनःसंयुक्ते आत्मनि सुखाद्यभावो गृह्यते 'अहं सुखादिरहितः' इति तदा मनःसंयुक्तस्यात्मनः सुखाद्यभावो विशेषणम् (अत्र मनःसंयुक्तविशेषणत्वं संनिकर्षः) । यदा च श्रोत्रसमवेते गकारे घत्वाभावो गृह्यते 'गकारो घत्वाभाववान्' इति तदा श्रोत्रसमवेतस्य गकारस्य घत्वाभावो विशेषणम् । (अत्र, श्रोत्रसमवेतविशेषणत्वं संनिकर्षो ज्ञेयः) ।

तदेवं संक्षेपतः पञ्चविधान्यतमसंबन्धसंबद्धविशेषणविशेष्यभावलक्षणेनेन्द्रियार्थसंनिकर्षेणाभाव इन्द्रियेण गृह्यते । एवं समवायोऽपि, चक्षुःसंबद्धस्य तन्तोर्विशेषणभूतः पटसमवायो गृह्यते 'इह तन्तुषु पटसमवायः' इति । ( त० भा० १। पृ० ८ )

६ तत्र विशेषणता नानाविधा । तथाहि—[ क ] भूतलादौ घटाभावः संयुक्तविशेषणतया गृह्यते । संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया गृह्यते । संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया गृह्यते । शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया गृह्यते । कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया गृह्यते । एवं कत्वाद्यवच्छिन्नाभावे खत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया गृह्यते । घटाभावादौ घटाभावश्चक्षुःसंयुक्तविशेषणतया गृह्यते इति । एवमन्यत्राप्यूह्यम् । ( मु० १। पृ०१२२ ) एवं विशेष्यताया नानाविधत्वम्, पूर्वोक्तं तदुदाहरणादिकं च द्रष्टव्यम् ।

इति । (त० सं०) (त० भा० पृ० ६–८) (सि० च० पृ० २२) तत्र विशेषणतया विशेष्यतया च समवायाभावयोर्ग्रहः[1] । तथा हि–विशेषणता द्विविधा । इन्द्रियविशेषणता, इन्द्रियसंबद्धविशेषणता च । तत्रेन्द्रियविशेषणतया 'अयं शब्दसमवायवान्' इति शब्दसमवायस्य, 'अयं शब्दाभाववान्' इति शब्दाभावस्य च ग्रहः[2] । इन्द्रियसंबद्धविशेषणतया[3] तु 'इदं कपालं घटसमवायवत्' इति घटादिसमवायस्य, 'इदं भूतलं घटाभाववत्' इति घटाभावस्य च ग्रहः[4] । (त०कौ० १।पृ०९) (न्या० म०पृ० ८) एवं विशेष्यतापि द्विविधा । इन्द्रियविशेष्यता, इन्द्रियसंबद्धविशेष्यता च, तत्रेन्द्रियविशेष्यतया 'इह शब्दसमवायोऽस्ति' इति शब्दसमवायस्य, 'इह शब्दो नास्ति' इति शब्दाभावस्य च ग्रहः[5] । इन्द्रियसंबद्धविशेष्यतया तु 'इह कपाले घटसमवायोऽस्ति' इति घटादिसमवायस्य, 'इह

---

१ समवायस्य प्रत्यक्षवर्णनं न्यायमतेन । वैशेषिकमते तु समवायोऽतीन्द्रिय एवेति ज्ञेयम् । (त० कौ० १। पृ० ९) (मु० १। पृ० १२२)

२ तत्र श्रोत्रेन्द्रिये शब्दसमवायस्य शब्दाभावस्य* च विशेषणत्वादिति भावः (न्या० म० १। पृ० ८) (त० कौ० १। पृ० ९)

३ अत्र, इन्द्रियसंनिकर्षस्य संयोगादेर्बहुविधस्य प्रवेशात्तादृशविशेषणताऽपि बहुविधा । तद्यथा–इन्द्रियसंयुक्तविशेषणता, इन्द्रियसंयुक्तसमवेतविशेषणता, इन्द्रियसंयुक्तसमवेतसमवेतविशेषणता, इन्द्रियसमवेतविशेषणता, इन्द्रियसमवेतसमवेतविशेषणता, इन्द्रियविशेषणविशेषणतेत्यादिः । तत्र आद्यया (इन्द्रियसंयुक्तविशेषणतया) भूतले घटाभावग्रहः । द्वितीयया घटरूपादौ रसत्वाभावग्रहः । तृतीयया रूपत्वादौ रसत्वाभावग्रहः । चतुर्थ्या श्रोत्रसमवेते ककारे खत्वाभावग्रहः । पञ्चम्या कत्वे खत्वाभावग्रहः । षष्ठ्या श्रोत्रे विशेषणीभूतककाराभावे खत्वाभावग्रहः, इति बोध्यम् । (म० प्र० १। पृ० १०–११)

४ तत्र चक्षुरादिसंयुक्ते कपाले घटसमवायस्य, चक्षुरादिसंबद्धे भूतले घटाभावस्य, च विशेषणत्वादिति भावः । (न्या० म० १। पृ० ८) (त० कौ० १। पृ० ९)

५ तत्र श्रोत्रेन्द्रिये शब्दसमवायस्य शब्दाभावस्य च विशेष्यत्वादिति भावः ।

---

* अभावस्य, स्वोपरक्तबुद्धिजनकत्वं यत्स्वरूपं तदेव विशेषणत्वम्; न तु तदर्थान्तरम् इति विज्ञेयम् । (त० भा० पृ० २०)

भूतले घटो नास्ति' इति घटाभावस्य च ग्रहो भवतीति । (ख०) द्वितीयस्तु (अलौकिकः संनिकर्षः) त्रिविधः । सामान्यलक्षणः, ज्ञानलक्षणः, योगजधर्मश्चेति । (भा० प० १। श्लो० ५९–६२,६४) (मु० १। पृ० ११९–१२२)

**इष्टत्वम्**–[क] इच्छाविषयत्वम् । यथा, इष्टदेवतानमस्कारलक्षणं मङ्गलं शिष्यशिक्षार्थं निबध्नन् (त० दी० पृ० १) इत्यादाविष्टत्वम् । (ख०)

[ख] समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् । यथा ओदनकामः पचेत, स्वर्गकामो यजेतेत्यादावोदनस्वर्गरूपफलयोरिष्टत्वम् । (ग० व्यु० ल० पृ० १३९)

---

## ई.

**ईर्ष्या**–(दोषः) १ [क] अक्षान्तिः । सा च परोत्कर्षासहिष्णुता । यथा शत्रवे ईर्ष्यतीत्यादौ धात्वर्थः । (ग० व्यु० का० ४ । पृ० ९६)

[ख] साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः । यथा दुरन्तदायादानामीर्ष्या । (गौ० वृ० ४।३)

[ग] शाब्दिकास्तु, उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेषः । यथा हरये ईर्ष्यतीत्यादौ, इत्याहुः । (ल० म० सुब०

---

१ तत्र चक्षुरादिसंयुक्ते कपाले घटसमवायस्य, तादृशे (चक्षुरादिसंयुक्ते) च भूतले घटाभावस्य च विशेष्यत्वादित्यवधेयम् ।

२ स चालौकिकप्रत्यक्षे कारणम् । एतत्त्रितयसंनिकर्षः षडिन्द्रियसहकारीति संप्रदायविदः । मनस एव सहकारीति शूलपाणिमिश्राः । (त० कौ० १। पृ० ९)

३ इयं च कोपमूलिका । (ल० म० सुब० का० ४। पृ० १०३)
तत्रोक्तम्–पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः, इति । (मनु० ७।४८)

४ परोत्कर्षगोचरो द्वेष इति परमार्थः । तथा च तादृशद्वेषविषयस्य परस्य 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (पा० सू० १।४।३७) इत्यनेन संप्रदानता (ग० व्यु० का० ४। पृ० ९६)

का० ४ । पृ० १०३ ) २ अनिष्टानुपेक्षणम् । यथा शिष्यायेर्ष्यतीत्यत्र धात्वर्थः । ( श० प्र० पृ० ८७ )

**ईश्वरः**–परमात्मवदस्यार्थोऽनुसंधेयः ।

---

## उ.

**उच्चरितत्वम्**–[ क ] उच्चारणं च शब्दोत्पत्त्यनुकूलव्यापारः, तज्जन्यत्वमुच्चरितत्वम् ।

[ ख ] शाब्दिकास्तु, ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । यथा वर्णमुच्चारयतीत्यादौ वर्णस्योच्चरितत्वम् इत्याहुः । ( वै० सा० स्फोट० पृ० ४४४)

**उच्चारणम्**–कण्ठताल्वाद्यभिघातेन शब्दजनकव्यापारः[2] । यथा वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया धृतम् ( भार० व० अ० २१४ ) इत्यादौ ।

**उच्छ्वासः**–प्राणवायोर्व्यापारविशेषः । (गौ० वृ० ३।३०) यथा 'निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम् ' ( गौ० ३।३० ) इत्यादावुच्छ्वासः ।

**उत्कर्षः**[3]–१ अविद्यमानधर्मारोपः । यथा, उत्कर्षसमो जातिरित्यादावुत्कर्षः । ( गौ० वृ० ५।४ ) २ गुणनिष्ठजातिविशेषः । यथा–टीकाकृन्मते 'अयमस्मादुत्कृष्टः ' इति प्रतीतिसंभवेन, कालखात्मदिशां साधर्म्ये वक्तव्ये, परममहत्त्वे परममहत्त्वत्वं चापकर्षानाश्रयपरिमाणत्वमित्यत्रोत्कर्षो जात्यात्मकः । ( राम० १। पृ० ९८ ) ३ 'उत्कृष्टः' इति प्रतीतिसाक्षिको द्र-

---

१ अत्र शिष्यानिष्टं नोपेक्षत इति वाक्यार्थः । ( श० प्र० पृ० ८७ )

२ तत्प्रकारस्तु ' आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापाद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा मतः ' इति शिक्षोक्तदिशाऽवसेयः । ( वाच० ) अधिकं तु अनुमानचिन्तामण्यादौ द्रष्टव्यम् ।

३ उत्कर्षत्वं च शक्तिविशेषसंबन्धेन उत्कर्षपदवत्त्वम् । अतो नाननुगमः । ( मू० म० १। पृ० १०३ )

व्यादिवृत्तित्वेन ज्ञायमानो धर्मः[1] । ( ख० ) यथा उत्कर्षवत्तया ज्ञापनं ( ज्ञानानुकूलः शब्दः ) स्तुतिरित्यादौ । ( मू० म० मङ्ग० १ । पृ० १०३ ) यथा वा ' त्वमेव राजा[2] ' इत्यादौ ।

**उत्कर्षसमः**[3]–( जातिः ) [ क ] दृष्टान्तधर्मं साध्येन समासञ्जत उत्कर्षसमः । यदि क्रियाहेतुगुणयोगाल्लोष्टवत्क्रियावानात्मा, लोष्टवदेव स्पर्शवानपि प्राप्नोति । अथ न स्पर्शवान्, लोष्टवत्क्रियावानपि न प्राप्नोति । विपर्यये वा विशेषो वक्तव्य इति । ( वात्स्या० ५।१।४ )

[ ख ] व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन्साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनम् । यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायामनित्यत्वं कृतकत्वं घटे रूपसहचरितमतः शब्दोऽपि रूपवान्स्यात् । तथा च विवक्षितविपरीतसाधनाद्विशेषे विरुद्धो हेतुः । ( गौ० वृ० ५।४ )

[ ग ] परोक्तसाधनादेव तदव्यापकधर्मस्य पक्षे आपादनम् । यथा शब्दोऽनित्यः कृतकत्वाद्घटवदित्यादौ कश्चिदेवमाह–यदि कृतकत्वेन हेतुना शब्दो घटवदनित्यः स्यात्तर्हि तेनैव हेतुना शब्दो घटवत्सावयवः स्यात्, इति । ( नील० पृ० ४३ )

**उत्क्षेपणम्**[4]–( कर्म ) [ क ] ऊर्ध्वदेशसंयोगहेतुः कर्म[5] । ( त० सं० ) (त०

---

१ स च धर्मः क्वचित् जातिः, क्वचिद् दया, क्वचिच्च दानादि । यथा ' त्वं दयाशीलः, त्वं दाता, पुत्री त्वमेव ' इत्यादौ दयादीनामप्युत्कर्षत्वम्* । ( मू० म० मङ्ग० १।१०३ )

२ अत्र च, कश्चिद्दरिद्रो याचक उदारं धनिकं ग्राम्यप्रभुं वाऽभ्येत्य 'त्वमेव राजेति' अन्ययोगव्यवच्छेदेन राजभावमारोपयतीति लोकप्रसिद्धिर्द्रष्टव्या ।

३ विरुद्धदेशनाभासोऽयमिति बोध्यम् । ( गौ० वृ० ५।४ )

४ तल्लक्षणं च [ क ] ऊर्ध्वदेशसंयोगासमवायिकारणप्रमेयसमवेतकर्मत्वापरजातिमत्त्वम् । ( सर्व० औलू० पृ० १७) [ ख ] ऊर्ध्वदेशसंयोगजनकक्रियानुकूलक्रियात्वम् । (त० व० )

५ अत्रेदं बोध्यम्–उत्क्षेपणकर्तुः प्रयत्नः, तस्यैव हस्तनोदनम्, उत्क्षेप्यलोष्टादीनां गुरुत्वम्, एतत्त्रयं हि कारणमुत्क्षेपणादेः कर्मणः, इति । उत्क्षेपणादिकर्मणः कार्याणि तु संयोगविभागवेगा भवन्ति । स्थितिस्थापकोपि कर्मकार्यमित्यन्ये वदन्ति । ( त० व० )

---

* अत्र दयादिष्वप्युत्कर्षव्यवहारेण तेषामप्युत्कर्षपदवाच्यत्वमिति बोध्यम् । ( मू म० १। पृ० १०३ )

कौ० पृ० २०) (त० व० पृ० २४०) यथा हस्तेन मुसलमुत्क्षिपतीत्यादावुत्क्षेपणम् । ( ख० )

[ ख ] ऊर्ध्वसंयोगफलकक्रियावच्छिन्नव्यापारः । यथा गगने लोष्टमुत्क्षिपतीत्यादौ धात्वर्थः । ( श० प्र० पृ० ९६ )

**उत्तरत्वम्**—१ स्वाधिकरणकालध्वंसाधिकरणत्वम । यथा चैत्रोत्तरत्वमाषाढमासस्य । यथा वा भुक्त्वा व्रजतीत्यादौ व्रजनस्य भोजनोत्तरत्वम । २ मेरुसंनिहितदेशावच्छिन्नत्वम् । यथा झळकीग्रामादुत्तरस्यां दिशि सोलापुरग्राम इत्यादौ ततो वायव्यैशान्योर्मध्यदिश उत्तरत्वम् । ३ क्रियाजन्यसंयोगानुयोगित्वम्, भाविक्रियाजन्यसंयोगाश्रयत्वं वा । यथा ग्रामं गच्छतीत्यादौ ग्रामात्मकप्रदेशस्य पूर्वदेशमपेक्ष्योत्तरत्वम् । ४ दक्षत्वम्, उत्तरसंज्ञकत्वं वा । यथा उत्तराः कुरव इत्यादौ, इति काव्यज्ञा वदन्ति । (ख०)

**उत्तरम्**—१ परपक्षप्रतिषेधः । ( वात्स्या० ५।२।१९ ) यथा, उत्तरस्याप्रतिपत्तिरप्रतिभा ( गौ० ५।२।१९ ) इत्यादौ । २ [ क ] प्रश्ननिर्वर्तकं वाक्यम । यथा 'कोऽसि' इति पृष्टे 'देवदत्तोऽहमस्मि' इति वचनम् । (ख०)

[ ख ] जिज्ञासितविषयावेदकं वाक्यमुत्तरमिति केचित् । ( वाच० )

[ ग ] शाब्दिकास्तु, यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य संबन्धो यत्प्रश्नवाक्यात्प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्मावच्छिन्नसंबन्धबोधकवा-

---

१ हस्तमुसलाद्युत्क्षेपणकारणमाह—आत्मनः संयोगप्रयत्नाभ्यां प्रथमतो हस्तकर्म भवति । तत्र हस्तः समवायिकारणम्, प्रयत्नवदात्मसंयोगोऽसमवायिकारणम्, प्रयत्नश्च निमित्तकारणम् । (त० व० परि० १६। पृ० २४१) ततो मुसलोत्क्षेपणे मुसलं समवायिकारणम्, प्रयत्नवदात्मसंयुक्तोत्क्षेपणवद्धस्तसंयोगोऽसमवायिकारणम्, प्रयत्नहस्तोत्क्षेपणादिकं निमित्तकारणम्, इत्यादिकमुन्नेयम् ।

२ अत्र च, त्रिंशद्दिवसात्मकचैत्रमासस्याधिकरणं तावान् दण्डकालः, तद्ध्वंसाधिकरणत्वमाषाढस्येति न कोऽपि दोषः ।

३ तत्रोक्तम्—प्रश्नश्चोद्यभिया पृच्छा, तस्य खण्डनमुत्तरम् इति । (वाच० )

क्यम् । यथा 'कस्माद्घटः' इति प्रश्नस्य 'दण्डाद्घटः' इत्युत्तरम् । ३ सिद्धान्तानुकूलतर्कोपन्यासरूपोऽधिकरणविशेष इति मीमांसका वेदान्तिनश्चाहुः । ४ राजसमीपे वादिकृताभियोगापनोदकमुत्तराख्यं व्यवहाराङ्गमिति व्यवहारज्ञाः । ५ नक्षत्रविशेषाणीति ज्योतिर्विद आहुः ।

**उत्तरपदः**– ( द्विगुः समासः ) यो द्विगुः स्वघटकनामभ्यां सह, साकाङ्क्षनामान्तरेण समासस्यान्तर्गतः सः । यथा पञ्च गावो धनमस्येति विग्रहे 'पञ्चगवधनः' पुरुषः इत्यादौ बहुव्रीह्यादिनिविष्टः पञ्चगवादिः । ( श० प्र० पृ० ४७ )

**उत्तरमीमांसा**–( दर्शनम् ) उत्तरस्य वेदशेषभागस्य उपनिषद्रूपस्य मीमांसा पञ्चाङ्गन्यायोपेतवाक्यसमुदायात्मको विचारः । यथा, अथातो ब्रह्मजिज्ञासा ( ब्र० सू० १।१।१ ) इत्यारभ्य, 'अनावृत्तिः शब्दात्' (ब्र० सू० ४।४।२२ ) इत्येतावान् अध्यायचतुष्टयात्मको सत्यवतीसुतव्यासकृतो ब्रह्मविचारः । ( वाच० )

**उत्तीर्णता**–१निश्चयः । (ग० सव्य०) यथा, असाधारण्योत्तीर्णतादशायामित्यादौ । २नद्यादेः पारगमनकर्मत्वमुत्तीर्णत्वमिति काव्यज्ञा वदन्ति ।(स्व०)

**उत्तेजकत्वम्**–१ प्रतिबन्धककोटिप्रविष्टाभावप्रतियोगित्वम् । यथा दाहं प्रति मणिविशेषस्योत्तेजकत्वम् । २ प्रेरकत्वमिति काव्यज्ञाः । ३ उद्दीपकत्वं वर्धकत्वं वेत्याधुनिका लौकिकजना वदन्ति । ( स्व० )

---

१ यदाहुः—जिज्ञासितपदार्थस्य संसर्गो येन गम्यते । तदुत्तरमिति प्रोक्तमन्यदाभासशब्दितम्, इति । ( वै० सा० द० पृ० ८७ )

२ अत्र, घटत्वावच्छिन्ने जिज्ञासितधर्मावच्छिन्नसंबन्धबोधकस्य 'कस्माद्घटः' इति प्रश्नवाक्यस्य, घटत्वावच्छिन्ने जिज्ञासितदण्डत्वावच्छिन्नस्य हेतुहेतुमद्भावबोधकं 'दण्डाद्घटः' इति वाक्यमुत्तरम् । ( वै० सा० द० पृ० ८७ )

३ अत्र च दाहं प्रति मणिविशेषस्य प्रतिबन्धकत्वं लोकसिद्धम् । परंतु मणिविशेषान्तरस्य च समवधाने दाहोत्पत्त्या मणिविशेषान्तराभावविशिष्टमणिविशेषस्यैव प्रतिबन्धकत्वस्यावश्यंवक्तव्यतया मणिविशेषान्तरस्योत्तेजकत्वमुपपद्यत इति ।

**उत्थाप्याकाङ्क्षा**–( आकाङ्क्षा ) अनियताकाङ्क्षा । ( राम० १। पृ० २ ) यथा, उदयति चैन्द्रः कुमुदबान्धव इत्यादौ चन्द्रपद-कुमुदबान्धवपदयोरनियताकाङ्क्षा । ( स्व० )

**उत्थिताकाङ्क्षा**–( आकाङ्क्षा ) नियताकाङ्क्षा । यथा, क्रियाकारकपदानां परस्पराकाङ्क्षा । यथा वा, पुत्रादिपदानां पित्रादिरूपप्रतियोगिवाचकपदाकाङ्क्षा नियता । ( राम० १। पृ० २ )

**उत्पत्तिः**–१ आद्यक्षणसंबन्धः । स च [ क ] स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगिक्षणसंबन्धः । (अत्मत०व्या०शिरोम०) (वाच०) (म०प्र० १। पृ० १२ ) ( त० प्र० १ )

[ ख ] स्वाधिकरणक्षणध्वंसानाधिकरणक्षणसंबन्धो वा । ( म० प्र० १। पृ० १२ ) ( त० प्र० १ ) यथा उत्पत्तिमानभावो ध्वंस इत्यादावुत्पत्तिः । यथा वा, घटपटादेरुत्पत्तिः । ( स्व० )

---

१ अत्र समाप्तपुनरात्तत्वाख्यः काव्यदोषोऽस्तीति बोध्यम् ।

२ नियतत्वं चात्रावश्यंभावित्वम् ।

३ अत्र च पुत्र इत्युक्ते कस्येत्याकाङ्क्षोदयाद्देवदत्तस्येत्याद्यपेक्ष्यत इति देवदत्तस्येति षष्ठ्यन्तपद–पुत्रपदयोर्नियताकाङ्क्षेति ज्ञेयम् ।

४ अत्र बहवो विप्रतिपद्यन्ते– असतः सदुत्पद्यते इति बौद्धाः । प्रागुत्पत्तेरसत् कारणव्यापारादुत्पद्यते* इति नैयायिकाः । प्रागुत्पत्तेः सदपि कारणव्यापारादभिव्यज्यते† इति सांख्याः‡ मायावादिवेदान्तिनश्च प्रतिपेदिरे ।

५ स्वम् उत्पद्यमानत्वेनाभिमतं घटादि । ( म० प्र० १। पृ० १२ ) क्षणश्च §स्वजन्यविभागप्रागभावावच्छिन्नं कर्म ।

---

* सत एव कारणात्, असतः कार्यस्य ( उत्पत्तेः प्रागसतः, उत्पत्तिकाले सद्भूतस्य ) कारणव्यापारात् उत्पत्तिरित्यर्थः ।

† अभिव्यक्तिर्यथा–पीडनेन तिलेषु तैलस्य, अवघातेन धान्येषु तण्डुलानाम्, दोहनेन सौरभेयीषु पयसः इति । ( वाच० )

‡ तत्र, सतो विवर्त इति मायावादिनां मतम्, परिणाम इति सांख्यानां मतमिति तयोर्भेदो ज्ञेयः । ( वाच० )

§ अत्र स्वम् उत्पद्यमानं कर्म । ( म० प्र० पृ० १२ )

[ग] यो यत्कालवृत्तिध्वंसयोग्यवृत्तिस्तस्य तद्वृत्तित्वमुत्पत्तिरित्यपि केचित् । ( दीधि० २ ) २ [ क ] स्ववृत्तिध्वंसप्रतियोगिकालावृत्तित्वविशिष्टस्ववृत्तित्वम् । ( दि० १।२। पृ० ९३ )

[ ख ] तदधिकरणक्षणावृत्तित्वव्याप्यस्ववृत्तिध्वंसप्रतियोगिताकसमयवृत्तित्वम् । ( दिन० १। पृ० ९२ )

[ ग ] यत्समयवृत्तिध्वंसप्रतियोगिताव्यापकं तत्कार्याधिकरणक्षणवृत्तित्वं तत्समयवृत्तित्वमिति केचित् । ( दि० ) सा द्विविधा । स्वत उत्पत्तिः, परत उत्पत्तिश्च । तत्राद्या यथा, मीमांसकनये स्वतः प्रमात्वस्योत्पत्तिः । द्वितीया यथा, घटादीनामुत्पत्तिः । ( स्व० )

**उत्पत्तिकालावच्छिन्नत्वम्**– १ स्वाधिकरणसमयध्वंसवदन्यकालसंबन्धः । (ग० पक्ष० पृ० ३९ ) यथा यदा यो घट उत्पद्यते तदा तस्य घटस्य तत्कालावच्छिन्नत्वम् । यथा वा द्वितीयक्षणपर्यन्तावस्थायिनोऽपि ज्ञानादेरुत्पत्तिकालावच्छिन्नत्वम् । ( स्व० ) २ तत्तदधिकरणसमयध्वंसाधिकरणसमयसंबन्धानामभावकूटविशिष्टत्वम् । ( ग० २। प० पृ० ४१ )

**उत्पत्तिविधिः**–( विधिः ) कर्मस्वरूपबोधको विधिः । तत्स्वरूपं द्विविधम् । द्रव्यं, देवता चेति । यथा दर्शपूर्णमासे 'आग्नेयोऽष्टाकपालो भवति' इत्यादि । ज्योतिष्टोमे 'सोमेन यजेत' इति । क्वचित् ( अग्निहोत्रं जुहोतीत्यादौ ) रूपाश्रवणेऽप्युत्पत्तिविधित्वमस्त्येव । (म०प्र०४। पृ०६२)

---

१ इदं च, महाप्रलये क्षणव्यवहारानङ्गीकारेऽपि महाप्रलयस्योत्पत्तिः संपद्यते इत्यभिप्रायेणोक्तमिति विज्ञेयम् । ( दि० १।१। पृ० ९३ )

२ तदर्थः–तत्पदमुत्पत्स्यमानपदार्थपरम् । तथा च यदधिकरणक्षणावृत्तित्वस्य व्याप्या यत्समयवृत्तिध्वंसप्रतियोगिता तस्य तत्समयवृत्तित्वम्, इति । ( राम० १।१।९२ )

३ इदं च, महाप्रलयस्याऽपि क्षणत्वं वर्तते इत्यभिप्रायेणोक्तमिति विज्ञेयम् । ( दि० १।२। पृ० ९२ )

४ स्वप्रतियोगिकत्व-स्वाधिकरणक्षणध्वंसाधिकरणक्षणानुयोगिकत्व-एतदुभयसंबन्धेन यत्किंचित्पदार्थविशिष्टसंबन्धाभाववत्त्वमिति फलितोऽर्थः । अतो नाननुगमः ।

**उत्पातः**–शुभाशुभसूचको[1] भूतविकारः । यथा वाताय कपिला विद्युदित्यादौ । ( ल० म० सुब० का ४। पृ० १०९ )

**उत्पादः**–[ क ] स्वाधिकरणसमयध्वंसानधिकरणसमयसंबन्धः ।

[ख] तत्तत्समयवृत्तिध्वंसप्रतियोगिसमयावृत्तित्वे सति तत्तत्समयसंबन्धः । यथा धर्मादुत्पद्यते सुखम्, दण्डाज्जायते घट इत्यादौ धातोरर्थः[2][3] । ( श० प्र० कार० पृ० ८१ )

**उत्पाद्यम्**—कार्यवदस्यार्थोऽनुसंधेयः ।

**उत्सर्गः**–१ उत्सर्जनवदस्यार्थोऽनुसंधेयः । २ सामान्यशास्त्रमिति मीमांसकादयो वदन्ति ।

**उत्सर्जनम्**–१ [ क ] स्वानुयोगिकप्राप्तवस्तुप्रतियोगिकसंबन्धविरहेच्छा[4] । यथा, उत्सृजति धनं देवदत्त इत्यादौ धात्वर्थः । ( स्व० )

[ ख ] त्यागः । २ कर्मविशेष इति श्रोत्रिया वदन्ति ।

**उदानः**–( वायुः ) [ क ] अन्नादेरूर्ध्वनयनादुदानः[5] । ( सि० च० १। पृ० ८ ) ( दि० १।२। पृ० ८९ )

[ ख ] अथ योऽस्योर्ध्वमुषिः, स उदानः स वायुः स आकाशः । (छान्दो० उ० )

---

१ अत्र, ज्ञाप्यज्ञापकभावश्चतुर्थ्यर्थः । तथा च 'वातरूपज्ञाप्यज्ञापिका कपिला विद्युत्' इति बोधः । ( ल० म० सुब० का० ४। पृ० १०५)

२ अत्र तादृशसंबन्धरूपधात्वर्थनिष्ठं जन्यत्वं पञ्चम्यर्थः । तथा च 'धर्मजन्यो यः स्वाधिकरणसमयध्वंसानधिकरणसमयसंबन्धस्तद्वत्सुखम्' इत्याकारको बोधः । (श० प्र० पृ० ८१)

३ वृत्तिकृतस्तु, उत्पद्यते इत्यादौ प्रागभावप्रतियोगित्वरूपमेवोत्पत्तिमत्त्वं धात्वर्थ इत्याहुः । ( श० प्र० पृ० ८२ )

४ अत्र स्वपदार्थस्तु, उत्सर्जनकर्ता देवदत्तादिः ।

५ अत्रोक्तम्—स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः । उद्वेजयति मर्माणि उदानो नाम मारुतः ॥ विद्युत्पावकवर्णः स्यादुत्थानासनकारकः । पादयोर्हस्तयोश्चापि सर्वसंधिषु वर्तते, इति ( पदार्थादर्शे ) (वाच०)

**उदाहरणम्**–(न्यायावयवः) [क] दृष्टान्त[1] उदाहरणम् । (गौ० १।१।३६)

[ख] व्याप्ति[2]प्रतिपादकं दृष्टान्तवचनम् । (त० दी० २। पृ० २२) यथा पर्वते धूमेन वह्निसाधने 'यो यो धूमवान्सोऽग्निमान् यथा महानसः' इति वाक्यमुदाहरणम् । (त० भा० २। पृ० ११)

[ग] उपनयाभिधानप्रयोजकजिज्ञासाजनकवाक्यमुदाहरणमित्यन्ये । (चि० २। अव० पृ० ८०) उदाहरणं द्विविधम् । अन्वय्युदाहरणम्, व्यतिरेक्युदाहरणं चेति । (गौ० वृ० १।३९) (चि० २।पृ० ८०)

**उदीची**–(दिक्) [क] प्राच्यभिमुखपुरुषवाम[4]प्रदेशावच्छिन्ना दिगुदीची । (वै० उ० २।२। १०) (वै० २।२।१९)

[ख] मेरुसंनिहितदेशावच्छिन्ना दिक् । (वाक्य० १।पृ०१) (न्या० बो० १।पृ० ३) यथा झळकीग्रामादुदीच्यां[5] सोलापुरग्रामः । (स्व०)

**उद्देशः**–१ [क] नामधेयेन पदार्थमात्रस्याभिधानम्[6] । (वात्स्या० १।१।२) (त० भा० पृ० १) (त० दी० १। पृ०७) यथा प्रमाण-प्रमेय-संशय-

---

१ हेतावुक्ते 'कथमस्य गमकत्वम्' इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम् । (चि० २। पृ० ८०) [ख] व्याप्तिज्ञानमुदाहरणस्य प्रयोजनम् । (त० दी० २ पृ० २२)

तल्लक्षणं चोदाहरणत्वमेव । तच्च [क] अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकव्याप्त्यभिमततदविच्छिन्ननियतव्यापकत्वाभिमतसंबन्धबोधजनकशब्दत्वम् । (चि० २ अव० पृ० ८०) [ख] अवयवान्तरार्थानन्वितार्थकावयवत्वम् । (गौ० वृ० १।३५) [ग] इतरार्थान्वितस्वार्थबोधकन्यायावयवत्वम् । (दीधि० २। पृ० १७७) तद्यथा–एतद्योगो धूमवान् स सोऽग्निमानिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । (न्या० म० २। पृ० २३–२४)

२ दृष्टान्तवचनम् दृष्टान्तकथनयोग्यावयव इत्यर्थः । (गौ० वृ० १।३५)

३ तदर्थश्च–प्रकृतहेतुमति प्रकृतहेतुव्यापकत्वविशिष्ट*साध्यबोधकवाक्यम् । (नील० २। पृ० २२)

४ अत्र वामत्वं तु शरीरावयववृत्तिजातिविशेषः । (वै० उ० २।२।१०)

५ अत्र च 'झळकीग्रामनिष्ठमेरुगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणमेरुगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः सोलापुरग्रामः' इत्यन्वयबोधः ।

६ तच्च शास्त्रस्य प्रवृत्तिः (वात्स्या० १।१।२)

---

* उदाहरणघटकसाध्यपदात्निरूढलक्षणया हेतुव्यापकत्वविशिष्टस्य साध्यस्य बोधनात् उदाहरणस्य व्याप्तिप्रतिपत्तिपरत्वमक्षतमिति बोध्यम् । (नील० २। पृ० २२–२३)

प्रयोजन-दृष्टान्त-सिद्धान्तेत्याद्यभिधानम् । ( गौ० १।१।१ ) (त० भा० पृ० ।१ ) यथावा पृथिवी-जल-तेजः-वायु-आकाश-काल-दिश्-आत्म-मनांसि इत्याद्यभिधानम् । ( स्व० )

[ ख ] वस्तुप्रतिपादकनाममात्रम् । ( नील० १। पृ० ७ )

[ ग ] लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनम् । (त० कौ० पृ० २१) यथा द्रव्यं गुणः कर्मेत्यादिकथनम् । ( स्व० ) २ इच्छाविशेषः । यथा पर्वतोद्देश्यकवह्निविधेयकानुमितिरित्यादौ । ३ शाब्दिकास्तु, उपदेशदेशः । तत्र देशश्चोच्चारणकालः । यथा 'यथोद्देशं संज्ञापरिभाषम्' इत्यादौ इत्याहुः । ४ समासकथनमुद्देश इति सुश्रुतोक्तस्तन्त्राधिकरणभेदः । ५ काव्यज्ञास्तु, उत्कृष्टप्रदेशः । ६ संक्षेप इत्याहुः । ( वाच० )

**उद्देश्यत्वम्**–[ क ] विषयताविशेषः । यथा 'पर्वतो वह्निमान' इत्यनुमितौ पर्वतस्योद्देश्यत्वम् ।

[ ख ] इच्छाविशेष्यत्वमिति केचित् । ( न्या० र० )

[ ग ] इच्छाविषयत्वम् । यथा पर्वतत्वावच्छेदेन साध्यसिद्धेरुद्देश्यतायाम् ( दीधि० २। पृ० १६८ ) इत्यादौ । यथा वा, वैयाकरणमते विप्राय गां ददातीत्यादौ विप्रे गोजन्यस्वत्वभागितयेच्छाविषयत्वमुद्देश्यत्वम् । ( वै० सा०द० सु० पृ० १९४ )

[ घ ] प्रकृतत्वम् । ( दीधि० २। पृ० १६७ ) यथा, उद्देश्यानुमिति-हेतुलिङ्गपरामर्शप्रयोजकेत्यादौ । ( चि० २। प्रतिज्ञाग्रन्थ० )

[ ङ ] शाब्दिकाश्च, यच्छब्दप्रतिपाद्यत्वे सति सिद्धत्वेन प्रतीयमानत्वे सत्यनुवाद्यत्वमुद्देश्यत्वमिति वदन्ति ।

---

१ स चानुमितौ शाब्दबोधे च योजनीयः । प्रवृत्तौ तु उद्देश्यत्वम् स्वजनकेच्छाविषयत्वम् । यथा स्वर्गकामो यजेतेत्यादिवाक्यजनितेष्टसाधनताज्ञानतः स्वर्गफलोद्देशेनैव यागे प्रवृत्तेः, इति स्वर्गस्य तत्रोद्देश्यता । ( वाच० )

२ अत्रेदं बोध्यम्–यमुद्दिश्य विधेयप्रवृत्तिः तदुद्देश्यमनुवाद्यम् । उद्देश्यविधेयभावस्थलेऽयं नियमः 'उद्देश्यवाचकपदस्य विधेयवाचकपदात्प्राक् प्रयोगः कर्तव्यः' इति । तत्रोक्तम्–अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् इति । ( वाच०) यथा पर्वतो वह्निमानित्यत्र पर्वतः ।

[ च ] मानान्तरप्राप्तत्वे सति विधेयान्वयित्वेन निवेश्यत्वमिति मीमांसकाः ।

**उद्बोधकत्वम्**[1]–स्मृतिप्रयोजकत्वम्[2] । ( स्व० ) यथा प्रणिधाननिबन्धादीनाम्[3]-मुद्बोधकत्वम् । ( गौ० ३।११३ )

**उद्भवः**–१ [ क ] बाह्यैकैकेन्द्रियग्रहणयोग्यगुणत्वात्मक उपाधिः[4] । स च रूपादिविशेषगुणगतो जातिविशेष एव रूपत्वादिव्याप्यः ।

[ ख ] उद्भूतत्ववदस्यार्थोऽनुसंधेयः ।

[ ग ] अनुद्भवाभाव एव उद्भव इति केचित् । ( वै० उ० ४।१।८ )

२ उत्पत्तिः । (मिता० अ० ३। पृ० ३९) यथा विष्णुपादोद्भवा गङ्गा, स्थैर्यं चतुर्थे त्वङ्गानां पञ्चमे शोणितोद्भव इत्यादौ । ( याज्ञ० स्मृ० अ० ३। श्लो० ८० ) ( वाच० )

**उद्भूतत्वम्**[5]–[ क ] प्रत्यक्षत्वप्रयोजको धर्मविशेषः । (त०दी०१। पृ० १३) स च यथा रूपत्वव्याप्यजातिमत्त्वम्[6] । ( चि० १ ) यथा वा उद्भूतरूपं नयनस्य गोचरः, उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ( भा०प० श्लो० ९६, ९७) इत्यादौ नीलत्वादिव्याप्यानुद्भूतत्वाभावकूटवत्त्वम् । (स्व०)

[ ख ] प्रत्यक्षयोग्यरूपरसगन्धस्पर्शसंयोगाद्यन्यतमत्वम् ।

---

१ उद्बोधकानि च ( प्रणिधानादीनि ) स्मृतिजनकस्य*संस्कारस्य सहकारीणि भवन्ति, इति बोध्यम् । ( त० भा० पृ० ३७ )

२ अत्र प्रयोजकत्वं च कारण-कारणतावच्छेदकसाधारणं ज्ञेयम् । तेन, प्रणिधानादिषु कस्यचित्स्वरूपसतः, कस्यचिज्ज्ञातस्यापि स्मारकत्वेऽपि नासंग्रहः ।

३ अत्र 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इति प्रायिको नियमो द्रष्टव्यः ।

४ अयं च रूपप्रत्यक्षे प्रयोजक इति ज्ञेयम् । ( वै० उ० ४।१।८ )

५ इदं च केषुचित् रूपरसगन्धस्पर्शेषु चतुर्षु वर्तते इति, बहूनां मतम् ।

६ इयं जातिश्च घटादिगतशुक्लादिवृत्तिरिति विज्ञेयम् ।

---

* अत्रेदं बोध्यम्–उद्बुद्ध एव संस्कारः स्मृतिं जनयति । तत्रोद्बोधश्च [ क ] सहकारिलाभः । ( त० भा० पृ० ३७ ) [ ख ] स्मृतिजननाय संस्कारोद्दीपनम् । ( वाच० )

[ग] उद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वमिति जरन्नैयायिकाः ।

[घ] [१] अनुद्भूतत्वं[1] जातिस्तदभाव उद्भूतत्वमिति गङ्गेशोपाध्यायः । (सि०च० १। पृ० ४-५) केचित्तु, [२] शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना, तत्तदभावकूटवत्त्वमेवोद्भूतत्वमित्याहुः । (नील० १। पृ० १३)

**उद्वापः**—१ श्रूयमाणपदपरित्यागः पश्चात् । २ उद्धरणम् । (वाच०) यथा 'घटं नय गामानय' इत्यादिवाक्यादावावापोद्वापाभ्यामित्यादौ । (मुक्ता० ४। पृ० १७६)

**उन्नयनम्**—१ अनुमानम् । २ वितर्कः । ३ यज्ञीयः पूतभृदाख्यः पात्रविशेष इति याज्ञिका आहुः । ४ ऊर्ध्वप्रापणमिति काव्यज्ञाः । (वाच०) ५ संस्कारविशेष इति मौहूर्तिकाः ।

**उन्नायकत्वम्**—ज्ञापकत्वम्[2] । यथा पर्वते धूमेन वह्निसाधने वह्निमत्पर्वतोन्नायकत्वं वह्निव्याप्यवत्पर्वतस्य । (स्व०)

**उन्नेयत्वम्**—ज्ञाप्यत्वम्[3] । यथा पर्वते धूमेन वह्निसाधने वह्निव्याप्यवत्पर्वतोन्नेयत्वं वह्निमत्पर्वतस्य । (स्व०)

**उपकारः**—[क] सहकारिलाभः । यथा घटाद्युत्पत्तौ दण्डाद्युपकारः । (स्व०) यथा वा, स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः (भा० प०श्लो० १०४) इत्यादौ, स्पार्शनप्रत्यक्षे कारणात्मकस्य स्पर्शस्य उपकारः । (मुक्ता० गु० पृ० १९७)

[ख] सहकारिभिः कारणस्य कार्योत्पादनार्थमानुगुण्यम् । यथा मीमांसकमते दर्शादियागस्य प्रधानाऽपूर्वसाधनेऽङ्गादीनां प्रयाजादीनां कलिकापूर्वसाधनद्वारा तदानुगुण्यम् । यथा वा बौद्धमते, कुर्वद्रूपतारूपस्य

---

१ तदुभयमप्ययुक्तम् । तथाहि—अनुद्भूतत्वं जातिर्न भवति, शुक्लत्वादिना संकरात् । एवमुद्भूतत्वमपि जातिर्न भवतीति विज्ञेयम् । (सि० च० १ । पृ० ४) अत्र नव्याः, उद्भूतत्वं जातिः । न च शुक्लत्वादिना सांकर्यम् । गुणसांकर्यं न बाधकमित्याहुः । (नी० ल० १ । पृ० १३)

२ अत्र ज्ञापकत्वं च जनकज्ञानविषयत्वम् ।

३ अत्र ज्ञाप्यत्वं च जन्यज्ञानविषयत्वमिति बोध्यम् ।

बीजादेरुच्छूनत्वस्य संपादनरूपातिशयाधानमुपकार इति । ( सर्व० ) ( वाच० )

**उपक्रमः**–१ [ क ] आरम्भः ।

[ ख ] उपायज्ञानपूर्वकारम्भो वा । यथा 'ॐ ज्योतिरुपक्रमात्तु तथा ह्यधीयीत एके ॐ' (ब्र० सू० १।४।१०) इत्यादौ । २ तात्पर्यनिर्णायको हेतुविशेषः। यथा वेदान्तिनां मते, उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च हेतुस्तात्पर्यनिर्णये इत्यादौ । ( वाच० )

**उपचयः**–१ वृद्धिः। यथा, अवयवोपचय इत्यादौ । २ उन्नतिः । यथा, स्वशक्त्युपचये केचित् परस्य व्यसने परे (माघः, स०२। श्लो०५७) इत्यादौ ।

**उपचारः**–१ [ क ] सहचरणादिनिमित्तेनातद्भावे तद्वदभिधानम्। ( वात्स्या० १।२।१४ )

[ ख ] शक्यार्थत्यागेन लक्षणयाऽन्यार्थबोधनम् । यथा मञ्चाः क्रोशन्ति, अग्निर्माणवक इत्यादौ । २ ज्ञानम् । यथा 'तदर्थे व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः' ( गौ० २।१२४ ) इत्यादावुपचारो ज्ञानम् । ( गौ० वृ० २।१२४ ) ३ व्यवहारः। यथा, स्मृतेः उपचारात् अन्यार्थदर्शनाच्च (शब० भा० ) इत्यादौ । ४ चिकित्सेति भिषजो वदन्ति । ५ पूजा, सेवा, धर्मानुष्ठानं चेति काव्यज्ञाः । ६ सादृश्यमित्यालंकारिका आहुः । (वाच० )

**उपचारच्छलम्**–( छलम् ) [ क ] धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् । (गौ० १।२।१४) अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे धर्मविकल्पनिर्देशे । यथा मञ्चाः क्रोशन्तीति । अर्थसद्भावेन प्रतिषेधः, मञ्चस्थाः पुरुषाः क्रोशन्ति, न तु मञ्चाः क्रोशन्ति । ( वात्स्या० १।२।१४ )

---

१ अत्र तु [ क ] अन्वयानुपपत्तिरेवोपचारबीजम् । यथा– 'आत्मकर्म हस्तसंयोगाच्च' (वै० ५।१।६ ) इत्यादौ आत्मशब्दः शरीरावयवपरः, उपचारात् इति (वै०उ० ५।१।६) [ ख ] तात्पर्यानुपपत्तिरेवोपचारे बीजमिति तु वयम् ।

[ ख ] शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रतिषेधः स उपचारच्छलम् । यथा मञ्चाः क्रोशन्ति, नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति, न तु मञ्चाः । एवम्—घटस्य कथं नीलरूपाभेदः ? । एवम् अहं नित्य इति शक्त्या प्रयुक्ते अमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोप्युपचारच्छलम् । वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम् । ( गौ० वृ० १।५४ )

**उपजीवकत्वम्**– [ क ] कार्यत्वम् । यथा घटस्य दण्डोपजीवकत्वम् । ( स्व० ) यथा वा, संगतिश्च प्रत्यक्षेणोपजीव्योपजीवकभाव इत्यादावनुमाने प्रत्यक्षकार्यत्वम् । ( राम० २ पृ० १३४ )

[ ख ] प्रयोज्यत्वम् । यथा शाब्दबोधस्योपमितिप्रयोजकत्वम् । (राम० १३४)

**उपजीव्यत्वम्**–१ [ क ] कारणत्वम् ।

[ ख ] प्रयोजकत्वम् । उदाहरणं तु पूर्वोक्तमेवात्रानुसंधेयम् । ( स्व० ) उपजीव्यत्वं च द्विविधम् । स्वसत्ताप्रयोजकत्वम्, स्वज्ञानप्रयोजकत्वं च । (उपजीव्योपजीवकभावश्च ज्ञानसत्त्वयोः प्रयोज्यप्रयोजकभावः ) । यथा एकस्यान्यसत्ताप्रयोजकत्वम्, अपरस्य च तत्प्रयोज्यसत्ताकत्वम् । एवम् अन्यज्ञानप्रयोजकत्वम्, अन्याधीनज्ञानविषयत्वम् । २ काव्यज्ञास्तु, उपजीवनोपायवान् । यथा, सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः । अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ( भा० आ० अ० २३ ) इत्यादौ, इत्याहुः । ( वाच० )

**उपदेशः**–१ शब्दः । ( गौ० वृ० २। ९२ ) यथा, आप्तोपदेशसामर्थ्याच्छब्दार्थे संप्रत्ययः ( गौ० २। ९२ ) इत्यादौ । २ प्रतिपत्त्यनुकूलव्यापारः । यथा शिष्यं धर्मं वदति, वक्ति, ब्रूते, उपदिशति, आचष्टे इ-

१ अत्र धात्वर्थघटकप्रतिपत्तौ शिष्यस्याधेयत्वेन, धर्मस्य च विषयत्वेनान्वयात् 'धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापार*वान्' इत्याकारको बोधः । (श० प्र० पृ० ९८ )

* अत्र तादृशव्यापारो 'धर्मः सेव्यताम्' इत्यादिको गुर्वाद्यभिलापः । ( श० प्र० पृ० ९८)

त्यादौ वदप्रभृतिधात्वर्थः। ( श० प्र० पृ० ९८ ) ३ अनुशासनम्। यथा, आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ( मनु० अ० १२। श्लो० २०६) इत्यादौ। ४ हितकथनम्, प्रवर्तकवाक्यम् वा। यथा, धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः (मनु० अ० ८। श्लो० २७२) इत्यादौ। ५ शिष्याय सविधानं मन्त्रकथनमुपदेश इति मान्त्रिकाः। ६ दीक्षाभेद इति तान्त्रिकाः। ( वाच० ) ७ आद्योच्चारणमुपदेश इति शाब्दिका वदन्ति।

**उपधा**—१कामक्रोधादयो भावदोषाः। एतेऽधर्मजनकाः। ( त० व० ) २ धर्मार्थकामाद्युपन्यासेन अमात्यपरीक्षणम्। यथा 'चिन्तावन्तः कथां चक्रुरुपधाभेदभीरवः' ( भट्टिः ) इत्यादौ इति नीतिशास्त्रज्ञाः। ३ छलम्। यथा, उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ( मनु० अ० ८। श्लो० १९३ ) इत्यादौ, इति व्यवहारज्ञाः। ४ अलोन्त्यात्पूर्व उपधेति शाब्दिका वदन्ति। ( वाच० )

**उपधानम्**—१ उपधायकत्ववदस्यार्थोऽनुसंधेयः। (स्व०) २ व्रतविशेष इति धर्मज्ञाः। ३ विशेषः। ४ प्रणयश्च इति काव्यज्ञा आहुः। (वाच०)

**उपधायकत्वम्**—१ ( कारणत्वम् ) अव्यवहितपूर्ववृत्तित्वसंबन्धेन फलविशिष्टत्वम्। यथा परामर्शस्यानुमित्यात्मकफलोपधायकत्वम्। यथा वा विशेषणज्ञानस्य विशिष्टज्ञानात्मकफलोपधायकत्वम्। ( स्व० )

**उपधिः**—१ अन्यथा स्थितस्य वस्तुनोऽन्यथाप्रकाशनरूपो व्यापारः। यथा, योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ( मनु० अ० ८। श्लो० १६५ ) इत्यादौ। २ छलमिति काव्यज्ञा वदन्ति। ( वाच० )

**उपधेयः**—१ यत्किंचिद्धर्मविशिष्टो धर्मी। यथा उपधेयसंकरेऽप्युपाध्यसंक-

---

१ तदुक्तम्—धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्। आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः, इति।

रौदित्यादौ । ( ख० ) २ मन्त्रविशेषेण स्थापनीयो इष्टकादिरिति याज्ञिका आहुः । ( वाच० )

**उपनयः**—( न्यायावयवः ) [ क ] उदाहरणापेक्षः साध्यस्योपसंहारः । ( गौ० १।१।३८ )

[ ख ] प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षबोधजनको न्यायावयवः । ( गौ० वृ० १।३७ )

[ ग ] पक्षे व्याप्तलिङ्गोपसंहारः । ( त० भा० पृ० ४३ )

[ घ ] उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकं वचनम् । ( सि० च० २। पृ० २९ )

[ ङ ] व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनम् । ( त० दी० २ । पृ०

---

१ अत्रेदमुदाह्रियते—वायुर्गन्धवान् स्नेहादित्यादौ उपधेयस्य दोषाश्रयस्य धर्मिणः ( स्नेहादेर्हेतोः ) संकरेऽपि ( ऐक्येऽपि ) उपाधीनां व्यभिचार–विरोधादिरूपदोषात्मकधर्माणामसांकर्यात् ( भेदेन प्रतीयमानत्वात् ) स्नेहादौ पृथक् तत्तद्दोषव्यवहार उपपद्यत इति । एवमन्यत्राप्यूह्यम् ।

२ उदाहरणानन्तरं भवतु व्याप्तिस्तथापि [ क ] 'व्याप्तं किं पक्षे वर्तते नवा' इत्याकाङ्क्षायां व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः । [ ख ] पक्षधर्मताज्ञानमुपनयस्य प्रयोजनम् । ( त० दी० २ । पृ० २२ )

उदाहरणान्तएव प्रयोग इति न वाच्यम् । तृतीयलिङ्गपरामर्शस्य व्याप्तपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात्, तदनभ्युपगमेपि पक्षधर्मताया अलाभात् । ( चि० २ । पृ० ८१ )

लक्षणं तूपनयत्वमेव । तच्च [ क ] अनुमितिकारणतृतीयलिङ्गपरामर्शजनकावयवत्वम् । ( चि० २ । अव० पृ० ८१ ) [ख] इतरोपस्थापितार्थविशेषणकस्वार्थबोधजनकन्यायावयवत्वम्* । [ ग ] स्वार्थविशेष्यकेतरार्थान्वयबोधजनकन्यायावयवत्वम् । ( दीधि० २। पृ० १७७-१७८ ) [ घ ] एतद्वह्निव्याप्यधूमवानयमिति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० २। पृ० २४ )

३ साध्यस्य पक्षस्योदाहरणापेक्ष उदाहरणानुसारी य उपसंहार उपन्यासः, स इत्यर्थः । ( गौ० वृ० १।३७ )

---

* उपनयार्थे विशेष्ये निगमनार्थस्य विशेषणत्वेनान्वयाल्लक्षणसमन्वय इति बोध्यम् । एवमुत्तरत्रापि ज्ञेयम् ।

२२ ) यथा 'तथा चायम्', 'तद्व्याप्यहेतुमान्', 'तद्वान्' वा इति वाक्यमुपनयः । ( दीधि० २ । अव० पृ० १७० ) उपनयो द्विविधः । अन्वय्युपनयः, व्यतिरेक्युपनयश्चेति । ( गौ० वृ० १।३७ )

**उपनयः**–१ ज्ञानम् । यथा 'सुरभि चन्दनम्' इत्यादिप्रत्यक्षस्य जनको ज्ञानलक्षणः संनिकर्ष[2] उपनयः[3] । ( मू० म० १ ) ( ग० बाध० पृ० २१ ) अधिकं तु 'ज्ञानलक्षणः' एतद्व्याख्याने सविस्तरं संपादयिष्यते । २ उपनयनाख्यः संस्कारविशेष इति धर्मज्ञा वदन्ति ।

**उपनिषत्**[4]–१ ब्रह्मविद्या । २ ब्रह्मविद्याप्रतिपादकं वेदशिरोभागो वेदान्तशास्त्रम् । यथा, ऐतरेय–कठवल्ली–ईशावास्य-केन-प्रश्न इत्यादिः १०८ ।

**उपनीतम्**–ज्ञानलक्षणसंनिकर्षेण ज्ञातम् । यथा, उपनीतं विशेषणतयैव भासते, मानसे तु नायं नियम इत्यादौ । ( वाच० )

**उपनीतभानम्**–१ उपनीततत्तादिविषयकत्वम् । यथा प्रत्यभिज्ञात्मके 'घटो नास्ति,' 'सुरभि चन्दनम्' इत्यादौ प्रत्यक्षे उपनीतभानम्[5] । ( ग० बाध० पृ० २१ ) ( दीधि० २ । पृ० २२२ ) २ लौकिका-

---

१ अत्रेदं बोध्यम्—'तथा चायम्' इत्याकारः प्राचामुपनयः । नव्यानां तु 'तद्व्याप्यहेतुमान्, तद्वान्' वेत्याकार उपनयः । ( दीधि० पृ० १७० ) एवं च पर्वते धूमेन वह्निसाधने 'वह्निव्याप्यधूमवानयम्' इति वाक्यमुपनयः । 'तथाचायम्' 'तद्वान्' इत्यत्र तच्छब्देन वह्निव्याप्यधूमस्य, 'तद्व्याप्यवान्' इत्यत्र तु तच्छब्देन साध्यस्य परामर्शात् । ( ग० २ । अव० पृ० ३५ ) ( त० भा० पृ० ४३ ) ( त० सं० )

केचित्तु, पर्वतो वह्निमानित्यादौ 'तथा चायम्' इत्याकारः, 'वह्निमद्व्याप्यधूमवानयम्' इत्याकारो वा उपनय इति प्राहुः । ( दीधि० पृ० १७० )

२ स्वविषये मनसः संनिकर्ष इत्यर्थः । ( ग० बाध० पृ० २१ )

३ अत्र व्युत्पत्तिः 'नीयते उपस्थाप्यते ज्ञानविषयतामापाद्यतेऽनेन' इति, करणे अच् ।

४ अत्र व्युत्पत्तिः—सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या, तत्पराणां सहेतोः संसारस्यात्यन्तावसादनम्, उपनिपूर्वस्य सदेस्तदर्थत्वात् । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । ( बृ० शां० भा० )

५ अत्र, 'उपनीतस्य ( ज्ञातस्य ) भानम् ( विषयिता )' इति विग्रहः ।

अत्रायं विशेषोऽवधार्यः—इदमुपनीतभानं च प्रत्यक्षे एव तिष्ठति, न त्वनुमित्यादावपि, इति । ( दीधि० बाध० पृ० २२२ ) ( ग० बाध० पृ० २१ )

लौकिकोभयसंनिकर्षजन्यं ज्ञानम् । यथा 'सुरभि चन्दनम्' इति प्रत्यक्षमुपनीतभानं भवति । ( स्व० )

**उपन्यासः**—१ वाक्योपक्रमः । २ वाक्यप्रयोगः । यथा, तस्माद्ब्रह्मजिज्ञासोपन्यासमुखेन ( शा० भा० ) इत्यादौ । ३ विचारः । ( कुल्लूकभट्टः ९ । ३१ ) यथा, पुण्यमुपन्यासं निबोधत । ( मनु० अ० ९ । श्लो० ३१ ) इत्यादौ । ४ विश्वासेनान्यसमीपे द्रव्यन्यासः ( उपनिधिः ) इति व्यवहारज्ञा आहुः ।

**उपपत्तिः**—१ ज्ञानम् । यथा, समानानेकधर्मोपपत्तेः ( गौ० १।१।२३ ) इत्यादौ ज्ञानम् । यथा वा, अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः ( गौ० १।१।४० ) इत्यादावारोपात्मकं ज्ञानम् । ( गौ० वृ० १।१।४० ) ( गौ० वृ० १।१।२३ ) २ साधकप्रमाणोपन्यासरूपा युक्तिः । ( वै० सा० द० ) यथा, श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरित्यादौ । ३ संगतिः । यथा, उपपत्तिमदूर्जिताश्रयम् ( वचनम् ) ( किरा० स० २ । श्लो० १ ) इत्यादौ । ४ हेतुः । ५ उपायः; ६ प्राप्तिः; ७ सिद्धिः; इति काव्यज्ञा वदन्ति । ( वाच० )

**उपपत्तिसमः**—( जातिः ) [ क ] उभयकारणोपपत्तेरुपपत्तिसमः । ( गौ० ५।२५ ) यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दः, ( तदा ) नित्यत्वकारणमप्युपपद्यतेऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः । ( वात्स्या० ५।१।२५ )

[ ख ] व्याप्तिमपुरस्कृत्य यत्किंचिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानम् । यथा, शब्दोऽनित्यः कृतकत्वादित्युक्ते यथा त्वत्पक्षेऽनि-

---

१ तत्र, सौरभ्यांशेऽलौकिकसंनिकर्षः, चन्दनांशे तु लौकिकसंनिकर्षश्चैतदुभाभ्यां जन्यत इति बोध्यम् ।

२ अत्र 'उपनीतस्य भानं यत्र तत्' इति व्युत्पत्तिर्द्रष्टव्या ।

३ बाधदेशनाऽऽभासः, प्रतिरोधदेशनाऽऽभासो वाऽयम्, इति ज्ञेयम् । ( गौ०वृ० ५।२६ )

त्यत्वे प्रमाणमस्ति तथा मत्पक्षोऽपि सप्रमाणकः त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत् । तथा च बाधः, प्रतिरोधो वा । ( गौ० वृ० ५।२९ )

[ ग ] उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम् । यथा, यदि चानित्यत्व-साधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वम् तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यादिति । ( नील० पृ० ४४ )

**उपपदम्**—१समीपोच्चारितः; पूर्वमुच्चार्यः शब्दः । यथा, तस्याः स राजोप-पदं निशान्तम् ( रघु० स० १६ । श्लो० ४० ), फलन्ति कल्पोपप-दास्तदेव ( माघ० स० ३ । श्लो० ५९ ) इत्यादौ । २ नामोत्तर-मुच्चारितः शर्मवर्मादिशब्दः । ३ शाब्दिकास्तु, सप्तम्यन्तेन निर्दिश्यमानं पदम् । यथा " कर्मण्यण् " ( पा० सू० ३।२।१ ) इत्यादौ 'कर्मणि' इति सप्तम्यन्तं पदं अणुप्रत्ययविधाने उपपदम्, इत्याहुः । ( वाच० )

**उपपदसमासः**—( यौगिकं नाम ) धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं श-ब्दान्तरानुत्तरं सत् यादृशार्थस्य बोधं प्रत्यसमर्थम्, तादृशार्थकान्यपदकः समासः स उपपदसंज्ञकः । यथा कुम्भकारः[2], क्षीरपायीत्यादावुपपदस-मासः[3] । (श० प्र० पृ० ६६) उपपदसमासश्च कर्मकर्त्राद्युपपदभेदाद्बहु-विध एव । वैयाकरणास्तु, कारकमात्रोपपदकत्वात् षड्विध[4] एवेत्याहुः । ( श० प्र० पृ० ६७ )

**उपभोगः**—विषयसेवनजन्यसुखविशेषः । यथा 'स्त्रीणां स्वपतिदायस्तु उपभोग-फलः स्मृतः' ( महाभा० दान०, वीरमित्रो० अ० २ पृ० ६२८ ) इत्यादावुपभोगः ।

---

१ अत्रोत्तरपदशब्दः समासचरमावयवे रूढ इत्यनुसंधेयम् ।

२ अत्र तु ( समासे ) धातुकृद्भ्यां निष्पन्नं कर्त्राद्यर्थकं कारादिपदम् पदान्तरानुत्तरं सत् कर्त्रादेरन्वयबोधक्षममिति लक्षणसमन्वयो बोध्यः । ( श०प्र० पृ० ६६ ) एवं क्षीरपायी-त्यादावप्यूह्यम् ।

३ अयं च " उपपदमतिङ् " ( पा० सू० २।२।१९ ) इत्यनेन भवतीति ज्ञेयम् ।

४ अत्रेदमवधेयम्—ब्रह्मभूयमित्यादौ कारकभिन्नेनाप्युपपदेन समास इति न षड्विधत्वमा-त्रं तस्य, किंत्वसावुपपदसमासोऽनेकविध एवेति । असूर्यपश्याऽप्युपपदसमास एव ( श० प्र० पृ० ६७ )

**उपमर्दः**–१ [ क ] एकरूपनिवृत्तौ रूपान्तरोपजनः । (वात्स्या० २।२।५९) [ ख ] धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः । यथा अस्तेर्भूः[1] । ( गौ० वृ० २।१२२ ) यथा वा, ब्रूञो वचिः, स्था तिष्ठ इत्यादेशः । ( वाच० ) २ नाश इति मायावादिनः । ३ निष्पीडनमिति च काव्यज्ञा वदन्ति ।

**उपमा**–१ उपमानजन्यं शब्दशक्तिज्ञानम् । यथा, गवयादिपदानां तु शक्तिधीरुपमा फलम् (भाषा० ३ । श्लो० ८१) इत्यादौ सादृश्यज्ञानजन्या 'गवयो गवयपदवाच्यः' इत्युपमितिः । २ गवादिसादृश्यज्ञानम् उपमानमिति मायावादिनः । ३ [ क ] अर्थालंकारविशेष इत्यालंकारिकाः । [ ख ] सादृश्यम् । यथा, स्फुटोपमं भूतिसितेन शंभुना ( माघः,स० १। श्लो० ४ ) इत्यादौ इति काव्यज्ञा वदन्ति । ( स्व० )

**उपमानम्**[2]–१ ( प्रमाणम् ) [ क ] प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्[3] । ( गौ० १।१।६ ) प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति । यथा गौरेवं गवय इति । किं पुनरत्रोपमानेन क्रियते?, यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति समाख्यासंबन्धप्रतिपत्तिरुपमानार्थ इत्याह । यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियार्थसंनिकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसंबन्धं प्रतिपद्यत इति ।

यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उप-

---

१ तथाहि–व्याकरणशास्त्रे च, आर्धधातुकप्रत्ययविवक्षायामस्धातोर्भू इत्यादेशो बभूवेत्यादि रूपं सिध्यतीति विज्ञेयम् ।

२ अत्र, उपमीयतेऽनेनेति करणे ल्युट् । (ल० म०) उपमानस्य प्रमाणान्तरत्वमित्थम्–उपमितेः प्रत्यक्षादिप्रमितिभ्योऽतिरिक्तत्वात् विलक्षणोपमितिकरणत्वेनोपमानमपि प्रमाणान्तरम्, इति । ( म० प्र०३ पृ० ३५ ) लक्षणं तु [ क ] उपमितिकरणत्वम् । चि० ३। पृ० १७ ) [ ख ] शाब्दिकास्तु, साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम्, इत्याहुः । ( ल० म० )

३ तदर्थश्च–[क] प्रसिद्धस्य पूर्वप्रमितस्य गवादेः साधर्म्यात्सादृश्यात् तज्ज्ञानात् साध्यस्य गवयादिपदवाच्यत्वस्य साधनं सिद्धिरुपमानमुपमितिर्यत इत्यध्याहारेण च करणलक्षणम् । [ख] अथवा–साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम् । ( गौ० वृ० १।१।६

मानात्संज्ञासंज्ञिसंबन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति । (वात्स्या० १।१।३ )

[ ख ] सप्रतियोगिकपदार्थज्ञानेन तत्प्रतियोगिक(?) पदार्थज्ञानम् ।(चि० ३। पृ० ८ )

[ ग ] उपमितिकरणम्[1] । तच्च [ १ ] सादृश्यज्ञानम्[2] । यथा 'गोसदृशो गवयः' इति ज्ञानमुपमानं[3] भवति । ( त० सं० ३ ) ( न्या० म० ३। पृ० २४ ) [ २ ] अतिदेशवाक्यार्थज्ञानम्[4] । ( न्या० बो० ३। प० १९ ) [ ३ ] अतिदेशवाक्यार्थस्मरणसहकृतं सादृश्यविशिष्टज्ञानम् । यथा गोसादृश्यविशिष्टपिण्डज्ञानम् । ( त० भा० ३ प० १७ ) ( सि० च० ३ । प० ३० ) [ ४ ] आगमस्मृतिसहितं सादृश्यज्ञानमुपमानमिति जरन्नैयायिका जयन्तप्रभृतयः । ( चि० ३। पृ० १० ) [ घ ] सादृश्यप्रमाकरणमिति केचित् ( मायावादिनः ) । ( वेदान्तपरि० ) ( चि० ३ । पृ० १ ) । वैशेषिकाः सांख्याश्च, पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात्पदवाच्यत्वस्यानुमितिरेवातो नोपमानं[5] प्रमाणान्तरमित्याहुः ।

---

१ अत्रेदं बोध्यम्—उपमितिकरणमुपमानमित्यत्र उपमानमित्यस्य उपमानपदवाच्यमित्यर्थः । तथा च उपमानपदवाच्यमुपमितिकरणमिति वाक्यार्थः । यथाश्रुते उपमानशब्दस्य करणव्युत्पत्त्योपमितिकरणार्थकत्वेनानन्वयापातात् । दण्डवान् दण्डवानित्यत्रोद्देश्यतावच्छेदकविधेययोरैक्येऽनन्वयस्य सर्वसंमतत्वादिति । ( म०प्र० ३। पृ० ३४ )

२ सादृश्यप्रकारकं ज्ञानमित्यर्थः । ( सि० च० ३। प० । २९ ) अत्र भाष्यम्—उपमानं सारूप्यज्ञानम् । यथा गौरेवं गवय इति । सारूप्यं तु सामान्ययोगः। (वात्स्या० १।१।३)

३ उपमानस्योपमितिकरणत्वं चेत्थम्— कश्चिद्गवयशब्दवाच्यमजानन्कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन्गोसदृशं पिण्डं पश्यति । तदनन्तरं 'अयं गवयपदवाच्यः पिण्डः' इति संज्ञासंज्ञिसंबन्धप्रतीतिरुपमितिरुत्पद्यते, सैव फलम् इति । ( त० सं० ) ( त० भा० प० १७ ) ( सि० च० ३। प० ३० )

४ अत्रेदं बोध्यम्—अतिदेशवाक्यार्थस्य ज्ञानं ( अनुभवः ) करणम्, अतिदेशवाक्यार्थस्मरणं व्यापारः, उपमितिः फलम्, इति प्राचीननैयायिकमतमेतदिति ।

५ तच्चिन्त्यम्—व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेः शब्दादितोऽनुभवसिद्धत्वात्, इति । ( नील० ३। पृ० २७ ) ( न्या० म० ३।२४ ) ( चि० ३ ) ( भा० प श्लो० १४२ )

( सांख्य० कौ० ) ( नील० ३ । पृ० २७ ) नैयायिकास्तु, [ १ ] 'अनुमिनोमि' इत्यनुव्यवसायविषयीभूताऽनुमितिर्यथा प्रमित्यन्तरम् तथा 'उपमिनोमि' इति विलक्षणानुव्यवसायविषयीभूतोपमितिरपि प्रमित्यन्तरम्, इति तत्करणत्वेनोपमानं प्रमाणान्तरमिति प्राहुः ( राम० ३ । पृ० १७३ ) । [ २ ] अत्र वयं तु ब्रूमः—'अयं गवयपदवाच्यः' इत्याद्युपमितौ गवयादिशब्दवाच्यस्येव ( गवयत्वविशिष्टपिण्डस्य ) गवयादिशब्दस्यापि विषयत्वेन सकलप्रमितिवैलक्षण्येनोपमितेः सर्वैरप्यभ्युपगन्तव्यतया तत्करणत्वेनोपमानस्य प्रमाणान्तरत्वमावश्यकम्, इति ।

उपमानं त्रिविधम् । सादृश्यविशिष्टपिण्डज्ञानम्, असाधारणधर्मविशिष्टपिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानं चेति । तत्राद्यम्—गोसादृश्यविशिष्टपिण्डज्ञानम् । द्वितीयम्—खड्ग[1]मृगज्ञानम् । तृतीयम्—उष्ट्र[2]ज्ञानम् । ( सि० च० ३। पृ० ३० ) प्रकारान्तरेणोपमानं त्रिविधम्[3] । साधर्म्योपमानम्, वैधर्म्योपमानम्, धर्ममात्रोपमानं चेति । ( म० प्र० ३। पृ० ३४ ) तत्राद्यम्—गोसदृशपिण्डानुभवः । द्वितीयम्—' इयं (पृथिवी) जलादिविधर्मगुणवती ' इत्यनुभवः । तृतीयम्—'गन्धवती पृथिवी' इत्यनुभवः[4], इति । ( न्या० म० पृ० २४–२९ ) । ( म० प्र० ३। पृ० ३९ ) ( दिन० ३। पृ० १७२ ) २ उपमितिः । ३ आलंकारिकास्तु, सादृश्यप्रतियोगि उपमानम् । यथा चन्द्र इव मुखमित्यादौ चन्द्र उपमानम्, इत्याहुः ।

---

१ अत्रासाधारणधर्मश्च नासिकालसदेकशृङ्गत्वम्, इति ज्ञेयम् । ( सि०च० ३। पृ० ३० )

२ अत्र च वैधर्म्यं तून्नतपृष्ठदीर्घग्रीवादि ऊह्यम् ।

३ अत्र, ( १ ) 'अयं ( गवयः ) गवयपदवाच्यः' इति, ( २ ) 'इयं ( पृथिवी ) पृथिवीपदवाच्या' इति, 'इयं पृथिवीपदवाच्या' इति च क्रमेणोपमितय उत्पद्यन्ते इति विज्ञेयम् । न्या० म० ३। पृ० २४–२५ ) ( म० प्र० ३। पृ० ३५ ) ( दि० ३। पृ० १७२ )

४ एवम्—'कीदृक् करभपदवाच्यः' ?, 'लम्बग्रीवः प्रलम्बोष्ठः कठोरकण्टकाशी (?)' इति प्रश्नोत्तरेऽपि धर्ममात्रोपमानं ज्ञेयम् । ( म० प्र० ३। पृ० ३५ )

उपमितिः[1]–( अनुभवः ) [ क ] नियतधर्मसमानाधिकरणप्रवृत्तिनिमित्त[2]ज्ञानम् ।

[ ख ] अगृहीतसमयसंज्ञया वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरिच्छेदः ।

[ ग ] किंचिद्वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तपरिच्छेदः । यथा

---

१ लक्षणं तूपमितित्वमेव । तच्च [ क ] उपमिनोमीत्यनुभवसिद्धो* जातिविशेषः । [ ख ] शब्दविषयकत्वाव्यभिचारिजातिमत्परोक्षत्वम्† । ( न्या० म० ३।पृ० २४ ) ( नील० ३। पृ० २७ ) [ ग ] सादृश्यविशिष्टे पदवाच्यत्वप्रकारकस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् । ( वाक्य० ३। पृ० १८ )

अत्रेदं बोध्यम्–[ क ] उपमितिर्हि पदवाच्यत्वविषयिका, पदं च शब्दात्मकम् इत्युपमितेः शब्दविषयकत्वनियम इत्युपमितिरतिरिक्तैवेति । ( न्या० म० ३। पृ० २४ ) [ ख ] इयं प्रमितिः प्रत्यक्षादिप्रमितिभ्यो भिद्यते तद्विरुद्धधर्मत्वादित्यनुमानस्य प्रमाणत्वात्, उपमिनोमीति विलक्षणप्रमितित्वाच्चोपमितिरतिरिक्तेति सिध्यति । ( त० प्र० ३ ) कणादमते, गवयपदं सप्रवृत्तिनिमित्तकम् साधुपदत्वादित्यनुमानेनैवात्रापि निर्वाहः । उक्तानुमाने च पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं पर्यवस्यतीत्यनुसंधेयम् । ( त० व० पृ० ९८ )

उपमितेरुत्पत्तिप्रकारस्त्वित्थम्–गवयशब्दार्थमजानन् कश्चिन्नागरिकः कंचिद्वनेचरं 'कीदृशो गवयपदवाच्यः ?' इति पृच्छति । ततस्तेन 'गोसदृशो गवयपदवाच्यः' इत्युत्तरितः स कदाचिद्वनं गतो गोसदृशं पिण्डं पश्यन् प्रागुक्तातिदेशवाक्यार्थं स्मृत्वा 'असौ गवयपदवाच्यः' इति प्रतिपद्यते, सा उपमितिः । ( त० कौ० ३। पृ० १६ ) ( न्या० म० ३। पृ० २४ ) ( त० भा० प० १७ )

अत्रेदमवधेयम्—अतिदेशवाक्यार्थज्ञानं ( शाब्दबोधः ) करणम्, अतिदेशवाक्यार्थस्मृतिर्व्यापारः, सादृश्यविशिष्टपिण्डदर्शनं सहकारि, उपमितिः फलम्, इति प्राचीननैयायिकमतम् । सादृश्यप्रत्यक्षं करणम्, अतिदेशवाक्यार्थस्मृतिः‡ व्यापारः, उपमितिः फलम्, इति नवीननैयायिकमतम् । ( न्या० म० ३। प० २५ ) ( त० प्र० ३ ) ( दि० ३।१७०–१७१ ) ( म०प्र० ३।३४ ) ( न्या० बो० ३ । प० १९ )

२ प्रकारतया शक्तिग्रहविषयत्वं प्रवृत्तिनिमित्तत्वम्, इति ज्ञेयम् । ( चि० ३। पृ० १७ )

---

* अत्र 'उपमिनोमि' इत्यनुव्यवसायगम्य इति पाठान्तरम् । ( नील० ३। पृ० २७ )

† अत्र, अनुमित्यादिवारणाय जातिमदन्तम् । श्रवणवारणाय परोक्षपदम् प्रत्यक्षान्यपरम् । ( न्या० म० ३।२४ )

‡ अत्र सादृश्यविशिष्टपिण्डदर्शनस्योद्बोधकविधया तादृशवाक्यार्थस्मारकत्वादिति भावः । ( दि० ३। प० १७१ )

'गवयत्वविशिष्टो धर्मी गवयशब्दवाच्यः' इति प्रवृत्तिनिमित्तविशेषपरिच्छित्तिरुपमितिः । ( चि० ३।पृ०१६–१७ )

[ घ ] लिङ्गत्वादिलक्षणातिदेशवाक्यार्थज्ञानजन्यज्ञानम् । ( दीधि० )

[ ङ ] सादृश्यज्ञानकरणकं ज्ञानम् ( मु० १। पृ० १११ ) (न्या०म० ३। पृ०२४) ( त० प्र० ) ( त० सं० ) तच्च (उपमित्यात्मकं ज्ञानम्) संज्ञासंज्ञिसंबन्धज्ञानम् । (त०सं) (न्या० बो०३।पृ०१९) यथा [१]'अयं गवयपदवाच्यः' इति ज्ञानम् उपमितिरिति प्राञ्चः । ( त० सं० ३ ) [ २ ] 'गवयो गवयपदवाच्यः' इत्याकारिका उपमितिरिति नवीननैयायिकाः प्राहुः । ( मु० ३। पृ० १७१ )

**उपमेयत्वम्**—[ क ] सादृश्यानुयोगित्वम् । यथा चन्द्रवन्मुखमित्यादौ मुखस्योपमेयत्वम् । ( ख० )

[ ख ] शाब्दिकास्तु, साधारणधर्मवत्तया परिच्छेद्यत्वमुपमेयत्वम्, इत्याहुः । (ल० म०)

**उपयोगः**—[ क ] इष्टसाधनत्वम् । यथा, यागः स्वर्गोपयोगीत्यादौ यागस्य स्वर्गात्मकेष्टसाधनत्वम् । ( ख० )

[ ख ] आनुकूल्यम् । यथा 'अथवा कार्यनिर्वृत्तेरुपयोगो यथाक्रमम्' ( सुश्रु० ) इत्यादौ । यथा वा 'अनङ्गलेखक्रिययोपयोगम्' ( कुमार० स० १। श्लो० ७ ) इत्यादौ । (वाच०)

---

१ इदं लक्षणं नवीनमतानुसारीति ज्ञेयम् । ( म० प्र० ३।३४ )

२ शब्दशक्तिग्रहविशेष इत्यर्थः । ( भा० प० ३। श्लो० ८१ ) तथाहि—संज्ञा पदम् । संज्ञी पदार्थः । [ क ] तयोः संबन्धः शक्तिः । तज्ज्ञानमित्यर्थः । (न्या० बो० ३। प०१९) (नील० ३। पृ० २७ ) [ख] तयोः संबन्धो वाच्यवाचकभावः । ( वाक्य०३।पृ०१८ )

३ अत्रेदं बोध्यम्—'अयं गवयपदवाच्यः' इत्याकारिकायामुपमितौ गवयत्वावच्छेदेन गवयपदवाच्यत्वमवगाहते, न तु गोसादृश्यावच्छेदेन । तस्य गौरवेणानवच्छेदकत्वात् इति । ( न्या० म० ३। प० २५ )

**उपलक्षणम्**[1]—( व्यावर्तकम्, प्रकारो वा ) [ क ] प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकान्यत् व्यावर्तकम्[3] ।

[ ख ] विवक्षितान्वयप्रतियोगितानवच्छेदकं व्यवच्छेदकम् । यथा, काकेन[4] देवदत्तगृहमित्यादौ काको न गृहस्य देवदत्तान्वयप्रतियोगितावच्छेदकः ।

[ ग ] यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयीभूतेतरान्वयधीस्तद्व्यवच्छेदकं यत् तद्भिन्नम् । ( चि० १। पृ० ३४ )

[ घ ] अविद्यमानं[5] सत् व्यावर्तकम् । यथा जटाभिस्[6]तापस इत्यादौ तापसादेः कालान्तरीणजटादिकम् । (ग०व्यु०का०३। पृ०९१) यथा वा, यदा तु देवदत्तगृह उपरि भ्रमन्नसन् ( काकः ) तदोपलक्षणम् । ( वै० उ० ७।२।८ )

---

१ उपलक्षणस्य शाब्दबोधे भानं नास्तीति सिद्धान्तः । अत्रोपलक्षणत्वं च [ क ] तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वम् ( दि० ४। पृ० १७९ ) [ ख ] भगवदिच्छायां बोधविषयत्वेनाभासमानत्वे सति भासमानविषयांशे प्रकारत्वमिति मिश्राः । [ ग ] शाब्दिकास्तु, तत्पदजन्यबोधविषयत्वेन शक्यविषयत्वे सति शक्तिविषयत्वम् । यथा धातूनां व्यापारमात्रवाचकत्ववादिनां प्राचीननैयायिकानां मते फलस्योपलक्षणत्वम् इत्याहुः । ( वै० सा० द० ) [ घ ] विषयित्वाविशेषणतया विषयविशेषणतया पदजन्यतावच्छेदकनिष्ठत्वमिति गुरवः । ( कृष्ण० शा० २० )

२ अत्र व्यावृत्तिकारणतावच्छेदकान्यत् इति पाठान्तरम् । ( चि० १। पृ० ३४ )

३ अत्र विशेषः—उपलक्षणं स्वानधिकरणेऽपि व्यावृत्तिं बोधयति इति । (चि०१।पृ० ३४)

४ अत्रायं भावः—प्रयोगकाले गृहे काकासत्त्वेऽपि यदा कदाचित्काकसमवधानेपि पूर्वोपस्थितकाकस्मरणेन देवदत्तगृहं विज्ञायत इति काकस्योपलक्षणत्वमिति बोध्यम् ।

५ अत्रायं विशेषः—क्वचिच्च विद्यमानमपि अतद्व्यावृत्ति–( तद्भिन्नव्यावृत्ति– )न्यूनाधिकवृत्तितया न तत्र विशेषणमित्युच्यते, किंतूपलक्षणम् । यथा विद्यमानापि जटा तापसे उपलक्षणम् । नतूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणम् । (ग० व्यु० का० ३।पृ० ९२)

६ अत्र, अविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात्* "इत्थंभूतलक्षणे" ( पा० सू०३।३।२१ ) इत्यनेन तृतीया ज्ञेया ( ग०व्यु०का०३। पृ०९१ )

---

* अयमाशयः—विशेषणस्य संबन्धो मतुबादिभिः प्रत्याय्यते, 'अस्ति' इत्यर्थे "तदस्यास्त्यस्मिन्निति मतुप्" ( पा० सू० ५।२।९४ ) इत्यनेन विहितानां वर्तमानसंबन्धार्थकत्वात् । अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात् तृतीया, इति । ( ग० व्यु० कार० ३। पृ० ९१ )

[ ङ ] सदसद्वा समानाधिकरणं व्यावर्तकं विशेषणम्, व्यधिकरणमुपलक्षणमित्युदयनाचार्याः । ( चि० १। पृ० ३४ ) २ क्वचित्–विधेयान्तरसमानकालीनमपि विशेषणं तदनन्वयिताया तदन्वयिन्युपलक्षणमित्युच्यते । यथा रूपवान् रसवानित्यादौ रूपादिकं रसान्वयिनि, सास्नावान्गोपदवाच्य इत्यादौ सास्नादिकं गवादिपदवाच्ये । क्वचित्–धर्मिसंबद्धधर्मान्तरसंबन्धितानवच्छेदकतया धर्मान्तरसंबन्धिन्युपलक्षणम् । अतः 'दण्डपुरुषौ' इत्यादिसमूहालम्बनबोधो दण्डाद्युपलक्षितपुरुषादिविषयकः, नतु विशिष्टविषयक इत्युच्यते । ( ग० व्यु० का० ३। पृ० ९२ )

**उपलक्षणम्**[1]—अजहत्स्वार्थलक्षणयाऽन्यग्राहकम् । ( म० प्र० ३। प० ३९ ) यथा, अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् ( चि० २ ) इत्यत्रानुमितिपदं परामर्शस्यापि ग्राहकम् । ( दीधि० सामा० ) ( ग० २। सामा० पृ० २) यथा वा साधर्म्योपमानं वैधर्म्याद्युपस्थापकम् । ( म० प्र० ३।३९ ) यथा वा काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदं दध्युपघातकत्वेन रूपेण काकाऽकाकोभयबोधकम् । ( वाच० )

**उपलब्धिः**—१ बुद्धिवदस्यार्थोऽनुसंधेयः । ( गौ० १।१५ ) २ ज्ञानेन पुरुषस्य योऽतात्त्विकः[2] संबन्धः स इति सांख्याः ( मु० १।२। आत्म० ) ३ प्राप्तिरिति काव्यज्ञा वदन्ति ।

**उपलब्धिसमः**[3]—( जातिः ) [ क ] निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः । ( गौ० ५।२७ ) निर्दिष्टप्रयत्नानन्तरीयकत्वस्यानित्यत्व-

---

१ अत्र 'उपलक्ष्यते स्वं स्वेतरच्चानेन' इति व्युत्पत्तिः, करणे ल्युट् । लक्षणं तु लक्ष्यतावच्छेदकरूपेण स्वस्वेतरबोधकपदत्वम् । ( वाच० )

२ अयं भावः–[ क ] स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहात् 'अहं जानामि' इति योऽभिमानविशेषः, सैवोपलब्धिः, इति । ( वै० उ० ८।१।१ ) [ख] 'चेतनोऽहं करोमि' इत्याकारेण बुद्ध्यारोपितस्य पुरुषस्य ज्ञानेन सह 'इदं ज्ञानम्' इति प्रतीयमानोऽतात्त्विकसंबन्धो यः, स उपलब्धिः, इति । ( दि० १।२ ) राम० (१।२। पृ० १०५)

३ प्रतिकूलतर्कदेशनाऽऽभासः, बाधदेशनाभासश्च वा ।म् । ( गौ० वृ० ५।१।२७)

कारणस्याभावेपि वायुनोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते । निर्दिष्टस्य साधनस्याभावेपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः । ( वात्स्या० ५।१।२७ )

[ ख ] वादिना निर्दिष्टस्य कारणस्य साधनस्याभावेपि साध्यस्योपलम्भात्प्रत्यवस्थानम् । तथा हि—पर्वतो वह्निमान्धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते । न च तत्संभवति; धूमं विनाऽऽलोकादितोपि वह्निसिद्धेः । तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः । न वा धूमाद्वह्निमानेवेत्यवधारणम्, द्रव्यत्वादेरपि धूमेन साधनात् । न वा पर्वत एव वह्निमानेवेत्यादिकमवधारयितुं शक्यते, महानसादेरपि वह्निमत्त्वात् । अन्यथा दृष्टान्ताऽसिद्धिः स्यात् । एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि । ( गौ० वृ० ५।२७ )

[ ग ] वाद्युपदर्शितसाधनाभावेपि साध्यस्योपलब्धिकथनम् । यथा शब्दोऽनित्यः प्रयत्नानुविधायित्वाद्घटवदित्यत्र प्रयत्नं विनापि वायुनोदनवशाद्वृक्षशाखाभङ्गजन्यस्य शब्दस्योपलब्धेर्न प्रयत्नानुविधायित्वं शब्देऽस्तीति । ( नील० पृ० ४४ )

**उपष्टम्भः**—१ आलम्बनम्; ( वाच० ) २ संयोगविशेषो वा । (स्व०) यथा, जलीय-तैजस-वायवीय-शरीराणां पार्थिवभागोपष्टम्भादुपभोगक्षमत्वम् ( मु० १। पृ० ८४ ) इत्यादौ । यथा वा, सुवर्णस्य उष्णस्पर्श-भास्वररूपयोरुपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिरित्यादावुपष्टम्भः । ( त० दी० १। प० ९ ) ३ पतनप्रतिरोध इति काव्यज्ञा वदन्ति । (वाच०)

**उपसंख्यानम्**—तत्रानुक्तार्थस्य ग्रन्थान्तरेण कथनम् । यथा व्याकरणशास्त्रे "अक्षादूहिन्यामुपसंख्यानम्," "प्रकृत्यादिभ्य उपसंख्यानम्" (वार्ति०) इत्यादौ ।

**उपसंहारः**—१ सहचारः । (दीधि०) (२) यथा, अनुपसंहारी हेतुरित्यत्र साध्यहेत्वोरुपसंहारस्याभावः । (स्व०) २ उपन्यासः । (गौ० वृ० १। ३७)

यथा, उपनयलक्षणे "उदाहरणापेक्षस्तथेत्युपसंहारः" (गौ० १।३७) इत्यत्रोपसंहारः । ३ निश्चयः । (दीधि० २) ४ विस्तरेण निरूपितस्य पदार्थस्य सारांशकथनेन तन्निरूपणसमापनम् । (स्व०) यथा, "तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम्" (त० सं०) इति करणलक्षणस्योपसंहारः । (त० दी० १ । पृ० १७) ५ ग्रन्थतात्पर्यावधारकलिङ्गविशेषः । यथा उपक्रमोपसंहारौ–हेतुस्तात्पर्यनिर्णये, इत्यादौ । ६ एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपः । यथा, गुणोपसंहार इत्यादौ । ७ साकल्येन संबन्धः । यथा "सर्वोपसंहारवत्या व्याप्तेर्दुज्ञानत्वात्" इत्यादौ । (वाच०)

**उपसर्गः**–१ [क] जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतमः । यथा प्रहरति विहरतीत्यादौ प्रादिरुपसर्गः । [ख] "उपसर्गाः क्रियायोगे" (पा० सू० १।४।५९) इति शाब्दिकाः । उपसर्गस्य त्रिधा प्रवृत्तिः—धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । तमेव विशिनष्ट्यन्य उपसर्गगतिस्त्रिधा, इति । क्रमेणोदाहरणानि यथा–आदत्ते, प्रसूते, प्रणमति, इत्यादीनि । (वाच०) प्रादयो द्योतका इति नैयायिका वैयाकरणाश्चाहुः । (वै० सा०) २ उत्पात इति काव्यज्ञाः ।

**उपसर्जनम्**–१ गौणम् । २ अप्रधानम् । यथा धनवान्देवदत्त इत्यादौ विशेषणीभूतं धनमुपसर्जनम् । (स्व०) । ३ शाब्दिकास्तु, [क] विग्रहवाक्ये यन्नियतविभक्तिकं तदुपसर्जनसंज्ञम् ।

[ख] स्वार्थविशिष्टार्थान्तरबोधकमुपसर्जनम् इति च, वदन्ति ।

**उपस्थितिः**–१ बुद्धिवदस्यार्थोनुसंधेयः । २ स्मृतिरित्याधुनिका वन्दाति ।

**उपहितत्वम्**–१ उपधायकत्ववदस्यार्थोनुसंधेयः । २ मायावादिनस्तु, उपाधि-

---

१ प्रादय उपसर्गा द्वाविंशतिधा—प्र, परा, अप, सम्, अव, अनु, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उप ।

२ अत्र द्योतकत्वं च तात्पर्यग्राहकत्वम् । (वै० सा०)

३ अत्रोपसर्जनत्वं च वृत्तिजन्यबोधीयप्रकारतावत्त्वम् । वृत्तिशब्देनात्र वैयाकरणसंमताः कृत्तद्धितसमासैकशेषसनाद्यन्ताः पञ्च वृत्तयो गृह्यन्ते ।

संगतत्वम्; उपाध्युपलक्षितत्वं वोपहितत्वम् । यथा "अन्तःकरणोपहितं चैतन्यं जीवः, अज्ञानोपहितं चैतन्यमीश्वरः" इत्यादाविल्याहुः । (वाच०)

**उपादानम्**—१ समवायिकारणम् । यथा, उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् (भा० प० श्लो० १९३) इत्यादौ इति प्राचीननैयायिकाः । २ अधिष्ठानमात्रम् । यथा यागादेर्हविः, शब्दस्य मृदङ्गादिः, प्राणसंचारादेश्च प्राणवहनाड्यादिरुपादानमिति नवीननैयायिकाः । (दि० पृ० २३१) ३ [क] स्वेष्टसाधनताप्रकारकं ज्ञानम् । (प० च०) [ख] सुखसाधनत्वज्ञानम् । यथा 'स्रक्चन्दनवनितादिकं मत्सुखसाधनम्' इति ज्ञानम् । (सि० च० १। पृ० २) ४ आध्यात्मिकतुष्टिविशेष इति सांख्याः । (वाच०) विज्ञानवादिनो बौद्धास्तु, असहकृतं कारणमुपादानम् । यथा, उत्तरोत्तरविज्ञानव्यक्तौ पूर्वपूर्वविज्ञानव्यक्तिरुपादानम्, इति वदन्ति । (राम० आत्म० पृ० १००)

**उपादेयम्**—१ समवेतवदस्यार्थोऽनुसंधेयः । यथा, "यत् द्रव्यं यद्द्रव्यध्वंसजन्यम्, तत् तदुपादानोपादेयम्" (मु० १। पृ० ६९) इत्यादौ । २ ग्रहणकर्म (ग्राह्यं वस्तु) । यथा, "हेयोपादेयरहितः (आत्मा)" इत्यादाविति काव्यज्ञा वेदान्तिनश्चाहुः । (स्व०)

**उपाधिः**—१ निमित्तम्[1] । (स्व०) यथा वायोः प्राणापानादिसंज्ञायां हृदादिस्थानं मुखनिर्गमादिक्रिया चोपाधिः । (मु० १ । पृ० ८९) २ धर्ममात्रम् (सामान्यम्) । स च धर्मः क्वचिज्जात्यादिः, क्वचित्तद्भिन्नोऽपि भवति । यथा—पदार्थविभाजकोपाधिमत्त्वमित्यादौ पदार्थविभाजकोपाधयस्तावत्, द्रव्यत्व-गुणत्व-कर्मत्व-सामान्यत्व-विशेषत्व-समवायत्व-अभावत्वरूपाः सन्ति; तत्र द्रव्यत्वादयो जातिरूपाः, सामान्यत्वादयस्तु तद्भिन्नाः । जातिभिन्नो धर्मोऽपि द्विविधः । सखण्डोपाधिः, अखण्डोपाधिश्चेति । तत्राद्यः—आकाशत्वादि[2] । (सि०च० पृ० ३) द्वितीयः,

१ तदर्थश्च—[क] प्रयोजकम् । (त० भा०) [ख] कारणम् ।
२ एतद्वायुनिरूपणावसरे सविस्तरं संपादयिष्यते, इत्यत्र विरम्यते ।

प्रमेयत्व-कुण्डलित्व-प्रतियोगित्वादिः । ( त० कौ० पृ० २० ) ३ वृत्तिमत् । यथा "उपधेयसंकरेप्युपाध्यसंकरः" ( चि० २। पृ० ८७) इत्यादौ धर्ममात्रमुपाधिः । यथा वा जन्यमात्रं क्रियामात्रं वा कालोपाधिरित्यादौ । ४ स्वरूपम् । यथा जन्यमात्रं कालोपाधिरित्यादौ । ( स्व० )

५ मायावादिनस्तु, स्वसामीप्यादिना अन्यस्मिन् स्वधर्मारोपसाधनं विशेषणविशेषः । यथा "उपाधिभेदेप्येकस्य नानायोग आकाशस्येव घटादिना" "गतिश्रुतिरप्युपाधियोगादाकाशवत्" (सां० सू०) "उपाधिना क्रियते भिन्नरूपः" ( श्रुतिः ) " कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इत्यादावुपाधिः, इत्याहुः ( वाच० ) ६ शक्तिरिच्छा चेति वेदान्तिनः ।

**उपाधिः**–[ क ] [१] यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वम्, सः ।

---

१ उदयनाचार्यमते उपाधिपदं योगरूढम् । अत्र व्युत्पत्तिः—उप समीपवर्तिनि आदधाति संक्रामयति स्वीयं धर्ममित्युपाधिः, इति । यद्धर्मबोधकशब्दसमभिव्याहारेण चोपाधिपदं प्रयुज्यते तद्धर्मसंक्रामकत्वं तद्बोधयति । यथा स्फटिकलौहित्ये जपाकुसुममुपाधिरित्यत्र लौहित्यसंक्रामकत्वं । प्रयुज्यते च शास्त्रे व्याप्यत्वबोधकशब्दसमभिव्याहारेण तत् । तथाऽत्र साधने असावुपाधिरित्यतो व्याप्तिसंक्रामकत्वलाभः* । ( दीधि० २। पृ० ९६ )

उपाधेः प्रयोजनं तु [ क ] उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानम् । (भा० प०श्लो० १४०–१४१) यथा धूमवान्वह्नेरित्यादौ 'वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वात्' इति; व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् । [ ख ] केचित्तु, सत्प्रतिपक्षोन्थापनमुपाधेः फलम् । तथा हि—अयोगोलकं धूमवत् वह्नेरित्यादौ अयोगोलकं धूमाभाववत् आर्द्रेन्धनाभावात् इति सत्प्रतिपक्षसंभवात् । इत्थं च साधनव्यापकोऽपि क्वचिदुपाधिः । यथा करका पृथिवी कठिनसंयोगवत्त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वमुपाधिः । अत्र च साध्यव्यापकः पक्षावृत्तिरुपाधिरिति वदन्ति । ( चि० २। पृ० २९ ) ( मु० पृ० २१७ ) ( मं० प्र० २। पृ० ३१ )

अत्रेदं बोध्यम्–उपाधिर्हि व्यभिचारज्ञानद्वारा ( न तु साक्षात् ) व्याप्तिज्ञानप्रतिबन्धक इति न †हेत्वाभासान्तरम् । ( त० दी० २। पृ० २७ ) न चैवमुपजीव्यत्वेन उपाधिर्हेत्वाभासान्तरम् । उपजीव्यत्वेऽपि स्वतोऽदूषकत्वेन तदर्थं परमुखनिरीक्षकत्वात् । न

---

* इत्थं च धूमवान्वह्नेरित्यादौ धूमसामग्र्यादिकमुपाधिः । स्फटिकलौहित्ये जपाकुसुममिव धूमसामग्र्यादेः स्वसमवहितवह्नौ स्वनिष्ठधूमव्याप्त्याधायकत्वात् । ( मं० प्र० २। पृ० २८ )

† अयं भावः—व्यभिचाराद्युन्नयनदशायामेवोपाधेरनुमानदोषत्वेन, अनुमितिप्रतिबन्धनियतज्ञानविषयत्वात्मकहेत्वाभासलक्षणाभावात् नोपाधेर्हेत्वाभासत्वम्, इति (मं०प्र० २। पृ०२८)

[ख] [२] यः साधनव्यभिचारी साध्यव्यभिचारोन्नायकः सः। (चि०२। पृ० २६)

हि साधनाव्यापकत्वमनुमितिविरोधि। किं तु व्यभिचारोन्नयनेन, स्वव्यतिरेकेण सत्प्रतिपक्षतया वा। (चि० २। पृ० १०३) (त० प्र० २)

दूषकता च तस्य व्यभिचारोन्नायकतया। [ख] व्यभिचारज्ञानद्वारा साध्यव्यापकाव्याप्यत्वेन व्याप्तिविरहोन्नायकतया वोपाधेर्दूषकत्वम्। (चि० २। पृ०३२) [ग] [१] उपाधेर्दूषकताबीजं तु स्वव्यभिचारेण साधने साध्यव्यभिचारोन्नायकत्वम्। तथाहि— धूमवान्वह्नेरित्यत्र आर्द्रेन्धनमुपाधिरित्युपन्यासानन्तरं 'वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धनव्यभिचारित्वात्, यो यद्व्यापकव्यभिचारी स तद्व्यभिचारी यथा द्रव्यत्वव्यापकगुणवत्त्वव्यभिचारि प्रमेयत्वं द्रव्यत्वस्यापि व्यभिचारि' इति सामान्यव्याप्तेः; 'यत् आर्द्रेन्धनव्यभिचारि तत् धूमव्यभिचारि यथा घटः' इति विशेषव्याप्तेर्वोपाधिव्यभिचारेण शुद्धसाध्यव्यभिचारानुमानम्। [२] यद्वा स्वव्यतिरेकेण साधनवति साध्यव्यतिरेकोन्नायकत्वमुपाधेर्दूषकताबीजम्। धूमसाध्यकवह्निहेतुकार्द्रेन्धनाद्युपाधिना वह्निमति क्वचित् स्वव्यतिरेकेण धूमव्यतिरेकानुमानात् 'यत् आर्द्रेन्धनाभाववत् तत् धूमाभाववत् यथा जलम्' इति व्याप्तेः; व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात्। (म० प्र० २ पृ० ३०–३१) (त० प्र० २)

लक्षणं चोपाधित्वमेव। तच्च [क] पर्यवसित*साध्यव्यापकत्वे सति साधनाव्यापकत्वम्। (वै० उ० ३।१।१४) (चि० २ पृ० २५) [ख] साध्यव्यापकत्व-साधनाव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किंचिद्धर्मव्यापकतानवच्छेदकरूपवत्त्वम्। (दीधि० २। पृ० १०५) [ग] साधनाव्यापकत्वे सति †साध्यसमव्याप्तिः। (सर्व० चार्वा० पृ० ५) [घ] अन्ये तु, यदभावो व्यभिचारविरोधी तत्त्वम् इत्याहुः। (चि० २। पृ० २३)

१ अत्र, साध्यव्यभिचारोन्नायकत्वं च साध्यव्यभिचारानुमापकत्वम्। तदनुमानप्रकारस्तु, पूर्वोक्ते (३ एतदङ्कगते टिप्पणे) उपाधेः प्रयोजनत्वादिकथनावसरे प्रदर्शित एवेत्यत्र स पुनर्न प्रदर्शितः, इति बोध्यम्।

* पर्यवसितं च साध्यम् [क] यद्धर्मावच्छेदेनोपाधेर्व्यापकत्वमभग्नं तद्धर्मावच्छिन्नम्। (वै० उ० ३।१।१४) [ख] यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तद्धर्मावच्छिन्नम्। स च धर्मः क्वचित् साधनमेव, क्वचित् द्रव्यत्वादि, क्वचित् महानसत्वादि। तथाहि—समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव। व्यापकव्यभिचारिणस्तद्व्याप्यव्यभिचारनियमात्। (चि० २। पृ० २५)

† साध्यसमव्याप्तिश्च साध्यव्यापकत्वे सति साध्यव्याप्यत्वम्। (त० प्र० २। पृ० ४७) अत्र

[ग] [१] स्वानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकः।

[घ] [२] स्वावच्छिन्नानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकवत्त्वे सति साधनाऽव्यापकः। (न्या० म० २। पृ०

---

१ अत्र स्वं उपाधित्वेनाभिमतं ग्राह्यम्। उपाध्यनधिकरणं यत् साधनाधिकरणम्, तद्वृत्तिर्धर्मः क्वचित् साधनं मित्रातनयत्वादि; क्वचित् पक्षधर्मो बहिर्द्रव्यत्वादि; क्वचिदुदासीनोऽपि, यथा 'घटरूपं प्रत्यक्षं मेयत्वात्' इत्यादौ बहिर्द्रव्यत्वमेव। तदवच्छिन्नप्रत्यक्षत्वव्यापकत्वं चोद्भूतरूपोपाधाविति नाव्याप्तिः। इत्थं चोपाधेश्चतुर्विधत्वमिति मन्तव्यम्। शुद्धसाध्यव्यापकार्द्रेन्धनादौ तु केवलं लक्षणसमन्वयाय स्वानधिकरणसाधनाधिकरणतप्तायःपिण्डवृत्तिधर्मो द्रव्यत्वादिर्ग्राह्यः, तदवच्छिन्नधूमव्यापकत्वस्य तत्र सत्त्वात् इति बोध्यम्। (म० प्र० २। पृ० २९-३०) (त० प्र० २)

२ ननु-द्रव्यं जातेरित्यादौ विशिष्टसत्त्वात्मकोपाधावव्याप्तिः, विशिष्टसत्तायाः शुद्धसत्ताऽनतिरेकेण तदनधिकरणजात्यधिकरणाऽप्रसिद्धेः; अतो लक्षणान्तरमाह-स्वावच्छिन्नेति। (म० प्र० पृ० ३०) (त० प्र० २) अन्वयश्चास्य; स्वावच्छिन्नानधिकरणं यत् साधनाधिकरणम्, तद्वृत्तिर्यो धर्मः, तदवच्छिन्नं यत्साध्यम्, तद्व्यापकतेत्यादि। अत्र स्वं उपाधितावच्छेदकत्वेनाभिमतं (आर्द्रेन्धनत्वादि) ग्राह्यम्।

३ निष्कृष्टव्यापकत्वघटितार्थस्तु, *स्वावच्छिन्नानधिकरणहेतुमन्निष्ठयत्किंचिद्धर्मावच्छिन्नसाध्याधिकरणवृत्तियावद्धर्मा यद्धर्मावच्छिन्नसमानाधिकरणस्तद्वान्, इति। (न्या० म० २। पृ० २३)

---

शब्देऽनित्यत्वे साध्ये सकर्तृकत्वस्य घटत्वस्याश्रावणत्वस्य चोपाधित्ववारणार्थं क्रमेण विशेषणत्रयम्। (सर्व० चार्वा० पृ० ५) अत्र, साध्यव्याप्यत्वांशस्य त्याग एवोचितः। अन्यथा (समव्याप्तस्यैवोपाधित्वे), विषमव्याप्तेऽपि व्यभिचारोन्नायकत्व-सत्प्रतिपक्षोन्नायकत्वादिरूपदूषकताबीजस्य सत्त्वेन तस्याप्युपाधित्वात् तत्राव्याप्त्यापत्तेः। अतो व्याप्यत्वांशमपहाय रूढ्यर्थं साध्यव्यापकत्वमात्रघटितलक्षणमेवाचार्याभिप्रेतम्, इति। (त० प्र० २। पृ० ३६)

* अत्र स्वम् उपाधितावच्छेदकत्वेनाभिमतमार्द्रेन्धनत्वादि। अन्वयस्तु, स्वावच्छिन्नानधिकरणं यत् हेतुमत्, तन्निष्ठो यो यत्किंचिद्धर्मः, तद्धर्मावच्छिन्नं यत् साध्यम्, तदधिकरणवृत्तयो यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणा भवन्ति तद्धर्मवान्, इति। इदमेवोपाधिस्वरूपम्। अत्र यत्किंचिद्धर्मस्तु क्वचित् साधनं मित्रातनयत्वादिः, क्वचित् पक्षधर्मो बहिर्द्रव्यत्वादिः, क्वचिदुदासीनोऽपि भवति।

२३) ( दीधि० २। पृ० १०९ ) यथा, ( १ ) धूमवान्वह्नेरित्यादावार्द्रेन्धनम् ( धूमसामग्र्यादिकम् ) उपाधिः । यथा वा, ( २ ) वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र उद्भूतरूपवत्त्वमुपाधिः । यथा वा, (३) स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिः । ( न्या० म० २। पृ० २३ ) यथा वा, ( ४ ) घटरूपं प्रत्यक्षं प्रमेयत्वादित्यादौ उद्भूतरूपमुपाधिः । ( म० प्र० २। पृ० ३० )

[ ङ ] साध्यव्यापकत्वे सति साधनाव्यापक उपाधिरित्याचार्याः (उदय-

---

१ भवति हि, आर्द्रेन्धनत्वावच्छिन्नानधिकरणं यत् वह्निमत् (अयोगोलकम्), तन्निष्ठो यत्किंचिद्धर्मः (द्रव्यत्वम्), तदवच्छिन्नो धूमः, तदधिकरणनिष्ठा यावन्तो धर्मा आर्द्रेन्धनत्वावच्छिन्नसमानाधिकरणा भवन्ति; अतस्तद्वदार्द्रेन्धनमुपाधिः । ( न्या० म० २। पृ० २३ )

२ भवति हि,उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रत्यक्षस्पर्शाश्रयत्वावच्छिन्नम् (वायुः), तन्निष्ठो धर्मः (बहिर्द्रव्यत्वम् ), तदवच्छिन्नं साध्यम् (प्रत्यक्षत्वम्), तदधिकरणं यत् (घटपटाद्येव), तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति; अत उद्भूतरूपवत्त्वमुपाधिः । ( न्या० म० २। पृ० २३ )

३ भवति हि, शाकपाकजत्वत्वावच्छिन्नानधिकरणं यत् मित्रातनयत्ववत् (अन्योऽश्यामो मित्रातनयः), तन्निष्ठं यत् (मित्रातनयत्वम् ), तदवच्छिन्नं श्यामत्वम्, तदधिकरणं यत् ( श्यामो मित्रातनयः ), तन्निष्ठा यावन्तो धर्माः शाकपाकजत्वत्वावच्छिन्नसमानाधिकरणा भवन्ति; अतः तद्वच्छाकपाकजत्वमुपाधिः । (न्या० म० २ । पृ० २३ )

४ भवति हि, उद्भूतरूपत्वावच्छिन्नानधिकरणं यत् प्रमेयत्ववत् ( चक्षुरादि ), तन्निष्ठो यत्किंचिद्धर्मः (बहिर्द्रव्यत्वम् उदासीनधर्मः), तदवच्छिन्नं प्रत्यक्षत्वम्, तदधिकरणं यत् ( घटपटादि), तन्निष्ठा यावन्तो धर्मा उद्भूतरूपत्वावच्छिन्नसमानाधिकरणा भवन्ति; अत उद्भूतरूपमुपाधिः । ( म० प्र० २। पृ० २९–३० ) एवं च, वक्ष्यमाणचतुर्विधविभागविभक्तस्योपाधिचतुष्टयस्य यथाक्रममुदाहरणचतुष्टयमेतदिति विज्ञेयम् ।

५ यो यद्व्यापकत्वे सति* यदव्यापकः, स तत्रोपाधिरिति निर्गलितोऽर्थः ।(दीधि० २।पृ० ९२)

६ भवति च तत् (आर्द्रेन्धनम्) साध्यस्य (धूमस्य) व्यापकम्, 'यत्र यत्र धूमस्तत्रार्द्रेन्धनम्' इति नियमसत्त्वात् । भवति च साधनस्य ( वह्नेः ) अव्यापकम्, ' यत्र यत्र वह्निस्तत्रार्द्रेन्धनम्' इति नियमासत्त्वात्, तप्तायःपिण्डे वह्निसत्त्वेऽप्यार्द्रेन्धनाभावादिति । (त० कौ० २।पृ० १५)

---

* यस्य यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वं च, स तत्साध्यकतद्धेतावुपाधिरित्यर्थः । ( मु० पत्रे २१६ )

नाचार्याः) । ( न्या० म० २। पृ० २१ ) ( त० कौ० २। पृ० १९ ) ( त० सं० ) ( दीधि० २ । पृ० १०९ )

[ च ] यदभावेन यद्वदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिरिति नव्या वदन्ति । ( दि० पृ० २१७ )

[ छ ] अन्ये तु, यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते स धर्मस्तत्र[1] हेतावुपाधिरित्याहुः । ( चि० २। पृ० २८ ) ( दीधि० २। पृ० १०२ ) उपाधिश्चतुर्विधः । केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्यः—धूमसाध्यकवह्निहेतुकस्थल आर्द्रेन्धनसंयोगः । द्वितीयः—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वमुपाधिः । तृतीयः—ध्वंसो विनाशी जन्यत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम्; स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं वा । चतुर्थस्तु—प्रागभावो विनाशी प्रमेयत्वादित्यत्र जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वम्; (त० दी० २। पृ० २६) घटरूपं प्रत्यक्षं प्रमेयत्वादित्यादावुद्भूतरूपं वा उपाधिः । ( म० प्र० २। पृ० ३० ) ( न्या० म० २। पृ० २३) पुनरप्युपाधिर्द्विविधः । निश्चितः, संदिग्धश्च । तत्र, साध्यव्यापकत्वेन साधनाव्यापकत्वेन च निश्चितो व्यभिचारनिश्चयाधायकत्वेन निश्चितोपाधिः । यथा वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वम् । यत्र साधनाव्यापकत्वसंदेहः साध्यव्यापकत्वसंशयो वा तदुभयसंदेहो वा, तत्र हेतौ साध्यव्यभिचारसंशयाधायकत्वेन संदिग्धोपाधिः । यथा

---

१ स च धर्मः, यस्याभावात् पक्षे साध्यसाधनसंबन्धाभावः । यथा-आर्द्रेन्धनवत्त्वम् । व्यावर्तते हि तद्व्यावृत्त्या धूमवत्त्वमयोगोलके । एवं भावत्वव्यावृत्त्या ध्वंसे जन्यत्वानित्यत्वयोः संबन्धो निवर्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सिध्यति । तथा—यावुद्भूतरूपवत्त्वं निवर्तमानं बहिर्द्रव्यत्वे सति प्रत्यक्षत्वं निवर्तयत् प्रत्यक्षत्वाभावमादाय सिध्यति, इत्यादि । ( चि० २। पृ० २८ )

मित्रातनयत्वेन श्यामत्वे साध्ये शाकाद्याहारपरिणतिजन्यत्वम् । ( चि० २। पृ० २९) (म० प्र० २। पृ० ३१)

**उपायः**—साक्षात् परंपरया वा यत्किंचित्कार्यजनने समर्थः। उपायो द्विविधः। लौकिकः, अलौकिकश्च। तत्र घटादिकं प्रति दण्डादिर्लौकिकोपायः। स्वर्गं प्रति यागादिरलौकिकोपायः। नीतिशास्त्रज्ञास्तु, साम, दानम्, भेदः, दण्डश्चेत्येते चत्वार उपाया इत्याहुः। (स०)

**उपालम्भः**–१ [ क ] परपक्षदूषणम्। (गौ० वृ० १।४०) [ ख ] दूषणम्। (गौ० वृ० १।४१) यथा, प्रमाणतर्कसाधनोपालम्भः (गौ० १।४१) इत्यादौ। २ स्पर्श इति वैष्णवयाज्ञिका आहुः। ३ हिंसेति स्मार्तयाज्ञिकाः। ४ अहितेच्छेति काव्यज्ञा वदन्ति।

**उपासना**–१ मुक्तिप्रयोजकविद्या। (कु० १) २ आराधनवदस्यार्थोऽनुसंधेयः। (श० प्र० पृ० ९६) ३ समानप्रत्ययप्रवाहकरणमुपासनमिति मायावादिन आहुः। (शा० भा०)

**उपेक्षा**–१ सुखदुःखोभयासाधनत्वज्ञानम्। यथा 'तृणं सुखदुःखासाधनम्' इति ज्ञानम्। (सि०च० १। पृ० २१) २ उभयाप्रकारकं ज्ञानम्। (प० च०) ३ भावनाविशेष इति योगशास्त्रविदः। ४ परस्वत्वानभिसंधनापूर्वकस्वत्वप्रागभावासमानकालीनस्वत्वाविषयकेच्छेति व्यवहारज्ञा आहुः। (वाच०)

**उपोद्घातः**–(संगतिः) [ क ] प्रकृतोपपादकत्वम्। (दि० २) [ ख ] प्रकृतोपसाधकत्वम्। यथा परामर्शजन्यज्ञानत्वरूपेऽनुमितिलक्षणे वक्तव्ये विशिष्टपरामर्शस्यानुमितिहेतुत्वमुपोद्घातसंगत्या व्यवस्थाप्यते। (राम० २।पृ० १३४) यथा वा, प्रमाकरणरूपे प्रमाणे निरूपणीये सत्युपोद्घातसंगत्या करणनिरूपणम्। (वाक्य० १। पृ० १०)

---

१ अत्र, मित्रातनयत्वव्याप्यश्यामत्वसामग्र्याः स्थानत्वमित्यत्र कार्यकारणभावादीनां व्याप्तिग्राहकाणामभावात् (संदेहः) इति। (चि० २। पृ० २९)

[ ग ] चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः । ( सर्व० जैमि० पृ० १२९ ) ( भवा० ) ( जग० )

[ घ ] निर्दिष्टोपपादकत्वम् । ( जग० )

[ ङ ] शाब्दिकास्तु, प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छिन्नप्रकृतानुकूलत्वम्, इत्याहुः । ( वै० सा० द० )

**उभयत्वम्**—[ क ] उभयव्यवहारविषयतावच्छेदको धर्मः ( ग० सिद्धा० ) यथा, घटपटोभयमित्यादौ घटपटोभयपर्याप्तमुभयत्वम् । (स्व०)

[ ख ] अपेक्षाबुद्धिविशेषविषयत्वमिति केचिदाहुः ।

**उष्णत्वम्**—१ स्पर्शनिष्ठो जातिविशेषः । यथा, स्पर्श उष्णस्तेजसस्तु इत्यादौ ( भा० प० श्लो० ४२ ), उष्णस्पर्शवत्तेज इत्यादौ च । ( मु० १ । पृ० ७७ ) २ स्पर्शविशेषः । यथा, सूतके मृतके चैव न स्नायादुष्णवारिणा, इत्यादौ ( वाच० )

---

## ऊ.

**ऊर्ध्वा**—( दिक् ) अदृष्टवदात्मसंयोगजन्याग्निक्रियाजन्यसंयोगाश्रयो दिक् । ( वै० उ० २।२।१० ) यथा, ऊर्ध्वं गत इत्यादौ । ( स्व० )

**ऊष्मा**—१ उष्णस्पर्शः । ( राम० १। पृ० ७० ) यथा, चक्षुरूष्मादिसंततेः

---

१ तदर्थश्च प्रकृतसिद्ध्यनुकूलचिन्ताकालावच्छेदेन प्रकृतानुकूलत्वम् । अत्र चिन्ता च वक्तुर्मीमांसा । अत्रानुकूलत्वं च क्वचित् घटकत्वम्, क्वचित् ज्ञापकत्वम् । तत्र घटकत्वं यथा—व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानमित्यत्राज्ञातव्याप्तिकस्य व्याप्तिपदवाच्यत्वेन ज्ञाने 'का व्याप्तिः' इत्याकारिकायां जिज्ञासायां व्याप्तिनिरूपणम् । ज्ञापकत्वं यथा—विशिष्टज्ञानस्यानुमितिहेतुत्वे 'किं ज्ञापकम्' इत्याकाङ्क्षायां परामर्शस्यानुमितिहेतुत्वव्यवस्थापनम् । (भवा०)

२ अनुकूलत्वं चात्र घटकत्वज्ञापकत्वादिरूपं यथायथं माह्यम् । तत्रावच्छेदकांशः (चिन्ताकालपर्यन्तः) स्वरूपसन्, इतरांशश्च ज्ञातः उपयोगी भवति, इति ज्ञेयम् । (वै० सा० द०)

३ अयं च धर्मो व्यासज्यवृत्तिर्भवतीति विज्ञेयम् । एवं बहुत्वादयोऽपि धर्माः स्वयमूह्याः ।

४ एवं च—इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाननागब्रह्माधिष्ठानोपलक्षिता दश दिश इति व्यपदेशान्तरम्, प्राच्यादिव्यपदेशात् । ( वै० उ० २।२।१० )

(मु० १। प० ६८) इत्यादौ। २ तेजोद्रव्यस्य सूक्ष्मावयवः। (भा०) (वाच०) यथा, "यथाग्नेर्धूम उदयते एवमेषामूष्मोदयते" (शत०ब्रा० १।६।२।१।९) इत्यादौ। ३ श-ष-स-ह-एते वर्णा ऊष्माण इति शाब्दिका आहुः। (वाच०)

ऊहः—१ तर्कः। स च [१] परीक्षणम्। [२] अनुमानम्। (स्व०) यथा "ऊहः" (जै० सू० १।२।९२) इत्यादौ "न पिता वर्धते, न माता; इति अन्ये वर्धन्ते इति गम्यते" (शाबरभा० १।२।२९)। [३] अध्याहारः। [४] कल्पनम् (अन्वययोग्यविभक्त्यादिकल्पनम्)। यथा, पार्वणे सौम्यास इति बहुवचनसमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् 'सौम्यः' इत्येकवचनान्ततया कल्प्यते। २ ताराख्यः सिद्धिविशेष ऊह इति तन्त्रवेत्तार आहुः। (वाच०)

---

ऋ.

ऋणम्–[क] पश्चाच्छोध्यत्वेनाङ्गीकृत्य गृहीतं द्रव्यम्। (श०प्र०पृ० ८६) यथा, ऋणानि पित्रादिभिः कृतानि अस्माभिर्देयानि। अथ मत्कृतानि ऋणानि, इत्यादौ। (भा०) (वाच०)

[ख] उत्तमर्णाय दातव्यत्वेन स्वीकृतं धनम्।

[ग] शाब्दिकास्तु, सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानम्; तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा, इत्याहुः। (ल० म०)

ऋते–अभावः। यथा, ऋते कृष्णान्नोत्पद्यते सुखमित्यादौ। (ल० म०) यथा वा, अभ्रातृको हरेत्सर्वं दुहितॄणां सुतादृते (याज्ञ० २।१३९) इत्यादौ।

---

अत्र प्रतियोगित्वं पञ्चम्यर्थः, कृष्णशब्दस्तद्भक्तिलाक्षणिकः। एवं च 'कृष्णभक्तिप्रतियोगिकाभावप्रयोज्यः सुखकर्तृकोत्पत्त्यभावः' इति बोधः। (ल० म०)

## ए.

**एकः**–[ क ] सजातीयनिष्ठभेदाप्रतियोगी । यथा, अत्रायमेको भुङ्क्ते इत्यादावेकपदार्थः । ( गा० श० पृ० १२४ )

[ ख ] शाब्दिकास्तु, केवलः । कैवल्यं च द्वितीयरहितत्वम् । एवं च तत्तत्क्रियाकर्तृत्वादिविशिष्टसजातीयराहित्यम् । यथा, अयमेकोऽत्र भुङ्क्ते इत्यादौ, इत्याहुः । ( ल० म० प० ७६ )

**एककार्यकारित्वम्**–एककार्यत्ववदस्यार्थोऽनुसंधेयः ।

**एककार्यत्वम्**–(संगतिः) [ १ ] एककार्यानुकूलत्वम् । (म०प्र०पृ० १९)

[ २ ] एकस्य (कारणस्य) कार्यता (प्रयोज्यता कार्ययोः) । सा च जन्यता, जन्यज्ञानविषयता च । (भवा०) ( वै० सा० द० ) यथा, ईश्वरशक्त्योरनुमानाजन्यत्वेऽपि तज्जन्यज्ञानविषयत्वलक्षणैककार्यत्वसंगत्या, ईश्वरवादानन्तरं मीमांसकेन शक्तिराशङ्किता । नैयायिकेन च, ईश्वरसिद्ध्यनन्तरं शक्तिं निरस्य "परमप्रयोजनं त्वनुमानस्यापवर्गः" इत्यनेन ईश्वरसिद्ध्यपवर्गयोरनुमानजन्यत्वलक्षणैककार्यत्वं संगतिः सूचिता । ( भवा० )

**'एकत्र द्वयम्' इति रीत्या जायमानं ज्ञानम्**–उभयप्रकारता–(विधेयता–)निरूपितैकविशेष्यताशालिज्ञानम् । ( ल० व० पृ० ९ ) यथा 'सुन्दरः पुरुषो दण्डी' इत्याकारकमपि ज्ञानम् । ( ख० )

---

१ अत्र, 'एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाप्रतियोगी भुङ्क्ते' इत्याकारकबोधः । ( ग० श० पृ० १२४ )

२ द्वितीयशब्दश्च सजातीये सहाये रूढः । ( ल० म० ) अत्र गदाधरः, कैवल्यं च सजातीयद्वितीयरहितत्वम्, इत्याह । ( ग० श० पृ० १२४ )

३ अत्र 'एतद्देशाधिकरणकभोजनकर्तृसजातीयरहितो भुङ्क्ते' इति बोधः । ( ल० म० )

४ अत्रार्थे, 'एकं कार्यं ययोः ( कारणयोः ) तयोर्भावः' इति व्युत्पत्तिः । (जग०) यथा, गुणागुणमनासङ्गमेककार्यमनन्तरम् । एतेन ब्रह्मणो वृत्तमाहुरेकपदं द्वयम् । भा० व० अ० २१२ ) ( वाच० ) इदं तु कार्यैक्यमित्यप्युच्यते ।

५ अत्र, सौन्दर्य–दण्डयोः पुरुषे युगपद्विशेषणत्वेनान्वयविवक्षायां ( ननु सौन्दर्यविशिष्टपुरुषे दण्डमात्रस्य विशेषणत्वेनान्वयविवक्षायाम् ) ज्ञानं तादृशं भवति, इति ज्ञेयम् ।

**एकत्वम्**—१ ( संख्या ) [ १ ] 'एकम्' इति प्रतीतिविषयो गुणविशेषः । यथा, गगनमेकम्, काल एक इत्यादावेकत्वम् ।

[ २ ] धीविशेषविषयत्वम् । यथा, एकः समवायः, एकोऽभाव इत्यादौ समवायादीनामेकत्वम् । ( वै० वि० ७। २।१ )

[ ३ ] स्वरूपाभेद इति भूषणमतम् । ( वै० उ० ) ( वै० वि० ७। २।१ ) यथा घटगतमेकत्वं घटस्वरूपमेव । ( स्व० ) २ स्वस-जातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वम् । यथा संपन्नो व्रीहिरि-

---

१ रूपरसगन्धस्पर्शव्यतिरेकादर्थान्तरमेकत्वम् । ( वै० ७।२।१ )

२ अत्र, स्वं व्रीह्यादिनिष्ठमेकत्वमिति वङ्गदेशीया आहुः । परे तु, स्वं एकवचनप्रकृत्यर्थः, स्वसमभिव्याहृतेत्यत्र (३ एतदङ्कगते टिप्पणे विद्यमानम् ) स्वं तु एकवचनमित्याहुः ।

वयं तु उभयत्रस्वपदाभ्यामेकवचनमेव ग्राह्यमिति ब्रूमः ।

तथा च स्वप्रकृत्यर्थसजातीयः स्वसमभिव्याहृतपदार्थसंसर्गितावच्छिन्नश्च यः, तन्निष्ठभेदप्रतियो-गितानवच्छेदकैकत्वमिति समुदितार्थः ।

३ साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण बोध्यम् । ( गा० व्यु० का० १ पृ० २ )

४ इदं च पारिभाषिकं सजातीयद्वितीयरहितत्वरूपमेकत्वमिति बोध्यम् । ( स्व० ) अत एव पशुना यजेतेत्यादौ* पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वात् अनेकपशुकरणकयागान्नादृष्ट-सिद्धिः । ( गा० व्यु० का० १। पृ० २ )

५ अत्र तल्लक्षणसमन्वयं कुर्मः—स्वं व्रीहिपदोत्तरमेकवचनम् ( सुप्रत्ययः ), स्वस्य सम-भिव्याहृतं 'संपन्नः' इति पदम्, तदर्थप्रतियोगिकसंसर्गित्वविशिष्टं प्रकृत्यर्थतावच्छेदकं व्रीहित्वम्; एतादृशरूपेण स्वसजातीय एतद्व्रीहिरेव, तन्निष्ठो भेदोऽन्यनिष्ठैकत्वावच्छेद एव (नत्वेतद्व्रीहिनिष्ठैकत्वावच्छेदः), तत्प्रतियोगितानवच्छेदकम् एतद्व्रीहिगतमेकत्वं भवति, इति ।

---

* अत्राहुः—पशुना रुद्रं यजेतेत्यादौ स्वप्रकृत्यर्थसजातीयः (स्वसमभिव्याहृतपदार्थसंसर्गित्ववि-शिष्टप्रकृत्यर्थतावच्छेदकरूपविशिष्टः) यागीयपशुरेव, तन्निष्ठभेदप्रतियोगितानवच्छेदकम् ए-तत्पशुनिष्ठमेकत्वमेव बोध्यत इति नानेकपशुकरणकयागाददृष्टसिद्धिः । अत्र घटोऽस्तीत्यादौ च, एकवचनसमभिव्याहृतसप्तम्यन्तपदार्थतद्देशवृत्तित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण स्व-प्रकृत्यर्थसजातीयतद्घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव बोधात्, तस्य च प्रसिद्धत्वात् प्रयोगोपपत्तिः । संपन्नो व्रीहिरित्यादौ तु व्रीहिपदोत्तरसुप्रत्ययार्थैकत्वस्य स्वाश्रयप्रकृत्यर्थता-वच्छेदकवत्त्वसंबन्धेन व्रीहावेवान्वयः । तथा च—स्वप्रकृत्यर्थव्रीहिसजातीयनिष्ठभेदप्रतियोगिता-निरूपितस्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धावच्छिन्नावच्छेदकतानवच्छेदकस्य व्रीहित्वनिष्ठैकत्वे संभवात्, तादृशसंबन्धेन संपन्नत्वविशिष्टसर्वव्रीहावपि सत्त्वात्प्रयोगोपपत्तिः, इति ।

त्यादौ व्रीह्यादिगतमेकत्वं सुबर्थः। (ग० व्यु० का० १। पृ० २)

३ [क] स्वाधि[1]करणावृत्तिस्वभिन्नज्ञानके[2]त्वम्। (दि० १। पृ० १९)

[ख] आत्मानात्मोभयवृत्तिभि[3]न्नं दुःखासमानाधिकरणं यत् द्वित्वम्, तादृशद्वित्वासमानाधिकरणत्वम्। (ग० बाध०) (कु० ९) (दि० १ प० १९)

**एकदेशान्वयः**—समस्ता[4]दसमस्ताद्वा पदादुपस्थितस्यार्थस्य घटको योऽर्थः, तेन सह तादृशपदार्थाघटकपदार्थान्वयः। यथा चैत्र[5]स्य पितेत्यादौ। (स्व०)

**एकप[6]दत्वम्**—[क] एका[7]र्थविषयकशक्तिनिरूपकत्वम्। यथा राम इति पदस्यैकपदत्वम्।

[ख] शक्तिनिरूपकत्वाभाववदुत्तरत्वे सति शक्तिनिरूपकत्वम्। यथा घट इत्यस्यैकपदत्वम्। (स्व०)

---

१ स्वभिन्नज्ञानत्वव्यापकस्वाधिकरणावृत्तित्वकत्वमेव तत्र ज्ञानगतमेकत्वमिति भावः। यत्रैकत्वं भासते तदेव स्वपदार्थः। (राम० १। पृ० १५)

२ ईश्वरनित्यज्ञानेच्छाकृतीनामिदमेकत्वमित्यवधेयम्।

३ स्ववृत्तित्व-स्वभिन्नवृत्तित्व-एतदुभयसंबन्धेन यत्किंचिद्विशिष्टान्यत्वमिति निष्कर्षः।

४ अत्र, समस्तादित्यत्र समासः, वैयाकरणसंमतानां कृत्तद्धितैकशेषसनाद्यन्तानामवशिष्टानां चतसृणां वृत्तीनामुपलक्षणम्, इति ज्ञेयम्।

५ अत्र, जनकत्वविशिष्टपुंसः पितृपदार्थत्वेन, तदेकदेशेन जनकत्वेन सह चैत्रपदार्थस्य निरूपितत्वसंबन्धेनान्वयादेकदेशान्वयो ज्ञेयः।

अयं भावः—'पदार्थः पदार्थेनैवान्वेति, न तु पदार्थैकदेशेन' इति नियमोऽस्ति। परंतु—ससंबन्धिकस्थले* एकदेशेऽप्यन्वयस्वीकारात्तादृशनियमोऽपवाद्य एवेति चैत्रस्य पितेत्यादावेकदेशान्वयो युक्त एव (न्या० म० ४। पृ० १४)

६ अत्र व्युत्पत्तिः—एकं पदं पदोच्चारणयोग्यकालो यत्र, तस्य भाव इति। (वाच०)

७ अत्रार्थनिष्ठमेकत्वं च तदितरावृत्तिस्तद्व्यक्तित्वादिरूपोऽसाधारणधर्म एवेति न काचिदनुपपत्तिरिति।

---

* तदर्थश्च [क] एकस्मिन् दृष्टे श्रुते वाऽपरसंबन्धिनः स्मरणं ससंबन्धिकपदार्थः। यथा हस्तिहस्तिपकादिरिति। (म० प्र० ४ पृ० ४८) [ख] नित्यसाकाङ्क्षम्। यथा चैत्रस्य गुरुकुलम्, मैत्रस्य दासभार्येत्यादौ गुरुत्वदासत्वादौ चैत्रमैत्रपदार्थयोरन्वयस्य नित्यसाकाङ्क्षत्वेन एकदेशान्वयः सह्यत एव, इति।

[ ग ] अखण्डपदत्वमिति शाब्दिका वदन्ति ।[1]

**एकमात्रवृत्तिगुणत्वम्**—एकत्वावच्छिन्नवृत्तिकगुणत्वम्[2] । (ल० व० पृ० ३६)

**एकमात्रवृत्तित्वम्**—१ स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम्[4][5] । ( राम० १। प० ३९ ) यथा, आकाशत्वस्यैकमात्रवृत्तित्वम् । (स्व०) २ [ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वम्[6] ।

[ ख ] स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वम्[7] । ( दि० गु० पृ० १९२ ) यथा रूपरसादीनां द्वाविंशतिसंख्याकानां गुणानामेकैकवृत्तित्वम्[3] । ( भा० प० गु० श्लो० ८१ )

**एकवाक्यत्वम्**—१ [ क ] विशिष्टैकार्थप्रतिपादकत्वम्[8] । ( ग० २ । अव०

---

१ अत्राखण्डत्वं च पदत्वाभाववदुत्तरखण्डकत्वम् ।

२ इदं च एकैकवृत्तिगुणत्वमित्यप्युच्यते । (स्व०) एकैकवृत्तित्वं च [ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वम् । [ ख ] स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगित्वम् । ( दि० गु० पृ० १९२ )

३ एकैकवृत्तिगुणाश्च द्वाविंशतिः, रूप-रस-गन्ध-स्पर्श-एकत्व-परिमाण-एकपृथक्त्व-परत्व-अपरत्व-बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-संस्कार-अदृष्ट-( धर्माधर्मौ ) शब्दाः, इति । ( मु० गु० पृ० १९२ )

४ इदं च [ १ ] एकव्यक्तिकत्वम् ; [ २ ] एकाश्रयकत्वं चेति यथाक्रममुच्यते ।

५ अत्र भेदश्च व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन विशेषणीयः । (राम० १। प० ३५)

६ स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्य-एतदुभयसंबन्धेन भेदविशिष्टान्यत्वमिति निष्कर्षः । इदं च आकाशत्वादेर्जातित्वे बाधकम् ।

७ तदर्थश्च—स्वं (रूपादिव्यक्तिः), तस्याश्रयः (तद्घटः), तत्प्रतियोगिकोऽन्योन्याभावः (तद्घटभेदः), तस्य व्यापकोऽत्यन्ताभावः* ( तादृशरूपादिव्यक्त्यत्यन्ताभावः ), तत्प्रतियोगित्वं रूपादिव्यक्तीनाम्; इति लक्षणसमन्वयो बोध्यः । एवं रसादावपि लक्षणसमन्वयः स्वयमूह्यः ।

८ निरूप्यनिरूपकभावापन्नविषयताशालिबोधजनकत्वमित्यर्थः ।

---

अत्र, तद्घटाद्यतिरिक्ते तद्रूपव्यक्त्यादीनामसत्त्वेन 'यत्र यत्र तद्घटादिभेदस्तत्र तत्र तद्रूपव्यक्त्याद्यत्यन्ताभावः' इति व्याप्तेः सत्त्वात् तादृशरूपादिव्यक्त्यत्यन्ताभावस्य तादृशान्योन्याभावव्यापकत्वं संभवति, इति बोध्यम् ।

पृ० २ ) यथा देवदत्तो ग्रामं गच्छतीति वाक्यस्यैकवाक्यत्वम् । (स्व०) [ ख ] तत्प्रयोज्यविषयतया[1] साक्षात्परंपरया वा निरूपिता या विषयता तत्प्रयोजकत्वम्[2] ( ग० व्यु० का० १। पृ० २७ ) २ [ क ] तदुत्थाप्याकाङ्क्षानिवर्तकत्व[3]-तन्निवर्तनीयाकाङ्क्षोत्थापकत्व[4]-एतदन्यतरवत्त्वम् । ( ग० २ । अव० पृ० २ ) यथा, प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते ( चि० २। अव० पृ० ७६ ) इत्यादौ प्रतिज्ञादीनां पञ्चानामवयवानामेकवाक्यत्वम् ।

[ ख ] स्वभिन्नत्व-स्वानवच्छिन्नत्व-स्वसामानाधिकरण्य-एतत्रितयसंबन्धेन विषयताविशिष्टविषयताशून्यबोधजनकवाक्यत्वमित्यस्मद्गुरुभिकुशास्त्रिचरणाः प्राहुः । एकवाक्यं द्विविधम् । पदैकवाक्यम, वाक्यैकवाक्यं चेति । तत्राद्यं यथा—सोरोदीदित्याद्यर्थवादसमुदायस्य पदस्थानीयतया विधिपदेनैकवाक्यता । द्वितीयं यथा—यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वम्, तत् । यथा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत " इत्यादिवाक्यानां " समिधो यजति " इत्यादिवाक्यानां च परस्पराङ्गाङ्गिभावबोधकतयैकवाक्यता । ( वाच० ) ३ अविसंवादिवाक्यत्वमेकवाक्यत्वम् । यथा, श्रवणकटु नृपाणामेकवाक्यं विवव्रुः (रघु० ६। ८५) इत्यादौ, इति काव्यज्ञा वदन्ति ।

---

१ अत्र, तत्पदजन्यज्ञाननिरूपितत्वेन तत्पदप्रयोज्यत्वव्यवहारो विषयतायामिति बोध्यम् । (कृष्ण०)

२ अत्र 'विशेष्यताद्वयनिरूपितैकप्रकारताशालिज्ञानजनकवाक्ययोरेव एकवाक्यत्वम्.' इति नियमो ज्ञेयः । ( कृष्ण० )

३ तदुत्थाप्याकाङ्क्षानिवर्तकत्वं च *तत्प्रतिपाद्यार्थविषयकज्ञानजन्या याऽऽकाङ्क्षा, तत्प्रतियोगिकनिवृत्तिजनकज्ञानजनकत्वम् । इदं च हेतूदाहरणादीनामेकवाक्यत्वम् ।

४ तन्निवर्तनीयाकाङ्क्षोत्थापकत्वं च † तत्प्रतिपाद्यार्थविषयकज्ञानजन्या या निवृत्तिः, तत्प्रतियोग्याकाङ्क्षाजनकज्ञानजनकत्वम् । इदं च प्रतिज्ञादीनामेकवाक्यत्वमित्यवधेयम् ।

---

* अत्र तत्पदं प्रतिज्ञापरम् ।

† अत्र तु तत्पदं हेत्वादिपरम् ।

**एकविशेषबाधः**–इतरबाधग्रहवदस्यार्थोऽनुसंधेयः । ( स्व० )

**एकान्तः**–१ अव्यभिचारः । यथा, अनैकान्तिक इत्यादावेकान्तः । २ नियमः । यथा " न तावदयमेकान्तेनाविषयः ( शारी० भा० ) इत्यादौ ।

**एकार्थसमवायः**–[ क ] स्वसमवायिसमवेतत्वम् । ( सि० च० )

[ ख ] एकस्मिन्नर्थे समवायेन सत्त्वम् । (नील० १। पृ० ६) यथा, एकं रूपमित्यादावेकत्व–रूपयोरेकार्थसमवायः । ( त० दी० १। प० ६ )

**एकेन्द्रियग्राह्यगुणत्वम्**[1]–एकेन्द्रियग्राह्यजातिमद्गुणत्वम् । (ल०व०पृ०३६)

**एकैकवृत्तिगुणत्वम्**[2]– [ क ] स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकैकत्वकत्वे सति गुणत्वम् ।

[ ख ] स्वाश्रयान्योन्याभावव्यापकात्यन्ताभावप्रतियोगिगुणत्वम् । ( दि० गु० पृ० १९२ )

**एतत्**–[ क ] प्रत्यक्षबुद्धिविषयः । ( दि० ४ प० १७९ ) ( ग० शक्ति० पृ० ११६ ) यथा, 'एतत् जलमस्ति' इति प्रत्यक्षे विषयो जलम् । (स्व०)

[ ख ] समीपतरवर्ति वस्तु इति केचिद्वदन्ति । ( दि० ४। प० १७९ )

**एव**–१ [क] एवकारार्थस्तु त्रिविध इति प्राञ्चः । तथा हि–विशेषणसंगतः, विशेष्यसंगतः, क्रियासंगतश्चेति । तत्राद्यः–अयोगव्यवच्छेदः । यथा शङ्खः पाण्डुर[3] एवेत्यादौ । द्वितीयः–अन्ययोगव्यवच्छेदः । यथा पार्थ एव[4] ध-

---

१ एकमात्रेन्द्रियग्राह्यगुणास्तु रूपम्, रसः, गन्धः, स्पर्शः, शब्दः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, वेगश्चेति । ( स्व० )

२ एकैकवृत्तिगुणाश्च रूपादिचतुष्टयम्, एकत्वम्, परिमाणम्, एकपृथक्त्वम्, परत्वादिसंस्कारान्ताः पञ्चदश चेति द्वाविंशतिर्गुणाः । ( मु० गु० पृ० १९२ ) एतत्सर्वं " एकमात्रवृत्तिगुणत्वम् " इत्यत्र पूर्वमुक्तमपि स्पष्टार्थं पुनरुच्यत इति बोध्यम् ।

३ अत्र [ क ] शङ्खत्वावच्छेदेन पाण्डुरत्वायोगव्यवच्छेदो बुध्यते [ ख ] विशेष्ये शङ्खे पाण्डुरत्वायोगव्यवच्छेदो बोध्यते । ( म० प्र० १। पृ० ७ ) [ ग ] केचित्तु, पाण्डुरत्वादौ शङ्खादिनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो बोध्यत इत्याहुः । ( प० मा० )

४ अत्र [ क ] धनुर्धरे पार्थान्यतादात्म्यव्यवच्छेदो बुध्यते । [ ख ] विशेषणे धनुर्धरे पार्था-

नुर्धर इत्यादौ। (नील० पृ० ४९) (म० प्र० १। पृ० ७) तृतीयः—अत्यन्तायोगव्यवच्छेदः। यथा नीलं सरोजं भवत्येवेत्यादौ। [ख] नव्यास्तु (शिरोमणिभट्टाचार्यप्रभृतयस्तु), सर्वत्रान्ययोगव्यवच्छेदेनैवोपपत्तावयोगव्यवच्छेदात्यन्तायोगव्यवच्छेदौ न स्वीकार्यावित्यवीवदन्। (म० प्र० १। पृ० ७-८) २ सादृश्यम्। ३ अनियोगः। ४ आचारनियोगः। ५ विनिग्रहः। ६ परिभवः। ७ ईषदर्थः; इत्यादि काव्यज्ञा आहुः।

---

## ऐ.

**ऐकाधिकरण्यम्**—सामानाधिकरण्यम्। यथा "साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" (भा० प० २। श्लो० ७०) इत्यादौ साध्यहेत्वोः सामानाधिकरण्यम्।

**ऐकान्तिकः**— १ एकमात्रव्याप्तिग्राहकसहचारो यत्र, सः। (गौ० वृ० १।४५) यथा, अनैकान्तिक इत्यादावैकान्तिकः। यथा वा वह्निमान् धूमादित्यादौ धूम ऐकान्तिकः। (स्व०) २ अवश्यं भावीति सांख्यवेदान्तिनः। (वाच०)

---

न्ययोगव्यवच्छेदो बोध्यते। धनुर्धरपदस्योत्कृष्टधनुर्धरे लक्षणा। तथैव तात्पर्यात्। पार्थान्ययोगस्तत्तादात्म्यम्। (म० प्र० १। पृ० ७) [ग] केचित्तु, धनुर्धरादिनिष्ठान्योन्याभावप्रतियोगित्वव्यवच्छेदः पार्थादौ प्रतीयत इत्याहुः। (प० मा०) [घ] पार्थान्यस्मिन् प्रशस्तधनुर्धरत्वं व्यवच्छिद्यते। (वाच०)

१ अत्र [क] अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदो बुध्यते। [ख] संभवाभिप्रायके "नीलं सरोजं भवत्येव" इत्यादौ अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजे नीलभवनकर्तृत्वात्यन्तायोगव्यवच्छेदो बोध्यते। (म० प्र० पृ० ७) [ग] सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते। (वाच०) [घ] केचित्तु, यावत्सरोजनिष्ठात्यन्ताभावप्रतियोगित्वव्यवच्छेदो नीलभवनकर्तृत्वादौ प्रतीयत इत्याहुः। (प० मा०)

२ अत्र व्युत्पत्तिः—एकस्य साध्यस्य तदभावस्य वा योऽन्तः सहचारोऽव्यभिचरितसहचारः (तस्यायमित्यैकान्तिकः), इति।

**ऐतिह्यम्**–[ क ] ‘इति होचुः’ इत्यनिर्दिष्टप्रवक्तृकं प्रवादपारंपर्यम् । (वात्स्या० २।२।१)

[ ख ] अनिर्दिष्टप्रवक्तृकं परंपरागतं वाक्यम् । यथा, ‘वटे वटे यक्षः’ इत्यादि । तद्धि, इति होचुरित्यनेन प्रकारेण यदुच्यते । (गौ०वृ०२।१६९)

[ ग ] अज्ञातमूलवक्तृकः शब्दः । यथा, ‘इह वटे यक्षस्तिष्ठति’ इति । (त० दी० पृ० ३४)

**ऐशानी**–( दिक् ) सुमेरुसंनिहिता, उदयगिरिसंनिहिता च दिक् । ( वै० वि० २।२।१० ) यथा झळकीग्रामत ऐशान्यामकलकोटग्रामः । (ख०)

---

## औ.

**औपाधिकी**–१ (संज्ञा) [ क ] याऽनुगतोपाध्यवच्छिन्नसंकेतवती संज्ञा, सा । यथा, भूतदूतादिः ।

[ ख ] केचित्तु, यत् उपाध्यवच्छिन्नशक्तिमन्नाम तत् औपाधिकम् । यथा, आकाश-पश्वादि, इत्याहुः । (श० प्र० पृ० २५-२६) २ सांख्या मायावादिनश्च, उपाधिकृतो बन्ध औपाधिकः । यथा “न स्वभावतो बद्धस्य मोक्षसाधनोपदेशविधिः” ( सां० सू० ) इत्यादौ जीवस्य बन्ध औपाधिकः; न नैमित्तिकः, नापि तात्त्विक इत्याहुः । ( वाच० )

**औलूक्यः**–वैशेषिकसूत्रकारः कणादः । विस्तरस्तु कणादशब्दे द्रष्टव्यः ।

**औष्ण्यम्**–उष्णस्पर्शः । ( राम० १। पृ० ७० )

---

१ ऐतिह्यं प्रमाणान्तरमिति अष्टप्रमाणवादिनः पौराणिकाः । ( म० प्र० पृ० ६५ ) ( नील० प० ३४ ) तत् प्रमाणान्तरं नेति नैयायिकसांख्यादयः प्राहुः ।

२ विशिष्यानिश्चितप्रथमवक्तृकः शब्द इत्यर्थः । ( नील० प० ३४ )

अत्रेदं बोध्यम्–तदेतदैतिह्यं आप्तोक्तं चेत् शब्दान्तर्भावादनुमानमेव । न चेत् प्रमाणमेव न भवतीति । ( त० व० पृ० १०० ) ( न्या० म० २। पृ० ३२ ) ( नील० प० ३४ )

३ अत्र, सा हि ( संज्ञा ) सचेतनावृत्तिविशेषगुणवत्त्व-वार्ताहारकत्व-इत्याद्यनुगतोपाधिपुरस्कारेणैव प्रवर्तते । ( श० प्र० पृ० २५ )

४ अत्र व्युत्पत्तिः–उलूकनामर्षेरपत्यमौलूक्यः, इति । ( वाच० )

## क.

**कठिनत्वम्**–१ अवयवसंयोगविशेषः । ( त० दी० १। पृ० ६ ) ( त० भा० प० २७) यथा, गण्डाभोगात्कठिनविषमामेकवेणीं करेण, ( मेघ० उ० ३१ ) इत्यादौ । २ स्पर्शविशेषः । ( सि० च० ) यथा, “ काठिन्यादि क्षितावेव” (भा० प० श्लो० १०९) इत्यादौ पृथिवीमात्रवृत्ती कठिन–सुकुमारस्पर्शौ । ( मु० गु० प० १९७ ) ३ द्रव्यस्य आरम्भकसंयोगविशेषात्स्पर्शविशेष इति केचित् । ४ शब्दादेस्तु दुर्बोधत्वमेव काठिन्यम् । हृदयादेश्च काठिन्यं तु अवच्छेदकतासंबन्धेन दयाया अभाव एव, इत्यादिकं स्वयमूह्यम् । ( स्व० )

**कणादः**–१ वैशेषिकसूत्रकारः कश्यपगोत्र ऋषिविशेषः । २ स्वर्णकार इति काव्यज्ञाः । ( वाच० )

**कथा**–१ [ क ] नानावक्तृकः पूर्वोत्तरपक्षप्रतिपादकवाक्यसंदर्भः । ( त० भा० प० ४४ ) ( त० दी० प० ४३ )

---

१ स च, “ अथातो धर्मं व्याख्यास्यामः” इत्यारभ्य “ तद्वचनादाम्नायस्य प्रामाण्यम् ” इत्यन्तं दशाध्यायात्मकं वैशेषिकदर्शनाख्यं तर्कशास्त्रं प्रणिनाय । तन्मते सप्त पदार्था इत्याद्यस्मिन् कोशे संपादितमेव । अधिकं तु दर्शनशब्दव्याख्याने द्रष्टव्यम् ।

२ कथाधिकारिणस्तु, तत्त्वनिर्णय-विजय-एतदन्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवः अकलहकारिणः कथोपयिकव्यापारसमर्थाः, इति । ( गौ० वृ० १।४१ प्रस्तावना )

कथकस्य कथायां नियमविशेषः खण्डने दर्शितः । यथा–‘अथ कथायां वादिनो नियममेतादृशं मन्यन्ते, प्रमाणादयः सर्वतन्त्रसिद्धान्ततया सिद्धाः पदार्थाः सन्तीति कथकाभ्यामभ्युपेयम्, इति । तदपरे न क्षमन्ते । तथा हि–प्रमाणादीनां सत्त्वं यदभ्युपेयं कथकेन, तत् कस्य हेतोः?; किं तदनभ्युपगच्छद्भ्यां वादिप्रतिवादिभ्यां तदभ्युपगमसाहित्यनियतस्य तस्य प्रवर्तयितुमशक्यत्वात्? उत कथकाभ्यां प्रवर्तनीयवाग्व्यवहारं प्रति हेतुभावात्? उत लोकसिद्धत्वात्? अथवा तदनभ्युपगमस्य तत्त्वनिर्णयविजयातिप्रसञ्जकत्वात्? । न तावदाद्यः, तदनभ्युपगच्छतोऽपि चार्वाकमाध्यमिकादेर्वाग्व्यवहाराणां सविस्तराणां प्रतीयमानत्वात्, तस्यैव वा अनिष्पत्तौ भवतस्तन्निरासप्रयासानुपपत्तेः, इत्यादि । ( वाच० )

३ एकेन पूर्वपक्षः क्रियते, अन्येन समाधानम्, एवंक्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावमेयम् । ( नील० प० ४३ )

[ ख ] तत्त्वनिर्णय-विजय-एतदन्यतरस्वरूपयोग्यो न्यायानुगतवचनसंदर्भः। ( गौ० वृ० १।४१ । प्रस्तावना )

[ ग ] वादिप्रतिवादिनोः पक्षप्रतिपक्षपरिग्रहः। (सर्व०अक्ष०पृ०११४)

[ घ ] विचारसमयः। ( ग० अव० ) तिस्रः कथा भवन्ति। वादः, जल्पः, वितण्डा चेति। ( वात्स्या० १।२।४२ ) ( गौ० वृ० १।४१ )

२ प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुः, इति काव्यज्ञा आहुः। ( वाच० )

**कथाभासः**–(जातिः) यत्र वादिप्रतिवादिभ्यां परस्परमसद्दूषणमुद्भाव्यते, सः। (स्व०) यथा, प्रतिषेधेपि समानो दोषः। (गौ० ५।३९) शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्यत्र प्रयत्नानन्तरीयकत्वं न शब्दानित्यत्वं साधयति अनैकान्तिकत्वादिति यो दोषः, स त्वत्पक्षेपि तुल्यः प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वादिति। ( गौ० वृ० ५।३९ )

**कनिष्ठत्वम्**–१ [ १ ] अल्पतरस्पन्दान्तरितजन्मत्वम्। ( दि० गु० ) इति वैशेषिकाः। [ २ ] कालकृतमपरत्वम्। ( सि० च० ) इति नैयायिकाः। यथा दशरथपुत्रस्य लक्ष्मणस्य राममपेक्ष्य कनिष्ठत्वम्। ( स्व० ) २ रसिकास्तु, परिणीतत्वे सति भर्तृन्यूनस्नेहा कनिष्ठेत्याहुः। ( रसम० ) ( वाच० )

---

१ अत्र षट् पक्षाः* प्रवर्तन्ते। तथा हि–शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापनावादिनः प्रथमः पक्षः। प्रयत्नकार्यानेकत्वात्कार्यसम इति प्रतिवादिनो द्वितीयः पक्षः। प्रतिषेधाप्रतिषेधेप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः। विप्रतिषेधस्तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः। ( गौ० वृ० ५।४१ ) प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानप्रसङ्गो मतानुज्ञा। ( गौ० ५।४२ ) इति पञ्चमः पक्षः। स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः। ( गौ० ५।४३ ) इति षष्ठः पक्षः। ( गौ० वृ० ५।४१–४३ )

२ कालकृतं संनिकृष्टत्वमित्यर्थः।

---

* अत्र च त्रयः पक्षा अपि संभवेयुः। ( गौ० वृ० ५।४० )

**करणत्वम्**[1]–( कारकम् ) सविकरणस्य[2] यद्धातोरुपस्थाप्ययादृशार्थे तृतीयया यादृशः स्वार्थोऽनुभाव्यते, स तद्धातूपस्थाप्यतादृशक्रियायाः करणसंज्ञकं कारकमुच्यते । यथा दात्रेण[3] छिनत्ति, घटत्वेन[3] जानातीत्यादौ । ( श० प्र० पृ० ८८ )

**करणम्**[4]–[ क ] तत्, यस्मिन्सति क्रिया भवत्येव । ( चि० ४ )

---

१ करणशब्दस्तु व्यापारप्रत्यासत्त्या जनकस्य वाचकः । यथा चाक्षुषादौ चक्षुरादिः संयोगेन ( व्यापारेण ) हेतुः; अनुमित्यादौ व्याप्तिज्ञानादिः परामर्शादिना ( हेतुः ); स्मृत्यादावनुभवादिः संस्कारादिना स्वव्यापारेणैव हेतुः । ( श० प्र० पृ० ८८ )

२ चैत्रेण पक्कमित्यादौ धातोरर्थे तृतीयया बोध्यमपि कर्तृत्वम् न विकरणाक्तस्य, इति न तत्रातिप्रसङ्गः । ( श० प्र० पृ० ८८ )

३ अत्र, धात्वर्थे छिदायां दात्रस्य व्यापारद्वारा जन्यत्वादि; ज्ञानादौ च घटत्वादेः प्रकारित्वादिकं तृतीयया बोध्यते, तदेव तत्र करणत्वम् । ( श० प्र० पृ० ८८ )

४ तल्लक्षणं च करणत्वमेव । तच्च [ क ] कारकान्तरेऽचरितार्थत्वे * सति क्रियाहेतुत्वम् । [ ख ] व्यापारवत्त्वे सति कारणत्वम् । [ ग ] परे तु, क्रियानुकूलकर्तृव्यापारवत्त्वमित्याहुः । ( का० व्या० पृ० ७ ) [ घ ] साक्षात् कार्यानुकूलक्रियाश्रयत्वं करणस्य लक्षणमिति कश्चिदुक्ति । ( ल० व० ) [ङ] शाब्दिकास्तु, करणत्वशक्तिमत्त्वम्† इत्याहुः । ( ल० म० सुव० प० ९८ )

करणकारणयोर्वैलक्षण्यमुक्तम्–"द्रव्यादिविषयो हेतुः, करणं चरितक्रियम्" इति । चरितक्रियम् व्यापारद्वारा क्रियामात्रविषयमित्यर्थः । ( वाच० )

---

* कारकान्तरनिष्ठव्यापारसंबन्धावच्छिन्नक्रियाहेतुत्वाभाव इत्यर्थः । तेन, कर्तृ-कर्म-संप्रदान-अपादान-अधिकरणेषु नातिप्रसङ्गः । तथाहि–कर्तुः, कुठारादिकरणनिष्ठव्यापारद्वारा छिदादिहेतुत्वान्नातिप्रसङ्गः । कर्मणस्तु, तादृशहेतुत्वविरहादेव नातिप्रसक्तिः । अधिकरणमपि, कर्तृकर्मान्यतरव्यापारद्वारा क्रियाहेतुः । संप्रदानम्, स्वानुमतिप्रकाशनेन कर्तुरिच्छाद्वारा दाननिमित्तम् । अपादानम्, पतनप्रतिबन्धकसंयोगनाशकपर्णादिविभागद्वारा पतनादिनिमित्तम्, इति नातिप्रसङ्गः । ( का० व्या० पृ० ७ )

† सा च शक्तिः, यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते, तन्निष्ठा, इति ( ल० म० सुव० पृ० ९८ )

[ख] साधकतमम्[1] । (त० भा० प० २) (पा० सू० १।४।४२)
[ग] प्राचीननैयायिकमते व्यापारवद्[2]साधारणकारणम्[3] । (न्या० म० १। प० २) (न्या० बो० १। प० ८) (मु० १। पृ० ११८) (त० सं०) यथा, अनुमितिं प्रति व्याप्तिज्ञानं करणम् । (सि० च० २। पृ० २९) (त० दी० ६। प० २३) यथा वा "षड्विधे हेतुरिन्द्रियं करणं मतम्" (भा० प० श्लो० ५९) इत्यादौ प्रत्यक्षं प्रतीन्द्रियं करणम् । यथा वा छिदिक्रियां[4] प्रति कुठारः । (त० कौ० १। पृ० ७)

[घ] नवीननैयायिकमते फलायोगव्यवच्छिन्नं[5] कारणम् । (प० च०)

---

१ अत्र तमबर्थः प्रकर्षः । सचाव्यवधानेन फलजनकव्यापारवत्ता । तत्रोक्तं हरिणा—क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्, इति । अत्र विवक्ष्यते इत्यनेनान्यस्यापि विवक्षायां करणत्वं भवतीति सूचितम् । अत एवाह—"स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः" इति । (ल० म० सुब० प० ९८) (वै० सा० सुब० पृ० १७९–१८०)

२ अत्र, घटं प्रति कपालसंयोगवारणाय व्यापारवदिति । ईश्वरज्ञानवारणाय असाधारणेति । (न्या० म० १। पृ० २) अत्रासाधारणत्वं च [क] कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । (वाक्य० १। पृ० १०) [ख] कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् । (न्या० बो० १। पृ० ८)

३ जनकतासंबन्धेन स्वजनकवत्त्वे सति स्वासाधारणकारणमित्यर्थः । (वाक्य० १। पृ० १०)
अत्र प्राचीनाः, "व्यापारत्वे सति" इति वक्तव्यम्; अतश्चक्षुःसंयोगादौ नातिव्याप्तिः । श्रोत्रमनःसंयोगः शब्दो वा व्यापारः संभवत्येवेति, न श्रोत्रेन्द्रिये करणलक्षणाव्याप्तिः, इति वदन्ति । नव्यास्तु, असाधारणमेव कारणं करणम् । यद्विलम्बात्प्रकृतकार्यानुत्पादः, तत्करणत्वस्यासाधारणत्वात्मकतया कालादिषु तादृशकारणत्वाभावान्नातिव्याप्तिः । व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव (प्रत्यक्षे) करणम्, इत्याहुः । (नील० १। पृ० १६)

४ अत्र कुठारदारुसंयोगो व्यापारो बोध्यः । (त० कौ० पृ० ७)

५ तदर्थश्च [क] फलव्याप्तम् । (प० च०) तस्य करणतायां सामानाधिकरण्यं प्रत्यासत्तिः । (भवा०) [ख] यद्विलम्बात्प्रकृतकार्यानुत्पादः, तत् । (नील० १। प० १६) [ग.] शाब्दिकास्तु, स्वव्याप्येतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिः, तत् इत्याहुः । (वै० सा० द० सुब० पृ० १७९)

(नील० २। प० २३) (सि० च० २। पृ० २३) (वै० सा० द०) यथा, अनुमितिं प्रति परामर्शः करणम्। (त० सं० ) (नील० ) (भवा०) यथा वा प्रत्यक्षे इन्द्रियार्थसंनिकर्षः करणम् । (नील० १ । पृ० १६)

[ ङ ] फलायोगव्यवच्छिन्नं फलोपधायकं वा कारणम् । यथा ज्ञानादावात्मापि करणमिष्टमेव । (श० प्र० पृ० ८८ ) (न्या० म० १। पृ० २)

[ च ] शाब्दिकास्तु, [ १ ] अव्यवधानेन फलजनकव्यापारवत्कारणम् । ( वै० सा० सुव० पृ० १७९) [ २ ] कारकान्तरसाध्यव्यापारम् । (ल० म०) [ ३ ] क्रियामात्रजनकत्वे सति व्यापारवत्, करणम् इत्याहुः ।

[ छ ] आभ्यन्तरम्, बाह्यम् इति द्विविधः कारणविशेषः करणम् इति सांख्या आहुः ।

कर्ता-[क] क्रियानुकूलकृ[3]तिमान् । यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रादिर्मुख्यैः कर्ता । (म० प्र० पृ० ६ )

---

१ सांख्यानामयं सिद्धान्तः—कारकविशेषः करणम् । करणं त्रयोदशविधम् । यदाह—करणं त्रयोदशविधं तदा हरण-धारण—प्रकाश—करम् । कार्यं च तस्य दशधा हार्यं धार्यं प्रकाश्यं च । ( कारि० ) करणं त्रयोदशविधम्—इन्द्रियाण्येकादश बुद्धिरहंकारश्चेति त्रयोदशप्रकारं करणम्, इति । ( वाच० )

२ तल्लक्षणं च वक्ष्यमाणकर्तृत्वमेवेति बोध्यम् । ( स्व० ) अत्रेदमधिकं बोध्यम्—कर्तुः कारकान्तरप्रवर्तनं व्यापारः, इति शाब्दिकाः । ( मञ्जू० )

३ "स्वतन्त्रः कर्ता" (पा० १।४।५४) इति सूत्रे स्वातन्त्र्यमप्येतदेवेति न तद्विरोधः । (म० प्र० प० ६ ) शाब्दिकास्तु, स्वातन्त्र्यं च [ क ] समभिव्याहृतकारकान्तरानधीनत्वे सति कारकत्वम् । ( वै० सा० द० ) [ ख ] धात्वर्थव्यापाराश्रयत्वम्* । ( ल० म० सुव० पृ० ९५ ) ( वै० सा० पृ० १७३ ) [ ग ] अन्येतु ( नागेशभट्टादयः ), कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताऽनाश्रयतद्धात्वर्थाश्रयत्वम्, इत्याहुः । ( वै० सा० द० सुव० पृ०१७३ ) ( ल० म० सुव०पृ० ९५ )

४ घटो भवति, पटो नश्यति इत्यादौ अचेतनकर्तृप्रयोगे तु घटपटादिर्गौण एव कर्ता; 'घटो भवनाश्रयः, पटो नाशप्रतियोगी ' इति बोधात् । (म० प्र० पृ० ६)

---

* अत्रोक्तं हरिणा—धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते । प्राधान्यतः शक्तिलाभात् प्राग्भावापादनादपि ॥ तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् । अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् ॥ आरादप्युपकारत्वात् स्वातन्त्र्यं कर्तुरिष्यते, इति ।

[ ख ] केचिच्छाब्दिकास्तु, साधनान्तरनियोगव्यापारवान् कर्ता इत्याहुः । ( ल० म० सुब० पृ० ८४ )

[ ग ] अन्ये तु शाब्दिकाः, धात्वर्थव्यापाराश्रयः कर्ता । अत एव "यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्तेति स्थाली पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेव" इत्यादि संगच्छते इत्याहुः । ( वै० सा० सुब० पृ० १७३–१७४ ) न्याये, व्याकरणे च शास्त्रे [ १ ] कर्ता त्रिविधः । शुद्धः[1], प्रयोजको हेतुः[2], कर्मकर्ता[3] चेति । तत्राद्यस्योदाहरणम्-मया हरिः सेव्यते[4] । द्वितीयस्योदाहरणं च-कार्यते हरिणा[5] । तृतीयस्योदाहरणं तु गमयति कृष्णं गोकुलं गोप इति बोध्यम्[6] । ( वै० सा० सुबर्थ० पृ० १७८ ) । [ २ ] केचित्तु, "क्रियामुख्यो भवेत्कर्ता हेतुकर्ता प्रयोजकः । अनुमन्ता ग्रहीता च कर्ता पञ्चविधः स्मृतः" इत्याहुः । [ ३ ] षड्विधो घातकर्तेति[7] मनुः । [ ४ ] अष्टविधः कर्तेत्यन्ये । [ ५ ] "त्रिधैव ज्ञायते कर्ता विशेषेण क्रियां प्रति । योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः" इति त्रिविधः कर्तेति भट्टमीमांसकाः । [ ६ ] सात्त्विक-राजस-तामस-भेदेन त्रिविधः कर्तेति वेदान्तिनः । ( गीता० ) ( वाच० )

---

१ शुद्धत्वं च हेतुत्व-कर्मकर्तृत्व-एतदनधिकरणत्वम् । प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराऽऽश्रयत्वमिति यावत् । ( वै० सा० द० पृ० १७८ )

२ प्रयोजकहेतुत्वं च णिजर्थप्रेरणाश्रयत्वम् । ( वै० सा० द० पृ० १७८)

३ कर्मकर्तृत्वं च धातूपात्तव्यापाराश्रयत्वे सति* णिजर्थव्यापारेणाऽऽप्यमानत्वेन विवक्षितत्वम् । ( वै० सा० द० पृ० १७८ ) इदं च निर्वर्त्यविकार्ययोरेव, न तु प्राप्ये इति ज्ञेयम् ।

४ अत्र 'मदभिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापारः' इति बोधः । ( वै० सा० सुब० पृ० १७९ )

५ अत्र 'हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः' इति बोधः । (वै० सा० सुब० पृ० १७९)

६ अत्र कृष्णः कर्मकर्ता । तथा च 'गोपाभिन्नकर्तृको गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापारः' इति बोधः ।

७ तथा हि—अनुमन्ता विशसिता नियन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च † षडेते घातकाः स्मृताः, इति ।

---

* तदुक्तम्—क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्तुः कर्मकर्तेति तद्विदुः, इति । ( व्या० का० ) ( वाच० )

† अत्र ( चतुर्थचरणे ) "खादको घातकस्तथा" इति पाठात् अष्टानां कर्तृत्वं बोध्यम् ।

**कर्तृत्वम्**–( कारकम् ) [ क ] सविकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेऽनुभावयितुं शक्यः, तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वम् । यथा पचति, जानातीत्यादौ । (श० प्र० पृ० १०३) [ ख ] यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारकयदर्थधर्मिकान्वयबोधं प्रति लटः सामर्थ्यम्, स एवार्थो धातूपस्थाप्यतदर्थस्य कर्तृत्वम् । ( श० प्र० पृ० १०४ )

**कर्तृत्वम्**–[ क ] क्रियायाः कृतेर्वा समवायित्वम् । ( चि० १)( चि० ४ )

---

१ कर्तृशब्दोऽवयववृत्तिलभ्ये कृत्याश्रये यौगिकः । ( श० प्र० पृ० १०३ )

२ कर्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणाक्तेन, इति न तत्र प्रसङ्गः । (श० प्र० पृ० १०३ )

३ अत्र, स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाक-बुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यत इति पाकस्य यत्नवत्त्वम्, ज्ञानस्याश्रयत्वम्, कर्तृत्वम् । एवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वम्; प्रतिबिम्बत इत्यत्र भ्रमात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्तृत्वम् । ( श० प्र० पृ० १०३ )

४ पच्यते ( तण्डुलः ) इत्यादौ धातोरर्थवत्तया स्वार्थकर्मत्वं लटाऽनुभाव्यमपि न यगन्तभिन्नस्य; पक्ष्यते तण्डुल इत्यादौ तु तादृशस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्मत्वमनुभाव्यते, न तद्विशेषेण लटा; इति तद्व्युदासः । ( श० प्र० पृ० १०४ )

५ इदं कर्तृत्वं च, अत्ति, जुहोतीत्यादावप्यदाद्युत्तरं लुप्तस्यैव विकरणस्य प्रतिसंधाने भोजनकर्तृत्वादेरवगम इति, तदप्रतिसंधानेऽपि, इति मताभिप्रायेण बोध्यम् । ( श० प्र० पृ० १०४ )

६ क्रियाश्रयत्वं* कर्तृत्वमिति वैयाकरणाः । (का०व्या० पृ० २ ) तन्मते अचेतनकाष्ठादीनामपि मुख्यं कर्तृत्वमिष्टमेव, इति विज्ञेयम् ।

७ इदं नैयायिकमतानुसारि मुख्यं कर्तृत्वम् । तन्मते अचेतने ( काष्ठादौ ) कर्तृपदप्रयोगस्तु गौणः । ( का० व्या० पृ० २ )

---

* इदमत्रावधेयम्–कारककर्मादिपदमिव कृधातुरप्यत्र क्रियार्थक एव (अचेतनसाधारण्याय)। आश्रयत्वमिह तत्तदाख्यातार्थद्वारा । तथा च यगाद्यसमभिव्याहृताख्यातेन यद्धात्वर्थान्वितयद्धर्मवत्त्वं बोध्यते, तद्धात्वर्थनिरूपितधर्मवत्त्वम् तद्धात्वर्थकर्तृत्वम् । यथा पचतीत्यादौ पाकाद्यनुकूलव्यापारवत्त्वम्, जानातीत्यादौ ज्ञानाद्याश्रयत्वम्, नश्यतीत्यादौ नाशप्रतियोगित्वम्, इति । चैत्रेण पच्यते इत्यादौ पाकजन्यफलाश्रयत्ववारणाय यगाद्यसमभिव्याहृतेति । चैत्रादेः कर्तृत्वं तु पचतीत्याख्यातबोध्यं धर्ममादायैवेति ज्ञेयम् । (का० व्या० पृ० २)

[ख] उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। यथा, ईश्वरस्य द्व्यणुककर्तृत्वम्। (त० दी० १। आत्म० पृ० ११) यथा वा, कुलालस्य घटकर्तृत्वम्। (स्व०)

[ग] इतरकारकाप्रयोज्यत्वे सति सकलकारकप्रयोक्तृत्वम्। (सर्व० अक्ष०) यथा चैत्रो ग्रामं गच्छतीत्यादौ चैत्रस्य कर्तृत्वम्।

[घ] (१) क्वचित्, व्यापाराश्रयत्वम्। यथा रथो गच्छतीत्यादौ रथादेः कर्तृत्वम्। [२] प्रतियोगित्वम्। यथा घटो नश्यतीत्यादौ घटस्य कर्तृत्वम्। (स्व०) [३] कृत्यवच्छेदकत्वम्। यथा शरीरस्य कर्तृत्वम्। (गौ० वृ० ३।६)

[ङ] शाब्दिकास्तु, [१] कर्तृप्रत्यय-(श्यप्-श्यनादिप्रत्यय-)समभिव्याहृतधातूपात्तप्रधानीभूतव्यापाराश्रयत्वम्, [२] कर्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वम्। यथा चैत्रस्तण्डुलं पचतीत्यादौ चैत्रस्य कर्तृत्वम्, (ल० म० सुबर्थ० पृ० ९९) इति वदन्ति।

[च] अनुकूलकृतिमदन्तःकरणप्रकृतित्वं कर्तृत्वमिति सांख्या आहुः। न्यायनये कर्तृत्वं द्विविधम्। मुख्यम, गौणं चेति। तत्राद्यं कृतिमत्त्वम्। द्वितीयम् आश्रयत्व-प्रतियोगित्वादि। (स्व०)

---

१ इदं च प्राचीननैयायिकमतानुसारि मुख्यं कर्तृत्वम्।

२ इमानि त्रीणि, सर्वेषां मते गौणानि कर्तृत्वानि इति विज्ञेयम्।

३ सा शक्तिश्च, कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबन्धेन तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रयत्वम्। (ल० म० सुब० पृ० ९५)

अत्रेदं बोध्यम्—[१] करणाधिकरणकर्मणामेव विवक्षया कर्तृत्वमिति नापादान-संप्रदानयोः कर्तृत्वमिति महाभाष्यकाराः। [२] "उत्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणत्वादिसंभवः" इत्यनया कारिकया विवक्षावशात् सर्वेषां कर्तृत्वं हरिणोक्तम्, इति। (वाच०) (ल० म० सुब० पृ० ८४)

कर्म–१ (पदार्थः) [क] एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् । (वै० १।१।१७)

[ख] चलनात्मकर्म । (त० सं०)

[ग] संयोगभिन्नत्वे सति संयोगासमवायिकारणम् । (त० दी० १। पृ० ६)

[घ] कर्मत्वजातिमत् । (त० दी० १। पृ० ६) (त० कौ० १। पृ० १) यथा “कर्मणैव हि संसिद्धिमास्थिता जनकादयः” (गीता०) इत्यादौ । २ संयोग एव कर्मेति भूषणमतम् । (प्र० प्र०) (दि० १।

---

१ तच्च मूर्तद्रव्यमात्रसमवेतम्, अनित्यमेव, उत्तरसंयोगात् कदाचिदाश्रयनाशाच्च* नश्यति च, इति ज्ञेयम् । (त० कौ० पृ० २०)

तल्लक्षणं तु [क] विभागासमवायिकारणत्वे सति संयोगहेतुत्वम् । (दि० गु० पृ० १९८) [ख] नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिरूपं कर्मत्वम्, इत्यादि । (वै० उ० १।१।१७) [ग] नित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वम् । (ल० व०) [घ] अनेकाश्रितावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम् । (त० व० परि० १६। पृ० २४०) (वै० उ० १।१।१७)

२ अत्र, एकद्रव्यकत्वं च [क] एकमात्रमूर्तसमवायिकारणकत्वम् । (वै० उ० २।१।२१) [ख] मूर्तमात्रसमवेतत्वम् । (वै० वि० २।१।२१)

३ तदर्थश्च [क] मिलितयोः† संयोगविभागयोर्निरपेक्षकारणत्वं लक्षणम् । संयोगविभागयोः प्रत्येकमेव संयोगविभागकारणत्वम्, न मिलितयोः । (त० व० पृ० २४०) [ख] संयोगविभागयोः स्वानन्तरोत्पन्नभावनैरपेक्ष्येण‡ कारणम् । (वै० वि० १।१।१७) (मु० गु० पृ० १९८)

४ संयोगविभागानुकूलमित्यर्थः । (वाक्य० पृ० २२)

५ भूषणमते संयोगापेक्षया कर्मणोऽतिरिक्तत्वं नास्तीति विज्ञेयम् । (दि० १। पृ० १९)

---

* तथाहि–प्रथमं द्रव्ये कर्मोत्पद्यते, ततो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरदेशसंयोगः द्रव्यनाशश्च, ततः कर्मनाशः, इति ।

† तेन, कारणाकारणसंयोगे कारणाकारणविभागे च नातिव्याप्तिः । (दि० गु० पृ० १९८)

‡ अत्र, निरपेक्षत्वं च स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षत्वम् । पूर्वसंयोगध्वंसस्यापि स्वोत्पत्त्यनन्तरानुत्पत्तिकत्वात्; अभावत्वेन तस्याद्यक्षणसंबन्धाभावात् । (वै० उ० १।१।१७)

पृ० १९) न्याय-वैशेषिकनये कर्म पञ्चविधम्[1]। उत्क्षेपणम्, अप(व)क्षेपणम्, आकुञ्चनम्, प्रसारणम्, गमनं चेति। (वै० १।१।७) (त० कौ० १। पृ० १) (त० सं०) (भा० प० श्लो० ६) तत्र गमनं[2] बहुविधम्। भ्रमणम्[3], रेचनम्, स्पन्दनम्, ऊर्ध्वज्वलनम्, तिर्यग्गमनम्, इति। (भा० प० १। श्लो० ७) मीमांसकनये नित्यम्, नैमित्तिकम्, काम्यं चेति त्रिविधं कर्म। (व्यास स्मृ०) तत्र यदकरणे प्रत्यवायस्तन्नित्यम्[4]। यथा संध्योपासनादि। अनियतनिमित्तकं नैमित्तिकम्[5]। यथा ग्रहणश्राद्धादि; तत्र राहूपरागस्यानियतस्यैव निमित्तत्वात्। काम्यं तु फलकामनाधीनकर्तव्यताकं कर्म। यथा स्वर्गोद्देशेन कृतं अश्वमेधयागादि। (म० प्र० ४। पृ० ६०) (वाच०) सात्विक-राजस-तामस-भेदेन त्रिविधं कर्मेति वेदान्तिनः। (गीता०) वेदान्तिनां मते प्रकारान्तरेण कर्म (पुण्यपापजनकम्) द्विविधम्। संचितम्, प्रारब्धं चेति। तत्र अनारब्धविपाकः कर्माशयः संचितम्; तच्च ज्ञानाग्निना दह्यते। आरब्धविपाकश्च कर्माशयः प्रारब्धम्; तच्चोपभोगेनैव नश्यति, इति बोध्यम्। इदं च शुक्ल-कृष्ण-कृष्णशुक्ल-भेदेनापि त्रिविधम्। तत्राद्यम्-हिंसाद्यनपेक्षं पुण्यजनकं स्वाध्यायादि। द्वितीयम्-शास्त्रनिषिद्धं पापजनकं ब्रह्महत्यादि। तृतीयम्—हिंसादिसहितं वेदविहितं पुण्यापुण्यजनकं पशुयागादि। (वाच०)

---

१ पञ्चविधं कर्म मूर्तद्रव्ये एव तिष्ठति। (प्र० प्र०)
वस्तुतः कर्मैकविधमेव; निष्क्रमणत्व-प्रवेशनत्वादिवत् उत्क्षेपणत्वादेर्जातित्वाभावेन भेदकत्वाभावात्, इति विज्ञेयम्। (प० मा०)

२ तल्लक्षणं च उत्क्षेपणादिचतुष्टयभिन्नत्वे सति कर्मत्वव्याप्यजातिमत्त्वम्। (वै०उ०१।१।७)

३ भ्रमणादिप्रकारः शिक्षिताश्वगत्यादौ प्रसिद्ध इति श्रूयते। (स्व०) भ्रमणादिषु गमनत्वजातेस्त्वनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम्, इति ज्ञेयम्। (वै० उ० १।१।७) (वै० वि० १।१।७)

४ अत्र नित्यत्वं च प्रत्यवायसाधनीभूताभावप्रतियोगित्वम्। नियतनिमित्तकत्वमिति यावत्। संध्योपासनादौ प्रातरादिसमयस्य नियतस्यैव निमित्तत्वात्। (म० प्र० ४। पृ० ६०)

५ नैमित्तिकत्वं च निमित्तनिश्चयाधीनकर्तव्यताकत्वम्। यथा वा जातेष्ट्यादौ। (भा० प०)

**कर्म**—१ [ क ] परसमवेतक्रियाफलशालि । ( चि० १ ) यथा, देवदत्तो ग्रामं गच्छतीत्यादौ ग्रामः कर्म । यथा वा, भूमिं प्रयाति विहगो विजहाति महीरुहमित्यादौ भूमिमहीरुहौ कर्मणी । ( का० व्या० पृ० ३ ) यथा वा अन्नवत् विषं भुङ्क्ते इत्यादौ विषम् ।

[ ख ] फलाश्रयतयेष्टम् । ( ग० व्यु० का० ४ । पृ० ९३ ) यथा पयसा ओदनं भुङ्क्ते इत्यादौ ओदनं कर्म । ( ख० ) २ [ क ] केचित्तु

---

१ व्याकरणशास्त्रसिद्धं पाणिनिसूत्रानुरोधि चेदं कर्म । एतल्लक्षणं च वक्ष्यमाणकर्मत्ववत्त्वमेवेति विज्ञेयम् ।

२ अत्रेदं बोध्यम्—ग्रामं गच्छति देवदत्तः, भूमिं प्रयाति विहग इत्यादौ संयोगानुकूलस्पंदात्मकव्यापारो ' गम्, या ' धात्वर्थः । तथा च संयोगात्मकफलस्य तु द्विष्ठत्वेन देवदत्त—विहगात्मककर्त्रादावपि वृत्तित्वात् " देवदत्तो विहगश्च स्वात्मानं गच्छति, प्रयाति च " इति प्रयोगापत्तिः । तद्वारणाय, परसमवेतक्रियाजन्यत्वम्* क्रियाजन्यफले ( मतभेदेन धात्वर्थतावच्छेदकफले वा ) विशेषणत्वेन निवेश्यम् । इत्थं च द्वितीयादेः क्रियान्वयि परसमवेतत्वमप्यर्थः । परत्वं च स्व–( द्वितीया— ) प्रकृत्यर्थापेक्षया; स्वार्थफलान्वयिनः (कर्मणः) अपेक्षया तु कर्माख्यातेन बोध्यते । तथाच [ क ] भूमिं प्रयातीत्यादितः 'भूमिभिन्नसमवेतभूमिवृत्तिसंयोगजनकस्पन्दानुकूलकृतिमान् ' इति बोधः । एवं च स्वभिन्नसमवेतस्ववृत्तिसंयोगजनकं यत् मल्लान्तरगमनम्, तदनुकूलकृतिमत्त्वस्य स्वस्मिन्नभावात्, न "मल्लः स्वं गच्छति " इत्यादिप्रयोगः । ( का० व्या० पृ० ३ ) ( ग० व्यु० २। पृ० ५० ) [ ख ] ग्रामं गच्छति चैत्र इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्रः' इत्यन्वयबोधः । ( ग० व्यु० का० २ । पृ० ४९–५० )

३ इदं च कर्मसामान्यलक्षणम्, इति ज्ञेयम् । ( स्व० ) अत्र प्राञ्चो नैयायिकाः, क्रियाजन्यफलशालि कर्मेत्याहुः । नव्यास्तु, धात्वर्थतावच्छेदकफलशालि ( फलानुयोगि ) कर्मेति प्राहुः । ( ग० व्यु० का०२। पृ० ३६—३८ ) ( ग० व्यु० का० ४। पृ० ९३ )

४ अत्र शाब्दिकाश्च [ क ] कर्तृगतप्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थव्यापारव्यधिकरणफलाश्रयत्वेन कर्तुरुद्देश्यं कर्मेति, [ख] कर्तुः क्रियया ईप्सिततमव्यापारम् कर्मेति च वदन्ति । एवं च " कर्तुरीप्सिततमं कर्म " (पा० १।४।४९ ) इति सूत्रेण कर्मसंज्ञा भवति । अत्र, कर्मणः क्रियाफलोद्देश्यकव्यापारो बोध्यः । (ल० म० सुप० पृ० ८४-८५)

५ अत्रेदं बोध्यम्—फलावच्छिन्नव्यापारबोधकत्वादेव धातूनां सकर्मकत्वव्यवहारो मुख्यः । जानात्यादीनां नामार्थान्वितोद्देश्यत्वातिरिक्तविषयित्वरूपविभक्त्यर्थान्वय्यर्थकत्वात्मकं गौणं कर्मत्वम्, इति । ( का० व्या० पृ० ३ )

---

* तन्न सहन्ते वैयाकरणाः । तच्च कर्मत्वव्याख्यानावसरे प्रदर्शयिष्यते ।

(शशधरादयः), करणव्यापारविषयः कर्मेत्याहुः। (चि० १) (का० व्या० पृ० ३) यथा व्रीहीन् प्रोक्षतीत्यादौ व्रीहिः कर्म। (न्या० सि० दी० पृ० १९) यथा वा, चक्षुषा घटं जानातीत्यादौ घटः कर्म। (ख०)

[ख] क्वचित्, विषयः कर्म। (त० प्र०) यथा भाविनं घटं जानातीत्यादौ घटः कर्म (गौणम्)[1]। यथा वा, मातुः स्मरतीत्यादौ माता कर्म। (म० प्र० पृ. ४। ६)

[ग] क्वचित्, प्रतियोगि, इत्यादि। यथा घटं नाशयतीत्यादौ घटः कर्मेति। (का० व्या० पृ० ३) कर्म द्विविधम्। प्रधानकर्म, अप्रधानकर्म चेति। तत्राद्यम्—गां[2] दोग्धि पय इत्यादौ पयः। द्वितीयं तु—तत्रैव गौः, इति। (ल० म० सुब० पृ० ९१) प्रकारान्तरेण कर्म हि (ईप्सिततमं कर्म) त्रिविधं भवति। प्राप्यम्, प्रकृतिविकृती[3] च। तत्राद्यम्,

---

१ अत्रेदं बोध्यम्—नैयायिकमते, सविषयार्थकधातुसमभिव्याहारे विषयत्वात्मकं गौणं कर्मत्वम् "कर्तुरीप्सिततमं कर्म" (पा० सू० १।४।४९) इत्यनेन बोध्यते। तथा च—'घटविषयताशालिज्ञानाश्रयतावान्', 'मातृविषयकस्मरणवान्' इति बोधः। वैयाकरणमते तु—अत्रापि ज्ञानानुकूलव्यापारस्य, स्मरणानुकूलव्यापारस्य च धात्वर्थत्वेन मुख्यमेव कर्मत्वं बोध्यते; नतु गौणम्। तथा च व्यापारमुख्यविशेष्यक एव सर्वत्र बोधः, इति। (ख०) दिवाकरस्तु, संस्कारावच्छिन्नमेव ज्ञानं जानात्यर्थ इति, उक्तस्थले मुख्यमेव कर्मत्वम्, इत्याह। (श० प्र० पृ० १०१)

२ अत्र गोरपादानत्वाविवक्षायां "अकथितं च" (पा० सू० १।४।५१) इत्यनेन कर्मत्वम्। अत्र गौणकर्मणि गवादौ लादयः। (ल० म० सुब० पृ० ९१) शब्दशक्तिप्रकाशिकाकृतस्तु, गां दोग्धि पय इत्यादौ प्रधानकर्म गौः; पयस्त्वप्रधानकर्म इत्याहुः। (श० प्र० पृ० ९८) एतत्तु न्यायकोशे, ५२ पृष्ठे प्रपञ्चितम् तत्र द्रष्टव्यम्।

३ अत्र, प्रकृतिविकृती कर्मणी विकार्यशब्देन शाब्दिकैर्व्यवह्रियेते। तत्र विकृतिरूपं कर्म, प्रकृतेरसमभिव्याहारस्थले (ओदनं पचतीत्यादौ) * निर्वर्त्यमित्युच्यते च, इति बोध्यम्। (ग० व्यु० का० २। पृ० ६५)

---

* तत्रोक्तम्—सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी। यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते, इति। तदर्थश्च—यस्य विकृतिकर्मणः, नाश्रीयते न प्रयुज्यते, इति (ग० व्यु० का० २। पृ० ६५)

क्रियाजन्यफलशालि । यथा–(ग्रामं गच्छतीत्यादौ) गम्यादेर्ग्रामादि; (घटं जानातीत्यादौ) ज्ञानादेर्विषयश्च । द्वितीयं च, क्रियया, वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते, तत्[1] । यथा (तण्डुलानोदनं पचतीत्यादौ) पाकादेस्तण्डुलादि; (पुष्पाणि माल्यं करोति, काशान्कटं करोति इत्यादौ) कृतेश्च पुष्प-काशादि[2] । तृतीयं च क्रियया निष्पाद्यं यत्, तत् । यथा पाकादेरोदनादि[3] । यथा वा, कृतेः

१ अत्र, तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टतदसत्त्वम् ओदनादिरूपकर्मान्तरनिष्पादकं क्रियातो निर्वहति, इति बोध्यम् । (ग० व्यु० का० २ । पृ० ६५)

अत्रेत्थमन्वयः–तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मोत्तरद्वितीयायाः (तण्डुलान् इत्यत्र) नाशकत्वमर्थः; तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति । विकृतिकर्मोत्तरद्वितीयायाश्च (ओदनम् इत्यत्र) उत्पादकत्वमर्थः, ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाकेऽन्वयः; नाशे च उत्पत्तेः प्रयोजकत्वम् उद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते * ।

एवं तण्डुलमोदनं करोति, † काष्ठं भस्म करोति, दुग्धं दधि करोति, इत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते । विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितं वा कृतौ बोध्यते । (ग० व्यु० का० २। पृ० ६६)

२ अत्र, धर्मिणः काश–कुसुमादेः सत्त्वेऽपि कटसंदर्भविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वम् कटसंदर्भादिनिष्पादकं क्रियातो निर्वहति, इति ज्ञेयम् (ग० व्यु० का० २ । पृ० ६६)

अत्रेत्थमन्वयः— काशान् कटं करोति, कुसुमानि मौक्तिकानि वा स्रजं करोति इत्यादौ काशादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति; काशाद्युच्छेदकतायास्तत्र बाधात् । कटमित्यादौ द्वितीयार्थः पूर्ववत् । स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः, विन्यासात्मकविशेषणोत्पादकस्यापि स्वरूपसंबन्धविशेषरूपविशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव । (ग० व्यु० का० २ पृ० ६६)

३ अत्र, तण्डुलादिरूपपूर्वद्रव्यं विनाश्यौदनादेर्निर्वर्तनं क्रियया । (ग० व्यु० का० २। पृ० ६५)

* तथा च 'ओदनोत्पादको यस्तण्डुलनाशकः पाकः, तदनुकूलकृतिमान्' इति तण्डुलमोदनं पचतीति वाक्याद्बोधः ।

† अत्र 'तण्डुलनाशिका या ओदनोत्पादिका ओदनविषयिका च कृतिः, तदाश्रयः' इति शाब्दबोधः । एवमन्येऽपि शाब्दबोधाः स्वयमूह्याः ।

माल्यादि कटादि चेति। (ग० व्यु० का० २। पृ० ६९) (का० व्या० पृ० ६) प्रकारान्तरेण (व्याकरणशास्त्रोक्तरीत्या) कर्म सप्तविधं भवति। तथाहि—निर्वर्त्यम्, विकार्यम्, प्राप्यम्, उदासीनम्, द्वेष्यम्।

१ अत्र, पुष्पादिरूपपूर्वद्रव्यमविनाश्य तत्रैव संदर्भादिरूपविशेषणनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्तनं क्रियया, इति ज्ञेयम्। (ग० व्यु० का० २। पृ० ६५)

२ काष्ठान् कटं करोतीत्यादौ* काष्ठादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनं क्रियया। (ग० व्यु० का० २। पृ० ६५)

३ तत्रोक्तं हरिणा—निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्। तच्चेप्सिततमं कर्म; चतुर्थोऽन्यत्तु कल्पितम्॥ औदासीन्येन यत्प्राप्यं, यच्च कर्तुरनीप्सितम्। संज्ञान्तरैरनाख्यातं, यद्यच्चाप्यन्यपूर्वकम्, इति। (वै० सा० सुव० पृ० १६३)

४ तत्र विकार्यमपि द्विविधम्। प्रकृत्युच्छेदसंभूतम्, गुणान्तरोत्पत्तिमच्च † इति। तत्राद्यम्—काष्ठं भस्म करोति, इति। द्वितीयं तु—सुवर्णं कुण्डलं करोति, इति। (वै० सा० पृ० १६९)

५ अत्र प्राप्यत्वं च [क] क्रियाकृतविशेषानुपलभ्यमानत्वम्। निर्वर्त्य—विकार्ययोस्तु, क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारण्येन तद्दृत्त्वान्नातिप्रसङ्ग इति बोध्यम्। (वाच०) [ख] क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वे सति फलाश्रयत्वम्। निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम्। (वै० सा० द० सुव० पृ० १६८)

६ औदासीन्यप्राप्यत्वं च, कर्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वम्। यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेरनुद्देश्यत्वेऽपि क्रियाजन्यसंयोगरूपफलवत्त्वेनोदासीनकर्मता। (वाच०)

७ अत्र द्वेष्यत्वं च द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वम्। यथा—अन्नं बुभुक्षुर्विषं ‡ भुङ्क्ते इत्यादौ विषस्य कर्मत्वम्। (वाच०)

* अत्र, 'काष्ठादिनिष्ठविलक्षणविषयतानिरूपितविषयितावती, या कटादिविषयिका तदुत्पादिका च कृतिः, तदाश्रयः' इति बोधः। एवमन्यत्रापि बोध ऊह्यः।

† तत्रोक्तं हरिणा—विकार्यं तु कर्म द्वेधा व्यवस्थितम्। प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादि भस्मवत्। किंचिद्गुणान्तरोत्पत्त्या सुवर्णादि विकारवत्, इति। (ग० व्यु० का० २।पृ० ६५)

‡ अत्र, ग्रामं गच्छन् तृणं स्पृशति, अन्नवद्विषं भुङ्क्ते इत्यादावपि "तथा युक्तं चानीप्सितम्" (पा० सू० १। ४। ५०) इत्यनेन तृण—विषादेरनीप्सितस्यापि कर्मत्वम्, इति बोध्यम्। (ल० मं० सुव० पृ० ९०)

संज्ञान्तरैरनाख्यातम्, अन्यपूर्वकम्, चेति । तत्राद्यत्रयम् इप्सिततमं कर्म ( कर्तुः क्रिययेप्सिततमव्यापारम् ) भवति; (ल० म० सुव० पृ० ८४) तदन्यत् अवशिष्टचतुष्टयम्, इति विवेकः । तत्र ( सप्तसु मध्ये ) आद्यं यथा—घटं करोतीत्यादौ घटः कर्म । द्वितीयम्—सोमं सुनोतीत्यादौ सोमः; काष्ठं भस्म करोतीत्यादौ काष्ठभस्मनी; सुवर्णं कुण्डलं करोतीत्यादौ च सुवर्णकुण्डले । तृतीयम्—ग्रामं गच्छति, घटं जानातीत्यादौ ग्राम—घटादि । चतुर्थं यथा—घटं पश्यतीत्यादौ घटः । पञ्चमं यथा—विषं भुङ्क्ते इत्यादौ विषम् । षष्ठं यथा—गां दोग्धीत्यादौ गौः । सप्तमं यथा—क्रूरमभिक्रुध्यतीत्यादौ

१ तदर्थश्च [ क ] अपादानत्वादितत्तद्रूपविशेषैरविवक्षितम् । ( वै० सा० द० सुब० पृ० १६९ ) [ ख ] कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्मोपकारकम् । यथा गां पयो दोग्धीत्यादौ गवादेः कारकान्तरसंज्ञाया अपादानत्वादेः* अविवक्षया, पयोरूपकर्मोपयोगितया कर्मत्वम् । ( वाच० )

२ तदर्थश्च [ क ] अन्यसंज्ञाबाधनपूर्वं शास्त्रबोधितम् । यथा—क्रूरमभिक्रुध्यतीत्यत्र " क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" ( पा० सू० १ । ४ । ३७ ) इत्यनेन प्रसक्तायाः संप्रदानसंज्ञायाः "क्रुधद्रुहोरुपसृष्टयोः कर्म" ( पा० सू० १ । ४ । ३८ ) इत्यनेन बाधनात् कर्मसंज्ञाविधानाच्च क्रूरस्य कर्मत्वम् । एवम्—वैकुण्ठमधिशेते इत्यादावपि बोध्यम् । ( वै० सा० द० सुब० पृ० १७० ) [ ख ] कारकान्तरसंज्ञापूर्वकम् । यथा—जलधिमधिशेते इत्यादौ जलधेराधारत्वेनाधिकरणसंज्ञायाः प्राप्तत्वेऽपि " अधिशीङ्स्थासां कर्म " ( पा० सू० १ । ४ । ४६ ) इत्यादिना कर्मसंज्ञया कर्मत्वम् । ( वाच० )

३ आद्यत्रयस्य ( निर्वर्त्य—विकार्य—प्राप्याणाम् ) कर्मत्वं च कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्य—† व्यापारव्यधिकरण—फलाश्रयत्वेन ‡ कर्तुरुद्देश्यत्वम् । यथा—तण्डुलं पचतीत्यादौ विक्लित्याश्रयत्वात् तण्डुलस्य कर्मत्वम् । ( ल० म० सुब० पृ० ८५ )

* अत्रेदं बोध्यम्—पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ च "अकथितं च" (पा० सू० १ । ४ । ५१) इत्यस्य प्रवृत्तिः, इति । (वै० सा० पृ० १६९)

† चैत्रं ग्रामं गमयतीत्यादौ ग्रामस्य कर्मत्वाय प्रयोज्यत्वनिवेशः । अत्र, प्रयोज्यान्तेन फलविशेषणीभूतेन "अग्नेर्माणवकं वारयति" इत्यादावग्न्यादेः कर्मत्वं निवारितम्, इति ज्ञेयम् । ( ल० म० सुब० पृ० ८५—८६ )

‡ अत्र फलत्वं च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थत्वम् । पश्य मृगो धावतीत्यादौ धावनादेः फलत्ववारणाय तद्धात्विति ( ल० म० ~~सुब० पृ०~~ ८६ )

क्रूरः कर्म, इति । (वै० सा० सुत्र० पृ० १६९) अधिकं तु ( निर्वर्त्यादित्रयस्य लक्षणादिकं तु ) निर्वर्त्यादितत्तच्छब्दव्याख्यानावसरे सविस्तरं संपादयिष्यत इत्यत्रैव विरम्यते ।

**कर्मजन्यगुणत्वम्**—कर्मजन्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम् । ( मु० गु० पृ० १९४ ) यथा—संयोगः, विभागः, वेगश्च, एतत्त्रयस्य कर्मजन्यगुणत्वम् । ( भा० प० गु० श्लो० ८७ )

**कर्मत्वम्**[1]—पदार्थविभाजको जातिविशेषः । ( वै० वि० १ । १ । ७ ) यथा "उत्क्षेपणत्वादीनि कर्मत्वसाक्षाद्व्याप्याः पञ्च जातयः" (वै० उ० १ । १ । ७ ) इत्यादौ कर्मत्वं जातिः ।

**कर्मत्वम्**—[१] [क] परसमवेत[2]क्रियाजन्यफलशालित्वम् । यथा—चैत्रस्तण्डुलं पचतीत्यादौ पाकजन्यविक्लित्तिमत्त्वात्तण्डुलस्य कर्मत्वम्; घटं जानातीत्यादौ तु घटादेर्ज्ञानविषयत्वं कर्मत्वं गौणम् । ( म० प्र० पृ० ६ ) [ ख ] परसमवेतक्रियाजन्यधात्वर्थ[3]फलाश्रयत्वम्[4] । यथा—ग्रामं गच्छतीत्यादौ ग्रामस्य कर्मत्वम् । ( ल० म० सुब० पृ० ९० )

---

१ इदं कर्मत्वम्, समनन्तरं वक्ष्यमाणं कर्मत्वं, च व्याकरणशास्त्रसिद्धकर्मनिष्ठधर्मविशेषः इति ज्ञेयम् ।

२ अत्र [ क ] परसमवेतेति * विशेषणात् चैत्रश्चैत्रं गच्छतीति न प्रयोगः । ( ल० म० सुब० पृ० ९० ) [ ख ] ग्रामं गच्छति चैत्र इत्यादौ चैत्रादावतिव्याप्तिवारणाय परसमवेतेति क्रियाविशेषणम् । ( म० प्र० पृ० ६ ) [ ग ] ग्रामं गच्छतीतिवत् स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थं इष्यते । ( ग० व्यु० का २ । पृ० ४९ )

३ गमि-पत्योः पूर्वदेशे, त्यजेरुत्तरदेशे, स्पन्देश्च पूर्वोत्तरयोः, कर्मत्ववारणाय धात्वर्थेति । (ल० म० सुब० पृ० ९० )

४ अत्र [क] परसमवेतत्वमपि द्वितीयार्थं इष्यते । तस्य च धात्वर्थेऽन्वयः । परत्वं चैक-

---

* अत्र [ क ] वैयाकरणाः, परया कर्तृसंज्ञया बाधेनोद्देश्यत्वाभावेन च तत्प्रयोगापत्तेरसंभवेन भेदे ( परसमवेतेत्यत्र परशब्दार्थे ) शक्तिकल्पनं व्यर्थमित्याहुः । ( ल० म० सुब० पृ० ९१ ) [ ख ] केचिन्नैयायिका अपि, परसमवेतत्वविशेषणं व्यर्थमेव । तथाहि—चैत्रेण ग्रामो गम्यत इत्यादिकर्माख्यातस्थले तिङर्थसंयोगे स्वजन्यत्व— स्वाश्रयप्रतियोगिकत्व— एतदुभयसंबन्धेन धात्वर्थगतेः ( व्यापारस्य ) साकाङ्क्षत्वेन, चैत्रकर्तृकगत्याश्रयप्रतियोगिक-

[ ग ] शाब्दिकास्तु, कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्य–तदनधिकरण-वृत्ति–प्रकृतधात्वर्थ–फलाश्रयत्वम् । ( वै० सा० द० पृ० १९३ )
[ घ ] व्याकरणशास्त्रबोधितकर्मसंज्ञकत्वं कर्मत्वम्, इत्याहुः । ( ल० म० सुब० पृ० ८९ ) [२] करणव्यापारविषयकारणत्वम् । यथा–व्रीहीन् प्रोक्षतीत्यादौ व्रीहेः कर्मत्वम् । ( न्या० सि० दी० पृ० १९ )

**कर्मत्वम्** — ( कारकम् ) [ क ] यगन्तस्य यद्धातोरुत्तरस्थतिङा यत्र स्वार्थे तदीयो यादृशोऽर्थोऽनुभावयितुं शक्यते, तद्धातूपस्थाप्यतादृशक्रियायां

---

देशेऽपि आकाङ्क्षावैचित्र्यात् प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः । एवं च 'ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया, तदाश्रयतावांश्चैत्रः' इत्यन्वयबोधः । ( ग० व्यु० का० २ । पृ० ४९ ) [ ख ] द्वितीयया* स्वप्रकृत्यर्थापेक्षया परत्वं बोध्यते; आख्यातेन तु स्वार्थसंख्यान्वय्यपेक्षया । परसमवेतत्वं च धात्वर्थक्रियान्वयि । क्रियायाः फलस्य च धातुनैव लाभात् आधेयत्वं भेदश्च द्वितीयार्थः । तत्र फले आद्यान्वयः । अन्त्यस्य सामानाधिकरण्येन व्यापारे । भेदे प्रकृत्यर्थस्य फलान्वयिव्यक्तिविशेषावच्छिन्नप्रतियोगितयाऽन्वयः । एवं च 'ग्रामाधेयफलानुकूलो ग्रामभेदसमानाधिकरणो व्यापारः, तद्वान्' इति बोधः । ( ल० म० सुब० पृ० ९० ) ( ग० व्यु० का० २ )

[ ग ] परत्वं चात्र कर्मत्वाभिमतावधिकम् । " कर्तुरीप्सिततमं कर्म " ( पा० १ । ४ । ४९ ) इति सूत्रस्यापि 'कर्तुः क्रियाजन्यफलवत्तयाऽऽप्तुमिष्टतमम्, तत् कर्मसंज्ञकम्' इत्यर्थान्न तद्विरोधः । ( म० प्र० पृ० ६ )

१ तेन, व्रीहीन् प्रोक्षतीत्यादौ व्रीहेः प्रोक्षणफल-(अतिशया-)नाश्रयत्वेऽपि न कर्मत्वानुपपत्तिः । ( न्या० सि० दी० पृ० १९ ) एवमात्मनात्मानं जानातीत्यादावप्यूह्यम् ।

---

त्वविशिष्टस्य संयोगस्य चैत्रे बाधितत्वात् न " चैत्रेण गम्यते चैत्रः " इति प्रयोगः । अत एव, चैत्रो ग्रामं गच्छतीतिवत् " चैत्रश्चैत्रं गच्छति " इत्यपि न प्रयोगः; तत्रापि द्वितीयार्थसंयोगे प्रकृत्यर्थस्य ( ग्रामस्य ) स्वप्रतियोगिकत्वसंबन्धेनैव साकाङ्क्षतया, द्वितीयान्तलभ्यस्य चैत्रीयत्वविशिष्टसंयोगस्य जनकत्व–स्वाश्रयवृत्तित्व–एतदुभयसंबन्धेनैव क्रियायामन्वयेन चैत्रप्रतियोगिकसंयोगाश्रयवृत्तिगतत्वं चैत्रे बाधितत्वात्, इति प्राहुः । ( श० प्र० पृ० ९१ )

* ग्रामं गच्छतीत्यादौ परसमवेतत्वमपि द्वितीयाया अर्थः । परसमवेतत्वं च स्वभिन्नसमवेतत्वम् । तत्र परत्वं च स्वप्रकृत्यर्थापेक्षया ( द्वितीयाप्रकृत्यर्थापेक्षया ) बोध्यते इति भावः । ( ग० व्यु० का० २ । पृ० ४९–५० )

स तिङर्थः कर्तृताभिन्नः कर्मत्वनाम कारकम् । यथा—ग्रामो गम्यते इत्यादौ ग्रामस्य कर्मत्वम् । ( श० प्र० पृ० ९०–९१ )

[ ख ] यद्धातोर्यादृशाऽर्थे द्वितीयया यादृशः स्वार्थोऽनुभाव्यते, तद्धात्वर्थतादृशक्रियायां तत् कर्मत्वम् । तच्च "गां दोग्धि पयः" इत्यादौ पयःप्रभृतेरप्यक्षतम् । ( श० प्र० पृ० ९७ ) कर्मत्वं द्विविधम् । मुख्यम्, गौणं ( अप्रधानम् ) चेति । तत्र मुख्यं कर्मत्वम् साक्षाद्धात्वर्थतावच्छेदकफलशालित्वम् । यथा—गौः पयो दुह्यते, दुग्धा वेत्यत्र गोर्मुख्यकर्म-

१ यगन्तधात्वर्थविशेष्यतापन्नस्तिङर्थः कर्मत्वम्, इति फलितोऽर्थः । ( श० प्र० पृ० ९७ )

२ गम्यते रथः स्वयमेवेत्यादौ कर्मत्वमिवानुकूलव्यापारवत्त्वलक्षणं कर्तृत्वम् धात्वर्थस्य भग्येपि न तत् कर्तृताभिन्नम्, इति तद्व्युदासः । ( श० प्र० पृ० ९१ )

३ अत्र गमधातूपस्थाप्यायाः * संयोगावच्छिन्नक्रियायाः स्वजन्यत्वसंबन्धेन तिङ्पदोपस्थाप्ये संयोग एवान्वयः, न तु त्यजत इत्यादाविव विभागादौ; धात्वर्थतावच्छेदकस्यैव फलस्य बोधने कर्मविहितप्रत्ययानां धातुसाकाङ्क्षत्वात् । अतः संयोग एव तत्र गतिक्रियायाः कर्मत्वम्, नतु विभागादिः । तेन, तरोस्त्यागिनि खगे "तरुं गच्छति" इत्यादिको न प्रयोगः । ( श० प्र० पृ० ९१ )

४ अत्र [ १ ] गां पयो दोग्धि, अजां ग्रामं नयति इत्यादौ द्रवद्रव्यविभागानुकूलक्रियानुकूलव्यापारविशेषस्य, संयोगानुकूलक्रियानुकूलव्यापारस्य च यथाक्रमं धात्वर्थत्वेन, साक्षाद्धात्वर्थतावच्छेदकनिरुक्तक्रियाद्वयरूपफलान्वयिनोरजापयसोर्मुख्यकर्मत्वम् । तादृशक्रियारूपफलतावच्छेदकविभाग—संयोग—रूपफलद्वयान्वयिनोर्गोग्रामयोर्गौणकर्मत्वम् । फलद्वयस्यापि धात्वर्थतावच्छेदकत्वेन तादृशफलाश्रयत्वात् उभयस्यापि कर्मत्वम् । अत एव कर्मद्वयसाकाङ्क्षक्रियाबोधकत्वम् द्विकर्मकत्वं सूपपदम् । ( का० व्या० पृ० २ ) [ २ ] 'पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौः' इत्येवं बोधः । तत्र मोचनावच्छिन्नव्यापारस्य धातुवाच्यतया, मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात् तदाश्रयत्वेन गोर्मुख्यकर्मत्वम्; पयसस्तु मोचनघटकक्षरणात्मकफलवत्त्वात् गौणकर्मत्वम् ( श० प्र० पृ० १०५ ) ( पृ० ९८ ) अधिकं तु ( दुह्यर्थ—द्विकर्मकत्वादि—निरूपणम् ) दोहनादिशब्दव्याख्यानावसरे संपादयिष्यते । ( ख० )

५ अत्रेदं बोध्यम्—"दुह्यादेर्गौणकं कर्म, नीवह्यादेः प्रधानकम्" इत्युक्तिभेदेन विधिद्वयं शाब्दिकानामत्रानादेयम्, इति । ( श० प्र० पृ० १०६ )

* अत्रेदं बोध्यम्—क्रियामात्रं धात्वर्थः; द्वितीयया संयोगरूपं फलं बोध्यत इति प्राञ्च आहुः । परे तु, पुष्पवन्तपदादिव गमादिधातोरप्येकशक्त्या संयोगः क्रिया च द्वयमेव बोध्यते; तयोर्जन्यजनकभावस्तु वाक्यार्थमर्यादया भासते, इत्याहुः । ( श० प्र० पृ० ९३ )

त्वम् । परंपरया[1] धात्वर्थतावच्छेदकफलशालित्वम् गौणकर्मत्वम् । यथा—गौः पयो दुह्यते दुग्धा वेत्यत्र पयसो[2] गौणकर्मत्वम् । ( श० प्र० पृ० १०९ ) ( पृ० ९८ )

**कर्मधारयः**[3]— ( समासः ) [ क ] क्रमिकं (अव्यवहितम्) यत् नामद्वयं तयोरेकस्य नाम्नोऽर्थे धर्मिणि तादात्म्येनो[4]परनाम्नोऽर्थस्यान्वयबोधं प्रा समर्थम्, तादृशनामद्वयं कर्मधारयः । यथा, नीलोत्पलमित्यादावुत्पलादिपदस्यार्थे नीलादिपदार्थस्य तादात्म्येनान्वयः; तथा—पुरुष[5]सिंह इत्यादावपि पुरुषादावुत्तरपदलक्ष्यस्य सिंहादिसदृशस्य तादात्म्येनान्वयः ( श० प्र० पृ० ४१ )

[ ख ] समासप्रयुक्तलक्षणाशून्य[6]तुल्यार्थकोभयनामकसमासः । यथा—नीलोत्पल[7]मित्यादौ कर्मधारयः । ( म० प्र० ४ । पृ० ४३ )

---

१ धात्वर्थतावच्छेदकतायामवच्छेदकीभूतं यत् फलम्, तच्छालित्वमित्यर्थः (का० व्या० पृ० २)

२ अत्रेदं बोध्यम्—दुहेरर्थभेदविवक्षया पयसः कदाचिद्गौणकर्मत्वम्, कदाचित्तु मुख्यकर्मत्वं चापि संभवति; एवम्—दुहेरर्थभेदविवक्षया गोरपि गौणमुख्यकर्मत्वे संभवतः, इति न ग्रन्थान्तरविरोध इति विज्ञेयम् ।

३ अत्रेदं बोध्यम्—कर्मधारये तु विशिष्टार्थे न शक्तिर्न वा लक्षणा; ताभ्यां विनाऽपि विवक्षितान्वयबोधोपपत्तेः, इति । (चि० ४) शाब्दिकास्तु, समासमात्रे विशिष्टार्थेऽतिरिक्तां शक्तिं कल्पयन्ति ।

४ 'कुम्भस्य समीपम्' इत्यर्थकस्तु उपकुम्भादिः, न तादात्म्येनान्वयबोधकः, इति तत्र नातिप्रसङ्गः । (श० प्र० पृ० ४१ )

५ अत्र 'पुरुषः सिंह इव' इत्यादि विग्रहे प्रायेणोपमेयस्योपमानैः "उपमानानि सामान्यवचनैः" ( पा० सू० २ । ३ । ५५ ) इत्यनेन कर्मधारयोऽनुशिष्यते । ( श० प्र० पृ० ४१ )

६ अत्र पञ्चमूलीत्यादावपि तुल्यार्थकोभयनामकत्वसत्त्वात्तद्वारणाय समासप्रयुक्तलक्षणाशून्येति नामविशेषणम् । धवखदिराविति द्वन्द्ववारणाय तुल्यार्थकेति नामविशेषणम् । ( म० प्र० ४ । पृ० ४३–४४ )

७ अत्र यद्यपि, नीलपदे नीलगुणाश्रये निरूढलक्षणा; तथापि, तस्याः समासप्रयुक्तत्वाभावात्, ( नाव्याप्तिः ) । नामद्वयस्य तुल्यार्थत्वाच्च लक्षणसमन्वयः संभवति, इति ज्ञेयम् । ( म० प्र० ४ । पृ० ४४ )

कर्मप्रवचनीयः— ( अव्ययम् ) क्रियानुयोगिकसंबन्धविशेषद्योतकत्वे सत्यन्वाद्यन्यतमः । यथा—अनु, उप, इत्यादिः । कर्मप्रवचनीया एकादश सन्ति —अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि ।

कर्षणम्— १ [ क ] गत्यवच्छिन्नविकर्षणम् । यथा—शाखा ग्रामं कृष्यत इत्यादौ कृषेरर्थः । ( श० प्र० पृ० १०५ )

[ ख ] देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः । यथा—ग्राममजां कर्षतीत्यादौ कर्षणम् । ( वाच० ) २ विलेखनम् ।

कलिकापूर्वम्— ( अपूर्वम् ) परमापूर्वजनकः, अङ्गजन्योऽपूर्वविशेषः । यथा —उत्पत्त्यपूर्वाणि ( दि० गु० पृ० २३५ ) ( चि० ४ ) ( मू० म० )

---

१ तदुक्तं हरिणा—"क्रियाया द्योतको नायं संबन्धस्य न वाचकः। नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः" इति ।

२ अत्र 'ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्मताश्रयः शाखा' इत्याकारको बोधः । ( श० प्र० पृ० १०५ )

३ अत्र, अस्य ( कृषधातोः ) व्यापारद्वयबोधकतया द्विकर्मकत्वम् । तथा च " अकथितं च" ( पा० सू० १ । ४ । ५१ ) इत्यनेन ग्रामादेः कर्मत्वम् । अत्र प्रधाने कर्मण्येव वाच्येः* लकारादयः । यथा—अजा ग्रामं कृष्यते, इति ।

तदर्थश्च विदारणम्; अत्रार्थे कृषधातोर्न द्विकर्मकतेति भेदः । तदेतत् " कृषिः " इत्यत्र संपादयिष्यते, इत्युपरम्यतेऽत्रैवेति ।

५ अत्र 'कलिकया ( अंशेन ) जन्यम्, अपूर्वम्' इति व्युत्पत्तिर्द्रष्टव्या ( वाच० )

६ उत्पत्त्यपूर्वाणि च, पञ्चभिर्वाक्यैर्विहितेभ्यः षड्भ्य आग्नेयादिभ्य उत्पन्नानि षट् सन्ति । तत्र पञ्च वाक्यानि तु† " यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" । ( तैत्तिरीयसंहिता २ । ६ । ३ ) "उपांशु याजमन्तरा यजति" ( तै० २ । ६ । ६ ) "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" ( तै० २ । ५ । २ ) "ऐन्द्रं दध्यमावास्यायाम्" ( तै० २ । ५ । ४ ) " ऐन्द्रं पयोऽमावास्यायाम्, " इति । ( दि० गु० पृ० २३५ )

---

* तत्रोक्तं हरिणा—गौणे कर्मणि दुह्यादेः, प्रधाने नीहृकृष्वहाम्, इति ।

† अत्र, आग्नेयाष्टाकपालयाग—ऐन्द्रदधियाग—ऐन्द्रपयोयाग—एतत्त्रयं दर्शस्य । आग्नेयाष्टाकपालयाग—उपांशुयाग—अग्नीषोमीयैकादशकपालयाग—एतत्त्रयं पौर्णमासस्य, इति बोध्यम् । ( मू० म० ४ ) ( वाच० )

**कल्पनम्–** १ अनुमानवदस्यार्थोऽनुसंधेयः ( दि० १ ) ( नील० ) २ अर्थापत्तिरिति मीमांसका वेदान्तिनश्चाहुः। ३आरोप इति मायावादिनः। ४ रचना; ५ विधानं चेति काव्यज्ञा आहुः ( वाच० )

**काणः–** [ क ] चक्षुःशून्यगोलकवत्त्वे सति सचक्षुर्गोलकवान्[1]। यथा –अक्ष्णा काण इत्यादौ।

[ ख ] स्वाधिष्ठानवृत्तित्वसंबन्धेन चक्षुःशून्यो यश्चक्षुर्विनाशः[2], तद्वान् सचक्षुष्कः। ( श० प्र० पृ० ११८ )

[ ग ] शाब्दिकास्तु, चक्षुर्नाशवान् सचक्षुष्कः। यथा–अक्ष्णा[3] काण इत्यादौ; इत्याहुः। ( ल० म० सुब० पृ० १०० )

**कादाचित्कत्वम्–** [ क ] सत्त्वे सति किंचित्कालवृत्त्यभावप्रतियोगित्वम्। ( आत्मत० शिरो० ) यथा " अनादिश्चेत्कार्यकारणप्रवाहः कादाचित्कत्वान्यथानुपपत्त्या कल्प्यः" ( कु० टी० हरि० ) इत्यादौ।

[ ख ]प्रागभावप्रतियोगित्व–ध्वंसप्रतियोगित्व–एतदन्यतरवत्त्वम्[4]। (बौ० शि०) (वाच०) यथा–घटपटादेरनित्यजातस्य कादाचित्कत्वम्। (ख०)

**काम्यत्वम्–** १ अभिलापविपयत्वम्। ( मु० गु० पृ० २२० ) यथा

---

१ अत्र गोलकार्थकाक्षिपदोत्तरतृतीयाया विकृतत्वम्, वृत्तिमत्त्वं चार्थः। तत्राद्यम् ( विकृतत्वम् ) संयोग्यत्वमिव प्रकृत्यर्थे विशेषणविधयाऽन्वेति। चरमम् ( वृत्तिमत्त्वम् ) तु, प्रकृत्यर्थनिरूपितं सत् काणत्वैकदेशे चक्षुःशून्यत्वेऽन्वेति। तथा च 'विकृतगोलकवृत्तित्वविशिष्टं यत् चक्षुःशून्यत्वम्, तद्वद्गोलकवान् सचक्षुष्कः' इत्याकारस्तत्र बोधः ( श० प्र० पृ० ११८ )

२ अक्ष्णा काण इत्यादौ, तादृशे विनाशे अक्षिपदस्यार्थस्य गोलकस्य विकारप्रयुक्तत्वं तृतीयया बोध्यते। तथा च 'गोलकविकारप्रयुक्तस्य, निरुक्तसंबन्धेन चक्षुःशून्यस्य, चक्षुर्नाशस्याश्रयः सचक्षुष्कः' इत्याकारो बोधः। ( श० प्र० पृ० ११८ )

३ अत्र "येनाऽङ्गविकारः" ( पा० सू० २। ३। २० ) इत्यनेन तृतीया। विकारस्तु कनीनिकाद्यपगमः, अयथासंस्थानवत्त्वं वा। ( श० प्र० पृ० ११८ ) तथाच–अक्षिपदार्थो गोलकम्, 'गोलकविकारप्रयुक्तचक्षुर्नाशवान् सचक्षुष्कः' इति बोधः। ( ल० म० सुब० पृ० १०० )

४ अत्र अन्यतरनिवेशेन च, ध्वंसे प्रागभावप्रतियोगित्वस्य, प्रागभावे च ध्वंसप्रतियोगित्वस्य सत्त्वान्नाव्याप्तिः। नित्ये तु तदुभयासत्त्वान्न प्रसङ्गः ( बौद्ध० शि० )

"सुखं तु जगतामेकं काम्यं धर्मेण जन्यते" (भा० प० गु० श्लो० १४६) इत्यादौ सुखस्य काम्यत्वम् । २ [ क ] फलेच्छाधीनेच्छाविषयत्वम् । [ ख ] फलकामनाऽधीनकर्तव्यताकत्वं वा । यथा—भोजनादेर्ज्योतिष्टोमादेश्च काम्यत्वम् । ( त० प्र० ४। पृ० १०३ ) ३ आरब्धकर्मोत्पत्तिकामनाधीनकामनाविषयत्वम्, इति केचित् । ( मू० म० १ )

**कायिकः**— ( नमस्कारः ) करशिरःसंयोगाद्यनुकूलचेष्टाविशेषः । ( मू० म० १ । मङ्ग० पृ० १०९ ) यथा—देवदत्तः कराभ्यां यज्ञदत्तं नमस्करोतीत्यादौ कायिको नमस्कारः । ( स्व० )

**कारकम्**—१ [ क ] यद्धातूपस्थाप्ययादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः[1], स तद्धातूपस्थाप्यतादृशक्रियायां कारकम् । यथा-वृक्षात्पतति, व्याघ्राद्बिभेतीत्यादौ; ब्राह्मणाय ददाति, पुत्राय क्रुध्यतीत्यादौ; दात्रेण छिनत्ति, घटत्वेन जानातीत्यादौ; स्थाल्यां पचति, शुक्तौ भासत इत्यादौ; ग्रामं गच्छति, घटं पश्यतीत्यादौ; चैत्रेण पच्यते, घटेन भूयत इत्यादौ च; पतप्रभृतिधात्वर्थे पतनादौ पञ्चम्याद्युपस्थापितो विभागादिः प्रकारीभूय भासत इति तत्तद्धातूपस्थापिततत्तत्क्रियायां विभागादिकं प्रकृते कारकम्[2] । ( श० प्र० श्लो० ६६। पृ० ७७ )

---

१ अत्रेदं बोध्यम्—यादृशेन नामार्थेनावच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः, स एव तादृशधात्वर्थे कारकतया व्यपदिश्यते । तेन, वृक्षात्पततीत्यादौ वृक्षादेरपि पतनादिक्रियायामपादानत्वादिकारकव्यवहारः । ( श० प्र० पृ० ७७ )

२ अत एव 'क्रियाप्रकारीभूतोऽर्थः कारकम्' इति शाब्दिकाः स्मरन्ति । (श० प्र० श्लो० ६६। पृ० ७७) अत्रायं विशेषः—कारकत्वं च [क] क्रियान्वितविभक्त्यर्थान्वितत्वम् । अस्ति च कर्मादौ क्रियान्वितसुब्विभक्त्यर्थान्वय इति लक्षणसमन्वयः । चैत्रस्य तण्डुलं पचतीत्यादौ तु संबन्धिनि चैत्रादौ षष्ठ्यर्थसंबन्धस्य तण्डुलादिनामार्थान्विततया क्रियाऽनन्वितत्वान्नातिव्याप्तिः । चैत्रस्य पचतीत्यादावपि तण्डुलादिपदाध्याहारेणैव बोधः; षष्ठ्यर्थसंबन्धस्य नामार्थेनैव, क्रियायाः कर्मत्वादिनैव, साकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । ओदनस्य पक्ता, मैत्रस्य पाकः, इत्यादौ कर्मत्वकर्तृत्वार्थिका षष्ठी कारकविभक्तिरेव; "कर्तृकर्मणोः कृति" (पा० सू० २।३।६५) इत्यनेन तद्विधानात् । अत एव 'संबन्धस्य न* कारकत्वम्,

* तच्चोक्तम्—क्रियाप्रकारीभूतोऽर्थः कारकं तच्च षड्विधम् । कर्तृकर्मादिभेदेन शेषः संबन्ध इष्यते ॥ इति ।

[ख] क्रियाहेतुः ।[1] ( म० प्र० पृ० ६ ) यथा—चैत्रो ग्रामं गच्छतीत्यादौ चैत्रः कारकम् । ( ख० ) २ कर्तृत्वादिव्यपदेशकारिणी क्रिया कारकम्। यथा—"कारके" ( १।४।२३ ) इति पाणिनिसूत्रे । ( वाच० ) कारकं षड्विधम्[2] । अपादानत्वम्, संप्रदानत्वम्, करणत्वम्, अधिकरणत्वम्, कर्मत्वम्, कर्तृत्वम्, इति । ( श० प्र० पृ० ७८ ) कारकं प्रकारान्तरेणापि द्विविधम् । उक्तम्, अनुक्तं चेति । तत्र, धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वम्; तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वम् । तत्र उक्तं कारकं यथा—पचति, पच्यते इत्यादौ तिङा, पाचकः पच्यमान इत्यादौ च कृता, कर्तृत्वं कर्मत्वं च धात्वर्थविशेष्यत्वेनानुभाव्यते; तथा—पचनं काष्ठम्, दानीयो द्विजः, भीमो गजः, शयनं गृहमि-

---

क्रियायोगाभावात्", इति शाब्दिकाः वदन्ति । अत एव "गुरुविप्रतपस्विदुर्गतानां* प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादौ, "सा लक्ष्मीरुपकुरुते यया* परेषाम्" इत्यादौ च 'रोगे,' 'विपत्तौ' इत्यादिनाम्नोः (यथाक्रमम् ) अध्याहारेणैव† बोधः । यदि अध्याहारमन्तरा क्रियायां षष्ठ्यर्थसंबन्धान्वयः प्रामाणिकः, तदा क्रियान्वितकर्तृत्वकर्मत्वषट्कान्यतमान्वयित्वम् कारकत्वं बोध्यम् । अत एव च, चर्मणि द्वीपिनं हन्तीत्यादौ निमित्तादेरपि न कारकत्वम्, इति एता उपपदविभक्तयः, न तु कारकविभक्तयः, इति ( का० व्या० पृ० १ ) ( श० प्र० पृ० ७७–७८ ) [ख] शाब्दिकास्तु, क्रियाजनकत्वयोग्यताबुद्धिविषयत्वम् कारकत्वमित्याहुः । ( ल० म० सुब० पृ० ७९ )

१ अत्र 'क्रियां कुर्वद्धि कारकम्' इति योगो द्रष्टव्यः । ( म० प्र० पृ० ५ )

२ तदुक्तम्—"कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणमित्याहुः कारकाणि षट्," इति ।

---

* अत्रापि, क्रियाविशेषयोगे कारकार्थेव षष्ठी, इति शब्दशक्तिप्रकाशिकाकृत आहुः । ( श० प्र० श्लो० ६६। पृ० ७८ )

† अयं भावः—[ क ] अत्र षष्ठ्यर्थसंबन्धस्याध्याहृतनामार्थेनैवान्वयः, न तु क्रियया; इति नात्र कारकषष्ठी, इति । ( का० व्या० पृ० १ ) [ ख ] अत्र गदाधरभट्टाचार्यास्तु, 'रोगे' इति पदस्य नाध्याहारः कर्तव्यः । षष्ठ्यर्थसंबन्धस्य धात्वर्थेऽन्वयेऽपि नेयं कारकविभक्तिः, किंतूपपदविभक्तिरित्याहुः । ( ग० व्यु० का० २। ख० २। पृ० ५६ ) अधिकं च कारकविभक्तौ ज्ञेयम् ।

त्यादौ यथाक्रमं करणत्वादि (धात्वर्थविशेष्यत्वेनानुभाव्यते); व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि (पचति, पच्यते इत्यादौ) कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। "सेवितुं साम्प्रतं विद्वैर्गुरुः परुषवागपि। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्" इत्यादौ तु निपातेन क्वचित् कर्मत्वकारकस्योक्तत्वम्। (श० प्र० पृ० १०९)

अनुक्तं तु कारकं यथा—रामेण हतो वालीत्यादौ रामनिष्ठं कर्तृत्वम्; ग्रामं गच्छतीत्यादौ ग्रामनिष्ठं कर्मत्वम्; शरैः शातितपत्र इत्यादौ शरनिष्ठम्, काष्ठैः पचतीत्यादौ च काष्ठनिष्ठं करणत्वम्; विप्राय ददातीत्यादौ विप्रनिष्ठं संप्रदानत्वम्; इत्यादि अनुक्तं कारकं भवति। (ख०) अधिकं तु (श० प्र० पृ० ११४) तत्र द्रष्टव्यम्।

**कारकविभक्तिः**—(सुप्) धात्वर्थे स्वार्थबोधिका विभक्तिः। यथा—ग्रामं गच्छति, घटं पश्यति, वृक्षात्पतति, इत्यादौ द्वितीया[1]—पञ्चम्यादिः कारकविभक्तिरुच्यते। (श० प्र० पृ० ७७)

**कारकार्था**—(सुप्) वृत्त्या कारकस्य बोधिका सुप्। यथा—वृक्षात्पतति, ग्रामं गच्छतीत्यादौ कारकार्था पञ्चम्यादिविभक्तिः। (श० प्र० पृ० ७७)

**कारकार्थान्यार्था**—(सुप्) [क] वृत्त्या कारकार्थबोधकान्या सुप्। (श० प्र० श्लो० ६६। पृ० ७७) यथा—नीलो घट इत्यादौ मतविशेषे अभेदार्थबोधिका, एकत्वबोधिका वा प्रथमाविभक्तिः। (ख०)

[ख] "यत्सुपो यादृशार्थो न प्रकारीभूय भासते। धात्वर्थे यादृगर्थे, सा कारकान्यार्थसुब्[2] भवेत्" ॥ (श० प्र० श्लो० ९२। पृ० ११४)

---

१ अत्र गच्छति—पश्यत्याद्यर्थे गमन—दर्शनादौ द्वितीयाद्युपस्थापितकर्मत्वादि प्रकारीभूय भासत इति द्वितीयादिः कारकविभक्तिर्भवति, इति विज्ञेयम्। (श० प्र० पृ० ७७) (ख०)

२ तथा हि—प्रथमादीनां सप्तानां विभक्तीनामेकत्वादयोऽर्था न धात्वर्थे* प्रकारीभूय भासन्ते; परं तु प्रकृत्यर्थे। पाक इत्यादावपि सुबर्थसंख्या न धात्वर्थे प्रकारः; परंतु पचनादिस्वरूपे नामार्थे, इति। (श० प्र० श्लो० ९२। पृ० ११४)।

---

* अत्रायं विशेषः—समासनिविष्टस्य धातोरर्थे इति वा वक्तव्यम्। न हि, ग्रामगत इत्यादौ धात्वर्थे कर्मत्वादिरिव एकत्वादिरपि सुबर्थः प्रकारः। अत एव, प्रासादात्प्रेक्षते इत्यादौ ल्यबर्थस्य धात्वर्थे प्रकारत्वेऽपि तदर्थकपञ्चम्यां नाव्याप्तिः। (श०प्र०श्लो०९२। पृ०११४)

**कारणगुणपूर्वकत्वम्**—कारणगुणोत्पन्नत्ववदस्यार्थोऽनुसंधेयः[1] ।

**कारणगुणोत्पन्नगुणत्वम्**—[2]स्वाश्रयसमवायिमात्रसमवेतस्वसजातीयगुणजन्यवृत्तिः पृथक्त्व-संख्यात्वातिरिक्ता भावनावृत्त्यन्या च या जातिः, तादृशजातिमत्त्वे सत्यपाकजत्वम् । ( दि० गु० पृ० १९४ ) ( प० मा० ) भवति हि, घटादीनां रूपादिकम् स्वाश्रयघटादिसमवायिकपालादिरूपादिमात्राऽसमवायिकारणकम् । ( प० मा० )

---

अत्रेदमवधेयम्—'कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वयः' इति न नियमः । तथा हि-मणिकारमते 'तस्माज्जानाति' इत्यादौ ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्यान्वयो दृष्टः; 'तस्मात् स्थीयते' इत्यादौ च सर्वमत एव धात्वर्थस्थित्यादौ हेतुविभक्त्यर्थस्यान्वयो दृष्टः; "गुरुविप्रतपस्विदुर्गतानां* प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादौ षष्ठ्यर्थसंबन्धस्याऽपि धात्वर्थेऽन्वयो दृष्टश्च, इति न तादृशनियमोऽङ्गीकर्तव्यः, (ग० व्यु० का० २। ग० २। पृ० ५६)

१ कारणगुणेन कार्ये ये गुणा उत्पद्यन्ते, ते कारणगुणपूर्वका रूपादयो वक्ष्यन्ते । ( मु० गु० पृ० १९३ )

२ कारणगुणोत्पन्नगुणाश्च † अपाकजा रूप-रस-गन्ध-स्पर्शाः, (स्पर्शोऽत्रानुष्णः) अपाकजं द्रवत्वम्, स्नेह-वेग-‡ गुरुत्व-एकत्वानि, एकपृथक्त्वम्, परिमाणम्, स्थितिस्थापकश्चेति । (भा० प० गु० श्लो० ९६-९७)

३ तदर्थश्च-स्वम् ( घटादीनां रूपादिकम् ), तस्याश्रयः ( घटादिः ), तस्य समवायि ( कपालम् ), तन्मात्रे ( तस्मिन्नेव ) समवेतः स्वसजातीयो गुणः ( कपालादिगतरूपादिः ), तेन जन्यम् ( घटादिगतमपाकजं रूपादि ), तत्र वर्तमाना जातिः ( अपाकजरूपत्वादिः ), तद्वत्त्वे सति, इति ।

४ अत्र साजात्यं च गुणत्वव्याप्यव्याप्यजात्या विवक्षणीयम्; तेन, अवयवावयविनोरेकत्वयोः संख्यात्वेनापि साजात्यमभ्युपगम्य तादृशैकत्वाश्रयां जनितेऽवयवावयविद्वित्वादौ नातिव्याप्तिः। ( दि० गु० प० १९४ )

---

* अत्र, 'रोगे' इति पदमध्याहार्य तदर्थे षष्ठ्यर्थस्यान्वयः कार्यः इत्यपि केचिद्वदन्ति ।

† अत्र, पाकजरूपादीनां ( पृथिवीमात्रवृत्तीनां केषांचित् पाकजरूपरसगन्धस्पर्शानाम् ) कारणगुणपूर्वकत्वाभावात् "अपाकजाः" इत्युक्तम् । ( मु० गु० पृ० १९४ )

‡ वेगोऽत्र कर्माजन्यो ( वेगजन्यः ) ग्राह्यः । ( प० मा० )

**कारणगुणोत्पन्नत्वम्**–[ क ] स्वा[1]श्रयसमवायिसमवेतगुणजन्यत्वम् । (दि० गु० पृ० १९४ )

[ ख ] स्वसमवायि[2]समवायिसमवेतगुणजन्यत्वम् । (ल० व० पृ० ३६) यथा कार्यजलसमवेतरूपस्य कारणगुणोत्पन्नत्वमेव । ( स्व० )

**कारणम्[3]**–१ [ क ] कारणं हि तद्भवति; यस्मिन् सति यद्भवति, यस्मिंश्चासति यन्न भवति । ( न्या० वा० १। पृ० २४ )

[ ख ] यस्य कार्यात्पूर्वभावो नियतोऽनन्यथासिद्धश्च, तत् ।(त०भा०पृ०२)

---

१ अत्र, स्वम् ( अवयविजलस्य रूपादि ), तस्याश्रयः, समवायि वा ( समवायेन संबन्धेनाऽऽश्रयः, अवयविभूतं जलम् ), तस्य समवायि ( अवयवभूतं जलम् ), तत्र समवेतो गुणः ( अवयवभूतजलवृत्ती रूपादिः ), तेन जन्यः, तस्य भाव इति विग्रहादिकं ज्ञेयम् ।

२ अत्र तादृशगुणजन्यत्वं च तादृशगुणनिष्ठासमवायिकारणतानिरूपितकार्यताशालित्वम् ( ल० व० पृ० ३६ )

३ तल्लक्षणं च कारणत्वमेव* । तच्च [ क ] कार्याधिकरणवृत्तिर्या स्वप्रतियोग्यधिकरणता तदनवच्छेदककार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति कार्याधिकरणे सत्त्वम् । ( त० प्र० २ ) [ ख ] कार्याधिकरणनिरूपितनिरवच्छिन्नाधेयतावदभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति कार्याव्यवहितपूर्वकालसंबन्धः । ( स्व० ) [ ग ] कार्याव्यवहितपूर्वसमयवर्तित्व–तद्वृत्तिव्यापारकत्व–एतदन्यतररूपनियतो धर्मः†। ( न्या० सि० दी० पृ० ७६ ) [घ] कार्याव्यवहितपूर्वक्षणवृत्तिस्वस्वव्यापारान्यतरकत्वम् †। ( दि० स्मृ० पृ० १८९ )

---

* अत्रेदं बोध्यम्–कारणत्वं द्विविधम् । वैदिकम्, लौकिकं च । तत्र वैदिकम् अन्वयमात्रावगम्यम् । लौकिकं तु अन्वयव्यतिरेकोभयगम्यम्, इति । ( त० व० परि० २। श्लो० ५० पृ० ४० ) पुनरपि न्यायमते कारणत्वं द्विविधम् । फलोपहितत्वम्, स्वरूपयोग्यत्वं चेति । तत्राद्यं यथा–अनुमितिं प्रति परामर्शस्य कारणत्वम् । तच्च ( फलोपहितत्वं च) उपधायकत्वशब्देनापि व्यवह्रियते । द्वितीयं यथा–अरण्यस्थदण्डादिसाधारणम् जनकतावच्छेदकलक्षणम् दण्डत्वादिस्वरूपम् घटकारणत्वम् । ( स्व० )

† इदं कारणत्वं च कारण–तद्व्यापार-एतदुभयसाधारणम् । यथा–स्मरणं प्रत्यनुभवस्य ज्ञानत्वेन कारणत्वमभ्युपगच्छतां केषांचिन्मतमनादृत्य अनुभवत्वेनैव कारणत्वं स्वीकुर्वतां सिद्धान्तिनां मते, अनुभवनाशेऽपि तज्जनितसंस्कारस्य विद्यमानत्वात् स्मरणोत्तरं स्मरणान्तरोपपत्त्या अनुभवस्य व्यापारद्वारा कारणत्वमुपपद्यते, इति ।

[ ग ] अनन्यथासिद्ध–कार्यनियतपूर्ववृत्ति । यथा[1]–(१) तन्तुवेमादिकं पटस्य कारणम् । ( त० भा० पृ० २ ) (त० सं०) यथा वा–[ २ ] नवीनानां ( मणिकारादीनाम् ) मते प्रतिबन्धकसंसर्गाभावोऽपि ( प्रतिबन्धकात्यन्ताभावः ) कार्यमात्रं प्रति कारणम् । अत्र [ ३ ] प्राभाकरास्तु, कारणमात्रं कार्यसहभावनिरूपकमेव सत् कार्यकारि, इति; प्रतिबन्ध-

---

१ तदर्थश्च—अन्यथासिद्धभिन्नं ( अन्यथासिद्धिशून्यम् ) यत् कार्यनियतपूर्ववृत्ति, तत्, इति । अत्र 'व्यापारेण व्यापारिणो नान्यथासिद्धिः' इति नियमोऽङ्गीकर्तव्यः । तेन, कुठारेण वृक्षं छिनत्तीत्यादौ कुठारादीनां, परंपरया ( छेदनक्रियाजनककुठारदारुसंयोगजनकत्वविधया ) कारणत्वेऽपि नान्यथासिद्धिः, इति ।

२ तदर्थश्च—[ क ] कार्यात् नियता * ( अवश्यंभाविनी ) पूर्ववृत्तिः (पूर्वक्षणवृत्तिः,) यस्य तत्तथा, † इति । ( सि० च० १ पृ० ५० ) [ ख ] नियतान्यथासिद्धभिन्नत्वे सति ‡ कार्याव्यवहितपूर्वक्षणावच्छिन्नकार्याधिकरणदेशनिरूपिताधेयतावदभावप्रतियोगितानवच्छेदकधर्मवत् । ( वाक्य० १ पृ० ११ ) [ ग ] कार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्, इति । ( नील० १ पृ० १६ )

३ कार्यसहभावनिरूपकत्वं चात्र, कार्योत्पत्तिक्षणावच्छिन्ना याऽधिकरणता तन्निरूपकत्वम् ।

---

* अत्र, घटं प्रति रासभादेः कारणत्वनिरासाय नियतपदम् । यद्यपि, अनियतरासभादेस्तृतीयान्यथासिद्धत्वेन ( तर्कदीपिकायुक्ततृतीयान्यथासिद्धलक्षणाक्रान्तत्वेन ) कारणलक्षणघटकसत्यन्तेनैव ( अनन्यथासिद्धेति विशेषणेन ) रासभादेः कारणत्वनिरासान्नियतपदं व्यर्थमेव; तथापि, घटसामान्यं प्रति रासभसामान्यस्य कारणत्वनिरासाय नियतपदमावश्यकम् । अन्यथा ( यदि नियतपदं लक्षणे न निवेश्यते तदा ) तत्र पूर्वोक्ततृतीयान्यथासिद्धेरसंभवेन अतिव्याप्तिः स्यात्, इति । ( नील० १ पृ० १६ )

† नियतपूर्ववृत्तित्वं च अव्यवहितपूर्वकालावच्छेदेन कार्यदेशे सत्त्वम् । न चेदं रासभसामान्येऽस्ति; अतो नातिव्याप्तिः । ( त० कौ० १ पृ० ८ ) ( नील० १ पृ० १६ )

‡ अत्र [ क ] घटं प्रति दण्डत्व–दण्डरूपादेः कारणत्ववारणाय सत्यन्तम् । ( त० दी० १ पृ० १६ ) ( न्या० बो० १ पृ० ८ ) ( वाक्य० १ पृ० ११ ) रासभादिवारणाय विशेष्यदलम् । ( वाक्य० १ पृ० ११ ) [ ख ] अनियतरासभादिवारणाय नियतेति । कार्यवारणाय पूर्ववृत्तीति । ( सि० च० १ पृ० २० ) ( त० दी० १ पृ० १५ ) ( न्या० बो० १ पृ० ८ )

काभावोऽपि कार्यसहभावेन[1] कारणम्, इति; च वदन्ति । कारणं तावत् द्विविधम् । मुख्यम्, अमुख्यं च । तत्र घटादिकं प्रति मृदादिकं (कपालादिकम्) मुख्यम् । यथा वा—अभावप्रत्यक्षे इन्द्रियम्; अनुमितौ च परामर्शः; इत्यादि मुख्यं कारणम् भवति । मुख्यभिन्नं त्वमुख्यं कारणम्; तच्च सहकारिकारणमुच्यते । यथा—अभावप्रत्यक्षे योग्यानुपलब्धिः; अनुमितौ च सहचारज्ञानं कारणम् अमुख्यम् भवति । मुख्यमपि न्यायमते त्रिविधम्[2] । समवायि[3], असमवायि, निमित्तं चेति । तत्र घटादिकं प्रति, कपालादिकं समवायिकारणम्; कपालद्वयसंयोगादि असमवायिकारणम्; दण्डादयो निमित्तकारणानि, इति । तत्र समवायिकारण—असमवायिकारणे असाधारणे[4] एव कारणे भवतः । निमित्तकारणं तु साधारणासाधारणभेदेन द्विविधमप्यस्ति । तत्र साधारणनिमित्तकारणानि चाष्टविधानि । ईश्वरः, तज्ज्ञानेच्छाकृतयः, दिक्कालौ, अदृष्टम् ( धर्माधर्मौ ), प्रागभावश्चेति । प्रतिबन्धकसंसर्गाभावस्तु[5] कार्यमात्रं प्रति साधारणं निमित्तकारणमेव । मायावादिवेदान्तिनस्तु अभावस्य कारणत्वं नेच्छन्ति । असाधारणनिमित्तकारणानि तु कार्यभेदेनानेकविधानि, इति ।

---

१ तदर्थश्च—'स्वोत्पत्ति—स्वाव्यवहितपूर्वत्व—एतदन्यतरसंबन्धेन यदा कार्यम् तदा प्रतिबन्धकाभावादिः' इति प्रत्यासत्त्या कारणम्, इति । ( मू० म० १ ) यथा—दाहोत्पत्तिकाले मण्याद्यभावः ।

२ अत्रेदं बोध्यम्—[ क ] एतत् त्रिविधं कारणम् भावकार्याणामेवास्ति । अभावस्य (ध्वंसस्य) तु निमित्तमात्रमुत्पत्तौ । तस्य (ध्वंसस्य) समवायाभावेन समवाय्यसमवायिनोरभावात्, इति। (प्र० प्र० १। पृ० २ ) [ ख ] इदं च कारणत्रयम् भावकार्यस्यैव । अभावस्य तु निमित्तमात्रम्, इति । ( त० दी० ) ( नील० १। पृ० १७ )

३ अत्रायं नियमः 'समवायिकारणं द्रव्यमेव भवति' इति । 'असमवायिकारणं तु गुणः, कर्म च भवति;' असमवायिकारणम् गुणकर्मातिरिक्तं न भवतीत्यर्थः । ( वै० १०।२। १–६ ) ( मु० १। पृ० ५६ )

४ असाधारणकारणमपि कार्यभेदान्नानाविधम् , इति ज्ञेयम् । ( वाच० )

५ स च, प्राचीननैयायिकानां मते प्रागभाव—प्रध्वंस—अत्यन्ताभाव-एतत्त्रयम् । मणिकारादीनां नव्यनैयायिकानां मते तु, अत्यन्ताभाव एव, इति विवेकः । ( दि० १। मङ्ग० पृ० ११ )

अमुख्यं कारणं तु असाधारणं निमित्तमेव; अनेकधा चेति । २ उद्देश्यम् । यथा–"तस्यागमनकारणम्" इत्यादौ कारणमुद्देश्यम् । (वाच०)

**कारुण्यम्**–१ स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा । यथा–परमेश्वरस्य जगन्निर्माणे करुणया प्रवृत्तिः । ( सर्व० अक्ष० पृ० १२१ ) २ करुणाविषयत्वम् । यथा–"दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः" ( नैष० ) इत्यादौ । (वाच०)

**कार्पण्यम्**[2]–( दोषः ) उचितव्ययाकरणेनापि धनरक्षणेच्छा । ( गौ० वृ० ४।३ ) यथा–कृपणो धनाढ्य इत्यादौ । (स्व०)

**कार्यकारणभावः**[3]–यत्किंचिन्निष्ठकार्यतानिरूपितकारणत्व–यत्किंचिन्निष्ठकारणतानिरूपितकार्यत्व–एतदन्यतरात्मको धर्मः । (स्व०) यथा–"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्तरदर्शनात्" इत्यादौ धूम-धूम[5]ध्वजयोः कार्यकारणभावः । ( सर्व० बौद्ध० पृ० ७ )

**कार्यम्**[6]–[ क ] प्रागभावप्रतियोगि । (त० सं०) यथा–घटपटादि सर्वम् ( प्रागभावभिन्नम् ) अनित्यजातम् कार्यं भवति । (स्व०)

---

१ प्रयोजनं फलं वेत्यर्थः । फलस्य कारणत्वं च इच्छाद्वारा; उपायेच्छां प्रति फलेच्छायाः कारणत्वात् । सर्वो हि लोकः फलमिच्छन्नेव तदुपाये प्रवर्तमानो दृश्यते, इति तस्य तथात्वं बोध्यम् । ( वाच० )

२ कार्पण्यमपि तृष्णाप्रभेद एव । ( गौ० वृ० ४।३ )

३ अत्र व्युत्पत्तिः 'कार्यं च कारणं च तयोर्भावः' इति द्रष्टव्या । अयं च हेतुहेतुमद्भाव इत्यप्युच्यते ।

४ तथा हि–एकस्य स्वकारणापेक्षया कार्यत्वे, तदपेक्षया चान्यस्य कारणत्वम् , इति । (वाच०)

५ अत्रेदं बोध्यम्—कार्योत्पत्तिनिश्चयेन अविनाभावो निश्चीयते । तदुत्पत्तिनिश्चयश्च कार्यहेत्वोः प्रत्यक्षोपलम्भानुपलम्भपञ्चकनिबन्धनः । तथा हि–कार्यस्योत्पत्तेः प्रागनुपलम्भः, कारणोपलम्भे सत्युपलम्भः, उपलब्धस्य पश्चात् कारणानुपलम्भादनुपलम्भः, इति पञ्चकारण्या धूमधूमध्वजयोः कार्यकारणभावो निश्चीयते, इति । ( सर्व० बौद्ध० पृ० ७-८ )

६ लक्षणं च कार्यत्वमेव । तच्च [ क ] *स्वाश्रयप्रतियोगितावत्त्वसंबन्धेन प्रागभाववत्त्वम् । ( कु० ५ ) ( न्या० बो० १। पृ० ८ ) [ ख ] अनन्यथासिद्धनियतपश्चाद्भावित्वम् । ( त० भा० पृ० २ ) तच्च स्वरूपसंबन्धविशेषः । ( दि० १ )

[ ख ] कारणपश्चाद्भावि । तच्च द्व्यणुक–त्र्यणुकादिभेदेनानन्तविधम् भवति । ( त० कौ० १। पृ० ३ ) अत्र बहवः–[ १ ] यागादिकृतिसाध्यमपूर्वं कार्यमिति प्राभाकराः । [ २ ] आदिश्यमानो वर्णादिः कार्यमिति शाब्दिकाः । [ ३ ] आरोग्यं कार्यमिति भिषजः । [ ४ ] जन्मलग्नावधि दशमस्थानम् कार्यमिति ज्योतिषज्ञाः । [ ५ ] उद्देश्यं कार्यमिति व्यवहारज्ञाः । [ ६ ] प्रयोजनमिति काव्यज्ञा वदन्ति । (वाच०)

**कार्यसमः**–( जातिः ) [ क ] प्रयत्नकार्यानेकत्वात्कार्यसमः । ( गौ० ५।१।३७) प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति । यस्य प्रयत्नानन्तरमात्मलाभः तत् खल्वभूत्वा भवति । यथा घटादिकार्यमनित्यमिति च भूत्वा

---

कार्यद्रव्यस्योत्पत्ति-विनाशयोः क्रमस्तु 'सृष्टिः' 'प्रलयः' एतच्छब्दव्याख्यानावसरे संपादयिष्यते । अत्र कार्योत्पत्तिप्रकारो मतभेदेन प्रसरति–असतः सज्जायत इति† सौगताः संगिरन्ते । सतोऽसज्जायत इति‡ नैयायिकादयः । सतो विवर्तं ( अधिष्ठानज्ञानेन निवर्त्यम् ) कार्यजातम्, न वस्तु सदिति मायावादिनो वेदान्तिनः । सतः सज्जायत इति § सांख्याः । ( सर्व० सांख्य० पृ० १४९ )

७ अत्रायमाशयः–घटोत्पत्तेः पूर्वं 'इह घटो भविष्यति' इति या प्रतीतिर्जायते, तत्प्रतीतिविषयीभूतो योऽभावः ( स एव घटप्रागभावः ) तत्प्रतियोगि घटादिरूपं कार्यम्, इति । (न्या० बो० १। पृ० ८)

१ असिद्धदेशनाऽऽभासोऽयम् । अस्याकृतिगणत्वात्सूत्रानुपदर्शितानामपि परिग्रहः । यथा शाठीसमाऽनुपकारसमेत्यादि । ( गौ० वृ० ५। ३७ )
अत्र क्वचित्, कारणसमेति पाठः । तस्याप्ययमेवार्थः । ( नील० पृ० ४५ )

---

अत्र स्वपदेन प्रागभावत्वं ग्राह्यम् ।

ते चाभावादेव कार्याणामुत्पत्तिं स्वीकुर्वन्ति, इति भावः । ( वाच० )

तदभिप्रायस्तु–[ क ] प्रागुत्पत्तेः घटादीनामसत्त्वस्य, मृदादिकारणस्य तु तदा सत्त्वस्य अनुभवसिद्धत्वेनासत उत्पत्तिः, इति ( वाच० ) [ ख ] क्रियानिरोधबुद्धिव्यपदेशार्थक्रियाव्यवस्थाभेदात् कार्यस्य कारणाद्भिन्नतया, कारणादुत्पत्तिरिति । ( सा० कौ० )

§ तेषामयमाशयः–यथा हि, कूर्मस्याङ्गानि कूर्मशरीरे निविशमानानि तिरोभवन्ति, निःसरन्ति, चाविर्भवन्ति; न तु कूर्मतस्तदङ्गान्युत्पद्यन्ते, प्रध्वंसन्ते वा । एवम् एकस्या मृदः, सुवर्णाद्वा घट–मुकुटादयो विशेषा निःसरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते; न पुनरसतामुत्पादः, सतां वा निरोधः, इति । ( वाच० )

न भवतीत्येतद्विज्ञायते । एवमवस्थिते, प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते । प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटादीनाम्, व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम् । तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्य आहोऽभिव्यक्तिरिति विशेषो नास्ति । कार्याविशेषेण प्रत्यवस्थानं कार्यसमः। ( वात्स्या० ५।१।३७ )

[ ख ] सामान्यत उक्ते हेतोरनभिमतविशेषनिराकरणेन प्रत्यवस्थानम्। यथा—शब्दोऽनित्यः प्रयत्नान्तरीयकत्वादित्युक्ते प्रयत्नानन्तरीयकत्वं प्रयत्नकार्ये घटादौ, प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टम् । तच्च द्वितीये ( कीलकादौ ) न तज्जन्यत्वसाधकम् । आद्ये त्वसिद्धम् । ( गौ० वृ० ५।३७)

[ ग ] वाद्युक्तहेतोरन्यकार्येणापि संभवाभिधानम् । यथा—शब्दोऽनित्यः प्रयत्नानुविधायित्वादित्यत्र प्रयत्नानुविधायित्वमुभयथाऽपि संभवति । घटादिवत् शब्दस्वरूपोत्पत्तौ, जलादिवत् आवरकनिवृत्तौ च; उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् । तथाच तस्यावरकनिवृत्तिरूपकार्यान्तरस्य संभवान्नानित्यत्वनियतत्वमिति । ( नील० पृ० ४९ )

**कार्यान्वितत्वम्**—कार्यताबोधकपदप्रतिपाद्यार्थात्मककार्ययुक्तत्वम् । यथा—मीमांसकनये (प्राभाकरनये) "घटमानयेत्यादौ घटादिपदानामानयनादिरूपक्रियाविशिष्टे एव घटादौ शक्तिः" इत्यत्र क्रियान्वितत्वम् । (स्व०)

---

१ अन्विते शक्तिरिति प्राभाकराः । अयमभिप्रायः—कथंचिदुपस्थितपदार्थानां शाब्दबोधवारणाय तत्तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः कल्पनीयतया अन्वयांशेऽपि शक्तिरपेक्षिता । अन्यथा तादृशसामान्यकार्यकारणभावभङ्गापत्तेः । एवं च—'अन्वितो घटपदवाच्यः' इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकम्, इति । ( नील० ४। पृ० ३२ ) अधिकं तु "अन्विताभिधानवादः" एतद्व्याख्यानावसरे संपादितमेवेति ।

२ प्राभाकरमते शक्तिग्रहप्रकारस्त्वित्थम्—प्रयोजकवृद्धेन 'घटमानय' इत्युक्तम्; तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः, तदवधार्य पार्श्वस्थो बालः 'घटानयनरूपं कार्यम् घटमानयेति शब्दप्रयोज्यम्' इत्यवधारयति । ततश्च 'घटं नय, गामानय' इत्यावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति, इति । ( मुक्ता० ४। पृ० १७६ ) ( चि० ४)

**कार्यैक्यम्**—( संगतिः ) एककार्यानुकूलत्वम् । ( राम० २। पृ० १३४ ) यथा—"अनुमितिलक्षणैककार्यानुकूलत्वसंगत्या पक्षधर्मतां निरूपयितुमाह" ( दीधि० २। पृ० १२३ ) इत्यादौ व्याप्तिपक्षधर्मतयोरनुमितिलक्षणकार्यैक्यं संगतिः ।

**कालः**—१ ( द्रव्यम् ) [ क ] विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणम् । ( सर्व० औलू० पृ० १०६ )

---

अत्र नैयायिकास्तु, [ क ] "चैत्र! पुत्रस्ते जातः, कन्या ते गर्भिणी" इत्यादौ सिद्धार्थविषयकस्यापि शाब्दबोधस्योत्पत्तेः, न कार्यान्विते ( वाक्यार्थे ) शक्तिः । अत एव "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्" इत्यर्थवादोपस्थिते सुखे वेदादेव स्वर्गपदस्य शक्तिग्रहः, इति । ( चि० ४ ) [ ख ] अन्वयस्य वाक्यार्थतया भानसंभवात् अन्वयांशेऽपि शक्तिर्न कल्पनीया, * इति प्राहुः । ( त० द० ४। प० ३२ )

१ इदं च एककार्यत्वमित्यप्युच्यते ।

२ काललक्षणं तु [ क ] कालिकसंबन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपितमधिकरणविधया † निमित्तत्वम् । ( दि० १।२। पृ० ८९ ) [ ख ] विभुत्वे सति कालिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वाद्गुणाधिरूपं कालत्वम् । ( प० मा० ) [ ग ] अतीतादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वम् । ( वाक्य० १। पृ० ५ )

कालसत्त्वे प्रमाणं चानुमानम् । तच्च [ क ] 'परत्वापरत्वे ‡ सासमवायिकारणके भावकार्यत्वाद्घटवत्' इति । ( दि० १। पृ० ९१ ) [ ख ] बहुतरदिवाकरक्रियाविशिष्टशरीरज्ञानात् कालिकपरत्वोत्पत्तिरिति सिद्धान्तः । 'तज्ज्ञानं विशेषणविशेष्योभयसंबन्धघटकसापेक्षम् साक्षात्संबन्धाभावे सति विशिष्टज्ञानत्वात्, 'लोहितः स्फटिकः' इति ज्ञानवत्' इत्यनुमानेन तादृशसंबन्धघटकविधया कालः सिध्यति । तादृशसंबन्धश्च स्वसमवायिसंयुक्तसंयोगः । स च (कालः) जगदाधारः, कार्यमात्रे निमित्तकारणं चेति । ( सि० च० पृ० १० ) [ग] 'इदानीं घटः' इति प्रतीतेः संभवेन, सूर्यक्रियाया घटादेश्च संबन्धोऽवश्यं स्वी-

---

* अत्रायं निष्कर्षः–पदार्थसंसर्गस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसंभवात्, तादृशसंसर्गांशेऽपि शक्तिर्न कल्पनीया, इति । (नील० ४। प० ३२ )

† कालिकसंबन्धावच्छिन्नाधिकरणत्वमेव कालत्वम्, इति निष्कृष्टार्थः । ( राम० १। काल० पृ० ८९ )

‡ अयं भावः—ज्येष्ठे परत्वप्रत्ययः, कनिष्ठेऽपरत्वप्रत्ययः । स च परत्वापरत्वगुणविशेषाधीनः। परत्वापरत्वे च सासमवायिकारणके भावकार्यत्वात् । असमवायिकारणं च तयोः कालपिण्डसंयोग एव; तदाश्रयः काल इति । दि० १। प० ९१ )

[ख] परापरव्यतिकरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययकारणं द्रव्यम् । ( वै० उ० ७।१।२९ ) ( भा० प० श्लो० ४७ )

[ग] अतीतादिव्यवहारहेतुः । ( त सं० )

[घ] शाब्दिकास्तु, शब्दतन्मात्रपरिणामः कालः, इत्याहुः । ( ल० म० लका० प० २० ) स च (कालः) एकः, विभुः, नित्यश्च । ( वै० २।२।६–९ ) ( ७।१।२९ ) ( त० सं० ) काले पञ्च गुणा वर्तन्ते । एकत्वसंख्या, परममहत्परिमाणम्, पृथक्त्वम्, संयोगः, विभागश्चेति । (भा० प० श्लो० ३३) (त० भा० पृ० ३१) सोऽयं कालो देशवृत्तेरव्याप्यवृत्तिताया नियामकः ( अवच्छेदकः ), जन्यमात्रे साधारणनि-

---

कर्तव्यः । स च, स्व-(क्रिया-)-समवायि-(तपन-)संयोगिसंयोग एव भवति । तद्घटकतया कालः सिध्यति, इति । ( दि० ११ पृ० ९१ ) ( प० मा० ) सांख्यास्तु, काल आकाशेऽन्तर्भवतीति, कालमतिरिक्तं न स्वीकुर्वन्ति । ( सां० कौ० ) दिक्कालौ नेश्वरादतिरिच्येते इति ईश्वरात्मक एव कालः, इति दीधितिकृद्रघुनाथतार्किकशिरोमणि-रघुदेव-रामभद्रादय * आहुः ।

३ तदर्थश्च–दिग्यसमवेतं यत् परत्वम् ( दिक्समवेतातिरिक्तं कालमात्रसमवेतं परत्वम्), तस्य असमवायिकारणम् ( कालपिण्डसंयोगः ), तस्याधिकरणम् , इति ।

१ तदर्थश्च–[क] अतीत इत्यादिः ( अतीतः , भविष्यत् , वर्तमानः, इति प्रतीतिप्रयोजकः) व्यवहारः, तस्य असाधारण–निमित्तहेतुः । तेन, व्यवहारस्य शब्दात्मकत्वेन, तस्याकाशे समवायसंबन्धेन सत्त्वेऽपि नाकाशेऽतिव्याप्तिः । ( सि० च० १। पृ० १० ) [ख] सूर्यक्रियोपाधिवशात् अतीतानागतवर्तमानादिव्यवहारभाक् , इति । ( प्र० प्र० )

२ अत्र, "कालाः परिमाणिना" ( पा० २।२।५ ) इति सूत्रस्य भाष्यं च " येन मूर्तीनामुपचयाश्चापचयाश्च लक्ष्यन्ते, तं कालमित्याहुः । तस्यैव हि कयाचित्क्रियया युक्तस्याहरिति रात्रिरिति च भवति । कया क्रियया ? आदित्यगत्या । तयैवासकृदावृत्तया मास इति संवत्सर इति च भवति " इति । ( ल० म० लका० पृ० २१ )

३ अत्रेदमवधेयम्–[क] कालस्त्वेकोपि † उपाधिभेदात् अतीतानागतक्षणदिनवर्षादिव्यवहा-

---

* एतन्मते काल ईश्वरान्नातिरिक्तः; किं तु, क्षणा एव ईश्वरादतिरिक्ताः 'इदानीम्' इत्यादिव्यवहारविषयाश्च, इति ज्ञेयम् । ( वाच० )

† अत्रोपाधिस्तु कालोपाधिशब्दव्याख्यानावसरे संग्रहीष्यते ।

मित्तकारणं चेति । कालोऽतीन्द्रिय इति नैयायिकसिद्धान्तः । तथा च दिग्विपरीतपरत्वापरत्वानुमेयः कालः, इति । (त० भा० प० ३१) प्राभाकराश्च, कालः षडिन्द्रियवेद्य इति, अमन्यन्त । (म० प्र० पृ० ६९) मायावादिनस्तु, कालः साक्षिप्रत्ययभास्य इति, अङ्गीचक्रुः । २ विवेकसाक्षात्कारान्तरायो मेघाख्यस्तुष्टिविशेषः काल इति सांख्या आहुः । (वाच०)

**कालातीतः**—१ कालात्ययापदिष्टवदस्यार्थोऽनुसंधेयः । (गौ० १।४९) २ कालातिक्रमः । यथा—"कालातीते वृथा संध्या वन्ध्यास्त्रीमैथुनं यथा" इत्यादौ । (वाच०)

**कालात्ययापदिष्टः**—(हेत्वाभासः) १ [क] कालात्ययापदिष्टः का-

---

रविषयः *। (मु० १। पृ० ९१) [ख] काल एकोऽपि उपाधिभेदात्त्रिविधः । अतीतः, अनागतः, वर्तमानश्चेति । (त० कौ० १। पृ० ३) तत्र भूतभविष्यत्कालावपि प्रत्येकमद्यतनानद्यतनभेदेन द्विधा, इत्यादि ग्रन्थान्तरे द्रष्टव्यम् ।

१ तत्र प्रमाणम्—[क] "पौरुषं दैवसंपत्त्या काले फलति पार्थिव । यत्र एतन्मनुष्यस्य पिण्डितं स्यात्फलावहम्" इति । [ख] "कृषेर्वृष्टिसमायोगे दृश्यन्ते फलसिद्धयः । तास्तु काले प्रदृश्यन्ते नैवाकाले कथंचन," इति च द्रष्टव्यम् । (वाच०)

२ अत्रोच्यते—ज्येष्ठत्व—कनिष्ठत्व—ज्ञानाधीनपरत्वापरत्वानुमेयः † कालः, इति । (प्र० प्र०) (त० कौ० १। पृ० ३) अनुमानप्रकारस्तूक्त एव ।

अत्र सूत्रम्—‡अपरस्मिन्नपरम् युगपत् चिरम् क्षिप्रमिति काललिङ्गानि । (वै० २।२।६)

३ अत्रार्थे कालातीतशब्दस्य 'कालस्यातीतमत्ययः' इति व्युत्पत्तिर्द्रष्टव्या । (वाच०)

४ कालस्य साधनकालस्यात्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः । एतेन, साध्याभावप्रमा लक्षणार्थ इति सूचितम् । साध्याभावनिर्णये साधनासंभवात्; अयमेव बाधितसाध्यक इति गीयते । यथा-वह्निरनुष्णः कृतकत्वादित्यादौ (गौ० वृ० १।४९)

---

* अत्रेदं बोध्यम्—(१) स्वप्रतियोग्यनाधारत्वादिविशिष्टमहाकालस्यैव क्षणलवनिमेषकाष्ठाकलामुहूर्तयामाहोरात्रादिरूपत्वम् । (२) विशिष्टसूर्यक्रियादेरेव वा क्षणादित्वम्, इति । (प० मा०) (दि० १। पृ० ९०)

† अत्र, परत्वे विप्रकृष्टत्वधीर्निमित्तकारणम्, अपरत्वे संनिकृष्टत्वधीर्निमित्तकारणमिति बोध्यम् ।

‡ तदर्थश्च—इतिकारो ज्ञानप्रकारः प्रत्येकमभिसंबध्यते । तथा च—अपरमिति प्रत्ययः, युगपदिति प्रत्ययः, चिरमिति प्रत्ययः, क्षिप्रमिति प्रत्ययः, काललिङ्गानि, इति । (वै० उ० २।२।६)

लातीतः । ( गौ० १।२।९० ) कालात्ययेन प्रयुक्तो यस्यार्थस्यैकदेशोऽपदिश्यमानस्य, स कालात्ययापदिष्टः, कालातीत इत्युच्यते । निदर्शनम्—नित्यः शब्दः संयोगव्यङ्ग्यत्वाद्रूपवत् । ( वात्स्या० १।२।९० )

[ ख ] यस्य बलवत्प्रत्यक्षादिप्रमाणेन पक्षे साध्याभावः परिच्छिन्नः, सः । स एव बाधितविषय इत्युच्यते । यथा—अग्निरनुष्णः पदार्थत्वात् कृतकत्वाद्वा जलवदिति[1] । यथा वा—घटः क्षणिकः सत्त्वात् इत्यादौ सत्त्वं हेतुः[2] कालात्ययापदिष्टः । ( त० भा० पृ० ५० )

[ ग ] बाधितवदस्यार्थोऽनुसंधेयः । यथा—"कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा" ( भा० प० श्लो० ७२ ) इत्यादौ । २ बाधवदस्यार्थोऽनुसंधेयः । ( वाच० ) ( त० भा० ? )

**कालिकविशेषणता**—( स्वरूपसंबन्धः ) कालिकसंबन्धवदस्यार्थोऽनुसंधेयः । ( स० )

**कालिकसंबन्धः**[3]—कालेन कृतः सम्बन्धः[4] । ( वाच० ) यथा—कालगन्धयोः संबन्धः । ( स० )

---

१ अत्र कृतकत्वं हेतुः, तस्य च यत् साध्यम् ( अनुष्णत्वम् ), तस्याभावः प्रत्यक्षेणैव परिच्छिन्नः ( परिज्ञातः ); त्वगिन्द्रियेणाग्नेरुष्णत्वपरिच्छेदात् । ( त० भा० पृ० ५० )

२ तथा हि—तादृशहेतोः ( सत्त्वस्य ) यत् साध्यम् ( क्षणिकत्वम् ), तस्याभावः ( अक्षणिकत्वम् ) प्रत्यभिज्ञया पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवया, पूर्वापरकालाकलनया घटस्य स्थायित्वं परिच्छिद्यत इति तस्य हेतोस्तथात्वं संभवति ।

3 स च सर्वाधारताप्रयोजकसंबन्ध इति जेगीयते । तथाहि—अनेन संबन्धेन सर्वेषु जन्यभावेषु जन्यभावानां वृत्तिमत्त्वम् । नित्येषु तु कालिकसंबन्धेन न कस्यापि सत्त्वम्; नित्यानुयोगिककालिकसंबन्धस्यानुपगमात् । कालस्य च नित्यत्वेऽपि कालानुयोगिकस्तादृशसंबन्धस्तु* स्वीक्रियते, इति नैयायिका मन्यन्ते ।

४ स च स्वरूपादनतिरिक्त इत्यन्ये । ( ग० सिद्धा० )

---

* अत्र च 'कालातिरिक्ते नित्ये कालिकायोगः' इति नैयायिकानां सिद्धान्तो द्रष्टव्यः ।

**कालीनत्वम्**[1]—कालवृत्तित्वम् । यथा—घटकालीनः पट इत्यादौ पटस्य घटकालीनत्वम् । ( ख० )

**कालोपाधिः**—क्षणदिनादिव्यवहारविषयत्वनियामको धर्मः । स च जन्यमात्रं ( अनित्यमात्रम् ) क्रियामात्रं वा कालोपाधिः । ( ख० ) तथा हि—स्वजन्य[2]विभागप्रागभावावच्छिन्नं कर्म; पूर्वसंयोगा[3]वच्छिन्नविभागः; पूर्व[4]संयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावः; उत्तरसंयोगा[5]वच्छिन्नं कर्म[6] च; इत्यादि । ( मु० १। पृ० ९२ ) ( सि० च० १। पृ० १० )

---

१ प्राक्कालीनोत्तरकालीनार्वाक्कालीनप्रभृतिप्रयोगेषु खप्रत्ययो दृश्यते । स चानुक्तोऽप्यवगन्तव्यः *; अन्यथा बहुतरलक्ष्यक्षतिप्रसङ्गः स्यात् । ( गण० )

२ तदर्थश्च—स्वम् ( रविक्रिया ), तज्जन्यो विभागः ( रवि—पूर्वदेशयोर्विभागः ), तस्य प्रागभावः ( स तादृशक्रियोत्पत्तिकाले तिष्ठति ), तदवच्छिन्नम् ( तदेव कर्म ), इति ( सि० च० १। पृ० १० )

३ स्वजन्यविभागनाश्यपूर्वसंयोगविशिष्टः स्वजन्यविभाग इत्यर्थः । ( दि० १। पृ० ९२ )

४ स्वजन्यविभागजन्यपूर्वसंयोगनाशावच्छिन्नः स्वजन्योत्तरसंयोगप्रागभाव इत्यर्थः । (दि० १। पृ० ९२ )

५ स्वनाशकोत्तरसंयोग इत्यर्थः । ( दि० १। पृ० ९२ ) अनेनोपाधिचतुष्टयेन क्षणचतुष्टयव्यवहार उपपद्यते । एवम्-क्षणान्तरव्यवहारनियामकं कर्मान्तरादि ऊह्यम् । महाप्रलये क्षणादिव्यवहारो यद्यस्ति, तदा सोऽनायत्या ध्वंसेनैव† उपपादनीयः, इति । ( मु० १। पृ० ९३ )

६ अत्र, प्रथमक्षणे क्रियोत्पद्यते, अनन्तरं क्रियातो विभागः, ततः पूर्वसंयोगनाशः, तत उत्तरदेशसंयोग उत्पद्यते, इति नैयायिकप्रक्रिया ज्ञेया ।

---

* अत्र च [ १ ] " कालाट्ठञ् " ( ४।३।११ ) इति पाणिनिसूत्रे 'कालात्' इति योगं विभज्य युष्मदस्मदोरिति सूत्रान्मण्डूकप्लुत्या खञनुवर्त्य विधेयः, इत्याकूतम् । [ २ ] गौडाश्च, " समासप्रत्ययविधौ प्रतिषेधो वक्तव्यः " (पा० सू० १।२।७२ स्थवार्ति०) इत्युक्तेः, तदन्तविधिपरिभाषाया अप्रवृत्तेः कालान्तशब्दान्नास्य प्रवृत्तिः । तेन तदन्तशब्दात् ख एव साधुः; समानकालीनः प्राक्कालीन इति भूरिप्रयोगात्, इत्याहुः । [ ३ ] वस्तुतस्तु—" तद्धिताः " ( ४।१।७६ ) इति पाणिनिसूत्रस्थबहुवचनेनानुक्तस्थलेऽपि तद्धितप्रत्ययो (खप्रत्ययः) बोध्यते, इति विज्ञेयम् ।

† स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयस्यैव तत्र क्षणव्यवहारविषयत्वमिति भावः । ( दि० १। पृ० ९३ ).

**काव्यम्**–[१]नायकादिप्रतिपादको वाक्यसंदर्भः । यथा–वाल्मीकिविरचितं रामायणम् काव्यम् । ( ख० ) [ २ ] [ क ] आलंकारिकास्तु, अदोषौ[1] सगुणौ सालंकारौ शब्दार्थौ[2] काव्यम्[3] । (प्रतापरुद्र० प्रक० २।पृ०१२) [ ख ] पूर्वोक्तविशेषणविशिष्टः शब्द एव काव्यम्, नार्थः काव्यमिति रसगङ्गाधरकृदादय आहुः ।

**किञ्च**–( अव्ययम् ) १ आरम्भः । २ समुच्चयः । ३ साकल्यम् । ४ संभावना । ५ अवान्तरम् । ( वाच० )

**किञ्चन**–१ असाकल्यम् । २ अल्पम् । ( वाच० )

**किञ्चित्**–१ असाकल्यम् । २ अल्पम् । यथा–" कम्पेन किञ्चित् प्रतिगृह्य मूर्ध्नः," ( रघु० ) " आवर्जिता किञ्चिदिव स्तनाभ्याम् " ( कुमार० ) इत्यादौ । ( वाच० )

**किन्तु**–( अव्ययम् ) १ पूर्ववाक्यसंकोचज्ञापनम् । २ प्रागुक्तविरुद्धार्थः । ३ किं पुनरर्थः । ( वाच० )

**किन्नु**–(अव्ययम्) १ प्रश्नः । २ वितर्कः । ३ सादृश्यम् । ४ स्थानम् ।(वाच०)

**किम्**–१ [ क ] जिज्ञासितम्[4] । (ग० शक्ति० पृ० १०४) (दि० ४। पृ० १७९ ) ( म० प्र० ३।३४ ) यथा–किं तव नामधेयमित्यादौ । (ख०) [ ख ] अनिर्धारितविशेषविशिष्टम् । यथा–' कीदृशो गवयपदवाच्यः'

१ दोषवर्जितं सगुणं सालंकारं शब्दविशिष्टार्थ-अर्थविशिष्टशब्द-एतदन्यतरत् काव्यम्, इति समुदितार्थः । (ख०)

२ तदुक्तम्– [ क ] गुणालंकारसहितौ शब्दार्थौ दोषवर्जितौ । गद्यपद्योभयमयं काव्यं काव्यविदो विदुः, इति । (प्रतापरुद्र० प्र० २। पृ० १२) [ ख ] तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि, इति । (काव्यप्र० उ० १। श्लो० ४)

३ काव्यसंपत्सामग्री तु–शब्दार्थौ मूर्तिराख्यातौ जीवितं व्यङ्ग्यवैभवम् । हारादिवदलंकारास्तत्र स्युरुपमादयः ॥ श्लेषादयो गुणास्तत्र शौर्यादय इव स्थिताः । आत्मोत्कर्षावहास्तत्र स्वभावा इव रीतयः ॥ शोभामाधुर्यकं प्राप्ता वृत्तयो वृत्तयो यथा । पदानुगुण्यविश्रान्तिः शय्या शय्येव संमता ॥ रसास्वादप्रभेदाः स्युः पाकाः पाका इव स्थिताः । प्रख्याता लोकवदियं सामग्री काव्यसंपदः, इति ॥ ( प्रताप० प्र० १। पृ० १२ )

४ जिज्ञासाविषयीभूत–स्वसमभिव्याहृतपदोपस्थाप्य–विधेयन्यूनवृत्तिधर्मावच्छिन्नमित्यर्थः । तेन न, 'कः पचति' इति प्रश्नानन्तरं 'प्रमेयः पचति' इत्युत्तरवाक्यं प्रयुज्यते ।

इत्यादौ । ( म० प्र० ३। पृ० ३४ ) यथा वा—" कस्मै नाथ समर्प्य कौरवकुलं व्योमान्तमालम्बसे " (उद्भटः) इत्यादौ । २ ईषदर्थः । यथा—" न किमप्यस्यास्ति " इत्यादौ । ३ अतिशयः । यथा—" किमप्येष प्रगल्भसे " इत्यादौ । ४ प्रश्नः । यथा—" किमिदं किंनरकण्ठि ! सुप्यते " ( रघुः ) इत्यादौ । ( वाच० ) ५ वितर्कः । स च प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा—" किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं, किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ " इत्यादौ किंशब्दार्थः । ६ कुत्सा । यथा—किंगौरित्यादौ । ( ग० शक्ति० पृ० १०९–११० ) यथा वा—किंसखेत्यादौ । ( किरा० ) एवम्—वाशब्दस्याप्यर्थो ज्ञेयः । ( ग० शक्ति० पृ० १०९ )

अत्र, उद्देश्यवाचककिंपदस्य प्रवृत्तिनिमित्तं च, समभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितो धर्मः । यथा—'कः *पचति' इत्यादौ । ( ग० शक्ति० पृ० १०४–१०५ ) एवम्—विधेयवाचककिंपदस्य प्रवृत्तिनिमित्तं च, स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्मः, सः । यथा—'अयं †कः' इत्यादौ । ( ग० शक्ति० पृ० १०८ )

१ अत्र 'अतिशयितं प्रगल्भसे' इति बोधः । ( वाच० )

२ अत्र, वितर्कस्य च विशेष्यतासंबन्धेन प्रथमान्तपदोपस्थाप्यार्थांशे ( [illegible] ), प्रकारितासंबन्धेन तत्र च विशेषणस्य चन्द्रादेरन्वयः । ( ग० शक्ति० पृ० १०९–११० ) तथा च—भेदसंसर्गावच्छिन्नप्रकारतासंसर्गकेन्दुविशेष्यकसंशयस्य विशेष्यतासंबन्धेनेदंत्वावच्छिन्नविशेष्यताकबोधः । ( ग० शक्ति० मा० टी० पृ० ११० )

३ अत्रोत्तरार्धं तु, "स्तनौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ, तडिद्वा तारा वा कनकलतिका वा किमबला" इति द्रष्टव्यम् । ( ग० शक्ति० मा० टी० पृ० १०९ )

---

* अत्र, 'पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितो यो धर्मः, तद्वान् पचति' इत्याकारकोऽन्वयबोधः । अत्र जिज्ञासा च 'किंचिद्धर्मावच्छिन्नोद्देश्यतानिरूपितपाककृतित्वावच्छिन्नविधेयताशालि ज्ञानं भवतु' इत्याकारिका । ( ग० शक्ति० पृ० १०४–१०५)

† अत्र 'इदंत्वावच्छिन्नांशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मवान्' इत्याकारकोऽन्वयबोधः । ( ग० शक्ति० पृ० १०८ )

**किमु**–( अव्ययम् ) १ प्रश्नः । २ निषेधः । ३ वितर्कः । ४ निन्दा । यथा–“ किमु भीरु ! ररार्यसे ” ( भट्टिः ) इत्यादौ । ( वाच० )

**किमुत**–( अव्ययम् ) १ प्रश्नः । २ वितर्कः । ३ विकल्पः । ४ अतिशयः । ( वाच० )

**किल**–( अव्ययम् ) १ आगमप्रसिद्धिः । यथा–“कंसं जघान किल² वासुदेवः” इत्यादौ । २ अरुचिः । यथा–“ एवं किल³ केचिद्वदन्ति ” इत्यादौ । ३ न्यक्कारः । यथा–“ स किल⁴ योत्स्यते ” इत्यादौ । ४ संभावना । यथा–“ पार्थः किल⁵ विजेष्यते कुरून् ” इत्यादौ । ५ हेतुः । यथा–“ स किलैवमुक्तवान् ” इत्यादौ । ६ अलीकम् । यथा–“ प्रसह्य सिंहः किल⁷ तां चकर्ष ” ( रघु० स० २ ) इत्यादौ । ( गणरत्न० ) ( वाच० ) ७ वार्ता । ८ अनुशयः । ९ निश्चयः, इत्यादि । ( वाच० )

**कुर्वद्रूपत्वम्**–यत्किंचित्कार्यजनकतावच्छेदकतया सिद्धो जातिविशेषः । यथा–विज्ञानवादिमते, अङ्कुरोपधायकक्षणिकबीजव्यक्तिमात्रवृत्तिर्बीजत्वव्याप्या जातिः । ( दि० १ । आत्म० पृ० १०१ ) ( राम० )

---

१ तत्र प्रमाणम्–आहो उताहो किमुत वितर्के किं किमूत च, इति । ( हेम० ) ( वाच० )

२ अत्र ‘कृष्णकर्तृकं कंसहननमागमसिद्धम्’ इति बोधः । ( वाच० )

३ अत्र, ‘केषांचिदेवं कथनं वक्तुररुचिविषयः’ इति बोधः । ( वाच० )

४ अत्र, तस्य योधनशक्तिराहित्यद्योतनात् तिरस्कारो गम्यते । ( वाच० )

५ अत्र ‘पार्थकर्तृककुरुविजयः संभावनाविषयः’ इति बोधः । ( वाच० )

६ अत्र, तत्कथनस्यान्यत्र हेतुता द्योतते । ( वाच० )

७ अत्र ‘सिंहकर्तृकं नन्दिनीकर्षणमलीकम्’ इति बोधः । ( वाच० )

८ अत्र ‘कुर्वत् फलोन्मुखं रूपं यस्य, तस्य भावः’ इति विग्रहो द्रष्टव्यः । ( वाच० )

९ अत्र नैयायिकाः, फलजननाय योग्ये धान्यादिबीजेऽतिशयः ( उपकारः ) सहकारिभिः ( धरणिसलिलसंयोगादिभिः ) आधीयते इत्यवश्यं वाच्यम् । तेनैवाङ्कुरादिनियमोपपत्तौ अलं* कुर्वद्रूपत्वकल्पनेन, इत्याहुः । ( दि० १। आत्म० पृ० १०१ ) ( सर्व० बौद्ध० ) ( वाच० )

---

* अत्रायं नियमः ‘क्षेत्रादावुप्तबीजव्यक्तिविशेषेणैवाङ्कुरोत्पत्तिः, न तु कुसूलस्थबीजव्यक्त्या’ इति द्रष्टव्यः ।

**कृञ्**–( धातुः ) [ क ] यत्नः । यथा–पाकं करोतीत्यादौ कृधात्वर्थः प्रयत्नः । ( ख० )
[ ख ] शाब्दिकास्तु, कृञोऽर्थ उत्पादनम् । तच्च, उत्पत्तिरूपफलसंहितं यत्नादि । यथा–घटं करोतीत्यादौ कृञोऽर्थः, इत्याहुः । ( वै० सा० धात्वर्थ० पृ० ६१ )

**कृतिः**–[१] प्रयत्नवदस्यार्थोऽनुसंधेयः । (त० सं०) [२] प्रवृत्तिः । (ख०)

**कृदन्तम्**–( यौगिकं नाम ) यद्धात्वर्थान्वितस्वार्थान्वयबोधं प्रति यादृशानुपूर्व्यवच्छिन्नस्य यत्कृतो निश्चयः कारणम्, तद्धातूत्तरगं तत् कृदेव तादृशानुपूर्व्यवच्छिन्नं सत् कृदन्तं नाम । यथा–पाचकं–पाठ्यमानेत्यादि । ( श० प्र० श्लो० ९२। पृ० ६७ )

**कृपा**–निरुपधिपरदुःखप्रहाणेच्छा । यथा–" मिथुने कृपावती" ( कुमार० ) इत्यादौ ।

**कृषिः**–[ १ ] विलेखनम् । यथा–भृतिभुजः कर्षन्ति हलैरित्यादौ धात्वर्थः । ( ख० ) [ २ ] क्वचित्, प्रतिविधानम् । यथा–पञ्चभिर्हलैः कर्षति गृहीत्यादौ धात्वर्थः । ( ग० व्यु० का० ३। पृ० ८१ )

---

१ आख्यातस्य यत्नवाचकत्वेऽप्यत्र लक्षणयाऽऽख्यातेन व्यापारो बोध्यते, इति ज्ञेयम् । (ख०) अत्रेदं बोध्यम्–कृञः फलावच्छिन्नव्यापारबोधकतया गौणकर्मत्वम् । तच्च ( गौणकर्मत्वं च ) अत्र साध्यताख्यकृतिविषयत्वम् । ( का० व्या० पृ० ६ )

२ अत एवास्य धातोः सकर्मकत्वमपि संगच्छते । तत्रोक्तम्–"व्यापारो भावना सैवोत्पादना सैव च क्रिया । कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते" ॥ "किंतूत्पादनमेवातः कर्मवत् स्यात् यगाद्यपि । कर्मकर्तर्यन्यथा तु न भवेत् तद्दृशेरिव" इति ॥ ( वै० सा० धात्वर्थ० भर्तृ० श्लो० ५।६। पृ० ५०–६१ )

३ तद्धि, धात्वर्थेनान्वितस्य स्वार्थकर्त्रादेः कर्मत्वादावन्वयबोधं प्रति द्वितीयाद्यंशे तादृशानुपूर्वीकत्वेन निश्चीयमानं हेतुर्भवति, इति लक्षणसमन्वयो बोध्यः । ( श० प्र० श्लो० ५२। पृ० ६८ )

४ विलेखनं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारः ।

५ प्रतिविधानं चात्र भूम्यवयवशैथिल्यानुकूलव्यापारानुकूलव्यापारः । स च प्रेरणादिरूपः ।

**क्लृप्तत्वम्**—१ नियतत्वम्; अवधारणेन कल्पितत्वं वा । ( वाच० ) यथा—"अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम्" ( मु० १ ) इत्यादौ । २ छिन्नत्वम् । यथा—"क्लृप्तकेशनखश्मश्रुर्दान्तः शुक्लाम्बरः शुचिः" ( मनु० ) इत्यादौ, इति धर्मज्ञा आहुः । ३ रचितत्वम् । यथा—"क्लृप्तेन सोपानपथेन मञ्चम्" ( रघु० स० ६ ) इत्यादौ, इति काव्यज्ञा आहुः । ( वाच० )

**केवलत्वम्**—१ इतरासहायत्वम् । यथा—"यथैव ताः पुरः केवलीरोषधीरश्नन्ति, केवलीरपः पिबन्ति, केवलमेव पयो दुह्रे," ( शत० ब्रा० १। ६। १७। १९) तदर्थश्च—"यथा पुरा अमावास्यातः पूर्वदिवसे ता गावः केवलीश्चन्द्रानुप्रवेशरहिता ओषधीरपश्चाहारं कृत्वा केवलं चन्द्ररहितमेव पयो दुह्रे दुहते" ( भा० ) ( वाच० ) इत्यादौ । २ अवधारणत्वम् । ३ ज्ञानविशेषनिष्ठं वैजात्यम् । यथा—"जनयन्ति ते जिना येषां केवलज्ञानशालिनाम्" इत्यादौ । ( स्व० )

**केवलव्यतिरेकि**[1]—( लिङ्गम्, अनुमानं वा ) [ **क** ] अगृहीतान्वयव्यतिरेकिसाध्यकम् । ( दीधि० २। पृ० १९६ )

[ **ख** ] असत्सपक्षम्[2] । ( मु० गु० पृ० २१९) (न्या० म० २। पृ० १९)

[ **ग** ] व्यतिरेकमात्रव्याप्तिकम् । ( त० सं० ) ( न्या० म० २ )

---

१ अत्र साध्याभाव–साधनाभावयोः साहचर्यं व्यतिरेकः । तथा च–'व्यतिरेकेणैव व्याप्तिर्यस्मिंस्तत्' इति समासो द्रष्टव्यः । ( सि० च० २। पृ० २६ ) अयं च ( वक्ष्यमाणः ) व्यतिरेकिप्रकारः स्वार्थ एव; परं प्रति साध्याप्रसिद्ध्या प्रतिज्ञाद्यसंभवात्, इति । ( चि० २। पृ० ६३ )

केवलव्यतिरेकि तु चतूरूपोपपन्नं भवति । चत्वारि रूपाणि च–पक्षधर्मत्वम्, विपक्षाद्व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । अत्र सपक्षाभावेन सपक्षसत्त्वं नास्तीति चत्वारि रूपाण्येवेति भावः । ( सि० च० २। पृ० २७)

२ असत्सपक्षत्वं च [ क ] पक्षातिरिक्तेऽनिश्चितसाध्यसाधनसहचारकत्वम् । ( न्या० म० २। पृ० १९ ) [ ख ] अगृहीतहेतुसहचारं यत् व्यतिरेकिसाध्यम्, तत्कत्वम् । ( दि० गु० पृ० २१९ ) [ ग ] यत्र निरुपाधिव्यतिरेकसहचारेण अन्वयव्याप्तिग्रहः, तत्त्वम् । ( चि० २ । पृ० ४८–४९ )

[ घ ] यत्र व्यतिरेकव्याप्तिरेवास्ति, तत् । ( त० कौ० २। पृ० ११ ) यथा–पृथ्वी इतरेभ्यो[1] भिद्यते गन्धवत्त्वादित्यत्र गन्धवत्त्वं[2] केवलव्यतिरेकि । ( त० सं० ) ( न्या० म० २ ) यथा वा–जीवशरीरं सात्मकं[3] चेष्टावत्त्वात्, प्राणादिमत्त्वाद्वेत्यादौ[4] हेतुः केवलव्यतिरेकी । ( चि० २। पृ० ६६–६३ ) ( त० कौ० २। पृ० ११ )

**केवलसमासः**—( समासः ) अव्ययीभावादिपञ्चान्यत्वे सति यः समासः, सः । यथा–'पूर्वं भूतः' इति विग्रहे 'भूतपूर्वः' इत्यादिः । ( म० प्र० ४। पृ० ४४ )

**केवलान्वयि**[5]–यो धर्मः सर्वत्र वर्तते ( यस्य चात्यन्ताभावोऽप्रसिद्धः ),

---

१ अत्र, जलादीनां त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः पृथिव्यां *साध्यन्ते, इति तात्पर्यम् । ( चि० २। पृ० ५३ ) ( त० दी० )

२ तथाहि–'पृथिवी इतरेभ्यो भिद्यते; पृथिवीत्वात्' इत्यादौ यन्नेतरेभ्यो भिद्यते तन्न पृथिवी यथा जलम्; न च नेयं पृथिवी; तस्मादितरेभ्यो भिद्यते; इति व्यतिरेकिणमुदाहरन्ति । न च पक्षातिरिक्ते जलादौ साध्यसाधनयोः सहचारोऽस्ति; निश्चीयते वा । ( न्या० म० २। पृ० १९ )

३ अत्र सात्मकत्वं च, चेष्टाया असमवायिकारणसंयोगाश्रयत्वे सति शरीरत्वम् । तच्च जीवशरीरे साध्यम्, चेष्टावत्त्वादिति हेतुः । चेष्टाविरहश्च घटादौ प्रत्यक्षसिद्धः । चेष्टाविरहात्तदसमवायिकारणसंयोगविरहोऽपि सुग्रहः, इत्यादि । ( चि० २। पृ० ५८ )

४ अत्र 'यत् सात्मकं न भवति, तत् प्राणादिमन्न भवति; यथा घटः' इति व्यतिरेकव्याप्तिरेवास्ति; न तु 'यत् प्राणादिमत् तत् सात्मकम्' इत्यन्वयव्याप्तिरस्ति; जीवच्छरीरमात्रस्य पक्षीकरणेन दृष्टान्ताभावात् । पक्षातिरिक्ते हेतुसाध्ययोरेवासत्त्वादिति । ( त० कौ० २। पृ० १२ ) ( प्र० प्र० पृ० ६ )

५ लक्षणं च केवलान्वयित्वमेव । तच्च [ क ] अत्यन्ताभावाप्रतियोगित्वम् । ( चि० २। पृ० ४६ ) ( त० दी० ) ( न्या० बो० पृ० १५ ) [ ख ] † वृत्तिमदत्यन्ताभावाप्रतियोगित्वम् । ( चि० २ । पृ० ४७ ) ( मु० ) [ ग ] मणिकारास्तु, वृत्तिमदत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, इत्याहुः । ( म० प्र० पृ० २३ ) ( ल० व० ) [ घ ] अन्योन्याभावप्रतियोगितानवच्छेदकधर्मत्वम् । ( म० प्र० पृ० २३ )

---

* अत्रानुगमश्च–योऽभावो यस्य ( स्या– ) भावस्य व्यापकत्वेन गृहीतः, तदभावाभावेन तस्य व्याप्यस्याभावः पक्षे साध्यते, इति । ( चि० २। पृ० ६३ )

† तदन्वयश्च–वृत्तिमान् योऽत्यन्ताभावः, तदप्रतियोगित्वम्, इति । अत्र, आकाशाभावाभाव-

सः । यथा—“ न तावदव्यभिचरितत्वम् । तद्धि न साध्यवदन्यावृत्तित्वम्; केवलान्वयिन्यभावात्” (चि० २। पृ० २) इत्यादौ अभिधेयत्वम्[1], ज्ञेयत्वम्, प्रमेयत्वम्, वाच्यत्वादि, केवलान्वयि भवति । ( न्या० म० २। पृ० १९ )

**केवलान्वयि**[2]—( लिङ्गम्, अनुमानं वा ) [ क ] अत्यन्ताभावाप्रतियोगिसाध्यकम्[3] । ( दीधि० २। पृ० १९६ ) ( न्या० बो० २। पृ० १९ )

---

१ अत्र अभिधेयत्वम् भगवदिच्छारूपशब्दशक्तिविषयत्वम् । तच्च सर्वत्रैव वर्तते ( तस्य न कुत्राप्यत्यन्ताभावोऽस्ति ); सर्वस्यैव भगवदिच्छाविषयत्वात् । वस्तुपदशक्यत्वात् । एवम्—ज्ञेयत्वम् ज्ञानविषयत्वम् । तच्च सर्वत्रैव वर्तते; सर्वस्यैव भगवज्ज्ञानविषयत्वात् । एवम्—[ १ ] [ क ] प्रमेयत्वम् प्रमाविषयत्वम् । तच्च सर्वत्रैव वर्तते; सर्वस्यैव भगवत्प्रमाविषयत्वात् । ( न्या० म० २। पृ० १९ ) [ ख ] प्रमाजातीयविषयत्वं वा । ( चि० २। पृ० ४७ ) [ २ ] प्रमात्वमेव हि परंपरासंबन्धात् ( स्वाश्रयप्रमाविषयत्वरूपात् ) घटादौ प्रमेयत्वमनुगतम् । ( चि० २। पृ० ४७ )

२ अत्र ‘अन्वयेनैव व्याप्तिर्यस्मिंस्तत्तथा’ इति समासो द्रष्टव्यः । ( सि० च० २। पृ० २६ ) अत्रेदं बोध्यम्—केवलान्वयि तु चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते । चत्वारि रूपाणि च—पक्षधर्मत्वम्, सपक्षे सत्त्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । ( सि० च० ) तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्त्वम् । ( मु० गु० पृ० २१९ ) तस्य विपक्षाभावेन विपक्षव्यावृत्त्यभावादिति भावः । ( सि० च० २। पृ० २७ )

३ एतच्च लक्षणम् [ १ ] हेतोर्व्यतिरेकित्वेऽपि संगच्छते । ( न्या० बो० पृ० १५ ) [ २ ] इदं च लक्षणम् व्याप्तिग्राहकसहचाराभेदाभिप्रायेण । तद्भेदे तु, अन्वयसहचारमात्रगृहीतव्याप्तिकत्वं केवलान्वयित्वम् । तच्च, प्रकृतव्याप्तिग्राहक(का?)ज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वम्; तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वं वा ।

गृहीतव्याप्तिभेदाद्भेदे तु, प्रकृतहेतुकप्रकृतसाध्यानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यव्याप्तित्वकत्वम् तत्त्वम् । ( दीधि० २। पृ० १५६–१५७ )

---

रूपम् ( आकाशात्मकम् ) अत्यन्ताभावमादाय तत्प्रतियोगित्वमेव ( तत्त्वप्रतियोगित्वम् ) आकाशात्यन्ताभावस्येति, आकाशात्यन्ताभावस्य केवलान्वयित्वं न स्यात् । अतस्तत्संपादनार्थं ‘वृत्तिमत्’ इति विशेषणं दत्तम् । तेन, आकाशात्मकस्तादृशात्यन्ताभावो न वृत्तिमान्, इति वृत्तिमदत्यन्ताभावस्तदन्य एवाभावः, तदप्रतियोगित्वसंपत्तिर्भवति, इति । तथा—प्रमेयत्वाभिधेयत्वादीनामपि केवलान्वयित्वमुपपद्यत इति ज्ञेयम् । ( चि० २। पृ० ४७ )

[ ख ] असद्विपक्षम् । यथा—ज्ञेयमभिधेयत्वादित्यादौ[1] । ( चि० २। पृ० ४६ ) ( मु० गु० पृ० २१९ )

[ ग ] अन्वयमात्रव्याप्तिकम्[2] । ( त० स० )

[ घ ] यत्रान्वयव्याप्तिरेवास्ति, तत् । ( त० कौ० २। पृ० ११ ) यथा—घटोऽभिधेयः प्रमेयत्वादित्यत्र[3] प्रमेयत्वं केवलान्वयि । ( त० स० )

**केवलान्वयिहेतुः**—( अवयवः ) अत्यन्ताभावाप्रतियोगिसाध्यसमानाधिकरणपक्षसपक्षसद्धेतुवचनम् । ( चि० २। अव० पृ० ७९ ) यथा—घटोऽभिधेयः प्रमेयत्वादित्यादौ 'प्रमेयत्वात्' इति हेतुपदम् । ( ख० )

**कैवल्यम्**—१ [ १ ] निःश्रेयसवदस्यार्थोऽनुसंधेयः ।

[ २ ] आत्यन्तिकदुःखत्रयविगम इति सांख्याः । ( सां० भा० )

[ ३ ] पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम्, स्वरूपप्रतिष्ठा, चितिशक्तिः, इति योगिन आहुः ।

[ ४ ] अद्वितीयब्रह्मभावापत्तिरिति मायावादिनः । २ एकत्ववदस्यार्थोऽनुसंधेयः । ( ग० शक्ति० )

**कोटिः**—१ संशयजनकज्ञानीयप्रकारतावान् । यथा—" विप्रतिपत्तिवाक्य-(वह्निमान्न वेति)जन्यकोट्युपस्थितिः" इत्यादौ वह्न्यादिः । २ पूर्वपक्षः । ३ त्रिकोणादिक्षेत्रावयवरेखाविशेषः कोटिरिति लीलावतीकारादयः ।

---

१ अत्र, केवलान्वयिनोऽभिधेयत्वस्य न विपक्षः । अभिधानेऽनभिधाने च विपक्षत्वव्याघातात् । ( चि० २। पृ० ४६ )

२ तदर्थश्च—[ क ] व्यतिरेकाप्रतियोगिसाध्यकम् । ( वाक्य० २। पृ० १५ ) [ ख ] व्यतिरेकव्याप्तिशून्यत्वे सत्यन्वयव्याप्तिमत् । ( न्या० बो० २। पृ० १५ )

३ अत्र घटः पक्षः, तस्याभिधेयत्वं साध्यम्, प्रमेयत्वं हेतुः । तस्मिन् ( हेतौ ) 'यत्र यत्र प्रमेयत्वम्, तत्र तत्राभिधेयत्वम्, यथा पटः' इत्यन्वयव्याप्तिरेवास्ति, न तु 'यत्र यत्र साध्याभावः, तत्र तत्र हेत्वभावः' इति व्यतिरेकव्याप्तिरस्ति; अभिधेयत्वस्य प्रमेयत्वस्य च सर्वत्र सत्त्वात्, साध्याभावादेरेवाप्रसिद्धत्वात् । ( त० कौ० २। पृ० ११ ) ( मु० गु० पृ० २१९ )

४ राशिचक्रस्य तृतीयांश इति ज्योतिर्विदः । ५ संख्याविशेष इति गणकाः । ६ प्रकर्षः ; ७ अग्रभागश्चेति काव्यज्ञा वदन्ति ।

**कोटिता**—प्रकारताविशेषः । ( ग० सत्प्र० ) यथा—'वह्निमान्न वा' इति संशये वह्न्यादेः कोटिता । अधिकं तु कोटिशब्दे द्रष्टव्यम् । ( ख० )

**कोपः**—१ [ १ ] [ क ] उत्कटद्वेषः । यथा—चैत्राय[1] कुप्यति, क्रुध्यतीत्यादौ धात्वर्थः । ( श० प्र० श्लो० ६९। पृ० ८७ ) यथा वा—" क्रुध्यन् कुलं धक्ष्यति विप्रवह्निः " ( भट्टिः ) इत्यादौ ।

[ ख ] शाब्दिकास्तु, प्ररूढो वाक्चक्षुरादिविकारानुमेयश्चित्तवृत्तिविशेष इत्याहुः । ( ल० म० ) यथा—" इति क्रुधा कुश्यत तेन केतकम् " ( नैष० ) इत्यादौ ।

[ २ ] कामव्याघातहेतुकश्चित्तवृत्तिविशेष इति कामशास्त्रज्ञाः । [ ३ ] वधाद्यनुकूलश्चित्तवृत्तिविशेषः । यथा—" अपकारिणि चेत्कोपः कोपे कोपः कथं न हि । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि " इत्यादौ, इति नीतिशास्त्रज्ञाः । ( नीतिसा० ) [ ४ ] कामादिजन्यश्चित्तवृत्तिविशेषः । यथा—" रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः । विवेकिनः कुतः कोपः स्वदेहावयवेष्विव " इत्यादौ, इति वेदान्तिनः । २ धातुवैषम्यकारिदोषाणां विकारविशेषः । यथा—" तत्र एते स्वभावत एव दोषाणां संचयप्रकोपशमप्रतीकारहेतवः " ( सुश्रुते ) इत्यादौ, इति भिषजः । ३ शृङ्गाराङ्गं[2] मानः कोपः । यथा—" कोपात्कान्तं परित्यज्य पश्चात्तापसमन्विता " ( प्रतापरु० ) इत्यादौ, इत्यालंकारिका आहुः । ( वाच० )

१ अत्र ( धात्वर्थद्वेषे ) विषयित्वलक्षणं संप्रदानत्वं * चतुर्थ्या बोध्यते । तेन 'चैत्रविषयकोत्कटद्वेषवान्' इत्याकारकस्तत्र बोधः । ( श० प्र० श्लो० ६९। पृ० ८७ )

२ अत्रोच्यते—मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः । द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि । प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ॥ ( सा० द० ) इति ।

* चैत्राय कुप्यतीत्यादौ "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सूत्रेण ( पा० १।४।३७ ) संप्रदानसंज्ञा बोध्या ।

**कोमलत्वम्**–१ स्पर्शविशेषः । यथा–“निशा च शय्या च शशाङ्ककोमला” (नैषध०) इत्यादौ । २ अवयवसंयोगविशेषः । (सि० च०) यथा– “काठिन्य–कोमलत्वादिनानावयवसंयोगविशेषयुक्ता पृथिवी” (त० भा० अर्थ० पृ० २७) इत्यादौ । एवम्-मृदुत्वादिकं व्याख्येयम् ।

**क्त्वा**–(प्रत्ययः) [१] [**क**] पूर्वकालीनत्वम्[१], कर्ता च । (तर्का० ४। पृ० ११) यथा–भुक्त्वा व्रजतीत्यादौ भोजने व्रजनपूर्वकालीनत्वम्[२] क्त्वाप्रत्ययार्थः । (त० प्र० ४। पृ० ७०-७२)

[**ख**] केचित्तु, [१] अव्यवहितपूर्वकालीनत्वमित्याहुः । [२] प्राभाकरास्तु, समानकर्तृकत्वमेव क्त्वाप्रत्ययार्थ इत्याहुः । [३] मणिकृतस्तु, आनन्तर्यमेव तदर्थ[३] इत्याहुः । [४] अन्ये तु, क्वचित् सामानाधिकरण्यविशिष्टव्याप्यत्वमपि[४] क्त्वाऽर्थ इत्याहुः । [५] अपरे तु, आश्रय[५] एव क्त्वाप्रत्ययार्थ इत्याहुः । (त० प्र० ४ । पृ० ७०–७२)

---

१ अत्र पूर्वत्वं च संनिहितक्रियापेक्षया बोध्यम् । (तर्का० ४। पृ० ११)

२ अत्र तत्पूर्वकालीनत्वं (क्रियापूर्वकालीनत्वम्) च तत्प्रागभावकाल–*वृत्तित्वम्; तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं वा । तेन, भुक्त्वा व्रजतीत्यत्र ‘गमनप्रागभावावच्छिन्नकालवृत्तिभोजनकर्त्रभिन्नो व्रजति’ इत्यर्थः । (तर्का० ४। पृ० ११)

३ अत्र, [१]अव्यवधानं च क्रियान्तरानुकूलविलम्बाभाववत्त्वम् । [२]केचित्तु, तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिकालत्वमेव तदव्यवहितपूर्वकालत्वम् । कालश्चात्र यावता कालेन भोजनानन्तरं व्रजनम्, तावान् स्थूलकालोपाधिर्विशिष्य निवेशनीयः । तेन नासंभवः, इत्याहुः । (त० प्र० ख० ४। पृ० ७०)

४ अधीत्य तिष्ठतीत्यत्र निरन्तराध्ययनशालिन्येव तथाप्रयोगात्, अयमर्थ आवश्यकः । अत्र व्याप्तिश्च कालिकी । तथा च ‘अध्ययनसामानाधिकरण्यविशिष्टाध्ययनव्याप्यस्थितिमान्’ इत्यन्वयधीः । (त० प्र० ख० ४। पृ० ७२)

५ अयं भावः–क्त्वाप्रत्ययस्य कृत्प्रत्ययान्तर्गतत्वात् सामान्यशक्त्या आश्रयोपस्थितेः कृत्प्रत्ययेन संभवात्, ‘मुखं व्यादाय स्वपिति’ इत्यादौ (स्वापपूर्वकालीनत्वस्य मुखव्यादानेऽसत्त्वेपि) व्यादानाश्रये स्वापाश्रयत्वस्य ‘विशिष्टे वैशिष्ट्यम्’ इति न्यायेनैव बोधः । (त० प्र० ४ । पृ० ७२)

---

* अत्र, कालस्तात्पर्यवशात् व्यवहिताव्यवहितसाधारणो बोद्धव्यः । तेन, ‘पूर्वस्मिन्नब्दे गत्वाऽस्मिन्नब्दे समागतः’ इत्यत्र तादृशप्रयोगावगमः । (तर्का० ४। पृ० ११)

[ २ ] स्वकर्तृकत्व–स्वोत्तरत्व–एतदुभयसंबन्धेन यत्किंचिद्विशिष्टम् क्त्वाप्रत्ययार्थः । यथा–ओदनं पक्त्वा भुज्यते इत्यादिभावार्थकक्त्वाप्रत्ययस्थले पाकक्रियाविशिष्टा भुजिक्रिया । ( कृष्ण० )

**क्यच्**–( धात्वंशः प्रत्ययः ) इच्छा । यथा–चैत्रः पुत्रीयतीत्यादौ; पुत्रीयति माणवकमित्यादौ च । ( श० प्र० श्लो० १०७। पृ० १६५ ) एवम्–श्येनायते काक इत्यादौ क्यङर्थोऽपि बोध्यः । ( श० प्र० श्लो० १०७। पृ० १६६ )

**क्रमः**–[ १ ] उद्दिष्टानामर्थवशाद्यथावद्ग्रहणम् । यथा–" द्रव्यनिरूपणानन्तरं क्रमेण गुणादिकं निरूप्यते " इत्यादौ । ( स्व० ) [ २ ] अर्थानां नैयत्येन पूर्वापरावस्थानम् । यथा–'उद्देशक्रमेण द्रव्यादिनिरूपणम्' इत्यादौ । [ ३ ] परिपाट्यां यथोचितसंनिवेशः । ( वाच० ) यथा–

---

१ अयं च प्रत्ययो नामप्रकृतिको बोध्यः । ( श० प्र० श्लो० १०७। पृ० १६५ ) एवम्–क्यङपि ।

२ अत्र, क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेः, तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वेनान्वयः । तथा च 'पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयस्त्वाश्चैत्रः' इत्येवमन्वयधीः । ( श० प्र० श्लो० १०७। पृ० १६५) अत्र क्यजन्तस्याकर्मकत्वमेव विज्ञेयम् । ( ग० व्यु० का० २। ख० २। पृ० ६५ )

३ अत्र च, आचारसदृशाचारः क्यजर्थः । तद्विशेषणीभूते आचारे प्रकृत्यर्थस्य, विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः । तेन 'पुत्रकर्मकाचरणसदृशं * यत् माणवककर्मकाचरणम्, तदनुकूलकृतिमान्' इत्याकारकस्तत्र बोधः। ( श० प्र० श्लो० १०७। पृ० १६५ ) अत्रार्थे क्यजन्तस्य सकर्मकत्वं बोध्यम् । ( ग० व्यु० का० २। ख० २। पृ० ६५ ) अधिकं तु 'द्वितीया' शब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्रापि, आचारसदृशाचारः क्यङर्थः । तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात् 'श्येनकर्तृकाचारसदृशाचारवान्काकः' † इत्येवं तत्र बोधः । ( श० प्र० श्लो० १०७। पृ० १६६ )

---

* पुत्रकर्मकाचरणं चेह, अन्नपानादिना संवर्धन-पोषणादि ज्ञेयम् ।

† अत्र श्येनकर्तृकाचारश्च मांसहरणादिर्ग्राह्यः । ( श० प्र० श्लो० १०७। पृ० १६६ )

"शेषशेषिभावे, अधिकृताधिकारे वा सर्वत्र वैदिककर्मणोऽनुष्ठाने[1] पौर्वापर्यरूपक्रमग्रहणम्" (शारी० भा० १।१।२) इत्यादौ ।

**क्रयः**[2]–[क] मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः ।

[ख] स्वत्वजनकं मूल्यदानं वा । यथा–ग्रामं क्रीणातीत्यत्र[3] धात्वर्थः । (श० प्र० श्लो० ७२। पृ० ९६)

[ग] मूल्यदानप्रयुक्तस्वसंबन्धिस्वत्वोत्पादकस्वीकारः । यथा–गां क्रीणातीत्यादौ[4] । (का० व्या० पृ० ९)

[घ] शाब्दिकाः, मूल्यदानपूर्वकस्वीकार इत्याहुः । (ल० म०)

[ङ] केचित्तु, पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वोत्पादनव्यापारः क्रय इत्याहुः । (वाच०)

**क्रिया**—१ [क] धात्वर्थः[5] । स च धातूपनीतफलानुकूलसजातीय–विजातीयव्यापारप्रचयः । (त० प्र० ख० ४। पृ० ९०) यथा–चैत्रस्तण्डुलं पचतीत्यादौ पचनादिर्क्रिया[6] । (ल० म०)

---

१ अत्र, मीमांसकमते कर्मनियामकश्च, श्रुति-अर्थ-पाठ-प्रवृत्ति-काण्ड-मुख्य-भेदेन षड्विधो ज्ञेयः । (जैमि० सू० शाब० भा० ५।१)

२ क्रयस्य स्वत्वहेतुत्वमुक्तं मनुना–[क] "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च," इति । (मनु० १०। श्लो० ११५) [ख] गौतमेनाप्युक्तम्–"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति । (वीरमित्रो० पृ० ५२६) [ग] क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यम् । (वीरमित्रो०)

अत्रेदं बोध्यम्–वैदिककर्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारोऽस्ति, इत्याह जैमिनिः । (जैमि० सू० ३।८।१)

३ अत्र, क्रयफले स्वत्वे ग्रामस्याधेयत्वेनान्वयः । तेन 'ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान्; ग्रामनिष्ठं यत् स्वत्वम्, तदनुकूलमूल्यदाता वा' इति तत्र (क्रमेण) बोधः । (श० प्र० श्लो० ७२। पृ० ९६)

४ अत्र 'गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वानुकूलस्वीकारानुकूलकृतिमान्' इत्यन्वयबोधः, इति संप्रदायः । (का० व्या० पृ० ५)

५ इयं च क्रिया, मतभेदेन फलविशिष्टव्यापाररूपा; फलव्यापारोभयरूपा वा; इत्यन्यदेतत् ।

६ अत्रोच्यते शाब्दिकैः–क्रिया च भावना,* उत्पादयितुर्व्यापाररूपा, साध्यत्वेनाभिधीयमाना, इति । (वाच०)

---

* तथा चोक्तं हरिणा–"व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति । (वाक्यप०)

[ २ ] स्वकर्तृकत्व—स्वोत्तरत्व—एतदुभयसंबन्धेन यत्किंचिद्विशिष्टम् क्त्वा-प्रत्ययार्थः । यथा—ओदनं पक्त्वा भुज्यते इत्यादिभावार्थकक्त्वाप्रत्ययस्थले पाकक्रियाविशिष्टा भुजिक्रिया । ( कृष्ण० )

**क्यच्**[1]—( धात्वंशः प्रत्ययः ) इच्छा । यथा—चैत्रः पुत्रीयतीत्यादौ[2]; पुत्रीयति माणवकमित्यादौ[3] च । ( श० प्र० श्लो० १०७ । पृ० १६९ ) एवम्—श्येनायते काक इत्यादौ क्यङर्थोऽपि बोध्यः[4] । ( श० प्र० श्लो० १०७ । पृ० १६६ )

**क्रमः**—[ १ ] उद्दिष्टानामर्थवशाद्यथावद्ग्रहणम् । यथा—" द्रव्यनिरूपणानन्तरं क्रमेण गुणादिकं निरूप्यते " इत्यादौ । ( स्व० ) [ २ ] अर्थानां नैयत्येन पूर्वापरावस्थानम् । यथा—'उद्देशक्रमेण द्रव्यादिनिरूपणम्' इत्यादौ । [ ३ ] परिपाट्यां यथोचितसंनिवेशः । ( वाच० ) यथा—

१ अयं च प्रत्ययो नामप्रकृतिको बोध्यः । ( श० प्र० श्लो० १०७ । पृ० १६५ ) एवम्—क्यङपि ।

२ अत्र, क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेः, तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वेनान्वयः । तथा च 'पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववांश्चैत्रः' इत्येवमन्वयधीः । ( श० प्र० श्लो० १०७ । पृ० १६५) अत्र क्यजन्तस्याकर्मकत्वमेव विज्ञेयम् । ( ग० व्यु० का० २ । ख० २ । पृ० ६५ )

३ अत्र च, आचारसदृशाचारः क्यजर्थः । तद्विशेषणीभूते आचारे प्रकृत्यर्थस्य, विशेष्यीभूते च माणवकादेः कर्मत्वेनान्वयः । तेन 'पुत्रकर्मकाचरणसदृशं* यत् माणवककर्मकाचरणम्, तदनुकूलकृतिमान्' इत्याकारकस्तत्र बोधः । ( श० प्र० श्लो० १०७ । पृ० १६५ ) अत्रार्थे क्यजन्तस्य सकर्मकत्वं बोध्यम् । ( ग० व्यु० का० २ । ख० २ । पृ० ६५ ) अधिकं तु 'द्वितीया' शब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्रापि, आचारसदृशाचारः क्यङर्थः । तत्र च प्रकृत्यर्थस्य श्येनादेः कर्तृत्वेनैव साकाङ्क्षत्वात् 'श्येनकर्तृकाचारसदृशाचारवान्काकः'† इत्येवं तत्र बोधः । ( श० प्र० श्लो० १०७ । पृ० १६६ )

* पुत्रकर्मकाचरणं चेह, अन्नपानादिना संवर्धन-तोषणादि ज्ञेयम् ।

† अत्र श्येनकर्तृकाचारश्च मांसहरणादिर्ग्राह्यः । ( श० प्र० श्लो० १०७ । पृ० १६६ )

"शेषशेषिभावे, अधिकताधिकारे वा सर्वत्र वैदिककर्मणोऽनुष्ठाने पौर्वापर्यरूपक्रमग्रहणम्" ( शारी० भा० १।१।२ ) इत्यादौ ।

**क्रयः**[2]–[ क ] मूल्यदानजन्यस्वत्वस्य जनकः स्वीकारः ।

[ ख ] स्वत्वजनकं मूल्यदानं वा । यथा–ग्रामं क्रीणातीत्यत्र[3] धात्वर्थः । ( श० प्र० श्लो० ७२। पृ० ९६ )

[ ग ] मूल्यदानप्रयुक्तस्वसंबन्धिस्वत्वोत्पादकस्वीकारः । यथा–गां क्रीणातीत्यादौ[4] । ( का० व्या० पृ० ९ )

[ घ ] शाब्दिकाः, मूल्यदानपूर्वकस्वीकार इत्याहुः । ( ल० म० )

[ ङ ] केचित्तु, पणपूरणादिमूल्यदानेन विक्रेतुः स्वत्वापनयनेन स्वत्वोत्पादनव्यापारः क्रय इत्याहुः । ( वाच० )

**क्रिया**—१ [ क ] धात्वर्थः[5] । स च धातूपनीतफलानुकूलसजातीय–विजातीयव्यापारप्रचयः । ( त० प्र० ख० ४। पृ० ९० ) यथा–चैत्रस्तण्डुलं पचतीत्यादौ पचनादिर्क्रिया[6] । ( ल० म० )

---

१ अत्र, मीमांसकमते कर्मनियामकश्च, श्रुति-अर्थ-पाठ-प्रवृत्ति-काण्ड-मुख्य-भेदेन षड्विधो ज्ञेयः । ( जैमि० सू० शा० भा० ५।१ )

२ क्रयस्य स्वत्वहेतुत्वमुक्तं मनुना–[ क ] "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च," इति । ( मनु० १०। श्लो० ११५ ) [ ख ] गौतमेनाप्युक्तम्–"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति । ( वीरमित्रो० पृ० ५२६ ) [ ग ] क्रयादिरूपागमसहितभोगस्यैव स्वत्वे प्रामाण्यम् । ( वीरमित्रो० )

अत्रेदं बोध्यम्–वैदिककर्माङ्गपरिक्रयादौ प्रायेण यजमानस्यैवाधिकारोऽस्ति, इत्याह जैमिनिः । ( जैमि० सू० ३।८।१ )

३ अत्र, क्रयफले स्वत्वे ग्रामस्याधेयत्वेनान्वयः । तेन 'ग्रामनिष्ठस्य मूल्यदानजन्यस्वत्वस्यानुकूलस्वीकारवान्; ग्रामनिष्ठं यत् स्वत्वम्, तदनुकूलमूल्यदाता वा' इति तत्र ( क्रमेण ) बोधः । ( श० प्र० श्लो० ७२। पृ० ९६ )

४ अत्र 'गोवृत्तिमूल्यदानप्रयुक्तस्वस्वत्वानुकूलस्वीकारानुकूलकृतिमान्' इत्यन्वयबोधः, इति संप्रदायः । ( का० व्या० पृ० ५ )

५ इयं च क्रिया, मतभेदेन फलविशिष्टव्यापाररूपा; फलव्यापारोभयरूपा वा; इत्यन्यदेतत् ।

६ अत्रोच्यते शाब्दिकैः–क्रिया च भावना,* उत्पादयितुर्व्यापाररूपा, साध्यत्वेनाभिधीयमाना, इति । ( वाच० )

---

* तथा चोक्तं हरिणा–"व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति । ( वाक्यप० )

[ ख ] साध्यत्व–साधनत्व–एतदन्यतररूपेण प्रतीयमानोऽर्थः क्रिया, इति शाब्दिका वदन्ति ।

[ ग ] प्रवृत्तिविषयः क्रियेति मीमांसकाः । ( मू० म० १ )

२ चलनात्मकं कर्म । यथा–“ परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ” ( भा० प० श्लो० २९ ) इत्यादौ क्रियाशब्दार्थः कर्म । ३ प्रयोगः । यथा–“ तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ” ( कुमा० ) इत्यादौ । ४ अनुष्ठानम् । यथा–“ यथाक्रमं पुंसवनादिकाः क्रियाः ” ( रघु० स० ३) यथा वा–“आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्, तस्मादनित्यमुच्यते” ( जैमि० सू० १।२।१ ) इत्यादौ । ५ शिक्षा ।

---

१ अत्रोच्यते–क्रिया* द्विविधा । साध्या,† सिद्धा च । तत्र धातुवाच्या क्रिया‡ साध्या, सैवासत्त्वरूपेत्युच्यते । यथा–पचति, करोतीत्यादौ क्रिया साध्या । घञादिप्रत्ययप्रतिपाद्या तु क्रिया सिद्धा । यथा–पाक§ इत्यादि ।

---

* तदुक्तम्–यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ गुणीभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते, इति । ( ल० म० ) ( वै० सा० )

† अत्र, [ क ] साध्यत्वं च निष्पाद्यत्वमेव । केचित्तु, पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वयादियोग्यतावच्छेदकं क्रियान्तराऽऽकाङ्क्षानुत्थापकतावच्छेदकं च यत् वैजात्यम्, तद्रूपं साध्यत्वम् । सिद्धत्वं तु क्रियाऽऽकाङ्क्षोत्थापकतावच्छेदकं यत् वैजात्यम्, तद्रूपम् । यथा–पाक इत्युक्ते अस्ति—भवतीत्यादिक्रियाऽऽकाङ्क्षोत्थानात्सिद्धत्वम् । पचतीत्युक्ते तु तदनुत्थानात्साध्यत्वम्, इत्याहुः । ( ल० म० ) [ ख ] अत्र सिद्धत्वं च यद्धर्मवत्ताज्ञानात् क्रियान्तराऽऽकाङ्क्षोदयः, तादृशज्ञाने प्रकारतयाऽवच्छेदकं यत्, तत् । तद्भिन्नत्वम्; ज्ञाननिष्ठतादृशाऽऽकाङ्क्षोत्थापकत्वाभावावच्छेदकं वा साध्यत्वम् । ( वै० सा० द० ) [ग] सिद्धत्वं वर्तमानध्वंसप्रतियोगित्वम् । तद्भिन्नत्वमसिद्धत्वम् । तत्रासिद्धं च वर्तमानम्, भविष्यच्चेति द्विविधम् । तेन, ‘अपचत्, पक्ष्यति, पचति’ इत्यादौ सर्वत्र साध्यत्वेनासत्त्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढिरनेन दर्शिता, इति ज्ञेयम् । [ घ ] साध्यत्वं लिङ्गसंख्यानन्वयित्वम्; तद्विपरीतं सिद्धत्वम् । ( वाच० )

‡ अत्रोक्तं हरिणा–साध्यत्वेन क्रिया तत्र तिङ्पदै–( तिङन्तपदैर्धातुभिः )रभिधीयते, इति । ( वाक्यप० )

§ अत्रायं विवेकः–पाक इत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाः सिद्धक्रियारूपे घञर्थे विशेषणत्वम्; पचत्यादौ तु नैवम्, इति । ( वाच० )

यथा—"क्रिया हि वस्तूपहिता प्रसीदति" ( रघु० ) इत्यादौ । ६ चिकित्सा । यथा—"क्रियाः ( मोघा इति शेषः ) सर्वा गतायुषः" । ( सुश्रुते० ) इत्यादौ । ७ धात्वर्थो व्यापारमात्रम् । यथा—"तेन तुल्यं क्रिया चेद्वतिः," ( पा० सू० ५।१।११५ ) "क्रियासमभिहारे यङ्" ( पा० सू० ३।१।२२ ) इत्यादौ । ८ धात्वर्थः फलमात्रम् । यथा—"कर्मवत् कर्मणा तुल्यक्रियः" ( पा० सू० ३।१।८७ ) इत्यादौ । ९ श्राद्धम् । यथा—"चतुर्दश्यां क्रियाः कार्या अन्येषां तु विगर्हिताः" ( मरीचि० ) इत्यादौ । ( वाच० )

**क्रियाविशेषणम्**— धात्वर्थसाध्यात्मकक्रियायां शाब्दबोधे विशेषणत्वेन भासमानः पदार्थः । यथा—स्तोकं पचेति, मृदु पचतीत्यादौ स्तोकमृद्वादि विक्लित्त्यादिरूपधात्वर्थविशेषणम् ।

---

१ अत्र 'विशेष्यतेऽनेनेति विशेषणम्' इति व्युत्पत्त्या विशेषणपदं भेदाभेदान्यतरसंबन्धेनान्वयिविशेषणपरम् । तथा च—"आख्यातं सकारकविशेषणम्" इति महाभाष्येण, 'चैत्राभ्यां सुप्यते,' 'देवदत्त! जानीहि' इत्यादौ कारकादीनां चैत्रदेवदत्तादीनां भेदसंबन्धेन * क्रियाविशेषणत्वम् । स्तोकं पचतीत्यादौ तु विक्लित्तिरूपे धात्वर्थफले; 'द्रुतं गच्छति' इत्यादौ धात्वर्थव्यापारे अभेदेन स्तोक—द्रुतादीनां विशेषणत्वम्, इति ज्ञेयम् ।

२ अत्र, साध्यात्मकक्रियाया लिङ्गसंख्यान्वयित्वाभावेन तद्विशेषण—( स्तोकादि- ) वाचकपदस्योत्सर्गत एकवचनक्लीबता । अत एव—स्तोकं पच्यते इत्यादि साधु संगच्छते । घञाद्यन्ते साध्यसिद्धोभयक्रिययोर्धातुप्रत्ययाभ्यां बोधनस्थले तु ( कातन्त्रपरिशिष्टाद्युक्ते 'स्तोकः पाकः' इत्यादौ) धातुबोध्यसाध्यरूपक्रियाविशेषणत्वविवक्षायामेकवचनक्लीबता । घञ्वाच्यसिद्धक्रियान्वयविवक्षायां तु, विशेषणस्य लिङ्गसंख्यान्वयित्वेन तद्विशेषणपदस्य द्विवचनपुंस्त्वादि । अत एव— "संचारो रतिमन्दिरावधि सखीकर्णावधि व्याहृतम्" इति, "आगमो निष्फलस्तत्र भुक्तिस्तोकाऽपि यत्र नो" इति च प्रयोगः संगच्छते, इति शाब्दिकमतम् ।

अत्र केचिन्नैयायिकास्तु, शुद्धधात्वर्थविशेषणत्वविवक्षायां द्वितीयैव; घञाद्यन्तसमुदाय-

---

* अत्रेदं बोध्यम्—भेदसंबन्धेन क्रियायामन्वयिविशेषणे, 'पौनःपुन्येन गच्छति,' 'अतिशयेन पचति,' 'समेनैति,' 'विषमेणैति' इत्यादिषु ( १ ) प्रकृत्यादित्वेन तृतीयेति केचिदाहुः । ( २ ) अन्ये तु, 'नाम्ना शिवः' इत्यादिवत् अभेदे तृतीयेत्याहुः । अत्रायं विवेकः—क्रियायां अभेदसंबन्धेनान्वयविवक्षायाम् "क्रियाविशेषणानां कर्मत्वम्" इत्यनुशासनेन द्वितीया; अभेदप्रकारेणान्वयविवक्षायां तु तृतीया, इति ।

**क्रोडपत्रम्**—१ त्रुटितग्रंथस्य परिपूरणाय ग्रन्थस्थपत्रयोर्मध्ये चिह्नविशेषेण लिखित्वा स्थापितं पत्रम् । (वाच०) २ न्यायादिशास्त्रग्रन्थस्थलक्षणादिपरिष्काराणामूहापोहाभ्यां शङ्कोत्तररूपेण खण्डनमण्डनव्यवस्थापनपत्रम् । यथा—न्यायशास्त्रे चन्द्रनारायणी—दुलाली—कालीशाङ्करी—पत्राणि क्रोडपत्राणि सन्ति । (ख०)

**क्रोधः**—१ [१] (दोषः) नेत्रलौहित्यादिहेतुर्दोषविशेषः । (गौ० वृ० ४।३) [२] [क] ज्ञानविशेषो वा । यथा—पुत्राय क्रुद्ध्यतीत्यादौ धात्वर्थः । (ग० व्यु० का० ४ । पृ० ९६)

[ख] शाब्दिकास्तु, वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः । यथा—हरये क्रुध्यतीत्यादौ क्रुधेरर्थः । (ल० म० सुब० ४। पृ० १०३)

---

विशेषणत्वे तु न द्वितीयाक्लीबतानियमः । अत एव—'स्तोकं पाकः' इति प्रयोगो न साधुः, इत्याहुः । ( ग० व्यु० का० १ । पृ० ७ ) वस्तुतस्तु—"क्रियाविशेषणानां कर्मत्वम्" इत्यत्र क्रियेति पदस्य 'सार्थकप्रत्ययान्तधातूपस्थाप्यार्थः' इत्यर्थपरत्वेन, न कुत्राप्यनुपपत्तिः, इति विशेयम् । ( ग० व्यु० का० १ । पृ० ६ )

अत्रायं विशेषः—स्तोकपक्वेत्यादौ क्रियाविशेषणैः कर्मधारय एव; महाकाशमहाविज्ञ इत्यादौ कनित्यादाविव प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया तथात्वस्य (कर्मधारयत्वस्य) संभवात् । स्तोकं पक्वेत्यादौ असत्त्वादात्म्याविवक्षायां *तत्पुरुषः संभवत्येव ।

'क्रियाविशेषणैः समास एवाव्युत्पन्नः' इति तु न देश्यम्; "स्तोकनम्रा स्तनाभ्याम्" इत्यादेः कालिदासाद्यैः प्रयुक्तत्वात् । ( श० प्र० श्लो० ३८ । पृ० ४८ )

१ अत्र, "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" ( पा० १।४।३७ ) इति सूत्रेण कर्मणः संप्रदानसंज्ञा । तथाच—अत्र विषयित्वं चतुर्थ्यर्थः । तस्य कोपेऽन्वयः । एवम्—पुष्पेभ्यः स्पृहयतीत्यादावप्यन्वयो बोध्यः । ( ग० व्यु० का० ४ । पृ० ९६ )

२ अयं च कोपमूलकः । ( ल० म० सुब० का० ४ । पृ० १०३ )

३ अत्र, 'हरिसंप्रदानकः क्रोधः' इति बोधः । ( ल० म० सुब० का० ४। पृ० १०३ )

---

* अयमाशयः—'यत्राभेदेनान्वयबोधस्तत्र कर्मधारयः; यत्र च भेदेनान्वयबोधस्तत्र तत्पुरुषः' इति मर्यादा । एवं च—प्रकृते तादात्म्यस्याभ्वाच्यत्वेन पदोपस्थापितत्वात् "पदादुपस्थापितस्य प्रकारतयाऽपि भानं संभवति" इति नियमेन अमूवाच्यस्तोकतादात्म्यस्य आश्रयतासंबन्धेन ( स्वरूपसंबन्धेन ) पचनक्रियायामन्वयो वाच्यः । तथा च तादृशसंबन्धस्य भेदसंबन्धत्वात् तत्पुरुषः, इति ।

[ग] केचित्तु, परानिष्टाभिलापेण अनिष्टविषयकद्वेषहेतुकश्चित्तवृत्तिविशेषः । यथा—"क्षमैव क्रोधविजये समर्थेति विवेकिनः । क्रोधः कार्यविभङ्गाय तस्मात्तं क्षमया जयेत्" (शकुनशा०) इत्यादौ । यथा वा—"क्रोधं विभो! संहर संहर" इत्यादौ, (कुमार०) इत्याहुः ।

[घ] रौद्ररसस्य स्थायिभावः क्रोध इत्यालंकारिका आहुः ।

[ङ] सांख्यास्तु, काम एव कुतश्चित्पराहतः क्रोधरूपेण परिणमते; स च रजोगुणकार्यः । यथा—"सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते" (गीता) इत्यादौ, इति मन्यन्ते । २ पष्टिवर्षान्तर्गतोऽष्टत्रिंशत्तमो वर्षविशेषः । यथा—"विषमस्थं जगत्सर्वं व्याकुलं समुदाहृतम् । जनानां जायते भद्रे! क्रोधे क्रोधः परस्परम्," इति पौराणिका आहुः । (वाच०)

**क्लेदः**—१ [क] जलविशेषः । (गौ० वृ० ३।३१)

[ख] क्षरणम् । (दि० १ । पृ० ७०)

[ग] जलविकारविशेषः—यथा—"तदञ्जनक्लेदसमाकुलाक्षम्" इत्यादौ । (वाच०) २ जलविशिष्टपृथिवी । (गौ० वृ० ३।३१)

**क्षणः**—१ (कालः) [क] वर्तमानार्थग्राहित्वेन स्वोत्पत्त्याश्रयः क्षणः । (मू० म० १)

---

१ स्वेद इति यावत् । ( दि० १ । पृ० ७० )

२ अत्रोक्तं याज्ञवल्क्येन—"रसात्तु रसनं शैत्यं स्नेहं क्लेदं समार्दवम्" इति । (अ० ३।श्लो० ७७) अत्रेदं बोध्यम्—देहस्थः क्लेदः श्लेष्मकार्यः । अत्रोक्तं भावप्रकाशे—"कफस्यैतानि नामानि क्लेदनश्चावलम्बनः । रसनः स्नेहनश्चापि श्लेष्मणः स्थानभेदतः," इति । ( वाच० )

३ तल्लक्षणं तु क्षणत्वमेव । तच्च [ क ] स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वम् । [ ख ] स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वम् । [ ग ] स्ववृत्तियावद्ध्वंसविशिष्टसमयत्वम् । [ घ ] स्ववृत्तियावदभावविशिष्टसमयत्वम् । [ ङ ] स्वस्वपूर्व-* वर्तियावत्पदार्थविशिष्टसमयत्वं वा । ( दीधि ०२ ) ( प० मा० ) [ च ] स्ववृत्तियावद्ध्वंसविशिष्टत्वम् । ( ग० सार्वभौमपक्षता० )

---

* स्वपूर्वत्वं च स्वाधिकरणयावत्कालवृत्तिध्वंसप्रतियोगित्वम् । जन्यमात्रस्य कालोपाधित्वाददोषः । ( दीधि०२ )

[ख] स्ववृत्ति[1]ध्वंसप्रतियोगिकाला[2]वृत्तित्वविशिष्टस्ववृत्तित्व[3]वान् ।

[ग] स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयः[4] । (दि० १। २ । पृ० ९२–९३)

[घ] स्वाधेयपदार्थप्रागभावानाधारः समयः । (आत्मत० शिरोम०)

[ङ] [१] निमेषक्रियावच्छिन्नकालस्य चतुर्थभागः क्षणः ।(चि० ४) यथा—"क्षणादिः स्यादुपाधितः" (भा० प० श्लो० ४७) इत्यादौ । [२] त्रिंशत्कलारूपः कालांशः । यथा—"स्थिताः क्षणं पक्ष्मसु ताडिताधराः" (कुमा०) इत्यादौ । [३] अवसरः । यथा—"स्थानं नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः । तेन नारद! नारीणां सतीत्वमुपजायते" इत्यादौ । [४] प्रशस्तमुहूर्तः; नाडीद्वयात्मको मुहूर्तरूपः कालांशश्च, इति मौहूर्तिका आहुः । २ उत्सवः । यथा—"गार्हस्थ्यमुचितं त्वेकं शूद्रस्य क्षणमाचरेत्" (ब्रह्मपु०) इत्यादौ । ३ मध्यभागः; ४ पराधीनत्वं चेति काव्यज्ञा आहुः । (वाच०)

**क्षणिकत्वम्**—[१] तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । (मु० १। पृ० ९९) यथा—"अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते" (भा० प० श्लो० १७) इत्यादौ योग्यविभुविशेषगुणानां[5] ज्ञानादीनां (अपेक्षाबुद्धिव्यतिरि-

१ अत्र स्वपदद्वयम्, यत्समयवृत्तित्वमुत्पत्तित्वेनाभिमतं तत्समयव्यक्तिपरम् । ( राम० १ । काल० पृ० ९२ )

२ कालावृत्तित्वम्, तादृशकालवृत्तित्वसामान्याभावः । ( राम० १ । काल० पृ० ९२)

३ इदं च 'महाप्रलये क्षणव्यवहारो नास्ति' इत्यभिप्रेत्योक्तम् । इदं च महाप्रलयोत्पत्तिक्षणे (उत्पत्तौ) संभवति । ( दि० १ । काल० पृ० ९३ ) यद्यपीदं लक्षणम्, उत्पत्तिशब्दव्याख्यानावसरे एव संपादनीयम्; संपादितं च तत्रैव; तथापि क्षणव्यवहारप्रसङ्गेऽपेक्षितमिति पुनरत्र गृह्यते ।

४ तादृशसमयः चरमध्वंस एवेति भावः । ( दि० १ । काल० पृ० ९२ ) अयं क्षणो महाप्रलयव्यवहारविषयो भवतीति ज्ञेयम् ।

५ अत्र च 'योग्यविभुविशेषगुणानां* स्वोत्तरवृत्तिविशेषगुणनाश्यत्वम्' इति नियमोऽनुसंधेयः। तथा च—'प्रथमक्षणे उत्पद्यन्, द्वितीयक्षणे तिष्ठति, तृतीयक्षणे नश्यति' इति तात्पर्यम् ।

* अत्र, स्वं नाश्यम्; तदुत्तरवृत्तिः तद्द्वितीयक्षणवृत्तिरित्यर्थः । ( दि० १। पृ० ५९ )

क्तानाम्) क्षणिकत्वम्। (मु० १। पृ० ९९) [२] [क] स्वाधिकरणसमयप्रागभावाधिकरणक्षणानुत्पत्तिकत्वे सति, कादाचित्कत्वम् उत्पत्तिमत्त्वं वा। [ख] स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वम्; इति न्यायः। (आत्मत० शिरो०) (वाच०) [३] बौद्धास्तु द्वितीयक्षणोत्पन्नध्वंसप्रतियोगित्वम् क्षणिकत्वम्, इत्याहुः। अधिकं च उत्पत्तिशब्दव्याख्यानावसरे संपादितम्। (स्व०)

**क्षेमः**—१ [क] सिद्धस्य रक्षणम्। (दि० गु०) [ख] लब्धस्य रक्षणम्। (आ० त०) (रघु०) यथा—"उपेयादीश्वरं चैव योगक्षेमार्थसिद्धये" (याज्ञ०) इत्यादौ। २ विद्यमानसत्ताकस्य वस्तुनः स्वाधिकरणे स्वविशिष्टबुद्धिनियामकसंबन्धविशेषव्यवस्थापनम्। यथा—दुःखात्यन्ताभावस्य मोक्षत्ववादिमतेऽत्यन्ताभावस्याजन्यत्वेऽपि, स्वप्रतियोगिदुःखानुत्पादनद्वारा स्वाधिकरणे स्वविशिष्टबुद्धिनियामकदुःखाकालीनस्वरूपसबन्धनिर्वाहकत्वं तत्त्वज्ञानस्येति, दुःखात्यन्ताभावस्य क्षैमिकी (क्षेमनिर्वाह्या) तत्त्वज्ञानसाध्यता। यथा वा कृतिसाध्यत्वस्य विध्यर्थत्वमते, "एकादश्यामुपवसेत्" इत्यादौ अहोरात्रभोजनाभावस्य क्षैमिकं (क्षेमनिर्वाह्यम्) कृतिसाध्यत्वम्, इति। (वाच०) ३ कुशलमिति काव्यज्ञा वदन्ति।

---

१ तन्मते सर्वेषां भावानां क्षणिकत्वम्। तच्च, नीलादिक्षणानां सत्त्वेनानुमातव्यम्। तद्यथा—'यत् सत्, * तत् क्षणिकम् यथा जलधरपटलम्; सन्तश्चामी भावाः' इति। (सर्व० बौद्ध० पृ० ९)

* अत्र सत्त्वं च अर्थक्रियाकारित्वम्, इति ज्ञेयम्। (सर्व० बौद्ध० पृ० ९)

## ख.

**खञ्जः**—सहजसंस्थानशून्यचरणवान् । यथा—पादेन खञ्ज इत्यत्र । श० प्र० श्लो० ९२। पृ० ११८)

**खण्डप्रलयः**—(प्रलयः) [ १ ] [ क ] कार्यद्रव्यानधिकरणकार्याधिकरणकालः । ( न्या० म० ४) (दि० ४)

[ ख ] जन्यद्रव्यानधिकरणद्रव्यप्रागभावाधिकरणकालः ।

[ ग ] सर्वकार्यद्रव्यध्वंसः । (त० दी० १। पृ० १०) यथा—युगप्रलयः । (ख०) [ २ ] चतुर्युगसहस्ररूपब्राह्मदिनावसाने भूम्यादिखण्डलयाधारः कालविशेषः । (वाच०)

**ख्यातिः**—१ ज्ञानम् । (मल्लि० मा० टी० ४।९१) यथा—(१) "ख्यातिं च सत्त्वपुरुषान्यतयाऽधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरो-

---

१ तल्लक्षणं च भावप्रकाशे उक्तम्, यथा—"वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेत् यदा । खञ्जस्तदा भवेज्जन्तुः; पङ्गुः सक्थ्नोर्द्वयोर्वधात्" इति । तदर्थश्च—सक्थ्नः कट्यादिगुल्फस्य, कण्डरां कक्षास्नायुम्, आक्षिपेत् गमनादौ कम्पयेत्, वधात् गमनादिक्रियाघातात्, इति । तथा च—एकपादविकलत्वे खञ्जः; द्विपादविकलत्वे पङ्गुरिति भेदः । तस्यैव भेदः कलापखञ्जः, * इति ।

२ अत्र, 'विकृतपादवृत्तित्वविशिष्टं यत् सहजसंस्थानशून्यत्वम्, तद्वच्चरणवान् ;' 'चरणविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याश्रयीभूतचरणवान्' इति वा बोधः । एवम्—श्रोत्रेण बधिरः, कायेन वामनः, इत्यादावप्युक्तैव रीतिः । ( श० प्र० श्लो० ९२। पृ० ११८ )

३ अयमेवावान्तरप्रलय इत्युच्यते । खण्डप्रलयाङ्गीकारे प्रमाणं वेदः—"धाता यथापूर्वमकल्पयत्" इति । (त० दी०१। पृ० १० ) ( त० प्र० ख० ४। पृ० १८ )

४ खण्डप्रलयप्रकारस्तु, "दिव्यं द्वादशसाहस्रं यदेतद्युगमुच्यते । तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ एतच्चतुर्दशगुणमहर्ब्राह्ममिहोच्यते" ( हरिवंशे, अध्या० १९८–१९९ ) इत्यादिनोक्तः; स च तस्मादेवावगन्तव्यः ।

५ तदुक्तं सिद्धान्तशिरोमणौ—"वृद्धिर्विधेरह्नि भुवः समन्तात् स्याद्योजनं भूभवभूतपूर्वैः । ब्राह्मे लये योजनमात्रवृद्धेर्नाशो भुवः प्राकृतिकेऽखिलायाः" इति ।

---

* तल्लक्षणं च—"कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते । कलापखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम्" इति । ( वाच० )

द्रुम्" (माघः स० ४। श्लो० ९९) इत्यादौ । यथा वा–(२) योगिनस्तु, "विवेकख्यातिरविप्लवा हानोपायः" (पात० सू० पाद० २। सू० २६), "प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः" (पात० सू० ४।२८) इत्यादौ विवेकख्यातिः, इत्याहुः । २ प्रशंसा; ३ प्रसिद्धिः; ४ कथनं चेति काव्यज्ञा आहुः । (वाच०) तत्र ज्ञानात्मिका ख्यातिः [ १ ] त्रिविधा । असत्ख्यातिः, अन्यथाख्यातिः, उभयख्यातिश्चेति । आद्या तु स्वयमूह्या । द्वितीया, 'इदं रजतम्' इत्यादौ रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वविशिष्टख्यातिः। तृतीया, शुक्तिविशेष्यकरजतत्वप्रकारकख्यातिः । (मू० म० १) [२] षड्विधा ख्यातिरित्यन्ये मन्यन्ते । [३] ख्यातेश्चतस्रो विधा अपि वर्णयन्ति । अख्यातिः, अन्यथाख्यातिः, आत्मख्यातिः, असत्ख्यातिश्चेति । तत्राख्यातिवादिमते, 'इदं रजतम्' इत्यादौ चक्षुराद्यसंनिकर्षात् पारिशेष्यात् रजतं स्मर्यते; नतु ज्ञायते इति तस्य स्मरणस्याख्यातित्वम्, इति ॥ अन्यथाख्यातिवादिनैयायिकमते, देशकालान्तरगतं हि रजतं शुक्तिसंप्रयुक्तेन दोषोपहितेनेन्द्रियेण शुक्त्यात्मना गृह्यते । नचैवमननुभूतस्यापि ग्रहणप्रसङ्गः; 'सादृश्यादेर्नियामकत्वात्, इति ॥ आत्मख्यातिवादिबौद्धमते, सर्वासां बुद्धीनां विषयमन्तरेणापि तदाकारोल्लेखसंभवेन रजतज्ञानमपि बुद्धिरूपतया न विषयान्तरमपेक्षते इत्या-

---

१ साच शशविषाणकूर्मरोमादिविषयकख्यातिः, इति । अत्र, शशविषाणादि न 'तुच्छम्' इति मध्वमते जेगीयते, इति विज्ञेयम् ।

२ अन्यथाख्यातौ तावत्संप्रदायसिद्धा विप्रतिपत्तयः–(१) 'अरजतं रजतत्वप्रकारज्ञानविषयो न वा' इति; (२) 'रजतज्ञानं अरजतविषयं नवा' इति; (३) 'अरजतं रजतत्वप्रकारकविषयताश्रयो न वा' इति; (४) 'रजतत्वप्रकारिका विषयता अरजतनिष्ठा नवा' इति; (५) 'ज्ञानं स्वविषयताव्यधिकरणप्रकारकं न वा' इति; (६) 'इदं ज्ञानं व्यधिकरणप्रकारावच्छिन्नविषयताकं न वा' इति; (७) 'ज्ञानं विशिष्टज्ञानत्वेन प्रवृत्तिजनकं न वा' इति च। अत्र, सिद्धान्तसिद्धा विप्रतिपत्तयस्तु–(१) 'रजतत्वावच्छिन्ना कार्यज्ञानविषयता रजतनिष्ठात्यन्ताभावप्रतियोगिनी न वा' इति; (२) 'रजतत्वप्रकारिका विषयता रजतनिष्ठा न वा' इति; (३) 'ज्ञानत्वं यथार्थत्वव्याप्यं न वा' इति; (४) 'ज्ञानविषयत्वं स्वकाल–(स्वप्रकाराल–)न्ताभावसमानाधिकरणं न वा' इति; । (न्या० सि० दी० पृ० ७७)

त्मनो बुद्धेरेव ख्यातिः प्रतिभासः, इति ॥ असत्ख्यातिवादिनो वेदान्तिनः (मायावादिनः; द्वैतवादिनश्च) । तन्मते (मायावादिमते ) 'इदं रजतम्' इति ज्ञानं स्मृतिग्रहणाभ्यामन्यत् अध्यासनामकं ज्ञानम, यत्रासतोऽनिर्वचनीयस्य उत्पन्नस्य रजतादेर्भानम् । ईदृशं ज्ञानमसत्ख्यातिपदवेदनीयमस्ति, इति । (वाच०) तत्र द्वैतवादिनां (श्रीमध्वाचार्याणाम्) सिद्धान्ते तु, तत्र शुक्तिकादौ प्रतीतस्य रजतादेः 'असदेवेदं (रजतम्) प्रत्यभात्' इत्यादिना बाधोत्तरकालमसत्त्वानुभवात् असता च संबन्धायोगात, न शुक्तिरूप्यादिना दृक्संबन्धः; किंतु–शुक्तिकादिसंनिकृष्टमेवेन्द्रियं दोषवशात् शुक्तिं अत्यन्तासद्रजतात्मनाऽवगाहते, इति ॥ (मध्वविजयटीका, स० ५। श्लो० ६ । ) केचित्सौगता अपि असत्ख्यातिवादिनः । तद्यथा–'शशशृङ्गम्' इति ज्ञानमसत्ख्यातिः । (म० प्र० पृ०१८)

## ग.

**गतिः**–१ गमनम् । यथा–"सूत्रस्येवास्ति मे गतिः" ( रघु० ) "प्रणयातिभूमिमगमयत् गतिभिः" ( माघः ) इत्यादौ । २ ज्ञानम् । यथा–"इत्यर्थो गम्यते मया" इत्यादौ । ३ परिणामः; ४ प्रमाणम; ५ सरणिः; ६ स्थानम्; ७ स्वरूपम्; ८ विषयः; ९ अभ्युपायश्च; इति काव्यज्ञा आहुः । १० नाडीव्रणमिति भिषजः। ११ प्रादयो द्वादश शब्दविशेषा इति शाब्दिका, आहुः । ( वाच० )

**गन्धः**–( गुणः ) [ क ] घ्राणग्रहणो योऽर्थः, सः । ( वै० उ० ३।१।१ )

१ अत्रार्थे गतित्वं च उत्क्षेपणादिभिन्नत्वे सति, उत्तरदेशसंयोगानुकूलक्रियात्वम् । (राम० १। पृ० ३४)

२ अत्रार्थे 'ये गत्यर्थका धातवः, ते ज्ञानार्थकाः' इति वैयाकरणानां नियमोऽनुसंधेयः ।

३ स च पृथिवीमात्रवृत्तिः; ( त० सं० ) बाह्यैकेन्द्रियग्राह्यश्च । ( वै० उ० ३।१।१ ) गन्धलक्षणं च गन्धत्वमेव । तच्च [ क ] घ्राणमात्रग्राह्यगुणत्वव्याप्यजातिमत्त्वम् । [ ख ] पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्या च या जातिः ( गन्धत्वम् ), तादृशजातिमत्त्वम् । ( वै० उ० ३।१।१ ) ( ७।१।६ )

[ ख ] घ्राणमात्रग्राह्यो गुणः । ( वै० उ० ७।१।६ )

[ ग ] घ्राणमात्रग्राह्यजातिमान् । ( त० कौ० १। पृ० ४ ) यथा—"वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः" (मनु०) इत्यादौ । यथा वा—पृथिवी गन्धवतीत्यादौ । ( त० सं० ) स च गन्धो द्विविधः । सुरभिः, असुरभिश्च । द्विविधोऽपि गन्धः पृथिव्यामेवास्ति; स च पाकजः, अनित्यश्च । (त० कौ० १। पृ० ४) जलादौ तु उपाधिकृतो गन्धः । उत्कटानुत्कटभेदेनापि गन्धो द्विविधः । तत्र कस्तूर्यादावुत्कटः । पाषाणादौ त्वनुत्कटः । तत्रोत्कटगन्ध एवोपलभ्यते; न त्वनुत्कटः, इति । एवम्—रसादयो ज्ञेयाः । अन्ये तु, गन्धो दशविधः, इत्याहुः ।

**गमकत्वम्**—नित्यसाकाङ्क्षत्वम् । यथा—चैत्रस्य गुरुकुलम्, मैत्रस्य दासभार्येत्यादौ गमकत्वात्समासः, इति । ( ख० ) यथा वा—काकतालीयमित्यत्र गमकत्वाद्वृत्तिः संपद्यते, इति । (कुवलया०)

**गमकम्**—१ गतिप्रयोजकम्; बोधकं वा । यथा—"सापेक्षत्वेऽपि गमकत्वात्समासः" ( महाभाष्य० ) इत्यादौ । यथा वा—"यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः" ( मालतीमा० ) इत्यादौ । २ स्वरविशेषे इति गायका आहुः ।

---

१ अत्र मात्रपदप्रयोजनं चिन्त्यम् ।

२ तत्प्रक्रिया तु ( वै० ७।१।६ ) तत्र द्रष्टव्या ।

३ शास्त्रान्तरे गन्धस्य दशविधत्वं यथा—"इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा । निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥ एवं दशविधो ज्ञेयः पार्थिवो गन्ध इष्यते" इति । तत्रेष्टः १ कस्तूरिकादौ । अनिष्टो २ विष्ठादौ । मधुरो ३ मधुपुष्पादौ । कटुः ४ मरिचादौ । निर्हारी ५ हिङ्ग्वादौ । संहतः ( चित्रगन्धः ) ६ अनेककल्कद्रव्यादौ । स्निग्धः ७ मल्लस्तप्रघृतादौ । रूक्षः ८ सार्षपतैलादौ । विशदः ९ शाल्यादौ । अम्लः १० निन्तिड्यादौ; इति । ( आश्व० अ० ५० ) ( वाच० )

४ एकदेशान्वयस्य शास्त्रे निषिद्धत्वेऽप्यत्र नित्यसाकाङ्क्षत्वेन चैत्रपदार्थस्य गुरुत्वे, मैत्रपदार्थस्य च दासत्वे, निरूपितत्वसंबन्धेनान्वयः सर्वैरुपगम्यत इति समासः संपद्यत इति बोध्यम् ।

५ तत्रोक्तम्—"गमकः स्वश्रुतिस्थानस्थानां श्रुत्यन्तराश्रयात् । स्वरो यो मूर्छनामेति गमकः स इहोच्यते ॥ कम्पितः स्फुरितो लीनो भिन्नः स्थविर एव च । आहतान्दोलितौ चेति गमकाः सप्त कीर्तिताः" इति ॥ ( संगी० दा० ) ( वाच० )

**गमनम्**–( कर्म ) [ १ ] [ क ] गमनत्वजातिमत् । (वै० उ० १।१।७ ) ( त० कौ० )

[ ख ] उत्क्षेपणादिचतुष्टयभिन्नत्वे[1] सति कर्मत्ववत् । (वै० उ० १।१।७) तच्च, [ क ] स्वाश्रयसंयोगविभागासमवायिकारणक्रियाविशेषः । (वाच०) [ ख ] उत्तरदेशसंयोगजनकक्रिया । ( ल० व० ) यथा–ग्रामं गच्छतीत्यादौ संयोगावच्छिन्न[2]स्पन्दो गच्छत्यर्थः । ( ग० व्यु० २ ) [२] विजिगीषोर्जिगमिषोर्वा प्रयाणम् गमनमिति काव्यज्ञा वदन्ति ।

**गर्तः**–रूपादिमद्भिः सावयवारब्धकार्यैर्मध्यशून्यैः संस्थानविशेषोपहितमाकाशम् । ( न्या० वा० १।१।१४ । पृ० ८१ )

**गर्वः**–१ अभिमानः । २ अवज्ञाविशेषः[3] । ३ व्यभिचारिभावः[4], इत्यालंकारिका वदन्ति । ( वाच० )

**गानम्**–१ स्वरविशेषेण निष्पाद्यः ( परिणतः ) शब्दविशेषः । २ गीतिः । सा च, आभ्यन्तरयत्नजनितस्वरविशेषाणामभिव्यञ्जिका क्रिया । यथा–सामगानम् । गानं हि द्विविधम् । लौकिकम्, वैदिकं[5] च ।

---

१ अत्रेदं बोध्यम्—उत्क्षेपणादिसर्वकर्मसु यदि गमनव्यवहारस्तदा गमनस्य पृथगभिधानम् भ्रमणरेचनस्पन्दनोर्ध्वज्वलनोन्नमनादीनां भिन्नभिन्नबुद्धिव्यपदेशभाजामेकेन शब्देन संग्रहार्थम् । यद्वा गमनत्वमपि कर्मत्वव्याप्या पञ्चमी जातिरेव । तेन, भ्रमणरेचनादिष्वेव गमनप्रयोगो मुख्यः; उत्क्षेपणावक्षेपणादिषु यदि गमनप्रयोगस्तदा भाक्तः । स्वाश्रयसंयोगविभागासमवायिकारणत्वमेव गौण-मुख्यसाधारणो धर्मः । गमनत्वजातिस्तु अनियतदिग्देशसंयोगविभागासमवायिकारणत्वमेव व्यञ्जकम् । तच्च भ्रमणादिषु सर्वत्रेति गमनग्रहणेनैव तेषां ग्रहणमिति । ( वै० उ० १। १। ७ )

२ एवं सर्वसकर्मकधातूनामर्थाः स्वयमूह्याः । ( ग० व्यु० २ )

३ तत्रोक्तम्—"ऐश्वर्य–रूप–तारुण्य–कुल–विद्या–बलैरपि । इष्टलाभादिनाऽन्येषामवज्ञा गर्व ईरितः" इति । "गर्वो मदः प्रभाव–श्री–विद्या–सत्कुलतादिजः" इति च । (वाच०)

४ अत्रोच्यते–"अवज्ञासविलासाङ्गदर्शनाविनयादिकृत्" इति । ( वाच० )

५ तत्र वैदिकलक्षणम् ( जैमिनिसूत्र० ९।२।२९ ) अत्रत्यभाष्ये प्रतिपादितम्, तत् तत्र द्रष्टव्यम् । लौकिकं तु, "धातुमात्रासमायुक्तं गीतमित्युच्यते बुधैः । तत्र नादात्मको धातुर्मात्रा ह्यक्षरसंचयः ॥ गीतं च द्विविधं प्रोक्तं यन्त्रगात्रविभागतः । यन्त्रं स्याद्वेणुवीणादि, गात्रं तु मुखजं मतम् ॥ पुनर्गीतं निबन्धानिबन्धभेदेन द्विविधम् । तत्र निबन्धम् तालमानरसाश्रितम् । अनिबन्धं तु, वर्णादिनियमशून्यम्" इत्यादि । (संगीत० दा०) (वाच०)

**गीतम्**—१ छान्दस—हार्द—एतदन्यतरस्वरेण गुणकीर्तनम् । यथा—ध्रुवकादि गानम् । ( स्व० ) २ गान्धर्वशास्त्रसमयानुसारेण महेश्वरसंबन्धिगुणधर्मादिनिमित्तानां चिन्तनमिति नकुलीशाचार्यो वक्ति । ( सर्व० नकु० पृ० ७८ ) अधिकं तु गानशब्दव्याख्यानावसरे संपादितम् ।

**गुणः**—१ प्रमाऽसाधारणंकारणम् । यथा—“प्रमाया गुणजन्यत्वम् उत्पत्तौ परतस्त्वम्” इत्यादौ—प्रत्यक्षे विशेषणवद्विशेष्यसंनिकर्षो गुणः; ( भा० प० गु० श्लो० १३२—१३५ ) अनुमितौ च व्यापकवति व्याप्यज्ञानं ( यथार्थपरामर्शः ) गुणः । (त० दी० प्रामा० प० ३७ ) (चि० १। प्रामा० ) २ [ १ ] अप्रधानम । यथा—“षष्ठीं कुर्यात्तदा गुणे,” “तद्गुणसंविज्ञानबहुव्रीहिः” इत्यादौ, इति; [ २ ] वस्तुधर्मो गुण इति च वैयाकरणादय आहुः । ३ अङ्गम् । यथा—गुणवाद इत्यादौ । यथा वा—दध्ना जुहोतीत्यादौ प्रधाने ( यागादौ ) आधेयविशेषो ( दध्यादिः ) गुण इति मीमांसकाः । ४ रूपादयश्चतुर्विंशतिर्गुणा इति वैशेषिका नैयायिकाश्च आहुः । ५ अकारः, एकारः, ओकारश्चैते त्रयो गुणा इति शाब्दिकाः संगिरन्ते । ६ सत्त्वम, रजः, तमश्चैते ( ते च द्रव्यात्मकाः) त्रयो गुणा इति सांख्याः । ७ ज्ञानानन्दादयोऽपि गुणा इति वेदान्तिनः । ८ शम—दम—तितिक्षादयो गुणा इति योगिनः । ९ शौर्यादयो गुणा इति व्यवहारज्ञाः। १० संधि—विग्रहादयः षट् गुणा इति नीतिशास्त्रज्ञाः । ११ श्लेषादयो दश; माधुर्यौजःप्रसादा इति त्रयो वा गुणा इत्यालंकारिकाः । १२ अकार्पण्यास्पृहत्वादय इति धर्मज्ञाः । १३ देशकालज्ञतादयश्चतुर्दश गुणा इति पौराणिकाः । १४ उष्णाद्यष्टविधं वीर्यं गुण इति भिषजः । १५ विशेषणमिति भर्तृहरिः । १६ उत्कर्षः । १७ इन्द्रियम्, इत्यपरे । १८ आवृत्तिरिति तान्त्रिकाः ।

---

१ प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः । तेन, ज्ञानमात्रहेतुभूतात्ममनःसंयोगादेः, भ्रमजनकपित्तादिदोषाणां, च व्युदासः । ( नील० प्रामा० पृ० ३४—३५ )

१९ रज्जुः । २० सूपकारः । २१ त्यागश्चेति काव्यज्ञाः । २२ दोषान्यधर्मो गुण इत्यन्ये, आहुः । ( वाच० )

**गुणः**–( पदार्थः ) [ १ ] [ क ] द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम् । ( वै० १।१।१६ )

[ **ख** ] सामान्यवानसमवायिकारणमस्पन्दात्मा । ( त० भा० अर्थनि० पृ० ३२ )

[ **ग** ] द्रव्यकर्मभिन्नत्वे सति सामान्यवान् ।

[ **घ** ] गुणत्वरूपजातिमान् ।( त० दी० १ । प० ६ ) (त० कौ० १। पृ० १ ) [ २ ] सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ( वस्तुधर्मः ), इति शाब्दिका वदन्ति । न्यायनये गुणाश्चतुर्विंशतिः । रूपम्, रसः, गन्धः, स्पर्शः, संख्या, परि-

---

१ तल्लक्षणं च गुणत्वमेव । तच्चात्र, [ क] समवायिकारणावृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम् । [ ख ] कार्यासमानाधिकरणकर्मावृत्तिजातिमत्त्वं वा, इत्यादि । ( वै० उ० ७। १।१। पृ० २८१ ) [ग] समवायिकारणासमवायिकारणभिन्न–*समवेत-सत्तासाक्षाद्व्याप्यजातिः । ( सर्व० औलू० पृ० १०५ ) [घ] द्रव्येतरवृत्तितानवच्छेदक–द्रव्यसामान्यवृत्तितावच्छेदक–पदार्थविभाजकोपाधिमत्त्वम् । ( वाक्य० १ । पृ० २ ) [ ङ ] द्रव्यावृत्तिनित्यवृत्तिजातिमत्त्वम् । (ल० व० पृ० ४) [च] द्रव्यत्वव्यापकतानवच्छेदक–सत्तान्यजातिमत्त्वम् । ( मु० गु० पृ० १९१ )

२ अत्रेदं बोध्यम्—रूपम्, रसः, गन्धः, स्पर्शः, परत्वम्, अपरत्वम्, गुरुत्वम्, द्रवत्वम्, स्नेहः, वेगः, स्थितिस्थापकः, एते मूर्तगुणा इत्युच्यन्ते । बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः, भावना, शब्दः, एतेऽमूर्तगुणाः । संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, एते गुणाः मूर्तामूर्तगुणाः । संयोगः, विभागः, द्वित्वादिकाः संख्याः, द्विपृथक्त्वादयः, एतेऽनेकाश्रिता गुणाः । तद्भिन्नाः शिष्टास्त्वेकैकवृत्तयः । बुद्ध्याद्यष्टकम् (बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः) रूपम्, रसः, गन्धः, स्पर्शः, स्नेहः, सांसिद्धिकद्रवत्वम्, भावना, शब्दः, एते विशेषगुणाः । संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, नैमित्तिकद्रवत्वम्, गुरुत्वम्, वेगः, एते सामान्यगुणाः । संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम् अपरत्वम्, द्रव-

---

* ते च (भिन्नाश्च) आत्मविशेषगुणाः (बुद्धि–सुख–दुःख–इच्छा–द्वेष–प्रयत्न–धर्म–अधर्म–भावनाः ) भवन्तीति विज्ञेयम् । एतेषामसमवायिकारणत्वं नैयायिका न स्वीकुर्वन्ति ।

माणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, गुरुत्वम्, द्रवत्वम्, स्नेहः, शब्दः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अ-

---

त्वम्, स्नेहः, एते द्वीन्द्रियग्राह्यगुणाः । रूपम्, रसः, गन्धः, स्पर्शः, शब्दः *, एते बाह्यैकैकेन्द्रियग्राह्यगुणाः । गुरुत्वम्, अदृष्टम् ( धर्माधर्मौ ), भावना, एतेऽतीन्द्रियगुणाः । बुद्ध्याद्यष्टकम्, भावना, शब्दश्च, एतेऽकारणगुणोत्पन्नाः । अपाकजं रूपादित्रयम् ( रूपरसगन्धाः ), अनुष्णः स्पर्शः, अपाकजं द्रवत्वम्, स्नेह–वेग–गुरुत्व–एकत्वानि, पृथक्त्वम्, परिमाणम्, स्थितिस्थापकः, एते कारणगुणोत्पन्नाः । संयोगः, विभागः, वेगः, एते कर्मजा गुणाः । रूपादिचतुष्टयम् ( रूपम्, रसः, गन्धः, स्पर्शः), एकत्वम्, परिमाणम्, एकपृथक्त्वम्, स्नेहः, शब्दः, स्थितिस्थापकश्च, एतेऽसमवायिकारणान्येव भवन्ति । बुद्ध्यादयोऽष्टौ भावना, एते ( आत्ममात्रवृत्तिविशेषगुणाः ) निमित्तकारणान्येव ( न तु† असमवायिकारणानि ) भवन्ति । उष्णस्पर्शः, गुरुत्वम्, वेगः, द्रवत्वम्, संयोग–विभागौ, एते गुणा असमवायिकारणानि; निमित्तकारणानि च भवन्ति । बुद्ध्यादयोऽष्टौ, शब्दः, भावना, संयोगः, विभागः, एतेऽव्याप्यवृत्तिगुणा उच्यन्ते । ( भा० प० गु० श्लो० ८७–१०० ) सविकल्पकज्ञानम्, इच्छा, प्रयत्नः, सुखम्, दुःखम्, द्वेषः, तदेकत्वम् ( जीवात्मगतमेकत्वम् ), परिमाणम्, चैत आत्मयोग्यगुणा भवन्ति । तत्र तदेकत्व–परिमाणे (जीवात्मगते एकत्व–परिमाणे ) न योग्ये इति टीकाकृत आहुः । ( न्या० म० १। पृ० ५ ) ( मु०१) रूपादीनामेकैकेन्द्रियग्राह्यत्वम्, संख्यादीनां द्वीन्द्रियग्राह्यत्वम्, सुखादीनां मानसत्वम्, सत्ता–गुणत्वयोः सामान्ययोः सर्वेन्द्रियग्राह्यत्वम् । ( वै० उ० ४। १। १३ ) परत्व–अपरत्व–द्वित्व–पृथक्त्वादयो बुद्ध्यपेक्षगुणाः । रूप–रस–गन्ध–स्पर्श–शब्द–परिमाण–एकत्व–एकपृथक्त्व–स्नेहाः सजातीयारम्भकगुणाः । सुखदुःखेच्छाद्वेषप्रयत्नाः, स्वासमानजातीयारम्भका गुणा भवन्ति । संयोगविभागसंख्याः, गुरुत्वद्रवत्वोष्णस्पर्शज्ञानधर्माधर्मसंस्काराः, समानासमानजातीयारम्भका गुणाः । बुद्धिसुखदुःखेच्छाद्वेषभावनाशब्दाः स्वाश्रयसमवेतविशेषगुणारम्भकाः । रूपरसगन्धस्पर्शपरिमाणस्नेहप्रयत्नाः परत्रारम्भकाः । संयोगविभागसंख्यैकपृथक्त्वगुरुत्वद्रवत्ववेगस्नेहप्रयत्नधर्माधर्मास्तूभयत्रारम्भकाः । गुरुत्वद्रवत्ववेगस्थितिस्थापकप्रयत्नधर्माधर्मसंयोगविशेषाः क्रियाहेतवः । परत्वापरत्वद्वित्वद्विपृथक्त्वादयो गुणा अकारणानि‡ भवन्ति । रूपादिसप्तकम्, गुरुत्वद्रवत्वस्नेहवेगस्थितिस्थापकपरत्वापरत्वानि चाश्रयव्यापीनि भवन्ति । रूपरसगन्धस्नेहगुरुत्वद्रवत्वस्थितिस्थापका एते स्पर्शव्याप्या भवन्ति । बुद्धि–सुख–दुःख–इच्छा–द्वेष–प्रयत्न–धर्म–अधर्म–भावना एते गुणा आत्ममात्र-

---

* अत्रायं नियमः 'गुणभिन्नस्यातीन्द्रियधर्मिगतधर्मस्यातीन्द्रियत्वम्' इति । (म०प्र०पृ०६७)

† सुखादीनां भेदप्रतिपादनाय प्रपञ्चोऽयं द्रष्टव्यः । ( वै० उ० १०। २। ७ )

‡ स्वध्वंस–प्रत्यक्षातिरिक्तं प्रत्यकारणानीत्यर्थः । ( दि० गु० )

धर्मः, संस्कारः, इति । रूपाद्यपरत्वान्ताः, बुद्ध्यादिप्रयत्नान्ताश्च, एते सप्तदश गुणा इति कणादो वक्ति । कणादसूत्र–( वै० १।१।६ ) स्थ-चकारो गुरुत्वादीनवशिष्टान्सप्त गुणान् समुच्चिनोतीति चतुर्विंशतिर्गुणा भवन्ति इति प्रशस्तपादाचार्यादय आहुः । परत्वापरत्वपृथक्त्वानां निरस्तत्वादेकविंशतिर्गुणा इति नव्याः । ते च (चतुर्विंशतिर्गुणाः) समवायनि-

वृत्तयो भवन्ति । बुद्धीच्छा–*द्वेषप्रयत्नभावनानामेव सविषयकत्वम् । रूप–द्रवत्वे पृथिव्यप्तेजोमात्रवृत्तिनी भवतः । संख्या–प्रचय–परिमाणान्येव परिमाणासमवायिकारणानि भवन्ति । संयोग–विभाग –शब्दा एव शब्दासमवायिकारणानि भवन्ति । स्पर्शगुरुत्वप्रयत्नवेगा एव अभिघातहेतवो भवन्ति । एकत्वैकपृथक्त्वसंयोगविभागा एवानेकाश्रितगुणारम्भका भवन्ति । परत्वापरत्वे एव दिक्कालपिण्डसंयोगजन्ये भवतः । परत्व–अपरत्व–चरमज्ञान–द्वित्व–द्विपृथक्त्वादय एव निमित्तनाशनाश्या भवन्ति । एतदन्ये एव गुणा गुणान्तरविनाश्या भवन्ति । अपार्थिवपरमाणुगतरूपरसस्पर्शसांसिद्धिकद्रवत्वस्नेहगुरुत्वस्थितिस्थापक–( ? ) नित्यद्रव्यगतैकत्वपृथक्त्वपरिमाण–ईश्वरबुद्धीच्छाप्रयत्ना एते नित्या अकार्याश्च सन्ति । एतदन्ये गुणास्तु अनित्याः कार्याश्च सन्ति, इति । (प० मा० ) संख्यादयः पञ्च सर्वद्रव्यसाधारणा भवन्ति । परत्वापरत्वे तु मूर्तद्रव्ये एव वर्तेते । भावना, धर्माधर्मौ च, (दुःखद्वेषौ), एते जीवात्मन्येव वर्तन्ते । रूपरसस्पर्शैकत्वपरिमाणैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहा नित्यगताः† नित्याः; अनित्यगतास्त्वनित्या भवन्ति । एतदन्ये गुणा नित्यानित्यगताः, अनित्या एव भवन्ति । ( प० प्र० ) जीवात्मसमवेता बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः, शब्दश्चैते द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति, इति । ( त० कौ० )

१ अत्रायं विवेकः–संनिकृष्टत्व–विप्रकृष्टत्वाभ्यां ( तयोर्ज्ञानात् ) परत्वापरत्वे उत्पद्येते इत्यतः परत्वापरत्वे संनिकृष्टत्व–विप्रकृष्टत्वाभ्यामतिरिक्ते गुणावेवेति वैशेषिकमतम् ‡ । ( स्व० ) नव्यास्तु, संनिकृष्टत्व–विप्रकृष्टत्वाभ्यां दैशिकपरत्वापरत्वव्यवहारस्य, ज्येष्ठत्व–कनिष्ठत्वाभ्यां कालिकपरत्वापरत्वव्यवहारस्य चोपपत्तेः; न तयोर्गुणान्तरत्वम्, इति; ( दि० गु० पृ० २०९ ) पृथक्त्वं चान्योन्याभावान्नातिरिच्यते, इति चाहुः ।

* अत्रेदं बोध्यम्–इच्छादीनां जनकज्ञानसविषयत्वेनैव सविषयत्वव्यवहार इति तु प्राञ्चः ( वाचस्पतिमिश्रादयः ) आहुः । व्यवहारबलेन, ज्ञानवत् इच्छादेरपि साक्षादेव सविषयतेति तु नव्या आहुः । ( प० मा० )

† परंतु, रूपरसगन्धस्पर्शाश्च नित्येऽपि पृथिवीपरमाणौ वर्तमानाः सर्वेऽनित्या एव; पाकजत्वात्, इति ज्ञेयम् ।

‡ अत्र सूत्रं प्रमाणम्–“एकदिक्काभ्यामेककालाभ्यां संनिकृष्ट–विप्रकृष्टाभ्यां परमपरं च” ( वै० ७।२।२१ )

राकरणेन द्रव्याभिन्ना एवेति सांख्या वेदान्तिनश्च मन्यन्ते । तत्र (वैशेषिक-नैयायिकसिद्धान्तसिद्धेषु चतुर्विंशतौ गुणेषु मध्ये) रूपरसगन्धस्पर्शाश्च-[1]त्वारः प्रत्येकमुद्भूतानुद्भूतभेदेन द्विविधाः । अनुद्भूतरूपादयो घ्राणरसनाचक्षुस्त्वगादौ तिष्ठन्ति । उद्भूतरूपादयस्तु घटपटादौ, योग्यपृथिव्याद्यारम्भकपरमाणु–द्व्यणुक–त्र्यणुकादौ च तिष्ठन्ति । ( त० कौ० ) ते पुनश्चत्वारोऽपि पाकजापाकजभेदेन द्विविधाः । तत्र पाकजाः कस्यांचित्पृथिव्यामेव वर्तन्ते; घटादिषु पाकसंयोगात्पूर्वश्यामादिनिवृत्तौ रक्ताद्युत्पादात् । अपाकजास्तु पृथिव्यादिचतुष्टयेऽपि वर्तन्ते । पाकजा अपाकजाश्च ते सर्वे पृथिव्यामनित्या एव । अन्यत्र ( जलादिषु त्रिषु ) पाकासंभवेनापाकजा एव ते । ते तु ( अपाकजाः ) जलादिषु नित्येषु गता नित्याः; अनित्येषु गतास्त्व[2]नित्या एव, इति ।

**गुणवादः**[3]–( अर्थवादः ) [ क ] विरोधे[4] गुणवादः ।

[ ख ] प्रमाणान्तरविरोधे सत्यर्थवादः । यथा– "आदित्यो यूपो[5] भवति"

---

१ केचित्तु, चित्राचित्रभेदेनाऽपि ते द्विविधाः । तत्र, नीलपीतादि–मधुरतिक्तादि–सुरभ्यसुरभ्यादि–सुकुमारकठिन–आद्यवयवैरारब्धपटादिषु चित्राः; अन्यत्राचित्राः, इति मन्यन्ते । ( त० कौ० ) सिद्धान्तिनस्तु, रूपादिषु चतुर्षु रूपस्यैव चित्राचित्रभेदेन द्वैविध्यं ( अवयविनाशुपप्रत्यक्षान्यथाऽनुपपत्त्या ) कल्प्यते, न तु रसादीनां द्वैविध्यम्; तेषां चित्रविधत्वानङ्गीकारात्, इति प्राहुः । ( त० दी० १ )

२ अत्र प्रमाणानि सूत्राणि– " पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च " " एतेन नित्येषु नित्यत्वमुक्तम् " " अप्सु तेजसि वायौ च नित्या द्रव्यनित्यत्वात् " । "अनित्येष्वनित्या द्रव्यानित्यत्वात् " " कारणगुणपूर्वकाः पृथिव्यां पाकजाः " ( वै० ७।१।२–६ )

३ अत्र व्युत्पत्तिः ' गुणस्य ( अङ्गस्य ) वादः ' इति द्रष्टव्या ।

४ तदर्थश्च– विशेष्यतानवच्छेदक-विशेषणशब्दार्थयोर्विरोधे, इति । ( त० प्र० ख० ४। पृ० १२४ )

५ अत्र च [ क ] यूपे आदित्याभेदस्य प्रत्यक्षबाधितत्वात् , आदित्यवदुज्ज्वलत्वरूपगुणोऽनेन लक्षणया प्रतिपाद्यते । ( लौ० भा० पृ० ५५ ) [ ख ] यूपे आदित्याभेदस्य प्रत्यक्षादिविरुद्धत्वात्, तद्गतो गुणविशेष उज्ज्वलत्वादिर्लक्ष्यते । 'आदित्यवदुज्ज्वलो यूपः' इति बोधः । (म० प्र० पृ० ६४).

"यजमानः प्रस्तरः[1]" इत्यादिः । ( सि० च० पृ० ३३ ) ( लौ० भा० पृ० ५५ ) ( म० प्र० पृ० ६४ ) ( त० प्र० ख० ४ । पृ० १२४ )

**गुणविधिः**[2]–( विधिः ) प्राप्तस्याप्राप्तस्य वा कर्मणोऽङ्गद्रव्यविधानम् । तत्र प्राप्तस्येति कल्पे "दध्ना[3] जुहोति" इत्यादौ दधिद्रव्यविधानम् । अप्राप्तस्येति कल्पे तु "सोमेन[4] यजेत" इत्यादौ सोमविशिष्टयागविधानम् । ( वाच० )

**गुणान्तरापत्तिः**–धर्मिणि सत्येव धर्मान्तरापत्तिः । यथा–शाब्दिकनये उदात्तेऽनुदात्तत्वम् । ( गौ० वृ० २।१२२ )

**गुप्**–( धातुः ) १ गर्हापूर्वकनिवृत्तिः । यथा–पापात्[5] जुगुप्सते इत्यादौ धात्वर्थः । ( श० प्र० श्लो० ६८। पृ० ८१ ) २ रक्षणम् । यथा–"आत्मानं सततं गोपायीत" (श्रुतिः) इत्यादौ । ३ व्याकुलत्वम् । ४ भासनम् । यथा–"गोपायति क्षितिमिमां चतुरब्धिसीमां, पापाज्जुगुप्सत उदारमतिः सदैव । वित्तं न गोपयति यस्तु वणीयकेभ्यो, धीरो न गुप्यति महत्यपि कार्यजाते" ( कविरहस्ये ) इति चतुर्णां गुप्धातूनामुदाहरणानि ।

---

१ अत्र, प्रस्तरो दर्भमुष्टिः, तस्य यजमानेऽभेदान्वयबाधात्, यजमानस्य कुशमुष्टिधारणरूपाङ्गवादरूपत्वात् गुणवादः, इति बोध्यम् ।

२ गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वयः, नतु साधनत्वेनाप्यन्वयः । ( लौ० भा० पृ० १६)

३ अत्र [ क ] होमस्य " अग्निहोत्रं जुहुयात् " इत्यनेन प्राप्तत्वात् होमोद्देशेन दधिमात्रविधानम् । ' दध्ना होमं भावयेत् ' इति वाक्यार्थः । ( लौ० भा० ) [ ख ] " अग्निहोत्रं जुहोति स्वर्गकामः " इति विधिना स्वर्गसाधनत्वेन प्राप्तस्याग्निहोत्रादेरङ्गम् " दध्ना जुहोति" इति वाक्येन दधिद्रव्यं विदधत् गुणविधिः । ( वाच० )

४ अत्र [ क ] कर्म, अङ्गं च मानान्तरेणाप्राप्तम्; इति उभयविधानम् । यथा हि तस्य अङ्गरूपगुणविधानेन गुणविधित्वम्; तथा कर्मस्वरूपप्रापकत्वेन उत्पत्तिविधित्वं चेत्युभयरूपत्वम् । ( वाच० ) [ ख ] अत्र उभयम् ( सोमद्रव्य–यागौ ) अप्राप्तम्, इति विशिष्टं ( सोमविशिष्टयागम् ) विधत्ते । सोमपदे मत्वर्थलक्षणया ' सोमवता यागेन इष्टं भावयेत् ' इति वाक्यार्थबोधः । ( लौ० भा० )

५ अत्र सुपो विषयित्वमर्थः । तच्च गर्हानिवृत्त्योः क्रमेणान्वयि । तथा च ' पापविषयकगर्हाप्रयुक्तपापगोचरनिवृत्तिमान् ' इत्याकारको बोधः । ( श० प्र० श्लो० ६८। पृ० ८१ )

**गुरुः**–१ वक्ष्यमाणगुरुत्वविशिष्टम् । २ प्रभाकराख्यो मीमांसकविशेषः । ३ निषेकादिक्रियाकर्तेति धर्मज्ञा आहुः । ४ सच्छास्त्रोपदेशको (आचार्यादिः) गुरुरिति मुमुक्षवः । ५ दीर्घाक्षरं गुर्विति वृत्तशास्त्रज्ञाः । ६ सुराचार्य इति पौराणिकाः । ७ बृहस्पत्याख्यो नक्षत्रविशेष इति ज्योतिःशास्त्रज्ञाः । ८ पित्रादिर्जनो गुरुरिति काव्यज्ञा आहुः ।

**गुरुत्वम्**– १ (गुणः) [१] आद्यपतनासमवायिकारणम् । (भा० प० श्लो० १५५) (त० सं०) (त० व० पृ० २५०) यथा–

१ अत्र (प्रभाकरस्य गुरुनामताप्राप्तौ) आख्यायिका श्रूयते–" अत्र तु नोक्तं तत्रापि नोक्तम्; अतः पौनरुक्त्यम् " इत्यत्र गुरोः संशये जाते, तच्छिष्येण प्रभाकरेण तदसंनिधाने तत्पुस्तके "तुना (तुशब्देन), अपिना (अपिशब्देन)" इति पदच्छेदः कृतः । उत्तरकाले गुरुणा तदवलोकनेन 'केन ईदृशः पदच्छेदः कृतः ?' इति पृष्टे अन्यशिष्यद्वारा प्रभाकरकृतत्वं निश्चित्य तस्य संशयापनोदकत्वात् 'गुरुः' इति संज्ञा कृता, इति । (वाच०)

२ आद्यत्वमिह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिकत्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वान्निरास इति भावः । (नील० १। पृ०१४)

३ पतनं नाम अधोदेशसंयोगानुकूलो व्यापारः । तच्च पतनं यथा–वृक्षात्पर्णं पततीत्यादौ वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः । तत्र प्राथमिकव्यापारो गुरुत्वजन्यः । द्वितीयादिस्तु वेगजन्यः, इति । (वाक्य० १। पृ० ९) (वै० ५।१।७–१८)

४ इदं गुरुत्वम् पृथिवी-जलवृत्ति, अतीन्द्रियं* च; नित्यगतं नित्यम्; अनित्यगतमनित्यम् । (भा० प० श्लो० १५४–१५५)

गुरुत्वं पतनानुमेयम्; † अधोऽवच्छेदेन संयुक्तसमवायात् । वल्लभाचार्यस्तु, गुरुत्वं प्रत्यक्षम् (स्पार्शनविषयः) इत्याहुः । (प० मा०) (वै० उ० ४।१।१०) लीलावतीकारस्तु, भस्मीभावदशायां गुरुत्वापकर्षदर्शनात्तदन्यथानुपपत्त्या गुरुत्वमपि पाकजं मेने। आचार्यास्तु, कारणगुणपूर्वकमध्ये गुरुत्वे पाकजत्वविशेषणमप्रवेशयन्तो, गुरुत्वं पाकजं नेत्याविश्चक्रुः । (प० मा०) सांख्यास्तु, गुरुत्वं तमोगुणस्य धर्म इत्याहुः । (वाच०) अर्वाचीना हूणविद्याविशारदास्तु, पृथिव्यादिगताकर्षणशक्तिविशेषेणैव पतनस्योपपत्तावलं गुरुत्वेन, इति मेनिरे ।

* अत्र सूत्रम्– " तस्याभावादव्यभिचारः " (वै० ४।१।१०)

† अनुमानप्रयोगस्तु– ' संयोगासमवधानकालीना क्रिया गुणासमवायिकारणिका, क्रियात्वात् संयोगजन्यक्रियावत्' इत्यनुमानेन गुरुत्वसिद्धिः । (दि० गु० पृ० २३२)

रक्तिकमापकतोलकत्वादि ( दि० १ ) [२] स्पर्शविशेषः प्रत्यक्षसिद्ध इति वल्लभाचार्या (नैयायिकविशेषाः) आहुः । २ बहुपदार्थोपस्थितिसापेक्षधर्मत्वम् । यथा—"धूमत्वापेक्षया नीलधूमत्वं गुरुधर्मः" इत्यादौ (ख०)

**गुरुधर्मः**—[ क ] अव्यावर्तकपदार्थघटितो धर्मः । यथा—प्रमेयघट इत्यादौ घटत्वमपेक्ष्य प्रमेयत्वविशिष्टं घटत्वं गुरुधर्मः ।
[ ख ] अवच्छेदकत्वाद्यप्रयोजकपदार्थघटितो धर्मः । यथा—पर्वतो वह्निमान्नीलधूमादित्यादौ नीलधूमत्वं गुरुधर्मः । यथा वा—कम्बुग्रीवादिमान्नास्तीत्यादौ कम्बुग्रीवादिमत्त्वं गुरुधर्मः । (ख०)

**गोचरत्वम्**—१ जन्यज्ञानविषयत्वम् । यथा—"घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः" (भा० प० श्लो० ९४) इत्यादौ गन्ध-रूप-रसादीनां गोचरत्वम् । २ मायावादिनस्तु, ज्ञानमात्रविषयत्वम् । यथा—"अवाङ्मनसगोचरम्" (वेदान्तसा०) इत्यादौ, इत्याहुः । (वाच०) ३ ग्रहाणां गतिविशेष इति ज्योतिर्विद आहुः । ४ सूर्यादिग्रहगमननिमित्तशुभाशुभनिरूपणमिति मौहूर्तिका आहुः । (वाच०)

**गोत्रम्**— १ ऋषीणां वंशपरंपरा । (मिता० १।९३) (धर्मसि०) यथा—मम

---

१ अत्रेदं बोध्यम्– गुरुत्वकल्पनं च केषांचिन्मते तर्कविशेषः ( स० अ० पृ० ११८ ) यथा–" तस्य प्रतिबन्धकत्वकल्पने गौरवम् " इत्यादौ । ( ख० )

२ तल्लक्षणं चाप्रयोजनकबहुपेक्षोपस्थितिकत्वम् ।

३ अत्र, नीलधूमत्वं शुद्धधूमत्वमपेक्ष्य गुरुधर्म इति व्याप्यतावच्छेदकं न भवतीति विज्ञेयम् ।

४ अत्र च न्यायः– 'संभवति लघौ धर्मेऽवच्छेदकेऽतिप्रसङ्गानापादके गुरुधर्मो नावच्छेदकः' इति । तेन च, लघोर्घटत्वस्याभावीयप्रतियोगितायामवच्छेदकत्वसंभवे कम्बुग्रीवादिमत्त्वं गुरुतया नावच्छेदकम्, इति बोध्यम् ।

५ गोत्रकाराश्च मुख्यत्वेनाष्टौ सुप्रसिद्धाः प्रवरमञ्जर्यामुक्ताः । यथा बौधायनः– " विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः । अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः " इति ॥ तदर्थश्च–सप्तानामृषीणामगस्त्याष्टमानां यदपत्यम्, तद्गोत्रम्, इति । ( निर्ण० सि० परि० ३। पृ० २७ )

(न्यायकोशकर्तुः) शालंकायनगोत्रम् । २ पर्वतादिरिति काव्यज्ञा आहुः । (ख०)

**गौणः**– १ गौण्या वृत्त्या प्रवृत्तः शब्दः । यथा–"ॐ गौणश्चेन्नात्मशब्दात् ॐ" (ब्रह्मसूत्र० १।१।६) इत्यादौ । यथा वा– "बहूनि मम नामानि कीर्तितानि महर्षिभिः । गौणानि तत्र नामानि कर्मजानि च कानिचित्" (भा० शान्ति० अ० ३४३) इत्यादौ । २ अमुख्यम् । यथा–"एवमागामियागीयमुख्यकालादधस्तनः । स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः" (छन्दोग०) इत्यादौ । ३ अप्रधानम् । यथा–गां दोग्धि पय इत्यादौ गौरप्रधानं कर्म । ४ गौणी वृत्तिः । यथा–"लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता" (काव्य०प्र०उ० २ तत्र भट्टकारिका) इत्यादौ ।

**गौणी**–(लक्षणा) [**क**] शक्यसदृशत्वप्रकारेण बोधकतया गौणी । यथा–अग्निर्माणवक इत्यादावग्निसदृशत्वादिनाऽग्न्यादिपदस्य गौणी वृत्तिः । (ग० प्र०)

[**ख**] शक्यपरम्परासंबन्धः । (म० प्र० ४।पृ० ४१)

[**ग**] लक्ष्योपस्थितिनियामकः सादृश्यात्मकः संबन्धः । यथा–गौर्वाहीक इत्यादौ । (वै० सा०द०) (त० प्र० ख० ४ । पृ० ३६)

---

१ अत्रोक्तम्– "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्," इति । अधिकं तु, अप्रधानकर्मत्वादिशब्दव्याख्यानावसरे संपादितम् ।

२ अत्र, अधिकं तु "गौणी" शब्दव्याख्यानावसरे संपादयिष्यते ।

३ शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिरिति मीमांसकाः । सा च तदतिरिक्ता नेति नैयायिका आहुः । (ग० प्र० ४। पृ० ४१)

४ अत्रोक्तम्– "सादृश्यात्तु मता गौण्यस्ताश्च षोडश भेदिताः," इति । (सा० द०) (वाच०) अत्र विशेषः– सादृश्येतरसंबन्धेऽपि वृत्तेर्गौणत्वमिच्छन्ति शास्त्रकृतः, इति ।

५ अत्रायमर्थः– वाहीको वाहीकदेशोद्भवः; गौर्बलीवर्द इत्यर्थः । अत्र वाहीके गवाभेदस्य बाधात् गोपदेन गोसदृशो लक्ष्यते । गोसादृश्यं च गोगतजाड्यमान्द्यादिकमेव । तथाच 'जडो मन्दश्च वाहीकः' इति शाब्दबोधः । एवम्–सिंहो माणवक इत्यत्रापि गौणी लक्षणा बोध्या । (त० प्र० ख० ४ । पृ० ३६)

**गौरवम्**–१आराध्यत्वावगाही ज्ञानभेदः; येयं भक्तिरित्युच्यते । ( श० प्र० श्लो० ७२ । पृ० ९९ ) यथा–"सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते" ( मनुस्मृति० ) इत्यादौ । यथा वा–"प्रायश्चलं गौरवमाश्रितेषु" ( कुमार० स० ३ श्लो० १ ) इत्यादौ । २ गुरुत्ववदस्यार्थोऽनुसंधेयः । ३ गौरवहेतुकमभ्युत्थानादिकं गौरवमिति काव्यज्ञाः पौराणिकाश्चाहुः ।

**ग्रन्थः**–१ [१] [क] एकार्थको वाक्यसंदर्भः । यथा–महाभारत-रामायणादिः । (ख०)

[ख] चरमवर्णपर्यन्तवर्णसमूहो ग्रन्थ इति केचिद्वदन्ति [२] शास्त्रम् । यथा–"ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया," ( नैष० ) "ग्रन्थग्रन्थिं तदा चित्रं मुनिर्गूढं कुतूहलात्" ( भा० आ० अ० १ ) इत्यादौ । २ द्वात्रिंशद्वर्णमितानुष्टुप्छन्दस्कः श्लोको ग्रन्थ इति छन्दःशास्त्रज्ञा आहुः । (वाच०) ३ वर्णविशेषाणां ( अक्षरविशेषाणाम्) ग्रंथसंज्ञेति द्रविडदेशीया वदन्ति ।

**ग्रहः**–१ [क] बुद्धिवदस्यार्थोऽनुसंधेयः । यथा–शिष्यं वेदं ग्राहयतीत्यादौ धात्वर्थः ।

[ख] ज्ञानम् । यथा–"हंसं तनौ संनिहितं चरन्तं मुनेर्जनो वृत्तिरिव स्रिकायाम् । ग्रहीतुकामादरिणाशयेन" ( नैष० ) इत्यादौ । यथा वा–"गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः" ( भा० प० श्लो० ५६ ) इत्यादौ । २ बुद्धिविशेषप्रयुक्तहस्तव्यापारः । यथा–"गृहाण शस्त्रं यदि सर्ग एष ते," ( रघु० ३।५१ ) "तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी," ( रघु० १।५७ ) "दश ग्रहान् ( यज्ञपात्राणि ) गृह्णाति" ( श्रुतिः ) इत्यादौ । ३ स्वीकारः । स च द्विविधः । स्वत्वापादनव्यापारः, सेवनादिनाऽऽयत्तीकरणं च । तत्र आद्यो यथा–"तत्र किंचिन्न गृह्णीयात् प्राणैः कण्ठगतैरपि" ( प्रा० त० गङ्गामाहा० ) इत्यादौ । द्वितीयो यथा–"शरद्रौद्रं न गृह्णीयात्, गृह्णीयान्मार्गपौषयोः" (नीति०)

इत्यादौ । ४ सूर्यादयो नव ग्रहा इति ज्योतिर्विदो वदन्ति । ५ बालारिष्टकाराः स्कन्दग्र[1]हादय इति पौराणिका भिषजश्चाहुः । ( वाच० )

**ग्राह्यः**–१ प्रतिबध्यज्ञाने प्रकारीभूतो धर्मः । यथा–" ह्रदो वह्निमान्" इति ज्ञाने प्रकारभूतो वह्निर्[2]ग्राह्यो भवति । २ ग्रहविषयः । यथा–"चक्षुर्मात्रग्राह्यो गुणो रूपम्" इत्यादौ रूपं ग्राह्यं भवति । ३ स्वीकार्यम् ( वस्तु ) इति काव्यज्ञा वदन्ति ।

## घ.

**घट**–( धातुः ) १ चेष्टा । यथा–" अङ्गदेन समं योद्धुमघटिष्ट नरान्तकः" ( भट्टिः ) इत्यादौ । २ हिंसार्थः । ३ द्युतिः । यथा–घाटयतीत्यादौ । ४ शब्दकरणम् । यथा–घण्टयति, घण्टा, निघण्टुः, इत्यादौ । ( वाच० )

**घटः**–१ कम्बुग्रीवादिमान्, पृथुबुध्नोदराकृतियुक्तः पदार्थविशेषः । यथा–" घटं प्रति दण्डः कारणम् " इत्यादौ घटः । २ कुम्भकाख्यः प्राणायामविशेष इति तान्त्रिकाः । ३ द्रोणविंशतिपरिमाणम्, इति शाब्दिका आहुः । ४ कुम्भराशिरिति मौहूर्तिकाः । ५ हस्तिकुम्भस्थलमिति काव्यज्ञा आहुः । ( वाच० )

**घटकत्वम्**– १ तद्वि[3]षयताव्यापकविषयतावत्त्वम् । यथा–वन्ह्यभावज्ञानीयविषयताव्यापकत्वस्य वह्निविषयतायां सत्त्वेन, वह्नेर्वह्न्यभावघटकत्वम् । (स्व०) २ अवच्छेदकत्वम् । यथा–"साध्याभावाधिकरणत्वं च साध्यवत्ताग्रहविरोधिताघटकसबन्धेन विवक्षणीयम्;" "साध्याभावप्रतियोगित्वं

---

१ ते च सुश्रुते उक्ता यथा–स्कन्दग्रह–१ स्तु प्रथमः स्कन्दापस्मार २ एव च । शकुनी ३ रेवती ४ चैव पूतना ५ चान्धपूतना ६।। पूतना शीतनामा ७ च तथैव मुखमण्डिका ८। नवमो नैगमेयश्च ९ यः पितृग्रहसंज्ञितः, इति ।।

२ तथा हि–'ह्रदो वह्न्यभाववान्' इति निश्चयस्य प्रतिबध्ये 'ह्रदो वह्निमान्' इति ज्ञाने प्रकारो वह्निरस्तीति वह्निर्ग्राह्यः, इति विज्ञेयम् ।

३ स्वभिन्नत्व–स्वव्यापकत्व–एतदुभयसंबन्धेन विषयताविशिष्टविषयतावत्त्वमित्यर्थः ।

च साध्यताघटकसंबन्धेन विवक्षणीयम्" इत्यादौ घटकत्वम् । ३ योजकत्वम्, इति तान्त्रिका आहुः ।

**घटितत्वम्**—तद्विषयताव्याप्यविषयतावत्त्वम् । यथा—वन्ह्यभावविषयताया वह्निविषयताव्याप्यत्वेन, वह्न्यभावस्य वह्निघटितत्वम् । यथा वा—"विशिष्टान्तराघटितत्व–विशिष्टद्वयाघटितत्व–प्रतियोगिवैयधिकरण्यघटितत्वम्" इत्यादौ घटितत्वम् । (स्व०)

**घ्रा**—(धातुः) [क] गन्धविषयकलौकिकप्रत्यक्षम् । यथा—पुष्पं जिघ्रतीत्यादौ घ्राधात्वर्थः । (ग० व्यु० का० २।पृ० ९१)

[ख] घ्राणजन्यप्रत्यक्षम् । यथा—"पाङ्गिकं जिघ्रति पङ्कुणेशः" (भा० १।३।६) इत्यादौ । (वाच०)

**घ्राणम्**—(इन्द्रियम्) [क] गन्धोपलब्धिसाधनमिन्द्रियम् । (त० भा० प्रमे० प० २६)

[ख] गन्धग्राहकं महदिन्द्रियम् । (न्या० म० १ । प० १४) (त० सं०)

[ग] चन्दने 'सौरभम्' इति गन्धप्रत्यक्षासाधारणं कारणम् । तच्च नासाग्रवृत्ति । (प्र० प्र० पृ० ११) (त० सं०)

---

१ तद्भेदाश्चोक्ताः—धावको भावकश्चैव योजकश्चांशकस्तथा । दूषकस्तावकश्चैव षडेते घटकाः स्मृताः, इति ।

२ अत्र द्वितीयार्थ आधेयत्वम् । तस्य घ्राधात्वर्थैकदेशे (व्युत्पत्तिवैचित्र्येण) गन्धेऽन्वयः । एवं च—'पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावान्' इत्याकारकः शाब्दबोधः, इति संक्षेपः । (ग० व्यु० का० २। पृ० ५१)

३ तच्च पार्थिवम् । (त० भा० प० २६) (न्या० म० १। पृ० १४) घ्राणस्य पार्थिवत्वे प्रमाणं चानुमानम् । तच्चानुमानम्—[क] घ्राणं पार्थिवम्, द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये गन्धस्यैव व्यञ्जकत्वाद्वायूपनीतसुरभिभागवत् इति; कुङ्कुमगन्धाभिव्यञ्जकगोघृतवत्' इति वा । (मु० १। पृ० ७२) (प० प०) [ख] 'यत् इन्द्रियं रूपादिपञ्चसु मध्ये यं गुणं गृह्णाति तत् इन्द्रियं तद्गुणयुक्तम्, यथा चक्षू रूपग्राहकं रूपवत्, गन्धग्राहकं घ्राणमतो गन्धवत्' इति । (त० भा० प० २६)

# च.

च—( अव्ययम् ) १ पादपूरणार्थम् । २ पक्षान्तरद्योतनम् । ३ अवधारणम् । ४ चार्थः ( समुच्चयादिः ) । ५ तुल्ययोगित्वम् । ६ विनियोगः । ( वाच० )

---

१ पादपूरणार्थस्य निरर्थकतैव । तत्रोक्तम्–निरर्थकं चादि पादपूरणैकप्रयोजनम् । ( चन्द्रालोके )

२ पक्षान्तरं चात्र पुनरर्थकम् । यथा–" मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः । तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते" इति । ( हितो० )

३ तस्यायं विभागो ज्ञेयः–चार्थाश्चत्वारः* । ( १ ) समुच्चयः, ( २ ) अन्वाचयः†, ( ३ ) इतरेतरयोगः‡, ( ४ ) समाहारश्चेति ।

४ तथा हि–तुल्ययोगिताऽलंकारस्य चेन द्योतनात् तस्य तदर्थकता । यथा–" संकुचन्ति सरोजानि स्वैरिणीवदनानि च " ( चन्द्रालोकः ) एवम्–दीपकालंकारद्योतकताऽपि ।

चकारद्वयप्रयोगे क्वचित् अविलम्बयोगितायाः, क्वचित् तुल्यप्रधानस्य चावबोधनम् । यथा–( १ ) "इतीरिताः पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी," ( नैष० ) ( २ ) " कला च सा कान्तिमती कलाभृतस्त्वमस्य लोकस्य च नेत्रकौमुदी " ( कुमार० ) इत्यादौ । ( वाच० )

---

* अत्र सूत्रम्–" चार्थे द्वन्द्वः" ( पा० २।२।२९ ) इति; समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । अधिकं तु समुच्चय-अन्वाचयादिशब्दव्याख्यानेऽवलोकनीयम् ।

† अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः । आनुषङ्गिकत्वमनुद्देश्यत्वम्; अन्यतरस्य प्राधान्यं च तत्संबन्धिक्रियाया अवश्यकर्तव्यत्वरूपम् । तथा च समभिव्याहृतक्रियादिगतमानुषङ्गिकत्वव्याप्यत्वमन्वाचयचकारार्थः । ( वाच० )

‡ मिलितानामन्वय इत्यर्थः । तथा च–मिलितानाम् ( परस्परापेक्षाणामुद्भूतावयवभेदकसमूहरूपाणाम् ) अन्वयः ( एकधर्मावच्छिन्नेनान्वयः ) इति निष्कृष्टार्थः । ( वाच० )

अत्र इतरेतरसमाहारयोरयं विशेषो ज्ञेयः–अनुद्भूतावयवभेदसमूहस्य प्रतीता प्रत्येकावयववृत्तिधर्म एव इतरेतरयोगे प्रवृत्तिनिमित्तम्; समाहारे तु, द्वित्वत्रित्वादिनैव भानात् समूहत्वमेव प्रवृत्तिनिमित्तम् । एवं च–उभयत्रैव समूहस्य बोधः, इति ।

अन्योऽपि विशेषः–इतरेतरयोगे साहित्यं विशेषणम्, द्रव्यं विशेष्यम् । समाहारे तु साहित्यं प्रधानम्, द्रव्यं विशेषणम्, इति । ( वाच० )

**चक्रकम्**–१ ( तर्कः ) [ क ] तदपेक्षापेक्ष्यपेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गः[1] । इदं च, उत्पत्ति–स्थिति–ज्ञप्ति–द्वारा त्रिविधम् । तत्प्रपञ्चस्तु, आत्माश्रयवदनुसंधेयः । ( गौ० वृ० १।३९ )

[ ख ] स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनः प्रसङ्गः । अपेक्षा[2] च ज्ञप्तौ, उत्पत्तौ, स्थितौ च । ( जाग० तर्क० ) तत्र ज्ञप्तौ यथा–एतद्घटज्ञानं यद्येतद्घटज्ञानजन्यज्ञानजन्यज्ञानजन्यं स्यात्, तदा एतद्घटज्ञानजन्यज्ञानजन्यज्ञानभिन्नं स्यात्, इति । उत्पत्तौ यथा–घटोऽयं यद्येतद्घटजन्यजन्यजन्यः स्यात्, तदा एतद्घटजन्यजन्यभिन्नः स्यात्, इति । स्थितौ यथा–घटोऽयं यद्येतद्घटवृत्तिवृत्तिः स्यात्, तदा तथात्वेनोपलभ्येत, इति । (वाच०) २ चक्राकारश्छन्दोविशेष इति छन्दोज्ञाः । ३ दद्रुरोग इति भिषज आहुः । ( वाच० )

**चक्षुः**[3]–१ ( इन्द्रियम् ) [ क ] रूपोपलब्धिसाधनमिन्द्रियम् । ( त० भा० प्रमेय० प० २६ )

---

१ अत्रेदं ज्ञेयम्–चतुःकक्षादावपि स्वस्य स्वापेक्षापेक्ष्यपेक्षितत्वसत्त्वान्नाधिक्यम् । ( गौ० वृ० १।३९ )

२ अपेक्षा च साक्षात्परंपरासाधारणी ग्राह्या ।

३ अत्रेदमवधेयम्–चक्षुषोऽधिष्ठातृदेवः सूर्यः । तत्र " दिग्वातार्कप्रचेतोऽश्वि–" इत्यादि प्रमाणम् । ( शा० ति० ) गोलकमेव चक्षुरिति बौद्धा आहुः ।

चक्षुःसद्भावे प्रमाणमनुमानम् । तच्चानुमानम्–'रूपोपलब्धिः सकरणिका क्रियात्वात् छिदिक्रियावत्' इति । अनेनानुमानेन पक्षधर्मताबलाच्चक्षुःसिद्धिः । इयमेव रीतिर्घ्राणादावपि बोध्या । ( म० प्र० १। पृ० १४ )

तच्च ( चक्षुः ) तैजसम् । ( न्या० म० १। पृ० १४ ) चक्षुषस्तैजसत्वेऽनुमानं प्रमाणम् । तच्चानुमानम्–'चक्षुस्तैजसम्, स्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्प्रदीपवत्, प्रभावत्' इति वा । ( मु० १। पृ० ७९ ) ( त० भा० पृ० २७ ) चक्षुष्यनुद्भूतशुक्लोऽस्ति । संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, द्रवत्वम्, स्नेहः, क्रिया, जातिः, समवायश्च, एतानि योग्यव्यक्तिवृत्तीनि चक्षुर्ग्राह्याणि; तथा–उद्भूतरूपम्, उद्भूतरूपवद्द्रव्यं च चक्षुर्ग्राह्यम् । ( भा० प० श्लो० ५५–५६ )

[ ख ] रूपग्राहकं महदिन्द्रियम् । ( न्या० म० १।पृ० १४ ) (त० भा० पृ० २६ )

[ ग ] 'घटे रक्तो वर्णः' इति रूपप्रत्यक्षासाधारणं कारणम् । तच्च कृष्णताराग्रवर्ति । (प्र० प्र० । पृ० ११ ) ( त० सं० ) २ तेजः । यथा—"सूर्यश्चक्षुषे" ( ताण्ड्य० ब्रा० ) इत्यादौ । ( वाच० )

**चतुरणुकम्**— (जन्यद्रव्यस्यावयवः)[१]चतुर्भिस्त्र्यणुकैर्यदुत्पद्यते, तत् । (त० दी० १ । पृ० ९) (त० कौ० १ । पृ० ३) एवम् पञ्चाणुकादूह्यम् । (त० कौ० १ । पृ० ३)[२] नव्या नास्तिकास्तु, संयुक्ताणुचतुर्विंशतिकं चतुरणुकम्, इत्याहुः । (प० मा०)

**चतुर्थी**—( विभक्तिः ) तत्तद्धात्वर्थे संप्रदानत्वादिबोधिका विभक्तिः । (श० प्र० श्लो० ६९ । पृ० ७९ ) यथा—विप्राय गां ददातीत्यादौ विप्रायेति चतुर्थी । चतुर्थ्यर्थश्च [ १ ] संप्रदानम् । तच्च, क्रियाकर्मीभूतवस्तुनिष्ठस्वत्वभागित्वेनोद्देश्यम् । यथा—विप्राय गां ददाति, राज्ञे दण्डं द-

१ घ्राणादिवारणाय 'रूपग्राहकम्' इति विशेषणम् । मनोवारणाय 'महत्' इति । आलोकादिवारणाय 'इन्द्रियम्' इति । ( म० प्र० १। पृ० १४)

२ तल्लक्षणं च चतुर्थीत्वम् । तच्च ददात्यर्थधर्मिकसंप्रदानत्वानुभावकसुप्सजातीयत्वम् । ( श० प्र० श्लो० ६५ । पृ० ७५ )

३ तथा च सूत्रम्—"कर्मणा यमभिप्रैति स संप्रदानम्" ( पा० सू० १।४।३२ ) इति । तदर्थश्च—[ क ] कर्मणा कर्मनिष्ठफलभागित्वेन; अभिप्रैति उद्देश्यीकरोति; इति । [ ख ] क्रियाकरणीभूतेन*तत्क्रियाकर्मणा ( गवादिना ); यमभिप्रैति फलभागित्वेन उद्देश्यीकरोति; तत् संप्रदानम् । ( का० व्या० पृ० ८ ) [ ग ] कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्विशेष्यकोऽभिप्रायः, स संप्रदानम् । ( वै० सा० द० सुव० । पृ० १९३ )

४ अत्रेदं बोध्यम्—(१)वृक्षायोदकमासिञ्चतीत्यादौ तु नं संप्रदानचतुर्थी; किंतु—सेककर्मीभूतोदकजन्यवृद्धिभागित्वेन वृक्षस्योद्देश्यत्वात्तादृशोद्देश्यत्वे लाक्षणिकी, इति नानुपपत्तिः । ( २ ) "नमःस्वस्ति—" ( पा० सू० २।३।१६ ) इत्यादियोगे चतुर्थी तु उपपदविभक्तिः संबन्धार्थिकैव । ( ३ ) नारदाय रोचते कलह इत्यादावपि "रुच्यर्थानां प्रीयमाणः" ( पा० सू० १।४।३३ ) इति सूत्रेण बोधिता चतुर्थी उपपदविभक्तिरेव । (म०प्र०पृ०६)

* ग्रामं गच्छतीत्यत्र गमनकर्मग्रामजन्यसुखादिभागित्वेनोद्देश्यचैत्रादेस्तत्क्रियायां संप्रदानत्वाभावात् तदापत्तिवारणाय करणीभूतेति; गमनक्रियायां ग्रामस्याकरणत्वान्न दोषः । दानादौ देयादि करणमिति प्रकृते लक्षणसंगतिः । ( का० व्या० पृ० ८ )

दातीत्यादौ च विप्रो राजा च संप्रदानम् । [ २ ] उद्देश्यत्वम् । यथा—

---

५ अत्र चतुर्थ्यर्थश्च—[ क ] विशेष्यत्वम्†, इति नैयायिकाः । [ ख ] परे तु, संबन्धित्वेन‡ परेच्छाविषयत्वम्, इत्याहुः । ( का० व्या० कार० ४। पृ० ८ ) [ ग ] वैयाकरणास्तु, उद्देश्यत्वमिति§ वदन्ति । ( वै० सा० द० )

६ अत्र दानेन गो-दण्डादौ यजमानस्वत्वनिवृत्तौ विप्र-राजादेः स्वत्वोत्पादात्, 'गो-दण्ड-निष्ठ-स्वत्वभागित्वेन विप्रराजोद्देश्यकगो-दण्ड-कर्मकदानकर्ता' इति बोधः । ( म० प्र० प ०६ )

---

† तथाहि—विप्राय गां ददातीत्यादौ 'परस्वत्वेच्छाधीनस्वस्वत्वध्वंसेच्छा त्यागः' इति मते स्वस्वत्वध्वंसावच्छिन्नत्यागो ददात्यर्थः । विशेष्यत्वं चतुर्थ्यर्थः । तस्य स्वनिरूपकनिरुक्तेच्छाजन्यत्वसंबन्धेन ददात्यर्थत्यागेऽन्वयः । गोरूपकर्मणस्त्वाधेयतया स्वस्वत्वध्वंसरूपफलेऽन्वयः । तथा च—'गोवृत्तिस्वस्वत्वध्वंसजनकी, निरुक्तसंबन्धेन विप्रनिष्ठविशेष्यताविशिष्टो यस्त्यागः, तदाश्रयश्चैत्रः' इति बोधः । यदि तु, 'गौर्विप्रस्य भवतु न मम' इतीच्छैव त्यागो ददात्यर्थः; तदा उक्तस्थले निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः । तस्य च स्वस्वत्वध्वंसेऽन्वयात् 'विप्रनिरूपितत्वेनेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागाऽऽश्रयः' इति बोधः ।

वृक्षायोदकमासिञ्चतीत्यत्र तु संयोगावच्छिन्नद्रवद्रव्यक्रियावच्छिन्नव्यापारो धात्वर्थः । वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः । स च धात्वर्थतावच्छेदकसंयोगान्वयी । द्वितीयार्थवृत्तित्वं तु द्रवद्रव्यक्रियान्वयि । तथा च—'वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगः ( जलसंयोगः ), तदवच्छिन्ना योदकवृत्तिर्द्रवद्रव्यक्रिया, तदवच्छिन्नव्यापारानुकूलकृतिमान्' इति नैयायिकमते बोधः । ( वै० सा० द० सुब० पृ० १९४ )

‡ अयमर्थः—चैत्राय यच्छतीत्यादिवारणाय परेति । तथा च—विप्राय गां ददातीत्यादौ तादृशचतुर्थ्यर्थो धात्वर्थतावच्छेदकफलेऽन्वेति । वृत्तित्वं द्वितीयार्थः । एवं च—'विप्रसंबन्धिपरेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूलव्यापारानुकूलकृतिमान्' इत्यन्वयधीः । ( का० व्या० पृ० ८ )

§ वैयाकरणमते तु, विप्राय गां ददातीत्यादौ परस्वत्वजनकस्वस्वत्वध्वंसावच्छिन्नेच्छात्मकस्त्यागो दाधात्वर्थः । उद्देश्यत्वं चतुर्थ्यर्थः । गोरूपकर्मणश्चाश्रयत्वेन स्वत्वरूपफलेऽन्वयः । तथा च—'गोवृत्तिस्वत्वजनकस्वस्वत्वध्वंसानुकूलो विप्राभिन्नोद्देश्यकस्त्यागः' इति बोधः, इति । ( वै० सा० द० । पृ० १९५ ) ( का० व्या० पृ० ८ )

परे तु, त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वं संप्रदानत्वम् । त्यागोऽत्र विलक्षणो ग्राह्यः । तेन, क्रयकेत्रादेर्न संप्रदानत्वम् । श्राद्धादेर्न स्वत्वभागित्वेनोद्देश्यत्वम्, किंतु प्रीतिभागित्वेन, इति संप्रदानत्वाभावेन संप्रदानचतुर्थ्यभावात् "नमःस्वस्ति" इत्यादिना चतुर्थी । एवं च—वृक्षायोदकमासिञ्चतीत्यादौ वृक्षादौ संप्रदानप्रयोगो गौणः । चतुर्थी प्राप्त्यर्थः ।

" एषोऽर्घ्यः शिवाय नमः " इत्यादौ चतुर्थ्यर्थः । ( ग० व्यु० का० ४। पृ० ९९ ) [ ३ ] तादर्थ्यम् । यथा—यूपाय दारु इत्यादौ चतुर्थ्यर्थः । [ ४ ] संबन्धः । यथा—नारदाय रोचते कलहः; वैश्याय शतं धारयती-

---

१ अधिकं तु नमःशब्दार्थे द्रष्टव्यम् ।

२ अत्र 'स एवार्थः प्रयोजनमस्य, तत्त्वम्' इति विग्रहः । प्रयोजनत्वं चात्र, समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वम् । एवं च—तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वम् । ( ग० व्यु० का० ४ । पृ० ९८ )

३ अत्र "तादर्थ्ये चतुर्थी वाच्या" इति वार्तिकेन, 'दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थत्वम्' इति समभिव्याहृतपदार्थे तद्विवक्षया यूपपदाच्चतुर्थी । इच्छाधीनेच्छाविषयव्यापाराश्रयत्वं चतुर्थ्यर्थः । प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयितयाऽन्वयः । तादृशचतुर्थ्यर्थस्याऽऽश्रयतया दार्वादावन्वयः । एवम्—'रन्धनाय स्थाली' इत्यादावूह्यम् ।

पुण्यादेः स्वर्गेच्छाधीनेच्छाविषयव्यापारानाश्रयतया न 'स्वर्गाय* पुण्यम्' इत्यादिप्रयोगः । व्रजनादेः पाकानुकूलव्यापारानाश्रयतया 'पाकाय व्रजति' इत्यादौ न तादर्थ्यचतुर्थी; अपितु "तुमर्थाच्च भाववचनात्" ( पा० सू० २।३।१५ ) इत्यनेन चतुर्थी । ( ग० व्यु० का० ४। पृ० ९८ )

४ अत्र "रुच्यर्थानां प्रीयमाणः" ( पा० १।४।३३ ) इति सूत्रेण संबन्धमात्रे बोधिका चतुर्थी उपपदविभक्तिरेव । ( म० प्र० पृ० ६ ) तथा च—[ क ] अत्रत्यचतुर्थ्या संबन्धः ( आश्रितत्वम् ); धातुना रुचिः; आख्यातेन विषयता; बोध्यते । एवं च—'नारदाश्रयरुचिविषयः कलहः' इति बोधः । ( का० व्या० पृ० ९ ) [ ख ] प्रीतिजनकत्वं रुच्यर्थः । तद्घटकप्रीतावाश्रयत्वरूपचतुर्थ्यर्थस्यान्वयः । ( ग० व्यु० का० ४। पृ० ९६ )

५ अत्र, "धारेरुत्तमर्णः" ( पा० १।४।३५ ) इति सूत्रेण संबन्धमात्रे चतुर्थी । तथा च—धारयतीत्यत्र धारणं च पुनर्दानमङ्गीकृत्य द्रव्यग्रहणम् । एवं च—'वैश्यस्य शतकर्मकतादृशग्रहणाश्रयः' इति बोधः । ( का० व्या० पृ० ९ )

---

अत एव—शत्रवेऽस्त्रं मुञ्चति, मित्राय दूतं प्रेषयतीत्यादौ धात्वर्थतावच्छेदकफलोद्देश्यत्वाभावेऽपि चतुर्थी । तत्र विभागानुकूलक्रियानुकूलव्यापारो मोचनम्; संयोगानुकूलक्रियानुकूलव्यापारः प्रेषणम्; इति धात्वर्थतावच्छेदकक्रियानुकूलफलशालित्वेन शत्रुमित्रयोरुद्देश्यत्वम् । इत्थं च—उदकादिजन्यपल्लवादि-अस्त्रजन्यदुःखादि-दूतजन्यवार्ताज्ञानादि-फलशालित्वेनोद्देश्यत्वमेव चतुर्थ्यर्थः ।

रुद्राय गां ददातीत्यादावपि गौणं संप्रदानत्वमुद्देश्यत्वम्, इत्याहुः । ( का० व्या० पृ० ९ ) ( वै० सा० सुब० पृ० १९५ )

* अत्र शाब्दिकास्तु, 'मुक्तये हरिं भजति' इत्यादौ चतुर्थ्युपपत्तये तदिच्छाधीनेच्छाविष-

त्यादौ; विष्णवे नमः इत्यादौ च चतुर्थ्यर्थः संबन्धः [ ९ ] विषयित्वम् । यथा–पुष्पेभ्यः स्पृहयति; पुत्राय क्रुद्ध्यतीत्यादौ चतुर्थ्यर्थः । (ग० व्यु० का० ४ । पृ० ९६–९८ ) ( म० प्र० पृ० ६ )

**चयनम्**–[क] छिदाहेतुर्विघट्टनम् । यथा–वृक्षं फलान्यवचिनोतीत्यत्र चिनोतेरर्थः । (श० प्र० श्लो० ७३ । पृ० ९९)

[ख] शाब्दिकास्तु, विभागपूर्वकमादानम् । यथा–वृक्षमवचिनोति फलानीत्यादौ चेरर्थः, इत्याहुः । ( ल० म० सुब० । पृ० ९२ )

**चरमत्वम्**– १ स्वसजातीयपदार्थप्रागभावानाधिकरणत्वम् । यथा–"तन्तुः पटस्य चरमावयवः" इत्यादाववयवस्य चरमत्वम् । (स्व०) २ क्वचित्, स्वेतरभावकारणानपेक्षकार्यकत्वम् । यथा–"अनुमितिं प्रति परामर्शश्चरमकारणम्" इत्यादौ कारणस्य चरमत्वम्, इति गुरुचरणाः प्राहुः ।

**चाकचक्यम् / चाकचिक्यम्**–[ १ ] [ क ] भ्रमोत्पादको दोषविशेषः । यथा–शुक्तौ

---

१ अत्र "नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" (पा० २।३।१६) इति सूत्रेण संबन्धार्थे चतुर्थी उपपदविभक्तिरेव । ( म० प्र० पृ० ६ )

२ अत्र, स्पृहाविषयपुष्पस्य "स्पृहेरीप्सितः" (पा० सू० १।४।३६ ) इत्यनेन संप्रदानत्वाच्चतुर्थी । तदर्थो विषयित्वम् । तस्येच्छारूपक्रियायामन्वयः । ( ग० व्यु० का० ४ । पृ० ९६ )

३ अत्र, "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" (पा० सू० १।४।३७) इत्यनेन कर्मणः संप्रदानसंज्ञा । चतुर्थ्यर्थो विषयित्वम् । तस्य कोपेऽन्वयः । ( ग० व्यु० का० ४। पृ० ९६ )

४ अत्र, 'फलकर्मकच्छिदानुकूलं यत् वृक्षस्य विघट्टनम् (चालनम्), तद्वान्' इत्येवं बोधः । (श० प्र० श्लो० ७३। पृ० ९९ )

५ अत्र, 'वृक्षात्फलमादत्ते' इति बोधः । ( ल० म० सुब० पृ० ९२ )

६ यथा वा–"अब्रवीत् क्रियतामेषा सूतानां चरमा क्रिया" ( भा० वि० अ० २४ ), "उत्तिष्ठेत् प्रथमं चैव चरमं चैव संविशेत्" ( मनु० ) इत्यादौ चरमत्वं बोध्यम् ।

---

यत्त्वमेव तादर्थ्ये वक्तव्यम् । तस्मात् 'स्वर्गाय पुण्यम्' इत्यादयः प्रयोगा इष्यन्त एव, इत्याहुः । ( वै० सा० द० सुब० । पृ० १९८ )

चाकचिक्यम् । (नील० प्रामा० प० ३७)

[ ख ] उज्ज्वलत्वमिति कश्चिदाह । [ २ ] तदाकारोऽन्तःकरणवृत्तिविशेष इति मायावादिन आहुः ।

**चाक्षुषम्**— १ चक्षुर्जन्यं प्रत्यक्षम् । यथा—"द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम्" इत्यादौ । २ चक्षुर्ग्राह्यम् (रूपादि) ।

**चार्वाकः**— (नास्तिकः) बृहस्पतिशिष्यो लोकायताख्यः ।

**चिकीर्षा**—[ १ ] कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणीच्छा । यथा—'पाकं कृत्वा साधयामि' इत्याकारिकेच्छा । ( चि० ४ ) ( मु०

१ अत्र च, शुक्तौ चाकचिक्यदोषवशात् 'इदं रजतम्' इति ज्ञानमुत्पद्यते, इति ध्येयम् ।

२ अत्रोच्यते—"न हि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका, किंतु विलक्षणैव । तथा हि—काचादिदोषदूषितलोचनस्य, पुरोवर्तिद्रव्यसंयोगात् इदमाकारा चाकचक्याकारा च काचिदन्तःकरणवृत्तिरुदेति" इति; "चाकचक्यमंदर्शनसमुद्बुद्धरजतत्वसंस्कारसध्रीचीना" इति च । ( वेदान्तप० ) ( वाच० )

३ अत्र व्युत्पत्तिः—'चारुः (लोकसंमतः) वाकः (वाक्यम्) यस्य सः' इति द्रष्टव्या । ( वाच० )

४ स च प्रत्यक्षैकप्रमाणवादी, परमेश्वरस्वर्गनरकपुण्यपापादिकं नाङ्गीकरोति । तन्मतं तु सर्वदर्शनसंग्रहादौ सायणादिना किंचित् किंचित् प्रदर्शितम्, तस्मादेव तत् ज्ञातव्यम् ।

५ अत्रेदमवधेयम्—[ १ ]*कृतिसाध्यताज्ञानं, इष्टसाधनताज्ञानं च चिकीर्षां प्रति कारणम् । बलवद्द्विष्टसाधनताज्ञानं तु चिकीर्षायां† प्रतिबन्धकम्, इति । अन्ये तु, बलवद्द्वेषः प्रतिबन्धकः, इत्याहुः । केचित्तु, बलवदनिष्टासाधनत्वज्ञानमपि चिकीर्षां प्रति कारणम्, इत्याहुः । ( भा० प० श्लो० १४७–१४९ ) ( मु० गु० ) [ २ ] गुरवस्तु, [ क ]कृतिसाध्यताज्ञानमात्रं चिकीर्षां प्रति कारणम्, इत्याहुः । ( मु० गु० पृ० २२२ ) [ ख ] नव्याश्चापि, चिकीर्षां प्रति कृतिसाध्यताज्ञानमेव‡ कारणम्, इत्याहुः । ( न्या० म० ४ पृ० २७ )

* कृतिरत्र प्रवृत्तिरूपा ग्राह्या । नाऽतो जीवनयोनियत्नसाध्यस्वाभाविकप्राणवायुसंचारे चिकीर्षा । ( म० प्र० ४ । पृ० ६१ )

† अतः, मधुविषसंपृक्तान्नभोजने न चिकीर्षा । ( मु० गु० पृ० २२१ )

‡ अयमाशयः—'इच्छायाः समानप्रकारकधीसाध्यत्वम्' इति नियमात्, कृतिसाध्यत्वप्रकारकेच्छां प्रति कृतिसाध्यत्वप्रकारकज्ञानत्वेनैव हेतुत्वम्, इति । ( त० प्र० ४ । पृ० १०६ )

गु० पृ० २२१ ) यथा वा–'पाकं कृत्या साध्यताम्' इत्याकारिकेच्छा । ( वाच० )

[ २ ] कृतिप्रकारकयत्किंचिद्विशेष्यकेच्छा । यथा–"पाकं चिकीर्षति" इत्यादौ । कृतिप्रकारकपाकविशेष्यकेच्छा । सा च 'पाकं कृत्या साधयामि' इतीच्छा ।

[ ३ ] कृतिविशेष्यकेच्छा । सा च यथा–'पाककृतिर्भवतु' इतीच्छैव । ( ग० व्यु० का० २। ख० २। पृ० ५९ )

[ ४ ] गुरवस्तु, कृतिसाध्यत्वप्रकारकेच्छा, इत्याहुः । ( मु० गु० पृ० २२३ )

**चित्**—१ चैतन्यवदस्यार्थोऽनुसंधेयः । २ असाकल्यम् । यथा–कश्चित्, कथंचित्, जातुचित्, इत्यादौ । ३ चयनकर्ता । यथा–अग्निचित्, इत्यादौ; । ४ अग्निः, इति च याज्ञिका आहुः । ५ अव्यक्तानुकरणम् । यथा–" न हि करिणि दृष्टे चित्कारेण तमनुमिमतेऽनुमातारः" ( चि० पक्षता० वाचस्पतिमिश्रः ) इत्यादौ, इति काव्यज्ञा वदन्ति । ( वाच० )

**चेत्**—( अव्ययम् ) [ क ] संभावनाविषयता । यथा–"सुवृष्टिश्चेदभविष्यत्, सुभिक्षमभविष्यत्" इत्यादौ । ( स्व० )

[ ख ] असंदेहेऽपि संदिग्धतया कथनम् । ( शब्दार्थचि० ) यथा–"सत्यं चेत् गुरुवाक्यमेव, पितरो देवाश्च चेत्, योगिनी प्रीता चेत्, परदेवता च यदि चेत्, वेदाः प्रमाणं हि चेत् । शाक्तीयं यदि दर्शनं भवति चेदाज्ञाप्यमोघाऽस्ति चेत्, स्वातन्त्रा अपि कौलिकाश्च यदि चेत्, स्यान्मे जयः सर्वदा" ( तन्त्रम् ) इत्यादौ । ( वाच० )

---

१ अत्रेदं बोध्यम्–पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते; नतु इच्छाया विषयत्वरूपं कर्मत्वम्, इति । ( ग० व्यु० का० २। ख० २। पृ० ५९ )

२ अत्रोच्यते–कार्यत्वज्ञानं प्रवर्तकम्, तथा हि–ज्ञानस्य कृतौ जनयितव्यायां चिकीर्षातिरिक्तं न कर्तव्यमस्ति; तत्सत्त्वे कृतिविलम्बहेत्वन्तराभावात् । चिकीर्षा च स्वकृतिसाध्यताज्ञानसाध्या; इच्छायाः स्वप्रकारकधीसाध्यत्वनियमात् । अत एव, स्वकृतिसाध्ये पाके प्रवर्तते । न त्विष्टसाधनताज्ञानसाध्या; स्वकृत्यसाध्ये चिकीर्षापत्तेः । ( चि० ४ ) ( वाच० )

**चेष्टा**—( कर्म ) [ १ ] [ क ] ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा । ( वात्स्या० १।१।११ ) यथा—"चेष्टेन्द्रियार्थाश्रयः शरीरम्" ( गौ० १।१।११ ) इत्यादौ । [ ख ] प्रयत्नवदात्मसंयोगासमवायिकारणकक्रिया[1] ।

[ ग ] स्वासमवेत-स्वातिरिक्त-स्पर्शवदन्यप्रयत्नजन्यक्रिया । ( वै० उ० ५।१।१ )

[ घ ] हिताहितप्राप्तिपरिहारार्थः स्पन्दः । ( न्या० वा० १।१।११ पृ० ७१ )

[ ङ ] हिताहितप्राप्तिपरिहारार्था क्रिया । ( त० भा० प्रमे० पृ० २९)

[ २ ] शब्दस्मारकः, शब्दानुमापको[2] वा हस्तादिक्रियाविशेषः[3] ( अभिनयः ) । यथा—मूकस्य, पद्यगानकर्त्र्या वा हस्तक्रिया । ( स्व० ) चेष्टा च, शब्दस्मारकतया शब्दानुमापकतया वा प्रमायामुपयोगिनी[4];

---

१ तल्लक्षणं च चेष्टात्वमेव । तच्च प्रयत्नजन्यतावच्छेदको* जातिविशेषः । (गौ० वृ० १।१।११)

२ अत्रानुमानं च—अयम्, 'घटमानय' इति शब्दविषयकाभिप्रायवान्, 'घटमानय' इति शब्दव्यञ्जकचेष्टाकर्तृत्वात्, यथा 'अहम्' इति । अस्मादनुमानात् घटमानयेति शब्दानुमितिः; ततोऽर्थप्रत्ययः, इति बोध्यम् । ( म० प्र० ४। पृ० ६६ )

३ अत्रोच्यते—बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च ॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः, इति । (मनु०) "वायोस्तु स्पर्शनं चेष्टा व्यूहनं रौक्ष्यमेव च" इति याज्ञवल्क्येन तस्या वायुकार्यत्वमुक्तम् । ( वाच० )

४ तथा हि—इयं चेष्टा तावत् द्विविधा । कृतसमया, अकृतसमया च । तत्र कृतसमया लिप्यादिवत् अभिप्रेतं शब्दमेव स्मारयति, न किंचित्प्रमापयतीति लिपिरिव सापि न प्रमाणम् । अकृतसमया तु चेष्टा, प्रयोजकाभिप्रायं स्मारयन्ती सती प्रयोज्यं प्रवर्तयति । ( त० व० पृ० १००–१०१ )

---

* अत्रोच्यते—"आत्मजन्या भवेदिच्छा, इच्छाजन्या भवेत्कृतिः। कृतिजन्या भवेच्चेष्टा, तज्जन्यैव क्रिया भवेत्" इति । ( वै० वि० ५।१।१ )

† अयमर्थः—शङ्खध्वनौ त्वया आगन्तव्यमिति—शङ्खध्वनिं श्रुत्वा आगच्छति । यदा मया तर्जनी ऊर्ध्वीक्रियते तदा त्वयाऽसौ ताडनीय इति, तथाविधकरणे ताडयति । तथा च—अनया चेष्टया केवलं पदार्थाः स्मार्यन्ते, न तु तेषां संसर्गोऽपि बोध्यते, इति प्रमितिविरहात् न प्रमाणत्वमस्याः, इति । अन्ये तु मानसं बोधमाहुः । (त० व० पृ० १०१)

न तु प्रमाणान्तरम्, इति नैयायिकाः । तान्त्रिकास्तु, चेष्टाऽपि प्रमाणान्तरम्, इत्याहुः । ( म० प्र० ४। पृ० ६६ ) ( सि० च० )

**चैतन्यम्**—[ १ ] [ क ] ज्ञानवत्त्वम् । ( दि० १।२ ) यथा—" शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः " ( भा० प० श्लो० ४९ ) इत्यादौ । [ ख ] ज्ञानेच्छायत्नवत्त्वम् । ( ल० व० ) यथा—आत्मनश्चैतन्यम्[1] । ( स्व० ) [ २ ] चितौ बुद्ध्यादेः प्रतिबिम्बः ( चिच्छाया ) चैतन्यम्, इति सांख्याः । [ ३ ] बुद्ध्यादावात्माध्यासात् ( चिच्छाया, चित्प्रतिबिम्बः ) चैतन्यमिति मायावादिनो वदन्ति[2] ।

**चोदना**—१ [ १ ] [ क ] विधिवाक्यम्[3] । यथा—" ओदनकामः पचेत," " स्वर्गकामो यजेत " इत्यादि वाक्यम् । ( स्व ) [ ख ] प्राभाकरास्तु, प्रवर्तकं वेदवाक्यं चोदना । यथा—" चोदनालक्षणोऽर्थो धर्मः " ( जै० सू० १।१।२ ) इत्यादौ " ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यादि वाक्यम्, इत्याहुः । ( लौ० भा० प० ३ ) [ २ ] भट्टास्तु, प्रेरणा; फलभावना । यथा " स्वर्गकामो यजेत " इत्यादौ लिङाद्यर्थाभिधारूपा चोदना, इत्याहुः । ( वाच० ) [ ३ ] प्रवर्तना । [ ४ ] प्रवृत्तिहेतुः । यथा—" ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना " ( गीता ) इत्यादौ इष्टसाधनत्वज्ञानम्, इष्टसाधनं कर्म, एतज्ज्ञानाश्रयश्चेति त्रिविधा चोदना भवति । ( श्रीधरः ) [ ५ ] अज्ञातार्थज्ञापकं शब्दमात्रम् । ( रत्नप्रभा० प० १२ ) यथा " चोदनाप्रवृत्तिभेदाच्च " ( शारी० भा० १।१।१। प० २ ) इत्यादौ । २ चोदनाविषयो यागादिप्रयत्नः । यथा—" एकं वा संयोगरूपचोदनाऽऽख्याऽविशेषात् " ( जै० सू० २।४।९ ) ( रत्नप्रभा० ) इत्यत्र " पुरुषप्रयत्नश्चोद्यते " ( शाबरभा० २।४।९) इति । ( वाच० )

---

१ अत्र श्रुतिः—" चैतन्यमात्मनो विद्या-(द्वा-)न्न बिभेति कुतश्चन " इति । ( वाच० )

२ अत्रोच्यते—" चैतन्यं परमाणूनां प्रधानस्यापि नेष्यते । ज्ञानक्रिये जगत्कर्त्र्यौ दृश्येते चेतनाश्रये " इति ॥ ( वेदान्तका० ) ( वाच० )

३ अत्रोच्यते—चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः, इति । ( भट्टका० )

**चौर्यम्**[1]–परमात्रस्वत्ववद्द्रव्यहरणम् । यथा–"सा च द्रव्यवशा कुतस्तव धनम् द्यूतेन चौरेण वा चौर्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य काऽन्या गतिः" ( उद्भटः ) इत्यादौ । ( वाच० )

**च्विः**—( प्रत्ययः ) [ क ] अभूततद्भावश्च्व्यर्थः[2] । यथा–घटं शुक्लीकरोती[3]त्यादौ शौक्ल्यादिः । ( ग० व्यु० का० ४। पृ० १०२ )

[ ख ] शाब्दिकास्तु, यत्र प्रकृतिरेव विकारसादृश्यमापद्यमाना विवक्ष्यते, तत्र च्विप्रत्ययः । यथा–संघीभवन्ति ब्राह्मणाः, त्वद्भवति देवदत्त इत्यादावपि, इत्याहुः । ( ल० म० )

**छलम्**[4]—[क] वचनविघातोऽर्थविकल्पोपपत्त्या छलम् । (गौ० १।२।१०)

[ ख ] वक्तृतात्पर्याविपर्[5]यार्थकल्पनेन दूषणाभिधानम् । ( गौ० वृ० १।५० )

---

१ अत्रोच्यते मनुना–"स्यात्साहसं त्वन्वयवत् प्रसभं कर्म यत् कृतम् । निरन्वयं भवेत्स्तेयं हृत्वाऽपह्नूयते* च यत्" इति ॥ ( मनु० अ० ८। श्लो० ३३२ ) नारदेनापि–"उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम् । सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः" इति ॥ ( वीरमित्रो० २। पृ० ४८९ )

२ तदर्थश्च–[ १ ] अभूतस्य पूर्वकालावच्छेदेन शुक्लत्वादिभावरहितस्य, तद्भावः शौक्ल्यादिः । [ २ ] अथ वा–अभूतः पूर्वकालावच्छेदेन धर्मिण्यविद्यमानः, तद्भावः शौक्ल्यादिः, इति ।

३ अत्र, शौक्ल्यादिभावश्च्विप्रत्ययार्थः । तथा च–प्रकृत्यर्थस्य ( शुक्लस्य ) †पूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वसहिताधेयत्वसंबन्धेन प्रत्ययार्थे ( शौक्ल्ये ) अन्वयः । ( ग० व्यु० का० ४ । पृ० १०२–१०३ )

४ वस्तुतस्तु–छलं निरनुयोज्यानुयोगरूपे निग्रहस्थाने एवान्तर्भवति, नातिरिक्तः पदार्थः, इति ज्ञेयम् । ( गौ० वृ० १।१।१ )

५ अत्र तात्पर्याविषयत्वं च विशेष्ये, विशेषणे, संसर्गे वा विज्ञेयम् । यथाक्रममुदाहरणानि यथा–[ १ ] नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसंख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम् । [ २ ] प्रमेयं धर्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानम् । [ ३ ] वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम्, इति । ( गौ० वृ० १।५० )

---

* अत्र 'अपव्ययते' इति पाठान्तरम् ।

† अत्र स्वपदम्, लक्षणया शुक्लवर्णविशिष्टशुक्लरूपप्रकृत्यर्थपरम् ।

[ ग ] अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणाभिधानम् । ( त० भा० पृ० ९० ) ( त० दी० प० ४३ ) यथा— "नवकम्बलोऽयं देवदत्तः" इति वाक्ये, नूतनाभिप्रायेण प्रयुक्तस्य शब्दस्य नवत्वसंख्याविशिष्टमर्थान्तरमाशङ्क्य कश्चिद्दूषयति—'नास्य नव कम्बलाः सन्ति; दरिद्रत्वात् । न ह्यस्य द्वित्वमपि संभाव्यते, कुतो नव' इति । ( त० भा० पृ० ९० ) ( नील० पृ० ४३ ) यथा वा—नवपुत्रोऽयं देवदत्त इत्यत्र नूतनाभिप्रायेण प्रयुक्तनवशब्दस्य नवत्वसंख्याभिप्रायकत्वं प्रकल्प्य दूषणाभिधानं क्रियते—'एक एव पुत्रः कष्टेनानेन लब्धः, कुतोऽस्य नवसंख्याकाः पुत्राः,' इति । ( प्र० प्र० पृ० २४ )
[ घ ] शब्दवृत्तिव्यत्ययेन प्रतिषेधहेतुः । ( सर्व० अक्ष० पृ० ११४ ) छलं त्रिविधम् । वाक्छलम्, सामान्यछलम्, उपचारच्छलं चेति । ( गौ० १।२।११ ) प्रकारान्तरेण छलं त्रिविधम्; अभिधानतात्पर्योपचारव्यत्ययवृत्तिभेदात्, इति । ( सर्व० अक्ष० पृ० ११४ )

**छिद्रम्**—गर्तवदस्यार्थोऽनुसंधेयः । ( न्या० वा० १।१।१४। पृ० ८१ )

**छेदनम्**—आरम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया । यथा—तृणं छिनत्तीत्यादौ[1] छिदेरर्थः । ( श० प्र० श्लो० ७२। पृ० ९४ ) यथा वा—"करपाददतो भङ्गे छेदने कर्णनासयोः," ( याज्ञ० अ० २। श्लो० २२४ ) "अभिज्ञाश्छेदपातानां क्रियन्ते नन्दनद्रुमाः" ( कुमार० स० २। श्लो० ४१ ) इत्यादौ । ( वाच० )

## ज.

**जगत्**[2]—१ स्थावरजङ्गमात्मकं सर्वपदार्थजातम् । ( स्व० ) यथा—"यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारा-

---

१ अत्र, छिद्यर्थनिविष्टे च संयोगे विभागे वा स्वावयववृत्तित्वसंबन्धेन तृणादेरन्वयः । ( श० प्र० श्लो० ७२। पृ० ९४ )

२ जगतो लक्षणं च प्रमेयत्वमभिधेयत्वं वा । तच्च ईश्वरीयप्रमाभिधाविषयत्वं माह्यम् । तेन, जीवानामसर्वज्ञत्वेन, ऐहिकामुष्मिकनिखिलपदार्थानामज्ञानेऽपि नाव्याप्तिः ।

यणः स्थितः", (नारा० उप० ) "यदा स देवो जागर्ति तदेदं चेष्टते जगत्," ( मनुः, अ० १। श्लो० ५२ ) "जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः । जगदादिरनादिस्त्वं जगदीशो निरीश्वरः" ( कुमार० स० २। श्लो० ९ ) इत्यादौ—इदमदश्च चराचरं सत्यभूतं सर्वं विश्वम् जगत् भवति । २ वायुरिति पौराणिकाः । ३ लोक इति काव्यज्ञा वदन्ति । ( वाच० )

**जडत्वम्**—१ ज्ञानादिमान् यो यः,तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वम् । (ल० व०) यथा—वृक्ष–पाषाणादीनां जडत्वम् । २ वेदग्रहणासामर्थ्यं जडत्वमिति धर्मज्ञाः । ३ मन्दबुद्धित्वमिति नीतिज्ञाः । ४ मूर्खत्वं चेति काव्यज्ञा आहुः ।

**जनकत्वम्**—[ १ ] कारणत्ववदस्यार्थोऽनुसंधेयः । तद्द्विविधम् । स्वरूपयोग्यत्वम्, फलोपहितत्वम् । आद्यं यथा—घटं प्रत्यरण्यस्थस्यापि दण्डादेर्जनकत्वम् । द्वितीयं यथा—इच्छां प्रति ज्ञानस्य जनकत्वम् । ( स्व० ) [ २ ] उत्पत्तिप्रयोजकत्वम् । यथा—"जन्यानां जनकः कालः" ( भा० प० श्लो० ४६ ) इत्यादौ ।

**जननम्**—१ उत्पत्तिवदस्यार्थोऽनुसंधेयः । २ जन्म । ३ आविर्भावः । यथा—"यदैव पूर्वे जनने शरीरम्" ( कुमार० स० १। श्लो० ५३ ) इत्यादौ । ४ दीक्षितस्य यज्ञादिषु दीक्षादिसंस्कारविशेष इति याज्ञिकाः ।

---

१ तेन, सुषुप्तिकाले ज्ञानादिसामान्याभावसत्त्वेऽपि, अव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तित्वेन ज्ञानाद्यवच्छिन्नप्रतियोगिताकभेदस्य चात्मनि सत्त्वेऽपि नासंभवः । ( ल० व० )

२ स्वरूपयोग्यत्वं च जनकतावच्छेदकधर्मवत्त्वम् । स च धर्मोऽत्र ( घटं प्रति दण्डः कारणमित्यत्र ) दण्डत्वादिः ।

३ फलोपहितत्वं चाव्यवहितपूर्ववृत्तित्वसंबन्धेन फलविशिष्टत्वम् ।

४ अत्र श्रुतिः—"पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति, ये दीक्षयन्ति" इत्यादिः । ( वाच० ) स्मृतिरपि—मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात्; इति । ( मनुः, अ० २। श्लो० १६९ )

**जन्म**[1]—[ **क** ] शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः । ( वात्स्या० १।१।२ )

[ **ख** ] देहेन्द्रियमनोबुद्धिवेदनाभिः संबन्धः । ( वात्स्या० १।१।१९ ) ( वै० उ० ६।२।१५ )

[ **ग** ] विशिष्टशरीरसंबन्धः । ( गौ० वृ० १।१।२ )

[ **घ** ] विजातीयशरीराद्य[2]प्राणसंयोगः । ( गौ० वृ० १।१।१९ )

[ **ङ** ] आद्यशरीर[3]प्राणसंयोगः । ( दि० १। पृ० २० ) यथा—अस्मदादीनां जन्म । ( स्व० )

[ **च** ] जातिविशिष्टाभिर्देहेन्द्रियमनोऽहंकारबुद्धिवेदनाभिः पुरुषस्याभिसंबन्धः, इति सांख्या आहुः । ( सांख्य० कौ० )

[ **छ** ] स्वादृष्टोपनिबद्धशरीरग्रहणमिति केचित् । ( वाच० )

**जन्यत्वम्**—यदधीनो यस्य समयसंबन्धः, यद्व्यतिरेकप्रयुक्तो यद्व्यतिरेकश्च, तत्त्वम् । ( मू० म० १ ) यथा—" जन्यानां जनकः कालः " ( भा० प० श्लो० ४६ ) इत्यादौ घटपटादीनां मृत्तन्त्वादिजन्यत्वम् । अधिकं तु, कार्यत्वशब्दव्याख्यानावसरे संपादितं तत्र द्रष्टव्यम् । (स्व०)

**जयः**—
**जयनम्**— } १ ग्रहणावच्छिन्नपराभवः[4] । यथा—शत्रुं शतानि जयतीत्यत्र[5] जयत्यर्थः । ( श० प्र० श्लो० ७३। पृ० ९८ ) २ परापेक्षयोत्कर्षलाभः । ३ वशीकरणम् । यथा—इन्द्रियजय इत्यादौ । ( वाच० )

---

१ अत्रोच्यते—" अण्डजोद्भिज्जसंस्वेदजरायुजमथापि वा । चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्षणम् " इति । ( भा० आनु० अ० ४२ )

२ शरीरप्राणसंयोगे आद्यत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगध्वंसानधिकरणत्वम् । (राम० १। पृ० २० )

३ शरीरे आद्यत्वं च स्वसजातीयशरीरध्वंसानधिकरणत्वम् । शरीरप्राणसंयोगे त्वाद्यत्वमुक्तमेव।

४ पराभवश्च तिरस्कारः । ( श० प्र० श्लो० ७३। पृ० ९८ )

५ अत्र 'शतस्य ग्रहणानुकूलो यः शत्रुकर्मकः पराभवः, तत्कर्ता' इत्येवं बोधः । ( श० प्र० श्लो० ७३। पृ० ९८ )

**जरायुः**—[क] गर्भवेष्टनचर्मपुटकम्। (दि० १। पृथिवी० पृ० ७०) यथा—"जरायुजं मानुषादीनां शरीरम्"। (मु० १। पृथिवी० पृ० ७०) इत्यादौ।

[ख] गर्भावरणचर्म (गर्भाशयः) (कुल्लूक० १।४३) यथा—"जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्गनिरोधाच्च न गर्भस्थः प्ररोदिति" (सुश्रुत०) इत्यादौ।

[ग] या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते। (देवी भाग०)

**जलम्**—१ "आपः" इत्यस्यार्थोऽनुसंधेयः। २ लग्नावधिकं चतुर्थस्थानमिति कार्तान्तिका आहुः। ३ पूर्वाषाढानक्षत्रमिति मौहूर्तिका आहुः।

**जल्पः**[3]—(कथा) [क] यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। (गौ० १।२।२) यथोक्तोपपन्न इति, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः। छलजातिनिग्रहस्थानसाधनोपालम्भ इति, छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन्क्रियत इति। एवंविशेषणो जल्पः। (वात्स्या० १।२।२)

---

१ जरायुजभेदाश्च मनुना (अ० १। श्लो० ४३) दर्शिता यथा—"पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः। रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः" इति। तत्र व्यालाः सिंहाद्याः। (कुल्लू० ?) तल्लक्षणं तु, "या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते" इति। "शुक्रशोणितयोर्योगस्तस्मिन्संजायते यतः॥ तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः" इति। (देवीभाग०) (वाच०)

२ अत्रोच्यते—अपां शैत्यं तथा क्लेदो द्रवत्वं स्नेहसौम्यता। जिह्वाभिष्यन्दनं चापि भौमानां स्रवणं तथा॥ चतुर्थमापो विज्ञेयं जिह्वाऽध्यात्मं प्रचक्षते। अधिभूतं रसास्तत्र सोमस्तत्राधिदैवतम्, इति। (भा० आश्व०)

अपां परिणामश्छान्दोग्ये समाम्नायते—"आपः पीतास्त्रेधा विधीयन्ते—तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति; यो मध्यमस्तल्लोहितम्; योऽणिष्ठः स प्राणः" इति। (वाच०)

अत्रेदं बोध्यम्—हिमकरकादीनां सांसिद्धिकद्रवत्वमस्त्येव; न तु नैमित्तिकद्रवत्वम्। अदृष्टविशेषेण घनीभावात्सांसिद्धिकद्रवत्वप्रतिबन्धमात्रम्। (सि० च० १। पृ० ७)

३ जल्पस्तु यथासंभवं सर्वनिग्रहाणामधिकरणम्, परपक्षे दूषिते स्वपक्षस्थापनप्रयोगावसानश्चेति बोध्यम्। (त० भा० प० ४४)

[ ख ] उभयपक्षसाधनवती विजिगीषुकथा । ( गौ० वृ० १।४२ ) (त० भा० प० ४४) (त० दी० प० ४३) (सर्व० अक्ष०पृ०११४)

**जहत्स्वार्था**[1]—( लक्षणा ) [ क ] यत्र वाच्यार्थस्यान्वयाभावस्तत्र[2] जहती । यथा—मञ्चाः[3] क्रोशन्तीति । ( त० दी० ४। प० ३० ) यथा वा—आयुर्घृतम्[4], इत्यादौ । ( काव्यप्र० उ० २ )

[ ख ] लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा । (न्या० बो० ४। प० २० ) यथा—गङ्गायां[5] घोष इत्यादौ गङ्गापदस्य तीरे लक्षणा । ( मु० ४। प० १८० )

[ ग ] शक्यावृत्तिरूपेण बोधकतया जहत्स्वार्थेत्युच्यते । यथा—तीरत्वादिना[6] गङ्गादिपदस्य । ( श० प्र० )

---

१ अत्र व्युत्पत्तिः [ क ] 'जहत् स्वार्थो याम्' इति । ( वाच० ) [ ख ] 'जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था' इति । ( वै० सा० )
अत्रायं नियमः—"जहत्स्वार्था च तत्रैव यत्र रूढि-( प्रसिद्धिः, समुदायशक्तिर्वा )विरोधिनी ( योगविरोधिनी )" इति । ( न्या० म० ख० ४। पृ० ११ )

२ तदुक्तम्—" जहत्स्वार्था च तत्रैव यत्र ( शक्यान्वयबोधे ) रूढिर्विरोधिनी" इति । ( न्या० म० ४। पृ० ११ ) ( म० प्र० ४। पृ० ४३ )

३ अयं भावः—वाच्यार्थस्य क्रोशनकर्तृत्वस्य मञ्चेष्वन्वयासंभवात्, मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम्, इति । ( नील० ४। प० ३० )

४ अत्र, आयुःशब्देनायुःसाधनस्य बोधनात्, स्वार्थस्य ( शक्यार्थस्य ) आयुषस्त्यागात् जहत्स्वार्थात्वमिति बोध्यम् । तथा चात्र 'आयुःसाधनं घृतम्' इति बोधः ।

५ अत्रेदं बोध्यम्—गङ्गापदस्य शक्यार्थे प्रवाहरूपे घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा यत्र प्रतिसंधीयते, तत्र लक्षणया तीरस्य बोधः, इति । ( मु० ४। प० १८० )
अत्रायं विशेषः—गङ्गापदशक्यप्रवाहसबन्धस्य तीरे सत्त्वात्, तादृशशक्यसंबन्धरूपलक्षणाज्ञानात् गङ्गापदात्तीरोपस्थितिः ( तीरस्मृतिः ) । ततः शाब्दबोधः । ( मु० ४। प० १८० ) ( न्या० बो० ४। प० २० )

६ अत्रायं भावः—यदा गङ्गापदात्तीरत्वेन तीरमात्रबोधस्तदा जहत्स्वार्थैव लक्षणा । यदा तु गङ्गापदाद्गङ्गातीरत्वेन गङ्गातीरबोधस्तदाऽजहत्स्वार्था लक्षणा, इति । ( दि० ४। पृ०१८० ) एवमेव "मञ्चाः क्रोशन्ति" इत्यादावपि बोध्यम् ।

[ घ ] स्वार्थपरित्यागेन परार्थलक्षणा । ( त० प्र० ख० ४। पृ० ३९ )

[ ङ ] शाब्दिकाश्चापि, शक्यार्थपरित्यागेन, इतरार्थलक्षणा जहत्स्वार्थे-त्याहुः । ( ल० म० )

[ च ] मायावादिनस्तु, शक्यार्थमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिः, तत्र जहल्लक्षणा । यथा—विषं भुङ्क्ष्वेत्यादौ, इत्याहुः । ( वेदान्त प० )

**जहदजहत्स्वार्था**—( लक्षणा ) [ क ] यत्र वाच्यैकदेशत्यागेनैकदेशान्वयस्तत्र जहदजहती लक्षणा । यथा—सोऽयं देवदत्त इत्यादौ; "अयमात्मा तत्त्वमसि श्वेतकेतो" ( छान्दो० उ० ) इत्यादौ च । ( त० दी० ४। पृ० ३० ) ( नील० ४ । पृ० ३० )

[ ख ] वाच्यार्थैकदेशत्यागेनैकदेशवृत्तिर्लक्षणा । ( वाच० )

[ ग ] मायावादिनस्तु, यत्र विशिष्टवाचकः शब्दः, एकदेशं विहाय ए-

१ अयं भावः—गङ्गायां घोष इत्यादौ स्वार्थस्य प्रवाहस्य त्यागात् 'तीरे घोषः' इत्येव बोधः । यदि च गङ्गातीरत्वेन बोधः; तदाऽजहत्स्वार्थैव, इति । ( त० प्र० ख० ४। पृ० ३९ )

२ शक्यार्थपरित्यागश्च, शक्यार्थस्य येन केनापि रूपेण लक्ष्यार्थान्वयिनाऽनन्वयित्वम् । अतः, गां *वाहीकं पश्येत्यादौ न दोषः । ( ल० म० )

३ अत्र, स्वार्थं विहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते । ( वेदान्त प० )

४ अत्र 'जहच्च, अजहच्च स्वार्थौ याम्' इति व्युत्पत्तिर्द्रष्टव्या ( वाच० )

५ सोऽयं देवदत्त इत्यादौ, तत्तांशस्येदानीमसंभवाद्धानम्; इदंतांशस्य संभवादहानमिति जहदजहल्लक्षणामाचक्षते नैयायिकाः । ( नील० ४। पृ० ३० )

६ तत्त्वमसीत्यादौ तु, तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे चैतन्ये, त्वंपदवाच्यस्य किंचिज्ज्ञत्वान्तःकरणादिविशिष्टस्याभेदान्वयानुपपत्त्या †उभयत्र विशेषणांशपरित्यागः । तथा च—तत्पदलक्ष्यस्य शुद्धचैतन्यस्य, त्वंपदलक्ष्येण तेन सहाभेदान्वयोपपत्तिरित्यभिप्रायः ।
इदमुदाहरणं च, जीवब्रह्मणोरैक्यं ब्रुवतां मायावादिनां सिद्धान्ताभिप्रायेणास्तीति विज्ञेयम् । ( नील० ४। पृ० ३० )

* अत्र गोसदृशे लक्षणायामपि, न गोस्तदन्वयिदर्शनक्रियाऽन्वयित्वम् । ( ल० म० )

† अत्र केचिदाहुः—यथा, घटोऽनित्य इत्यादौ, अनित्यत्वस्य घटत्वादावन्वयायोग्यत्वेऽपि विशेष्ये घटेऽन्वयः; तथाऽत्रापि शिष्टयोरभेदान्वयानुपपत्तावपि शक्त्युपस्थापितयोर्विशेष्यमात्रयोरभेदान्वयोपपत्तौ, नात्र लक्षणा स्वीक्रियते, इति ।

कदेशे वर्तते, तत्र जहदजहल्लक्षणेत्याहुः । ( वेदान्त प० ) केचिन्नैयायिकाश्च, जहत्स्वार्थायामियं लक्षणाऽन्तर्भवतीति, नातिरिक्तेयं जहदजहत्स्वार्था लक्षणाऽङ्गीकर्तव्या, इति मन्यन्ते ।

**जहदजहल्लक्षणा**—जहदजहत्स्वार्थावदस्यार्थोऽनुसंधेयः ।

**जहल्लक्षणा**[1]—जहत्स्वार्थावदस्यार्थोऽनुसंधेयः ।

**जातिः**—१ [ १ ] ( सामान्यम् ) [ क ] समान[2]प्रसवात्मिका जाति[3]ः । ( गौ० २।२।७१ )

[ ख ] यच्च केषांचिद्भेदं कुतश्चिद्भेदं करोति, तत् सामान्यविशेषो जा[4]तिरिति । ( वात्स्या० २।२।७१ ) (वै०१।२।३) (वै० उ० १।२।३) [ ग ] समानाकारबुद्धिजननयोग्यधर्मविशेषः; नित्यानेकसमवेतः, इत्यपि वदन्ति । ( गौ० वृ० २ । १३४ ) ( त० प्र० १ ) यथा—"सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः" ( भा० प० श्लो० १९) इत्यादौ । यथा वा—"संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च," "संकेतितश्चतुर्भेदो जात्यादिर्जातिरेव वा" ( काव्यप्र० उ० २ ) "असंपादयतः कंचिदर्थं जातिक्रियागुणैः" ( माघ० स० २ । श्लो० ४७ ) इत्यादौ द्रव्यत्व-गुणत्व-कर्मत्वादिर्जातिः ।

---

१ अत्र व्युत्पत्तिः—'जहत् स्वार्थो ( उत्तरपदलोपः ) याम्' इति । ( वाच० )

२ समानः समानाकारकः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा । तथा च—समानाकारबुद्धिजननयोग्यत्वमर्थः । ( गौ० वृ० २।१३४ )

३ तल्लक्षणं च [ क ] प्रकारतया शब्दशक्तिग्रहविषयत्वम् । [ ख ] शक्तिसंबन्धेन जातिपदवत्त्वम्, इति नैयायिकसिद्धान्तः ।

अत्र, जातौ व्यक्तौ वा विशिष्टे वा समुदाये वा शक्तिरित्यत्र प्राभाकरादीनां विप्रतिपत्तयस्तावत्, शक्तिशब्दव्याख्यानावसरे प्रदर्शयिष्यन्त इति तास्तत्रैवावलोकनीयाः ।

४ जातिबाधकानि षट् सन्ति । तथा चोक्तमुदयनाचार्येण—"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः" इति । ( द्रव्यकिर० ) तदर्थश्च व्यक्त्यभेदादिशब्देषु द्रष्टव्यः ।

[ घ ] शाब्दिकास्तु, अनुगतैकाकारबुद्धिजननसमर्थः, अवयवव्यङ्ग्यः सकृदुपदेशव्यङ्ग्यश्च धर्मविशेषः, इत्याहुः । [ २ ] शुद्ध-संकीर्ण-भेदेन प्रत्येकं द्विविधा ब्राह्मणत्वादिर्जातिरिति मन्वादयः । [ ३ ] आकृतिव्यङ्ग्यमेव सामान्यम्, जातिरिति प्राभाकराः । [ ४ ] स्वभाव इति काव्यज्ञाः ।

२ मात्राकृतं छन्दो जातिरिति वृत्तशास्त्रज्ञाः । ३ दृष्टजाति–शेषजाति–विश्लेषजाति-प्रभृतयः, प्राचीनानामिष्टकर्मसंज्ञाभेदाः, इति लीलावतीकाराः । ( वाच० ) ४ जन्मेति धर्मज्ञाः । ५ जातिवाचकः शब्दो जातिरिति शाब्दिकाः ।

जातिः—[ क ] साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । ( गौ० १।२।१८ ) प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सा जातिः । स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति । उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम् । उदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति । ( वात्स्या० १।२।१८ )

[ ख ] छलादिभिन्नदूषणासमर्थमुत्तरम् ।

[ ग ] स्वव्याघातकमुत्तरम् । ( गौ० वृ० १।५८ ) ( सर्व० अक्ष० पृ० ११४ ) ( नील० पृ० ४३ )

---

१ अत्रोच्यते–"आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सहेति" इति । ( महाभा० )

२ तन्मते गुणकर्मणोर्जातिर्नास्ति, इति बोध्यम् । ( वै० वि० १।२।३ )

३ तथोक्तम्–"आचार्यस्त्वस्य यां जातिं विधिवद्वेदपारगः । उत्पादयति सावित्र्या सा सत्या साऽजराऽमरा" इति । ( मनु० अ० २। श्लो० १४८ )

४ अत्र चिन्त्यते–[ १ ] इयं च जातिर्हेत्वाभासदोषदेशनाभासा, इति प्रतिभाति, इति । (स्व०) [ २ ] इयं जातिर्निरनुयोज्यानुयोगरूपे हेत्वाभासेऽन्तर्भवति । (गौ० वृ० १।१।१)

५ तदर्थश्च–व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिः, इति । व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यम् । तेन च, संदर्भेण दूषणासमर्थत्वम्, स्वव्याघातकत्वं वा दर्शितम् । ( गौ० वृ० १।५८ )

[घ] असदुत्तरम्[1] । ( त० दी०पृ० ४३ ) ( त० भा० पृ० ९० ) यथा—पर्वतो वह्निमान् धूमात् महानसवदित्यत्र 'यद्ययं पर्वतो महानससाधर्म्यात् धूमवत्त्वाद्वह्निमान्, तर्हि ह्रदसाधर्म्यात् द्रव्यत्ववत्त्वाद्वह्न्यभाववानेव किं न स्यात् ?', इति । (प्र० प्र० पृ० २४) जातयश्चतुर्विंशतिः । साधर्म्यसमः, वैधर्म्यसमः, उत्कर्षसमः, अपकर्षसमः, वर्ण्यसमः, अवर्ण्यसमः, विकल्पसमः, साध्यसमः, प्राप्तिसमः, अप्राप्तिसमः, प्रसङ्गसमः, प्रतिदृष्टान्तसमः, अनुत्पत्तिसमः, संशयसमः, प्रकरणसमः, अहेतुसमः[2], अर्थापत्तिसमः, अविशेषसमः, उपपत्तिसमः, उपलब्धिसमः, अनुपलब्धिसमः, नित्यसमः, अनित्यसमः, कार्यसमः, इति । ( गौ० ९।१।१ ) ( त० भा० पृ० ९०—९१ ) (त० दी० पृ० ४३—४९ )

**जातिबाधकम्**—व्यक्त्यभेदाद्यन्यतमम् । जातिबाधकानि तु षट् । व्यक्त्यभेदः, तुल्यत्वम्, सङ्करः, अनवस्था, रूपहानिः, असंबन्धश्चेति । ( द्रव्यकिर० )

**जिज्ञासा**—१ [१] प्रश्नः । ( ग० अवयव० हेतु० पृ० ६० ) यथा—"लोके 'किं वह्निमत् ?' इति प्रश्ने 'तद्गृहं वह्निमत्' इत्युत्तरिते 'कुतः ?' इति जिज्ञासायां 'धूमवत्त्वात्' इत्युत्तरं च" ( दीधि० हेतु० पृ० १७६) इत्यादौ । [२] [क] अवान्तरधर्मप्रकारकज्ञानेच्छा[3] । (ग० सव्य०) यथा—घटे द्रव्यत्वेन ज्ञातेऽपि 'कोऽसौ ?' इति विशेषतो जिज्ञासोदेति । (स्व०)

[ख] विशेषज्ञानगोचरेच्छा[4] । (म० प्र० ३। पृ० ३४) २ विचारः ।

---

१ उत्तरस्यासत्त्वं तु, स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वम् । ( नील० पृ० ४३ )

२ अत्र हेतुसम इति पाठः केषुचित्पुस्तकेषु दृश्यते , स सूत्रेष्वनुपलम्भादपपाठः, इति विज्ञेयम् । ( स्व० )

३ इयं च विशेषजिज्ञासेत्युच्यते । ( ग० सव्य० )

४ तच्च ज्ञानं स्वनिष्ठम्, परनिष्ठं वा । तेन, जल्पकथायां परं प्रति न प्रश्नानुपपत्तिः । ( म० प्र० ३। पृ० ३४)

यथा–"अथातो धर्मजिज्ञासा" ( जै० सू० १।१।१ ), "ॐ अथातो ब्रह्मजिज्ञासा ॐ" ( ब्र० सू० १।१।१ ) इत्यादौ । यथा वा–"दुःखत्रयाभिघाताज्जिज्ञासा तदवघातके हेतौ" ( सां० का० ) इत्यादौ विचारो जिज्ञासापदार्थः ।

**जिनः**—अर्हन्नामकबौद्धविशेषः । यथा–"हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरम्" इत्यादौ जिनः । ( वाच० ) तन्मतादिकं तु ( स्याद्वादादिकम्, जीवस्य देहपरिमाणरूपत्वनिरूपणादिकं च) सर्वदर्शनसंग्रहे ( आर्हतदर्शनादौ ), अन्यजैनग्रन्थेषु च द्रष्टव्यम् ।

**जीवः**[१]—१ ( आत्मा ) [ क ] यो घ्राणादीनां करणानां प्रयोक्ता, स आत्मा । ( वै० उ० ३।१।२ )

---

१ जीवः क्षेत्रज्ञादिपदवेदनीयः । ( सि० च० १। आत्म० पृ० १२ ) जीवलक्षणं च [ क ] "इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्" इति । ( गौ० १।१।१० ) [ ख ] सुखदुःखादिकम् । ( त० दी० १। पृ० ११ ) [ ग० ] जन्यज्ञानाधिकरणत्वम् । ( सि० च० १। पृ० १२ )

जीवसद्भावे प्रमाणं प्रत्यक्षमेव; जीवस्य 'अहं सुखी, दुःखी,' 'अहम्' इत्यादिमानसप्रत्यक्षविषयत्वात्, इति नैयायिकाः । ( प्र० प्र० प्रमे० पृ० १० ) ( मु०१ ) । जीवो न मानसप्रत्यक्षविषयः,* इति वैशेषिका आहुः । जीवस्य प्रत्यक्षत्वे विप्रतिपत्तौ तु, †अनुमानमेव

---

* अयमाशयः–'अहं सुखी' इत्याद्याकारकम्, योग्यविशेषगुणयोगेनैवात्मनः ( जीवस्य ) प्रत्यक्षम्; न तु केवलम् 'अहम्' इत्याकारकम्, इति । ( त० व० प्रमाणपरि० ३। श्लो० ५१ ) ( मु० १। आत्म० पृ० १०७ ) ( वै० ३।२।१८ ) (भा० प० श्लो० ५०)

† तथा हि–[ क ] "इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः" ( वै० ३।१।२ ) [ ख ] अनुमानप्रयोगस्तु–'रूपादिसाक्षात्कारो द्रव्याश्रितः, गुणत्वात् रूपवत्' इत्यनुमानेन इतरबाधसहकृतेन आत्मनः सिद्धिः । ( वै० वि० ३।१।२ ) [ ग ] 'प्रसिद्धिः क्वचिदाश्रिता, कार्यत्वात् घटवत्; गुणत्वाद्वा, क्रियात्वाद्वा;' 'सा च प्रसिद्धिः करणजन्या क्रियात्वात् छिदिक्रियावत्' । यच्च प्रसिद्धेः करणं तदिन्द्रियम् । 'तच्च कर्तृप्रयोज्यम्, करणत्वात् वास्यादिवत्' । तथा–यत्रेयं प्रसिद्धिराश्रिता, यो घ्राणादीनां करणानां प्रयोक्ता स आत्मा । ( वै० उ० ३।१।२ ) [ घ ] 'बुद्ध्यादयः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रिताः, पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति गुणत्वात्; यत्तु पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रि-

[ख] इन्द्रियाद्यधिष्ठाता ।

[ग] बन्धमोक्षयोग्यः । ( सि० च० १। पृ० १२ )

[घ] शरीरसापेक्षज्ञानवान् । ( प्र० प्र० प्रमेय० पृ० १० )

[ङ] अनित्यज्ञानवान् । ( त० कौ० १।पृ० ३ ) यथा—"हन्ताहमिमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" ( छा० उ० ) इत्यादौ ।

[च] बादरायणाचार्यास्तु, "एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृतम् । एष चेतनया युक्तो जीव इत्यभिधीयते" ( भाग० ) इत्याहुः ।

[छ] मायावादिनस्तु, [१] उपाधिप्रविष्टं वाङ्मनःप्राणकरणग्रामानुप्रविष्टं ब्रह्म जीवः; ( २ ) घटावच्छिन्नाकाशवत् शरीरत्रितयावच्छिन्नं

---

इन्द्रियार्थभिन्नस्य जीवस्य सद्भावे प्रमाणम् । तत्र लिङ्गं च [क] *प्राणापान—निमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि । ( वै० ३। २।४ ) [ख] आत्मेन्द्रियार्थसंनिकर्षाद्यन्निष्पद्यते तदन्यत् । ( वै० ३।१।१८ ) ( वै० ३।१।१९ ) [ग] इच्छा, प्रणिधानम्, प्राणापानौ, निमेषादिः, क्षतसंरोहणम्, इत्यादीनि लिङ्गानि आत्मानम् ( जीवात्मानम् ) गमयन्ति । ( त० व० श्लो० २—१४। पृ० १३८ ) ( भा० प० श्लो० ४८—५१ )

१ इन्द्रियाणां शरीरस्य च परम्परया चैतन्यसंपादक इत्यर्थः । ( मु० १। आत्म० पृ०९६ ) तन्त्रान्तरे तु, इन्द्रियाणामधिष्ठात्र्यो देवता उक्ताः । ता यथा—"दिग्-वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्र-मित्र-काः" इति । (शारदाति०) "वैकारिका दिगाद्याश्च चन्द्रेणैकादश स्मृताः। इन्द्रियाणामधिष्ठातृदेवास्ते सात्त्विका मताः" इति । ( पदार्थादर्शे ) ( वाच० )

२ मायावादिमते त्रयो हि जीवस्योपाधयः—तत्र, सुषुप्तौ बुद्ध्यादिसंस्कारवासितमज्ञानमात्रम्; स्वप्ने जाग्रद्वासनामयं लिङ्गशरीरम्; जाग्रदवस्थायां सूक्ष्मशरीरसंसृष्टं स्थूलशरीरम्; उपाधिरिति तत्तदुपाध्युपलक्षितजाग्रत्स्वप्नसुषुप्तयोऽप्युपाधिशब्देन व्यवह्रियन्ते । ( वाच० )

---

तो न भवति, नासौ पृथिव्याद्यष्टद्रव्यानाश्रितो गुणो भवति यथा रूपादि' इति केवलव्यतिरेक्यनुमानम् । ( त० भा० प्रमेय० पृ० २५ )

* सुषुप्तिदशायामपि प्राणापानयोरूर्ध्वाधोगत्योरनुकूलं प्रयत्नान्तरम् ( जीवनयोनिः प्रयत्नः ) अस्त्येव, इति । एवम्—निमेषोन्मेषावपि शरीराधिष्ठातारमनुमापयतः, इत्यादि । ( वै०उ० ३।२।४ )

चैतन्यम्; [३] दर्पणमुखप्रतिबिम्बवत् बुद्धिस्थं चैतन्यप्रतिबिम्बम्; [ ४ ] साभासाहंकारश्चित्प्रतिबिम्बम्; [ ५ ] अन्तःकरणोपहितं चैतन्यम्; [ ६ ] अज्ञानस्य व्यष्टिशक्ति[1]भेदो जीवः; । स च परमात्मनोऽभिन्नश्च, इत्याहुः । [ ज ] अनेकान्तवादिनस्तु, जीवास्तिकायसंज्ञया परिभाषितः पदार्थविशेष इत्याहुः । २ जीविकाख्या वृत्तिर्जीव इति काव्यज्ञा वदन्ति । ( वाच० ) न्यायवैशेषिकनये, जीवो देहेन्द्रियार्थादिव्यतिरिक्तः[2], परमात्मनोऽतिरिक्तश्च[3] । जीवः सुखदुःखवैचित्र्यान्नाना[4]भूत एव; प्रतिशरीरं[5] भिन्नः; विभु[6]-

१ अत्रोच्यते–" कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति । ( वेदा० ५० )

२ अत्र सूत्रम्–" इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः" ( वै० ३।१।२ )

३ अत्र सूत्रम्–"शास्त्रसामर्थ्याच्च" ( वै० ३।२।२१) शास्त्रं च (श्रुतिः) "द्वे ब्रह्मणी वेदितव्ये" इत्यादि । तथा–"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इति । (वै०उ० ३।२।२१) नच, "तत्त्वमसि श्वेतकेतो" "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिश्रुतीनां का गतिरिति वाच्यम् । "तत्त्वमसि" इति श्रुतेस्तदभेदेन तदीयत्वप्रतिपादनेनाभेदभावनापरत्वात् । "ब्रह्मविद्ब्रह्मैव" इति श्रुतिश्च निर्दुःखत्वादिनेश्वरसाम्यं जीवस्याभिधत्ते; न तु तदभेदम्; इत्यादि । ( वै० वि० ३।२।२१ )

४ तद्यथा–" कश्चिद्दरिद्रः कश्चिदाढ्यः कश्चिदन्यविधः पुनः । अनयैवात्मनानात्वं सिद्ध्यत्यत्र व्यवस्थया "। ( त० व० आ० श्लो० ९० । पृ० १५३ ) ( वै० ३।२।२० )

५ अत्र, भोगवत्त्वे सति अनवच्छिन्नभोगवद्भिन्नो भिन्नशब्दार्थः । द्वितीयार्थोऽवच्छेद्यत्वम् व्युत्पत्तिवैचित्र्यात् भोगे, अनवच्छेद्यत्वे चान्वेति । शरीरपदं तु प्रयोज्यतासंबन्धेन तत्तन्मनोविशिष्टपरम् । तेन, एकैकात्मनो जन्मभेदेनावस्थाभेदेन, कायव्यूहस्थले च नानाशरीरसत्त्वेऽपि न क्षतिः; एकस्यैव मनसः पूर्वपूर्वजन्मार्जितधर्माधर्मद्वारा सकलशरीरप्रयोजकत्वात् । तथा च-[ क ] 'एकैकात्मा यत्किंचिन्मनोविशिष्टशरीरावच्छिन्नभोगवत्त्वे सति तादृशशरीरानवच्छिन्नभोगवद्भिन्नः' इति वाक्यार्थः । ( वाक्य० १। पृ० ५–६ ) [ ख ] 'एतच्छरीरावच्छिन्नभोगवान्, समानकालिकयोगजधर्माद्यजन्यशरीरावच्छिन्नभोगवद्भिन्नः' इति च । ( नील० १। पृ० ११ )

६ स च सर्वत्र ( सर्वशरीरावयवेषु ) कार्यस्य ( ज्ञानादेः ) उपलम्भाद्विभुः । विभुत्वान्नित्योऽसौ व्योमवत् । ( त० भा० प्रमे० पृ० २५ ) ( वै० ३।२।५ ) जीवस्याणुत्वाङ्गीकारे, कायव्यूहस्थले ( योगिनः ) सुखादिसाक्षात्कारानुपपत्तिरतो विभुत्वमङ्गीकर्तव्यम् । ( नील० १। पृ०११ ) किंच, जीवस्यानित्यत्वाङ्गीकारे कृतस्य कर्मणो हानेः, अकृतस्याभ्यागमस्य च प्रसङ्गः । अतस्तस्य नित्यत्वमङ्गीकर्तव्यम् । ( त० दी० १। पृ० ११ )

नित्यश्च। (त० सं०) (त० भा० पृ० २४) (सि० च० १।पृ० १२) (वै० ३।२।९) (प्र० प्र० प्रमे० पृ० १०)

'जीवो विभुः' इति सांख्य-नैयायिक-वैशेषिक-पातञ्जल—मायावादिवेदान्तिन आहुः। अणु[1]परिमाणो नानाविधश्च जीव इति रामानुजीय-माध्वादयो वैष्णवाः। मध्यम[2]परिमाणरूपो जीव इति माध्यमिकबौद्धाः। तत्रापि देहपरिमाणरूपो जीव, इत्यार्हताः।

जीव एक[3] एव, न तु नाना, इति मायावादिवेदान्त्येकदेशिन आहुः। वैशेषिकसिद्धान्ते, जीवात्मनि चतुर्दश गुणा वर्तन्ते। ते च संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः, भावनाख्यसंस्कारश्चेति। (त० भा० प्रमे० पृ० ३१) (भा० प० श्लो० ३२–३३) तत्र—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्ना द्विक्षणावस्थायिनस्तृतीयक्षणे नश्यन्ति[4]। (त० कौ० गु० पृ० १९) तत्र संख्यादिपञ्चकं तु, आत्मनो द्रव्यत्वेन सिद्धम्। आत्मैकत्वपरिमाणे, बुद्ध्यादयः प्रयत्नान्ताश्च प्रत्यक्षसिद्धाः। तत्रात्मैकत्वपरिमाणे न प्रत्यक्षयोग्ये इति टीकाकृत आहुः। (प० मा०) (गु० इत्या-

**जीवनम्**—सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितः।

---

१ अत्र श्रुतिः—"वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति। शङ्खस्मृतिरपि—"वालाग्रशतशो भागः कल्पितस्तु सहस्रधा। तस्यापि शतशो भागो जीवः सूक्ष्म उदाहृतः" इति। (वाच०)

२ अत्र नैयायिकाः समुत्तिष्ठन्ते। तथा हि—जीवस्य परमाणुरूपत्वाङ्गीकारे जीवगतज्ञानादिप्रत्यक्षानुपपत्तिः; सर्वशरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गश्च; योगिनो नानाशरीरावच्छेदेन सुखाद्यनुपलब्धिप्रसङ्गश्च। मध्यमपरिमाणरूपत्वाङ्गीकारे च अनित्यत्वापत्त्या कृतहान-अकृताभ्यागमयोः प्रसङ्गः; इति जीवस्य विभुत्वमवश्यमङ्गीकर्तव्यमिति न्यायग्रन्थतात्पर्यम्। (सि० च० १। पृ० १२) (वाक्य० १। पृ० ५) (नील० १। पृ० ११)

३ एतन्मते, अविद्याप्रतिबिम्बो जीव इति मन्तव्यम्। अनेकजीववादिमायावादिमते तु, अन्तःकरणप्रतिबिम्बः; स च जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयवान्, इति विवेकः। (वाच०)

४ अत्रायं नियमः—'योग्यविभुविशेषगुणानां स्वद्वितीयक्षणोत्पन्नगुणनाश्यत्वम्' इति। (त० कौ० गु० पृ० १९) (मु०)

(वात्स्या० ३।२।२७) यथा—"शतं जीवन्तु शरदः" (ऋ० १०। १८।१) इत्यादौ; "संशयं पुनरारुह्य यदि जीवति पश्यति" (हितो०) इत्यादौ च। (वाच०)

**जीवनयोनियत्नः**—(प्रयत्नः) [क] साहजिकप्राणसंचारविषयकयत्नः। (दि० गु०)

[ख] जीवनादृष्टजन्यो गुणः। (सि० च० पृ० ३९)

[ग] श्वास-प्रश्वास-हेतुर्यत्नः। (त० कौ० गु० पृ० १९) (सि०-च० पृ० ३९)

**जीवन्मुक्तिः**—(निःश्रेयसम्) [१] योगजादृष्टजन्यतत्त्वसाक्षात्कारः।

१ स च प्राणसंचारकारणम्, यावज्जीवमनुवर्तते, अतीन्द्रियः, शरीरे प्राणसंचारानुमेयश्च,* इति बोध्यम्। (वै० उ० ५।२।१६) (भा० प० श्लो० १५३)

धावतः प्रयत्नोत्कर्षेण श्वासक्रियोत्कर्षदर्शनात्, श्वासक्रियात्वावच्छिन्ने एव यत्नजन्यत्वनिश्चयः, 'यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि' इति न्यायात् जीवनयोनियत्नसिद्धिः। (त० प्र० ख० ४। पृ० ९७) नव्यनैयायिकास्तु जीवनयोनियत्नं नाङ्गीचक्रुः। (दि० गु० पृ० २३२)

विंध्दशायामपि, आत्मनो येन प्रयत्नेन प्राणापानयोरूर्ध्वाधोगती भवतः, स प्रयत्नो जीवनयोनिसंज्ञको भवतीत्यर्थः। (वै० उ० ३।२।४)

२ इयं चापरनिःश्रेयसमित्युच्यते। जीवन्मुक्तेरुपायास्तु;—श्रवण—मनन—निदिध्यासन—तत्त्वज्ञानानि, योगाभ्यासादयः, तन्त्रोक्तकुलाचाराश्च†।

* तथा हि—शरीरे प्राणसंचारो (अधिकश्वासादिः) यत्नसाध्यतया दृष्टः। इत्थं च—प्राणसंचारस्य सर्वस्य (सुषुप्त्यवस्थायामपि जायमानस्यापि) यत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः। स एव (प्राणसंचारहेतुत्वेनानुमीयमान एव) जीवनयोनियत्नः, इति ज्ञेयम्। (मु० गु० पृ० २३१)

अयंभावः—दृष्टो हि धावतः (पुरुषस्य) प्रत्यक्षप्रयत्नोत्कर्षेणाधिकश्वासादिरूपप्राणसंचारोत्कर्षः। इत्थं च—एकत्र यत्नसाध्यत्वस्यानुभाविकत्वेन तद्दृष्टान्तेन प्राणसंचारत्वावच्छेदेन सर्वत्र भोक्तृयत्नजन्यत्वानुमानात्, इति। (दि० गु० पृ० २३२)

अयं भावः—प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगरूपाज्जीवनात्, तत्प्रयोजकादृष्टाद्वा संभवात् उक्तानुमानस्याप्रयोजकत्वात्। अन्यथा, एकत्र यत्ने ज्ञानजन्यत्वदृष्टान्तेन जन्ययत्नत्वावच्छेदेन ज्ञानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तिः। एवं च—जीवनयोनियत्नस्वीकारे मानाभावः, इति। (दि० गु० पृ० २३२)

† अत्रोच्यते—"जीवन्मुक्तावुपायस्तु कुलमार्गो हि नापरः" इति। (तन्त्रम्) (वाच०)

( न्या० सि० दी० पृ० २९ ) यथा–शुक–जनकादीनां[1] जीवन्मुक्तिः । [ २ ] अवधारितात्मतत्त्वस्य, नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य, प्रारब्धं कर्मोपभुञ्जानस्य (जीवतः सत एव ) जायमानश्चरमदुःखध्वंसः । (गौ० वृ० १।१।१ )

**जैमिनिः**–सामवेदाध्ययनेन वेदव्यासशिष्यै[2] ऋषिविशेषः । स च "अथातो धर्मजिज्ञासा" ( जै० सू० १।१।१ ) इत्यारभ्य "अन्वाहार्ये च दर्शनात्" ( जै० सू० १२।४।४६ ) एतत्पर्यन्तं द्वादशाध्यायात्मकं सूत्रबद्धं कर्मकाण्डाख्यं धर्ममीमांसादर्शनं प्रणिनाय ।

**ज्ञप्तिः**–१ ज्ञानम् । २ मारणम् । ३ तोषणम् । ४ स्तुतिः । ५ तीक्ष्णीकरणम् । ( वाच० )

**ज्ञा**[3]–( धातुः ) [ १ ] ज्ञानम् । यथा–चैत्रो घटं जानाति[4]; चैत्रेण घटो

---

१ अत्र मायावादिन आहुः–जीवन्मुक्तो नाम, स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते, अज्ञानकार्यसंचितकर्म–संशय–विपर्ययादीनामपि बाधितत्वात्, अखिलबन्धरहितो ब्रह्मनिष्ठः" इति । ( वेदान्त सा० )

२ अत्र श्रूयते–"साम्ना जैमिनये प्राह तथा छन्दोगसंहिताम्" इति । ( भाग० स्क० १२। अ० ६। श्लो० २८ )

३ अत्रेदं ज्ञेयम्–ज्ञा-कृञादिधातुषु सकर्मकत्वव्यवहारो भाक्त इति नैयायिकसिद्धान्तः । ( वै० सा० धात्व०पृ० ६० )

४ अत्र प्राचीनमते, द्वितीयार्थो विषयत्वम् । तत्र प्रकृत्यर्थस्य ( घटादेः ) आधेयतासंबन्धेनान्वयः । तस्य ( द्वितीयार्थस्य विषयत्वस्य ) धात्वर्थे ( ज्ञाने ) निरूपकत्वसंबन्धेनान्वयः । नवीनमते तु, विषयित्वं* द्वितीयार्थः । तस्य च धात्वर्थज्ञाने आश्रयता–( स्वरूपाख्य– ) संबन्धेनान्वयः । ( ग० व्यु० का० २। ख० १। पृ० ५१ ) एवं च–'घटनिष्ठविषयतानिरूपितविषयिताश्रयो यत् ज्ञानम्, तदाश्रयश्चैत्रः' इति शाब्दबोधः । ( स्व० ) घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव । विषयत्वादौ च द्वितीयाया लक्षणैव; न तु शक्तिः, इति सांप्रदायिका आहुः । ( ग० व्यु० का० २। पृ० ५१ )

---

* अयमाशयः–वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया, 'घटं जानाति, पटं न' इत्यादौ ( अन्वयस्य ) अनुपपत्तिः । अतोऽयमर्थः स्वीकार्यः, इति । ( ग० व्यु० का० २। ख० १। पृ० ५१ )

ज्ञायते, इत्यादौ धात्वर्थः । ( ग० व्यु० का० २। पृ० ५१ ) ( वै० सा० धात्व० पृ० ५७ )

[ २ ] [ क ] शाब्दिकाश्च ( पतञ्जलिप्रभृतयः ), ज्ञानानुकूलव्यापारः । ( ल० म० धात्वर्थ० पृ० ६ ) ( वै० सा० द० धात्व० पृ० ६२ ) यथा—देवदत्तो घटं जानातीत्यादौ जानात्यर्थः, इत्याहुः । ( वै० सा० धात्व० पृ० ४६ )

[ ख ] अन्ये तु शाब्दिकाः, विषयावच्छिन्नावरणभङ्गादिफलानुकूलव्यापारः । यथा—घटं जानातीत्यादौ धात्वर्थः, इत्याशशङ्किरे । ( वै० सा० धात्वर्थ० पृ० ६२ )

**ज्ञातता**—१ ज्ञानविषयता । ( त० भा० प्रमाण० पृ० २२ ) यथा—“ज्ञा-

---

१ अत्र, कर्माख्यातेन घटादौ धात्वर्थज्ञाननिरूपितं विषयत्वं बोध्यते । ( ग० व्यु० का० २। पृ० ५१ ) तथा च—चैत्रेणेति तृतीयाया अर्थः, चैत्रान्वितं समवेतत्वम् । तस्य च धात्वर्थे ज्ञानेऽन्वयः । तस्य ( ज्ञानस्य ) चात्मनेपदार्थविषयत्वेऽन्वयः । तस्य ( तादृशविषयत्वस्य ) घटेऽन्वयः । एवं च—‘चैत्रसमवेतज्ञानविषयो घटः’ इति शाब्दबोधः ।

२ अत्र, विषयतया ज्ञानं फलम् । आत्ममनःसंयोगो* व्यापारः । अत एव ‘मनो जानाति’ इत्युपपद्यते । ( ल० म० धात्वर्थ० पृ० ६ )

३ अत्र ‘देवदत्ताभिन्नाऽऽश्रयको ज्ञानाद्यनुकूलो वर्तमानो व्यापारः’ इति बोधः । ( वै० सा० धात्व० पृ० ४६)

४ अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तादृशफलस्यावश्यकत्वम् । ( वै० सा० ) अत एव, ज्ञादिधातोः सकर्मकत्वमुपपद्यते । ज्ञानस्यैव फलत्वाङ्गीकारे तदनाश्रयत्वात् घटादेः कर्मत्वानुपपत्तिः, इति भावः । ( वै० सा० धात्वर्थ० पृ० ६२ )

५ स चार्थप्रकाशरूपः । ( स्व० )

६ अत्रेदमवधेयम्—[ १ ] ज्ञातता ज्ञानविषयत्वम् । तच्च स्वरूपसंबन्धरूपमेव । यथा—‘ज्ञातो घटः’ इति प्रतीतिविषयो ज्ञाततेति नैयायिकाः प्राहुः । [ २ ] भट्टास्तु, घटादौ समवायेन वर्तमाना ज्ञानजन्या† ज्ञाततेत्याहुः । ( त० प्र० ख० ४। पृ० १२९ )

---

* आत्माऽत्रान्तःकरणम् । मनोऽपि तद्वृत्तिविशेषरूपम् । ( ल० म० धात्वर्थ० पृ० ६ )

† अत्रेदं बोध्यम्—भट्टमते, ‘ज्ञातो घटः’ इति प्रतीतिं प्रति घटज्ञानं निमित्तकारणम्; घटादिकं समवायिकारणम्; असमवायिकारणं तु नापेक्षितम्; ‘भावकार्यं सासमवायिकारणम्’ इति नियमस्य तु भट्टैरनङ्गीकारात्, इति । ( त० प्र० ख० ४। पृ० १२९ )

तसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि" (माघः, स० २। श्लो० १२) इत्यादौ—सारस्य (तत्त्वार्थस्य) ज्ञातता । २ [क] भट्टमीमांसकास्तु, 'ज्ञातः' इति प्रतीतिसिद्धो, ज्ञानजन्यो, विषयसमवेतः, प्राकट्यापरनामा, अतिरिक्तपदार्थविशेषः । (मू० म० १। प्रामा० पृ० १२६) [ख] सविषयको ज्ञानजन्योऽतिरिक्तपदार्थः, इत्याहुः । (नील० प्रामा० पृ० ३९) ३ या शक्यमनुभावयति, सा शक्तिर्ज्ञाततेति केचिदाहुः । (चि०)

**ज्ञानम्**[१]—[१] बुद्धिवदस्यार्थोऽनुसंधेयः । (गौ० १।१।१५) (वै० ८।१।१) [२] बुद्धितत्त्वस्य महत्तत्त्वापरपर्यायस्य परिणामविशेषो ज्ञानम्, इति सांख्या आहुः । (गौ० वृ० १।१।१५) [३] बुद्धिवृत्तिनिरोधरूपो योगो ज्ञानम्, इति योगशास्त्रज्ञा आहुः । [४] केचिद्बौद्धास्तु, बाह्यार्थाभावेन, बुद्धिरेव तत्तदर्थाकारतयाऽवभासो ज्ञानम्, इत्यङ्गीचक्रुः । [५] मनोवृत्ति चैतन्यविशेषो वा ज्ञानम्, इति मायावादिनः ।

---

१ अत्रायमाशयः—घटादिविषये ज्ञाने जाते 'मया ज्ञातोऽयं घटः' इति घटस्य ज्ञातत्वं प्रतिसंधीयते । तेन, ज्ञाने जाते सति 'ज्ञातता नाम कश्चिद्धर्मो जातः' इत्यनुमीयते । सा च (ज्ञातता), ज्ञानात्पूर्वमजातत्वात्, ज्ञाने जाते च जातत्वाच्च, अन्वयव्यतिरेकाभ्यां 'ज्ञानेन जन्यते' इत्यवधार्यते, इति । (त० भा० प्रामा० पृ० २२)

२ अत्रेदं ज्ञेयम्—ज्ञानमतीन्द्रियमेवेति भट्टा आहुः । ज्ञानं मानसप्रत्यक्षविषय इति नैयायिकाः (वैशेषिकाश्चापि) प्राहुः ।

३ अत्रायमर्थः—[१] अर्थाकारेण परिणताया बुद्धिवृत्तेश्चेतने प्रतिबिम्बनात् विषयप्रकाशरूपं ज्ञानम् । तत्र पौरुषेयबोधे वृत्तिः करणम्; वृत्तिरूपज्ञाने च इन्द्रियादि करणम्; इति भेदः । [२] अन्यच्चाप्युच्यते—गुणपुरुषान्यथाख्यातिरूपोऽध्यवसायो ज्ञानम्, इति (वाच०)

४ मायावादिमते, ज्ञानं द्विविधम् । वृत्तिरूपम्, तदवच्छिन्नवृत्तिप्रतिबिम्बितचैतन्यरूपं चेति । तत्र प्रत्यक्षज्ञानमपि द्विविधम् । वस्तुमात्रद्योतकं निर्विकल्पकम्, सविकल्पकं च । तत्र सविकल्पकं च संज्ञादिद्योतकत्वादनेकधा । तथा हि—"संकल्पसंशयभ्रान्तिस्मृतिसादृश्यनिश्चयाः । ऊहोऽनध्यवसायश्च तथाऽन्येऽनुभवा अपि" इत्यादि । (वाच०) वैशेषिकमतेऽपि ज्ञानं द्विविधम् । विद्या, अविद्या च । तत्र विद्या चतुर्विधा प्रत्यक्ष–लैङ्गिक–स्मृति–आर्षलक्षणा । अविद्याऽपि चतुर्विधा संशय–विपर्यय–स्वप्न–अनध्यवसायलक्षणा, इति । (वै० उ० ८।१।२)

**ज्ञानलक्षणः**–( संनिकर्षः ) स्वविषयविषयकप्रत्यक्षजनको ज्ञानविशेषः ( स्मरणम् ) । यथा–सुरभित्वज्ञानम् । ( भा० प० १। श्लो० ६६ ) ( मु० १। पृ० १३१ ) ( त० व० )

१ [ क ] स* च स्मृत्यात्मकः, अलौकिकप्रत्यक्षे कारणं भवति । [ ख ] ज्ञानलक्षणसंनिकर्षेण तद्विषयीभूततत्तत्पदार्थानां प्रत्यक्षं मनसा जन्यते । कथम् ?, अन्यथा ( ज्ञानलक्षणसंनिकर्षास्वीकारे ) कविकाव्यमूलभूततत्तत्पदार्थसंसर्गज्ञानम् । ( त० कौ० १। पृ० ९ ) [ ग ] ज्ञानलक्षणसंनिकर्षाऽस्वीकारे–यत्र सौरभत्वजात्युपस्थित्यनन्तरं 'सुरभिर्गन्धः' इति वत्, 'सुरभि चन्दनम्' इत्याकारकं सौरभत्वप्रकारेण चन्दनस्य भ्रमात्मकं चाक्षुषम् ; तत्र सौरभत्वजातेर्भानं न स्यात् । न हि, तत्र सुरभिगन्धस्य भानसंभवः । येन ( सुरभिगन्धभासनेन ), सामान्यलक्षणायास्तद्धर्मप्रकारकतदाश्रयप्रत्यक्षं प्रत्येव हेतुतया सौरभत्वप्रत्यासत्तेः कार्यतावच्छेदकतयैव सौरभत्वजातेर्भानं भविष्यति, इति संभावनीयम् । ( जग० ) ( वाच० )

२ [ क ] तत् ज्ञानं ( स्मरणम् ) च यद्विषयकम्, तद्विषयकसाक्षात्कारजनिका प्रत्यासत्तिः । 'सुरभि चन्दनम्' इति चाक्षुषे सौरभस्य सौरभत्वस्य वा भानं ज्ञानप्रत्यासत्त्यैव । ( म० प्र० १। पृ० २२) [ख] अयं च, यद्विषयकं ज्ञानं जननीयम्, तस्यैव संनिकर्षः।अत एव–सुरभि चन्दनमित्यादौ सौरभत्वादेरपि भानमिति । (दीधि०) [ग] ज्ञानलक्षणसंनिकर्षेण ( स्मरणेन ) पूर्वज्ञातवस्तुनोऽलौकिकप्रत्यक्षं जन्यते । यथा–'सुरभि चन्दनम्' इति चाक्षुषे चन्दनस्य चक्षुर्ग्राह्यत्वेऽपि सौरभस्य तदग्राह्यत्वात्, पूर्वज्ञातस्य सौरभस्यालौकिकं प्रत्यक्षं जन्यते । तथा च–सुरभि चन्दनमित्यत्र सौरभांशेऽलौकिकत्वम्, चन्दनांशे लौकिकत्वम्, इति । ( वाच० )

३ अत्र च, [ क ] सुरभित्वज्ञानं ( स्मरणम् ) तु 'सुरभि चन्दनम्' इति चाक्षुषोपनीतभानं जनयतीति विज्ञेयम् । ( ख० ) [ ख ] यत्र, सौरभज्ञानलक्षणया चाक्षुषसामग्र्या च 'सुरभि चन्दनखण्डम्' इति सौरभांशेऽलौकिकम्, चन्दनखण्डांशे लौकिकं चाक्षुषं जायते, तत्र सौरभज्ञाने ( सौरभप्रत्यक्षे जननीये ) सौरभस्मरणमेव प्रत्यासत्तिः । सौरभांशे चक्षुःसंनिकर्षासंभवात् । ( सि० च० १। प० ३३ ) सौरभस्य चक्षुरयोग्यत्वेन, चक्षुःसंयुक्तचन्दनसमवायस्य तत्र सत्त्वेऽप्यप्रयोजकत्वात्, इति । ( त० कौ० १। पृ० ९ ) एवम्–रज्जुसर्पादिबोधेऽपि सर्पत्वाद्युपस्थितिज्ञानलक्षणसंनिकर्षादेव भवति । यतः, सर्पत्वादौ चक्षुःसंनिकर्षाभावादिति । ( त० व० ) अधिकं तु "सामान्यलक्षण–" शब्दव्याख्यानावसरे संपादयिष्यते ।

* अयं षडिन्द्रियसहकारी, इति संप्रदायविद आहुः; मनस एव सहकारी, इति शूलपाणिमिश्रा अमन्यन्त । ( त० कौ० १। पृ० ९ )

† तत्र, सौरभज्ञाने ( प्रत्यक्षे ) सौरभस्मरणमेव प्रत्यासत्तिः; सौरभांशे चक्षुःसंनिकर्षासंभवात्, इति भावः । ( सि० च० १। प० ३३ )

**ज्ञानेन्द्रियम्**–(इन्द्रियम्) ज्ञानजनकमिन्द्रियम् । ज्ञानेन्द्रियाणि षट्[1] । श्रोत्रम्, त्वक्, चक्षुः, रसनम्, घ्राणम्, मनश्चेति ।

**ज्ञापकत्वम्**–१ जनकज्ञानविषयत्वम् । यथा–पर्वतो वह्निमान् धूमादित्यादौ[2] धूमस्य ज्ञापकत्वम् । ( ग० अव० हेतु० ) २ धर्मज्ञास्तु, ज्ञानजनकत्वम् । यथा–"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम्" ( याज्ञ० १।७ ) इत्यादौ श्रुत्यादेर्धर्मज्ञापकत्वम्, इत्याहुः ।

**ज्ञापनम्**–[ क ] ज्ञानानुकूलशब्दः ।

[ ख ] ज्ञानानुकूलव्यापारः । यथा–चैत्रः स्ववृत्तान्तं मैत्रं ज्ञापयतीत्यादौ ।

[ ग ] शाब्दिकास्तु, ज्ञानानुकूलव्यापारानुकूलव्यापारः, इत्याहुः । (स्व०)

**ज्ञाप्यत्वम्**–१ जन्यज्ञानविषयत्वम् । यथा–धूमाद्वह्निमानित्यादौ वह्न्यन्वयि ज्ञाप्यत्वं पञ्चम्यर्थः[3] । ( ग० अव० हेतु० ) २ ज्ञानजन्यत्वमिति केचिद्वदन्ति ।

**ज्ञेयत्वम्**–[ १ ] ज्ञानविषयत्वम् । ( मु० १। साधर्म्य० पृ० ४९ ) यथा–'भूतलं घटवत्' इति चाक्षुषप्रत्यक्षे घटस्य ज्ञेयत्वम्[4] । ( स्व० ) यथा वा–"ज्ञेयं यत् तत् प्रवक्ष्यामि यत् ज्ञात्वाऽमृतमश्नुते," "ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम्" ( गीता० ) इत्यादौ ।

[ २ ] भगवज्ज्ञानविषयत्वम् । ( न्या० म० २। पृ० १९ ) ( त०

---

१ दिग्वातार्कप्रचेतोऽश्विनो ज्ञानेन्द्रियाणां ( बहिरिन्द्रियाणाम् ) देवता ज्ञेयाः । तद्विषयाश्च शब्द–स्पर्श–रूप–रस–गन्धाः, इति । अन्तरिन्द्रियस्य ( मनसः ) विषयस्तु सुखादिकम्; चन्द्रमा देवता, इति ज्ञेयम् । अत्रेदमवधेयम्–नैयायिकमते ज्ञानेन्द्रियातिरिक्तानामिन्द्रियत्वं नास्त्येव, इति । अधिकं तु, इन्द्रियशब्दव्याख्यानावसरे संपादितमिति नात्र तन्निरूप्यते ।

२ अत्र ज्ञापकत्वं च (हेतुत्वम्) परामर्शीयप्रकारत्व–विशेष्यत्व–एतदन्यतरवत्त्वमिति केचिद्वदन्ति ।

३ अयमर्थो नवीनमतानुसारेण । प्राचीनमते तु ज्ञापकत्वमेव पञ्चम्यर्थः, इति बोध्यम् ।

४ तच्च केवलान्वयि, इति विज्ञेयम् । ( मु० १। साधर्म्य० पृ० ४५ )

दी० २। पृ० २३ ) यथा—घटपटादेः सर्वस्य जगतो ज्ञेयत्वम् । ( मु० १। साधर्म्य०पृ० ४९) यथा वा—इदं वाच्यं ज्ञेयत्वादित्यादौ । (मु० २)

**ज्येष्ठत्वम्**—१ कालकृतः परत्वविशेषः । ( सि० च० पृ० १८ ) यथा—रामस्य लक्ष्मणमपेक्ष्य ज्येष्ठत्वम् । ( स्व० ) २ बहुतरसूर्यस्पन्दान्तरितजन्यत्वम्, इति नव्या आहुः । ( दि० गु० पृ० २०९ ) ३ स्मार्तास्तु, उत्कर्षः; श्रेष्ठत्वं वा । यथा—"विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः । वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः" (मनुः,२।१५५) इत्यादौ ज्येष्ठत्वम्, इत्याहुः । ( स्व० )

---

## ट.

**टिप्पनी**—१टीकायाष्टीका । सा च टीकाव्याख्यारूपतयैव व्यवह्रियते । यथा—चिन्तामणिटीकाया दीधित्याख्यव्याख्यायाष्टीका, जगदीशकृता ( जगदीशी ) गदाधरकृता ( गदाधरी ) च टिप्पनी । यथा वा—ब्रह्मसूत्राणां भाष्यस्य व्याख्या तत्त्वप्रकाशिकाख्या जयतीर्थभिक्षुकृता; पाणिनिसूत्राणां महाभाष्यस्य व्याख्या कैयटकृता; इत्यादि । २ प्रथमव्याख्याऽपि टिप्पनीत्युच्यते । यथा—"श्रीमतज्ज्ञाननं नत्वा लीलावत्याः सुटिप्पनी । भवेशेन सुबोधार्थं क्रियते यद्गुरोः श्रुतम्," "टिप्पनी दायभागस्य श्रीनाथेन विधीयते" इत्यादौ ।

**टीका**—मूलग्रन्थस्य, अप्रतिपत्ति–विप्रतिपत्ति–अन्यथाप्रतिपत्ति–निवारणेन, तत्कर्तुरभिप्रेतार्थस्य शब्दान्तरेण विवरणम् । यथा—श्रीमद्भागवतस्य टीका विजयध्वजी । ( स्व० )

---

## ण.

**णि**[२]:—( धात्वंशः प्रत्ययः ) १ [ १ ] अनुकूलव्यापारः[३] । [ २ ] व्या-

---

१ कालकृतो विप्रकर्ष इत्यर्थः । नव्यमते, परत्वस्य गुणान्तरत्वं नास्ति, इति भावः ।

२ अयम्, धातुप्रकृतिकः प्रत्ययो बोध्यः । ( श० प्र० श्लो० १०७ । पृ० १६९ )

३ अस्मिन्कल्पे—अजां ग्रामं यापयति, ब्राह्मणमन्नं भोजयतीत्यादौ, अनुकूलव्यापारात्मकणि-

पारमार्थ्यं वा णेरर्थः । यथा—चैत्रं भावयति, आत्मानं गमयतीत्यादौ ण्यर्थः। (श० प्र० श्लो० १०७। पृ० १६९) (ग० व्यु० का०

---

जर्थान्वयिनी गमनभोजनादिक्रियैव धात्वर्थतावच्छेदकं फलम्। तत्संबन्धिनस्तादृशक्रियाकर्तुर्ण्यन्तकर्मता। तादृशक्रियासंबन्धश्चाश्रयत्व—कृतिमत्त्व—एतदन्यतरो ग्राह्यः। अतः, गमनादिसंबन्धिकालादौ नातिप्रसङ्गः, इति ज्ञेयम्। (ग० व्यु० का० २। पृ० ४८)

१ इत्थमेतन्मताशयः— * अजां ग्रामं यापयति, शिष्यं शास्त्रं ज्ञापयतीत्यादौ, णिजर्थव्यापारे धात्वर्थक्रियायाः स्वकर्तृकत्वनिर्वाहकत्वं संसर्गः। अतो, न कर्तुः कर्मत्वं सूत्रान्तरप्राप्तम्,† इति।

याप्यते ग्राममजा चैत्रेणेत्यादौ स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशेषितधात्वर्थः कर्तृत्वेऽन्वेति। तच्चाश्रयत्वसंबन्धेनाजादौ विशेषणतया भासते। तादृशव्यापारे तृतीयान्तार्थस्य चैत्रादिकर्तृत्वस्य, धात्वर्थैकदेशे संयोगादिफले च द्वितीयान्तार्थस्य (ग्रामवृत्तित्वस्य) विशेषणतया भनाम्। ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः। तच्च, उक्तस्य धात्वर्थस्य विशेष्यतया, प्रथमान्तपदार्थस्य च विशेषणतया भासते, इति। (ग० व्यु० का० २। पृ० ४८)

२ व्यापारमात्रस्य ण्यर्थत्वकल्पे, ण्यर्थव्यापारे धात्वर्थस्य (भूधात्वर्थस्योत्पत्तेः, गम् धात्वर्थस्य गतेश्च) अनुकूलतायाः संसर्गविधयाऽपि भानसंभवात् 'चैत्रोत्पत्त्यनुकूलव्यापारवान्'; 'आत्मगत्यनुकूलव्यापारवान्' इत्यादिरर्थो बोध्यते। (श० प्र० श्लो० १०७। पृ०१६९)

३ आदिशब्दग्राह्याण्युदाहरणान्तराणि यथा—अजां ग्रामं गमयति, शिष्यं शास्त्रं ज्ञापयति, ब्राह्मणमन्नं भोजयति, यजमानं मन्त्रं पाठयति, घटं जनयति, घटं नाशयति, इत्यादिस्थलेषु—णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजादिपदोत्तरद्वितीयाया मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः। तत्र प्रथम—द्वितीय—पञ्चम—स्थलेषु गति—ज्ञान—उत्पत्ति—एतन्निरूपितं कर्तृत्वं चाश्रयत्वमेव; तृतीय—चतुर्थ—स्थलयोर्भोजन—पाठ—एतन्निरूपितं कर्तृत्वं च तदनुकूलकृतिमत्त्वमेव; षष्ठे स्थले तु नाशनिरूपितं कर्तृत्वं च प्रतियोगित्वम्। तथा च—तादृशकर्तृत्वस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः। नव्यमते च यत्राश्रयत्वं कर्तृत्वम्, तत्राधेयत्वं द्वितीयार्थः; यत्रानुकूलकृतिमत्त्वं कर्तृत्वम्, तत्र कृतिजन्यत्वं द्वितीयार्थः; यत्र प्रतियोगित्वं कर्तृत्वम्, तत्रानुयोगित्वं द्वितीयार्थः। तेषां चाश्रयतासंबन्धेनैव धात्वर्थेऽन्वयः, इति।

---

* अत्रैतन्मते "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ" (पा० सू० १।४।५२) इति सूत्रेण कर्तुः कर्मसंज्ञा अपूर्वा विधीयते। (ग० व्यु० का० २। पृ० ४७)

† अयं भावः—"कर्तुरीप्सिततमं कर्म" (पा० सू० १।४।४९) इत्यादिसूत्रस्याप्रवृत्तेः "गतिबुद्धि—" (पा०सू०१।४।५२) इत्यादिसूत्रेणैव कर्तुरपूर्वा कर्मसंज्ञा विधीयते, इति।

२। पृ० ४८) [ ३ ] केचित्तु, हेतुकर्तृत्वम् । तच्च स्वतन्त्रकर्तृप्रेरणा, अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा, इत्याहुः। (ग० व्यु० का० २।

गत्यर्थादिभ्योऽन्यत्र च (पाचयतीत्यादौ) णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदात् न द्वितीया; तादृशकर्तुः कर्मताऽतिदेशाविषयत्वात्। तेन, 'पाचयत्योदनं* सहायेन' इत्यादय एव प्रयोगाः; न तु 'पाचयत्योदनं सहायम्' इत्यादयः, इति। (ग० व्यु० का० २। पृ० ४७)

१ एतन्मते—गतिबुद्धीत्यादिसूत्रम् (पा० १।४।५२), नियमपरतया गत्यर्थकधातुयोगे कर्तृप्रत्ययस्य (तृतीयादेः) असाधुत्वज्ञापकम्। तेन, 'पाचयत्योदनं सहायेन' इत्यादिवत् 'अजया ग्रामं यापयति' इत्यादयो न प्रयोगाः, इति। (ग० व्यु० का० २। पृ० ४७)

२ "हेतुमति च" (पा० सू० ३।१।२६) इत्यनुशासनात् णिजर्थो हेतुकर्तृत्वम्। (ग० व्यु० का० २। पृ० ४७)

३ अत्र कर्तृत्वं क्वचित्प्रयत्नः; क्वचिदाश्रयत्वादिकम्। यादृशधातूत्तराख्यातेन यादृशकर्तृत्वं बोध्यते, तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते। अत एव—पाचयतीत्यादौ पाकादिकृतिनिर्वाहकः,† ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः, नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहकः, व्यापारः प्रतीयते। एवं च—ण्यन्तसमुदायस्यापि धातुत्वेन ण्यन्तधातुप्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव; निर्वाह्यस्यैव फलत्वात्। तदाश्रयतया स्वतन्त्रस्य कर्तुः कर्मता। तादृशफलविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षायां 'पाचयत्योदनं सहायम्' इत्यादयः प्रयोगा अपि साधव एव। अत एव—"अजिग्रहत्तं जनको धनुस्तत्" इत्यादयो भट्टिप्रयोगाः। यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितम्, तदा 'पाचयत्योदनं सहायेन' इत्यादयः प्रयोगाः, इति विवेकः। (ग० व्यु० का० २। पृ० ४७)

४ वस्तुतस्तु—कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः‡; विशिष्टलाभस्त्वन्वयबलात्, इत्येव सम्यक्। (ग० व्यु० का० २। पृ० ४८)

* अत्र, गतिबुद्धीत्यादिसूत्रस्य (पा० १।४।५२) प्रवृत्तेरभावेन "कर्तृकरणयोस्तृतीया" (पा० सू० २।३।१८) इत्यनेन तृतीयैव।

† अत्रेदं ज्ञेयम्—सर्वत्र निर्वाहकत्वं च स्वरूपसंबन्धविशेषः; न तु जनकत्वम्। अतो न, नाशयतीत्यादावनुपपत्तिः, इति। (ग० व्यु० का० २। पृ० ४७)

‡ अत्रायमर्थः—देवदत्तोऽजां ग्रामं प्रापयतीत्यादौ कर्तृत्वं व्यापारश्च णिजर्थः। तत्र कर्तृत्वे द्वितीयान्तार्थस्याजावृत्तित्वस्यान्वयः। उत्तरदेशसंयोगानुकूलक्रियात्मकस्याप्धात्वर्थस्यैकदेशे (उत्तरदेशसंयोगे) द्वितीयान्तार्थस्य (ग्रामवृत्तित्वस्य) अन्वयः। तादृशक्रियाया निरूपितत्वसंबन्धेन णिजर्थकर्तृत्वेऽन्वयः। तादृशकर्तृत्वस्य च अपरणिजर्थव्यापारे निर्वाहकत्वसंबन्धेनान्वयः। एवं च—उक्तवाक्यात्, 'ग्रामवृत्त्युत्तरदेशसंयोगानुकूला या अजा-

पृ० ४७ ) २ क्वचित्–ज्ञानानुकूलव्यापारोऽपि ण्यर्थः । यथा–कथकः कंसं घातयतीत्यादावभिनयादिरूपः । ३ क्वचित्–स्वरूपं ण्यर्थः । यथा–चोरयति, चिन्तयति, इत्यादौ ण्यर्थः स्वरूपमेव । ( श० प्र० श्लो० १०७। पृ० १६९ )

**णी**—( धातुः ) १ नयनवदस्यार्थोऽनुसंधेयः । २ संमाननम् । ३ [ १ ] ज्ञानम् ; [ २ ] निश्चयो वा । ( वाच० )

---

## त.

**तटस्थः**—१ वादिप्रतिवादिभावानापन्न उदासीनः । यथा–" तटस्थः शङ्कते " इत्यादौ । २ यावल्लक्ष्यकालमनवस्थायित्वे सति यत् व्यावर्तकम्, तत् । यथा–( १ ) पृथिव्या गन्धवत्त्वम्, तटस्थं लक्षणं भवति । ( २ ) मायावादिमते ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणम् । ( वेदा० प० वि० ) ( वाच० )

**तत्**—१ [ १ ] [ क ] वक्तृबुद्धिविषयः, तत्पदार्थः । यथा–" तौ गुरुर्गुरुपत्नी च," (रघु० स० १। श्लो० ९७) " ते हिमालयमामन्त्र्य " ( कुमार० स० ६। श्लो० ९४ ) इत्यादौ ।

---

१ अत्र ' कंसकर्मकवधमाचष्टे ' इति बोधः । ( ग० व्यु० का० २। पृ० ६२ )

२ अत्र, चुरादिभ्यः स्वार्थिकस्य णेः स्वरूपमर्थः । तेन, चोरयति, चिन्तयतीत्यादौ ' स्तेयादिस्वरूपस्यानुकूलकृतिमान् ' इत्यादिरर्थः । ( श० प्र० श्लो० १०७। पृ० १६९ )

३ अत्र—महाप्रलये परमाणुषु, उत्पत्तिकाले घटादिषु च गन्धाभावात् तथात्वं युज्यते ।

४ अत्रेदं बोध्यम्–लक्षणं द्विविधम् । स्वरूपलक्षणम्, तटस्थलक्षणं च । तत्राद्यम्–" सत्यं ज्ञानमनन्तं ब्रह्म " इत्यनेन ब्रह्मणः स्वरूपलक्षणमुच्यते । द्वितीयं तु–जगज्जन्मादिकारणत्वम् ब्रह्मणो लक्षणम्, इति ज्ञेयम् । ( वे० प० वि० ) ( वाच० )

---

वृत्तिः क्रिया, तत्कर्तृत्वनिर्वाहकव्यापारानुकूलकृतिमान् देवदत्तः' इति बोधः । ( स्व० ) अजा ग्रामं याप्यते चैत्रेणेत्यादौ च—'चैत्रकर्तृकव्यापारनिर्वाह्यं यत् ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वम्, तदाश्रयोऽजा' इति बोधः । ( ग० व्यु० का० २। पृ० ४८ ) पदार्थतदन्वयादिकथनं तु विस्तरभयादुपेक्षितमिति गदाधर्यामवलोकनीयम् ।

[ ख ] केचित्तु, परोक्षबुद्धिविषयः, तच्छब्दार्थ इति वदन्ति । ( दि० ४। पृ० १७९ )

[ २ ] [ क ] क्वचित्—यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । यथा—'तमानय, य इहास्ति' इत्यादौ । (ग० शक्ति० टी० पृ० ११९ ) यथा वा—" स किंसखा, साधु न शास्ति योऽधिपम् " ( किरा० स० १। श्लो० ५ ) इत्यादौ । (ख०)

[ ख ] शाब्दिकास्तु, यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयो विधेयभूतः, तत्पदार्थ इति वदन्ति ।

[ ३ ] क्वचित्—स्वोच्चारकपुरुषप्रयुक्तपूर्वपदजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षितं—स्वप्रयोजकबुद्धिविषयतावच्छेदक—धर्मावच्छिन्नः । यथा—" तदन्वये शुद्धिमति " इत्यादौ । ( ग० शक्ति० टी० पृ० ११९ ) २ प्रसिद्धम् । यथा—( १ ) " कला च सा कान्तिमती, " ( ग०

१ इयं च व्युत्पत्तिः प्रक्रम्यमाणपरामर्शक*—तच्छब्दस्य द्रष्टव्या । यतः, प्रक्रम्यमाणपरामर्शकतच्छब्देन नियमतो यत्पदमपेक्ष्यते । ( ग० शक्ति० पृ० ११५ )

२ अत्रोपस्थितिश्च स्वविशेष्यकवृत्तिज्ञानाधीना ग्राह्या । अतः, पशुरस्ति तं पश्येत्यादौ पश्वादिपदोपस्थापितलोमादीनां तदादिशब्देन न परामर्शः । ( ग० शक्ति० पृ० ११५ )

३ इयं व्युत्पत्तिः प्रक्रान्तपरामर्शकतच्छब्दस्य द्रष्टव्या । यतः, तत्र यत्पदापेक्षानियमो नास्ति । ( ग० शक्ति० पृ० ११५ ) ( काव्य प्र० )

४ अत्र, वैवस्वतादिपदोपस्थाप्यस्यापि तच्छब्देन परामर्शात् न यत्पदापेक्षेति ज्ञेयम् । ( ग० शक्ति० पृ० ११५ )

५ समुदायश्लोकस्तु—" तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः । दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव " इति । ( रघु० स० १। श्लो० १२ )

६ प्रसिद्धत्वं चानेकज्ञानविषयत्वम् । ( ग० शक्ति० टी० पृ०। ११६ )

७ समुदायश्लोकस्तु—"द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा† कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी " इति । ( कुमार० स० ५। श्लो० ७१ )

* स्वोत्तरप्रयोक्तृपदोपस्थापितवाचीत्यर्थः । ( ग० शक्ति० टी० पृ० ११३ )

† अत्रापि—सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे—" प्रक्रान्त—प्रसिद्ध—अनुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते " इति । (कुमार० मल्लि० ५।७१)

शक्ति० पृ० ११९–११६) "तं केशपाशं प्रसमीक्ष्य कुर्युः" (कुमार० स० १। श्लो० ४८) इत्यादौ । (२) यथा वा–"तत्[1] सत्यम्, स आत्मातत्त्वमसि श्वेतकेतो !" (छा० उ०) इत्यादौ । ३ हेतुः । यथा– "संतप्तानां त्वमसि शरणं तत् पयोद ! प्रियायाः," (मेघ० पूर्व० श्लो० ७) "तदङ्गमग्र्यं मघवन् ! महाक्रतोः" (रघु० स० ३। श्लो० ४६) इत्यादौ । ४ 'तदा' इत्येतदर्थः । यथा–"ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ! । तत् किं? कर्मणि घोरे माम्" (गीता० अ० ३। श्लो० १) इत्यादौ ।

**तत्परत्वम्**—१ तात्पर्यवदस्यार्थोऽनुसंधेयः । (श० प्र०) २ पौराणिकास्तु, निष्ठा । यथा–"भगवद्भक्तितत्परः" इत्यादौ, इत्याहुः । (स्व०)

**तत्पुरुषः**[2]—(समासः) [ **क** ] यदर्थगतेन सुबर्थेन विशिष्टस्य यदर्थस्यान्वयबोधं प्रति यः समासः स्वरूपयोग्यः, स तदर्थस्य तदर्थे तत्पुरुषः । यथा–ग्राम[3]गतः, इत्यादिः । (श० प्र० श्लो० ३८। पृ० ४८) [ **ख** ] समासप्रयुक्तलक्षणाशून्योत्तरनामकत्वे सँति[4] लुप्तद्वितीयादिविभक्तिकपूर्वनामकसमासः । यथा–राजे[5]पुरुषः, इति । (म० प्र० ४। पृ० ४३) [ **ग** ] शाब्दि[6]काश्च, तत्पुरुषाधिकारविहितः समासस्तत्पुरुषः, इत्याहुः ।

---

१ तदुक्तम्—"ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति । (गीता० १७।२३)

२ द्विगौ कर्मधारये च शाब्दिकानां तत्पुरुषत्वव्यपदेशः पदसंस्कारार्थो गौणः । (श० प्र० श्लो० ३८। पृ० ४८)

३ स्वघटकैकपदार्थनिष्ठद्वितीयार्थावच्छिन्नापरपदार्थबोधकसमासत्वरूपधर्मस्य सत्त्वेन लक्षणसमन्वयो बोध्यः । एवम्—तृतीयादितत्पुरुषेषु धर्मपञ्चकं स्वयमूह्यम् । (श० प्र० श्लो० ३९। पृ० ४८)

४ पञ्चपूलीत्यादिवारणाय सत्यन्तम् । नीलोत्पलमित्यादिवारणाय लुप्तद्वितीयादिविभक्तिकेति; आब्रह्मणमित्याद्यव्ययीभाववारणाय पूर्वेति च नामविशेषणम् । (म० प्र० ४। पृ० ४३)

५ अत्र, समासप्रयुक्तलक्षणायाः पूर्वपद एव स्वीकारात्, सत्यन्तविशिष्टविशेष्यसत्त्वात्, लक्षणसमन्वयः । (म० प्र० ४। पृ० ४३)

६ तन्मते स च तत्पुरुषः प्रकारान्तरेण त्रिविधः । व्यधिकरणपदघटितः, समानाधिकरणपदघटितः, संज्ञानवबोधकसंख्यावाचकपदघटितश्चेति । तत्र—संज्ञानवबोधकसंख्यापूर्वकसमानाधिकरणपदघटितस्तत्पुरुषो, द्विगुरित्युच्यते । द्विगुविषयपरिहारेण, समानाधिक-

[ घ ] उत्तरपदार्थप्रधान[1]स्तत्पुरुषः, इति केचिदाहुः । ( वाच० ) स च तत्पुरुषो[3] द्वितीया–तृतीयादिभेदेन षड्विधः[2] । तथा हि–ग्रामगत इत्यत्र द्वितीयातत्पुरुषः; चैत्रनीत इत्यत्र तृतीयातत्पुरुषः; ब्राह्मणदत्त इत्यत्र चतुर्थीतत्पुरुषः; वृक्षपतित इत्यत्र पञ्चमीतत्पुरुषः; चैत्रधनम्, मैत्रगतिरित्यत्र षष्ठीतत्पुरुषः[3]; गृहस्थित इत्यत्र सप्तमीतत्पुरुषः; इति । ( श० प्र० श्लो० ३९। पृ० ४८ )

**तत्त्वज्ञानम्**—१ [ क ] यथार्थज्ञानम्[4] । यथा–सति घटादिवस्तुनि 'सत्'

---

... रणपदघटिततत्पुरुषः, कर्मधारय इत्युच्यते । तद्भिन्नो व्यधिकरणपदघटितः, तत्पुरुष इत्युच्यते । यथा–राजपुरुष इत्यादिः । ( वाच० )

१ स च न साधुः; 'अर्धपिप्पली' इत्यादितत्पुरुषेऽव्याप्तेः,* 'सूपप्रति' इत्याद्यव्ययीभावेऽतिव्याप्तेश्च, इति । ( वाच० )

२ द्वितीयादिसुबर्थस्य कर्मत्व-कर्तृत्वादेर्बोधभेदादेतस्य ( तत्पुरुषस्य ) द्वितीया–तृतीयादितत्पुरुषत्वेन षड्भेदाः ।

इयांस्तु विशेषः–यदेतेषु धात्वर्थान्वय्येव द्वितीयादेरर्थः प्रायो घटकः; पीठं परितः, पुण्येन सुखम्, शमाय विद्या, दण्डाद्भटः, गवां कृष्णा संपन्नक्षीरा, तिलेषु तैलम्, इत्यादिविग्रहे तत्पुरुषस्यासाधुत्वात् । ( श० प्र० श्लो० ३९। पृ० ४८ ) वर्षसुखी, लोष्टकणः, कुण्डलहिरण्यम्, घटान्यः, कुबेरबलिः, कर्मकुशलः, इत्यादौ तु–तत्तद्विशेषविधेर्द्वितीयादितत्पुरुषः, इति । ( श० प्र० पृ० ४९ )

३ अत्र मतभेदाः–( १ ) राजपुरुष इत्यादौ राजपदस्य राजसंबन्धिनि लक्षणा; तेन पुरुषपदार्थस्याभेदेनान्वयः, इति नैयायिका आहुः । ( २ ) अन्ये तु, लुप्तषष्ठ्येवान्वयबोधं जनयति । षष्ठीलोपमजानतस्तु ( पुरुषस्य ) तत्रान्वयप्रत्ययः शक्तिभ्रमात्, राजपदलक्षणया † वा, इति स्वीचक्रुः । ( ३ ) वैयाकरणास्तु, समासस्थशब्दसमुदाये विशिष्टार्थे शक्तिरेवेत्याहुः । ( न्या० म० ४। पृ० ११ )

४ अत्रोक्तम्–( १ ) तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम् । ( वात्स्या० १। १।२ ) [ २ ] तच्च‡ईश्वरनोदनाभिव्यक्ताद्धर्मादेव । (प्रशस्त० भा० १।१।१। पृ० ११)

---

* यथोक्तं वाक्यपदीये—"समासस्तु चतुर्धेति प्रायोवादस्तथाऽपरः । योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च" इति ।

† पूर्वकल्पे राजपदस्य राजसंबन्धिनि निरूढलक्षणा; एतन्मते तु, षष्ठीलोपस्मरणासंभवस्थले राजपदे स्वारसिकी लक्षणा; इति भेदः । ( त० प्र० ख० ४। पृ० ४३ )

‡ ईश्वरनोदना उपदेशः; वेद इति यावत् । तेनाभिव्यक्तात् प्रतिपादिताद्धर्मादेव भविष्यति, इत्यर्थः । ( किर० १।१।१। पृ० ११ )

इति ज्ञानम्, असति च शशशृङ्गादौ 'असत्' इति ज्ञानम् । ( स्व० ) [ ख ] यथावस्थितपदार्थाधिगतिः । तच्च प्रमाणम् । ( न्या० वा० पृ० ४ ) २ [ क ] निखिललोकविमोक्षमुख्योपायं मननोपायमात्मनस्तत्त्वज्ञानमामनन्ति । ( न्या० म० १। पृ० १ ) यथा—'आत्मा शरीरादिभ्यो भिन्नः' इत्याकारकं ज्ञानम् । ( त० प्र० १। पृ० ९ ) यथा वा—आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादौ । ( वात्स्या० १।१।१ )

[ ख ] इतरनिवृत्तिपूर्वको ब्रह्मात्मावगम इति मायावादिनो वदन्ति ।

[ ग ] भगवद्विषयकमपरोक्षज्ञानमिति द्वैतवादिनो वेदान्तिन आहुः ।

तत्त्वम्[2]—१ [ क ] सतश्च सद्भावः; असतश्चासद्भावः । सत् 'सत्' इति गृह्यमाणं यथाभूतमविपरीतम्, तत्त्वं भवति । असच्च 'असत्' इति गृह्यमाणं यथाभूतमविपरीतम्, तत्त्वं भवति । ( वात्स्या० १।१।१।

---

१ इदं तत्त्वज्ञानं च, परमात्मकविषयकम्, निःश्रेयससाधनं चेति बोध्यम् ।

२ मतभेदेन तत्त्वानि प्रदर्श्यन्ते–[१] स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वम्, इति द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्या वेदान्तिनः प्राहुः । ( तत्त्वसं० टी० ) [ २ ] सदसदुभयानुभयात्मकचतुष्कोणविनिर्मुक्तशून्यमेव तत्त्वम्, इति शून्यवादिनो बौद्धाः । (सर्व० बौद्ध० पृ० १४) [ ३ ] पृथिव्यादीनि चत्वारि भूतानि तत्त्वानि, इति चार्वाका आहुः । ( सर्व० चार्वा० पृ० २) [ ४ ] जीवाजीवाख्ये द्वे तत्त्वे, इत्यार्हताः । [ ५ ] जीवाकाशधर्माधर्मपुद्गलास्तिकायाः पञ्च तत्त्वानि, इत्यार्हतैकदेशिनः । [ ६ ] जीवाजीवास्रवबन्धसंवरनिर्जरमोक्षाः सप्त तत्त्वानि, इत्यपर आर्हतैकदेशिनः । ( सर्व० आर्ह० ) [ ७ ] द्रव्याद्रव्य–भेदेन द्विविधं तत्त्वम्, इति रामानुजीयाः । ( सर्व० रामा० पृ० ५३ ) [ ८ ] पतिपशुपाशेषु त्रिषु पदार्थेषु–पृथिव्यादीनि पञ्च तत्त्वानि, इति पाशुपतशास्त्रकोविदा नकुलीशाचार्याः । ( सर्व० नकु० पृ० ७७ ) [९] पृथिव्यादिकलापर्यन्तानि त्रिंशत्तत्त्वानि (पुर्यष्टके), इति; कलाकालनियतिविद्यारागप्रकृतिगुणाख्यानि सप्त तत्त्वानि, इति च; शैवा आहुः । ( सर्व० शैव० पृ० ८७ ) [ १० ] महदादीनि पञ्चविंशतिस्तत्त्वानि, इति निरीश्वरसांख्याः कपिलादयः । [ ११ ] ईश्वराधिकानि तानि ( २५ ) चेति षड्विंशतिस्तत्त्वानि, इति सेश्वरसांख्याः पतञ्जल्यादयः । ( सर्व० पातञ्जल० पृ० १५४ ) [ १२ ] अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैकमेव तत्त्वम्, इति मायावादिनो वेदान्तिनः । ( सर्व० रामा० पृ० ४६ ) [ १३ ] विलम्बितं नृत्य–वाद्यादि तत्त्वम्, इति नाट्यशास्त्रज्ञा आहुः । [ १४ ] चेतःस्वरूपं च तत्त्वम्, इति काव्यज्ञा आहुः, इति । ( वाच० )

प्रस्तावना ) यथा-" प्रमाण-प्रमेय..........तत्त्वज्ञानान्निःश्रेयसाधिगमः " ( गौ० १।१।१ ) इत्यादौ-प्रमेयादिकं तत्त्वम् ।

[ ख ] यो यथावस्थितः पदार्थः, स तथाभूतप्रत्ययोत्पत्तिनिमित्तं यत्, तत् । ( न्या० वा० १। पृ० १२ )

[ ग ] अनारोपितं[1] तत्त्वम्, इति वेदान्तिनः ( श्रीपूर्णप्रज्ञाचार्यमतानुयायिनः ) प्राहुः । ( तत्त्वसंख्या० टी० )

२ [ क ] याथातथ्यम् । ( वात्स्या० १।१।४० ) यथा-" अविज्ञाततत्त्वे " ( गौ० १।१।४० ) इत्यादौ । यथा वा-" कार्यं सोऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः " ( मनुः, ७।१० ) इत्यादौ ।

[ ख ] वार्तिककारास्तु, पदार्थानां यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वम्; इत्याहुः ( न्या० वा० १। पृ० १२ )

[ ग ] काव्यज्ञास्तु, स्वभावः । यथा-"निस्तत्त्वाः" इत्यादौ, इत्याहुः । ( वाच० )

**तथा**—१ स प्रकारः । यथा-"कथमुक्त्वा तथा सत्यं सुतामुत्सृज्य मां गतः" ( भा० व० ११ ), "यथा कामो भवति तथा क्रतुर्भवति । " ( शत० ब्रा० १४।७।२।७ ) इत्यादौ । २ साम्यम् । यथा-"ॐ तथा प्राणाः ॐ" ( ब्र० सू० २।४।१ ) "ॐ तथाऽन्यत्प्रतिषेधात् ॐ" ( ब्रह्म० सू० ३।२।३७ ) इत्यादौ । यथा वा-"यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् । तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्" ( मनुः, ६।९० ) इत्यादौ । ३ समुच्चयः । "विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम्" (मनुः, ३।२८५) "ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथा परे" ( मनुः, ३।१३४ ) इत्यादौ । ४ अभ्युपगमः । ५ पूर्वप्रतिवचनम् । ६ निश्चयः । ७ सत्यम् । ( वाच० )

**तथा च**—१ उक्तस्य दृढीकरणार्थः । यथा-"निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि"

---

१ प्रमितिविषय इति यावत् । ( तत्त्वसंख्या० टी० )

( मनुः, ९।१८–१९ ) इत्यादौ । २ 'एवं सति' इत्येतदर्थः । ( मध्व० भा० ) यथा–"ॐ तथा चैकवाक्योपबन्धात् ॐ" ( ब्र० सू० ३।४।२४ ) इत्यादौ ।

**तथाऽपि**—यद्यपीत्यनेनाक्षिप्तार्थस्य समाधानार्थः । यथा–"यद्यपि का नो हानिः परस्य द्राक्षां रासभश्चरति । असमञ्जसमिति मत्वा तथाऽपि तरलायते चेतः" ( उद्भटः ) इत्यादौ ।

**तथा हि**—१ निदर्शनम् । २ प्रसिद्ध्यर्थः । ( शब्दार्थचि० ) ३ उक्तार्थदृढीकरणम् । यथा–"ॐ छन्दोऽभिधानान्नेति चेन्न, तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् । ॐ" (ब्र० सू० १।१।२५) इत्यादौ ।

**तथैव**—तद्वदेवेत्यर्थः; तत्समुच्चयावधारणं च । ( शब्दार्थचि० ) यथा–"अस्ति पुत्रो वशे यस्य भार्या भर्तुस्तथैव च" ( चाणक्यः ) इत्यादौ ।

**तदन्यबाधितार्थप्रसङ्गः**—( तर्कः ) उक्तचेतुष्कान्यः, प्रमाणबाधितार्थस्य प्रसङ्गः । स द्विविधः । व्याप्तिग्राहकः, विपयपरिशोधकश्च । तत्राद्यो यथा–'धूमो यदि वह्निव्यभिचारी स्यात्, तदा वह्निजन्यो न स्यात्' इति । द्वितीयस्तु–'पर्वतो यदि निर्वह्निः स्यात्, निर्धूमः स्यात्' इत्यादिः । ( जग० ) ( गौ० वृ० १।३९ )

**तदा**—१ तत्कालः । यथा–"तदा त्रिधिः कुण्डलनां विधोरपि" ( नैप० ) इत्यादौ । २ यद्यर्थेनाक्षिप्तस्य विपयस्य खण्डनकरणम् । यथा–"धूमो यदि वह्निव्यभिचारी स्यात्, तदा वह्निजन्यो न स्यात्" इत्यादौ ।

**तदादयः**—( सर्वनामशब्दाः ) वक्तृबुद्धिविशेपविषयत्वावच्छेदकत्वोपलक्षितधर्मावच्छिन्नस्तदादीनामर्थः । ( वै० सा० द० ) तदादयश्च तद्, त्यद्, यद्, एतद्, इदम्, अदस्, इत्यादयः ।

---

१ एवं सिद्धे सतीत्यर्थः । ( तत्त्वप्रकाशिका, ३।४।२४ )

२ आत्माश्रय–अन्योन्याश्रय–चक्रक–अनवस्थाभ्योऽन्य इत्यर्थः ।

३ विपयस्य व्यभिचारशङ्कानिवृत्तिद्वारा निश्चायकत्वेन परिशोधकत्वं बोध्यम् ।

४ अत्र तदादिशब्देन सर्वनामसंज्ञकास्तदादयो गृह्यन्ते, इति न तद्व्याख्यानानुपपत्तिः ।

५ अत्रोच्यते–"इदमः प्रत्यक्षगतं समीपतरवृत्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इति । ( दि० ४। पृ० १७९ )

**तदीयत्वम्**—१ संबन्धान्तरं विनाऽपि तत्संबद्धस्वभावत्वम्[1] । (चि० १) यथा—देवदत्तस्वभावस्य ( आध्यात्मिकादिधर्मस्य ) देवदत्तीयत्वम् । २ तत्स्वामित्वकत्वम् । यथा—"तदीयमातङ्गघटाविघट्टितैः" (माघ० स० १। श्लो० ६४) इत्यादौ मातङ्गानां तदीयत्वम् ( रावणस्वामित्वकत्वम् ) । (स्व०)

**तद्गुणसंविज्ञानः**—(बहुव्रीहिसमासः) [१] [क] यो बहुव्रीहिः, स्वीयविग्रहवाक्यस्य[2] विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोधकृद्भवति, स बहुव्रीहिस्तद्गुण[3]संविज्ञानः, इति नवीनाः प्राहुः । यथा—घटस्वरूप[4]ः पदार्थः, कुटादिर्गण[5]ः, इत्यादौ । ( श० प्र० श्लो० ४४। पृ० ५९ )

[ ख ] यत्र विशेषणस्यापि क्रियायां विशेष्यविधयाऽन्वयः, सः । यथा—भू[6]वादयो धातवः, चैत्रादीन्भोजय, लम्बकर्णमानय, इत्यादौ । [ २ ] यो बहुव्रीहिः स्वार्थस्यान्वयिनि स्वार्थघटकस्याप्यर्थस्यान्वयबोधने समर्थः,

---

१ तत्संबन्धित्वमिति सार्वत्रिकोऽर्थः ।

२ अत्र विग्रहवाक्यशब्दार्थस्तु—बहुव्रीहेर्घटकमेकं नाम प्रथमान्तं सत्, सुबन्तैरितरनामभिः सह भेदार्थकसुबन्तयच्छब्देन साकाङ्क्षं भवति, एतादृशं यत्* वाक्यम्, तत् विग्रहवाक्यमिति कथ्यते । ( श० प्र० श्लो० ४३। पृ० ५७ )

३ नवीननैयायिकमते व्युत्पत्तिः—[ क ] 'तस्य ( स्वार्थगुणीभूतस्य ) सम्यक् (विशेष्यविधया) विज्ञानं यस्मात्' इति । ( श० प्र० श्लो० ४४। पृ० ५९-६० ) [ ख ] 'तस्य ( समस्यमानपदार्थस्य ) गुणीभूतस्यापि सम्यक् ( विशेष्यविधया ) ज्ञानं यस्मात्' इति। (त० प्र० ख० ४। पृ० ४९)

४ अत्र—'घटः स्वरूपं यस्य' इति विग्रहस्थले, स्वस्वरूपाभिन्नघटसंबन्धित्वेन, घटाभिन्नस्वस्वरूपसंबन्धित्वेन वा, विग्रहविशेष्यं कलशमेव विशेष्यविधया ( अनेन बहुव्रीहिणा ) बोध्यते, इति । ( श० प्र० श्लो० ४४। पृ० ५९ )

५ अत्र—'कुट आदिर्यस्य' इति व्युत्पत्त्या कुटाभिन्नस्य स्वघटकव्यवस्थाधर्मिणः संबन्धित्वेन धात्वन्तरमिव कुटमपि बोधयंस्तद्गुणसंविज्ञान एव बहुव्रीहिः । ( श० प्र० श्लो० ४४। पृ० ५९ )

६ अत्र—क्रियावाचित्वेन, निमन्त्रितत्वेन, लम्बकर्णावयविनोर्यः संबन्धस्तदवच्छिन्नत्वेन, च अन्वयबोधः; लक्षकसंबन्धस्यैव लक्ष्यतावच्छेदकत्वात्, तेन रूपेणैव बोधात् । विशेषणस्यापि भू-वादेः क्रियान्वयादजहत्स्वार्थोऽत्र लक्षणा । ( त० प्र० ख० ४। पृ० ४९ )

---

* यथा—चित्रगुरिति बहुव्रीहेः 'चित्रा गावो यस्य' इति विग्रहवाक्यम् ।

स तद्गुणसंविज्ञानः, इति प्राचीना आहुः । यथा—लम्बकर्णमानय[1], हारग्रीवं पश्येत्यादौ । ( श० प्र० श्लो० ४९। पृ० ६९ ) [ ३ ] परे तु, यत्र विशेषणतया स्वार्थस्य विधेयेऽन्वयः, स तद्गुण[2]संविज्ञानबहुव्रीहिः, इत्याहुः । यथा—लम्बकर्ण[3]मानयेत्यादौ । ( त० प्र० ख० ४। पृ० ४९ )

**तद्धितम्**[4]—( प्रत्ययः ) [ क ] विभक्ति—धात्वंश—कृद्भ्योऽन्यैः[5] प्रत्ययः । यथा—मारीचं[6] इत्यादौ—अण्; दाक्षिरित्यादौ—इण् प्रत्ययस्तद्धितः । ( श० प्र० श्लो० १०८—१११ )

[ ख ] तद्धिताधिकारविहितः[7] प्रत्ययविशेष इति शाब्दिका वदन्ति ।

---

१ अत्र हि—[ क ] बहुव्रीहिर्लम्बकर्णसंबन्धिनः, स्वग्रीवावृत्तिहारसंबन्धिनश्च, स्वार्थस्यान्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्ण—हारादेरपि ( व्युत्पत्तिवैचित्र्येण ) अन्वयबोधने समर्थः, इति । ( श० प्र० श्लो० ४५। पृ० ६० )

२ एतत्कल्पे व्युत्पत्तिः—‘ तत्र ( बहुव्रीहौ ) गुणस्य ( गुणीभूतस्य विशेषणस्य ) संविज्ञानम् ( विशेष्यपारतन्त्र्येण बोधनम् ) यत्र ’ इति वदन्ति ।

३ अत्र, परेषां मते—[ क ] लम्बकर्णादेः*विशेष्यान्वयिनाऽन्वयात्, विशेषणतया विधेयान्वयः । विशेषणत्वं च विशेष्यान्वयिनाऽन्वयित्वमेव । ( त० प्र० ख० ४। पृ० ४९ ) [ ख ] भवति च—गुणीभूतस्य कर्णादेरप्यानयने धर्मिपारतन्त्र्येण ( धर्मिद्वारा ) अन्वयबोधः, इति ।

४ अत्र नामप्रकृतिकप्रत्ययत्वं न तद्धितस्य लक्षणम्; विभक्तौ क्यजादौ चातिव्याप्तेः, पचतितरामित्यादौ तरामाद्यव्याप्तेश्च । ( श० प्र० श्लो० १०८। पृ० १७२ ) अतः, विभक्ति—धात्वंशेत्यादिना वक्ष्यमाणमेव लक्षणं युक्तम्, इति ।

५ अत्रेदमवधातव्यम्—[ १ ] वृक्षक इत्यादौ ह्रस्वाद्यर्थकः कादिरपि तद्धितमेव, इति । [ २ ] अन्ये त्वेवमाहुः—वृक्षक इत्यादौ कादिस्तु न तद्धितम्; अतः, तदन्यत्वेनापि ( लक्षणे ) प्रत्ययो विशेषणीयः, इति । ( श० प्र० श्लो० १०८। पृ० १७२ )

६ अत्र, षष्ठ्यन्तान्नाम्नः साक्षात्परम्परासाधारणापत्यसामान्ये बोध्ये अण् इत्युत्सर्गः । तेन, मरीचेरपत्यं मारीच इति रूपं सिद्ध्यति । ( श० प्र० श्लो० १११। पृ० १७२ )

७ अत्रेदं बोध्यम्—“ तद्धिताः ” ( पा० सू० ४।१।७६ ) इत्यधिकृत्य “ यूनस्तिः ” ( पा० सू० ४।१।७७ ) इत्यारभ्य पञ्चमाध्यायसमाप्तेर्यावन्तः प्रत्यया विहिताः, ते तद्धितसंज्ञका भवन्ति, इति ।

---

* नवीनमतानुरोधेन लम्बकर्णस्यापि विशेष्यत्वेनैवान्वयेऽनुभवबाधः । तस्मात्—अत्रापि जहत्स्वार्थैव लक्षणा । ( त० प्र० ख० ४। पृ० ४९ )

तद्धितं च, अपत्यादितत्तदर्थभेदबोधनेन अण्, इण्, ण्य, इत्याद्यनेकविधम्। (श० प्र० श्लो० १०९–११४। पृ० १७२–१८८) तत्र सामान्यतस्तद्धितो द्विविधः। प्रकृत्यर्थभिन्नार्थकः, स्वार्थिकश्चेति।

---

१ तत्रोक्तम्—"तस्यापत्यं तद्विशेषस्तदक्षेण युतेन्दुमान्। कालस्तथा तेन रक्तं तस्य व्यूहोऽथ वेत्ति तत्॥ अधीते वा देवताऽस्य सैवमादीन् यथायथम्। बोधयद्विविधानर्थास्तद्धितं स्यादनेकधा" इति। (श० प्र० श्लो० १०९–११०। पृ० १७२)

२ तत्र केचित्तद्धितप्रत्ययास्तत्तदर्थेषु सोदाहरणाः प्रदर्श्यन्ते। यथा–१ अपत्यार्थे अण्–(१) मरीचेरपत्यं मारीचः। (२) वेत्तीत्यर्थे–निमित्तं वेत्ति नैमित्तः। (३) अधीते इत्यर्थे—छान्दसः, वैयाकरणः, त्रैविद्यश्च। (४) संबन्ध्यर्थे–वृक्षस्य संबन्धि वार्क्षम्। (५) जातार्थे—[क] अमावास्यायां जात आमावास्यो बालकः। [ख] (अणो लुक्) गोशालायां जातं गोशालम्; अनुराधायां जात अनुराधः। २ अपत्यार्थे इण्–दक्षस्यापत्यं दाक्षिः, वैयासकिः। ३ ण्यः—गर्गस्यापत्यं गार्ग्यः, जामदग्न्यः। ४ अपत्यसामान्ये आयनण्–तदुत्तरं ण्यश्च–कौञ्जायन्यः, ब्राध्नायन्यः। ५ अपत्यार्थे एयण्—वैनतेयः, आत्रेयः; जाह्नवेयः, द्रौपदेयः। ६ एरण्—दासस्यापत्यं दासेरः (दासेयोऽपि), काणाया अपत्यं काणेरः (काणेयोऽपि), चटकायाः पुमपत्यं चाटकेरः। ७ आयनिण्—तिकस्यापत्यं तैकायनिः, तस्य (सर्वनाम्नः) अपत्यं तादायनिः (तादोऽपि)। ८ अपत्यार्थे ईय—(१) स्वसुरपत्यं स्वस्रीयः। (२) समूहार्थे–अश्वीयम्। (३) भवार्थे—कवर्गीयः, अङ्गुलीयः, मित्रवर्गीयः। ९ अपत्यार्थे व्य–भ्रातुरपत्यं भ्रातृव्यः। १० अपत्यार्थे (१) य–श्वशुरस्यापत्यं श्वशुर्यः। (२) समूहार्थे–धूल्या, वन्या। ११ अपत्यार्थे एयकण्–कुलस्यापत्यं कौलेयकः। १२ ईनण्–कुलीनः। १३ डुरण्–षाण्मातुरः। १४ तद्रागयुक्तमित्यर्थे इकण्–(१) लाक्षया रक्तं लाक्षिकम्। (२) समूहार्थे–कैदारिकम्। (३) तद्वेद, तदधीते वा इत्यर्थे–नैयायिकः, लौकायतिकः। (४) भवार्थे–आन्तर्देहिकम्, समानदैशिकम्। (५) संज्ञार्थे—शारदिका मुद्गभेदाः। १५ रक्तमित्यर्थे अ—नीलेन रक्तो नीलः पटः। १६ क—पीतेन रक्तः पीतकः पटः। १७ समूहार्थे-अकण्—गार्गकम्, कैदारकम्। १८ कण्–धैनुकम्। १९ समूहार्थे यण्–(१) केशानां समूहः कैश्यम्; गाणिक्यम्, ब्राह्मण्यम्। (२) भवार्थे—चतुर्मासेषु भवं चातुर्मास्यं व्रतम्। २० समूहार्थे इनिः—(१) पद्मिनी। २१ कड्य—(२) रथकड्या। २२ तल्—(३) बन्धुता, जनता। २३ यत्—(४) पृष्ठ्यम्। २४ वेत्तीत्यर्थे टिक–(१) शतपथिकः। २५ [क] क–शिक्षकः, मीमांसकः। [ख] जातमित्यर्थे—पूर्वाह्णकम्। २६ तस्येदमित्यर्थे कु–ईयश्च—स्वकीयम्, कस्यानित्यत्वेन (स्वीयं वा)। २७ ईनण्—यौष्माकीणम्। २८ हस्तीत्याद्यर्थे कण्—आरण्यकः करी। २९ तस्यायमित्यर्थे तु ण—अरण्यस्यायमारण्यः पशुः। ३० तत्र भव इत्यर्थे म—आ-

**तद्धिताक्तम्**—१ (योगरूढं नाम) यथा—वासुदेवः, इत्यादि। (श० प्र० श्लो० २८। पृ० ३७) २ (यौगिकं नाम) यादृशं नाम, यच्च तद्धितम्, यादृशानुपूर्व्यवच्छिन्नं सत् यादृशार्थस्यान्वयबोधे समर्थम्, तादृशानुपूर्व्यवच्छिन्नं तद् द्वयमपि तादृशार्थे तद्धिताक्तं नाम। यथा—बहुगुडो द्राक्षा, दाक्षिरित्यादि। (श० प्र० श्लो० ५१। पृ० ६७)

**तद्धितार्थः**—(द्विगुः समासः) [क] यो द्विगुः स्वोत्तरतद्धितार्थान्वितस्वार्थकः, सः; इति परिशिष्टकृत आहुः। यथा—द्विमुद्रो वृषः, द्विवर्षा गौः, द्विदलं पवित्रम्, द्विगुञ्जं स्वर्णम्, त्रिकाण्डः पुरुषः, पञ्चकपालश्चरुः, इत्यादौ। (श० प्र० श्लो० ३५। पृ० ४६) यथा वा—पौर्वशालः, षाण्मातुरः, इत्यादौ। (सि० कौ०) (मनोरमायाम्)

---

दिमः। ३१ डिम—अग्रिमः, पश्चिमः। ३२ त्य—श्वस्त्यम्। ३३ तनट्—श्वस्तनम्, सायंतनम्। ३४ एण्य—प्रावृषि भवः प्रावृषेण्यं तृणम्। ३५ न—परुत्नम्, परारित्नम्। ३६ न—पुराणम्। ३७ ईयण्—पर्वते भवः पार्वतीयः। ३८ यत्—दिशि भवं दिश्यम्; दन्त्यम्, मित्रवर्ग्यः। ३९ एयण्—कौक्षेयम्। ४० ईन—मित्रवर्गीणः। ४१ नञ्—स्त्रियां भवस्त्रैणः। ४२ स्नञ्—पुंसि भवः पौंस्नः। ४३ जातमित्यर्थे इक—प्रावृषि जातं प्रावृषिकं पत्रम्। ४४ आमावास्यको बालकः, इत्यादि, इति संक्षेपः। (श० प्र० श्लो० १११–१५८। पृ० १७२–१८८)

१ अत्रायं विशेषः—पचतितराम् इत्यादिकं नामैव न; द्रागेव तु तद्धिताक्तम् (न। अतो नात्रातिव्याप्तिः)। तस्यापि लक्ष्यत्वे तु—“यः शब्दस्तद्धितं यच्च” इति* पठनीयम्। (श० प्र० श्लो० ५१। पृ० ६७)

२ अत्रायं विशेषः—टाबादेरपि तद्धितत्वोपगमात्, अजा, ब्राह्मणी, इत्यादेर्नासंग्रहः, इति वदन्ति। (श० प्र० श्लो० ५१। पृ० ६७)

३ तथा हि—द्विमुद्रो वृष इत्यादौ—द्वाभ्यां मुद्राभ्यां क्रीतस्य, द्विवर्षा गौरित्यादौ—द्वाभ्यां वर्षाभ्यामभिन्नवयस्कस्य, द्विदलं पवित्रमित्यादौ—द्वाभ्यां दलाभ्यां निर्मितस्य, द्विगुञ्जं स्वर्णमित्यादौ—द्वाभ्यां गुञ्जाभ्यां तुलितस्य, त्रिकाण्डः पुरुष इत्यादौ—त्रिभिः काण्डैः परिमितस्य, पञ्चकपालश्चरुरित्यादौ—पञ्चभिः कपालैः संस्कृतस्य, बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात् लक्षणसमन्वयः। (श० प्र० श्लो० ३५। पृ० ४६)

४ अत्र—‘पूर्वस्यां शालायां भवः’ पौर्वशालः, ‘षण्णां मातृणामपत्यम्’ षाण्मातुरः, इति विग्रहो द्रष्टव्यः।

---

* यादृशं नामेति स्थाने ‘यः शब्दः’ इति वक्तव्यमित्यर्थः।

[ ख ] तद्धितार्थलाक्षणिकस्वान्त्यनामैको[1] द्विगुः, इति महाभाष्यकाराः । ( श० प्र० श्लो० ३५। पृ० ४६ )

**तद्व्यक्तित्वम्**—१ तत्तत्तादात्म्यविशिष्टो धर्मः । यथा—घटनिष्ठं तद्व्यक्तित्वं च घटतादात्म्यविशिष्टघटत्वादिकमेव । २ अखण्डोपाधिविशेषं[2] इति केचिदाहुः । ( ग० शक्ति० टी० पृ० ११६ )

**तन्त्रम्**—१ इतरेतराभिसंबद्धस्यार्थसमूहस्योपदेशः; शास्त्रम् । ( वात्स्या० १।१।२६ ) यथा—"तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः" ( गौ० १।१।२६ ) इत्यादौ तन्त्रम् । २ शास्त्रविशेषः[3] । यथा—"इदानीं संप्रवक्ष्यामि तन्त्रमुत्तरमुत्तमम्" (सुश्रुत०) इत्यादौ । यथा वा—"आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् (७०)" "सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य" (सांख्य का० ७२) इत्यादौ । ३ प्रयोजकम् । (दि० ४। पृ० १७४) यथा—चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रपदोत्तरतृतीयायां चैत्रगतसंख्याऽनभिधानं तन्त्रम् । (मु० ४। पृ० १७४) यथा वा—नीलो घट इत्यादावभेदान्वयबोधं प्रति समानविभक्तिकत्वं तन्त्रम् । ( ग० व्यु० का० १ ) ४ सकृदुच्चारितस्यैकस्य शब्दस्य शक्त्याऽनेकार्थप्रतिपादकत्वं तन्त्रम्, इति शाब्दिका वदन्ति । ५ वि-

---

१ अत्र कल्पे—उक्तप्रयोगेषु (द्विमुद्रो धृप इत्यादिषु) द्विगोरन्तिमनाम्नैव ( मुद्रादिशब्देनैव ) क्रीतादिरूपोऽर्थो लक्ष्यते;* न तु लुप्तष्ठगादिरप्यपेक्ष्यते, इति । ( श० प्र० श्लो० ३५। पृ० ४६ )

२ अयं भावः—तादात्म्यस्य घटादिस्वरूपतामते तु—घटादिनिष्ठं तद्व्यक्तित्वमखण्डमेव, इति । ( ग० शक्ति० टी० पृ० ११७ )

३ शिवाद्युक्तानि सिद्धेश्वरादीनि महातन्त्राणि; तथाऽन्यान्युपतन्त्राणि सैद्धाद्युक्तानि बहूनि सन्ति । विस्तरभयात्तानि न प्रदर्शितानि ।

---

* इदं च न युक्तम्; पाञ्चपुरुषिरित्यादौ पञ्चानां पुरुषाणामपत्यस्य बोधने तद्धितेनैव स्वार्थस्यापत्यप्रभृतेरुपस्थापनात्, द्विस्वर्णमुद्रः पशुरित्यादावुत्तरपदस्य शक्तिविरहेण क्रीताद्यर्थलाक्षणिकत्वायोगाच्च । ( श० प्र० श्लो० ३५। पृ० ४६ )

वक्षितार्थज्ञापकं तन्त्रम्, इति वेदान्तिनः । ६ नीत्यैवयवः । यथा—"तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम्" ( पञ्चत० पृ० १ ) इत्यादौ, इति नीतिशास्त्रज्ञाः । ७ धर्मज्ञास्तु, "कर्मणां युगपद्भावस्तन्त्रम्" । (कात्या० श्रौत० १।७।१ ) यथा—मीमांसकमते—[ १ ] इतिकर्तव्यता, [ २ ] विध्यन्तोऽङ्गसमुदायः ( अवस्थानादिसंस्थाजपान्तः ), [ ३ ] उभयार्थैकप्रयोगः, तन्त्रम् इत्याहुः । ( कर्कः ) ( वाच० ) ८ कर्मज्ञाश्च, अनेकोद्देशेन कृतप्रयोगः । यथा—"द्वौ दैवे प्राक्, त्रयः पित्र्ये उदगेकैकमेव वा । मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्" ( याज्ञ० अ० १। श्लो० २२७ ) इत्यादौ—पितृश्राद्धे मातामहश्राद्धे च वैश्वदेवं तन्त्रेण ( सकृदनुष्ठानेन ) कर्तव्यम्, (मिताक्ष० अ० १। श्लो० २२७) इत्याहुः । ९ सिद्धान्तः । १० प्रधानम् । ११ परिच्छेदः । १२ वेदशाखाविशेषः । १३ स्वराष्ट्रचिन्ता । १४ औषधम् । यथा—"तन्त्रावापविदा योगैः" ( माघः, २।८८ ) इत्यादौ । १५ परच्छन्दानुगमनम् । १६ प्रबन्धः, इत्यादि । ( वाच० )

**तमः**—१ ( अभावः ) [ १ ] [ क ] तेजोऽभावः । ( मु० १ ) ( गौ० वृ० ५।२।२० ) ( त० दी० पृ० ३ )

---

१ तदुक्तम्—"तन्त्रं साधनमुद्दिष्टं तन्त्रं ज्ञापकमेव च" इति । ( मध्वभाष्यटीकाटिप्पणे एकादशतात्पर्योक्तिः)

२ तदवयवाश्च मित्रभेद-मित्रप्राप्ति-काकोलूकीय-लब्धप्रणाश-अपरीक्षितकारित्वानि, इति ।

३ अत्रायमर्थः—यत्र प्रधानकर्मणां युगपद्भावः ( सह प्रयोगः ) तत्रारादुपकारकाणामङ्गानां तन्त्रम् ( सकृदनुष्ठानम् ) भवति; न प्रतिप्रधानं पृथक् पृथक् । यद्धि सकृत्कृतं बहूनामुपकरोति, तत् तन्त्रमित्युच्यते—यथा बहूनां मध्ये कृतः प्रदीपः; इति । ( कर्कः ) ( वाच० )

४ अत्र विप्रतिपत्तिः—अन्धकारत्वं भाववृत्ति, इति तौतातिताः । नेति वैशेषिकादयः, इति । (न्या० दी० पृ० ४ )

५ प्रौढप्रकाशक*—तेजःसामान्याभाव इत्यर्थः । ( नील० १। पृ० ३ ) ( सि० च० ) ( ल० व० )

---

* अतः, तमःस्वत्यपि देशे तेजःपरमाण्वादिसत्त्वेन तेजःसामान्याभावासत्त्वेऽपि न क्षतिः । ( नी० १। पृ० ४ )

[ ख ] द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यादभावस्तमः । ( वै० ५।२।१९ ) [ ग ] स्वपरप्रकाशकतेजःसामान्याभावः । यथा–" अदस्त्वया नुन्नमनुत्तमं तमः " " आसादितस्य तमसा नियतेर्नियोगात् " ( माघ० स० ४। श्लो० ३४ ) इत्यादौ ।

[ घ ] नीलरूपारोपविशिष्टतेजःसंसर्गाभाव इति केचित् । ( न्या० दी० पृ० ८ ) [ २ ] रूपवद्द्रव्यान्तरं तम इति, भट्टा वेदान्तिनः सांख्याः कन्दलीकाराश्चाहुः । ( वै० वि० १।१।५ ) [ ३ ] आरोपितं नीलरूपमिति श्रीधराचार्याः । [ ४ ] रूपदर्शनाभावस्तम इति प्राभाकराः । [ ५ ] आलोकज्ञानाभाव इति प्राभाकरैकदेशिनः । ( सर्व० औलु० पृ० ११० ) ( वै० वि० १।१।५ ) [ ६ ] अज्ञानं तमः ( तमोगुणलक्षणम् ) इति केचिद्वेदान्तिनः । [ ७ ] त्रिगुणात्मकप्र-

---

१ उद्भूतरूपवद्यावत्तेजःसंसर्गाभाव इत्यर्थः । ( वै० उ० ५।२।२० )

अत्रेदं बोध्यम्–[ क ] यत्रैव देशे तेजोऽभावस्तत्रैव देशे तम इत्यभिलप्यते । एवं च सति–गच्छता द्रव्येण तेजस आवरणात्, आवरकस्य द्रव्यस्य च गमनात् सुतरामेव तमसोऽपि* गतिभ्रम उपपद्यत इति । ( त० व० ) [ ख ] " तेजसो द्रव्यान्तरेणावरणाच्च " ( वै० ५।२।२० ) तदर्थश्च–गच्छता द्रव्यान्तरेणावृते तेजसि पूर्वदेशानुपलम्भादग्रिमदेशे चोपलम्भात्, तेजोऽभावस्य गच्छद्द्रव्यसाधर्म्यात् गतिभ्रमः, न तु वास्तवी तत्र गतिः । किंच—'नीलं नभः' इति प्रतीतिवत्, तमसि नीलरूपवत्ताप्रतीतिरपि भ्रम एव, इति ।

२ अत्रेदमवधेयम्–आलोकस्यान्यत्र चाक्षुषप्रत्यक्षे सहकारित्वेऽपि तमःप्रत्यक्षे न तत्सहकारस्यावश्यकता; वस्तुस्वाभाव्यात्, इति भट्टमीमांसकानामाशयः, इति ।

३ तन्मते, तमसः पृथिव्यामन्तर्भाव इति बोध्यम् । ( वै० वि० १।१।५ )

४ अत्रोच्यते–" सत्त्वं ज्ञानं तमोऽज्ञानं रागद्वेषौ रजः स्मृतम् " इति । ( मनु० अ० १२। श्लो० २६ )

---

* अत्रायं तर्कः–[ १ ] 'तमो यदि गतिमत्स्यात्, तेजोऽभावविषयकचाक्षुषसाक्षात्कारविषयो न स्यात्' इति । [ २ ] यद्वा–'तमो यदि गतिमत्स्यात्, तेजोऽभावाविषयकचाक्षुषसाक्षात्काराविषयो न स्यात्' इति । [ ३ ] 'तमो यदि तेजोभिन्नत्वे सति गतिमत्स्यात्, तेजोऽभावविषयकसाक्षात्कारविषयगतिमन्न स्यात्' इति । (न्या० दी० पृ० ८)

धानस्य तमआख्यो गुणविशेषः, इति सांख्याः । आलोकाभावस्तम इति वैशेषिकाः । ( सर्व० औलु० पृ० १११ ) २ राहुरिति ज्योतिर्विदः । ३ पादाग्रम् । ४ तमालवृक्षश्चेति काव्यज्ञाः ।

**तर्कः**—१ आन्वीक्षिकी[२] विद्या; न्यायशास्त्रम् । ( गौ० वृ० १।१।१ ) यथा—" प्रायस्तर्कमधीते ( न्यायमधीते सर्वः ) तनुते कुतर्कानिबन्धमप्यत्र, " ( दीधि० २। श्लो० ४। पृ० १ ) " गदाधरविनिर्मिता विषमदुर्गतर्काटवी, " ( ग० २। हेत्वा० बाध० पृ० ३४ ) " यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः " (नैष०) इत्यादौ । २ कणादमुनिप्रणीतं दशाध्यायात्मकं सूत्रोपनिबद्धं वैशेषिकदर्शनम् । यथा—"अथातो धर्मं व्याख्यास्यामः " ( वै० सू० १।१।१ ) इत्यारभ्य " तद्वचनादाम्नायस्य प्रामाण्यमिति " ( वै० सू० १०।२।९ ) इत्येतत्पर्यन्तं तर्कशास्त्रम । ३ अनुमानम् ( युक्तिः ) । ( तत्त्वप्रकाशिका ) ( दि० ४ ) ( गौ० वृ० १।१ ) यथा—" ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ" (ब्र० सू० २।१।१२) इत्यादौ । यथा वा—" आचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः " ( वेदान्त० प्र० ) इत्यादौ । ४ [ क ] आग-

---

१ स च, अविद्याया अष्टविधो भेदः, इति तन्मतम् ।

२ अत्र ( १ ) पुराणम्—" मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः " इति । ( २ ) " यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः " ( मनुः, १२।१०६ ) ( गौ० वृ० १।१।१ ) " त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं* चात्मविद्यां वार्तारम्भांश्च लोकतः" इति । ( मनु० अ० ७। श्लोक० ४३ ) " आन्विक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् " इति । ( भा० अ० अ० ३७ )

३ द्रव्यादिपदार्थतत्त्वज्ञानं † मननं चास्य शास्त्रस्य प्रयोजनमित्यवधेयम् । (त० व० १।२२)

४ अत्रोक्तं मनुना—" त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः । त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद्दशावरा " इति । ( मनुः, अ० १२। श्लो० १११ )

---

* आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति-रूपाश्चतस्रो विद्या विद्याप्रस्थाने कथिताः । ( गौ० वृ० १।१।१ )

† अत्रोच्यते—" तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डितः " इति । ( सुश्रुत० )

माविरोधिन्यायः । यथा—"नैषा तर्केण मतिरापनेया" । (कठ० उ० ३।९। श्रुतिः) इत्यादौ ।

[ ख ] मीमांसा । ९ आगमार्थपरीक्षणम् ।

**तर्कः**—( अयथार्थानुभवः ) [ क ] अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्व-

---

१ तस्य प्रयोजनं चोक्तं मनुना—"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति । ( मनु० १२।१०६ )

२ स चायं तर्कः* प्रमाणानामनुग्राहकः । तथा हि—'पर्वतोऽयं साग्निः, उतानग्निः' इति संदेहानन्तरं यदि कश्चिन्मन्यते 'अनग्निः' इति; तदा तं प्रति 'यद्ययमनग्निरभविष्यत्तर्हि धूमवान्नाभविष्यत्' इत्यवह्निमत्त्वेनाधूमवत्त्वप्रसञ्जनं क्रियते । स चानिष्टप्रसङ्गः† तर्क उच्यते । एवंप्रवृत्तः ( तर्कः ) अनग्निमत्त्वस्य प्रतिक्षेपात्, अनुमानस्य भवत्यनुग्राहकः, इति । ( त० भा० पृ० ४३ )

किं च—तर्को‡ धूमाग्न्योर्व्याप्तिग्रहे ( उत्पत्स्यमाने ) कार्यकारणभावभङ्गप्रसङ्गलक्षणो व्यभिचारशङ्का-§ निवर्तकश्च‖ । ( त० दी० २। पृ० २१ )

अत्रेदं ध्येयम्—[ १ ] तर्के, आपाद्यव्यतिरेकनिश्चयः, आपाद्यापादकयोर्व्याप्तिनिश्चयश्च करणम्, इति । (नील० गु० पृ० ३८ ) [ २ ] तर्के, व्याप्यस्य व्यापकस्य च बाधनिश्चयः कारणम्, इति । ( न्या० बो० गु० पृ० २१ )

३ अयमर्थः—[ १ ] तर्क इति लक्ष्यनिर्देशः । कारणोपपत्तित ऊह इति लक्षणम् । अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम् । कारणं व्याप्यम् । तस्योपपत्तिरारोपः;

---

* तर्को न प्रमाणसंगृहीतः ( इति ) न प्रमाणान्तरम्, ( अपि तु ) प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते । तस्योदाहरणम्—किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते, आहोस्विदकृतकेन, अथाकस्मिकम् ? इति । एवमविज्ञातेऽर्थे कारणोपपत्त्योहः प्रवर्तते । यदि कृतकेन हेतुना निर्वर्त्यते; हेतूच्छेदादुपपन्नोऽयं जन्मोच्छेदः । अथाकृतकेन हेतुना; ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोऽयं जन्मोच्छेदः । अथाकस्मिकम्; अतोऽकस्मान्निर्वर्त्यमानं न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते । तेन जन्मानुच्छेद इति । एतस्मिंस्तर्कविषये 'कर्मनिमित्तं जन्म' इति ( इत्यत्र ) प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते, तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्प्यते तर्क इति । सोयमित्थंभूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय वाऽर्थस्य भवति, इति । ( वात्स्या० १।१।१ )

तर्कः संशयेऽन्तर्भवतीति कश्चिदाह । ( त० भा० पृ० ४४ ) यद्यपि तर्को विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वाद्भेदेन कीर्तनम् । ( त० दी० गु० पृ० ३८ )

† अनिष्टस्य वह्न्यभावव्यापकधूमाभावादेः प्रसञ्जनम्, इत्यर्थः । अत्र ह्रदे निर्धूमत्वापादनव्यावृत्त्यर्थमनिष्टेति । ( प० च० )

ज्ञानार्थमूहस्तर्कः । ( गौ० १।१।४० ) अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते 'जानीयेममर्थम्' इति । अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति 'किंस्विदित्थम्, आहोस्विन्नेत्थम्' इति । विमृश्यमानयोर्धर्मयोरेकतरं कारणोपपत्त्याऽनुजानाति 'संभवत्यस्मिन् कारणम्, प्रमाणम्, हेतुः' इति । कारणोपपत्त्या स्यात् 'एवमेतत्, नेतरत्' इति । तत्र निदर्शनम्—योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते 'तं तत्त्वतो जानीय' इति जिज्ञासा । 'स किमुत्पत्तिधर्मकः, अनुत्पत्तिधर्मकः' इति विमर्शः । विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति । यदायमनुत्पत्तिधर्मकः, ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता; दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम्, उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्; उत्पन्नः खलु देहेन्द्रियवेदनाभिः संबध्यत इति । नास्येदं स्वकृतस्य कर्मणः फलम् । उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति । तदेवमेकस्यानेकशरीरयोगः शरीरादिवियोगश्चात्यन्तं न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति, तत्रानुजा-

---

तस्मात् ऊह आरोपः, अर्थाद्व्यापकस्य, इति । [ २ ] परेतु, ऊह* इत्येव लक्षणम् । ( तथा च–) कारणस्य व्याप्तिज्ञानादेरुत्पादनद्वारेत्यर्थः, इत्याहुः । (गौ० वृ० १।१।३९)

---

‡ स च तर्कः 'धूमो यदि वह्निव्यभिचारो स्यात्, तर्हि वह्निजन्यो न स्यात्' इत्याकारकः । ( नील० २। पृ० २१ )

§ सा च, 'हेतुरस्तु साध्यं मा स्तु' इत्याकारा, अप्रयोजकशङ्काशब्देन व्यवह्रियते । ( गौ० वृ० १।१।३९ )

|| तथा हि—[ १ ] व्यभिचारज्ञानाभावसंपादकत्वेन तर्कस्य व्याप्तिग्रहे उपयोगः । ( भवा० ) ( गौ० वृ० १।१।३९ ) [ २ ] परे तु, 'धूमो यदि वह्निव्यभिचारी स्यात्, वह्निजन्यो न स्यात्' इत्यनेन व्यभिचारशङ्कानिरासे, निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति परंपरयैवास्य ( तर्कस्य ) उपयोगः, इत्याहुः । ( गौ० वृ० १।३९ )

* अत्र, ऊहत्वं च मानमत्वव्याप्यो जातिविशेषः, 'तर्कयामि' इत्यनुभवसिद्धः । ( गौ० वृ० १।३९ )

नाति । सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते । ( वात्स्या० १।१।४० )
[ ख ] व्यापकाभाववत्त्वेन[1] निर्णीते व्याप्यस्याहार्यारोपाद्यो व्यापकस्याहार्यारोपः, सः । यथा–" निर्वह्नित्वारोपान्निर्धूमत्वारोपः 'निर्वह्निः स्यान्निर्धूमः स्यात्' इत्यादिः । ( गौ० वृ० १।३९ )
[ ग ] अनिष्टप्रसङ्गः । स च, सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्याङ्गीकारेणानिष्टव्यापकप्रसञ्जनम् । ( त० भा० पृ० ४३ ) ( प्र० प्र० ) यथा–पर्वतो वह्निमान् धूमादित्यत्र 'धूमोऽस्तु, वह्निर्मास्तु' इत्युक्ते (इति, हेतोरप्रयोजकत्वशङ्कायाम् ) 'यद्ययं निर्वह्निः स्यात्तर्हि निर्धूमः स्यात्' । न भवति च निर्धूमः । तस्मान्न निर्वह्निः; किं तु वह्निमानेवेति । ( प्र० प० पृ० २१ )
[ घ ] व्याप्यारोपाद्व्यापकप्रसञ्जनम् । ( गौ० वृ० ४।३ )
[ ङ ] व्याप्यारोपेण[2] व्यापकारोपः । ( त० सं० गु० )( सर्व० अक्ष० पृ० ११३ ) यथा–'यदि वह्निर्न[3] स्यात्, तर्हि धूमोऽपि न स्यात्' इति । ( त० सं० गु० )

---

१ 'ह्रदो निर्वह्निः स्यान्निर्धूमः स्यात्' इत्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत इति । 'निर्वह्निः स्यात्, अद्रव्यं स्यात्' इत्यादिवारणाय व्याप्यस्येति । 'तद्व्याप्यारोपाधीनस्तदारोपः' इत्यर्थलाभाय व्यापकेति । ( गौ० वृ० १।१।३९ )

२ तदर्थश्च [ क ] आहार्यव्याप्यवत्ताभ्रमजन्यः* आहार्यव्यापकवत्ताभ्रमः । ( नील० गु० पृ० ३८ ) [ ख ] अत्र व्याप्यपदं व्याप्यत्वेन ज्ञायमानपरम्; तेन, अव्याप्यारोपेण तर्के नाव्याप्तिः । आरोपपदं ज्ञानमात्रपरम्; तेन, अयोगोलके धूमाभावेन वन्ह्यभावतर्के नाव्याप्तिः । व्यापकारोपेत्यत्र आरोपपदं बाधविषयकायथार्थनिश्चयपरम्; तेन, 'ह्रदो वह्निमान्' इत्यनुमितौ नातिव्याप्तिः । बाधनिश्चयेऽयथार्थत्वानिवेशात्, 'अयोगोलकं धूमाभाववत्स्यात्' इति तर्के नातिव्याप्तिः; अयथार्थानुभवस्यैव लक्ष्यत्वात् । इत्थं च–व्याप्यत्वेन ज्ञानजन्यत्वे सति बाधविषयकायथार्थनिश्चयत्वं पर्यवसितम् । (वाक्य० गु० पृ० २१)

३ अत्र, वह्न्यभावो व्याप्यः; धूमाभावस्तु व्यापकः, इति ज्ञेयम् । (सि० च० गु० पृ० ३४)

---

* आहार्यज्ञानमात्रेऽतिव्याप्तिवारणाय तज्जन्य इति । निश्चयसत्त्वे शङ्कादौ करादिभ्रमात् 'अयं पुरुषः' इत्याहार्यारोपः ( भवति ); तत्रातिव्याप्तिवारणाय प्रथममाहार्यपदम् । रजतत्वव्याप्याभाववत्ताग्रहकाले, आहार्यं यत् रजतत्वव्याप्यवत्ताज्ञानम्, तज्जन्ये 'इदं रजतम्' इत्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम् । (नील० ग० पृ० ३८)

स चायं तर्कः पञ्चविधः । आत्माश्रयः, अन्योन्याऽऽश्रयः, चक्रकः, अनवस्था, तदन्यबाधितार्थप्रसङ्गश्च ( प्रमाणबाधितार्थकप्रसङ्गः ) इत्याचार्याः । तत्र (१) स्वापेक्षापादकोऽनिष्टप्रसङ्ग आत्माश्रयः । अपेक्षा च ज्ञप्तावुत्पत्तौ स्थितौ च ग्राह्या । तत्राद्या यथा—'एतद्धटज्ञानं यद्येतद्धटज्ञानजन्यं स्यात्, एतद्धटज्ञानभिन्नं स्यात्' इति । द्वितीया यथा—'घटोऽयं यद्येतद्धटजनकः स्यात्, एतद्धटभिन्नः स्यात्' इति । तृतीया च—'अयं घटो यद्येतद्धटवृत्तिः स्यात्, तथात्वेनोपलभ्येत' इति । (२) स्वापेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः । यथा च—'अयं घटो यद्येतद्धटज्ञानजन्यज्ञानविषयः स्यात्, एतद्धटभिन्नः स्यात्' इति । उत्पत्तौ, स्थितौ च स्वयमुदाहार्यम् । (३) स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकः । पूर्वोक्त एवापादके जन्यपदान्तरमन्तर्भाव्योदाहार्यम् । अपेक्षात्वत्र, साक्षात्परंपरासाधारणी ग्राह्या । (४) अनवस्था पुनरप्रामाणिकी, ( न तु प्रवाहमूलकप्रसङ्गः ) । यथा—'घटत्वं यदि यावद्धटहेतुवृत्ति स्यात्, घटजन्यवृत्ति न स्यात्' इति । (५) उक्तचतुष्कान्यः प्रसङ्गः प्रमाणबाधितार्थकप्रसङ्गः । सोऽपि द्विविधः । व्याप्तिग्राहकः, विषयपरिशोधकश्च । तत्राद्यो यथा—'धूमो यदि वह्निव्यभिचारी स्यात्, तदा वह्निजन्यो न स्यात्' इति । द्वितीयस्तु—'पर्वतो यदि निर्वह्निः स्यात्, निर्धूमः स्यात्' इत्यादिः । ( जग० तर्कग्रन्थ० ) ( गौ० वृ० १।१।३९ )

---

१ अत्र—प्राचीननैयायिकास्तु, स च तर्क एकादशविधः । व्याघातः, आत्माश्रयः, इतरेतराश्रयः, चक्रकाश्रयः, अनवस्था, प्रतिबन्दिकल्पना, लाघवकल्पना, गौरवम्, उत्सर्गः, अपवादः, वैजात्यम्, इत्यङ्गीचक्रुः । ( सर्व० अक्ष० पृ० ११३ ) नव्यास्तु, [ क ] व्याघातादीनामप्रसञ्जनरूपत्वात्, न तर्कात्मकत्वम्; किं तु—तत्साधकत्वमेव तर्कस्य, इत्याहुः । ( वृत्ति० ) [ ख ] प्रथमोपस्थितत्वम्, उत्सर्गः, विनिगमनाविरहः, लाघवम्, गौरवम्, इत्यादिकं तु प्रसङ्गानात्मकत्वात् न तर्कः; किं तु—प्रमाणसहकारित्वरूपसाधर्म्यात् तथा ( तर्कत्वेन ) व्यवहारः, इति । ( गौ० वृ० १।१।३९ )

२ वृत्तिकारास्तु, अनवस्था च अव्यवस्थितपरंपराऽऽरोपाधीनाऽनिष्टप्रसङ्गः । यथा—'यदि घटत्वम् घटजन्यत्वव्याप्यं स्यात्, कपालसमवेतत्वव्याप्यं न स्यात्' इत्याहुः । ( गौ० वृ० १।३९ )

३ अत्र धूमादेर्व्यभिचारशङ्कानिवृत्तिद्वारा विषयस्य ( वह्न्यादेः ) निश्चायकत्वेन, एतत्तर्कस्य परिशोधकत्वमित्यवधेयम् ।

**तात्पर्यम्**—[ क ] इतरपदस्येतरपदार्थसंसर्गज्ञानपरत्वम् । ( चि० )

[ ख ] तदर्थप्रतीतीच्छयोच्चरितत्वम् । ( तर्का० ४ ) ( त० दी० ४। पृ० ३१ )

[ ग ] वाक्यार्थप्रतीतिजनकतयाऽभिप्रेतत्वम् । ( श० प्र० )

[ घ ] 'इदमेतस्मिन्नर्थेऽस्यान्वयं प्रत्यापयतु' इति प्रयोक्तुरिच्छा । (न्या०

---

१ तात्पर्यस्य निश्चय एव शाब्दबोधे शब्दस्य *सहकारि †कारणम्; तस्य च संशये, व्यतिरेकनिश्चये ( 'सैन्धवपदं लवणपरं न' इति निश्चये ) चान्वयाबोधात्, तद्भ्रमे चान्वयबोधाच्च । (न्या० म० ४। पृ० २४) ( दि० ४। पृ० १८९ )

२ अत्रान्यदप्युच्यते—प्रतिपादकेच्छाविषयत्वं तत्परत्वम् । यः शब्दो वक्त्रा यदिच्छया प्रयुक्तः स तत्परः । सा च प्रतिपाद्यधीः प्रवृत्तिनिवृत्तिविषययोः तत्परत्वं नानार्थात् श्लिष्टादनेकार्थान्विनैकक्रियापरानुरूप्यलाक्षणिकपदादनावृत्त्या क्रमेणानेकार्थज्ञानम्; न त्वेकदैव, सकृदर्थपरत्वनियमेनैकस्योच्चारणेऽनेकपरत्वाभावादिति सकृत्तन्त्रैकवाक्यतया वदन्ति । (चि०)

३ तदर्थश्च—'एतत्पदमेतत्पदेन सह संभूयान्वयबोधं जनयतु' इति । ( त० प्र० ख० ४। पृ० ९२ )

४ प्रयोक्ता चाभिसंधापयितृमात्रम्, न तु वक्तैव; मौनिश्लोकाव्याप्तेः । शुकवाक्ये भगवदिच्छैव† गतिः । ( न्या० म० ४। पृ० २४ ) ( मु० ४। पृ० १८९ )

---

* अत्रोक्तं कैश्चित्—प्रत्यक्षोपस्थितेनापि कलायेन तात्पर्यग्रहसहकारिणमासाद्य 'कलायं (शमीधान्यम्, मुद्गादि ) पचति' इत्यत्रान्वयबोधः, इति । ( न्या० सि० दी० पृ० ४६ )

† अत्र मतभेदाः—[ १ ] अपरे ( शशधरादयः ), शाब्दबोधं प्रति तात्पर्यज्ञानस्य कारणतं नास्त्येव, इत्याहुः । [ २ ] केचित्तु, सैन्धवमानयेत्यादौ नानार्थस्थल एव तात्पर्यसंशयादेः संभवेन तत्रत्यशाब्दबोध एव तात्पर्यनिश्चयो हेतुः, न तु 'घटमानयेत्यादौ' घटादिशाब्दबोधे हेतुः, इत्याहुः । [ ३ ] [ क ] परे तु, तत्रापि ( घटादिशाब्दस्थलेऽपि ) 'घटपदम् कुम्भपरम्, लक्षणया पटपरं वा' इति संशये घटशाब्दबोधाभावात्, सर्वत्र तात्पर्यनिश्चयः कारणम्, इत्याहुः । (म० प्र० ४। पृ० ५८) [ ख ] वस्तुतस्तु—नानार्थानुरोधेन शाब्दसामान्ये एकपदार्थप्रकारकापरपदार्थविशेष्यकप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्यैव हेतुत्वम् । ( त० प्र० ख० ४। पृ० १४ ) ( सि० च० ४। पृ० ३१ ) [ ४ ] अन्ये तु, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ ( राजपुत्रसंसर्गप्रतीतीच्छयोच्चरिते ) राज्ञ इत्यस्य पुरुषपदेन साकाङ्क्षत्ववारणाय 'यत् पदं यत्पदव्यतिरेकेण तात्पर्यविषयीभूतार्थान्वयाननुभावकम्, तत् पदं तेन पदेन साकाङ्क्षम्' इति तात्पर्यगर्भाकाङ्क्षाज्ञानकारणत्वात-

म० ४। पृ० २४ ) ( भा० प० ४। श्लो० ८९ ) ( नील० ४। पृ० ३१ ) यथा—सैन्धवमानयेत्यादौ 'सैन्धवपदम् आनयनपदार्थे लवणं प्रत्यापयतु' इत्याकारिकाया वाक्यप्रयोक्तुरिच्छायाः सत्त्वाल्लक्षणसमन्वयः । ( म० प्र० ४। पृ० ९८ ) एवम्—श्वेतो धावति, इत्याद्युदाहार्यम् । ( दि० ४। पृ० १८९ )

**तादर्थ्यम्**—[ क ] तत्प्रयोजनकत्वम् । यथा—यूपाय दार्वित्यादौ दारुणस्तादर्थ्यम् । ( ग० व्यु० का० ४। पृ० ९८ )

[ ख ] उपकार्योपकारकभावरूपः संबन्धः, इति शाब्दिका वदन्ति ।

[ ग ] तदुद्देश्यकत्वमिति केचित् ।

**तादात्म्यम्**— [ १ ] [ क ] तद्वृत्तिधर्मविशेषः । यथा—प्राचीनोक्ते "तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकोऽभावः सोऽन्योन्याभावः" इ-

---

१ अत्र, अर्थविशेषे तात्पर्यग्राहकाणि प्रकरणादीनि ( संसर्गादीनि, संयोगादीनि वा ) विज्ञेयानि । ( म० प्र० ४। पृ० ५० )

२ अत्र 'स एवार्थः प्रयोजनमस्य तत्त्वम्' इति व्युत्पत्तिः । ( ग० व्यु० का० ४। पृ० ९८ )

३ अत्र, तत्प्रयोजनत्वं च समभिव्याहृतपदार्थनिष्ठव्यापारानुकूलकृतिविषयत्वम् । ( ग० व्यु० का० ४। पृ० ९८ )

४ अत्र तत्प्रयोजनकत्वरूपतादर्थ्यं च तदिच्छाधीनेच्छाविषयत्वापरपर्यायम् । ( ग० व्यु० का० ४। पृ० ९८ ) अधिकं च चतुर्थीशब्दव्याख्यानावसरे समालोचितम्, इति तत्र द्रष्टव्यम् ।

५ अत्र तादात्म्यत्वं च संबन्धताविशेषः प्रतीतिसाक्षिकः । ( त० प्र० १। पृ० ४९ )

---

इयकतया आकाङ्क्षाघटकतयैव तात्पर्यज्ञानं हेतुः; न तु स्वातन्त्र्येण, इत्याहुः । ( त० प्र० ख० ४। पृ० ९३ )

† अत्रायमाशयः —शुकवाक्याच्छाब्दबोधे ईश्वरीयतात्पर्यज्ञानस्य कारणत्वं कल्प्यते । तेन, शुकस्यार्थज्ञानाभावेनाभिसंधानविरहेऽपि, नाभिसंधानविरहितेच्छायास्तात्पर्येणानुपपत्तिः, इति । ( त० प्र० ख० ४। पृ० ९२ ) अत्रान्येऽप्यमन्यन्त —शुकवाक्ये विनैव तात्पर्यज्ञानम्, शाब्दबोधः, इति । ( मु० ४। पृ० १८९ )

* अत्रोक्तं भर्तृहरिणा —"संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति । अत्रोदाहरणानि तु "सशङ्खचक्रो हरिः" इत्यादीनि ज्ञेयानि । ( काव्य प्र० उ० २ )

त्यन्योन्याभावस्वरूपे निरूपणीये, घटान्योन्याभाव इत्यत्र घटत्व[1]मेव घटतादात्म्यम्। (स्व०)

[ख] स्ववृत्त्यसा[2]धारणो धर्मः। तादृशधर्मस्तद्व्यक्तित्वादिरूपः। (ग० व्यु० का० १। पृ० ९) यथा—नीलो घट इत्यादौ (प्रथमाविभक्तेरभेदार्थकत्वमते) नीलादिनिष्ठतद्व्यक्तित्वमेव नीलपदोत्तरप्रथमविभक्त्यर्थस्तादात्म्यम्। (स्व०)

[२] भेदसहिष्णुर[3]भेदस्तादात्म्यमिति केचिद्वेदान्तिन आहुः।

[३] भेदाभेदबुद्धिनियामकः संबन्धविशेषः, इति सांख्या आहुः। (सांख्य० भा०) (वाच०)

**तादृशम्**—तुल्यदर्शनम्। यथा—"यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः, तादृशप्रतियोगितानवच्छेदकत्वम्" (मु० २। पृ० १४९) इत्यादौ। यथा वा—"तथाविधं प्रेम पतिश्च तादृशः" (कुमा० स० ५। श्लो० २) इत्यादौ (वाच०)

**तारतम्यम्**—न्यूनाधिकभावः। यथा—"रमाब्रह्मादयो देवास्तारतम्येन संयुताः" इत्यादौ। (स्व०) यथा वा—"तारतम्ययोगयुक्तांश्च भावानतिरूक्षानतिस्निग्धानत्युष्णानतिशीतानित्येवमादीन् विवर्जयेत्" (सुश्रुत०) इत्यादौ। यथा वा—"निर्धनं निधनमेतयोर्द्वयोस्तारतम्यविधिमुक्तचेतसाम्। बोधनाय विधिना विनिर्मिता रेफ एव जयवैजयन्तिका" (उद्भटः) इत्यादौ।

**ताव[4]त्**—१ तदेत्यर्थः। यथा—"भर्तापि तावत्क्रथकैशिकानाम्" (रघु०

---

१ अत्रायं भावः—घटान्योन्याभावबोधे, घटत्वं संबन्धविधया प्रकारविधया च प्रतियोगितावच्छेदकम्, इति द्विविधतया घटत्वस्य भानम्; तदवच्छिन्नप्रतियोगिताकश्चान्योन्याभाव इति लक्षणसमन्वयः, इति। (त० प्र० १। पृ० ४५)

२ अत्रासाधारण्यं च एकमात्रवृत्तित्वम्। (ग० व्यु० का० १। पृ० ५) शिष्टं चाभेदशब्दव्याख्यानावसरे संपादितम्।

३ मायावादिमते—तत्सत्ताऽतिरिक्तसत्ताकत्वाभावः, इति तदर्थः। (वेदा० प०)

४ अत्र कोशौ ज्ञेयौ-[१] "यावत्तावत्परिच्छेदे कार्त्स्न्ये मानावधारणे" इति विश्वः। [२] "यावत्तावच्च साकल्येऽवधौ मानावधारणे" इति। अमरः, (का० ३। व०नाना० श्लो० २४५)

स० ७।श्लो० ३२ ) इत्यादौ । २ साकल्यम् । यथा—" तावत्प्रकीर्णाभिनवोपचारम् " ( रघु० स० ७।श्लो० ४ ) इत्यादौ । ३ अवधिः । यथा—" बन्द्धुं न संभावित एव तावत्[1] " ( रघु० स० ७। श्लो० ६ ) इत्यादौ । ४ मानार्थः । यथा—" त्वमेव तावत्[2] परिचिन्तय स्वयम् " ( कुमार० स० ५। श्लो० ६७ ) इत्यादौ । ५ अवधारणम् । यथा—" इन्द्रप्रस्थगमस्तावत्[3] कारि मा सन्तु चेदयः " ( माघ० स० २। श्लो० ६३ ) इत्यादौ । ६ परिमाणविशिष्टम् । यथा—(१) " जम्बुद्वीपोऽयं यावान् प्रमाणविस्तारतः, तावता क्षीरोदधिना परिवेष्टितः " ( भाग० ५।२०।२ ) इत्यादौ । ( २ ) क्रियाविशेषणत्वे यथा—" पुरोऽस्य यावन्न भुवि व्यलीयत । गिरेस्तडित्वानिव तावदुच्चकैः " ( माघ० स० १। श्लो० १२ ) इत्यादौ । ७ प्रशंसा । ८ पक्षान्तरम् । ९ अधिकारः । १० संभ्रमः । ( वाच० ) क्वचित्—पादपूरणार्थं वाक्यालंकारार्थं चापि तावच्छब्दः प्रयुज्यते, इति ।

**तिङ्**[4]—( विभक्तिः ) [ क ] स्वभिन्न[5]प्रथमान्तस्य नाम्नोऽर्थे स्वार्थसंख्याबोधं प्रति समर्थाः प्रत्यया[6]स्तिङ उच्यन्ते । (श० प्र० श्लो० ९३ । पृ० १३४) [ ख ] यैः[7] प्रत्ययः, इतरार्थान्वितस्वार्थावच्छिन्नार्थविशेष्यकशाब्दबोधं प्रति

---

१ आलोकमार्गप्राप्तिपर्यन्तमित्यर्थः । ( माघ० टी० मल्लि० ७।६ )

२ यावन्मात्रं विचारणीयम्, तावन्मात्रमित्यर्थः । ( माघ० टी० मल्लि० ५।६७ )

३ मा कारि तावत्, न क्रियतामेवेत्यर्थः । ( माघ० टी० मल्लि० २।६३ )

४ तिङ् शाब्दिकैराख्यातमित्युच्यते । ( श० प्र० श्लो० ९५। पृ० १३७ ) आख्यातत्वं च तिवाद्यन्यतमत्वम्; संकेतविशेषेण आख्यातपदवत्त्वं वा । ( म० प्र० ४। पृ० ५१ )

५ प्रथमा तु, प्रथमान्तस्य नाम्नोऽर्थे संख्याबोधिकाऽपि, न स्वेतरप्रथमान्तस्य, इति तद्गुदासः । ( श० प्र० श्लो० ९३। पृ० १३४ )

६ 'चैत्रस्तथा' इत्यादौ स्वार्थैकत्वबोधकोऽपि तथादिनिपातः, न प्रत्ययः, इति तद्व्युदासः । ( श० प्र० श्लो० ९३। पृ० १३८ )

७ पूर्वोक्तं लक्षणं च, 'मत्स्यण्डी फाणितं च खण्ड-(गुड-)विकारे,' 'देवो ब्रह्म विबुधौ' इत्यादौ स्वप्रकृत्यर्थभिन्नेऽपि मत्स्यण्डीप्रभृतौ सुपो द्वित्वादिबोधकत्वात्तस्याम् ( औट्सुपि ) अतिव्याप्तम्; अत इदं लक्षणान्तरं बोध्यम् । ( श० प्र० श्लो० ९४। अवतरण० पृ० १३६ )

स्वरूपायोग्यः, स तिङ् उच्यते । (श० प्र० श्लो० ९४ । पृ० १३६)
[ ग ] धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दस्तिङ् उच्यते । ( श० प्र० श्लो० ९५ । पृ० १३७ ) यथा—चैत्रः पचतीत्यादौ तिबाख्यातम् । तिङो दशविधाः । लट्, लोट्, लिङ्, लङ्, लुङ्,

---

१ तथा हि—निपाताः (साक्षीनिशनम्), पदार्थान्तरविशिष्टस्वार्थावच्छिन्नावगाहिनाकशाब्दं प्रति स्वरूपायोग्याः भवन्ति, (इति तत्र लक्षणसमन्वयः) ।
'पचंश्चैत्रो गच्छति' इत्यादित इव, 'पचति चैत्रो गच्छति' इत्यादितो जात्वपि पक्तृत्वाद्यवच्छिन्नधर्मिकान्वयमतेरनुत्पादात्, धात्वर्थावच्छिन्नस्वार्थविधेयताके तत्तुल्ययोगक्षेम एव चान्वयबोधे तिङः स्वरूपायोग्यत्वात् । अत एव—चैत्रः पचतीत्यत्रेव, 'चैत्रो न पचति, पचत्येव, पचतीव' इत्यादौ निपातार्थे निषेधादौ विधेयतावच्छेदकत्वेन तिङर्थस्य कृत्यादेर्बोधः, न तु सर्वत्र; 'चैत्रः पचति पुरुषः' इत्यादितश्चैत्रादौ पचत्पुरुषादेरबोधात् । सुपाद्यास्तु प्रत्ययाः, 'पीतः, पाराशर्यः, पाचकः, पिपक्षुर्वा पुरुषस्तिष्ठति' इत्यादौ प्रकृत्यर्थविशिष्टैस्तादात्म्य—अपत्यादिस्वार्थैरवच्छिन्नपुरुषादिधर्मिताक एव शाब्दे स्वरूपयोग्याः । चादयस्तु निपाताः, पदार्थान्तरविशिष्टस्वार्थावच्छिन्नविषयताकबोधं प्रत्यसमर्था अपि, न प्रत्ययाः (इति तत्र नातिव्याप्तिः) । (श० प्र० श्लो० ९४ । पृ० १३७)
२ पूर्वोक्तं (द्वितीयम्) लक्षणम्, 'यो यः शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दितः' इत्यादौ वीप्सादिसमभिव्याहारात्, यदि शूद्रान्नपक्तृद्विजत्वाद्यवच्छेदेन निन्दितत्वादेरन्वयः, तदाऽसंभवदोषग्रस्तम् । अत इदं तृतीयं लक्षणान्तरम् । (श० प्र० श्लो० ९५) अवतरण० पृ० १३७)
३ 'पाकश्चैत्रस्य' इत्यादौ नामार्थेनैव विशिष्टस्य स्वार्थकर्तृत्वस्याभिधायकः षष्ठ्यादिकः, न तु धात्वर्थेन विशिष्टस्य; । 'चैत्रः पचति' इत्यादौ धात्वर्थावच्छिन्नस्य यत्नस्य विधेयतया बोधकत्वेऽपि नामधातुः, न स्वार्थस्य; । 'चैत्रः पाचकः' इत्यादौ तु धात्वर्थविशेषितस्य यत्नस्य न विधेयत्वम्, किं तु कर्तुरेव; कृतां धर्मिशक्तत्वात् । 'अयं पक्तुं कालः' इत्यादौ तुमादिना धात्वर्थावच्छिन्नोऽनुकूलत्वादिः; 'इयं चिकीर्षा' इत्यादौ च सनादिनेच्छादिरेव विधेयत्वेनानुभाव्यते; । इति न तेष्वतिप्रसङ्गः । (श० प्र० श्लो० ९५ । पृ० १३७)
४ अत्र, आख्यातत्वं च रूढिसंबन्धेन आख्यातपदवत्त्वम् । तिप्त्वत्वादिकमेव विशिष्य आख्यातपदशक्ततावच्छेदकं बोध्यम् । (त० प्र० ख० ४ । पृ० ७३)
रथो *गच्छतीत्यादौ तिबाख्यातेन व्यापारो निरूढलक्षणया बोध्यते । (न्या० म० ४ ।

---

* अत्र, रथादीनामचेतनतया गमनानुकूलप्रयत्नशून्यत्वात् व्यापार एव लक्ष्यते, इति भावः । (न्या० म० ४ । पृ० १८)

लिट्, लुट्, आशीर्लिङ्, लृट्, लृङ्, इति । ( श० प्र० श्लो० ९३। पृ० १३९ ) लडादयो दश, प्रत्येकं परस्मैपद–आत्मनेपद–भेदेन द्विविधाः ।

अत्रेदमवधेयम्–[ क ] उभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठम्, तत्रात्मनेपदम्; यत्र च कर्तृभिन्ननिष्ठम्, तत्र परस्मैपदं साधु । [ ख ] चिन्तामणिकृतस्तु, यत्र क्रियाफले कर्तुरभिप्रायः ( इच्छा ) तत्रैवात्मनेपदम्, इत्याहुः । ( श० प्र० श्लो० ९७। पृ० १४४–१४९ ) अत्राधिकं तु 'आत्मनेपदम्' शब्दव्याख्यानावसरे संपादितम्, तत्रावलोकनीयम् ।

तिङर्थश्च १ [ १ ] यत्नः । यथा–चैत्रः पचतीत्यादौ यत्नः ( कृतिः )

---

पृ० १८)(मु० ४) जानाति, इच्छति, यत्नं करोति, इत्यादावाख्यातस्य आश्रयत्वे लक्षणा । केचित्तु, *'रथो गच्छति' इत्यत्राख्यातेन कृतिर्बोध्यते, इत्याहुः । (न्या० म० ४। पृ० २०)

१ अत्रेदं तत्त्वम्—जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वमेव तिङः शक्यतावच्छेदकम्, न तु प्रवृत्तित्वम्; [ क ] 'चैत्रो निश्वसिति' इत्यादितोऽपि श्वासानुकूलप्रयत्नस्य प्रतीतेः, पचतीत्यादितः 'पाककृतिमान्' इति प्रतीतेश्च । ( श० प्र० श्लो० ९५। पृ० १३७–१३८ ) [ ख ] 'पचति' इत्यस्य 'पाकं करोति' इत्यादियत्नार्थककरोतिना सर्वैर्व्याख्यातविवरणात्, वृद्धव्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः । [ ग ] 'किं करोति?' इति यत्नप्रश्ने 'पचति' इत्युत्तरस्य यत्नार्थकत्वं विनाऽनुपपत्तेः, इत्याचार्याः । ( चि० ) ( वाच० )

२ अत्रायमर्थः—चैत्रः पचतीत्यादौ तिङर्थकृतौ धात्वर्थस्य 'तं करोमि' इति प्रतीतिनियामकः साध्यत्वाख्यविशेष्यताप्रभेदः, तद्विशिष्टं फलोपधायकत्वलक्षणमनुकूलत्वं वा संसर्गमर्यादया भासते । तादृशकृतेश्च चैत्रादिनामार्थे "ईश्वरः पचति" इत्यादिप्रयोगापत्तिवारणार्थमवच्छेदकत्वेनैव संसर्गेणान्वयः । ( श० प्र० श्लो० ९५। पृ० १३७–१३८ )

अत्रेयं मतप्रक्रिया ज्ञेया—शाब्दिकाः, "भावप्रधानमाख्यातम्; सत्त्वप्रधानानि नामानि" इति यास्कमुनिपठितं निरुक्तमनुरुध्य, 'चैत्रस्तण्डुलं पचति' इत्यादौ 'चैत्राभिन्नकर्तृकस्तण्डुलनिष्ठविक्लित्त्यनुकूलो व्यापारः' इत्याद्याकारकं सर्वत्र धात्वर्थमुख्यविशेष्यकमेव

---

* [ १ ] एतन्मते, 'चैत्रेण स्थीयते' इत्यत्र 'चैत्रकर्तृका स्थित्यनुकूला कृतिः' इति बोधः । कृतौ संख्याया नान्वयः, इति भावः । [ २ ] अन्ये तु, 'चैत्रकर्तृका वर्तमाना स्थितिः' इति धात्वर्थविशेष्यक एव शाब्दबोधः । प्रत्ययस्य निरर्थकत्वम्, इत्याहुः । न्या० म० ४। पृ० २० )

तिवाख्यातस्य वाच्यः । ( चि० ४ ) [ २ ] क्वचित्–समवायित्वम्, आश्रयत्वं वा । यथा–ईश्वरो जानाति, इच्छति; रथो गच्छतीत्यादौ च । [ ३ ] अवच्छेदकत्वम् । यथा–चैत्रो जनातीत्यादौ । [ ४ ] दैशिकाश्रयत्वम् । यथा–बुद्धिरवगाहते, घटो भासते इत्यादौ । [ ५ ] प्रतियोगित्वम् । यथा–घटो नश्यतीत्यादौ तिबर्थः । ( श० प्र० श्लो० ९५। पृ० १३८ ) ( चि० ४ ) ( त० दी० ) ( दि० ४ )

एवम्–तसादिप्रत्ययानामप्यर्था यथायोग्यं स्वयमूह्याः । [ ६ ] शाब्दिकास्तु, आश्रयः ( कर्ता, कर्म च ) आख्यातार्थः, इत्याहुः । [ ७ ] अनुकूलव्यापारमात्रमाख्यातार्थः, इति भट्टमीमांसका मण्डनमिश्राश्चाहुः [८] कालः, संख्यामात्रं सर्वत्राख्यातार्थः; पचतीत्यादौ– 'धातुप्रतिपाद्यो विक्लित्यनुकूलव्यापारो यत्नं विनाऽनुपपन्नः' इति तेन यत्न आक्षिप्यते, इति प्राभाकराः । [ ९ ] रत्नकोशकृतस्तु, आख्यातार्थ उत्पादना; सा चोत्पादकता; सैव भावना । यथा–पचतीत्यादावाख्यातस्य 'पाकमुत्पादयति' इति विवरणात् तथात्वम्, इत्याहुः । ( चि० ४ ) ( श० प्र० पृ० १३९ )

---

शाब्दबोधं स्वीकुर्वन्ति । नैयायिकास्तु, 'भावो भावना ( कृतिः ) प्रधानं धात्वर्थं प्रति' इति विग्रहलभ्यस्य पूर्वोक्तयास्कनिरुक्तार्थस्य स्वीकारेण 'तण्डुलनिष्ठविक्लित्यनुकूलव्यापारानुकूलकृतिमान्' इत्याद्याकारकं सर्वत्राख्यातार्थविशेष्यकं ( प्रथमान्तार्थमुख्यविशेष्यकमेव ) शाब्दबोधमुररीचक्रुः । अधिकं तु "शाब्दबोधः" इत्यत्र द्रष्टव्यम् ।

१ अत्र दीधितिकृतः, ( पचतीत्यादावाख्यातस्य कृत्यर्थकत्वेऽपि ) 'चैत्रेण पक्वम्' इत्यादाविव, 'चैत्रेण पच्यते' इत्यत्रापि तृतीयैव कर्तृत्वमनुभाव्यते, न त्वाख्यातेन; तिङर्थकृतेर्धात्वर्थविशेष्यत्वनियमात्, इत्याहुः । ( श० प्र० श्लो० ९५। पृ० १४० )

२ अत्र, ज्ञानादिमत्त्वमात्रप्रतीतेः, समवायित्वे तिङो निरूढलक्षणेति भावः । ( श० प्र० श्लो० ९५। पृ० १३८ )

३ अत्रेदमवधेयम्–आश्रयत्वादौ तिङो निरूढलक्षणा । कृतित्ववत् आश्रयतात्वादेरखण्डत्वे तदवच्छिन्नेऽपि तिङः शक्तिरेव, इति । ( श० प्र० श्लो० ९५। पृ० १३८ )

४ एतन्मते केवलं फलं धातोरर्थः, इति ज्ञेयम् । ( श० प्र० श्लो० ९५। पृ० १४० )

५ एतन्मते व्यापारमात्रं धातोर्वाच्यार्थः, इति ज्ञेयम् । ( चि० ४ )

२ एकत्वादिसंख्या । ३ वर्तमानादिकालः । यथा—चैत्रस्तण्डुलं पचतीत्यादौ तिबर्थकृतात्रैकत्वरूपसंख्या, वर्तमानकालश्चाख्यातेन प्रतीयते । ( चि० ४ )

**तिरोभावः**—[ १ ] नाशः । [ २ ] सांख्यास्तु, अनभिव्यक्तिस्तिरोभावः, इत्याहुः ।

**तु**—( अव्ययम् ) १ पक्षान्तरम् । यथा—“ आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ” ( मनुः, अ० १। श्लो० १०९ ) इत्यादौ । २ समुच्चयः । यथा—“उष्ट्रयानं समारुह्य खरयानं तु कामतः । स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति ” ( मनुः अ० ११। श्लो० १२१) इत्यादौ । ३ पूजा । यथा—माणवकस्तु भुङ्क्ते शोभनमित्यादौ । ( पा० सू० वृ० ८। १।३९ ) ४ पादपूरणार्थम् । ५ भेदः । ६ अवधारणम् । ७ नियोगः । प्रशंसा । ८ विनिग्रहः । ( वाच० )

**तुमुन्**—( प्रत्ययः ) [ १ ] [ क ] प्रकृतक्रियासमानकर्तृकत्वसहिततद्विषयकेच्छाधीनेच्छाविषयत्वम् । यथा—पक्तुं व्रजतीत्यत्र तुमर्थः । ( ग० व्यु० का० ४। पृ० ९८ ) ( श० प्र० श्लो० ९२। पृ० १२७ ) [ ख ] तत्प्रागभावकालीनतद्विषयकेच्छा । यथा—भोक्तुमागच्छतीत्यादौ । ( सि० च० ४। पृ० ३२ ) [ २ ] इच्छावान् । यथा—भोक्तुं व्रजती-

---

१ अत्र सूत्रम्—“ तुपश्यपश्यताहैः पूजायाम् ” ( पा० सू० ८।१।३९ ) तदर्थश्च—एतैर्युक्तं तिङन्तं पूजायां विषये नानुदात्तं स्यात्, इति । ( पा० सू० वृ० )

२ पादपूरणार्थको निरर्थक एव । अत्रोच्यते चन्द्रालोके—“ निरर्थकं तु–हीत्यादि पूरणैकप्रयोजनम् ” इति । ( वाच० )

३ अत्र समन्वयः—पक्तुं व्रजतीत्यादौ प्रकृतक्रिया ( पचनम् ), तत्समानकर्तृकत्वम् ( यः पाककर्ता, स एव व्रजनकर्ता, इति ) व्रजनेऽस्ति; पाकेच्छाधीनेच्छा ( व्रजनेच्छा ) तद्विषयत्वं च व्रजनेऽस्तीति सर्वं सुस्थम् ।

४ अत्र तुमुन्नन्तेन, व्रजने पाकादिसमानकर्तृकत्वसहितं पाकविषयकेच्छाधीनेच्छाविषयत्वं बोध्यते; “ तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ” ( पा० सू० ३।३।१० ) इति सूत्रेण, समभिव्याहृतक्रियायाम् प्रकृतक्रियासमानकर्तृकत्वसहित–तदिच्छाधीनेच्छाविषयत्वरूपतद्दर्थकत्वेन विवक्षितायां तुमुन्ण्वुलोर्विधानात् । ( ग० व्यु० का० ४। पृ० ९८ )

५ अत्र ‘ भोजनप्रागभावकालीनभोजनविषयकेच्छावानागच्छति ’ इति बोधः । ( सि० च० ४। पृ० ३२ )

त्यस्य 'भोजनेच्छावान् व्रजति' इत्यर्थः । [ ३ ] कर्ता । यथा—भोक्तुमिच्छतीत्यत्र तुमुनोऽर्थः । ( तर्का० ४। पृ० १२ )

**तुरी**—कुविन्दस्य काष्ठादिनिर्मितस्तन्तुवयनसाधनविशेषः । यथा—"तुरीवेमादिकं पटस्य निमित्तकारणम्" ( त० सं० १ ) इत्यादौ ।

**तुल्यत्वम्**—१ [ क ] सादृश्यवदस्यार्थोऽनुसंधेयः । यथा—"सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः," "सकामां दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात्" ( मनुः ), "कुम्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः" ( रघु० स० १२। श्लो० ८० ) इत्यादौ ।

[ ख ] भिन्नत्वे सति धर्मवत्त्वम् । यथा—चैत्रेण चैत्रस्य वा तुल्ये इत्यादौ । एवम्—चैत्रेण चैत्रस्य वा सादृश्यमित्यादावपि द्रष्टव्यम् । ( श० प्र० श्लो० ९२। पृ० १२४ ) २ [ क ] अन्यूनानतिरिक्तव्यक्तिकत्वम् । यथा—न्यायमते बुद्धित्व—ज्ञानत्वयोः, घटत्वकलशत्वयोर्वा तुल्यत्वम् । ( त० प्र० १ ) ( वै० उ० १।१ )

[ ख ] तुल्यव्यक्तिवृत्तित्वम् । ( दि० १।१। पृ० ३४ ) यथा—घटत्वकलशत्वयोस्तुल्यत्वम् । ( त० प्र० १ )

**तुल्यवित्तिवेद्यत्वम्**—एकज्ञानविषयत्वम् । ( त० प्र० ख० ४। पृ० २१ ) यथा—"साधनवद्वृत्तिः साध्याभावो वा हेतुदोषः" ( दीधि० २। हेत्वा० ) इत्यत्र प्राचीनमते, 'वह्निमद्वृत्तिर्धूमाभावः' इति ज्ञाने धूमाभावे वह्निम-

---

१ अत्र लक्षणया कर्ता बोध्यते । कर्तृविशेषणे कृताविच्छाया अन्वयः । तेन 'भोजनकर्तारमात्मानमिच्छति' इत्यर्थः । ( तर्का० ४। पृ० १२ )

२ अत्र, तुल्यशब्दार्थनिविष्टे च भेदे तृतीयार्थस्य प्रतियोगित्वस्य, धर्मे चाधेयत्वस्य, अन्वयात् 'चैत्रत्वावच्छिन्नान्यत्वे सति चैत्रवृत्तिधर्मवान्' इत्यर्थः । ( श० प्र० श्लो० ९२। पृ० १२४ )

३ अत्र विशेषो ज्ञेयः—पाणिनीयाः, तुलोपमयोर्योगे तृतीयां नेच्छन्ति; इति । ( श० प्र० श्लो० ९२। पृ० १२४ )

४ इदं तु, घटत्वकलशत्वादीनां भेदे, भिन्नजातित्वे वा बाधकम्, इति बोध्यम् । ( दि० १। १। पृ० ३४ ) ( नील० )

५ स्वभिन्नजातिसमनियतत्वमिति फलितोर्थः । ( दि० १।१। पृ० ३४ )

वृत्तित्वस्य भासने, वह्नौ धूमाभाववद्वृत्तित्वमपि तुल्यवित्तिवेद्यतया नियमतो भासते । ( ग० सामा० लक्ष० २। पृ० १७ ) यथा वा—गुरुमते, आक्षेपाज्जातिविशिष्टव्यक्तिप्रतीतिः ।

तृतीया—( कारकविभक्तिः ) तत्तद्धात्वर्थे करणत्वादिबोधिका विभक्तिः । यथा—काष्ठेन तण्डुलं पचतीत्यादौ काष्ठेनेति तृतीया ।

तृतीयार्थश्च १ [१]कर्तृत्वम् । यथा—चैत्रेण[३] ग्रामो गम्यते, पुत्रेण[४] सहागतः

१ अयं विशेषो ज्ञेयः—तन्मते, जातौ व्यक्तौ च शक्तिः । परंतु—जातिविषयकशक्तिज्ञानमेव जातिविशिष्टव्यक्तिविषयकशाब्दबोधे कारणम्; व्यक्तिशक्तिस्तु स्वरूपसती ( न तु ज्ञाता ) उपयुज्यते, इति । ( त० प्र० ख० ४। पृ० २१ ) इदं च, कुब्जशक्तिवादिगुरुमतैकदेशिनां मतम्, इति ज्ञेयम् । ( त० प्र० ख० ४। पृ० २२ )

२ कारकतृतीयालक्षणं च, पञ्चम्यर्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वम् । ( श० प्र० श्लो० ६५। पृ० ७५ )

३ इयं च "कर्तृकरणयोस्तृतीया" ( पा० सू० २-३-१८ ) इत्यनेन कर्तरि विहिता कारकतृतीया, इति ज्ञेयम् ।

४ [ क ] इयं च, "सहयुक्तेऽप्रधाने" ( पा० सू० २। ३। १९ ) इत्यनेन विहिता कारकार्थान्या तृतीया । [ ख ] अत्र कर्तृत्वं तृतीयार्थः । सहशब्दसमभिव्याहृतपदोपस्थाप्यक्रिया ( आगमनम् ) सहशब्दार्थः । एकदेशावच्छेदेकालीनत्वसंबन्धेन तस्याः समभिव्याहृतक्रियायाम् ( आगतपदोपस्थाप्यायाम् ) अन्वयः । तथा च—'पुत्रकर्तृकागमनविशिष्टागमनकर्ता पिता' इत्यर्थः । ( का० व्या० पृ० ८ ) अधिकं तु सहशब्दार्थे द्रष्टव्यम् । [ ग ] शब्दशक्तिप्रकाशिकाकृतस्तु,—पुत्रेण सहागतः, सूपेन सार्धं भुक्तः, चक्रेण साकं दण्डेन जनितः, पुत्रेण समं मित्राय दानम्, इत्यादौ—सहाद्यर्थया—* येकदेशे ( कर्तृत्वादिकारके ) स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते । तेन, 'पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान्,' 'सूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान्,' 'चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान्,' 'पुत्रसंप्रदानताकदानकालीनं मित्रसंप्रदानताकं दानम्' इत्याकारस्तत्र बोधः, इत्याहुः । ( श० प्र० श्लो० ९२। पृ० ११९ )

* अत्र, सहाद्यव्ययार्थस्तु स्वान्वयितत्तत्कर्तृत्वादिकारकावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वरूपं साहित्यम् । ( श० प्र० श्लो० ९२। पृ० ११९ )

पिता, इत्यादौ तृतीयार्थः। [ २ ] क्वचित्–हेतुकर्तृत्वमपि तृतीयार्थः। तत्प्रपञ्चो णिजर्थेऽनुसंधेयः। २ करणत्वम्। यथा–कुठारेण वृक्षं छिनत्तीत्यादौ तृतीयार्थः। ३ वृत्तित्वम्। यथा–अक्ष्णा काणः, पादेन खञ्ज इत्यादौ तृतीयार्थः। ४ विशेषणम्। यथा–ज्ञायमानत्वेन लिङ्गं करणमित्यादौ तृतीयार्थः। ५ [ १ ] उपलक्षणम्। यथा–जटाभिस्तापस इत्यादौ

१ "साधकतमं करणम्" (पा० सू० १। ४। ४२) इति पाणिनिसूत्रेण करणसंज्ञा। साधकतमत्वं च, असाधारणकारणत्वम्; व्यापारवदसाधारणकारणत्वं वा। (म० प्र० १। पृ० ६) तथा च–"कर्तृकरणयोस्तृतीया*" (पा० सू० २। ३। १८) इत्यनेन तृतीया। अधिकं तु करणशब्दव्याख्याने संपादितं तत्र द्रष्टव्यम्।

२ अत्र "येनाङ्गविकारः" (पा० सू० २।३।२०) इति सूत्रेण तृतीया। तदर्थश्च–येनाङ्गविकारो हानिराधिक्यं वा, तदङ्गबोधकात् तृतीया, इति। एवं च–अत्र तृतीयाया वृत्तित्वमर्थः। तच्च काणादिपदार्थैकदेशे विकारेऽन्वेति। काणत्वं च बहिरवच्छेदेन चक्षुःशून्यगोलकवत्त्वम्। प्रसन्नान्धस्य काणत्वे तु–चक्षुष्मद्गोलकवत्त्वे सतीति वाच्यम्। यदि बहिरवच्छेदेन चक्षुःसत्त्वेऽपि उपघातादेर्न चाक्षुषं तदा उपहतगोलकवत्त्वमेव काणत्वम्, अक्षिपदं चक्षुष्मद्गोलकपरम्। तथा च–'तादृशगोलकवृत्ति यत् चक्षुःशून्यत्वम् उपघातो वा, तद्विशिष्टगोलकवान्' इति 'अक्ष्णा काणः' इत्यस्यार्थः। परे तु, अक्ष्णा काण इत्यादौ–अभेदे तृतीया। तथाच–'तादृशगोलकाभिन्नं यत् चक्षुःशून्यमुपहतं वा, तद्वान्' इति वाक्यार्थः, इत्याहुः। (का० व्या० पृ० ७–८) शिष्टं तु काणशब्दव्याख्याने द्रष्टव्यम्।

३ खञ्जत्वं च संस्थानविशेषशून्यपादवत्त्वम्। तथा च–'पादवृत्ति यत् तथाविधसंस्थानशून्यत्वम्, तद्विशिष्टपादवान्' इति 'पादेन खञ्जः' इत्यस्यार्थः। एवम्–मुखेन त्रिलोचन इत्यत्रापि 'मुखवृत्तिलोचनत्रयवान्' इत्यर्थः। (का० व्या० पृ० ८)

४ अत्र, "इत्थंभूतलक्षणे" (पा० सू० २।३।२१) इत्यनेन † लक्षणवाचिपदात्तृतीयाऽनुशिष्यते इति ज्ञेयम्। (ग० व्यु० का० ३। पृ० ९१)

५ अत्रोपलक्षणत्वं च, अतद्व्यावृत्त्यनवच्छेदकत्वे सत्यतद्व्यावृत्तिसमानाधिकरणत्वम्। अस्ति च जटायामतापसव्यावृत्त्यनवच्छेदकत्वम्; शमदमादिमत्त्वस्यैव तदन्यूनानतिरिक्तवृत्तितया तदवच्छेदकत्वात्। यदि 'शमादिना तापसः,' इति प्रयोग इष्टस्तदा विशेषण–उपलक्षण–एतदुभयसाधारणवैशिष्ट्यमेव तृतीयार्थः। (का० व्या० पृ० ७)

* अत्र शाब्दिकाः,—इयं तृतीया द्विविधा। कर्तृतृतीया, करणतृतीया च। तत्राद्याया आश्रयोऽर्थः। करणतृतीयायास्तु आश्रय-व्यापारावर्थौ, इत्याहुः। (वै० सा०)

† अयं भावः—अत्र लक्षणं च व्यावर्तकम्। तच्च विशेषण–उपलक्षण–भेदेन द्विविधम्। तत्र विशेषणवाचिपदात् ('ज्ञायमानत्व' इति पदात्) तृतीया, इति। (ग० व्यु० का० ३। पृ० ९१–९२)

तृतीयार्थः । [ २ ] केचित्तु ( शाब्दिकाः ),—ज्ञानज्ञाप्यत्वम्[1] । यथा—जटाभिस्तापस इत्यादौ[2] तृतीयार्थः, इत्याहुः । ६ हेतुत्वम् । यथा—धनेन[3] कुलम्, दण्डेन घटः; धूमेन[4] वह्निः; घटेन[5] शून्यः, विधुरः, रहितः,

---

६ [ १ ] अत्र 'जटाविशिष्टस्तापसः' इत्याद्यनुभवेन विशेषणेऽनुशिष्टतृतीयायाः ( "इत्थंभूतलक्षणे" ( पा० सू० २–३–२१ ) इत्यनेन विहितायास्तृतीयायाः ) वैशिष्ट्यम्* अर्थः । वैशिष्ट्यं चातद्व्यावृत्तत्वम् । तथा च—'अजटव्यावृत्तिमांस्तापसः' इत्याकारस्तत्र फलितार्थः । ( श० प्र० श्लो० ९२। पृ० ११९ ) ( म० प्र० १। पृ० ६ ) [ २ ] "इत्थंभूतलक्षणे" ( पा० सू० २।३।२१ ) इत्यत्र लक्षणं च व्यावर्तकम् । तच्च विशेषण-उपलक्षणभेदेन द्विविधम् । तत्रोपलक्षणं चाविद्यमानं सद्व्यावर्तकम् । जटाभिस्तापस इत्यादावविद्यमानजटादेः कालान्तरसंबन्धविवक्षया मनुष्यान्तरव्यावर्तकत्वात् उपलक्षणवाचकजटादिपदात् तृतीयैव । ( ग० व्यु० का० ३। पृ० ९२ )

१ अत्र तृतीयार्थैकदेशे ज्ञाने जटानामन्वयः । ज्ञानज्ञाप्यत्वस्य च तापसपदार्थैकदेशे तापसत्वेऽन्वयः । एवं च—'जटाज्ञाप्यतापसत्ववान्' इत्यर्थः । ( म० प्र० १। पृ० ६ )

२ अत्रेदं चिन्त्यम्—जटाभिस्तापस इत्यादौ ज्ञानज्ञाप्यत्वस्य तृतीयार्थत्वे, धूमेन वह्निमानित्यत्रेव प्रकृतस्थलेऽपि "हेतौ" ( पा० सू० २।३।२३ ) इत्यनेनैव तृतीयाया उपपत्तौ "इत्थंभूतलक्षणे" ( पा० सू० २।३।२१ ) इति सूत्रस्य वैयर्थ्यं स्यात्, इति ।

३ अत्र क्रियायोगाभावात्, क्रियान्वयिनिरुक्तकरणत्वार्थिका "कर्तृकरणयोस्तृतीया" ( पा० सू० २।३।१८ ) इत्यनेन न तृतीया; किंतु, "हेतौ †" ( पा० २।३।२३ ) इति सूत्रेणानुमानार्थेऽप्यन्वितहेतुत्वार्थिका तृतीयाऽनुशिष्यते, इति विशेषः । ( का० व्या० पृ० ८ ) ( ग० व्यु० का० ३। पृ० ८७ )

४ धूमेन वह्निः, अणुत्वेन द्रव्यत्वम्, इत्यादौ ज्ञापकत्वलक्षणं गौणमेव हेतुत्वं तृतीयार्थः । ( नवीनमते ज्ञाप्यत्वं तृतीयार्थः ) । तेन, 'धूमनिष्ठं यत् ज्ञापकत्वम्, निरूपकत्वसंबन्धेन तद्वान्वह्निः' इत्याकारस्तत्र बोधः । ( श० प्र० श्लो० ९२। पृ० १२२ ) ( ग० व्यु० का० ३। पृ० ८७ )

५ अत्रापि "हेतौ" ( पा० सू० २।३।२३ ) इत्यनेनैव तृतीया । तत्र हेतुत्वं च प्रतियो-

---

* इदं तु बोध्यम्—प्रकृत्यर्थस्य निरुक्तवैशिष्ट्यं यदि वर्तमानतया प्रत्याय्यते, तदेदं विशेषणत्वेन व्यपदिश्यते । यदि चावर्तमानत्वेन, तदोपलक्षणत्वेन व्यपदिश्यते । यथा—शिखया परिव्राजको वर्तते इत्यादौ । यथा वा—गुरुणा टीका, कुरुणा क्षेत्रमित्यादौ । ( श० प्र० श्लो० ९२ पृ० । ११९ )

† अत्र हेतुत्वं च जनकज्ञापकोभयसाधारणं बोध्यम् । तेन, धनेन कुलमित्यादौ हेतुत्वं जनकत्वम् । तथा च—'धननिष्ठहेतुताककुलम्' इत्याकारो बोधः । ( श० प्र० श्लो० ९२। पृ० १२१ ) पर्वतो धूमेन वह्निमानित्यादौ तु ज्ञापकत्वमेव हेतुत्वम् । ( ग० व्यु० का० ३। पृ० ८७ )

इत्यादौ तृतीयार्थः । ७ फलम् (प्रयोजनम्) । यथा—धनेन[1] कुशलम्, अध्ययनेन वसति, इत्यादौ तृतीयार्थः । ८ अभेदः । यथा—धान्येन[2] धनी, गोत्रेण गार्ग्यः, प्रकृत्याऽभिरूपः, इत्यादौ; प्रकृत्या[3] कृपणः, स्वभावेन सरलः, इत्यादौ; घटत्वेन साजात्यम्, वाजपेयेन यजनम्, इत्यादौ; जात्या[4] ब्राह्मणः, इत्यादौ च तृतीयार्थः । ९ अवच्छेदकत्वम्; अवच्छेद्यत्वं वा । यथा—घटत्वेन जन्यत्वम्, प्रकारत्वं वा, इत्यादौ तृतीयार्थः । १० अधिकरणत्वम् (विषयत्वम्) । यथा—भोगैः[5] प्रसितः, उत्सुकः, इत्यादौ तृतीयार्थः । (श० प्र० श्लो० ९२। पृ० ११८–१२४) (ग० व्यु० का० ३। पृ० ९१–९८) (का० व्या० पृ० ७–८) ११ वैशिष्ट्यं । यथा—वह्निमत्त्वेन पर्वतमनुमिनोमि, इत्यादौ वह्निविधेयकत्वरूपं वैशिष्ट्यं तृतीयान्तार्थः । यथा वा—रजतत्वेन शुक्तिं जानातीत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वरूपं वैशिष्ट्यम्; घटेत्वन वह्निर्नास्ती-

---

गिसाधारणमपि, इति भाति । (ख०) तथा च—घटत्वावच्छिन्नं प्रतियोगित्वमेव तृतीयार्थः । तस्य शून्यत्वेऽन्वयः । एवम्—चैत्रेण चैत्रस्य वा तुल्य इत्यादावपि प्रतियोगित्वमेव तृतीयार्थः । तत्प्रपञ्चश्च 'तुल्यत्वम्' इत्यत्र द्रष्टव्यः । (श० प्र० श्लो० ९२। पृ० १२३–१२४)

१ अत्रापि "हेतौ" (पा० सू० २।३।२३) इत्यनेन फलार्थेका तृतीया, इति ज्ञेयम् ।

२ अत्र, "प्रकृत्यादिभ्य उपसंख्यानम्" इत्यनेन वार्तिकेन अभेदार्थे तृतीया । अभेदस्य धान्यादावन्वयः । तथा च—'धान्याभिन्नधनवान्,' 'गोत्राभिन्नगर्गकुलोत्पन्नः' 'साहजिकरमणीयतावान्' इति क्रमेण बोधा भवन्ति । (का० व्या० पृ० ८) केचित्तु, 'धूमेन वह्निः' इत्यादाविव 'धान्येन धनम्' इत्यादावपि ज्ञापकत्वमेव तृतीयार्थः, इति वदन्ति । (श० प्र० श्लो० ९२। पृ० १२४)

३ अत्र प्रकृत्यादिपदम् यावदाश्रयभाविधर्मपरम् । तृतीयार्थश्चाभेदः, तादात्म्यं वा । एवं च—'स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवान्' इत्याकारस्तत्र बोधः । (श० प्र० श्लो० ९२। पृ० १२४)

४ अत्र, ब्राह्मणपदस्यादृष्टविशेषप्रयोज्यधर्मवत्परतया तादृशधर्म एव जात्यभेदस्यान्वयः; स्वरूपत उपस्थिते ब्राह्मण्ये तदन्वयायोगात्, इति विज्ञेयम् । (श० प्र० श्लो० ९२। पृ० १२४)

५ अत्र विषयत्वलक्षणं गौणमधिकरणत्वं तृतीयया बोध्यते । तेन, 'भोगेष्वनुरक्तः' इत्यवं तत्र बोधः । (श० प्र० श्लो० ९२। पृ० १२५)

त्यादौ च (सौन्दडमते) अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वरूपं वैशिष्ट्यम् तृतीयान्तार्थः, इति संक्षेपः । (ग० व्यु० का० २। ख० २। पृ० ९६)

**तृप्तिः**—फलेच्छाविच्छेदः । (कु० टी० ५) यथा-भोजनेन तृप्तोऽस्मीत्यादौ । (ख) यथा वा—"वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी," (मनुः, अ० ३। श्लो० २७१) "तस्यालमेषा क्षुधितस्य तृप्त्यै" (रघु० स० २। श्लो० ३९) इत्यादौ ।

**तृष्णा**—(दोषः) १ [१] 'इदं मे न क्षीयताम्' इतीच्छा । (गौ० वृ० ४।३) [२] लोभः । [३] अप्राप्ताभिलाषः । यथा—"लोभो जनयते तृष्णां तृषार्तो दुःखमाप्नुयात्" (हितोप०) इत्यादौ । २ पिपासा । यथा—"न हन्ति मण्डूककुलं तृषाकुलः" (ऋतु०) इत्यादौ ।

**तेजः**—१ (द्रव्यम्) [१] [क] तेजो रूप[3]स्पर्शवत् । (वै० २।१।३)
[ख] उष्ण[4]स्पर्शवत् । (त० सं०)
[ग] तेजस्त्वसामान्यवत् । (प्रशस्त०) (त० कौ० १। पृ० २) तच्च चक्षुः-शरीरसवितृ-सुवर्ण-वह्नि-विद्युदादिप्रभेदम् । (त० भा० अर्थ । पृ० २७) यथा—"सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः"

---

१ लक्षणं च—"सततं यो विवेकोऽयं न तृप्तिमधिगच्छति । मुहुः काङ्क्षति तोयं तु तं तृष्णार्दितमादिशेत्" इति । (भाव प्र०)

२ तल्लक्षणं च तेजस्त्वमेव । तच्च [क] चन्द्रचामीकरासमवेतत्वे सति ज्वलनसमवेतं सामान्यम् । (सर्व० औलू० पृ० १०६) [ख] उष्णस्पर्शसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । [ग] जन्यतेजस्त्वावच्छिन्नसमवायिकारणतावच्छेदकतया सिद्धो जातिविशेषः । (मु० १। तेजो० पृ० ७८) (दि० १। पृ० ७८) [घ] शुक्लभास्वररूपसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् ।

३ तदर्थश्च [क] रूपं भास्वरम्, स्पर्शश्च उष्णः, तद्वत्तेजः । [ख] भास्वरशुक्लरूपवत्त्वम्, उष्णस्पर्शवत्त्वं च तेजोलक्षणम्, इति । ऊष्माणि, भर्जनकपालस्थे तेजसि, तप्तवारिस्थतेजसि, च तेजस्त्वेन भास्वररूपमनुमीयते । तत्र तेजस्त्वं तु उष्णस्पर्शवत्त्वेनानुमीयते । (वै० उ० २।१।३) (वै० वि० २।१।३)

४ अत्र सूत्रम्—"तेजस उष्णता" इति । (वै० २। २।४)

( माघ० स० २। श्लो० ६२ ) इत्यादौ–सूर्यादीनां प्रौढप्रकाशः । (स्व०) [ २ ] सांख्यास्तु, शब्द–स्पर्श–तन्मात्रसहितात् रूपतन्मात्रादुत्पन्नं शब्दस्पर्शरूपगुणं तृतीयं महाभूतम् तेज इत्याहुः । २ सात्त्विकोऽधिक्षेपापमानादेरसहनरूपो नायकगुणविशेषस्तेज इति साहित्यशास्त्रज्ञाः । ३ हयवेग इत्यश्वशास्त्रज्ञाः । ४ रेतः । ५ सारश्च, इति भिषजः । ६ दीप्तिः । ७ प्रभावः । ८ पराक्रमः । ९ नवनीतं चेति काव्यज्ञाः । १० चैतन्यात्मकं ज्योतिरिति वेदान्तिन आहुः । ( वाच० )

न्यायमतसिद्धं तेजो द्विविधम् । नित्यम्, अनित्यं च । तत्र नित्यं परमाणुलक्षणम् । अनित्यं कार्यलक्षणम् । अनित्यं त्रिविधम् । शरीरम्, इन्द्रियम्, विषयश्च । तत्र शरीरमयोनिजमेव; तच्चादित्यलोके प्रसिद्धम् । इन्द्रियं रूपग्राहकं चक्षुः, कृष्णताराग्रवर्ति । विषयश्चतुर्विधः । भौमम्, दिव्यम्, औदर्यम्, आकरजं च । तत्र भौमम् पार्थिवमात्रेन्धनं वह्न्यादिकम्, खद्योततेज आदि च । दिव्यम् अबिन्धनं सौरचान्द्रविद्युद्वडवानलादि । औदर्यम् पार्थिवजलोभयेन्धनं तेजः; तच्च भुक्तस्य परिणामहेतुः ( जाठरानलः ) । आकरजम् अनुभयेन्धनं तेजः; तच्च सुवर्ण–त्रपु–सी-

१ अत्रोच्यते–" तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् " इति । ( भा० आश्व० )

२ अत्रोच्यते–" अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् " इति । ( सा० द० )

३ अत्रोच्यते–तेजो नाम दर्पापरनामा सत्त्वगुणविकारः प्रकाशकोऽन्तःसारविशेषः । यथाऽऽह भोजराजः–" तेजो निसर्गजं सत्त्वं वाजिनां स्फुरणं रजः । क्रोधस्तम इति ज्ञेयास्त्रयोऽपि सहजा गुणाः " इति ।

४ अत्रोच्यते–रसादीनां शुक्रान्तानां धातूनां यत् परं तेजस्तत् खल्वोजः, तदेव बलमित्युच्यते, इति । ( सुश्रु० )

५ तच्च पार्थिवभागोपष्टम्भाच्चोपभोगसमर्थं भवति । ( प० मा० ) ( प्रशस्त० )

६ अद्भिरिन्ध्यते प्रकाश्यते, इति विग्रहो द्रष्टव्यः । ( सि० च० १। पृ० ।७ )

७ अत्र केचिदाहुः–सुवर्णं द्विविधम् । पार्थिवम्, तैजसं च । तत्र तैजसम् अग्निसंयोगानुच्छिद्यमानद्रवत्वाधिकरणम् । पार्थिवं तु अद्रुतं पीतरूपवत्, इति । वस्तुतः–द्रुतं पार्थिवमेव सुवर्णम्, न तु तैजसम्, इति । ( प० मा० )

स–रजत–कांस्याद्यष्टकम् । (प्रशस्त०) (त० सं० १) (मु० १। पृ० ७९) (त० कौ० १। पृ० २) प्रकारान्तरेण तेजश्चतुर्विधम् । किंचित्–उद्भूतरूपस्पर्शम् । यथा–सौरादि तेजः, पिण्डितं तेजो वह्न्यादिकं च । किंचित्–अनुद्भूतरूपस्पर्शम् । यथा–नायनं तेजः । किंचित्––उद्भूतरूपमनुद्भूतस्पर्शम् । यथा–चान्द्रं तेजः, प्रदीप–प्रभामण्डलं च । किंचित्–अनुद्भूतरूपमुद्भूतस्पर्शम् । यथा–नैदाघं तेजः, तप्तवारिभर्जनकपालादिगतं च तेजः (वह्न्यादि) । (वै० उ० २।१।३) (त० भा० पृ० २७) (वै० वि० २।१।३)

---

न्यायवैशेषिकनये सुवर्णं तैजसमेव । तस्य तैजसत्वे प्रमाणमनुमानम्* । तच्च [क] 'सुवर्णम् अपार्थिवम्, असति †प्रतिबन्धकेऽत्यन्तानलसंयोगे सत्यप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवम् तन्नैवम् यथा पृथिवी (घृतादिः),' इति । अनेनानुमानेनापार्थिवत्वसिद्धौ, 'अत्यन्तानलसंयोगी पीतिमाश्रयः (पृथिवी, पक्षः), द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरेण (तैजसत्वाभिमतेन सुवर्णेन) संयुक्तः (साध्यः), अत्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वात् (हेतुः), जलमध्यस्थघृतवत्' इत्यनुमानेन तैजसत्वसिद्धिर्द्रष्टव्या । (नील० १। पृ० ८–९) (मु० १। पृ० ८१) [ख] 'सुवर्णं तैजसम्, असति प्रतिबन्धके अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वात् यन्नैवम् तन्नैवम् यथा पृथिवी' इति व्यतिरेकिणा तैजसत्वसिद्धिः । (मु० १। पृ० ८१) [ग] 'पीतिम-गुरुत्वाश्रयः पीतरूपभिन्नरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः प्रहर-पर्यन्तमनलसंयोगेऽपि पीतरूपभिन्नरूपानाश्रयत्वात् अनलसंयुक्तजलमध्यस्थपीतपटवत्' इति । (वै० उ० २।१।७)

१ अत्रेदं बोध्यम्–सुवर्णे तेजस्तु उद्भूताभिभूतरूपस्पर्शम्, नानुद्भूतरूपस्पर्शम्; अनुद्भूतरूपस्पर्शत्वेऽचाक्षुषं स्यात् । अनुद्भूतस्पर्शत्वे त्वचा न गृह्येत । अभिभवस्तु, बलवत्सजातीयेन पार्थिवेन रूपेण, स्पर्शेन च कृतः, इति । (त० भा० अधे० पृ० २८)

२ चन्द्रप्रभादौ तदीयस्पर्शेनाभिभवात् उष्णस्पर्शो न गृह्यते, इति बोध्यम् । (वै० वि० २।१।३) (मु० १) (सि० च०)

---

* अत्र "अग्नेरपत्यं प्रथमं हिरण्यम्" इत्यागमसंवादोऽपि ज्ञेयः । (न्या० सि० दी० पृ० ४०) (दि० १। पृ० ८१)

† जलमध्यस्थघृतादौ व्यभिचारवारणाय 'असति प्रतिबन्धके' इति । अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय 'अत्यन्तानलसंयोगे सति' इति च विशेषणं दत्तम् । (नील० १। पृ० ८) (दि० १। पृ० ८१)

तेजस्येकादश गुणा वर्तन्ते । भास्वरशुक्लरूपम्, उष्णस्पर्शः, संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, नैमित्तिकद्रवत्वम्, वेगाख्यसंस्कारश्च । ( त० भा० अर्थ० पृ० २७ ) ( भा० प० श्लो० ३० ) ( त० कौ० १। पृ० २ ) ( प्रशस्त० )

**तैजसम्** — १ तेजस्त्वव्याप्यधर्मवत् । ( ख० ) यथा–" चक्षुस्तैजसम्, सुवर्णं तैजसम् " इत्यादौ । ( मु० १ ) ( वै० उ० २।१।७ ) २ [ क ] रजोगुणोत्पन्नः पदार्थ इति सांख्या आहुः ।

[ ख ] दशेन्द्रियजनकोऽहंकारतत्त्वप्रभेदः, इति मध्वमतानुयायिनः । ( मणिमञ्जरी, १।३ ) ३ अन्तःकरणं तैजसमिति मायावादिनः । ४ तीर्थविशेष इति पौराणिकाः । ( वाच० )

**त्यज्**—( धातुः ) त्यागवदस्यार्थोऽनुसंधेयः ।

**त्यागः**—१ विभागावच्छिन्नक्रिया । यथा–वृक्षं खगस्त्यजतीत्यादौ त्यजेर-

१ अत्र सूत्रम्–" *त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् । ( वै० २।१।७ ) उपलक्षणं चैतत्—कांस्य–ताम्र–आरकूट–पारद–पित्तल–रङ्गादीनामप्युपसंग्रहः । ( वै० उ० २।१।७ ) ( वै० वि० २।१।७ ) ( त० कौ० पृ० २ )

२ अत्रोच्यते–[ क ] " वैकारिकः सात्त्विको नाम तैजसो राजसः स्मृतः । भूतादिस्तामसस्तेऽपि पृथक् तत्त्वान्यथासृजन् " इति । ( पदार्थादर्शधृतं वाक्यम् ) [ ख ] "सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात् । भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् " इति । ( सां० का० २५ )

३ अत्रोदाह्रियन्ते–" न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति " ( मनु० अ० ८। श्लो० ३८९ ), " त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् " ( चाणक्य० ) इत्यादयः ।

४ अत्र द्वितीयायास्तु विभागोऽर्थः । तेन, 'वृक्षावधिकविभागवती † या विभागावच्छिन्नक्रिया, तद्वान् खगः' इत्याकारस्तत्र बोधः । ( श० प्र० श्लो० ७२। पृ० ९२ )

* अत्र शक्यलक्ष्यसाधारणं च अत्यन्ताग्निसंयोगानुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वमेव । ( वै० उ० २।१।७ )

† अत्रेदं बोध्यम्–वृक्षावधिकविभागवत्त्वं च जनकत्व–स्वाश्रयवृत्तित्व–एतदुभयसंबन्धेनैव क्रियायां भाव्यम् । अतः, खगावधिकविभागस्य खगादावसत्त्वात् ' खगं त्यजति खगः' इत्यादिको न प्रयोगः । ( श० प्र० श्लो० ७२। पृ० ९२–९३ )

र्थः। (श० प्र० श्लो० ७२। पृ० ९२) २ [क] 'तस्यायं भवतु' इत्यादिफलेच्छाधीनस्वस्वत्वाभावेच्छा। यथा—'एषोऽर्घ्यः शिवाय नमः' इत्यादौ नमःशब्दार्थस्त्यागः। (ग० व्यु० का० ४। पृ० ९९)

[ख] 'तन्न मम' इति ज्ञानम्; इच्छा वा। (म० प्र० पृ० ५३)
३ [क] स्वत्वध्वंसजनकेच्छा। यथा—'पुष्पेण विष्णुं यजते' इत्यत्र यजेरर्थः। (श० प्र० श्लो० ७२। पृ० ९१)

[ख] स्वत्वध्वंसानुकूलव्यापार इति शाब्दिका वदन्ति। स च त्यागः सात्विक–राजस–तामस–भेदेन त्रिविध इति वेदान्तिनः।

**त्रसरः**—तन्तुवायकृतसूत्रवेष्टनविशेषः। (अमरः, काण्ड० ३। वर्ग० संकी० श्लो० २४)

**त्रसरेणुः**—१ [१] त्र्यणुकवेदस्यार्थोऽनुसंधेयः। तद्यथा—"जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते" इति। (मनु० अ० ८ श्लो० १३२)

[२] महादेवभट्टास्तु, 'त्रिभिः सहितो रेणुः, त्रसरेणुः' इति व्युत्पत्त्या, त्रिभिः परमाणुभिरेव त्रसरेणुः (त्र्यणुकं वा) भवतीत्याहुः। (दि०) (राम० १। पृ० ६९) [३] त्रयोऽणवस्त्रसरेणुरिति बादरायणाचार्या आहुः, इति केचित्। [४] भिषजस्तु, "जालान्तरगते सूर्यकरे ध्वंसी विलोक्यते। त्रसरेणुश्च स ज्ञेयस्त्रिंशता परमाणुभिः" इत्याहुः। २ सूर्यपत्नीति पौराणिका आहुः। (वाच०)

---

१ अधिकं तु 'नमः' शब्दार्थे द्रष्टव्यम्।

२ अत्राधिकं तु 'याग' शब्दव्याख्याने द्रष्टव्यम्।

३ स च (स्वत्वध्वंसः) मूर्तद्रव्याणामेव भवति; अमूर्तद्रव्याणां तु वियोगमात्रम्, इति विज्ञेयम्। (वाच०)

४ स च जन्यद्रव्यावयव इति ज्ञेयम्।

५ अत्रोच्यते—[क] "परमाणुद्वयेनाणुस्त्रसरेणुस्तु ते त्रयः" इति। (ब्रह्मवै०पु०) (वाच०) [ख] "अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः" इति। (भाग० ३।११।५)

**त्राणम्**—[ क ] अनिष्टनिवृत्त्यनुकूलो[1] व्यापारः । यथा—दस्युभ्यो[2] मैत्रं त्रायते, रक्षति; कुलालाद्घटं रक्षति[3], इत्यादौ रक्षत्यर्थः । ( ग० व्यु० का० ५। पृ० १०६ ) यथा वा—"न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः" ( मनुः, अ० ११। श्लो० ११३ ) इत्यादौ ।

[ ख ] केचित्तु, अनिष्टपरिहारः । यथा—चोरात्त्रायत[4] इत्यादौ, इत्याहुः ।

**त्रिपुटी**—मिति–मातृ–मेय–विषयिका प्रमा । यथा प्रभाकरमते—सर्वस्य ज्ञानस्य मितिमातृमेयविषयकत्वात् त्रिपुटीप्रत्यक्षतेति । ( त० प्र० ख० ४। पृ० १२९ )

**त्रुटिः**[7]—१ [ १ ] द्व्यणुकवदस्यार्थोऽनुसंधेयः[5] । [ २ ] त्र्यणुकवदस्यार्थोऽनुसंधेयः[6] । ( स्व० ) यथा—"परं वा त्रुटेः" (गौ० ४।२।१७) इत्यत्र त्रुटिशब्दार्थः । (गौ० वृ० ४।८२) २ [१] "त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता" ( भाग० ३।१२।६ ) इति बादरायणाचार्या आहुः ।

---

१ 'यन्निष्ठस्वदुःखोपधायकव्यापारविरहानुकूलव्यापारः, तदपादानकं स्वकर्मकं रक्षणम्' इति परमार्थः । ( ग० व्यु० का० ५। पृ० १०७ )

२ अत्र "भीत्रार्थानां भयहेतुः" ( पा० सू० १।४।२५ ) इत्यनेन संप्रदानसंज्ञा । तदर्थश्च—'अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे यत् अनिष्टप्रयोजकम्, तत् अपादानम्' इति । अनिष्टं च दुःखमेव । ( ग० व्यु० का० ५। पृ० १०६ )

३ घटाद्यचेतनकर्मकरक्षणं च यन्निष्ठस्वविनाशोपधायकव्यापारविरहानुकूलव्यापारः, तदपादानकं स्वकर्मकं रक्षणमिति निर्वाच्यम् । कुलालाद्घटं रक्षतीत्यादौ प्रयोज्यत्वं पञ्चम्यर्थः । तथा च—'कुलालप्रयोज्यो यो घटनाशोपधायकव्यापारः, तद्विरहानुकूलव्यापारकर्ता' इति बोधः ।

४ अत्र 'चोरापादानकानिष्टपरिहारः' इति बोधः ।

५ स च अन्त्यद्रव्यावयवः, इति ज्ञेयम् ।

६ तदुक्तम्—त्रुटेरवयवस्तदवयवो वा परमाणुरिति । ( गौ० वृ० ४।८२ ) अत्र नव्याः, मीमांसकाश्चैवमाहुः—त्रुटावेवावयवधाराविश्रामात्* त्रुटिमहत्त्वं नित्यम्, इति । (प० मा०) ( गौ० वृ० ४।८२ ) ( दि० १। पृ० ६९ )

७ अत्रोच्यते—"अणुर्द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः । जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥ त्रसरेणुत्रिकं भुङ्क्ते यः कालः सा त्रुटिः स्मृता । तच्छतभागस्तु वेधः स्यात् तैस्त्रिभिस्तु लवः स्मृतः ॥ निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणः" इत्यादि । ( भाग० ३।१२।५–७ )

---

* तथा च—त्रुटिरेव परमाणुरिति भावः ।

४०

[ २ ] तत्परस्य शतभाग[1]कालरूपा त्रुटिरिति गणका आहुः । [ ३ ] क्षणद्वयात्मकः कालस्त्रुटिरिति भरत आह । ३ संशयः । ४ अल्पम्, इति च काव्यज्ञा आहुः । ( वाच० )

**त्र्यणुकम्**[3]—[ १ ] त्रिभिर्द्व्यणुकैर्यदुत्पद्यते, तत्[2] । ( त० दी० १। पृ० ९ ) ( दि० १।२ ) ( त० कौ० १। पृ० ३ ) ( त० भा० प्रमेय० पृ० २८ ) ( सि० च० १। पृ० ९ ) तद्यथा—" गवाक्षरन्ध्रे तरणिकिरणस्थं निरीक्ष्यते । यद्रजः सर्वतः सूक्ष्मं त्र्यणुकं तन्निगद्यते " इति । ( सि० च० १ पृथिवी० पृ० ९ ) [ २ ] त्रिभिः परमाणुभिरेव त्र्यणुकम्, इति महादेवभट्टा आहुः । ( दि० १।२ पृथिवी० पृ० ६९ ) [ ३ ] संयुक्ताणुषट्कं त्र्यणुकमिति नास्तिका आहुः । ( प० मा० )

**त्वक्**[4]—१ (इन्द्रियम्) [क] स्पर्श[5]ग्राहकं महदिन्द्रियम् । (न्या० म० १। पृ० १४)

---

१ अत्रोच्यते—" योऽक्ष्णोर्निमेषस्य खराम—( ३० )भागः स तत्परस्तच्छतभाग उक्ता । त्रुटिर्निमेषैर्धृति—(१८)भिश्च काष्ठा तत्त्रिंशता सद्गणकैः कलोक्ता " इति । (सि० शि०)

२ तच्च जन्यद्रव्यावयवः, इति ज्ञेयम् ।

३ त्र्यणुकात्मकार्थे त्रसरेणुपदमपि 'त्रिभिः सहितो रेणुस्त्रसरेणुः' इति व्युत्पत्त्या प्रयोक्तुं युज्यते । ( राम० १। पृथि० पृ० ६९ )

४ [ क ] त्वचि स्थितमिन्द्रियं * त्वगिन्द्रियम् । ( दि० १। पृ० ८५ ) [ ख ] पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि त्वगिन्द्रियम् । ( प्रशस्त० )

त्वगिन्द्रियस्य वायवीयत्वे प्रमाणमनुमानम् । तच्च (अनुमानम्) 'त्वगिन्द्रियं वायवीयम् द्रव्यत्वे सति रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाभिव्यञ्जकत्वादङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत्' इति ।(सि० च० १। पृ० ८) ( मु० १ वायु० पृ० ८५) (त० भा० प्रमेय० पृ० २६ ) ( प्र० प्र० इन्द्रि० पृ० ११–१२ )

महदुद्भूतस्पर्शवद्द्रव्यम्, उद्भूतस्पर्शश्च त्वगिन्द्रियेण गृह्यते । एवम्—रूपभिन्नं रूपत्वादिभिन्नं च यच्चक्षुर्योग्यम्, तत् त्वगिन्द्रियेणापि गृह्यते, इति बोध्यम् । ( मु० १ । पृ० ११३ )

५ इदमुपलक्षणम्—महत्त्वोद्भूतरूपस्पर्शवद्द्रव्य–तद्वृत्तिकर्म–सामान्य–समवाय–संख्या–परिमाण–पृथक्त्व–संयोग–विभाग–परत्व–अपरत्व–स्नेहानामपि ग्राहकम् । ( सि० च० वायुनि० पृ० ८ )

---

* तच्च (त्वक्) देहव्यापि त्वचि स्थितम् सूक्ष्मवायोः सत्त्वांशेनोत्पन्नं वाताधिष्ठातृदेवताकं च, इति केचिच्छास्त्रकारानुयायिन आहुः । (वेदा० सा० )

† तेन, परमाणुवायु–प्रदीपप्रभादयस्त्वचा न गृह्यन्ते । परमाणोर्महत्त्वाभावात्, प्रभाया उद्भूतस्पर्शाभावात् । ( न्या० म० १। पृ० ६ )

[ ख ] स्पर्शोपलब्धिसाधनमिन्द्रियम् । ( त० भा० प्रमेय० पृ० २६ )

[ ग ] 'जले शीतस्पर्शः' इति स्पर्शप्रत्यक्षासाधारणं कारणम् । ( प्र० प्र० इन्द्रिय० पृ० ११ )

[ घ ] शरीरव्यापकं स्पर्शग्राहकमिन्द्रियम् । ( मु० १। वायु० पृ० ८९ ) यथा—"द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम्" ( भा० प० श्लो० ५८ ) इत्यादौ । यथा वा—"देहव्यापि त्वगिन्द्रियम्" ( भा० प० श्लो० ४४ ) इत्यादौ । २ वृद्धिक्षयवद्द्रव्यसहजावरणं हि त्वगित्युच्यते । ( वै० उ० ३।१।९ )

**त्वम्**—[ क ] तत्कालीनसंबोध्यचैत्रत्वमैत्रत्वादिविशिष्टः । ( दि० ४। पृ० १७८–१७९ )

[ ख ] स्वजन्यबोधाश्रयतया वक्त्रभिप्रायविषयतावच्छेदकत्वरूपस्वसंबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । ( ग० शक्ति० पृ० ७३ ) यथा—भो चैत्र! त्वमत्रागच्छेत्यादौ त्वंपदार्थः । ( स्व० )

[ ग ] संबोध्यश्चेतनस्त्वंपदार्थः, इति शाब्दिकादय आहुः ।

## द

**दक्षिणः**—१ [ क ] शरीरावयववृत्तिजातिमान् । ( वै० उ० २।२।१० ) यथा—पुरुषस्य दक्षिणभाग इत्यादौ ।

[ ख ] अवामो देहभागविशेषः, इत्यपि केचित् । २ नायकनायिकाविशेषाविति साहित्यशास्त्रज्ञाः । ३ परच्छन्दानुवर्ती; ४ कुशलश्चेति काव्यज्ञाः । ५ यज्ञाद्यन्ते दानं दक्षिणेति याज्ञिका आहुः ।

१ युष्मत्पदस्थले संकेतश्च, स्वजन्यबोधवत्त्वेनाभिप्रायविषयतावच्छेदकावच्छिन्नविषयकत्व–स्वजन्यत्व–एतदुभयसंबन्धेन युष्मत्पदप्रकारकबोधविषयको[१]ऽभ्युपेयते । ( ग० शक्ति० टीका० पृ० ७५ )

२ अत्राम्नायते—"तस्मान्नादक्षिणं हविः स्यात्" इति शतपथश्रुतिः । पुराणमपि—"अदत्तदक्षिणं दानं व्रतं चैव नृपोत्तम! । विफलं तद्विजानीयाद्भस्मनीव हुतं हविः" इति । ( भविष्यपु० ) ( वाच० )

१ 'बोधः तादृशोभयसंबन्धेन युष्मत्पदवान् भवतु' इत्याकारक इत्यर्थः ।

**दक्षिणा**—(दिक्) [क] प्राच्यभिमुखपुरुषदक्षिणभागावच्छिन्ना दिक्[1]। (वै० उ० २।२।१०) (वै० २।२।१९)

[ख] मेरुव्यवहितदेशावच्छिन्ना दिक्[2]। (वाक्य० १। पृ० ९) (न्या० बो० १। पृ० ३) (मु० १। पृ० ९४) (वै० वि० २।२।१०) यथा—झळकीग्रामाद्दक्षिणस्यां दिशि विजयपुरम्[3] (विजापुर)। (ख०)

**दण्डः**—१ लगुडः। यथा—घटं प्रति दण्डो निमित्तं कारणमित्यादौ। २ [क] ग्रहणावच्छिन्नशासनम्[4]। यथा—प्रजाः शतं दण्डयतीत्यत्र दण्ड्यर्थः। (श० प्र० श्लो० ७३। पृ० ९८)

[ख] ग्रहणपूर्वकशासनम्। यथा—प्रजाः शतं दण्डयति राजा[5]; गर्गाः शतं दण्ड्यन्ते इत्यादौ, इति व्यवहारशास्त्रज्ञा आहुः।

**दण्डनीतिः**—विद्याविशेषः[6]। तच्च, अर्थशास्त्रम्। (कुल्लूकः, मनु० टी० ७।४३) (अमरः) यथा—कामन्दकिनीतिशास्त्रम्।

**दमः**—१ कुत्सितात्कर्मणो मनोनिवर्तनम्। २ बाह्येन्द्रियनिग्रह इति वेदान्तिनः। ३ दण्डनमिति धर्मशास्त्रज्ञाः। ४ कर्दम इति काव्यज्ञा आहुः। (वाच०)

---

१ तदधिपो भौमः। यथाह—"सूर्यः सोमः क्षमापुत्रः सैंहिकेयः शनिः शशी। सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः" इति। (ज्योति० त०)

२ अत्र दक्षिणत्वं तु शरीरावयववृत्तिजातिविशेषः। (वै० उ० २।२।१०.)

३ अत्र च, 'झळकीनिष्ठमेरुगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणमेरुगिरिसंयुक्तसंयोगवन्मूर्तवृत्ति विजयपुरम्' इति शाब्दबोधः।

४ शासनं नियन्त्रणम्। (श० प्र० श्लो० ७३। पृ० ९८)

५ अत्र 'शतग्रहणानुकूलं यत् प्रजानां शासनम्, तत्कर्ता' इत्येवं बोधः। (श० प्र० श्लो० ७३। पृ० ९८)

६ अत्रोच्यते—[१] "त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ। दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः" इति। (भा० शा० अ० ५९) [२] "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्। आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः" इति। (मनु० अ० ७। श्लो० ४३)

**दम्भः**—[क] कपटेन धार्मिकत्वादिना स्वोत्कर्षख्यापनेच्छा । (गौ० वृ० ४।३)

[ख] धार्मिकत्वेन ख्यापनम् । यथा—"अभिसंधाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ! तं यज्ञं विद्धि राजसम्" (गीता० अ० १७। श्लो० १२) इत्यादौ । (ल० म०)

[ग] अधार्मिकेणात्मनो धार्मिकत्वस्य ख्यापनमिति केचित् । यथा—"द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत्" (मनु०) इत्यादौ ।

**दया**—१ परदुःखप्रहरणेच्छा[1] । यथा—"प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः" इत्यादौ । २ शान्तिरसस्य व्यभिचारिभावो दया, इति रसशास्त्रज्ञा वदन्ति[2] ।

**दर्पः**—१ परावधीरणाहेतुश्चित्तवृत्तिविशेषः । यथा—"अहंकारश्च सर्वेषां पापबीजममङ्गलम् । ब्रह्माण्डेषु च सर्वेषां गर्वपर्यन्तमुन्नतिः ॥ येषां येषां भवेद्दर्पो ब्रह्माण्डेषु परात्परे । विज्ञाय सर्वं सर्वात्मा तेषां शास्ताऽहमेव च" इति । (ब्रह्मवै०) इत्यादौ । २ दुःखिप्रतियोगिकः? सुखित्वप्रयुक्तः (चित्तवृत्तिविशेषः), इति योगशास्त्रज्ञा आहुः । (पात० भा०) (वाच०) ३ उत्साहः । यथा—"तेजोविहीनं विजहाति दर्पः" (किरा०) इत्यादौ, इति काव्यज्ञा आहुः ।

**दर्शनम्**—१ चाक्षुषप्रत्यक्षम् । यथा—घटं पश्यतीत्यादौ[3] धात्वर्थः । (ग० व्यु० का० २) २ ज्ञानम् । यथा—"विश्वं मिथ्या दृश्यत्वात् शुक्तिरजतवत्" इत्यादौ । (स्व०) ३ तत्त्वज्ञानसाधनं शास्त्रम् । यथा—महर्षिगोतममुनिप्रणीतं न्यायदर्शनम् । तच्च दर्शनं द्विविधम् । आस्ति-

---

१ अत्रोच्यते—"यत्नादपि परक्लेशं हर्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ ! सा दया परिकीर्तिता" इति । (वाच०)

२ यथाह शान्तरसोपक्रमे—"रोमाञ्चाद्याः स्वानुभावास्तथा स्युर्व्यभिचारिणः । निर्वेदहर्षस्मरणमतिभूतदयादयः" इति । (सा० द०)

३ अत्र घटपदोत्तरद्वितीयाया लौकिकविषयित्वमर्थः । तस्य धात्वर्थेऽन्वयः । (ग० व्यु० का० २)

कदर्शनम्, नास्तिकदर्शनं चेति । तत्रास्तिकदर्शनं मुख्यत्वेन षड्विधम् । सांख्य–पातञ्जल-पूर्वमीमांसा-उत्तरमीमांसा-तर्क-न्याय-भेदेनेति । तत्र सांख्यम्, कपिलकृतं द्वाविंशतिसूत्रात्मकम्, अध्यायषट्कात्मकं च निरीश्वरवादः । पातञ्जलम्, पतञ्जलिकृतं पादचतुष्टयात्मकं योगशास्त्रम् । पूर्वमीमांसा, जैमिनिकृतं द्वादशाध्यायात्मकं कर्मकाण्डम् । उत्तरमीमांसा, वेदव्यासकृतं अध्यायचतुष्टयात्मकं ज्ञानकाण्डम् । तर्कः, कणादमुनिकृतं अध्यायदशकं वैशेषिकशास्त्रम् । न्यायस्तु, गोतममहर्षिप्रणीतं पञ्चाध्यायात्मकं न्यायशास्त्रम्, इति ।

नास्तिकदर्शनं तु 'नास्तिक' शब्दव्याख्याने द्रष्टव्यम् ।

**दशा**—१ कालविशेषः । यथा–"सत्प्रतिपक्षतादशायाम्" (ग० व्याप्त० सत्प्र०) इत्यत्र साध्यतदभावव्याप्यवत्तापरामर्शद्वयसंवलनकालः । २ बाल्य-यौवन-जरा इत्यवस्था इति पौराणिका आहुः । ३ जाग्रत्-स्वप्न-सुषुप्तय इत्यवस्था इति वेदान्तिनः । ४ गर्भवासाद्यवस्था इति भिषजः । ५ कामकृता विरहिणां नेत्ररागाद्यवस्थेति कामशास्त्रज्ञाः । ६ नक्षत्रा-

---

१ अत्र प्रशंसा—"षड्दर्शनानि मेऽङ्गानि पादौ कुक्षिः करौ शिरः । तेषु भेदं तु यः कुर्यान्मदङ्गच्छेदको हि सः" इति । (तन्त्रशास्त्रम्)

२ तदुक्तम्—"द्वौ योगौ द्वे च मीमांसे द्वौ तर्काविति षट् बुधाः" इति । एतानि शास्त्राण्याहुरिति शेषः ।

३ तच्च वेदान्तदर्शनमित्युच्यते—तत्रापि मुख्यत्वेन त्रीणि* दर्शनानि, द्वैताद्वैतविशिष्टाद्वैतप्रतिपादकानि ।

४ इदं च, पूर्वं हिरण्यगर्भादिप्रणीतस्यैव योगशास्त्रस्य संक्षिप्तानुवादरूपमिति ज्ञेयम् । (योग याज्ञ०)

५ अत्रोच्यते—"कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं सांख्यं च कपिलेन वै" इत्यादि । (पद्मपुराणे उत्त० ख० अ० २०७) (वाच०)

६ ताश्च दश—गर्भवासः, जन्म, बाल्यम्, कौमारम्, पौगण्डम्, यौवनम्, स्थविरता, जरा, प्राणरोधः, नाशः, चेति । (वाच०)

७ ता अपि दश—"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः । निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥ उन्मादो मूर्छा मृतिरित्येताः स्मरदशा दशैव स्युः" इति । (वाच०)

---

* तत्र—द्वैतदर्शनम् वायव्यवतारत्वेन प्रसिद्धैर्मध्वाख्यश्रीपूर्णप्रज्ञाचार्यैः प्रणीतम्, ३७ ग्रन्थात्मकम् । अद्वैतदर्शनम् शंकरावतारत्वाभिमतशंकराचार्यप्रणीतम् । विशिष्टाद्वैतदर्शनं च प्राकृतभाषया द्रविडकृतमन्यम्, शेषावतारत्वाभिमतरामानुजाचार्यकृततन्मूलव्याख्यात्मकम्, इति ।

नुसारेण सूर्यादिग्रहाणां स्वामित्वेन भोग्यकालो दशा, इति ज्योतिर्विदः । ७ चित्तमित्यजयपाल आह । दीपवर्ती, इति काव्यज्ञा आहुः ।

**दानम्**—१ [ क ] स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूलेच्छा । यथा—ब्राह्मणाय धनं ददातीत्यादौ ददात्यर्थः ।

[ ख ] स्वस्वत्वध्वंसानुकूल—परस्वत्वप्रकारिकेच्छा । ( ग० व्यु० का० २। पृ० ४३ )

[ ग ] मूल्यग्रहणं विना, स्वस्वत्वध्वंसपरस्वत्वजनकत्याग इति संप्रदायः । (दि० गु०) यथा—विप्राय गां ददातीत्यादौ ददात्यर्थः । ( का० व्या० पृ० ५ )

[ घ ] शास्त्रोक्तसंप्रदानस्वत्वावच्छिन्नद्रव्यत्याग इति रत्नाकरप्रभृतयः । [ ङ ] शास्त्रोक्तसंप्रदानस्वत्वापादकद्रव्यत्याग इति केचिच्छास्त्रज्ञा आहुः । २ परायत्तीकरणम् । तदायत्तीकरणं च तत्कर्तृकनिर्णेजनेच्छाप्रकाशको व्यापारः । यथा—रजकस्य वस्त्रं ददातीत्यादौ ददात्यर्थः ।

---

१ उपेक्षायामतिव्याप्तिवारणाय परस्वत्वनिवेशः । ( ग० व्यु० का० २। ख० १। पृ० ४३ )

२ अत्र, तादृशस्वत्वरूपफलार्थतावच्छेदकफल एव द्वितीयार्थान्वयः । ( ग० व्यु० का० २। पृ० ४३ )

३ दानं च न संप्रदानस्वत्वजनकम्; अपि तु तत्स्वीकार एव, इति मताभिप्रायेणेदं निर्वचनम् । ( ग० व्यु० का० २ ) एतन्मते, ब्राह्मणाय धनं ददातीत्यादौ स्वस्वत्वध्वंसरूपफलाश्रयत्वाद्धनस्य कर्मता, इति बोध्यम् । ( ग० व्यु० का० २। ख० २। पृ० ४३ )

४ अत्र, 'मूल्यग्रहणं विना विप्रोद्देश्यकगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वजनकत्यागानुकूलकृतिमान्' इत्यन्वयबोधः । ( का० व्या० पृ० ५ )

५ अत्र, उद्देश्यपात्रविशेषो यदि न (तद्द्रव्यम्) स्वीकरोति, तदा सोपाधित्यागविशेषस्यानिर्वाहान्न दातुः स्वत्वं निवर्तेत इति तन्मताभिप्रायो ज्ञेयः ।

६ अत्रायमाशयः—" प्रदानं स्वाम्यकरणम् " इति मनूक्तेः, दानमात्रात्, संप्रदानस्य तद्विषयज्ञानाभावदशायामपि स्वत्वमुत्पद्यते, पितुः स्वत्वोपरमात्तद्धने गर्भस्थस्येव, इति । तथा च—दत्तस्य प्रतिग्रहः, ननु प्रतिग्रहघटितं दानम्, इति । (वाच०)

७ निर्णेजनं च मलापकर्षः ।

८ अत्र, ददात्यर्थैकदेशे कर्तृत्वे रजकस्य संबन्धविवक्षायां शैषिकी * षष्ठी, इति ज्ञेयम् । ( ग० व्यु० का० ४। पृ० ९६ )

---

* अत्र, " षष्ठी शेषे " ( पा० सू० २।३।५० ) इत्यनेन षष्ठी । तदर्थश्च—कारकप्रातिपदिकार्थातिरिक्तः संबन्धरूपोऽर्थः शेषः; तद्विवक्षायां षष्ठी, इति ।

३ तत्कर्तृकताडनानुमतिप्रकाशकव्यापारः । यथा—हन्तुः पृष्ठं ददातीत्यादौ ददात्यर्थः । ( ग० व्यु० का० ४। पृ० ९६ ) ( ल० म० सुव० पृ० १०१ ) ४ उत्पादकव्यापारः । यथा—शत्रवे भयं ददातीत्यादौ ददात्यर्थः । ( ग० व्यु० का० ४। पृ० ९५ ) ५ संयोगविशेषानुकूलो व्यापारः । यथा—खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यत्र ददात्यर्थः । ६ बोधनम् । यथा—" न शूद्राय मतिं दद्यात् " (मनुः, अ० ४। श्लो० ८० ) इत्यादौ ददात्यर्थः ( ल० म० सुव० पृ० १०१ ) ७ छेदनम् । ८ पालनम् । ९ शुद्धिः । १० गजमदजलं चेति काव्यज्ञा आहुः । ( वाच० ) शिष्टं च 'चतुर्थी' शब्दव्याख्याने संपादितम् ।

**दार्ष्टान्तिकत्वम्**—दृष्टान्तप्रयुक्तोपमेयत्वम् । यथा—चन्द्रवन्मुखमित्यादौ मुखस्य दार्ष्टान्तिकत्वम् ।

**दिक्**—( द्रव्यम् ) अकालत्वे सत्यविशेषगुणा महती । ( सर्व० औलू० पृ० १०६ )

---

१ अत्रापि, ददात्यर्थैकदेशे कर्तृत्वे हन्तुः संबन्धविवक्षायां षष्ठी, इति ज्ञेयम् । एवम्—संवाहकस्य चरणं ददातीत्यादावूहनीयम् । ( ग० व्यु० का० ४। पृ० ९६ )

२ अत्र, ददातेः 'जनयति' इत्यर्थो भाक्तः । एवं च—उत्पादकव्यापाररूपे धात्वर्थे भयरूप ( यत् ) कर्म, तद्योगितयोद्देश्यत्वात् शत्र्वादेः संप्रदानत्वम् । ( ग० व्यु० ४। पृ० ९५ )

३ चपेटा प्रसृतकरतलम् । ( ल० म० सुव० पृ० १०१ )

४ अत्र, मतिशब्देन तज्जनकं वेदादिरूपं शास्त्रमुच्यते । ( ल० म० सुव० पृ० १०१ ) कुल्लूकभट्टस्तु, "मतिशब्देन दृष्टार्थोपदेश उच्यते; धर्मोपदेशस्य पृथङ्निर्देशात्" इत्याह । ( मनु० टी० ४। ८० )

५ दिक्च अनियतोपाध्युन्नायिका* ऽस्ति । ( वै० उ० २।२।१० ) कालस्तु नियतक्रियासंबन्धघटक एवेति न तस्य प्राच्यादिसंबन्धघटकता । ( प० मा० ) दिक् जगदाधारा, निखिलकार्यनिमित्तकारणं च, इति विज्ञेयम् । ( सि० च० १। पृ० १० ) ( त० दी० १। पृ० १० )

---

* अयं भावः—भवति हि, यदपेक्षया यो वर्तमानः, स तदपेक्षया वर्तमान एव, इति कालो नियतोपाध्युन्नायकः । दिगुपाधी तु नैवं नियमः; यं प्रति या प्राची तं प्रत्येव कदाचित्तस्याः प्रतीचीत्वात्, इति । ( वै० उ० २। २। १० )

दिक् [ क ] दूरान्तिकादिधीहेतुः । ( भा० प० श्लो० ४७ )

[ ख ] पूर्वादिप्रत्ययलिङ्गा । ( प्रशस्त० पृ० ८ )

[ ग ] प्राच्यादिव्यवहारहेतुः । ( त० सं० ) सा चैका विभ्वी नित्या

---

१ दिशो लक्षणं च [क] प्राच्यादिव्यवहारजनकतावच्छेदकमुख्यविशेष्यत्वम् । (वाक्य० १। पृ० ५) [ ख ] विभुत्वे सति दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयत्वाद्युपाधिरूपं दिक्त्वम् । ( प० मा० )

अत्र शाब्दिकाः, शब्दतन्मात्रपरिणाम एव दिक्, इत्याहुः । ( ल० म० लका० पृ० ७१ )

२ अत्र [ १ ] [ क ] दूरत्वं दैशिकपरत्वम् । तच्च, बहुतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पन्नं । अन्तिकत्वं तु दैशिकापरत्वम् । तच्च, अल्पतरमूर्तसंयोगविशिष्टपिण्डज्ञानादुत्पन्नं । ( सि० च० १। पृ० १० ) तथा च—'इतोऽल्पतरसंयुक्तसंयोगाश्रयादिदं बहुतरसंयुक्तसंयोगाधिकरणं परम्, इतश्च संयुक्तसंयोगभूयस्त्वाधिकरणादिदं संयुक्तसंयोगाल्पीयस्त्वाधिकरणमपरम्' इति नियतदिग्देशयोः समानकालयोः पिण्डयोर्येन* द्रव्याद्भवति सा दिगित्यर्थः । ( वै० उ० २। २। १० ) [ ख ] 'अस्मादिदं दूरम्, अस्मादिदमन्तिकम्' इति दैशिकपरत्वापरत्वबुद्धिर्येनस्ततद् दिग्लिङ्गम् । तथा—दैशिकपरत्वापरत्वासमवायिकारणसंयोगाश्रयतया दिक् सिध्यति । ( वै० वि० २। २। १० ) ( मु० १ ) [ २ ] दिग्विपरीतपरत्वापरत्वानुमेया । ( त० भा० ) ( वै० उ० २। २। १० ) दूरत्व-संनिहितत्व-ज्ञानाधीनपरत्वापरत्वानुमेयेति यावत् । ( प्र० प्र० ) ( त० कौ० पृ० ३ ) तथा च—'तादृशपरत्वापरत्वे सासमवायिकारणके† भावकार्यत्वाद्घटवत्' इत्यनुमानं द्रष्टव्यम् ।

३ मूर्तं द्रव्यमवधिं कृत्वा‡ मूर्तेष्वेव द्रव्येषु 'एतस्मादिदम् पूर्वेण, दक्षिणेन, पश्चिमेन, उत्तरेण, पूर्वदक्षिणेन, दक्षिणापरेण, अपरोत्तरेण, उत्तरपूर्वेण, अधस्तात्, उपरिष्टाच्च,' इति दश प्रत्यया यतो भवन्ति सा दिक्, इति ।

दिग्लिङ्गाविशेषादञ्जसैकत्वेऽपि परमर्षिभिः श्रुतिस्मृतिलोकसंव्यवहारार्थं, मेरुं प्रदक्षिणीकृत्य वर्तमानस्य भगवतः सवितुर्ये संयोगा लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविधाः संज्ञाः कृताः । अतो भक्त्या दश दिशः सिद्धाः । तासामेव पुनर्देवतापरिग्रहवशाद्दश संज्ञा भवन्ति,- माहेन्द्री, वैश्वानरी, याम्या, नैर्ऋती, वारुणी, वायव्या, चान्द्रमसी, ऐशानी, ब्राह्मी, नागी च, इति । ( प्रशस्त० पृ० ८ )

४ [ क ] 'इयं प्राची, इयं प्रतीची' इत्यादिवाक्यप्रयोगरूपव्यवहारहेतुरित्यर्थः । ( वाक्य० २। पृ० ५ ) [ ख ] उदयाचलाद्युपाधियोगात्प्राच्यादिव्यवहारभागित्यर्थः । ( प्र० प्र० )

---

* अत्र सूत्रम्—"इत इदमिति यतस्तद्दिश्यं लिङ्गम्" इति । ( वै० २। २। १० )

† अत्रासमवायिकारणं च दिक्पिण्डसंयोगः, तदाश्रयो दिगिति दिक्सिद्धिर्बोध्या ।

‡ अत्रोच्यते—"कृत्वैकमवधिं तस्मादिदं पूर्वं च पश्चिमम् । इति निर्दिश्यते देशो यया सा दिगिति स्मृता" इति ।

च । ( वै० २।२।११-१२ ) ( त० सं० ) तथाप्युपाधिभेदाच्चतुर्विधा । प्राची, प्रतीची, उदीची, दक्षिणा चेति । (त० कौ० पृ० ३) ( त० भा० पृ० ३१ ) प्रकारान्तरेण दिग्दशविधा । प्राची, प्रतीची, उदीची, अवाची, आग्नेयी, नैर्ऋती, वायवी, ऐशानी, ऊर्ध्वा, अधः, इति । ( वै० उ० २।२।१० ) ( वै० २।२।१५-१६ ) ( वराहपु० ) दिशि पञ्चगुणा वर्तन्ते । संख्या, परममहत्परिमाणम्, पृथक्त्वम्, संयोगः, विभागश्चेति । ( त० भा० पृ० ३१ ) ( भा० प० श्लो० ३३ )

**दिगुपाधिः**—प्राच्यादिव्यवहारोपपादकं मूर्तद्रव्यम् । ( स्व० ) यथा—उदयाचलः प्राच्या उपाधिः । (वै० २।२।१४-१६) दिगुपाधयः पञ्च मूर्तानि । पृथिवी, आपः, तेजः, वायुः, मनश्चेति ।

**दिङ्मात्रम्**—[ १ ] स्वल्पम् । [ २ ] एकदेशः । यथा—" दिङ्मात्रमुदाह्रियते " इत्यादौ ।

**दिनम्** / **दिवसः**—१ सूर्यकिरणावच्छिन्नः कालः । यथा—" आयोजयत्स धर्मात्मा दिवसे दिवसेऽत्र च " । (भा० उ० अ० १८२) इत्यादौ । ( वाच० )

तथा च—प्राच्यां घटः' इत्यादिव्यवहारबलादुदयाचलसंयोगादिलक्षण-( प्राच्यादेः ) घटादिसंबन्धघटकत्वेन दिक्सिद्धिः । ( प० मा० )

१ अत्रायं नियमः—' सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः ' इति । ( मु० १ । दिकू० पृ० ९४ ) ( सि० च० १। पृ० १० )

२ यद्यपि दिगेकैव तथाप्युपाधि*भेदात्प्राच्यादिभेदव्यवहारः । (भा० प० श्लो० ४८) कार्यभेदाच्च नाना । ( वै० २। २। १३-१४ )

३ मूर्तमात्रं दिगुपाधिर्भवतीति विज्ञेयम् ।

४ तत्र [ १ ] षष्टिदण्डात्मको मानुषो अहोरात्रः । [ २ ] चान्द्रतिथिरूपः† कालः । [ ३ ] चान्द्रमासात्मकः पित्र्यः कालविशेषः । [ ४ ] सौरवर्षरूपो दैवः कालविशेषः । [ ५ ] ब्राह्मः कल्परूपः कालः, इति । ( वाच० )

* उपाधिस्तु दिगुपाधिशब्दव्याख्यानावसरे व्यक्तो भविष्यति ।

† अत्रोच्यते—"नाडीषष्टितमस्तत्र मानवो दिवसः स्मृतः । त्रिंशभागोऽर्कराशेस्तु दिवसः सौर उच्यते ॥ चान्द्रस्तु तिथ्यवच्छिन्नो भौमो भूपरिधेर्मतः" इति । ( वाच० )

**दीक्षा**—१ नियमः । यथा—" द्वादश यागाङ्गदीक्षाः " इत्यादौ । २ उपनयनसंस्कार इति धर्मज्ञाः । ३ अभीष्टदेवमन्त्रग्रहणे तदुपदेश इति तान्त्रिका आहुः ।

**दीर्घत्वम्**—१ ( परिमाणम् ) [ १ ] ' इदं दीर्घम् ' इति व्यवहारसिद्धः परिमाणविशेषः । ( वै० वि० ७।१।१७ ) [ २ ] अवयवसंयोगविशेष इति केचित् । ( दि० गु० पृ० २०६ ) [ ३ ] महत्त्वावान्तरभेद इति सांख्या आहुः । (वाच०) २ द्विमात्राकालिकाच्त्वमिति शाब्दिका वदन्ति । ३ सिंह-कन्या-तुला-वृश्चिक-राशिषु दीर्घत्वमिति ज्योतिःशास्त्रज्ञाः । ( वाच० )

**दुःखम्**—( गुणः ) [ १ ] [ क ] बाधनालक्षणम् । ( गौ० १।१।२१ )

१ अत्रोच्यते—" दीयते विमलं ज्ञानं क्षीयते कर्मवासना । तेन दीक्षेति सा प्रोक्ता मुनिभिस्तत्त्ववेदिभिः " इति ।

२ अत्र शिक्षा—" एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्धमात्रकम् " इति । ( वाच० )

३ दुःखं तु मनसैव गृह्यते, न्यायनये जीवमात्रवृत्ति चेति विज्ञेयम् । सांख्यमते तु दुःखं चित्तादिधर्म इति च ज्ञेयम् ।
न्यायनये तल्लक्षणं च [ १ ] [ क ] इतरद्वेषानधीन-*द्वेषविषयत्वम् । ( न्या० बो० गु० पृ० २१ ) [ ख ] अनिष्टसाधनताज्ञानानधीनद्वेषविषयत्वम् । ( वाक्य० गु० पृ० २१ ) [ २ ] दुःखत्वं जातिविशेषः । ( गौ० वृ० १।२१ ) ( मु० )
कणादश्च कण्ठतः सुखदुःखयोर्मिथो भेदमाह । ( वै० १०।१।१ ) तथा हि—दुःखस्य कार्यं च दैन्यमुखमालिन्यादि, इति प्रशस्तपादाचार्यादयः । ( वै० उ० १०।१।१। पृ० ४१७ )
कविकल्पलतायां लोकसिद्धानि कतिचित् दुःखकारणानि दर्शितानि । तानि यथा—पारतन्त्र्यम्, आधिः, व्याधिः, मानच्युतिः, शत्रुः, कुभार्या, नैःस्वम्, कुग्रामवासः, कुस्वामिसेवनम्, बहुकन्याः, वृद्धत्वम्, परगृहवासः, वर्षाप्रवासः, भार्याद्वयम्, कुभृत्यः, दुर्हलकरणकृषिः, इति । एवम्—वराहपुराणादावपि कतिचिद्दुःखकराण्युक्तानि, तानि तत एव ज्ञेयानि । ( वाच० )

४ बाधना पीडा तदेव लक्षणं स्वरूपं यस्य तदित्यर्थः । ( गौ० वृ० १।२१ ) ( मु० )

* सर्वादावतिव्याप्तिवारणाय, इतरद्वेषानधीनेति द्वेषविशेषणं दत्तम् । तेन, सर्पद्वेषस्य सर्पजन्यदुःखद्वेषजन्यत्वात् नातिव्याप्तिः । ( न्या० बो० गु० पृ० २१ )

[ख] प्रतिकूल[1]वेदनीयम् । (वात्स्या० १।१।२) (त० सं०)
[ग] द्वेषाजन्यद्वेषविषयः । (प्र० प्र० गु० पृ० १७)
[घ] अधर्मजन्य[2]म्, सचेतसां प्रतिकूलम् । (भा० प० श्लो० १४६) दुःखमपि सुखवत् चतुर्विधम् । (सि० च० पृ० ३१) [२] बुद्धितत्त्वस्य परिणाम[3]विशेषः (स च रजःकार्यः), इति सांख्याः । (सा० कौ०)

**दूरत्वम्**[4]—[१] दैशिकं परत्वम् (मु० १। पृ० ९३) (स च गुणविशेष एव) इति नैयायिकाः । [२] वैशेषिकास्तु,–दिक्कृतो विप्रकर्षः (न तु गुणः), इत्याहुः । यथा–"दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते" (भा० प० श्लो० ४७) इत्यादौ झळकीग्रामात्खेटकग्रामापेक्षया मणलूरग्रामस्य दूरत्वम् । (स्व०)

**दूषकत्वम्**—सदोषत्वसंपादकत्वम् । (स्व०) यथा–"विपक्षवृत्तित्वं साधारणत्वम्; तन्मात्रस्य दूषकत्वात्" (चि० २। साधा० पृ० ८७) इ-

१ [क] प्रतिकूल-* वेदनीयतया वासनात्मकमित्यर्थः । (सर्व० अक्ष० पृ० ११५) [ख] द्वेषविषयः । (वाक्य० गु० पृ० २१)

२ अधर्ममात्रासाधारणकारणकगुण इत्यर्थः । (सि० च० पृ० ३५)

३ अत्रोच्यते–दुःखं त्रिविधम् । आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं चेति । तत्राध्यात्मिकं द्विविधम् । शारीरम्, मानसं च । तत्र शारीरम् वातपित्तश्लेष्मणां वैषम्यनिमित्तम् । मानसं तु काम–क्रोध–लोभ–मोह–भय–ईर्ष्या–विषाद–विषयविशेषादर्शननिबन्धनम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं च दुःखं द्वेधा । आधिभौतिकम्, आधिदैविकं च । तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् । आधिदैविकं यक्षराक्षसविनायकग्रहावेशनिबन्धनं चेति । (सा० कौ०)

४ अत्रेदं बोध्यम्—दूरत्वं च भ्रमविशेषे कारणम् । यथा–चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं (दोषः) कारणं भवति । (मुक्ता० गु० पृ० २११)

* अत्र प्रतिकूलत्वं च द्विष्टत्वम् । तथा चेदं बोध्यम्–[क] दुःखं प्रतिकूलवेदनीयतया स्वतो द्वेषविषयः । दुःखसाधनं तु द्विष्टसाधनताज्ञानात् द्वेषविषयः । (वाच० ) [ख] दुःखत्वज्ञानादेव सर्वेषां दुःखं स्वाभाविकद्वेषविषयः । दुःखसाधनं तु, द्विष्टसाधनत्वज्ञानात् द्वेषविषयः । (मु० गु० पृ० २२०)

† अत्रोक्तम्—"दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः" इति । (भा० प० गु० श्लो० १३२)

त्यादौ । यथा वा–“ वेदविक्रयिणश्चैव वेदानां चैव दूषकाः । वेदानां निन्दकाश्चैव ते वै निरयगामिनः ” ( भा० अनु० श्लो० १६४४ ) इत्यादौ ।

**दूषणम्**—बाधकप्रमाणोपन्यासरूपयुक्तिभिः खण्डनम् । ( वै० सा० द० )

**दृष्टान्तः**—१ [ क ] लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम्, स दृष्टान्तः । ( गौ० १।१।२५ ) लोकसाम्यमनतीता लौकिका नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः । तद्विपरीताः परीक्षकास्तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि, सोऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति । दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति, अवयवेषु चोदाहरणाय कल्पत इति । ( वात्स्या० १।१।२५ )

[ ख ] यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते, सः । ( वात्स्या० १।१।१ )

[ ग ] वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारक–तदभावद्वयप्रकारक–अन्यतरानिश्चयाविषयः । ( गौ० वृ० १।१।२५ )

[ घ ] प्रत्यक्षविषयोऽर्थः । ( न्या० वा० १। पृ० १६ )

[ ङ ] व्याप्तिसंवेदनभूमिः । ( सर्व० अक्ष० पृ० ११३ )

[ च ] वादिप्रतिवादिनोः संप्रतिपत्तिविषयोऽर्थः । ( त० भा० पृ० ४२ ) ( दि० ) यथा–पर्वतो वह्निमान्धूमान्महानसवदित्यादौ महानसो दृष्टान्तः । ( त० सं० ) दृष्टान्तो द्विविधः । साधर्म्यदृष्टान्तः, वैध-

---

१ तदर्थश्च–लौकिकोऽप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः; प्रतिवादी इति फलितोऽर्थः । परीक्षकः शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः; प्रतिपादक इति फलितोऽर्थः । बुद्धेः साध्यसाधनोभयविषयिण्याः, तदभावविषयिण्या वा साम्यमविरोधो यस्मिन्नर्थे, सोऽर्थो दृष्टान्तः । ( गौ० वृ० १।२५ )

२ किमुक्तं भवति–लौकिकपरीक्षकाणां दर्शनाविघातहेतुरिति । एवं चात्मादिष्व्याप्तिरिति । दर्शनाविघातहेतुत्वेन दृष्टान्ते वर्ण्यमाने आत्मादिष्व्याप्तं भवति । ( न्या० वा० १। पृ० १६ )

३ अन्वयदृष्टान्त इत्यर्थः । स च साध्यसाधनोभयवत्तानिश्चयविषयः । ( दि० १ । पृ० ३२ )

र्म्यदृष्टान्तश्च । तत्राद्यः—पर्वते वह्निसाधने धूमवत्त्वस्य हेतोर्महानसः। द्वितीयः—तत्रैव धूमस्य हेतोर्महाह्रदः, इति। (त० भा० पृ० ४२) (सर्व० अक्ष० पृ० ११३) (त० सं०) २ अर्थालंकारविशेषो दृष्टान्त इत्यालंकारिका आहुः। ३ शास्त्रम्। ४ मरणमिति काव्यज्ञा आहुः। (वाच०)

**दृष्टार्थकः**—(प्रमाणशब्दः) [क] यस्येह दृश्यतेऽर्थः, स दृष्टार्थः। (वात्स्या० १।१।८)

[ख] शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थकः (शब्दः)। (गौ० वृ० १।१।८) यथा—'घटः,' 'पटः' इत्यादिशब्दो दृष्टार्थकः। (स्व०)

**देवतात्वम्**—[१] [क] मन्त्रैकरणकहविस्त्यागभागित्वेनोद्देश्यत्वम्। (चि० ४) (त० प्र० ४। पृ० १२३)

[ख] द्रव्यत्यागोद्देश्यत्वम्। (ग० व्यु० का० १। पृ० ३) (कृष्ण०) यथा—अग्नये स्वाहा, पितृभ्यः स्वधेत्यादावग्न्यादीनां चेतनानामेव देवतात्वम्। (त० प्र० ४। पृ० १२३)

---

१ व्यतिरेकदृष्टान्त इत्यर्थः।

२ निरुक्ते दैवतखण्डे देवताभेदानाह यास्कमुनिः—"अग्न्यादिदेवपर्यन्तं देवताकाण्डमुच्यते। वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः॥ सूर्यादिदेवपर्यन्ता द्युस्थाना देवता इति"। देवतानां प्राधान्यतस्त्रयस्त्रिंशत्त्वमुक्तम्; स्वस्वगणपत्नीसहितानां तासां त्रयस्त्रिंशत्कोटिसंख्याकत्वमुक्तं पद्मपुराणे उत्तरखण्डे, यथा—"सदारा विबुधाः सर्वे स्वानां स्वानां गणैः सह। त्रैलोक्ये ते त्रयस्त्रिंशत्कोटिसंख्यातयाऽभवन्" इति। (वाच०)

३ समुदायार्थश्च—मन्त्रप्रयोज्यहविःसंबन्धवत्त्वेनोद्देश्यत्वमिति यावत्। 'हविर्निष्ठं त्यागजन्यं फलम् (स्वत्वम्) तदाश्रयतया (तत्संबन्धितया) उद्देश्यत्वम्' इति तु वर्तुलार्थः। अत्र पदप्रयोजनं कथ्यते—स्वर्गसंबन्धितयोद्देश्यत्वस्य त्यागकर्तरि सत्त्वात्तत्रातिव्याप्तिवारणाय हविरिति। "कोऽदात्, कस्माददात्" इति मन्त्रकरणकपूजादिरूपहविःस्वत्वभागितयोद्देश्यत्वस्य प्रतिग्रहीतरि सत्त्वात्तत्रातिव्याप्तिवारणाय मन्त्रपदं त्यागकर्तृमन्त्रपरम्। "तपोनिष्ठाः पृथग्दद्यात्" इत्यादिना पार्वणादौ पत्न्या अपि स्वत्वभागितया तत्रातिव्याप्तिवारणायोद्देश्यत्वम्, इति। (त० प्र० ख० ४। पृ० १२३)

४ वेदबोधितनाशाधिनद्रव्यस्वामिस्वप्रकारेणेच्छाविषयत्वमित्यर्थः। (वै० सा० द०)

५ अत्र देवतात्वे प्रमाणम्—"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"

[ २ ] [ क ] केचित्तु ( मीमांसकाः ),–देशनादेशितचतुर्थ्यन्तपदनिर्देश्यत्वम्, इत्याहुः । यथा–इन्द्राय स्वाहा, अग्नये स्वाहेत्यादिमन्त्राणामेव देवतात्वम् । ( त० प्र० ख० ४। पृ० १२२ )

[ ख ] वेदमेयत्यागोद्देश्यत्वम् । ( श्राद्धवि० )

[ ग ] मन्त्रेण द्योत्यत्वम् ।

**देशना**—नियोगः ( विध्यादिः ) । यथा–"एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिदेशना" ( व्यास० ) इत्यादौ । ( वाच० )

**दैशिकम्**—१ देशकृतम्; देशसंबन्धि वा । यथा–"परत्वमपरत्वं च द्विविधं परिकीर्तितम् । दैशिकं कालिकं चापि मूर्त एव च दैशिकम्" ( भा० प० श्लो० ११२ ) इत्यादौ । २ मन्त्राद्युपदेशकर्ता गुरुर्दैशिकः, इति धर्मज्ञा आहुः ।

---

इति; ( ऋ० प्रा० १।१।२ ) "पितरो* देवताः" इति च । ( ग० व्यु० का० १। पृ० २ )

१ तदर्थश्च–देशनया ( तद्धितादिरूपया ), देशितम् ( बोधितम् ), चतुर्थ्यन्तपदनिर्देश्यत्वम् ( तच्छब्दोच्चारणम् ), यत्र तत्, तथा; 'इन्द्राय' इत्युच्चार्य दद्यात्' इति वेदेन बोधनात् । ( त० प्र० ख० ४ पृ० १२२ )

२ अत्रोक्तम्–"तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः । देवतासंगतिस्तत्र दुर्बलं तु परं परम्" इति । ( त० प्र० ख० ४। पृ० १२२ )

३ याज्ञवल्क्य आह–"यस्य यस्य तु मन्त्रस्य उद्दिष्टा देवता तु या । तदाकारं भवेत्तस्य देवत्वं देवतेति च" इति । ( वाच० )

अत्र विशेषः–शब्दमयी देवता, इति केचिदाहुः । अर्थोपहितः शब्द एव देवता, इत्यपरेऽमन्यन्त । ( त० प्र० ख० ४। पृ० १२२ )

४ अत्रोद्देश्यत्वं च [ १ ] 'तस्येदम्' इत्यारोपज्ञानविषयत्वम् । ( श्राद्धविवेके ) [ २ ] मन्त्रस्तुत्यत्वं वा । तदुभयं पितृणामस्तीति श्राद्धादौ तेषां देवतात्वम् । ( वाच० )

५ [ क ] यथाह ऋग्वेदभाष्योपोद्घाते माधवः–"तथा–देवनार्थदीव्यतिधातुनिमित्तो देवशब्दः" इति । एतदाम्नायते–"देवनाद्धि देवोऽभूदिति तद्देवानां देवत्वमिति" अतः–दीव्यतीति देवः; मन्त्रेण द्योत्य इत्यर्थः, इति ।

६ अत्रार्थे 'देशेन निर्वृत्तम् दैशिकम्' इति विग्रहो द्रष्टव्यः । ( वाच० )

---

* अत्रोच्यते–"वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः" इति । ( याज्ञ० अ० १। श्लो० २६८ )

**दैशिकविशेषणता**—(स्वरूपसंबन्धः) अभावीयदैशिकस्वरूपसंबन्धः । यथा—भूतले घटो नास्तीत्यादौ भूतल—घटाभावयोः संबन्धः । (स्व०)

**दोषः**—१ अप्रमाऽसाधारणकारणम् [1] । (त० दी० गु० पृ० ३६) यथा—"दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः" (भा० प० श्लो० १३२) इत्यादौ काच-कामल-पित्त-[2]मण्डूकवसाञ्जनादिर्भ्रमोत्पादको दोषः । (मु० गु० पृ० २११) २ प्रवर्तनालक्षणा[3] दोषाः । (गौ० १।१।१८) प्रवर्तना प्रवृत्तिहेतुत्वम् । ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा । यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति प्रत्यात्मवेदनीया हीमे दोषाः । कस्मात् ?; लक्षणतो निर्दिश्यन्त इति । कर्मलक्षणाः खलु रक्तद्विष्टमूढाः । रक्तो हि तत्कर्म कुरुते, येन कर्मणा सुखं दुःखं वा भजते । तथा—द्विष्टः; तथा—मूढः, इति । दोषा रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति । (वात्स्या०

१ अप्रमात्वाधिकरणदेशवृत्तिधर्मानवच्छिन्नाप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः। (नील० गु० पृ० ३६—३७)

२ तथा हि—पित्तादिभ्रमे पित्तं दोषः; क्वचित्—चन्द्रादेः स्वल्पपरिमाणभ्रमे दूरत्वं दोषः; क्वचिच्च—वंशोरगभ्रमे मण्डूकवसाञ्जनम्; इत्येवंरूपदोषा अननुगता एव भ्रान्तिजनका इत्यर्थः । (मु० गु० पृ० २११)

३ अत्र विग्रहः—'प्रवर्तना *प्रवृत्तिजनकत्वम्, तदेव लक्षणं येषाम्' इति । (गौ० वृ० १।१८) दोषास्तु बुद्धिसमानाश्रयत्वादात्मगुणाः । (वात्स्या० ४।१।२)

४ अत्रत्यम् [क] दोषलक्षणं च, लौकिकप्रत्यक्षविषयत्वे† सति प्रमान्यत्वे‡ सति प्रवृत्तिजनकत्वम् । (गौ० वृ० १।१८) [ख] दोषत्वं च प्रमाकारणीभूताभावप्रतियोगित्वम् । (मू० म० प्रामा० उत्त० पृ० ३२४)

५ तथा हि—दोषाणां त्रयः पक्षाः । रागपक्षः, द्वेषपक्षः, मोहपक्षश्च । तत्राद्यः पक्षः—कामः, मत्सरः, स्पृहा, तृष्णा, लोभः, माया, दम्भः, इति । द्वितीयः पक्षः—क्रोधः, ईर्ष्या, असूया, द्रोहः, अमर्षः, अभिमानः, इति । अथ तृतीयः पक्षः—विपर्ययः, संशयः, तर्कः, मानः, प्रमादः, भयम्, शोकः, इति । (गौ० वृ० ४।३) (वात्स्या० ४।३)

* का पुनरियं प्रवर्तना ? । यथाऽयमज्ञः प्रवर्तते, तं प्रवर्तमानं रागादयः प्रवर्तयन्तीति । सेयं प्रवृत्तिहेतुत्वात्प्रवर्तनेत्युच्यते । (न्या० वा० १।१।१८। पृ० ८५)

† तेन, शरीरादीश्वरेच्छादौ नातिव्याप्तिः । (गौ० वृ० १।१८)

‡ योगादिगोचरप्रमावारणाय तद्विशेषणम् । (गौ० वृ० १।१८)

१।१।१८) (त० दी० पृ० ४२) ३ व्यावृत्ति-व्यवहार-एतदन्यतरप्रयोजनविघटको धर्मः। यथा–एकशफत्वस्य गोर्लक्षणस्यासंभवः। स च दोषस्त्रिविधः। अव्याप्तिः, अतिव्याप्तिः, असंभवश्च। (नील० १। पृ० १) ४ [क] अनुमिति-तत्करणपरामर्श-एतदन्यतरप्रतिबन्धकयथार्थज्ञानविषयः। (त० दी० २। पृ० २४)

[ख] यद्विषयकत्वेन ज्ञानस्यानुमिति-तत्कारणीभूतपरामर्श-एतदन्यतरप्रतिबन्धकत्वम्, सः। स च दोषैः पञ्चविधः। सव्यभिचारत्वम् (व्यभिचारः), विरोधः, सत्प्रतिपक्षः, असिद्धिः, बाधश्च, इति। (चि० २। पृ० ८३–८४) (न्या० बो० २। पृ० १७)

इदानीं मतभेदेन दोषा उच्यन्ते–[१] विध्युल्लङ्घनजन्योऽदृष्टविशेषो दोषः (प्रत्यवायः), इति मीमांसका आहुः [२] गुरुतल्पगमनाभक्ष्यभक्षणादिजन्यपापविशेषः,–इति धर्मज्ञाः पौराणिकाश्च संजगदिरे। [३] [क] काव्यज्ञास्तु,–अपकर्षप्रयोजको वस्तुनिष्ठो धर्मविशेषः। (वाच०)

[ख] मुख्यार्थहतिः। (काव्य० प्र० उ० ७। श्लो० ४८) यथा–यतिभङ्गश्रुतिकटुत्वादयः पदादिगतदोषाः संभवन्ति, इति वदन्ति। [४]

१ स च 'लक्षणदोषः' इति व्यवह्रियते, इति विज्ञेयम्।

२ स च 'हेतुदोषः, हेत्वाभासश्च' इत्यपि व्यवह्रियते, इति विज्ञेयम्। तल्लक्षणादिकं च, हेत्वाभासशब्दव्याख्यानावसरे सविस्तरं संपादयिष्यते, इत्यत्रैव विरम्यते।

३ अत्रोच्यते–"स्याच्चेतोविशता येन सक्षता (?) रमणीयता। शब्देऽर्थे च कृतोन्मेषं दोषमुद्भावयन्ति तम्" (चन्द्रालो०) इति।

४ अत्रोच्यते–"दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम्। निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम्॥ संदिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत्क्लिष्टम्। अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव" इति (दोषाः १८)। (काव्य० प्र० उ० ७। श्लो० ५०–५१) एवम्—वाक्यमात्रगतदोषाः २०; रसदोषाः; साक्षात्परंपरया वा तत एव विज्ञेयाः।

'वातपित्तकफजाः' इति त्रयो भ्रमदोषाः, इति भिषजः प्रवदन्ति । [ ९ ] अनुद्योगदेशान्तरापर्यटनदर्शनीयवस्त्वाद्यनवलोकनादयो दोषाः, इतीदानींतना विद्वन्मन्याः पाश्चात्याश्च केचिन्मन्यन्ते ।

**दोहनम्**—[ १ ] [ क ] क्षरणानुकूलव्यापारः । यथा—गां पयो दोग्धि मैत्र इत्यादौ दुह्यत्यर्थः ।

[ ख ] वस्तुतस्तु—विभागावच्छिन्नक्षरणानुकूलो व्यापारः । यथा—गां दो-

---

१ अत्रोच्यते—"वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः । विकृताविकृता देहं घ्नन्ति ते वर्धयन्ति च" इति । ( वाग्भट० ) अत्र विशेषः—"चिरज्वरे वातकफोल्बणे वा त्रिदोषजे वा दशमूलमिश्रः । किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृताविमिश्रः" इति । ( चक्रदत्त० )

२ अत्र—"दुष वैकृत्ये" इति दुषधातोः करणे घञ् । तथा चोक्तम्—"धातवश्च मलाश्चापि दुष्यन्त्येभिर्यतस्ततः । वातपित्तकफा एते त्रयो दोषा इति स्मृताः" इति । ( वाग्भट० ) अत्र, द्विषष्टिर्दोषभेदाः, इति सुश्रुतकारा आहुः ।

३ अत्र, गोपदोत्तरद्वितीयाया अर्थो विभागः, तस्य जनकत्वसंबन्धेन क्षरणेऽन्वयः । विभागे चाधेयतासंबन्धेन प्रकृत्यर्थगवादेरन्वयः; प्रधानकर्मक्षीरवाचकपयःपदोत्तरद्वितीयार्थो वृत्तित्वम्, तस्य धात्वर्थतावच्छेदके क्षरणरूपे फलेऽन्वयः । एवं च—'गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्ता मैत्रः' इति बोधः । ( ग० व्यु० २। पृ० ४४ )

४ अत्रायं विशेषो ज्ञेयः—यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितम्, क्षरणान्वयिविभागश्च विभक्त्यर्थतया; तत्रापादानत्वबोधिका पञ्चमी, इति । ( ग० व्यु० का० २। पृ० ४४ )

५ अत्र "अकथितं च" ( पा० सू० १। ४। ५१ ) इत्यनेन, गोरपादानत्वाद्यविवक्षया कर्मत्वम् । तथा च—धात्वर्थतावच्छेदकीभूतक्षरणस्य पयोवृत्तित्वात्पयसो मुख्यं कर्मत्वम्; गोस्तु तादृशक्षरणजन्यविभागाश्रयत्वाद्गौणं कर्मत्वम्, इति बोध्यम् । ( स्व० )

---

* गां दोग्धि पय इत्यादौ—द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति; कारकाधिकारीयेण "अकथितं च" ( पा० सू० १।४।५१ ) इत्यनेन, अपादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरानवच्छिन्नस्यापि कर्मसंज्ञाविधानात्, इति । ( ग० व्यु० का० २। पृ० ४३ )

ग्धि[1] पयः, दुह्यते[3] गौः क्षीरम्, इत्यादौ[4] दुह्यत्यर्थः । ( ग० व्यु० का० २। पृ० ४४ ) यथा वा–" तेषु तेषु तु पात्रेषु दुह्यमाना वसुंधरा " ( हरिवं० श्लो० ८१ ) इत्यादौ[4] दुह्यत्यर्थः । ( वाच० )

[ग] द्रवद्रव्य[5]विभागानुकूलक्रियानुकूलव्यापारविशेषः । स च कर्तृनि-[6]ष्ठः । यथा–गां दोग्धि पय इत्यादौ । ( का० वा० पृ० १ )

---

१ गां दोग्धि पय इत्यादौ* गोपदोत्तरद्वितीयाया वृत्तित्वमर्थः । तस्य धात्वर्थघटकविभागेऽन्वयः । शाब्दबोधस्तु पूर्ववदेव ज्ञेयः ।

२ अत्रेदं बोध्यम्–अस्य ( दुहेः ) गौणे कर्मणि लकारादि । तत्रोक्तम्–"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनाम्, ण्यन्ते कर्तुश्च कर्मणः " इति । ( ग० व्यु० का० २। पृ० ४४ ) ( वाच० )

३ दुह्यते गौः क्षीरमित्यादौ–क्षरणजन्यविभागाश्रयत्वम् गवादिनिष्ठमप्रधानकर्मत्वमाख्यातार्थः; "अप्रधाने दुहादीनाम् " इत्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च–' विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौः ' इत्याकारको बोधः । ( ग० व्यु० का० २। पृ० ४४ )

४ अत्र, आदिशब्दग्राह्योदाहरणान्तरेषु द्विकर्मकत्वादिविशेषो ज्ञेयः—" यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् " ( कुमार० स० १। श्लो० २ ) इत्यादौ; । " यः पयो दोग्धि पाषाणम्," "पयोघटोध्नीरपि गा दुहन्ति" ( भट्टिः ) इत्यादौ च दुहेर्द्विकर्मकत्वम् । दुहेरन्यकर्मकत्वाविवक्षायामेककर्मकत्वमपि यथा–" दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् " ( मनुः ) इत्यादौ । यथा वा–" दुग्ध्वा पयः पत्रपुटे मदीयम् " ( रघु० स० २। श्लो० ६५ ) इत्यादौ च ।

५ अत्र–' वायुर्वृक्षं गां दोग्धि ' इति प्रयोगवारणाय द्रवद्रव्येति पदम् । 'मेघो जलं दोग्धि' इति वारणाय ' विशेषः '† इति पदं दत्तम् । ( का० वा० पृ० २ )

६ अत्र, धात्वर्थघटके विभागे ' गाम् ' इत्यस्य, क्रियायां ' पयः ' इत्यस्य चान्वयात् ' गोवृत्तिविभागानुकूलपयोवृत्तिक्रियानुकूलकृतिमान् ' इति वाक्यार्थः । ( का० वा० पृ० २ )

---

* अत्रेदमवधेयम्—"धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम् " इत्यत्र धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वम्, इत्यतो न तत् (तादृशं कर्मत्वम्) अत्र प्रवर्तते, इति । ( ग० व्यु० का० २। पृ० ४४ )

† अत्र, विशेषो दुहधातुगम्यः । इत्थं च–द्रवद्रव्येति न देयमित्यपि वदन्ति । ( का० वा० पृ० २ )

[ २ ] मोचनानुकूलव्यापारः । यथा—गां पयो दोग्धि गोप इत्यादौ दुहेरर्थः । ( श० प्र० श्लो० ७३। पृ० ९८ )

[ ३ ] निःसरणमात्रम् । यथा—“दुग्धेऽस्मै सर्वं कामं यो वाचो दोहः” ( छान्दो० उ० ) इत्यादौ । यथा वा—“न कर्मफलमाप्नोति योधर्मं दोग्धुमिच्छति” ( महा भा० व० श्लो० ११६९ ) इत्यादौ; “यत्र धर्मदुघा भूमिः सर्वकामदुघा मही । दोग्धि स्माभीप्सितानर्थान् यजमानस्य भारत !” ( भाग० ४। १९।७ ) इत्यादौ च दुहेरर्थः ।

**द्योतकत्वम्**—[ १ ] अर्थविशेषे तात्पर्यग्राहकत्वम् । ( चि० ४ ) ( न्या० म० ४। पृ० १८ ) ( नील० ) यथा—प्रजयतीत्यादौ प्रशब्दस्य द्योतकत्वम् । ( न्या० म० ४। पृ० १८ ) यथा वा—चित्रगुमानयेत्यादौ चित्रपदस्य द्योतकत्वम् । ( मु० ४। पृ० १८२ ) [ २ ] [ क ] शाब्दिकास्तु,—क्वचित्—समभिव्याहृतपदीयशक्तिव्यञ्जकत्वम् । यथा—प्रहार इत्यादौ प्रादिनिपातानां प्रहरणाद्यर्थद्योतकत्वम् । ( ल० म० )

---

१ अत्र [ क ] दुग्धार्थघटकमोचने गोराधेयत्वेन, पयसः कर्मत्वेन ( कर्मतानिरूपकत्वेन ), अन्वयात् ‘पयःकर्मताकं यत् गोवृत्तिमोचनम्, तदनुकूलव्यापारवान्’ इत्याकारको बोधः । ( श० प्र० श्लो० ७३। पृ० ९८ )

अत्रेदं बोध्यम्—मोचनं च बहिःक्षरणावच्छिन्नव्यापारः; तदनुकूलव्यापारो दोहनम् । अतः, धात्वर्थतावच्छेदकीभूतं ( धात्वर्थतावच्छेदकतायामवच्छेदकम् ) बहिःक्षरणरूपं फलमादाय पयसः ( गौणम् ) कर्मत्वम्; मोचनात्मकं च फलमादाय गोः ( मुख्यम् ) कर्मत्वम्, इति । एवं च—दुहादयः फलावच्छिन्नक्रियाहेतुव्यापारवाचित्वादेव द्विकर्मका भवन्ति, इति । ( श० प्र० श्लो० ७३। पृ० ९८ )

२ जयतिरत्र प्रकृष्टजयलक्षकः; प्रशब्दस्तु तात्पर्यग्राहकः । ( न्या० म० ४। पृ० १८ )

३ अत्र च गोपदेनैव लक्षणया चित्रगोस्वामिबोधनाच्चित्रपदस्य द्योतकत्वमेव, इति ज्ञेयम् । ( मु० ४। पृ० १८२ )

४ अत्र च धातोरेव*शक्त्या प्रहार-विहाराद्यर्थबोधकत्वसंभवेनोपसर्गाणां द्योतकत्वमेव, इति बोध्यम् ।

---

* अत्र वैयाकरणानां गाथा श्रूयते—‘धातूनामनेकार्थकत्वम्’ इति । ( ल० म० धात्वर्थ० पृ० ८ ) तदुक्तम्—“उपसर्गेण धात्वर्थो बलादन्यत्र नीयते । प्रहाराहारसंहारविहारपरिहारवत्” इति । ( सि० कौ० )

[ ख ] समभिव्याहृतगतवृत्त्युद्बोधकत्वम्, इत्याहुः । [ ३ ] क्वचित्तु-क्रियाविशेषाक्षेपकत्वम् । यथा-प्रादेशं विलिखतीत्यादौ[1] । यथा वा-"अथ शब्दानुशासनम्" इत्यत्राथशब्दस्य प्रारम्भक्रियाऽऽक्षेपकत्वम् (कैयटादावुक्तम्) । (ल० म० धात्वर्थ० पृ० ७)

[ ४ ] क्वचित्तु-संबन्धपरिच्छेदकत्वम् । यथा-'सर्पिषोऽपि[2] स्यात्' इत्यादौ कर्मप्रवचनीयानां द्योतकत्वम् । (ल० म० धात्वर्थ० पृ० ७)

**द्रवत्वम्**[3]-१ (गुणः) [ क ] स्यन्दनकर्मकारणम् । (प्रशस्त० पृ० ३३)

[ ख ] आद्य[4]स्यन्दनासमवायिकारणम् । द्रवत्वम् पृथिवीजलतेजोवृत्ति । तथा हि-द्रवत्वं द्विविधम् । सांसिद्धिकम्[5], नैमित्तिकं[6] च । तत्र सांसिद्धि-

१ अत्र विविमानक्रियाक्षेपकः । (तथा च-) 'प्रादेशं विमाय लिखति' इत्यर्थोऽवगम्यते । (ल० म० धात्वर्थ० पृ० ७)

२ अत्र बिन्द्वध्याहारेणापेः पदार्थद्योतकता । अपिः क्रियायां सर्वोत्थबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यस्यापि द्योतकः । एवंच-'सर्पिरवयवबिन्दुकर्तृका तद्बिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयः सत्ता' इति बोधः । (ल० म० सुब० पृ० २४-२५)

३ द्रवत्वम् पृथिव्यप्तेजोवृत्ति, द्वीन्द्रियग्राह्यम्, असमवायि निमित्तं च कारणम्; तत्र क्रियायामसमवायि, संग्रहे तु निमित्तं च हेतुः ।

४ तत्र द्वितीयादिव्यापारजनकवेगवारणाय 'आद्य-' इति स्यन्दनस्य विशेषणम् । (वाक्य० १। पृ० ९) (दि० गु० पृ० २३२)

५ अग्न्यादिसंयोगाजन्यम् (स्वाभाविकम्) इत्यर्थः । (वाक्य० १। पृ० ९) हिमकरकादौ चादृष्टविशेषेण घनीभावेन सांसिद्धिकद्रवत्वप्रतिबन्धः* कल्प्यते । (सि० च० १। पृ० ७) एवं च-हिमकरकादावपि सांसिद्धिकं द्रवत्वमस्त्येव । न च तत्र नैमित्तिकं द्रवत्वं युक्तम्; द्रुते घृते घृतत्वादिवत् करकात्वोपलम्भापत्तेः । नैमित्तिकद्रवत्वस्य निमित्तनाशनाश्यत्वेन घृतादिवत्पुनः पिण्डीभावापत्तेश्च, इति । (प० मा०)
तैलक्षीरादावपि जलस्यैव द्रवत्वम्; स्नेहप्रकर्षेण च दहनानुकूल्यम्, इति च बोध्यम् । (मु० १। पृ० ७७)

६ अग्न्यादिसंयोगजन्यमित्यर्थः । (वाक्य० १। पृ० ९)

* अत्रेदमाकूतम्-[ क ] हिमकरकयोरौपाधिकद्रवत्वनिरोधात् सूर्यकिरण-भूमिसंयोगादिनोपाधिनिवृत्तिमात्रम्; न तु द्रवत्वोत्पत्तिः, इति । (वाक्य० १। पृ० ९) तथा च-अदृष्टविशेषेण द्रवत्वप्रतिरोधात् करकायां काठिन्यप्रत्ययो भ्रान्तिरेव । (मु० १। जल० पृ० ७७) [ ख ] दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परसंयोगो द्रव्यारम्भकः संघाताख्यः । तेन, परमाणुद्रवत्वप्रतिबन्धात्, कार्ये हिमकरकादौ द्रवत्वानुत्पत्तिः, इति । (प्रशस्त० पृ० ३४)

कम् जले एव । नैमित्तिकम् पृथिवीतेजसोरेव वर्तते । ( प्रशस्त० पृ० ३३ ) ( त० सं० ) ( भा० प० श्लो० १५५–१५८ ) द्रवत्वं नित्यानित्यभेदेनापि द्विविधम् । तत्र नित्यद्रव्यगतं नित्यम् । अनित्यद्रव्यगतमनित्यम् । (मु० गु० पृ० २३२) (प्र० प्र०) (त० कौ०) (ल० व०) द्रवद्रव्याणि तु, दुग्धदध्याज्यतक्रासवजलतैलादीनि, दैहिकमूत्रादीनि च, विज्ञेयानि । शिष्टं च 'स्यन्दन'शब्दे द्रष्टव्यम् । ( वाच० )

२ काव्यज्ञास्तु,–गतिः । यथा–"समुद्रमेवाभिमुखा द्रवन्ति" ( गीता अ० ११ । श्लो० २८ ) इत्यादौ । यथा वा–"ततः किरीटी सहसा पाञ्चालान् समरेऽद्रवत् । ( भा० आ० १४।७८ ) "तं दुद्रावाद्रिणा कपिः" (भट्टि०) इत्यादौ, इत्याहुः । ( वाच० )

**द्रव्यत्वम्**—१ (सामान्यम) गगन–अरविंद-समवेतत्वे सति नित्य-गन्धा-समवेतम् । ( सर्व० औलू० पृ० १०१ ) तच्च नित्यमनेकद्रव्यमात्रसमवेतम् । ( वै० उ० १।२।११ ) यथा–"क्षित्यादीनां नवानां तु द्रव्यत्वम्" । ( भा० प० श्लो० २४ ) २ लिङ्गसंख्यान्वयित्वं द्रव्यत्वम्, इति शाब्दिका वदन्ति । ( वाच० )

---

१ सांसिद्धिकद्रवत्वत्वं जातिविशेषः प्रत्यक्षसिद्धः । ( मु० १। जल० पृ० ७६ )

२ घृतलाक्षादिपृथिवीषु, सुवर्णादितेजस्सु चाग्निसंयोगजन्यं *द्रवत्वं वर्तते, इति ज्ञेयम् । ( मु० १। पृ० २३२ ) ( त० सं० )

३ अत्रायं विवेकः–सांसिद्धिकं द्रवत्वमेव नित्यानित्यभेदेन द्विविधम् । तच्च नित्यगतं नित्यम्; अनित्यगतमनित्यम् । नैमित्तिकद्रवत्वं† त्वनित्यमेव, इति । ( वाक्य० १। पृ० ९ )

४ अत्र, द्रव्यत्वत्वं तु, द्रव्यत्वमात्रसमवेतत्वे सति सकलद्रव्यसमवेतत्वम् । एवम्–पृथिवीत्वत्व-घटत्वत्वादिकमपि निर्वाच्यम् ।

५ लिङ्गसंख्याकारकान्वयशून्यत्वं सत्त्वम्; तदेव द्रव्यत्वम्, इति भावः । ( वाच० )

---

* अयं भावः–सर्पिर्जत्वाकरजेषु परमाणुष्वग्निसंयोगाद्वेगापेक्षात्कर्मोत्पत्तौ, तज्जेभ्यो विभागेभ्यो द्रव्यारम्भकसंयोगविनाशात्कार्यद्रव्यनिवृत्तौ, अग्निसंयोगादौष्ण्यापेक्षात् स्वतन्त्रेषु परमाणुषु द्रवत्वमुत्पद्यते, इति । ( प्रशस्त० पृ० ३४ )

† तस्य पाकजन्यत्वेन विनाशसंभवात् न नित्यत्वमिति भावः ।

**द्रव्यम्**—( पदार्थः ) १ [ क ] गुणाश्रयः । ( त० दी० पृ० ४ )
[ ख ] समवायिकारणम् । ( त० भा० अर्थ० । पृ० २७ ) ( भा० प० । साधर्म्य० श्लो० २३ )
[ ग ] द्रव्यत्वरूपजातिमत् । ( त० दी० १। पृ० ४ ) ( त० कौ० १। पृ० १) द्रव्यं नवविधम्—पृथिवी, आपः, तेजः, वायुः, आकाशः, कालः, दिक्, आत्मा, मनः, इति द्रव्याणि । ( वै० १।१।५ ) ( प्रशस्त० पृ० १ ) ( त० भा० अर्थ० पृ० २७ ) ( त० सं० ) ( भा० प० श्लो० ३ ) आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तिस्रः संज्ञा भवन्ति 'आकाशः, कालः, दिक्' इति । ( प्रशस्त पृ० ७ ) तत्र दिक्कालौ परमात्मनो नातिरिच्येते, इति दीधितिकृदुक्ति । ( दि० १ ) ( प० मा० ) आकाश ईश्वरान्नातिरिच्यते, इत्येकदेशिन आहुः । प० मा० )

---

१ अत्रायं नियमः—'प्रथमं द्रव्यं निर्गुणं निष्क्रियं चैवोत्पद्यते, पश्चात्तत्समवेता गुण-क्रिया उत्पद्यन्ते' इति ।

गुणाश्रयत्वं* चात्र [ क ] गुणयोग्यत्वम् । तच्च गुणात्यन्ताभावानधिकरणत्वम् । ( त० भा० ) ( त० दी० १ । पृ० ४ ) [ ख ] गुणसमानाधिकरणा सत्ताभिन्ना च या जातिः ( द्रव्यत्वम् ) तद्वत्त्वम् † । ( त० दी० १ । पृ० ५ )

२ द्रव्यत्वजातिस्तु, कार्यसामान्यस्य, संयोगस्य, विभागस्य वा, समवायिकारणतावच्छेदकतया‡ सिद्ध्यति । ( वै० वि० १ । १ । ५ ) ( मु० १ । पृ० ३० ) ( नील० १ । पृ० ४ )

३ अत्र भाष्यम्—गुणवत्त्वात्, अनाश्रितत्वाच्च द्रव्यम् । शब्दो गुणो भूत्वाऽऽकाशस्याधिगमे लिङ्गम् । समानासमानजातीयकारणासंभवान्नित्यम् । सर्वप्राणिनां च शब्दोपलब्धिनिमित्तं श्रोत्रभावेन । ( प्रशस्त० पृ० ७ ।

---

* इदं द्रव्यलक्षणम् ; द्रव्यत्वजातिमत्त्वं वा द्रव्यलक्षणम्, इति बोध्यम् । ( त० दी० १ । ४ ) ( त० कौ० ) । तत्र प्रमाणं सूत्रम्—" क्रियागुणवत्, समवायिकारणमिति द्रव्यलक्षणम् " इति । ( वै० १।१।१५ )

† तेन, आद्यक्षणावच्छिन्ने, उत्पन्नविनष्टे च द्रव्ये नाव्याप्तिः । ( त० दी० १ । पृ० ५ )

‡ तथा हि—'कार्यसमवायिकारणता किंचिद्धर्मेण ( अर्थात् द्रव्यत्वेन ) अवच्छिन्ना कारणतात्वात् दण्डनिष्ठघटकारणतावत्' इत्यनुमानेन द्रव्यत्वं जातिः सिध्यति; अनुगत—अन्यून—अनतिप्रसक्तधर्मस्यैवावच्छेदकत्वेन तादृशयत्किंचिद्धर्मस्य जातित्वावश्यकत्वात्, इति भावः । एवम्—गुणत्वादीनामपि जातित्वमूह्यम् ।

द्रव्यम् प्रकारान्तरेण द्विविधम् । बहिर्द्रव्यम्, अन्तर्द्रव्यं च । तत्र बहिर्द्रव्याणि पृथिवी, आपः, तेजः, वायुश्च । तदन्यान्यन्तर्द्रव्याणि, इति । तत्रापि पृथिव्यप्तेजांसि तु द्वीन्द्रियग्राह्याणि । (न्या० वा० १।१।१३ । पृ० ७६) द्रव्यम् नित्यानित्यभेदेनापि द्विविधम् । तत्र ( नवसु द्रव्येषु मध्ये ) पृथिव्यादिचतुष्टयस्य परमाणवः, आकाशम्, कालः, दिक्, आत्मा (जीवः, परमात्मा च ), मनश्च, एतानि नित्यद्रव्याणि । पृथिव्यादिचतुष्टयस्य द्व्यणुकमारभ्य महत्पर्यन्तं सर्वाण्यनित्यद्रव्याणि भवन्ति । ( मु० १ )
२ शाब्दिकास्तु,—"वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन व्यवस्थितः" ( भर्तृहरिः ), इति वदन्ति ।
३ भिषजस्तु,—"रसो गुणस्तथा वीर्यं विपाकः शक्तिरेव च । पञ्चानां यः समाहारस्तद्द्रव्यमिति कीर्त्यते" इति । प्रकारान्तरेण द्रव्यम् पञ्चविधम्; अत्यन्तकठिनकठिनार्द्रकोलवणद्रवद्रव्यभेदात्, इत्याहुः । (वाच०)

**द्रोणः**—१ द्रोणत्वविशिष्टः । यथा—द्विद्रोणेन धान्यं क्रीणातीत्यादौ । २ केचित्तु,—परिमाणविशेषः । यथा—द्रोणो व्रीहिरित्यादौ, इत्याहुः । (सि० कौ० कारक० )

**द्रोहः**—( दोषः ) [ १ ] अहितेच्छा । यथा—शत्रवे द्रुह्यतीत्यादौ धात्वर्थः । ( ग० व्यु० का० ४ । पृ० ९६ )

---

१ अत्रेदं बोध्यम्—वायोरनुमेयत्ववादिनां प्राचां मते,—बहिर्द्रव्यप्रत्यक्षं प्रति उद्भूतरूपवत्त्वे सति महत्त्वं* कारणम् । वायोः प्रत्यक्षत्ववादिनां नव्यानां मते तु—उद्भूतस्पर्शवत्त्वे सति महत्त्वं† कारणम्, इति । ( न्या० सि० दी० पृ० ३२ ) ( मु० १ । पृ० )

२ तन्मते, द्रव्य–रस–गुण– वीर्य–विपाकानां प्राधान्याप्राधान्यभेदेन द्वैविध्यम् ( सुश्रुतग्रन्थे ) उक्तम् ; तत्तु तस्मादेव विज्ञेयम् ।

३ द्रोणत्वं चात्र, इयत्ताविशेषावच्छिन्नपात्रादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणजातिविशेषः । एवम्—प्रस्थत्वादयो बोध्याः । ( ल० म० )

४ अत्र ' द्रोणरूपं यत् परिमाणम्, तत्परिच्छिन्नो व्रीहिः ' इति शाब्दबोधः । ( सि० कौ० का० )

५ अत्र भाष्यम्—प्रयत्नस्मृतिधर्माधर्महेतुर्द्रोहः । स च द्वेषभेदः । ( प्रशस्त० पृ० ३३ )

६ अत्र, अहितभागितयेच्छाविषयता तन्निरूपकत्वं चतुर्थ्यर्थः । तादृशनिरूपकत्वस्य धात्व-

---

* तेन, प्रत्यक्षसामग्र्यभावात्, न वायोरप्याचप्रत्यक्षम्, इति भावः ।

† तेन, प्रत्यक्षसामग्रीसत्त्वेन वायोरप्याचप्रत्यक्षं भवति, इति भावः ।

[ २ ] नाशाय द्वेषः। ( गौ० वृ० ४।३ )

[ ३ ] द्विष्टाचरणम्[1]। यथा—मित्राय द्रुह्यतीत्यत्र । ( श० प्र० श्लो० ६९। पृ० ८७ )

[ ४ ] शाब्दिकास्तु,—दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषः[2]। यथा—हरये द्रुह्यतीत्यादौ द्रुहेरर्थः[3], इत्याहुः। (ल० म० सुबर्थ० पृ० १०३)

[ ५ ] हिंसा, इति परे मन्यन्ते। ( गौ० वृ० ४।३ )

द्वन्द्वः—( समासः ) [ क ] यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्चयस्तत्तदर्थप्रकारकान्वयबोधं प्रति तत्त्वेन समर्थः[4], तादृशनाम-

र्थेच्छायामन्वयः। अथ वा—आधेयत्वं वा* चतुर्थ्यर्थः। तस्य च धात्वर्थघटकाहितेऽन्वयः। ( ग० व्यु० का० ४। पृ० ९६ )

अत्र "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" (पा० सू० १।४।३७) इत्यनेन कर्मणः संप्रदानसंज्ञा। ( ग० व्यु० का० ४। पृ० ९६ )

१ अत्र 'मित्रस्य द्विष्टमाचरति' इत्यर्थः। ( श० प्र० श्लो० ६९। पृ० ८७ )

२ अयं च † कोपमूलकोऽपि।

३ अत्र, 'हरिसंप्रदानको द्रोहः' इति बोधः। (ल० म० सुबर्थ० पृ० १०३ )

अत्रायं विवेकः—(१) कोपपूर्वकस्य द्रोहादेर्द्रुहधातुवाच्यत्वे तत्कर्मणः संप्रदानत्वम्। द्रोहादिमात्रस्य तथात्वे तु कर्मत्वमेव, इति पुनः कौमाराः। (२) सोपसर्गयोस्तु क्रुधद्रुहोः कर्मणः कर्मतैव; न तु संप्रदानता। अत एव—शिष्यस्याभिक्रोद्धा, मित्रस्याभिद्रोढा, इत्यादौ कृद्योगे कर्मणि षष्ठ्येव प्रमाणम्। ( श० प्र० श्लो० ६९। पृ० ८७ )

४ घट-घटेत्यादिकस्य, घट—कलशेत्यादिकस्य, घट—तद्घटेत्यादिकस्य, च क्रमिकनामस्तोमस्य निश्चयत्वेन, घटादेरन्वयबोधं प्रत्यहेतुत्वम्। अतो न, तादृङ्नामनिवहो घटाद्यर्थे द्वन्द्वः। अत एव,—[ क ] समस्यमानपदार्थयोः, तदवच्छेदकयोर्वा यत्र मिथो भेदस्तत्रैव द्वन्द्वस्य साधुत्वसूचनाय "चार्थे द्वन्द्वः" (पा० सू० २।२।२९) इति पाणिनिराह। अत एव—भेदगर्भसमुच्चयार्थकं चशब्दमन्तर्भाव्य 'धवश्च, खदिरश्च' इत्यादिकं विग्रहमस्य प्रयुञ्जते वृद्धाः। ( श० प्र० श्लो० ४७। पृ० ६२ ) [ ख ] पदजन्यप्रतीतिविषयभेद एव द्वन्द्वः। ( भवानन्दी )

* अतः, कर्मणेत्यादिसूत्रस्य (पा० सू० १।४।३२) न विषयः। ( ग० व्यु० का० ४। पृ० ९६ )

† अत्रेदमवधेयम्—'मित्रं द्रुह्यति, शिष्यमीर्ष्यति, पुत्रमसूयति' इत्यपि प्रयोगात्, द्रुहादिकर्मणः संप्रदानत्वं वैकल्पिकम्, इत्युन्नीयते।

निवह एव तावदर्थको द्वन्द्वसमासः । यथा—पाणिपादं[1] वादय, धवखे-दिरौ[2] छिन्धीत्यादौ द्वन्द्वः । द्वन्द्वो द्विविधः[3] । समाहारः, इतरेतरश्चेति[4] । (श० प्र० श्लो० ४७—४८। पृ० ६०—६१ )

[ख] परस्परानन्वित[5]समस्यमाननिखिलपदार्थबोधकसमासः । यथा—धवखदिरावित्यादौ[6] । ( म० प्र० ४ । पृ० ४४ )

[ग] सर्वपदार्थप्रधानः समासः । ( न्या० वा० १ । पृ० ११ )

द्वन्द्वम्—१ रहस्यम्[7] । यथा—" द्वन्द्वं मन्त्रयते " इत्यादौ । २ मर्यादा ( स्थित्यनतिक्रमः ) । यथा—" आचतुरं हीमे पशवो द्वन्द्वं मिथुनायन्ते; माता पुत्रेण मिथुनं गच्छति, पौत्रेण, प्रपौत्रेणापि " इत्यादौ । ३ व्यु-त्क्रमणम् ( पृथगवस्थानम् ) । यथा—" द्वन्द्वं व्युत्क्रान्ताः[8] " इति ।

---

१ अत्र हि,—कर्मत्वाद्यंशे करचरणादिप्रकारकान्वयबोधं प्रति, अमादिधर्मिकः करचरणाद्युप-स्थापकस्य पाणिपादादिकामकनामस्तोमस्याव्यवहितोत्तरत्वसंबन्धेन निश्चयः, कारणम् । अतः, पाणिपादादिसमुदायः करचरणादितत्तदर्थं द्वन्द्वः । (श० प्र० श्लो० ४७ । पृ० ६१)

२ शाब्दिकास्तु,—धवखदिरावित्यादाविनरेतरयोगद्वन्द्वे उद्भूतावयवभेदसमूहः समासार्थः, इ-त्याहुः । ( ल० म० वृत्तिवि० पृ० ३० )

३ अत्र वैयाकरणानां विवेकः—संहतिप्राधान्ये समाहारद्वन्द्वः, संहन्यमानप्राधान्ये इतरेतर-योगः, इति । ( वाच० )

४ अत्रायं विशेषः—समुच्चयान्वाचययोः सामर्थ्याभावान्न तत्र द्वन्द्वसमासः । यत्र युगपत्क्रि-यान्वयतात्पर्यम् , तत्र समासः । समुच्चये च क्रमेण क्रियान्वयः; न तु युगपत् , इति । ( त० प्र० ख० ४ । पृ० ५२ )

५ अव्ययीभावादावतिव्याप्तिवारणाय 'परस्परानन्वितेति' पदार्थविशेषणम् । तत्र ( अव्य-यीभावादौ ) यथायथं भेदेनाभेदेन वा परस्परान्वितपदार्थबोधकत्वसत्त्वान्नातिव्याप्तिः । पा-णिपादमित्यादिसमाहारद्वन्द्वे तु पाणिपादमात्रं प्रतीयते; साहित्यमपि ( समाहारः ) न प्र-तीयते, इति तत्र नाव्याप्तिः । एकवचनं तु "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" (पा० सू० २ । ४ । २ ) इति सूत्रेण विहितं न विरुद्धम् । ( म० प्र० ४ । पृ० ४४ )

६ अत्र च, परस्परानन्वितसमस्यमानपदार्थधवखदिरादिबोधकसमासत्वात्समन्वयः । ( म० प्र० ४ । पृ० ४४ )

७ अत्रार्थे सूत्रम्—" द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु " ( पा० सू० ८।१।१५ ) इति ।

८ द्विवर्गसंबन्धेन पृथगवस्थिताः, इत्यर्थः । ( वाच० ).

४ यज्ञपात्रप्रयोगः । यथा—"द्वन्द्वं न्यञ्चि" (यज्ञपात्राणि प्रयुनक्ति) इति । ५ अभिव्यक्तिः । यथा—"द्वन्द्वं संकर्षणवासुदेवौ" इति । (शब्देन्दुशे०) ६ काव्यज्ञाश्च,—युगलम् । यथा—"द्वन्द्वानि भावं क्रियया विवव्रुः" (कुमार० ३।३९) इत्यादौ, इत्याहुः । ७ परस्परविरुद्धस्वभावः (शीतोष्णादिः) । यथा—"द्वन्द्वातीतो विमत्सरः" (गीता० ४। २२) "निर्द्वन्द्वो हि महाबाहो" (गीता० ४।३) "न द्वन्द्वदुःखमिह किंचिदकिञ्चनोऽपि" (माघः) इत्यादौ, इति योगिनो वेदान्तिनश्चाहुः । ८ दुर्गम्, इति व्यवहारज्ञा आहुः । ९ रोगविशेषः, इति भिषज आहुः । (वाच०)

**'द्वयोरेकम्' इति रीत्या जायमानं ज्ञानम्**—एकप्रकारतानिरूपितोभयविशेष्यताशालिज्ञानम् । (ल० व० पृ० ९) यथा—'घटपटौ रक्तरूपवन्तौ' इति ज्ञानम् । (स्व०)

**द्वारम्**—व्यापारवदस्यार्थोऽनुसंधेयः । (राम० मङ्ग० पृ० ४)

**द्विकर्मकः**—(धातुः) फलावच्छिन्नक्रियाहेतुव्यापारवाचको धातुविशेषः । यथा—दुहे, पृच्छ, इत्यादिः । (श० प्र० श्लो० ७३ । पृ० ९८)

**द्विगुः**—१ (समासः) [१] संख्यावच्छिन्नशक्तयत्पदोत्तरत्वविशिष्टं यन्नाम, स्वार्थधर्मिकं तादात्म्यसंबन्धेन तदलक्ष्यार्थस्यान्वयबोधं प्रति सम-

---

१ अभिव्यक्तौ साहचर्येणेत्यर्थः । (वाच०)

२ अत्रोच्यते—"क्षुत्पिपासे शोकमोहौ रागद्वेषौ तथैव च । लाभालाभौ च शीतोष्णे तथा मानापमानकौ ।। कामक्रोधप्रभृतयो द्वन्द्वशब्देन वर्णिताः" इति ।

३ अत्र—घटपटोभयनिष्ठविशेष्यताया रक्तरूपनिष्ठैकप्रकारतानिरूपितत्वेन तथात्वं संपद्यते, इति विज्ञेयम् ।

४ अत्र द्विकर्मकत्वं च कर्मद्वयसाकाङ्क्षक्रियाबोधकत्वम्, इति ज्ञेयम् । (का० व्या० पृ० २)

५ द्विकर्मका धातवस्तूक्ता यथा—"दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् । कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्" इति । (सि० कौ०)

६ अत्र,—द्विगौ, कर्मधारये च, शाब्दिकानां तत्पुरुषत्वव्यपदेशः पदसंस्कारार्थो गौणः, इति ध्येयम् । (श० प्र० श्लो० ३८। पृ० ४८)

७ तेन, कर्मधारयस्तु (त्रिकटु-त्रिभुवन-चतुर्युग-चतुर्वर्ग-पञ्चगव्य-पञ्चामृत-षड्रस-षट्पदार्थ-

र्थम्, तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाभिन्नस्वार्थे द्विगुरुच्यते। यथा—पञ्चमूलीत्यादौ (श० प्र० श्लो० ३४। पृ० ४९)

[२] संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वनामकतुल्यार्थकोत्तरनाम-समासः। यथा—पञ्चगवम्, पञ्चाश्वम्, पञ्चाम्रम्, इत्यादौ, इति प्राञ्चः। (म० प्र० ४। पृ० ४४) अयं द्विगुस्त्रिविधः। तद्धितार्थः, उत्तरपदः, समाहारश्चेति। (श० प्र० श्लो० ३४। पृ० ४५–४६)

[३] वैयाकरणास्तु,—"दिक्संख्ये संज्ञायाम्" (पा० सू० २।१।५०) इत्यादिना विहितः समासः। यथा—पूर्वेषुकामशमी, सप्तर्षयः, इत्यादौ, इत्याहुः। (मनोरमायाम्) २ काव्यज्ञास्तु,—द्विगवस्वामिकः पुरुषो द्विगुः। यथा—"द्वन्द्वो द्विगुरपि चाहं सततमस्मद्गृहेऽव्ययीभावः" (उद्भटः) इत्यादौ, इत्याहुः।

**द्वितीया**—(विभक्तिः) तत्तद्धात्वर्थादौ कर्मत्वादिबोधिका विभक्तिः। यथा—चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलपदोत्तरं द्वितीया। (स्व०)

---

सप्तर्षि-अष्टनाग-अष्टवसु-नवरस-नवग्रह-दशमूल-एकादशरुद्र-एकादशेन्द्रिय-द्वादशादित्य-इत्यादिकः) शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्नबोधकतया, न पूर्वपदालक्ष्यार्थस्य बोधकः; त्रिकटु-प्रभृतिभ्यः* कटुत्रयादिसामान्यस्याप्रतीतेः (न पूर्वोक्तकर्मधारयेऽतिव्याप्तिः), इति। (श० प्र० श्लो० ३४। पृ० ४५)

१ 'पञ्चाम्राः, पञ्चकन्याः' इत्यादिकर्मधारयवारणाय सत्यन्तम्। पञ्चानामाम्राणां समाहारः पञ्चाम्रमित्यर्थे तु द्विगुरेव। नीलोत्पलमित्यादिकर्मधारयवारणाय 'संख्यावाचकेति' पूर्व-नामविशेषणम्। (म० प्र० ४। पृ० ४४)

२ तथाहि—सत्यन्तस्य, संख्यावाचक-'पञ्चेति'—पूर्वपदतुल्यार्थकगवादिपदस्य च सत्वाल-क्षणसङ्गतिः।

तथाच—'पञ्चाभिन्नगवादिसमाहारः' इति; 'पञ्चाभिन्नाः समाहृतगवादयः' इति वाक्या-र्थबोधः। (म० प्र० ४। पृ० ४४)

३ तल्लक्षणं च, तिबन्तपचधातूपस्थाप्यपाकधर्मिक-कर्मत्वानुभवानुकूलसुप्सजातीयत्वम्। चोरस्य हिनस्तीत्यत्र तिबन्तधात्वर्थे कर्मतादिप्रतिपादिकाऽपि षष्ठी, न पाके;। तण्डुलस्य पाचक इत्यादौ पाके तादृश्यपि, न तिबन्तपच्यर्थे; (इति न षष्ठ्यामतिव्याप्तिः)। ग्रामं गच्छतीत्यादावमादेः पाकादौ कर्मत्वाद्यननुभावकत्वेऽपि तदनुभावकसजातीयत्वान्नाव्याप्तिः। (श० प्र० श्लो० ६५। पृ० ७५)

---

* कटुत्रयं च शुण्ठी-पिप्पली-मरिच-एतत्त्रयम्।

द्वितीयादयोऽपि द्विविधाः। कारक[1]विभक्तयः, उपपदविभक्तयश्च। (ल० म०)

द्वितीयाया अर्थश्च;–१ कर्मत्वम्। तच्च [१] फल[2]विशेषो द्वितीयार्थः। यथा–ग्रा[3]मं गच्छतीत्यादौ संयोगात्मकफलम्, परसमवेतत्वं च द्वितीयार्थः, इति प्राञ्चो नैयायिका आहुः। नव्यास्तु,–वृ[4]त्तिरेव द्वितीयार्थः। यथा–(१) ग्रा[5]मं गच्छतीत्यादौ धात्वर्थफलान्वयि वृत्तित्वं द्वितीयार्थः। (ग०

१ अत्र कारकत्वं च क्रियाजनकत्वशक्तिः। (ल० म०)

२ अत्रायं भावः–कर्मत्वं च क्रियाजन्यफलशालित्वम्। तत्र क्रिया (व्यापारमात्रम्) धातुत एव लभ्यते। फलान्वयि वृत्तित्वम्, जन्यजनकभावसंबन्धश्च (पदार्थत्वं विना) संबन्धमर्यादया* भासते; इति फलमत्र (संयोगविभागादि) कर्मप्रत्ययार्थः, इति प्राचां नैयायिकानां मतम्। (ग० व्यु० का० २। पृ० ३६)

अत्र परसमवेतत्वमपि द्वितीयार्थो वक्तव्यः। अधिकं तु कर्मत्वशब्दे द्रष्टव्यम्।

३ प्राचीनमते शाब्दबोधस्तु, 'वृत्तित्वसंबन्धेन ग्रामविशिष्टो यः संयोगः, जनकतासंबन्धेन तादृशसंयोगविशिष्टो यो व्यापारः (धातुलभ्यः), तद्विषयिणी या कृतिः (आख्यातलभ्या), तद्वान्' इत्युत्पद्यते।

४ अयं भावः–[१] नव्यमते धात्वर्थतावच्छेदकफलशालित्वमेव कर्मत्वम्। तत्र फलावच्छिन्नव्यापारो धातुत एव लभ्यते। तदेकदेशे फले द्वितीयार्थवृत्तित्वमन्वेति। एवं च–स्पन्दादेर्न सकर्मकत्वम्; तत्र फलस्य धात्वर्थतानवच्छेदकत्वात्, इति। (ग० व्यु० का० २। पृ० ३८) [२] नव्यमते–'यत्र समभिव्याहृतधात्वर्थतावच्छेदकफलाश्रयत्वबोधः, तत्र द्वितीया' इति व्युत्पत्तिः। तेन, भूमौ पततीत्यादौ पतधातोरकर्मकतया धात्वर्थतावच्छेदकफलाभावेन (सप्तम्या आश्रयत्वबोधेऽपि) न द्वितीया। (त० प्र० ख० ४। पृ० ८४)

अत्रेदमवधेयम्–नव्यमते च–यत्राश्रयत्वं कर्तृत्वम्, तत्राधेयत्वं द्वितीयार्थः। यत्रानुकूलकृतिमत्त्वम् (कर्तृत्वम्), तत्र कृतिजन्यत्वम् (द्वितीयार्थः)। यत्र प्रतियोगित्वम्, तत्रानुयोगित्वम्। तेषां चाश्रयतासंबन्धेनैवान्वयः। (ग० व्यु० का० २। पृ० ४७)

५ नव्यानां मतेऽत्रायं बोधः, 'निरूपितत्वसंबन्धेन ग्रामविशिष्टं यत् वृत्तित्वम् (आधेयत्वम्), तद्वान् यः संयोगः, तदवच्छिन्नव्यापारानुकूलकृतिमान्' इत्युत्पद्यते। अत्र "कर्तुरीप्सिततमं कर्म" (पा० सू० १। ४। ४९) इत्यनेन कर्मसंज्ञा; "कर्मणि द्वितीया" (पा० सू० २। ३। २) इत्यनेन द्वितीया च ज्ञेया।

* एतन्मते धातोर्व्यापारमात्रार्थकत्वम्, इति बोध्यम्। (ग० व्यु० का० २। पृ० ३६) (का० व्या०)

व्यु० का० २। पृ० ३८) (२) यथा वा—गां पयो दोग्धि मैत्र इत्यादौ पयःपदोत्तरद्वितीयार्थो वृत्तित्वम्, इति प्राहुः। (ग० व्यु० का० २। पृ० ४४) [२] विषयत्वम्। यथा—भाविनं घटं जानाति, (न्या० म० ४। पृ० ६) पौरवं गां याचते, इत्यादौ च द्वितीयार्थः। तच्च विषयत्वं (कर्मत्वम्) [१] क्वचिद्विधेयत्वम्, विधेयित्वं वा। यथा—पर्वते वह्निमनुमिनोमीत्यादौ द्वितीयार्थः। [२] उद्देश्यत्वम्, उद्देश्यित्वं वा। यथा—वह्नि-

---

१ अत्र,—विभागावच्छिन्नक्षरणानुकूलव्यापारो दुह्यर्थः। तत्र विभागे गोपदोत्तरद्वितीयार्थवृत्तित्वस्य, क्षरणे च पयःपदोत्तरद्वितीयार्थवृत्तित्वस्यान्वयो बोध्यः। (ग० व्यु० का० २। पृ० ४४)

अत्रेदं बोध्यम्—गामित्यत्र "अकथितं च" (पा० सू० १। ४। ५१) इत्यनेन कर्मसंज्ञा। पय इत्यत्र तु "कर्तुरीप्सिततमं कर्म" (पा० सू० १।४।४९) इत्यनेन कर्मसंज्ञा। तथा च—"कर्मणि द्वितीया" (२।३।२) इत्यनेनोभयत्र द्वितीया, इति। अधिकं तु दोहनशब्दव्याख्यानावसरे संपादितम्, इति तत्र द्रष्टव्यम्।

२ अत्र, आश्रयो द्वितीयार्थः, इति शाब्दिका आहुः। (वै० सा०)

३ अत्र विद्यमानघटस्थले ज्ञानेन ज्ञाततोत्पादनमङ्गीकृत्य क्रियाजन्यफलशालित्वरूपकर्मत्वमपि कदाचित्संभवति, इत्यतः "भाविनम्" इत्युक्तम्; तत्र पूर्वं घटस्याभावेन ज्ञाततायाः जननासंभवात्, इति भावः। एवं च—"कर्तुरीप्सिततमं कर्म" इत्यनेन सूत्रेण लक्षणया विषयत्वात्मकं गौणमेव कर्मत्वं बोध्यते, इति। (त० प्र० ख० ४। पृ० ७६)

४ अत्रापि पूर्वोक्तमेव गौणं कर्मत्वम्। पौरवस्य तु 'गां दोग्धि' इत्यत्रेव कर्मत्वं बोध्यम्। अधिकं तु याचनशब्दव्याख्यानावसरे संपादयिष्यते।

५ अत्रेदं बोध्यम्—ज्ञानादिरूपसविषयकवस्त्वभिधायकधातुसमभिव्याहृतद्वितीयाया प्राचीनमते विषयत्वमर्थः। तस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः। विषयत्वे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः, इति। नव्यास्तु,—वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया 'घटं जानाति, पटं न' इत्यादौ—(प्राचीनमते शाब्दबोधस्य) अनुपपत्तेः, अतस्तत्र द्वितीयाया विषयित्वमेव शक्यार्थमुपवर्णयन्ति। तन्मते, तत्र (विषयित्वे) प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन; विषयित्वस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः। घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव। विषयित्वादौ च द्वितीयाया लक्षणैव, न तु शक्तिः, इति सांप्रदायिका आहुः। (ग० व्यु० का० २। ख० २। पृ० ५१)

६ अयं द्वितीयार्थस्तु (उद्देश्यत्वम्, उद्देश्यित्वं वा), यदि वह्निसाध्यक-पर्वतपक्षकानुमितिपरस्य 'वह्निमत्त्वेन पर्वतमनुमिनोमि' इत्यादिवाक्यस्यापि प्रामाण्यं मन्यते, तदाऽङ्गीकर्तव्यः। तथा च—तादृशद्वितीयार्थोद्देश्यत्वादेश्च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वेन विशिष्टेऽन्वयः कर्तव्यः। (ग० व्यु० का० २। ख० २। पृ० ५५)

मत्त्वेन पर्वतमनुमिनोमीत्यादौ द्वितीयार्थः । यथा वा–विष्णुं यजते इत्यादौ द्वितीयार्थः । [ ३ ] [ क ] क्वचित्;–समवायसंबन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नविषयतानिरूपितप्रकारिता । यथा–पुष्पं जिघ्रतीत्यादौ द्वितीयार्थः ।

[ ख ] लौकिकविषयित्वम् । यथा–घटं पश्यतीत्यादौ द्वितीयार्थः ।

[ ४ ] क्वचित्,–तादात्म्यसंबन्धावच्छिन्नप्रकारता । यथा–रङ्गेऽभेदेन रजतारोपस्थले ‘ रङ्गं रजतं जानाति ’ इत्यादौ द्वितीयार्थः । [ ५ ] [ क ] विशेष्यता । यथा–पाकं चिकीर्षतीत्यादौ द्वितीयार्थः ।

[ ख ] क्वचित्,–मुख्यविशेष्यत्वम् । यथा–‘ वृष्टिसाध्यं सुखं भवतु ’ इत्यत्र सुखस्यैव ( न तु वृष्टेः ) कर्मत्वं द्वितीयार्थः । [ ६ ] क्वचित्,—साध्यताख्यविषयताविशेषः । यथा–घटं करोतीत्यादौ द्वितीयार्थः ।

---

१ अत्र, तृतीयार्थो वैशिष्ट्यम् । तच्चात्र विधेयत्वमेवेति, न तृतीयार्थानुपपत्तिः । ( ग० व्यु० का० २। ख० २। पृ० ५६ )

२ अत्र तादृशप्रकारितायाश्च गन्धनिरूपितलौकिकविषयिताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयितायां निरूपितत्वसंबन्धेनान्वयः । तेन, ‘ इदानींतनपुष्पे गन्धः’ इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वेऽपि, तादृशप्रत्यक्षदशायां न ‘कालं जिघ्रति’ इत्यादिप्रयोगः । ( ग० व्यु० का० २ । ख० १ । पृ० ५२ )

३ अत्र पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते, न त्विच्छाया विषयत्वरूपं कर्मत्वम्; गृहस्थितीच्छामादाय ‘गृहं तिष्ठासति’ इत्यादिप्रयोगापत्तेः । ( ग० व्यु० का० २ । ख० २ । पृ० ५९ )

अत्रेदं ज्ञेयम्—क्यजाद्यन्तादेरकर्मकस्य सन्नन्तसमानार्थकत्वेऽपि ( पुत्रीयति, पुत्रकाम्यतीत्यादौ ) साकाङ्क्षत्वानुपगमेन, न द्वितीया । भृत्यं पुत्रीयतीत्यादौ तु, आचारार्थविहितक्यजन्तस्य सकर्मकत्वं युज्यत एवेति तत्र द्वितीया । ( ग० व्यु० का० २ । ख० २ । पृ० ६३ )

४ अत्र, ‘ सुखमिच्छति’ इत्यादिवत्, ‘वृष्टिमिच्छति’ इत्यादयो न प्रयोगाः, इति बोध्यम् । ( ग० व्यु० का० २ । ख० २ । पृ० ५९ )

५ अत्रायं विशेषो ज्ञेयः—काष्ठान् कटं करोति, काष्ठं भस्म करोतीत्यादौ काष्ठ-काष्ठपदोत्तरद्वितीययोस्तु उपादानीयविलक्षणविषयतैवार्थः, इति । ( ग० व्यु० का० २ । ख० २ । पृ० ६५ )

२ कर्तृत्वम्। यथा—अजां[*] ग्रामं प्रापयति, शिष्यं शास्त्रं ज्ञापयति, ब्राह्मणमन्नं भोजयति, यजमानं मन्त्रं पाठयति, घटं जनयति, घटं नाशयति चैत्रः, इत्यादौ—अजादिपदोत्तरद्वितीयार्थः कर्तृत्वम्[1]। ३ विभागः। यथा—गां पयो दोग्धि मैत्र इत्यादौ गोपदोत्तरद्वितीयाया अर्थः[2]। ४ अभेदः। यथा—स्तोकं पचतीत्यादौ द्वितीयार्थः[3]। (का० व्या० पृ० ७) ५ [१] अधिकरणत्वम्। यथा—मासमधीते चैत्र इत्यादौ द्वितीयार्थः[4]। [२] [क] अन्ये तु,—व्यापकत्वम्। यथा—मासं[5] रमणीया, क्रोशं कुटिला नदीत्यादौ द्वितीयार्थः, इत्याहुः।

---

१ अजां[*] ग्रामं प्रापयति, इत्यादौ गतिनिरूपितं अजानिष्ठं कर्तृत्वम् आश्रयत्वमेव द्वितीयार्थः;। शिष्यं शास्त्रं ज्ञापयतीत्यादौ ज्ञाननिरूपितं शिष्यनिष्ठं कर्तृत्वं च आश्रयत्वमेव द्वितीयार्थः;। घटं जनयतीत्यादौ उत्पत्तिनिरूपितं घटनिष्ठं कर्तृत्वं चाश्रयत्वमेव द्वितीयार्थः;। ब्राह्मणमन्नं भोजयतीत्यादौ भोजननिरूपितं ब्राह्मणनिष्ठं कर्तृत्वं च भोजनानुकूलकृतिमत्त्वमेव द्वितीयार्थः;। यजमानं मन्त्रं पाठयतीत्यादौ पाठनिरूपितं यजमाननिष्ठं कर्तृत्वं च पाठानुकूलकृतिमत्त्वमेव द्वितीयार्थः;। घटं नाशयतीत्यादौ नाशनिरूपितं घटनिष्ठं कर्तृत्वं च प्रतियोगित्वमेव द्वितीयार्थः;। तस्य च (कर्तृत्वस्य पूर्वोक्ताश्रयत्व–कृतिमत्त्व–प्रतियोगित्वात्मकस्य) निरूपकतासंबन्धेन धात्वर्थेऽन्वयः, इति प्राचीना आहुः। नव्यास्तु,—यत्राश्रयत्वं कर्तृत्वम्, तत्राधेयत्वं द्वितीयार्थः। यत्रानुकूलकृतिमत्त्वं कर्तृत्वम्, तत्र कृतिजन्यत्वं द्वितीयार्थः। यत्र प्रतियोगित्वं कर्तृत्वम्, तत्रानुयोगित्वं द्वितीयार्थः। तेषां च (पूर्वोक्तकर्तृत्वानाम्) आश्रयतासंबन्धेनैव तत्तद्धात्वर्थेऽन्वयः, इति प्राहुः।

२ अत्रत्यो विषयस्तु दोहनशब्दव्याख्यानावसरे संपादितः; तत्रावलोकनीयः।

३ अत्र नामार्थधात्वर्थयोरभेदात्मकसंबन्धेन (पदादनुपस्थितेनापि) अन्वयस्यास्वीकारे एवाभेदो द्वितीयया बोध्यते; तत्स्वीकारे तु क्रियाविशेषणपदोत्तरद्वितीयाया विशेषणविभक्तिवत् प्रयोगसाधुत्वायैवेति ज्ञेयम्। (का० व्या० पृ० ७)

४ अत्र "कालाध्वनोरत्यन्तसंयोगे" (पा० सू० २।१।५) इत्यनेन द्वितीया ज्ञेया।

५ अत्र, अत्यन्तसंयोगोऽभिव्याप्तिः। अभिव्याप्यत्वसंबन्धेन मासस्य कर्मत्वम्। द्वितीयायाः साधुत्वनिर्वाहकत्वमेवेति। अत्रोक्तम्—"कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते" इति। (ग० भ्यु० का० २। ख० २। पृ० ६८)

---

* अत्र, "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ" (पा० सू० १। ४। ५२) इत्यनेन कर्तुः कर्मसंज्ञा विधीयते, इति बोध्यम्। तथा च–'अजां ग्रामं प्रापयति' इत्यस्य 'अजा ग्रामं गच्छति, चैत्रोऽजां ग्रामं गमयति' इत्यर्थः। एवमुत्तरत्राप्यर्थ ऊह्यः।

[ ख ] केचित्तु,—अभिव्याप्तिः । यथा—मासं सुप्यते, क्रोशं गम्यते, इत्यादौ द्वितीयार्थः, इत्याहुः । ६ प्रतियोगित्वम्, अनुयोगित्वं वा । यथा—'दण्डं विना[1] न घट उत्पद्यते, रासभं विनापि घट उत्पद्यते' इत्यादौ द्वितीयार्थः । यथा वा—"आरम्य तस्यां दे[2]शमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम्" इत्यादौ प्रतियोगित्वम्, अनुयोगित्वं वा द्वितीयार्थः । ७ अवधित्वम्, अवधिमत्त्वं वा । यथा—काशीतः कौशि[3]कीं यावत् यातीत्यादौ द्वितीयार्थः । ८ [ १ ] आधेय[4]त्वम्; [ २ ] निरूपित[5]त्वं वा । यथा—यज्ञमनु प्रावर्षदित्यादौ द्वितीयार्थः । यथा वा—[6]त्वां च, मां चान्तरेणेत्यादौ द्वितीयार्थो निरूपितत्वम् । एवमन्यत्रापि द्वितीयार्थस्तूक्तदिशा स्वयं परिच्छेद्यः । ( ग० व्यु० कारक० २ । खण्ड १–२ । पृ० ३६—७७ )

**द्वित्वम्**—( अनेकद्रव्या संख्या ) १ [ १ ] संख्या[7]विशेषः । यथा—द्वौ

---

१ अत्राधिकं च 'विना' शब्दव्याख्याने द्रष्टव्यम् ।

२ अत्राधिकं तु 'मर्यादा' शब्दव्याख्यानावसरे संपादयिष्यते ।

३ अत्राधिकं च 'मर्यादा' शब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्रार्थे कारकस्वरूपं हेतुत्वम्* अनुशब्दार्थः (यज्ञमनु प्रावर्षदित्यादौ) । तत्र च यज्ञान्वितस्याधेयत्वरूपद्वितीयार्थस्यान्वयः । हेतुतायाश्च निरूपकत्वसंबन्धेन वृष्टावन्वयः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

५ अत्रार्थे, जन्यत्वमनुशब्दार्थः । तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञाद्यन्वितस्यान्वयः । जन्यतायाश्चाश्रयत्वसंबन्धेन वृष्टावन्वयः । (ग० व्यु० का० २ । ख० २ । पृ० ७६) अधिकं तु न्यायकोशपरिशिष्टे "**कर्मप्रवचनीयः**" एतच्छब्दव्याख्यानावसरे सविस्तरं समग्रं संपादयिष्यते, इति तस्मादेवावगन्तव्यम् ।

६ अत्र "अन्तराऽन्तरेण युक्ते" ( पा० सू० २।३।४ ) इत्यनेन द्वितीया । तथा च—द्वितीयार्थनिरूपितत्वस्यान्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयः । ( ग० व्यु० का० २। ख० २। पृ० ७७ )

७ इदं द्वित्वं च, समवायेन द्रव्यद्वये प्रत्येकं तिष्ठति, इति ज्ञेयम् ।

---

* "अनुर्लक्षणे" ( पा० सू० १ । ४ । ८४ ) इत्यत्र कर्मप्रवचनीयसंज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात्, इति । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

घटावानयेत्यादौ द्वित्वम् । [ २ ] अपेक्षाबुद्धिजन्यो गुणविशेषः । यथा—'अयमेकः, अयमेकः' इति बुद्ध्यनन्तरम् 'इमौ' इति व्यवहा-

१ इदं द्वित्वं तु व्यासज्यवृत्ति; पर्याप्तिसंबन्धेन द्वयोरेव द्रव्ययोस्तिष्ठति, न प्रत्येकस्मिन् । इदमेव द्वित्वमपेक्षाबुद्ध्या* जन्यते, तन्नाशेन † नश्यति च, इति; क्वचिदाश्रयनाशादपि नश्यति । ( प्रशस्त० पृ० १३ ) ( मु० गु० ) इदमेव द्वित्वम् 'इमौ द्वौ' इति व्यवहारविषयः, इति च विज्ञेयम् । ( सर्व० औलू० ) एवम्—त्रित्वचतुष्ट्वाद्यारभ्य परार्धत्वपर्यन्तं ज्ञेयम् । मीमांसकास्तु, द्वित्वादीनामपेक्षाबुद्धिजन्यत्वं न स्वीकुर्वन्ति ।

* द्वित्वादेरपेक्षाबुद्धिजन्यत्वे प्रमाणमाहुराचार्याः—[क] अपेक्षाबुद्धिर्द्वित्वादेरुत्पादिका भवितुमर्हति, व्यञ्जकत्वानुपपत्तौ तेनानुविधीयमानत्वात्, शब्दं प्रति संयोगवत्, इति । [ख] सायणाचार्यास्तु,—'द्वित्वादिकं एकत्वद्वयविषयाऽनित्यबुद्धिव्यङ्ग्यं न भवति, अनेकाश्रितगुणत्वात्, पृथक्त्वादिवत्' इत्याहुः । ( सर्व० औलू० पृ० १०७ )

इदानीं द्वित्वोत्पत्तिप्रकारः प्रदर्श्यते—[ क ] यदा बोद्धुश्चक्षुषा समानासमानजातीययोर्द्रव्ययोः संनिकर्षे सति तत्संयुक्तसमवेतसमवेतैकत्वसामान्यज्ञानोत्पन्नावेकत्वसामान्यतत्संबन्धज्ञानेभ्य एकगुणयोरनेकविषयिण्येकबुद्धिरुत्पद्यते । तदा तामपेक्ष्यैकत्वाभ्यां स्वाश्रययोर्द्वित्वमारभ्यते । ततः पुनस्तस्मिन् द्वित्वसामान्ये ज्ञानमुत्पद्यते । तस्मात् द्वित्वसामान्यज्ञानादपेक्षाबुद्धिर्विनश्यति। द्वित्वसामान्यतत्संबन्धज्ञानेभ्यो द्वित्वगुणबुद्धेरुत्पद्यमानता, इत्येकः कालः। ( प्रशस्त० पृ० १३ ) [ ख ] तत्र—प्रथममिन्द्रियार्थसंनिकर्षः; तस्मादेकत्वसामान्यज्ञानम्; ततोऽपेक्षाबुद्धिः; ततो द्वित्वोत्पत्तिः; ततो द्वित्वसामान्यज्ञानम्; तस्माद्द्वित्वगुणज्ञानम्; ततः संस्कारः । ( सर्व० औलू० पृ० १०७ ) [ ग ] प्रथममपेक्षाबुद्धिः; ततो द्वित्वोत्पत्तिः; ततो विशेषणज्ञानं द्वित्वत्वनिर्विकल्पकात्मकम्; ततो द्वित्वत्वविशिष्टप्रत्यक्षमपेक्षाबुद्धिनाशश्च; ततो द्वित्वनाशः, इति । ( मु० गु० ) [ घ ] उत्पत्स्यमानद्वित्वाधारेणेन्द्रियसंनिकर्षः; तत एकत्वगुणगतसामान्यज्ञानम्; तत एकत्वसामान्यविशिष्टैकत्वगुणसमूहालम्बनरूपापेक्षाबुद्धिः; ततो द्वित्वगुणोत्पत्तिः; ततस्तद्गतसामान्यस्य ज्ञानम्; ततस्तत्सामान्यविशिष्टद्वित्वगुणज्ञानम्; ततो द्वित्वगुणविशिष्टद्रव्यज्ञानम्; ततः संस्कारः; इतीन्द्रियसंनिकर्षमारभ्य संस्कारपर्यन्तमष्टौ क्षणाः । ( वै० उ० ७।२।८ )

† द्वित्वादेरपेक्षाबुद्धिनाशनाश्यत्वे प्रमाणमनुमानम् । तच्च,—'द्वित्वं अपेक्षाबुद्धिनाशनाश्यम्; आश्रयनाशविरोधिगुणान्तराभावे, गुणस्य सतोऽविनाशित्वात्, चरमज्ञानवत्' चरमज्ञानस्यादृष्टनाशनाश्यत्वात्, इति । ( वै० उ० ७।२।८ )

इदानीं द्वित्वविनाशप्रकारः प्रदर्श्यते—[ क ] एकत्वत्वसामान्यज्ञानस्यापेक्षाबुद्धितो विनाशः । द्वित्वत्वसामान्यज्ञानादपेक्षाबुद्धेर्विनाशः । द्वित्वत्वसामान्यज्ञानस्य च द्वित्वगुणबुद्धितो विनाशः; द्वित्वगुणबुद्धेश्च द्वित्वविशिष्टद्रव्यज्ञानात् । तस्य च संस्कारात्, विषयान्तरज्ञानाद्वा विनाशः, इति । एवम्—द्वित्वोत्पत्तिविनाशवत् त्रित्वोत्पत्तिविनाशावप्यूह-

रविषयो द्वित्वम् । २ अपेक्षाबुद्धिविशेषविषयत्वम् । (दि० १) यथा—'समवायाभावौ द्वौ' इति प्रतीतिविषयो द्वित्वम् । ३ द्वित्वादिकं स्वरूपभेद एव ( नातिरिक्तम् ) इति भूषणमतम् । ( वै० उ०७।२।१)

**द्विधा**—( अव्ययम् ) द्विप्रकारः । यथा—"षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः" ( रघु० स० १। श्लो० ३९ ) इत्यादौ ।

**द्विष्ठत्वम्**—[ १ ] उभयनिरूपितवृत्तित्वम् । यथा—संयोग-विभागादीनां द्विष्ठत्वम् । ( ख० )

[ २ ] स्थानद्वयवृत्तित्वम् । यथा—"द्विष्ठास्तिथिक्षयाभ्यस्ताश्चान्द्रवासरभाजिताः" ( सू० सि० ) इत्यादौ, इति ज्योतिषशास्त्रज्ञा आहुः ।

**द्वीन्द्रियग्राह्यगुणत्वम्**[2]—[ क ] इन्द्रियत्वावान्तरत्वक्त्व—चक्षुष्ट्व—एतदुभयधर्मावच्छिन्नजनकतानिरूपितजन्यताश्रयग्रहविषयगुणत्वम् ।

---

१ इदं च द्वित्वं स्वरूपसंबन्धेन पदार्थमात्रे तिष्ठति, इति ज्ञेयम् ।

२ द्वीन्द्रियग्राह्यगुणाश्च,—संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, द्रवत्वम्, वेगः, स्नेहश्च । ( भा० प० गु० श्लो० ९२—९३ ) ( दि० गु० पृ० १९३ )

---

नीयौ । ( वै० उ० ७।२।८ ) [ ख ] अपेक्षाबुद्धित एकत्वसामान्यज्ञानस्य द्वित्वोत्पत्तिसमकालं निवृत्तिः । अपेक्षाबुद्धेर्द्वित्वसामान्यज्ञानात् द्वित्वगुणबुद्धिसमसमयं निवृत्तिः । द्वित्वस्यापेक्षाबुद्धिनिवृत्तेर्द्रव्यबुद्धिसमकालं निवृत्तिः । गुणबुद्धेर्द्रव्यबुद्धितः संस्कारोत्पत्तिसमकालं निवृत्तिः । द्रव्यबुद्धेस्तदनन्तरं संस्कारात्, इति । ( प्रशस्त० पृ० १३ )

तथा हि—[ क ] यत्र,—द्वित्वाधारावयवकर्मसमकालमेकत्वसामान्यज्ञानम्; तद्यथा—अवयवकर्मसामान्यज्ञाने, विभागापेक्षाबुद्धौ, संयोगनाशगुणोत्पत्तौ, द्रव्यनाशद्वित्वसामान्यज्ञाने; तत्र,—द्रव्यनाशात् द्वित्वनाशः, सामान्यज्ञानादपेक्षाबुद्धिनाशः; अपेक्षाबुद्धिनाशस्य द्वित्वनाशसमानकालत्वात्, कार्यकारणसमानभावाभावात् ? । ( वै० उ० ७।२।८ ) [ ख ] यदैकत्वाधारावयवैः कर्मोत्पद्यते तदैकत्वसामान्ये ज्ञानमुत्पद्यते । कर्मणा चावयवान्तराद्विभागः क्रियते; उपेक्षाबुद्धेश्चोत्पत्तिः । ततो यस्मिन्नेव काले विभागात् संयोगविनाशस्तस्मिन्नेव काले द्वित्वमुत्पद्यते । संयोगविनाशात् द्रव्यविनाशः; सामान्यबुद्धेश्चोत्पत्तिः । ततस्तस्मिन्नेव काले आश्रयविनाशात् द्वित्वविनाशः, इति शोभनमेतद्विधानम् । ( प्रशस्त० पृ० १४ )

[ख] चक्षुस्त्वगुभयग्रहणयोग्यत्वम्[1]। (दि० गु० पृ० १९३)

[ग] चाक्षुष-स्पार्शन-निर्विकल्पकविषयगुणत्वव्याप्यजातिमत्त्वम्। (प० मा०)

[घ] बाह्यद्वीन्द्रियग्राह्यजातिमद्गुणत्वम्, इति कश्चिदुक्ति। (ल० व०)

द्वेषः[2]—(गुणः) [क] अमर्षलक्षणः (दोषः)। (वात्स्या० ४।१।३) यथा—"इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्"। (गौ० १।१।१०) इत्यादौ द्वेषः।

[ख] निवृत्तिलिङ्गः[3]। (वात्स्या० ३।२।३७) स च प्रज्वलनात्मकः[4]। (प्रशस्त० पृ० ३३) यथा—"इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ" (गीता० ३।३४) इत्यादौ द्वेषः।

[ग] 'द्वेष्टि' इत्यनुभवसिद्धद्वेषत्वसामान्यवान्; प्रज्वलनात्मकः। (प्र० प्र०) (त० कौ० पृ० ८) (सि० च०·गु० पृ० ३९)।

---

१ चक्षुस्त्वगुभयग्राह्य-भावनावृत्त्यन्य-* धर्मसमवायिगुणत्वम्, इति तु निष्कर्षः। (दि० गु० पृ० १९३)

२ स च मनोग्राह्यः (भा० प० श्लो० ५८), जीवात्ममात्रवृत्तिश्च। (वात्स्या० ४।१।२) द्वेषलक्षणं च [क] निवृत्तेः†साक्षादनुकूलत्वम्। (वाक्य० गु० पृ० २१) [ख] विघ्नोत्पादक-ज्ञानजन्यगुणत्वम्, इति। (ल० व० गु० पृ० ३५)

३ यज्जातीयस्यार्थस्य संनिकर्षात् दुःखमात्मोपलब्धवान्, तज्जातीयमेवार्थं पश्यन् हातुमिच्छति, सेयं हातुमिच्छा द्वेषः। एवम्—एकस्यानेकार्थदर्शिनो दर्शनप्रतिसंधानात् दुःखहेतौ द्वेषः, इति भाष्यसंमतोऽर्थः। (वात्स्या० १।१।१७)

४ यस्मिन् सति प्रज्वलितमिवात्मानं मन्यते स द्वेषः। स च, आत्ममनसोः संयोगात् दुःखापेक्षात्, स्मृत्यपेक्षाद्वा, उत्पद्यते। प्रयत्नस्मृतिधर्माधर्महेतुर्द्रोहः, क्रोधो मन्युः, अक्षमाऽमर्षः, इति द्वेषभेदाः। (प्रशस्त० पृ० ३३)

---

* अत्र, संस्कारत्वादिकमादाय भावनायामतिव्याप्तिवारणाय भावनावृत्त्यन्येति। कर्मादावतिव्याप्तिवारणाय गुणत्वस्य निवेशः। (दि० गु० पृ० १९३)

† अत्र, ज्ञानवारणाय 'साक्षात्' इति पदम्। (वाक्य० गु० पृ० २१)

[ घ ] द्विष्टसाधनताज्ञानजन्यो गुणविशेषः । ( सि० च० गु० पृ० ३९ ) ( भा० प० गु० श्लो० १४९ )
[ ङ ] बलवद्दुःखसाधनताज्ञानजन्योऽप्रीतिजनकश्चित्तवृत्तिविशेषः । यथा–"औषधं द्वेष्टि" इत्यादौ, इति शाब्दिका आहुः । ( ल० म० )
[ च ] दुःखानुशयो ( क्लेशविशेषः ) द्वेषः, इति पातञ्जला आहुः । स च ( द्वेषः ) बुद्धिधर्म एव, नात्मधर्मः, इति सांख्या आहुः । न्यायनये द्वेषो द्विविधः । दुःखविषयः, तत्साधनविषयश्च । सांख्यादिमते च द्वेषोऽष्टादशविधः । ( वाच० ).

**द्वैतवादः**—जीवेश्वरादिभेदनिर्णायकः कथाविशेषः । यथा–गौतमादिप्रणीतः कथारूपग्रंथविशेषः । ( वाच० )

---

१ अत्रेदं ज्ञेयम्—दुःखोपायविषयकं द्वेषं प्रति, बलवद्द्विष्टसाधनताज्ञानं कारणम्; बलवदिष्टसाधनताज्ञानं च प्रतिबन्धकम् । तेन, नान्तरीयकदुःखजनके पाकादौ न द्वेषः, इति । ( मु० गु० पृ० २२२ )

२ अत्र कार्यकारणभावो ज्ञेयः—दुःखद्वेषं प्रति दुःखज्ञानमात्रं कारणम्, इति । ( त० कौ० पृ० १८ )

३ अत्रापि कार्यकारणभावो ज्ञेयः—दुःखसाधनद्वेषं प्रति दुःखसाधनताज्ञानं ( 'इदं दुःखसाधनम्' इत्याकारकम् ) कारणम्, इति । ( त० कौ० पृ० १८ )

४ अत्र व्युत्पत्तिः—'द्विधा इतं द्वीतम्, तस्य भावः ( स्वार्थे वा अण् ) द्वैतम्, द्वैतमधिकृत्य वादो द्वैतवादः' इति । ( वाच० )

५ अत्र प्रमाणानि,—"ॐ भेदव्यपदेशात् ॐ" "ॐ प्रकरणात् ॐ" "ॐ स्थित्यदनाभ्यां च ॐ" ( ब्रह्मसूत्र० १।३।५–७ ); "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" ( श्रुतिः ) ( तत्त्वप्रका० १।३।५–७ ); "जन्मादिव्यवस्थातः* पुरुषबहुत्वम्" ( सां० सू० अ० १। सू० १४९ ) "नाद्वैतश्रुतिविरोधो जातिपरत्वात्" ( सां० सू० अ० १। सू० १५४ ) इत्यादीनि ज्ञेयानि ।

६ अत्र द्वैतमतानि च,—सांख्य–योग–न्याय–तर्क–पूर्वमीमांसा–उत्तरमीमांसा†–दर्शनानि ज्ञेयानि । द्वैतमतेषु जगतः सत्यत्वम्, जीवेश्वरादिभेदपञ्चकम्, परमात्मनः सर्वोत्तमत्वं स्वातन्त्र्यं च, जीवानां तु बहुविधत्वं सायुज्यादिमोक्षश्च प्रतिपाद्यते, इति विज्ञेयम् ।

---

* अत्रायमर्थः,—"जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च । पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव" इति ( सांख्यका० श्लो० १८ )

† अत्रोत्तरमीमांसाशब्देन मध्वापरनामश्रीपूर्णप्रज्ञाचार्यप्रणीतं वेदान्तशास्त्रं ग्राह्यम् । शांकरमतमद्वैतम्, रामानुजमतं विशिष्टाद्वैतम्, वल्लभमतं तु शुद्धाद्वैतम्, इति च ज्ञेयम् ।

द्वैतवादिनस्तु, सांख्यकपिल–योगिपतञ्जलि–नैयायिकगौतम–तार्किककणादमुनि–पूर्वमीमांसकजैमिनि–उत्तरमीमांसकश्रीसत्यवतीसुतव्यास–इत्यादयो ( षड्दर्शनकर्तारः ) ज्ञेयाः ।

**द्व्यणुकम्**[1]—[ १ ] परमाणुद्वयसंयोगेन यदुत्पद्यते, तत् । ( त० दी० १ । पृ० ९ ) ( त० कौ० १। पृ० ३ ) यथा—"विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः" (भा०प० श्लो० ३९) इत्यादौ द्व्यणुकम् । [ २ ] 'अणुर्द्वौ परमाणू स्यात्' इति बादरायणाचार्या आहुः । (भाग०) [ ३ ] नव्या नास्तिकास्तु,–संयुक्ताणुद्वयं द्व्यणुकम्, इत्याहुः । (प०मा०)

---

## ध.

**धर्मः**[2]—[ १ ] आधेयः । यथा—द्रव्यं गुणवदित्यादौ गुणो धर्मः । [ २ ] विधेयः । यथा–"संदिग्धसाध्यधर्मत्वं पक्षत्वम्" । ( चि० २। पृ० ३३ ) इति पक्षलक्षणे पर्वतपक्षकवह्निसाध्यकस्थले वह्न्यादिर्धर्मः ।

**धर्मः**[3]—१ ( गुणः ) [ क ] यतोऽभ्युदय-निःश्रेयससिद्धिः स धर्मः । ( वै० १।१।२ )

---

१ अत्र व्युत्पत्तिः,–'द्वौ अणू कारणे यस्य ( कप् ) तत्' इति द्रष्टव्या । द्व्यणुकं तु जन्यद्रव्यावयवोऽतीन्द्रियं च, इति न्यायसिद्धान्तः । महादेवभट्टस्तु,–गवाक्षरन्ध्रे दृश्यमानामेव* द्व्यणुकत्वमिति द्व्यणुकं नातीन्द्रियम्, इत्याह । ( दि० १। पृथिवी० पृ० ६९ )

२ वृत्तिमत्त्वं† अत्रत्यधर्मस्य लक्षणम् । ( स्व० )

३ अत्रेदं ज्ञेयम्—धर्मशास्त्रस्य कर्तारश्च,–"मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्तगौतमशातातपहारीतयाज्ञवल्क्यप्राचेतसादयः‡ ।" ( हेमाद्रिखण्डे० व० )

---

* अत्रायं विशेषः—गवाक्षरन्ध्रे दृश्यमानस्यैव ( द्व्यणुकस्य ) 'त्रसरेणुः' इत्यपि व्यवहारः । द्व्यणुकस्य 'त्रसरेणुः' इति केवलरूढमेव । (राम० १। पृथि० पृ० ६९) अतो न मनुस्मृतेः ( अ० ८। श्लो० १३२ ) विरोधः, इति।

† यत्र कुत्रचिद्वर्तते यः, तत्त्वम्, इत्यर्थः । तेन, घटत्व–आकाशत्वादिषु वृत्तिमत्पदार्थेषु लक्षणसमन्वयः ।

[ ख ] सुखासाधारणकारणम् । ( प्र० प्र० ) (त० भा० गु० पृ० ३७) स च, विहितकर्मजन्योऽदृष्टविशेषः । ( त० सं० ) यथा—"धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः" (भा० प० श्लो० ९०) इत्यादौ पुण्यात्मको धर्मः । २ वेदप्रतिपाद्यप्रयोजनवदर्थो धर्मः, इति मीमांसकाः । ( लौ० भा० पृ० ३ ) यथा—धर्मः स्वनुष्ठितः पुंसामित्यादौ यागादिधर्मः । ( मीमां० कौ० ) यथा वा—गङ्गास्नानादिव्यापारः । (त० भा०)

---

अत्राह यमः—"मनुर्यमो वसिष्ठोऽत्रिर्दक्षो विष्णुस्तथाङ्गिराः । उशना वाक्पतिर्व्यास आपस्तम्बोऽथ गौतमः ॥ कात्यायनो नारदश्च याज्ञवल्क्यः पराशरः । संवर्तश्चैव शङ्खश्च हारीतो लिखितस्तथा ॥ एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा । तान्येवातिप्रमाणानि न हन्तव्यानि हेतुभिः" इति । ( वाच० )

४ स ( धर्मः ) निवृत्तिलक्षणः, विधिरूपो वा । ( वै० उ० १। १।२ )

१ स च जीवमात्रसमवेतः, वासनया जन्यते, भोगतत्त्वज्ञानादिना नश्यतीति ज्ञेयम् । ( सि० च० )

धर्मस्तु न प्रत्यक्षः, किं त्वनुमानगम्यः । तत्रानुमानम्—' देवदत्तस्य शरीरादिकं देवदत्तस्य* विशेषगुणजन्यम्, कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात्, देवदत्तप्रयत्नजन्यवस्तुवत् ' इति ज्ञेयम् । ( त० भा० गु० पृ० ३७ )

२ स च धर्मः, भट्टमते यागादिः, प्राभाकरमते त्वपूर्वनाम पुण्यम् । ( तत्त्वबोधिनी) (वाच०)

३ एतद्धर्मप्रमाणम्—" वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् " (मनु० २।१२) इति ।

दशविधं धर्मस्वरूपमुच्यते—" धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" इति । (मनु० अ० ६ । श्लो० ९२)

४ स च धर्मः षड्विधः† । वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्चेति । ( मिता० १।१ )

---

‡ आदिशब्दाच्च,—वृद्धदेवलसोमजमदग्निप्रजापतिविश्वामित्रवृद्धशातातपपैठीनसिपितामहबौधायनछागलेयजाबालिच्यवनमरीचिकश्यपा ग्राह्याः । (वाच०)

* यस्तु शरीरादिजनक आत्मविशेषगुणः, स एव धर्मः; प्रयत्नादीनां शरीराद्यजनकत्वात् , इति ज्ञेयम् । ( त० भा० गु० पृ० ३७ )

† अत्रोच्यते—" प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता " इति । ( मनुः, अ० १२। श्लो० १०५ )

**धर्माभासः**—"श्रुतिस्मृतिभ्यामुदितो यः स धर्मः प्रकीर्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्माभासः स उच्यते" ( देवीभाग० )

**धातुः**—( शब्दप्रकृतिः ) [ क ] यः शब्दः स्वोत्तरतृचः शक्येऽर्थे स्वोपस्थाप्यस्य यादृशार्थस्यान्वयबोधं प्रति समर्थः, स तादृशार्थे धातुरुच्यते । यथा–पचे[2]–पिपक्षेत्यादयो धातवः ।

[ ख ] यः शब्दः स्वान्ते कृच्चिन्तनं विना, सुबर्थे[3] यादृशस्य निजार्थस्यान्वयधियं प्रत्यसमर्थः, स एव तादृशार्थको धातुः । यथा–पाकं कुरु, संपदं पश्येत्यादौ[4] । ( श० प्र० श्लो० ५५। पृ० ७० )

[ ग ] शाब्दिकास्तु,–क्रियावाचको गणादिपठितः[5] शब्दविशेषः, इत्याहुः। ( वाच० )

धातुस्त्रिविधः । मूलधातुः, सौत्रः, प्रत्ययान्तश्चेति । तत्र ( १ ) गणप-

---

१ अत्र–" धातूनाम् *अनेकार्थकत्वम् " इति; " सर्वे† सर्वार्थवाचकाः " इति च शाब्दिकादीनां राद्धान्तोऽनुसंधेयः ।

तल्लक्षणं च क्रियावाचित्वे सति भ्वादिगणपठितत्वम् । ( ल० व० )

२ पच–पिपक्षादयो हि शब्दाः (पक्तृ–पिपक्षितृ–इत्यादिनामनिविष्टाः) स्वोत्तरतृजर्थे कर्त्रादौ स्वोपस्थाप्यानां पचन–पाकेच्छादीनामन्वयधियं प्रति प्रभवो भवन्तीति लक्षणसमन्वयोऽत्र बोध्यः । ( श० प्र० श्लो० ५५। पृ० ७० )

3 सुबर्थेऽपि धात्वर्थस्यान्वयवादिनां प्राचां मतेनेदं धातुलक्षणम्, इति ज्ञेयम् । ( श० प्र० श्लो० ५५ । पृ० ७० )

४ अत्र हि–पचादिको धातुः स्वोत्तरस्य भावकृतः ( घञ्–क्विप्–इत्यादिप्रत्ययस्य) प्रतिसंधानदशायामेव सुबर्थकर्मत्वादौ स्वार्थस्य पचनादेरन्वयबोधमाधत्ते, न त्वन्यथा; स्वरूपस्य घञाद्यशक्यत्वेन तत्र धात्वर्थस्यान्वयायोगात् ( इति लक्षणसमन्वयो बोध्यः ) । ( श० प्र० श्लो० ५५। पृ० ७० )

५ अत्र, सर्वनामाव्ययादीनामपि गणपठितत्वेन धातुत्वापत्तिः; तद्वारणाय क्रियावाचित्वविशेषणम् । हिरुगाद्यव्ययानां क्रियावाचित्वेन धातुत्वापत्तिः; तद्वारणाय गणपठितत्वं विशेषणं दत्तम् । ( वाच० )

---

* अत्र, अनेकार्थकत्वं च व्याकरण–कोश–इत्याद्यभियुक्तकृततत्तदर्थकत्वम् । (त० प्र० ख० ४। पृ० ७० )

† सर्वार्थवाचकत्वं च स्वप्रवृत्तिनिमित्तसमानाधिकरणकृत्स्नधर्माश्रयवाचकत्वम् ।

ठितो धातुर्मूलधातुरुच्यते । यथा–पच–भू–प्रभृतिः । ( २ )—सूत्रमात्रोपात्तो धातुः सौत्र इत्युच्यते । यथा–स्कन्–भुजु–प्रभृतिकः । ( ३ )—स्वावयवलभ्यार्थस्य बोधको धातुः प्रत्ययान्त इत्युच्यते । यथा–पाचि–पिपक्षा–तितिक्षा–इत्यादिः, इति । हिन्दीलान्दीलादेर्लौकिकस्यापि सत्त्वाच्चतुर्विध एव धातुरिति बोपदेव आह । लौकिकस्यापि सौत्रेऽन्तर्भाव इति नाधिक्यम्, इत्यन्ये आहुः ।

परस्मैपदित्व–आत्मनेपदित्व–उभयपदित्व–भेदेनापि धातुस्त्रिविधः । तत्तल्लक्षणं च,–यो धातुः स्वोपस्थाप्यस्य यादृशार्थस्य यत्पदोपस्थाप्ये कर्तृत्वेऽन्वयबोधं प्रति समर्थः, स धातुस्तत्पदी । यथा–(१) गम–भू–प्रभृतयः, स्वार्थस्य गति–उत्पत्तिप्रभृतेर्मुख्ये गौणे वा परस्मैपदार्थ एव कर्तृत्वेऽन्वयं प्रति प्रभवः, इति परस्मैपदिनः । ( २ ) संगच्छते–भवते–इत्यादितः संगति–प्राप्त्यादिकर्तृत्वावगमात्, तादृशार्थे आत्मनेपदिन एव ते । ( ३ ) यजति–करोति–इत्यादित इव, यजते–कुरुते–इत्यादितोऽपि यागादिकर्तृत्वस्यावगतेर्यागाद्यर्थे यजि–कृञ्–इत्यादिरुभयपदी । (श० प्र० श्लो० ९७–९८ । पृ० ७१ )

प्रकारान्तरेणापि धातुर्द्विविधः[1] । सकर्मकः, अकर्मकश्च, इति । तत्र सकर्मको द्विविधः । एककर्मकः, द्विकर्मकश्च[2][3] । तत्रैककर्मकश्च, एककर्मान्वितस्वार्थबोधकः । यथा–गम्यादिरेककर्मकः । द्विकर्मकोऽपि द्विविधः । द्विकर्मान्वितैकव्यापारार्थकः, द्विकर्मान्वितद्विव्यापारार्थकश्च । तत्राद्यो दुह्यादिः । द्वितीयस्तु णिजन्तः[4], इति ।

---

१ अत्र सूत्रम्–"भूवादयो धातवः" (पा० सू० १।३।१ ) इति ।

२ अत्रेदं बोध्यम्—सकर्मकत्व–अकर्मकत्व–एतदुभयधर्मविशिष्टोऽपि धातुर्भवति । यथा–सकर्मकाणां गम्यादीनां कर्तृत्वविवक्षयाऽकर्मकत्वमपि, इति त्रिविधोऽपि धातुरस्ति, इत्यपि सिध्यति ।

३ तत्र द्विकर्मकत्वं तु कर्मद्वयसाकाङ्क्षक्रियाबोधकत्वम् । ( का० वा० पृ० २ )

४ तत्र च धातुना एकव्यापारोऽभिधीयते; द्वितीयस्तु ( व्यापारः ) णिचा; व्यापारद्वये च ईप्सितकर्मणः, प्रयोज्यकर्तृरूपकर्मणश्च यथाक्रममन्वयः । तथा त्वं च गम्यादीनाम्, इति बोध्यम् । पच्यादीनां तु नैवम्; तद्योगे प्रयोज्यकर्तुः कर्मसंज्ञाऽभावेन व्यापारद्वये कर्मद्वयान्वयाभावात्, इति विवेकः । ( वाच० )

अकर्मको[1]ऽपि धातुर्हेतुचतुष्टयाधीनाकर्मकक्रियार्थत्वाच्चतुर्विधः[2]; इत्यलं विस्तरेण । ( वाच० )

धातोरर्थश्च मतविशेषेषु यथा–(१)—फलमेव धातोरर्थः; तदनुकूलक्रिया त्वाख्यातेन कर्त्रादावनुभाव्यते, इति मण्डनमिश्र आह । ( श० प्र० श्लो० ९९ । पृ० १४० ) ( २ )—क्रियामात्रं[3] (केवलं व्यापारमात्रम्) धात्वर्थः; फलं तु कर्मप्रत्ययेन बोध्यते, इति प्राञ्चः ( रत्नकोशकृत्प्रमृतयः ) आहुः । ( चि० ४ ) ( श० प्र० श्लो० ७२ । पृ० ९३ ) ( ३ )—फलं[4] व्यापार[5]श्चैतदुभयं[6] धात्वर्थः, इति शाब्दिका आहुः ।

---

१ अकर्मकस्तु उक्त एव । तत्रायं विशेषः—व्यापारमात्रस्यैव धात्वर्थत्वपक्षे फलानवच्छिन्नव्यापारवाचकत्वमकर्मकत्वम्, इति भाति ।

२ अकर्मकक्रियात्वे चत्वारो हेतवस्तु हरिणा दर्शिताः; यथा—“ धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ” इति । ( वाच० )

३ एतन्मते,—द्वितीयासाकाङ्क्षानुमन्तधातुत्वप्रयुक्त एव च धातूनां सकर्मकत्वव्यपदेशः, न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः; ज्ञाप्रभृतावव्याप्तत्वात्, इति ज्ञेयम् । ( श० प्र० श्लो० ७२। पृ० ९३ )

४ अत्र फलत्वं च [ क ] तद्धात्वर्थजन्यत्वप्रकारकप्रतीतिविषयत्वे सति;* तद्धातुजन्योपस्थितिविषयत्वम्, तद्धात्वर्थत्वं वा । [ ख ] परे तु ( मञ्जूषाकृतः ),—कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वे† सति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् । ( वै० सा० द० धात्व० पृ० ८ ) कर्मप्रत्ययसमभिव्याहारे तु–फलस्य विशेष्यत्वम्,‡ इत्याहुः । ( वै० सा० द० धात्व० पृ० ८ )

५ अत्र व्यापारत्वं च पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकप्रतीतिविषयत्वम् । ( वै० सा० द० धात्वर्थ० पृ० ८ )

६ तत्रोक्तम्–“ फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः । फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ” इति । ( वै० सा० धात्वर्थ० पृ० ७ ) एतदर्थमाह—धातुरिति,–फलं व्यापारश्च धात्वर्थः । आश्रये इति,–फलाश्रयः कर्म, व्यापाराश्रयः कर्ता, तौ तिङर्थौ । फले इति,–विक्लित्त्यादि§ फलं प्रति व्यापारो विशेष्यः । तिङर्थ इति,–तिङर्थः कर्तृकर्मसंख्याकालाः । तत्र कर्ता व्यापारे विशेषणम्, कर्म फले विशेषणम्, संख्या तु कर्तृप्रत्ययार्थे कर्तरि,–कर्मप्रत्ययार्थे कर्मणि विशेषणम्; समानप्रत्ययोपात्तत्वात्, इति ।

एवं च—वैयाकरणमते, देवदत्तस्तण्डुलं पचतीत्यादौ ‘देवदत्ताभिन्नैककर्तृकस्तण्डुलाभिन्नकर्मवृत्तिविक्लित्त्यनुकूलो व्यापारः’ इति क्रियामुख्यविशेष्यको बोधः । देवदत्तेन तण्डुलः पच्यते, इत्यादौ च ‘देवदत्ताभिन्नकर्तृको यो व्यापारस्तज्जन्या तण्डुलाभिन्नैककर्मनिष्ठा विक्लित्तिः’

( ४ )—नव्यास्तु (न्यायभास्करकृदादयः) फलावच्छिन्नविलक्षणव्यापार एव (कर्त्राख्यातसमभिव्याहारे) धात्वर्थः; कर्मप्रत्ययार्थस्तु (द्वि-

---

इति बोधः। नैयायिकमते तु, देवदत्तस्तण्डुलं पचतीत्यादौ 'तण्डुलवृत्तिविक्लित्त्यनुकूलव्यापारानुकूलकृतिमानेकत्वविशिष्टो देवदत्तः' इति प्रथमान्तार्थमुख्यविशेष्यको बोधः। देवदत्तेन तण्डुलः पच्यते इत्यादौ च 'देवदत्तसमवेता या कृतिः, तज्जन्यो यो व्यापारः, तज्जन्या या विक्लित्तिः, तदाश्रय एकत्वविशिष्टस्तण्डुलः' इति बोधः। (स्व०)

७ अत्रायं विशेषः–पृथक्शक्त्या विशिष्टशक्त्या वा फलव्यापारौ धातुना बोध्येते, इति वैयाकरणमतम्। गदाधरादिनवीनमते तु पृथक्शक्त्यैव फलव्यापारौ बोध्येते, इति।

१ [ १ ] एतन्मते फलस्यावच्छेदकत्वेन धात्वर्थप्रविष्टत्वात्, पतेरकर्मकत्वेन विलक्षणव्यापारमात्रे शक्तिः, न तु तत्र फलस्यावच्छेदकत्वम्, इति न पतेः सकर्मकत्वापत्तिः। अत एव–फलानवच्छिन्नविलक्षणव्यापारवाचित्वम् धातोरकर्मकत्वम्। फलावच्छिन्नविलक्षणव्यापारवाचित्वम् सकर्मकत्वम्। तच्च फलं यदा उभयकर्मान्वितं तदा द्विकर्मकत्वम्। यथा–चैत्रोऽश्वं ग्रामं नयतीत्यादौ नयत्यादेः; 'अश्वग्रामोभयनिष्ठसंयोगजनकनयनकर्ता' इति बोधात्। परंतु–अत्र ग्रामो मुख्यं कर्म; अश्वस्तु गौणम्; "अकथितं च" इत्यनुशासनात्। (म० प्र० ४। पृ० ५६) (न्या० म० ४। पृ० २१) [ २ ] अत्र वैयाकरणा अप्याहुः—अवच्छिन्नपदस्य संबन्धपरत्वेन कर्मीभूतफलसंबन्धिव्यापारार्थकत्वस्य सुस्थत्वात्, अकर्मकाणां फलार्थत्वानङ्गीकारेणातिव्याप्त्यव्याप्त्योरनवकाशः, इति। (वै० सा० द० )

२ स च [ क ] धातूपनीतफलानुकूलसजातीयविजातीयव्यापारप्रचयः। (त० प्र० ख० ४। पृ० ५०) [ ख ] फलानुकूलत्वोपलक्षित–¶विलक्षणव्यापारः (न्या० म० ४। पृ० २०) [ ग ] शाब्दिकास्तु,—फलानुकूलो (यत्नसहितः‖) व्यापारः, इत्याहुः। (ल० म० )

---

* अत्र, धात्वर्थव्यापारेऽतिप्रसङ्गनिरासाय सप्तन्तम्। गम्याद्यर्थव्यापारजन्यविभागादावतिप्रसङ्गवारणाय विशेष्यदलम्। (वै० सा० द० धात्व० पृ० ८)

† अत्र जन्यता चारोपिता, अनारोपिता चेत्यन्यत्। विभागजन्यसंयोगादिरूपे पतत्यर्थे विभागसंयोगयोः फलत्ववारणायोभयदलम्। (वै० सा० द० धा० पृ० ८)

‡ तथा हि—चैत्रो ग्रामं गच्छतीत्यादौ 'ग्रामनिष्ठसंयोगानुकूलव्यापारकर्ता चैत्रः' इति बोधात्, संयोगात्मकफलस्य व्यापारनिरूपितप्रकारत्वम्। चैत्रेण ग्रामो गम्यत इत्यादौ तु 'चैत्रसमवेतव्यापारजन्यसंयोगाश्रयो ग्रामः' इति बोधात्, संयोगस्य व्यापारनिरूपितविशेष्यत्वम्, इति।

§ देवदत्तस्तण्डुलं पचतीत्यादौ फलं विक्लित्त्यादि। व्यापारस्तु, भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया। अयं च व्यापारः, फूत्कारत्वाधःसंतापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः। (वै० सा० धात्वर्थ० पृ० ९–१२)

तीयार्थः) आश्रयता (निष्ठत्वम्), सा च धात्वर्थैकदेशे फलेऽन्वेति, इति; कर्माख्यातसमभिव्याहारे तु–व्यापारावच्छिन्नफलमेव धात्वर्थः, इति च; प्राहुः। (म० प्र० ४।पृ० ९६) (श०प्र० श्लो ०७२।पृ० ९३)(ल०म०)

**धातुः**—१ भूवादयो द्वाविंशतिशतविधा (२२००) धातवः, इति शाब्दिका आहुः । २ वातपित्तकफास्त्रयो धातवः, इत्यायुर्वेदविदः । ३ रेतः, इत्यपीति भिषजः । ४ रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि; त्वक्चर्मादयोऽपि सप्त धातवः, इति शारीरकशास्त्रज्ञा आहुः । ५ "हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च । रङ्गमायसरैत्यं च धातवोऽष्टौ प्रकीर्तिता" इति वैद्यशास्त्रज्ञाः, तान्त्रिकाश्चाहुः । ६ आकाशादिमहाभूतानि, इति पौराणिकाः । ७ (१) इन्द्रियाणि; (२) रूपरसगन्धस्पर्शशब्दाश्च, इत्यादयो धातुशब्दवाच्या भवन्ति इति शास्त्रान्तरविद आहुः । (वाच०)

**धात्वंशः**—(प्रत्ययः) [क] सुबर्थानन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः, स तादृशार्थे धात्वंशप्रत्ययः । यथा–पुत्रयतीत्यादौ क्यच् ।

[ख] धात्वन्तावयवरूपः प्रत्ययः । यथा–सनादिप्रत्ययः पिपक्षादिधात्वन्तभागत्वाद्धात्वंशप्रत्ययो भवति । (श० प्र० श्लो० १०६। पृ० १६४) धात्वंशप्रत्ययो द्विविधः । नामप्रकृतिकः, धातुप्रकृतिकश्चेति । तत्र नामप्रकृतिकः क्यच्, क्यङ्, इत्यादिः । धातुप्रकृतिकस्तु सन्, यङ्, इत्यादिः । (श० प्र० श्लो० १०७। पृ० १६४)

---

१ पचतीत्यादौ सुबर्थानन्वितकृत्यर्थकोऽपि तिबादिर्न तिङन्यः (इति न तत्रातिप्रसङ्गः) । (श० प्र० श्लो० १०६। पृ० १६४)

२ अत्र, क्यजाद्यर्थस्य इच्छादेर्न सुबर्थेऽन्वयः; किं तु–तिङर्थे, (इति तत्र लक्षणसमन्वयो बोध्यः) । (श० प्र० श्लो० १०६। पृ० १६४)

---

* इत्थं च (उपलक्षितत्वविवक्षणेन), कृष्णलं (यवत्रयमितं सुवर्णम्) श्रपयेदित्यत्रोष्णीकरणमात्रे धातोर्न लक्षणा; रूपादिपरावृत्त्यवच्छिन्नाधःसंतापनस्य श्रपणस्य बाधेऽपि तदुपलक्षिताधःसंतापनस्य तत्राबाधात्, इत्यवधेयम् । (म० प्र० ४ । पृ० ५६)

‖ अत एव गम्यादीनां सकर्मकत्वमुपपद्यते, इत्याशयः ।

**धारणम्**—१ [ १ ] [ क ] द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्वम्[1] । यथा—विप्राय शतं धारयतीत्यादौ धात्वर्थः । ( ग० व्यु० कार० ४। पृ० ९७ )

[ ख ] केचित्तु,—पुनर्दानमङ्गीकृत्य द्रव्यग्रहणम्, इत्याहुः । ( का० व्या० पृ० ९ )

[ ग ] पाणिनीयास्तु,—ऋणग्रहणम् । यथा—गुरवे[2] गां धारयते, इत्यादावपि धारेरर्थः, इत्याहुः । ( श० प्र० श्लो० ६९। पृ० ८६ )[3]

[ २ ] [ क ] गृहावस्थितिः । यथा—गुरवे गां धारयते[4], इत्यादौ, इति कालापाः । ( श० प्र० श्लो० ६९। पृ० ८६ )

[ ख ] शाब्दिका अपि,—अवस्थितिः । यथा—भक्ताय धारयति[5] मोक्षं हरिरित्यादौ धारेरर्थः, इत्याहुः । ( ल० म० सुब० कार० ४। पृ० १०३ ) २ प्राणस्य पूरक-रेचक-कुम्भकैर्निरोधरूपश्चित्तवशीरणं प्राणायामविशेषः । (सांख्य प्र० भा० अ० ३। सू० ३३) यथा—"धारयेत्तत्र चात्मानं धारणां धारयन्बुधः" ( याज्ञ० ) इत्यादौ, इति सांख्या आहुः ।

---

१ अत्रायं भावः—ऋणग्रहणेनाधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो जन्यते । तेनैवादृष्टेन ऋणमपरिशोध्य मृतस्य नरकादिकम्, इति । ( ग० व्यु० कार० ४। पृ० ९७ )

२ अत्र "धारेरुत्तमर्णः" ( पा० सू० १।४।३५ ) इत्यनेन धनिकविप्रादेः संप्रदानता । तथा—कर्तृत्वं चतुर्थ्यर्थः । तस्य धात्वर्थघटके आदानेऽन्वयः । ( ग० व्यु० का० ४। पृ० ९६–९७ )

३ अत्र दत्तत्वं चतुर्थ्यर्थः । तथा च—'गुरुदत्तां गां ऋणत्वेन गृह्णाति' इत्याकारस्तत्र वाक्यार्थः । ( श० प्र० श्लो० ६९। पृ० ८६ )

४ अत्र धृञा गृहावस्थितिः, द्वितीयया तदन्वितं कर्तृत्वम्, चतुर्थ्या च तन्निविष्टगृहान्वितं संबन्धित्वम्, उपस्थाप्यते । तेन, 'गोकर्तृकाया गुरुसंबन्धिगृहावस्थितेरनुकूलव्यापारवान्' इत्याकारको बोधः; धातूत्तरणिचा व्यापारबोधनात्, इति भावः । ( श० प्र० श्लो० ६९। पृ० ८६ )

५ अत्र, "धृङ् अवस्थाने" इति धातोर्णिचाऽवस्थानानुकूलव्यापारो धारेरर्थः । तदर्थावस्थित्याश्रयसंबन्धी संप्रदानम्; "धारेरुत्तमर्णः" इति सूत्रात् । तथा च—'हरिकर्तृको भक्तसंप्रदानको मोक्षकर्मकावस्थित्यनुकूलो व्यापारः' इति बोधः । ( ल० म० सुब० कार० ४। पृ० १०३ )

३ "धारणा मनसो ध्येये संस्थितिर्ध्यानवद्द्विधा" (अग्निपु० अ० ३७४) इति पौराणिका आहुः । ४ जलसूचको वायुविशेषधारणाद्यात्मको योगभेदः, इति ज्योतिषज्ञा आहुः । (बृ० सं० अ० २२) ५ "देशबन्धश्चित्तस्य धारणा" (पात० सू० पाद ३। सू० १) इति योगिनो वदन्ति । (गौ० वृ०४।१११)

**धूमः**—१ सार्द्रेन्धनवह्निजातः, मेघाञ्जनयोर्जनको द्रव्यविशेषः । यथा—"पर्वतत्वेन पक्षत्वे, वह्नित्वेन साध्यत्वे, विशिष्टधूमत्वेन च हेतुत्वे (पर्वतो वह्निमान् विशिष्टधूमात् इत्यादौ) पर्वतादेः काञ्चनमयत्वविरहो न दोषः" (दीधि० २। पृ० १७९) इत्यत्र "अभ्रंलिहां धूमलेखां पश्यति" (मु० २) इत्यादौ च धूमः । यथा वा—"सधूमदीप्ताग्निरुचीनि रेजुः" (भट्टिः) इत्यादौ धूमः । २ अग्निमान्द्यसूचको वायुविशेषः (ढेकार), इति भिषजो वदन्ति । ३ ज्योतिर्विदस्तु,—धूमकेतुः, इत्याहुः । ४ उल्कापातश्चेति काव्यज्ञा वदन्ति । (वाच०)

**धृतिः**—१ गुरुत्ववतां पतनाभावः । (कु० ५।१।टी० हरिदासः) (दि० १।१। पृ० १९) यथा—"कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः" (कु० ५।१) इत्यादौ । २ अष्टादशाक्षरपादकच्छन्दोमात्रम्, इति वृत्तशास्त्रज्ञा वदन्ति । ३ व्यभिचारिभावविशेषः, इत्यालंकारिका आहुः । ४ मौहूर्तिकास्तु,—विष्कम्भाद्यन्यतमयोगविशेषः, इत्याहुः । ५ गणकाश्च,—अष्टादशसंख्यायुक्तम् (द्रव्यम्), इत्याहुः । ६ गौर्यादिषोडशान्यतममातृकाविशेषः, इति संस्कारकुलाचारज्ञा आहुः । ७ मानसधारणाविशेषः, इति योगशास्त्रज्ञा आहुः । ८ धैर्यम्, इति काव्यज्ञा आहुः । (वाच०)

**ध्यानम्**—[१] चिन्तनम् । यथा—"इति विज्ञापितो राज्ञा ध्यानस्ति-

१ अत्र विशिष्टधूमश्च वह्निशून्यदेशान्तरवृत्तिधूमव्यक्तिव्यावर्तकविशेषणावच्छिन्नो धूमः । तादृशविशेषणं तु वह्निमद्वृत्तित्वादि ज्ञेयम् ।

२ अत्रोच्यते—"ज्ञानाभीष्टागमाद्यैस्तु संपूर्णस्पृहता धृतिः । सौहित्यवचनोल्लासहासप्रतिभादिकृत्" इति ।

मितलोचनः" (रघु० १।७३) इत्यादौ । [२] योगशास्त्रज्ञास्तु,–[क] "तत्र प्रत्ययैकतानता ध्यानम्" (पात० पाद० ३। सू० २) (गौ० वृ० ४।१।११) यथा–"ध्येयः सदा सूर्यमण्डलमध्यवर्ती परमात्मा" इत्यादौ (स्व०) यथा वा–"लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यम्" इत्यादौ ।

[ख] निदिध्यासनम् । यथा–"आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयेत्प्रज्ञां लभते योगमुत्तमम्" (श्रुतिः) इत्यादौ, इत्याहुः । [३] "रागोपहतिर्ध्यानम्" (सां० सू० ३। ३०) इति सांख्या आहुः । [४] ब्रह्मात्मचिन्ता ध्यानं स्यात्, इति वेदान्तिनः । [५] मायावादिवेदान्तिनस्तु,–"ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थितिः । ध्यानशब्देन विख्याता परमानन्ददायिनी" इत्यमन्यन्त ।

ध्वंसः[1]—(अभावः) [१] [क] 'विनष्टः' इति प्रतीतिसाक्षिक उत्पत्तिमानभावः । (न्या० म० १। पृ० ११) (त० दी० १। पृ० ४०) (वाक्य० पृ० २३)

[ख] सादिरनन्तः[2] । (त० सं०) यथा–घटो नश्यतीत्यादौ धात्वर्थः । (स्व०)

[ग] उत्पत्तेरनन्तरं समवायिकारणे कार्यस्य[3] संसर्गाभावः । (त० कौ०

१ स च प्रतियोगिजन्यः, प्रतियोगिनः समवायिदेशे वृत्तिश्च भवति । (त० दी० १। पृ० ४०) किं च–स च कार्यस्योत्पत्त्यनन्तरमुत्पद्यते, नित्यश्च* इति ज्ञेयम् । तल्लक्षणं च ध्वंसत्वमेव । तच्च [क] जन्याभावत्वम् । (मु० १) [ख] उत्पत्तिमत्त्वे सत्यभावत्वम् । (वाक्य० पृ० २३) [ग] अभावत्वव्याप्योऽखण्डोपाधिः† (म० प्र० पृ० १२) इति नव्यनैयायिकाः प्राहुः । (वाच०)

२ उत्पत्तिमत्त्वे सति नाशशून्य इत्यर्थः ।

३ तदर्थश्च यथा–'इह कपाले घटो ध्वस्तः' इत्यादौ–उत्पत्तेरनन्तरम् (प्रतियोगिभूतस्य

* अत्र गमकम्—ध्वंसो न विनाशी; विनाशकल्पनायां मानाभावात् । न हि 'विनाशो विनष्टः' इति कश्चित्प्रत्येति, इति । (न्या० म० १। पृ० ११) (नील० १। पृ० १०)

† अयं भावः—जन्यत्वस्य प्रायेण दुर्ज्ञानत्वात् तस्याखण्डोपाधिरूपत्वमङ्गीकर्तव्यम्, इति ।

पृ० २१) यथा—'इह कपाले घटो ध्वस्तः' इति प्रतीतिसाक्षिकोऽभावः । (प्र० प्र० पृ० २३) यथा वा—"तदप्यध्वंसदासाद्य माहेन्द्रं लक्ष्मणेरितम्" "प्राणादध्वंसिरे गात्रं तस्तम्भे च प्रिये हते" (भट्टिः) इत्यादौ । [२] अतीतावस्था ध्वंसः, इति सांख्या आहुः । [३] तिरोभावावस्था, इति शाब्दिकाः सांख्याश्चाहुः । (ल० म०)

**ध्वनिः**—(शब्दः) १ तारत्वादिधीहेतुः शब्दविशेषः । यथा—"उन्मदध्वनिभृता निभृताक्षरमुज्जगे" (माघ० स० ६ । श्लो० २०) इत्यादौ ।

---

घटादेरुत्पत्तेरनन्तरम्) जन्यः, समवायिकारणे* (घटस्य समवायिकारणे कपाले) वर्तमानः, कार्यस्य (घटादेः), संसर्गाभावः (तदाख्योऽभावः), इति ।

१ अत्र वैयाकरणाः,—ध्वंसस्यातीतत्वाभावेऽपि, फलव्यापारयोर्धात्वर्थत्वेन तदुत्पत्त्यनुकूलव्यापारस्य कारणविशेषसंयोगस्यातीतत्वात् 'ध्वस्तः' इति व्यवहार उपपद्यते, इत्याहुः । नैयायिकमते नाशमात्रस्यैव धात्वर्थत्वेऽपि तदुत्पत्तौ लक्षणा । तस्याश्चातीतत्वादिनैव 'ध्वस्तः, ध्वसते' इत्यादिप्रयोगः । अस्य कर्तृत्वं प्रतियोगित्वम् । तच्च नाशान्वयि, इति । तथा च—'वर्तमानोत्पत्तिकनाशप्रतियोगी घटः' इत्यन्वयबोधः (वाच०)

२ अत्र सूत्रम्—"नाशः† कारणलयः" इति । (सांख्य० अ० १। सू० १२१)

३ अत्रोच्यते—ध्वनिर्नाम, यो दूरादाकर्णयतो वर्णविशेषमनधिगच्छतः कर्णपथमवतरति; प्रत्यासीदतश्च तारत्वादिविशेषमवगमयति, इति । (शारीर०) (वाच०)

४ तस्य ध्वनेरुत्पत्त्यादिप्रकारादिकमुक्तम्; यथा—"सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः । शक्तिं ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका ॥ ततोऽर्धेन्दुस्ततो बिन्दुस्तस्मादासीत्परा ततः । पश्यन्ती मध्यमा वाचां वैखरी शब्दजन्मभूः" इति । (शारदाति०) (वाच०)

अत्रायं विशेषः—अनेकवर्णात्मकस्य कलशादिपदस्य प्रत्यक्षं (श्रावणप्रत्यक्षम्) न संभवति; आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन तन्मेलनात्मनः पदस्य ग्रहीतुमशक्यत्वात् । पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितेनानुभूयमानचरमवर्णेन श्रोत्रे व्यञ्जनाख्यो व्यापारो (आलंकारिकमतेन) जन्यते । तेनैव व्यापारेण नष्टवर्णघटितमपि पदं (वैयाकरणमते स्फोटपरिभाषितं पदम्) श्रोत्रेण साक्षात्क्रियते, इति चरमवर्णात्मनि शब्दे ध्वनिव्यवहारः, इति । (महेश्वरः) (वाच०)

---

* अत्रायं नियमः—'ध्वंस-प्रागभावौ स्वप्रतियोगिसमवायिदेशे वर्तेते' इति ।

† अत्रात्यन्तिकनाशश्च, कारणेन सह नाशः, इति भेदः । (वाच०)

स च ध्वनिर्वैयाकरणमते द्विविधः[1] । प्राकृतः, वैकृतश्चेति[2] २ उत्तमं काव्यं ध्वनिः[3], इत्यालंकारिका आहुः । ( प्रतापरुद्रे० प्र० २ )

---

## न.

न—१ अभावः[4] । ( न्या० म० ४ । पृ० १४ ) स च, संसर्गाभाव—अन्योन्याभाव—एतदन्यतरात्मकः[5] । ( तर्का० ४ । पृ० १२ ) यथा—भूतले घटो नास्ति[6], ( दीधि० ) घटः पटो न[7] भवति, इत्यादौ । यथा वा—"नैकः सुप्तेषु जागृयात्" इत्यादौ निषेधः । २ उ-

---

१ अत्रोक्तम् भर्तृहरिणा—"स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते । स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते" इति । ( वाक्यप० )

२ अत्र विवेकः—स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वम् ; चिर—चिरतर—कालस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेः कारणत्वम् ; इति । ( शब्दार्थरत्ने ) ( वाच० )

३ अत्रोक्तं मम्मटभट्टेन—"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः" इति । ( काव्य प्र० उ० १ । श्लो० ५ )

४ अत्रोक्तम्—[ १ ] "सादृश्यं* तदभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" इति । [ २ ] "नञभावे निषेधेन† स्वरूपार्थेऽप्यतिक्रमे । ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययोः" इति । ( मेदिनी )

५ तथा चोक्तम्—नञर्थो द्विविधः, प्रसज्यप्रतिषेधः, पर्युदासश्चेति । ( म० प्र० पृ० ४८ )

६ अत्र, [ १ ] सप्तम्या वृत्तित्वमर्थः; तस्य च नञर्थात्यन्ताभावेऽन्वयः । एवं च—' भूतलवृत्तिर्घटत्वावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः ' इति बोधः । [ २ ] केचित्तु,—भूतलवृत्तिर्योऽत्यन्ताभावः, तत्प्रतियोगी घटः ' इति बोधः, इत्याहुः । [ ३ ] अन्ये तु,—सप्तम्या निरूपितत्वम्, अस्धातोर्विद्यमानत्वम्, आख्यातस्याश्रयत्वम्, अर्थः । तथा च—' भूतलनिरूपितविद्यमानत्वाश्रयो घटाभावः ' इति बोधः, इत्याहुः । ( त० प्र० ४ । पृ० ६१ ) ( ग० व्यु० १ ) ( न्या० म० ४ । पृ० १५ )

७ अत्र ' घटः पटभेदवान् भवति ' इति बोधः ।

---

* अत्र यथाक्रममुदाहरणानि यथा—अनिक्षुः शर इत्यादौ सादृश्यम् ( नञर्थः ); भूतले घटो नास्तीत्यादावत्यन्ताभावः; अघटः पट इत्यादावन्यत्वम् ; अनुदरमुदरं तरुण्या इत्यादौ स्वल्पत्वम् ; अब्राह्मणो वार्धुषिक इत्यादावपकृष्टत्वम् ( अप्राशस्त्यम् ); असुरो दैत्य इत्यादौ विरोधः; बोध्यते, इति । ( श० प्र० श्लो० ३९ । पृ० ५० )

† तदर्थश्च—निषेधेन काक्वा । स्वरूपार्थे प्रकृतार्थे, इति । तेन ( एतादृशार्थस्वीकारेण ), अभावेन न पौनरुक्त्यम्, इति ध्येयम् । ( वाच० )

पमा । यथा—"निष्ठा देवो न सविता" (श्रुतिः), "वयो न वसतीरुप" (ऋ० सं० १।२९) इत्यादौ । ३ नकारस्वरूपो वर्णः । यथा "दो धः सौख्यं मुदं नः" (वृ० व० टी०) इत्यादौ । (वाच०)

अत्र केचित्,—अत्यन्ताभाव एव नञः शक्तिः; अन्योन्याभावादौ तु लक्षणा, इत्याहुः । (शा० भा०) (वाच०)

**न च**—शङ्कानिवारणार्थः । यथा—"न च 'स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिः' इति वाच्यम्; इष्टापत्तेः, विघ्नशङ्कया तदाचरणात्" (मु० १। मङ्गल०) इत्यादौ । (स्व०)

**नञ्तत्पुरुषः**—(तत्पुरुषः) नञर्थबोधकतया नञ्पदघटितः समासः । यथा—अघटः पट इत्यादौ । (स्व०)

---

१ अत्रेदमवधेयम्—केचित्तु,—न घटः पट इत्यादौ 'नामार्थयोर्भेदेनान्वयबोधोऽव्युत्पन्नः' इति व्युत्पत्तिविरोधापत्तिवारणाय, अघटः पट इत्यादौ समानविभक्तिकत्वेनाभेदान्वयबोधोपपत्तये च, नञोऽभाववति लक्षणा; घटपदस्य च घटप्रतियोगिके लक्षणा; स्वीकार्या, इत्याहुः । परेतु,—'नामार्थयोः' इति व्युत्पत्तौ "अव्यय-निपात-एतदतिरिक्तेति" नाम्नि विशेषणात् नञोऽभाववति, घटपदस्य तु घटप्रतियोगिके च न लक्षणाऽङ्गीकार्या; किंतु—नञः संसर्गाभावमात्रेऽन्योन्याभावमात्रे च शक्तिरेव, इति प्राहुः । (न्या० म० ४ । पृ० १४—१५) (त० प्र० ख० ४ । पृ० ६०—६१) अन्ये तु,—'नामार्थयोः' इति व्युत्पत्तिर्नाभ्युपगन्तव्या । 'भूतलं घटः, राजा पुरुषः' इत्यत्रापि आधेयतासंबन्धेन, स्वत्वसंबन्धेन च घट-पुरुष-पदार्थयोर्भूतल-राज-पदार्थान्वयबोधतात्पर्येण तादृशप्रयोगापत्तिवारणाय यथाक्रमं सप्तम्यन्तभूतलादिसमभिव्याहार-षष्ठ्यन्तराजादिपदसमभिव्याहारयोः पूर्वोक्तान्वयबोधं प्रति कारणत्वमङ्गीकर्तव्यम् । एवंच—पूर्वोक्तस्थलयोः ('न घटः पटः,' 'अघटः पटः' इत्याद्योः) नञ्पदादौ न लक्षणा, इत्याहुः । (ग० व्यु० का० १)

२ [१] अघटः पट इत्यादौ घटपदं लक्षणया घटसंबन्ध्यर्थकम् ('घटप्रतियोगिकम्' इत्यर्थकम्), नञ्पदं च अन्योन्याभावे शक्तमेव । (न्या० म० ४ । पृ० १४) एवं च—'घटप्रतियोगिकभेदवान् पटः' इति वाक्यार्थबोधः । [२] अघटं भूतलमित्यादौ नञो घटभिन्ने लक्षणा । न कलञ्जं भक्षयेदित्यादौ बलवदनिष्टजनके लक्षणा । (तर्का० ४। पृ० १२)

अत्रायं विशेषः—[१] नञ्समासेऽब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञ्युत्तरपदार्थसंबन्धिनि क्षत्रिये लक्षणा । अघटः पट इत्यादौ नञि सामानाधिकरण्यादभाववल्लक्षणा । व्यासेऽपि 'न घटः पटः' इत्यादौ; यथा शुक्लः पट इत्यत्र शुक्लवल्लक्षणा ।

**नतिः**—१ नमस्कारवदस्यार्थोऽनुसंधेयः । (ग० व्यु० कार० ४। पृ० १०१) २ चन्द्रार्ककक्षयोर्याम्योत्तरयोरन्तरं नतिः, इति ज्योतिर्विद आहुः । ३ ऊर्ध्वस्थितस्याधः पतनं नतिः, इति काव्यज्ञा वदन्ति । ( वाच० )

**ननु**—१ प्रश्नः । यथा—" ननु गमिष्ये " इत्यादौ । २ अवधारणम् । यथा—" उपपन्नं नन्[1] शिवम् " ( रघु० १।६० ), " त्वया नियम्या ननु दिव्यचक्षुषा " ( रघु० स० ३। श्लो० ४९ ) इत्यादौ । ३ आमन्त्रणम् ( संबोधनम् ) । यथा—"नेनु[2] मां प्रापय पत्युरन्तिकम्" ( कुमार० ४। ३२ ) इत्यादौ । ४ आक्षेपः ( शङ्का ) । यथा—" नन्वेवं धनाद्यर्जनस्य कुञ्जरशौचवत् दुःखानिवर्तकत्वे कथं तत्र प्रवृत्तिस्तत्राह" (सांख्य० प्र० भा० अ० १। सू० २-३ ) इत्यादौ । ( वाच० ) ५ अनुज्ञा । यथा—ननु गच्छेत्यादौ । ६ अनुनयः ( सान्त्वनम् ) । यथा—ननु

---

न पचतीत्यादौ क्रियासंबन्धे, भूतले न घट इत्यादौ प्रसज्यप्रतिषेधे नञो मुख्यार्थता, इति । (चि० ४) (वाच०)

अत्रेदमवधेयम्—व्युत्पन्नश्च नञ्समभिव्याहृतधात्वर्थस्याभावेऽपि विभक्त्यर्थान्वयः । अत एव प्राभाकराः,—"न कलञ्जं भक्षयेत्" इति श्रुतेः कलञ्जभक्षणाभावविषयकं कार्यमर्थमाहुः । क्रियायामिव विभक्त्यर्थेऽपि नञर्थाभावान्वय इति यदुक्तम्, तत्र "न कलञ्जं भक्षयेत्" इत्यादौ धात्वर्थे बलवदनिष्टाननुबन्धित्वरूपविध्यर्थस्य, "एकादश्यां न भुञ्जीत" इत्यादौ भोजनाभाव एव विध्यर्थेष्टसाधनत्वस्य, च बोध इति विषयभेदेन व्यवस्था । अतएव—"न कलञ्जं भक्षयेत्" इत्यादि निषेधवाक्यम्; "एकादश्यां न भुञ्जीत" इत्यादि निषेधविधिवाक्यम्, इति भेदः । (श० प्र०) (वाच०) एतद्विधिशब्दे द्रष्टव्यम् । [२] वृद्धास्तु,—पटस्याभाव इत्यर्थे प्रसज्यनञा अव्ययीभाव एव समासः प्रमाणम् । तेन, अपटं वर्तते इत्याद्येव तत्र ('पटस्याभावः' इत्यर्थे ) प्रयोगः; 'तत्पुरुषस्योत्तरपदलिङ्गकत्वम्' इति नियमात्, इत्याहुः ।

पक्षधरमिश्रास्तु,—प्रसज्यनञाप्यपट इत्यादिस्तत्पुरुष एव साधुः, नाव्ययीभावः; नञ्तत्पुरुषविधेस्तदपवादकत्वात् । अत एव—'वादिनामविवादः' इत्यादिकः किरणावल्यादौ पुंसि प्रयोगः, इत्याहुः । ( श० प्र० श्लो० ३९। पृ० ५० )

संप्रदायविदस्तु,—प्रसज्यनञा तत्पुरुषो भावकृदन्तप्रयोगे एव, न घटादिपदप्रयोगे । वादिनामविवाद इत्याद्युदाहरणेषु भावकृदन्तस्यैवोत्तरपदत्वात्, इत्याहुः । (वाच० )

१ उपपन्नमेवेत्यर्थः । ( टी० मल्लिनाथः, १।६० )

२ ननु 'हे वसन्त' इत्यर्थः । ( टी० मल्लिनाथः, ४।३२ )

कोपं मुञ्च दयां कुरु, इत्यादौ । ( अमरः ३। नाना० श्लो० २४७ ) ( विश्वः ) ७ विनिग्रहः । ८ परकृतिः । ९ अधिकारः । १० विनयः । ११ संभ्रमः । ( मेदिनी ) १२ वाक्यारम्भः । ( हैम० )

**ननु च**—विरोधोक्तिः । ( अमरः, ३। अव्यय० श्लो० १४ ) ( वाच० )

**नपुंसकलिङ्गम्**—(नाम) [१] नपुंसकत्वेन परिभाषितं पदम् । यथा—तटमित्यादौ । [ २ ] क्वचित्,—विलक्षणसंस्थानरूपविशिष्टवाचकम् । यथा—"न प्राणि प्राप्नुयाद्दायम्" इत्यादौ । (श० प्र० श्लो० ५३। पृ० ६९)

**नमः**—१ [ १ ] [ क ] त्यागः । यथा—"एषोऽर्घ्यः शिवाय नमः" इत्यादौ नमश्शब्दार्थस्त्यागः । ( ग० व्यु० का० ४। पृ० ९९ )

---

१ अत्र, परिभाषायाः प्रयोजनं चेह पदसंस्कारः; सोऽत्र ( तटमित्यादौ ) क्लीबत्वेन सुबादेर्लुगादिः, इति ।

वैयाकरणास्तु,—तटादिगतं नपुंसकत्वं पदार्थान्तरमेव; तच्च तटादिरूपप्रकृत्यैव बोध्यते । प्रत्ययानां तु व्यञ्जकत्वमात्रम्, इत्याहुः । ( श० प्र० श्लो० ५३। पृ० ६८ )

२ अत्र, लुप्तसुपैव ( न तु प्रकृत्या ) उपस्थितं विलक्षणसंस्थानरूपं नपुंसकत्वं प्राणिन्यनुभूयते, इति विज्ञेयम् । ( श० प्र० श्लो० ५३। पृ० ६९ )

३ प्रयोक्तृस्वसामानाधिकरण्यविशिष्टैककालीनोभयावृत्तिशरीरजातित्वसंबन्धेन नमःपदोपलक्षितधर्मावच्छिन्नकर्तृकत्यागः, इति निष्कर्षः ।

४ अयं त्यागो मतभेदेन द्विविधः । 'शिवस्यायं भवतु' इत्यादि—*फलेच्छाधीना † स्वस्वत्वाभावविषयिणीच्छा‡; स्वस्वत्वाभावविषयिणी§ परस्वत्वविषयिणी|| चेच्छा चेति । (ग० व्यु० का० ४ । पृ० ९९)

---

* अत्र फलं च त्यज्यमाने द्रव्ये ( शिवादेः ) स्वत्वोत्पत्तिः ।

† अत्र स्वशब्दस्यार्थस्तु नमःपदोच्चारणकर्ता पुरुषविशेषः ।

‡ एतन्मते, एतादृशत्यागोद्देश्यत्वमेव ( त्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् ) चतुर्थ्या प्रत्याय्यते । तथा च—एषोऽर्घ्यः शिवाय नम इत्यादौ स्वत्वप्रकारकेच्छाजन्यत्वं चतुर्थ्यर्थः । तद्घटकेच्छायां प्रकृत्यर्थशिवादेर्विषयिताविशेषसंबन्धेनान्वयः । चतुर्थ्यर्थस्य ( तादृशजन्यत्वस्य ) नमःपदार्थत्यागेऽन्वयः । त्यागस्य च विषयताविशेषसंबन्धेनार्घ्यात्मकद्रव्येऽन्वयः । एवं च—'शिवविशेष्यकस्वत्वप्रकारकेच्छाजन्यत्यागात्मकेच्छाविषयोऽर्घ्यः' इति शाब्दबोधः । ( ग० व्यु० का० ४। पृ० ९९ )

§ अत्र परस्वत्वं च शिवाद्युद्देशेन त्यज्यमानद्रव्यगतं शिवादेः स्वत्वम् ।

|| एतन्मते, एतादृशत्यागोद्देश्यत्वमेव ( एतादृशत्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् ) चतुर्थ्या प्रत्याय्यते । तथा च—एषोऽर्घ्यः शिवाय नम इत्यादौ विषयिताविशेष एव चतु-

[ ख ] शाब्दिकास्तु,—स्वस्वत्वनिवृत्त्यनुकूलो व्यापारः । यथा—"एषोऽर्घ्यः शिवाय नमः" इत्यादौ त्यागो नमश्शब्दार्थः, इत्याहुः । [ २ ] मन्त्रकरणकस्त्यागः । यथा—" पुष्पमिदं विष्णवे नमः " इत्यादौ । ( श० प्र० श्लो० ९२। पृ० १२६ ) २ नमस्कारवदस्यार्थोऽनुसंधेयः । यथा—हरये नम इत्यादौ । ( ल० म० का० ४। पृ० १०५ ) ( ग० व्यु० का० ४। पृ० ९९ ) ३ अन्तम् । ४ वज्रम् । ५ यज्ञः । यथा—" यज्ञो वै नमः " ( श्रुतिः ) इत्यादौ । ( वाच० )

**नमस्कारः**—[ १ ] [ क ] यमुद्दिश्य यस्य स्वापकर्षबोधनानुकूलव्यापारविशेषः, तस्य स नमस्कारः । ( चि० मङ्ग० १। पृ० १०३ ) ( म० प्र० २ ) यथा—" देवतास्तुतिनमस्कारादिषु मङ्गलव्यवहारः शिष्टानाम् "

---

१ शाब्दिकमतेऽत्र, उद्देश्यत्वं चतुर्थ्यर्थः । तथा च—'शिवोद्देश्यकत्यागविषयोऽर्घ्यः' इति शाब्दबोधः । ( ल० म० का० ४ । पृ० १०५ )

२ तेन, ब्राह्मणोद्देश्यकस्य च गवादित्यागस्य मन्त्रकरणकत्वे प्रमाणाभावात् 'गौर्ब्राह्मणाय नमः' इत्यादिको न प्रयोगः । ( श० प्र० श्लो० ९२ । पृ० १२६ )

३ अत्र, प्रीत्युद्देश्यकत्वम् तदिच्छाधीनस्वरूपं नमःपदार्थे मन्त्रकरणकत्यागे चतुर्थ्या बोध्यते । प्रकृत्यर्थस्य विष्ण्वादेः प्रीतौ, तदिच्छायां वाऽन्वयः । एवं च—'विष्णूद्देश्यकमन्त्रकरणकत्यागस्य कर्मेदं पुष्पम्' इति बोधः । ( श० प्र० श्लो० ९२ । पृ० १२६ )

४ लक्षणं च नमस्कारत्वमेव । तच्च [ क ] स्वापकर्षबोधजनकतावच्छेदकजातिमत्त्वम् । ( मू० म० १। पृ० १०४ ) [ ख ] मानसत्वव्याप्यजातिविशेषः । ( म० वा० पृ० १० ) [ ग ] ज्ञानविशेषः । स च विशेषो व्यवहारसाक्षिको जातिभेद एव । [ घ ] कायिकाद्यन्यतमत्वम् । ( न्या० दी० पृ० ३ )

५ स्वा*—पकर्षबोधानुकूलः ( विलक्षणः ) स्वीयव्यापारः, इति परमार्थः । ( ग० व्यु० कार० ४। पृ० १०१ ) ( राम० ) ( म० प्र० १। पृ० २ )

---

र्थ्यर्थः, तत्र च निरूपितत्वसंबन्धेन शिवादेरन्वयः । चतुर्थ्यर्थस्य तु त्यागेऽन्वयः । त्यागस्य विषयताविशेषसंबन्धेन द्रव्ये ( अर्घ्ये पूजासाधनपुष्पादिरूपे ) अन्वयः; । द्रव्यस्यैव वा विशेष्यतया भासमानत्यागे विषयिताविशेषसंबन्धेनान्वयः । ( ग० व्यु० का० ४। पृ० ९९ ) एवं च—'शिवविशेष्यिका (शिवस्वत्वप्रकारिका च ) या त्यागात्मकेच्छा, तद्विषयोऽर्घ्यः' इति शाब्दबोधः ।

* अत्र स्वमुच्चारयिता । ( ग० व्यु० कार० ४। पृ० १०१ ) ( राम० )

इत्यादौ । ( मू० म० मङ्ग० १। पृं० १०१ ) यथा वा—हरये नमः इत्यादौ नमस्कारः । ( ल० म० का० ४। पृ० १०९ )

[ख] स्वापकर्षबोधनानुकूलः स्वीयव्यापारः । यथा—हरये नम इत्यादौ नमःपदार्थः । ( ग० व्यु० का० ४। पृ० १०१ ) यथा वा—ब्राह्मणेभ्यो नमो नित्यमित्यादौ; । यथा वा—नमस्करोति, नमस्कृत्य, इत्यादौ ।

[ग] शाब्दिकास्तु,—अपकृष्टत्वबोधनानुकूलो व्यापारः । यथा—हरये नम इत्यादौ, इत्याहुः । ( ल० म० का० ४। पृ० १०९ )

[२] 'अयं मत्त उत्कृष्टः, अहमस्मादपकृष्टः' इति ज्ञानविशेषः, इति परे वदन्ति । ( त० प्र० १। पृ० ३ ) ( म० वा० पृ० १० ) नमस्कारस्त्रिविधः । कायिकः, वाचनिकः, मानसिकश्च । ( मू० म० १। पृ०

---

१ अत्र, "नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" ( पा० सू० २।३।१६ ) इत्यनेन चतुर्थी ज्ञेया । ( ल० म० सुब० कार० ४। पृ० १०५ )

२ अत्र, स्वमुच्चारयिता । ( ग० व्यु० कार० ४। पृ० १०१ )

३ अत्र,—अवधित्वम्, अवधिमत्त्वं वा चतुर्थ्यर्थः । तस्य नमस्कारपदार्थघटकेऽपकर्षेऽन्वयः तथा च—चैत्राद्युच्चारितात् 'नमो हरये' इत्यादिशब्दात् 'हर्यवधिकचैत्रापकर्षबोधानुकूलचैत्रीयव्यापारः' इत्याकारको बोधः । ( ग० व्यु० ) कारक० ४। पृ० १०१ )..

४ नमस्कारभेदाश्च कालीपुराणे उक्ता यथा—"त्रिकोणमथ षट्कोणमर्धचन्द्रं प्रदक्षिणम् । दण्डमष्टाङ्गमुग्रं च सप्तधा नतिलक्षणम्" इति । ( वाच० )

५ अत्र विषयत्वं चतुर्थ्या बोध्यते । ( श० प्र० श्लो० ९२। पृ० १२६ )

६ अत्र शाब्दिका आहुः—अत्र कृधातोरेव नमनार्थकता, नमश्शब्दस्तु तदर्थद्योतकः । तेन, नारायणं नमस्कुर्यादित्यादौ द्वितीया; "उपपदविभक्तेः कारकविभक्तिर्बलीयसी" इति न्यायात् । नमसो वाचकत्वे 'नमस्कृत्य ब्राह्मणेभ्यः' इत्यादौ नमश्शब्दप्रयोगे चतुर्थी । "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च" ( पा० सू० २।३।१६ ) इत्यत्र त्यागार्थक-नमनार्थकयोरुभयोर्ग्रहणम् । ( शब्देन्दु० ) ( ल० म० कार० ४। पृ० १०५–१०६ )

७ अत्रापकर्षः प्रयोक्तृरूपविशेषनिष्ठो नमस्कार्यावधिक एव प्रतीयते । व्यापारश्च प्रयोक्तृनिष्ठः । स च व्यापारः करशिरःसंयोगादिः, ईदृशशब्दप्रयोगश्च । चतुर्थ्यर्थ उद्देश्यत्वम् । एवं च—'हर्युद्देश्यक उक्तव्यापारः' इति बोधः । ( ल० म० का० ४। पृ० १०५ )

८ तत्र कायिकादिलक्षणानि च ( योगिनी० गन्धर्वतन्त्रे ) उक्तानि यथा—"जानुभ्यामवनीं गत्वा संस्पृश्य शिरसा क्षितिम् । क्रियते यो नमस्कारः प्रोच्यते कायिकस्तु सः" इत्यादिः । "या स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः । क्रियते भक्तियुक्तेन वाचिकस्तु नमः स्मृतः" इति । "इष्टमध्यानिष्टगतैर्मनोभिस्त्रिविधं भवेत् । नमनं मानसं प्रोक्तमुत्तमाधममध्यमम्" इत्यादि । ( गन्धर्वतन्त्र० ) ( वाच० )

१०२ ) नमस्कारः प्रकारान्तरेण द्विविधः । कचित्,–ऐहिकः, कचित् (कारीर्यादौ)–आमुष्मिकः । ( न्या० दी० पृ० ४ )

**नयः**—१ मतम् । यथा–न्यायनयः, मीमांसकनयः, इत्यादौ । ( स्व० ) २ नीतिशास्त्रम् । ( मल्लि० टी० २।२ ) यथा–"विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः" ( किरा० स० २। श्लो०३ ) इत्यादौ, इति नीतिशास्त्रज्ञा वदन्ति ।

**नयनम्**–[क] प्रापणम् । तच्च उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारः। यथा–अजां ग्रामं नयति, ग्रामं भारं वहतीत्यादौ; नीयते अजा ग्रामम्, उह्यते भारो ग्रामं चैत्रेणेत्यादौ; च नी-वहादिधात्वर्थः । ( ग० व्यु० का० २। पृ० ४६ )

[ख] गत्यवच्छिन्नव्यापारः । यथा–ग्राममजां वहति नयतीत्यादौ वहिप्रभृतेरर्थः । ( श० प्र० श्लो० ७३। पृ० ९९ ) यथा वा–"गमनाय मतिं चक्रे ताश्चैनं निन्युरङ्गनाः" ( रामा० वा० अ० ९ ) इत्यादौ । यथा वा–" नयनं पारिजातस्य द्वारकां मम रोचते " ( हरिवंश० अ० १२९ ) इत्यादौ । ( वाच० )

**नरकः**—[ १ ] दुःखविशेषः । ( मु० गु० ) यथा–" नरके पतनं केर्न

---

१ अत्र, क्रियारूपे धात्वर्थतावच्छेदके फले अजाभारादिवृत्तित्वान्वयः । संयोगरूपफले ( नीधात्वर्थघटके ) च ग्रामवृत्तित्वस्यान्वयः । तथा च–' ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमान्' इत्यन्वयबोधः । ( ग० व्यु० का० २। पृ० ४६)

२ अत्र, उत्तरदेशसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थः, तत्र च नीधात्वर्थस्य ( तादृशव्यापारस्य ) जन्यतासंबन्धेनान्वयः । तस्य ( आख्यातार्थफलस्य ) चाश्रयतासंबन्धेनाजा–भारादिरूपप्रधानकर्मण्यन्वयः । ग्रामादिवृत्तित्वान्वयस्तु संयोग एव । एवं च–'चैत्रीयकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारः, तज्जन्या या ग्रामवृत्तिसंयोगानुकूला क्रिया, तद्वानजादिः' इत्यन्वयबोधः । ( ग० व्यु० का० २। पृ० ४६ )

3 अत्र, [ क ] ' ग्रामकर्मकं यत् अजानिष्ठं गमनम्, तदनुकूलव्यापारवान्' इत्येवं बोधः । तादृशव्यापारः प्रकृते, गलरज्ज्वाकर्षणादिः । ( श० प्र० श्लो० ७३। पृ० ९९ ) [ ख ] ग्राममित्यस्य संयोगे, अजामित्यस्यानुकूलक्रियायामन्वयात् ' ग्रामवृत्तिसंयोगानुकूलाजावृत्तिक्रियानुकूलव्यापारानुकूलकृतिमान्' इति वाक्यार्थः । ( का० वा० पृ० २ )

४ तदर्थश्च—केन ( ब्रह्मणा ), नरके (नरस्य मनुष्यस्य, के मस्तके), इति । शेषं सुगमम् ।

नरके लिखितं यदि । नरकेसरिणः स्मर्तुर्नरके पतनं कुतः" इत्यादौ । [२] पौराणिकाश्च,—पापभोगस्थानविशेषो नरकः । यथा—"वेददूषयिता यश्च, वेदविक्रायकश्च यः । अगम्यागामी यश्च स्यात्, ते यान्त्यसिवनं द्विज" (पाद्मे० उत्तर ख० अ० ४८) इत्यादौ । यथा वा—"यो गुरूनवमन्येत स्वविद्याचारदर्पितः । स मृतः पात्यते क्षारसंज्ञकेऽधोमुखः पुमान्" (विष्णु पु० अंश० २। अ० ६) इत्यादौ, इत्याहुः । (वाच०)

**नवद्रव्यवृत्तिगुणत्वम्**—द्रव्यत्वाश्रयवृत्तिः प्रतियोगिव्यधिकरणो[1] योऽभावः, तत्प्रतियोगितानवच्छेदक-गुणविभाजक-उपाधिमत्त्वम् । (ल० व०) यथा—चतुर्विंशतेर्गुणानां (रूपादीनाम्) नवद्रव्यवृत्तिगुणत्वम् । (स्व०)

**न हि**—(अव्यये) सकारणको निषेधः । यथा—"न हि सामानाधिकरण्येन बाध-सिध्योरुभयोः सत्योरनुमितिं कश्चिदभ्युपैति" (ग० हेत्वा० सामा० ल० १। पृ० ४) इत्यादौ । यथा वा—"न ह्यस्मिन् युज्यते कर्म किञ्चिदा मौञ्जिबन्धनात्" (मनु० अ० २। श्लो० १७१) इत्यादौ ।

**नाटकम्**[2]—दृश्यकाव्यात्मको रूपक[3]विशेषः । यथा—मुरारिकवेरनर्घराघवम्, भवभूतेरुत्तररामचरितम्, कालिदासस्याभिज्ञानशाकुन्तलं चेति नाट[4]कानि सन्ति ।

---

१ अत्र, संयोग-ज्ञानाद्यव्याप्यवृत्तिप्रतियोगिकात्यन्ताभावमादाय संयोग-ज्ञानादावव्याप्तिः प्रसज्यते; तद्वारणाय प्रतियोगिवैयधिकरण्यरूपं विशेषणम् ।

२ नाटकस्य षट्त्रिंशल्लक्षणानि (३६) यथा—"भूषणाक्षरसंघातौ शोभोदाहरणं तथा । हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ॥ निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च । दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ॥ विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ । दाक्षिण्यानुनयौ मालाऽर्थापत्तिगर्हणे तथा ॥ पृच्छा प्रसिद्धिः सारूप्यं संक्षेपो गुणकीर्तनम् । लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा" इति ॥ (सा० द०)

३ अत्रोक्तम्—"नाटकमथ प्रकरणम्, भाण—व्यायोग—समवकार—डिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश" इति । (सा० द०) (वाच०) (प्रतापरुद्र० प्रक० ३)

४ नाटकस्वरूपं तु यथा—"नाटकं ख्यातवृत्तं स्यात् पञ्चसंधिसमन्वितम् । विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति नानारसनिरन्तरम् । पञ्चादिका दश-

**नानार्थकत्वम्**—नानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वम् । ( वै० सा० द० ) यथा—हरिपदस्य विष्णु-सिंह-भेक-अंशु-इत्यादिनानार्थकत्वम् । ( स्व० )

**नान्तरीयकत्वम्**[1]—१ [ क ] व्याप्तिः । ( काव्यप्र० टी० कमला० उल्ला० २ ) [ ख ] तदभावे तदभावरूपा व्याप्तिः, इति महेश्वरः । २ तत्सत्तानियतसत्ताकत्वम्, यथा—नान्तरीयकफलजनकत्वमित्यादौ; "प्रतिबन्धकाभावे नान्तरीयका अर्थोत्पत्तिः" इत्यादौ च । ३ मध्येऽवश्यंभावित्वम्, इति केचिदाहुः ।

**नाम**[2]—( कारकार्थान्यार्था सुप् ) १ संज्ञा । यथा—सुरथो नाम[3] राजेत्यत्र नामशब्दार्थः संज्ञा । ( श० प्र० श्लो० ९२। पृ० १२४ ) २ कोपः । यथा—"ममापि नाम दशाननस्य परैरभिभवः" इत्यादौ । ३ उपगमः ( सासूयोङ्गीकारः ) । यथा—"एवं नामास्तु" इत्यादौ । ४ प्राकाश्यम् । यथा—"हिमालयो नाम[4] नगाधिराजः" इत्यादौ । ५ संभावना । यथा—"इह नाम सीता भविष्यति" इत्यादौ । ६ कुत्सनम् । यथा—"को नामायं सवितुरुदये स्वापमेवं विधत्ते" इत्यादौ । ७ विस्मयः । यथा—"अन्धो

---

परास्तत्राङ्गाः परिकीर्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्येनिर्वहणेऽद्भुतम् ॥ चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः । गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्तितम्" इति । ( सा० द० )

१ अत्र व्युत्पत्तिः—'न अन्तरा विना भवः,' ( अन्तरा+छ अव्ययस्य टिलोपः, ततः स्वार्थे क ) इति ।

२ इदं चाव्ययम्, इति विज्ञेयम् ।

३ 'सुरथो नाम राजा' इत्यत्र,—सुरथः सुरथशब्दवाच्यः, तदेकदेशे च शब्दे लुप्ततृतीयाकेन संज्ञार्थकनामेत्यव्ययेन प्राप्त-(स्य ?) संज्ञातादात्म्यान्वयः । तेन 'संज्ञातादात्म्यवत्सुरथशब्दवाच्यो राजा' इत्यर्थः । एवम्—नाम्ना चन्द्रमुखीत्यादावनव्ययेनापि नामपदेनोक्तदिशैवान्वयो द्रष्टव्यः ।

अत्र कश्चिदाह—सुरथो नाम राजेत्यत्र संभाव्यत्वं नामशब्दार्थः; तच्च सुरथेऽन्वितम्, इति । ( श० प्र० श्लो० ९२। पृ० १२४ )

४ अत्र 'हिमालयः प्राकाश्येनातिप्रसिद्धः' इत्यर्थः । ( वाच० )

नाम गिरिमारोहति " इत्यादौ । ८ अलीकम् । यथा–" अहं च भीतो नामावप्लुतः " ( शाकुन्त० ) इत्यादौ ।

**नाम**—१ [ १ ] ( प्रकृतिः ) [ क ] यादृशशब्देन स्वोपस्थाप्ययदर्थमुख्यविशेष्यकान्वयबोधार्थम् स्वोत्तरप्रथमाविभक्तिरपेक्ष्यते, तादृशः शब्द एव तदर्थकं नाम । यथा–घटादयो हि शब्दाः प्रथमान्तत्वेन निश्चिता एव स्वार्थमुख्यविशेष्यकं बोधमुत्पादयन्ति; नत्वन्यथा । ( श० प्र० श्लो० १४। पृ० १६ )

[ ख ] प्रातिपदिकरूपः शब्दविशेषः । यथा–घटोऽस्तीत्यत्र घटशब्दः, इति पाणिनीया आहुः ।

[ ग ] पौराणिकास्तु–वाचकशब्दः । यथा–" हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् । कलौ नास्त्येव, नास्त्येव नास्त्येव गतिरन्यथा " इत्यादौ, इत्याहुः । [ २ ] संज्ञाशब्दः । यथा–अयं देवदत्त इत्यादौ 'देवदत्त' इति शब्दः । ( स्व० ) २ संकेतः । ( कृष्णं० ) ३ विशेष्यम् । यथा–" नामजात्यादियोजनाहीनं ज्ञानं निर्विकल्पम् " ( सि० च० १। पृ० २१ ) इत्यादौ । तत्र ( १ ) प्रकृत्यात्मकं नाम विभजते–नाम चतुर्विधम् । रूढम्, लक्षकम्, योगरूढम्, यौगिकं चेति । केचित्तु,–रूढयौगिकमप्यधिकम् ( पञ्चमम् ) नाम स्वीकुर्वन्ति । ( श० प्र० श्लो० १५। पृ० १६ )

---

१ अत्रार्थे नामशब्दस्य व्युत्पत्तिलक्षणे उच्येते । तत्र व्युत्पत्तिः–' नमति आख्यातार्थे प्रति स्वार्थविशेषणत्वेन ' इति नाम । लक्षणं तु–" सत्त्वप्रधानानि* नामानि " इति । ( निरुक्त० )

२ ' द्वादशेऽहनि पिता नाम कुर्यात् ' इतीश्वरेच्छया, पिता स्वपुत्रस्य ' देवदत्त ' इत्यादि नाम करोति, इति विज्ञेयम् ।

३ यथा–मण्डप-महारजतादि । तद्धि, कदाचिदवयववृत्त्या योगार्थमेव; कदाचिच्च समुदायशक्त्या रूढ्यर्थमेवाभिधत्ते, इत्यपरेषां मतम् । ( श० प्र० श्लो० १५ । पृ० १६ )

---

* तदर्थश्च—लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वम् ( द्रव्यम् ); तथा लक्षणोपपत्तेः । तद्येषु प्रधानं गुणभूता क्रिया नामान्येव तानि । नमन्त्याख्यातशब्दे गुणभावेन, नमन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि ।......तथा चोक्तम्–" शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते । तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः " इति । ( निरुक्ते नैघण्टुक० पूर्वषट्क० अ० १। पा० १। ख० १। दुर्गाचार्यकृतटीका )

( २ ) प्रकारान्तरेण नाम पञ्चविधम्—"उणाद्यन्तं कृदन्तं च तद्धितान्तं समासजम्। शब्दानुकरणं चैव नाम पञ्चविधं स्मृतम्" इति। (वाच०)

( ३ ) नाम शब्दसंस्कारसिद्ध्यर्थं त्रिधा भिद्यते। स्त्रीलिङ्गम्, पुंलिङ्गम्, नपुंसकलिङ्गं चेति। (श० प्र० श्लो० ९३। पृ० ६८)

( ४ ) पतञ्जलिस्तु,—पञ्चविधं नाम, इत्याह। (श० प्र० श्लो० ९४। पृ० ६९)

**नाशः**—[ १ ] ध्वंसवदस्यार्थोऽनुसंधेयः। [ २ ] शाब्दिकास्तु,—अदर्शनानुकूलव्यापारः। स च ध्वंससामग्रीरूपः, व्यवधानाद्यनुकूलव्यापाररूपश्च। यथा—"उत्पतिते काके नष्टं तद्गृहं भवति," "हृतं नष्टं च लभ्यते" इत्यादौ, इत्याहुः। (ल० म० धात्व० पृ० ६)

**नाशवत्त्वम्**—विनाशित्ववदस्यार्थोऽनुसंधेयः।

**नास्तिकः**—[ १ ] [ क ] वेदमार्गमननुरुन्धानः, 'न किंचिदपि पारत्रिकम् (आमुष्मिकम् स्वर्ग-नरक-अपूर्वादिकम्) अस्ति' इति वादी। यथा—चार्वाको बृहस्पतिर्नास्तिकः।

[ ख ] परलोक-तत्साधनादृष्टाद्यभाववादी; तत्साक्षिण ईश्वरस्यासत्त्ववादी च। यथा—"अतिमात्रोज्झितभीरनास्तिकः," (माघः) "नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्" (मनु० अ० ४। श्लो० १६३) इत्यादौ।

नास्तिकः षड्विधः। चार्वाकः, बौद्धाश्चत्वारः (माध्यमिकः, योगा-

---

१ तथा हि—तत्र प्रथमम्,—सुपां मध्ये एकवचनमात्रसाकाङ्क्षम्। यथा—'एक-विंशति' इत्यादिपदम्। द्वितीयम्,—द्विवचनमात्रसाकाङ्क्षम्। यथा—'उभ—द्वि-पुष्पवन्त' इत्यादिपदम्। तृतीयम्,—बहुवचनमात्राकाङ्क्षम्। यथा—'प्राण-त्रि-चतुर्' इत्यादि पदम्, कतिपदं च। चतुर्थम्,—द्विवचनमात्रनिराकाङ्क्षम्। यथा—'उभय' इति पदम्। पञ्चमम्,—वचनत्रयसाकाङ्क्षम्। यथा—'घट-पट' इत्यादिपदम्। (श० प्र० श्लो० ५४। पृ० ६९—७०)

२ तन्मते ध्वंसस्तु तिरोभावावस्था। (ल० म० धात्व० पृ० ६)

३ इदानीं चार्वाकादीनां षण्णां संक्षेपतो मतस्वरूपमुच्यते—तत्र चार्वाक*स्तु प्रत्यक्षमात्रप्र-

---

* तन्मते, 'ब्राह्मणोऽहम्, गौरोहम्, स्थूलोहम् जानामि' इत्यादिसामानाधिकरण्यप्रतीतेः ब्राह्मणत्वादिधर्मवति शरीर एव ज्ञानसुखाद्याश्रयत्वं सिद्ध्यतीति शरीरमेवात्मा। तत्र श्रुतिरपि—"स वा एष पुरुषोऽन्नरसमयः" इति।

चारः, सौत्रान्तिकः, वैभाषिकश्च ), दिगम्बरः ( जैनभेदः ) चेति । ( सि० च० १ । पृ० १२-१३ ) ( वाच० ) अत्र 'योगाचारः' इत्युपलक्षणम्,–मायावादिवेदान्ती (शंकरभारती) अपि नास्तिक एव पर्यवसाने संपद्यते, इति ज्ञेयम् ।

[ २ ] वेदमार्गमनुरुन्धानः; स्वर्गनरकापूर्वाद्यङ्गीकुर्वाणः; परमेश्वरमात्र-

---

माणवादी । शून्यवादी *माध्यमिकः । क्षणिकविज्ञानवादी †योगाचारः । सौत्रान्तिकस्तु 'ज्ञानाकारानुमेयक्षणिकबाह्यार्थ एवात्मा' इति इच्छति । वैभाषिकः क्षणभङ्गुरवादी 'क्षणिकबाह्यार्थ एवात्मा' इति इच्छति । दिगम्बरस्तु,–देहातिरिक्तदेहपरिमाण आत्मा; स च दीपप्रभावत् संकोचविकासशाली, इत्याह । ( सि० च० १। आत्म० पृ० १२-१३ )

१ तन्मते,–सर्वस्य जगतः ( स्वर्ग–नरक–अपूर्व–जीव–ईश्वरादेरपि ) अविद्याकल्पितत्वेन मिथ्यात्वम्; परमात्मा तु नित्यविज्ञानस्वरूपः, ईश्वरभिन्नः, परमार्थतो जीवाद्यभिन्नोऽनिर्वाच्यश्च, इत्यादि प्रतिपाद्यते ।

२ अत्र प्रमाणानि सांख्यप्रवचनभाष्योदाहृतानि पद्मपुराणवचनानि यथा—"मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥ अपार्थं श्रुतिवाक्यानां दर्शयंल्लोकगर्हितम् । कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ॥ सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते । परात्मजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते" इति । ( सांख्य० प्र० भा० १।१। भूमिका० पृ० ६-७ )

---

पृथिव्यप्तेजोवाय्वात्मकचतुर्विधभूतसमुदायमेलने किण्वादिभ्यो मदशक्तिवत् चैतन्यमुपजायते, इति । पारत्रिकस्वर्गनरकपुण्यपापादिकं नास्त्येव; अङ्गनालिङ्गनादिजन्यं सुखमेव पुरुषार्थः; कण्टकादिजन्यं दुःखमेव नरकम्; लोकसिद्धो राजैव परमात्मा, देहोच्छेदो मोक्षः, इत्यादि प्रतिपाद्यते, इति चार्वाकमतम् ।

* तन्मते, सुषुप्त्यव्यवहितोत्तरक्षणे उत्थितस्य 'सुषुप्तावहं नासम्' इत्यनुभवात् शून्यमेवात्मा । अतएव–सर्वमिदं मिथ्यैव, इति शून्यवादः । ( सि० च० १। पृ० १२ ) ( सर्व० बौद्ध० पृ० १४ )

अत्र श्रुतिरपि–"असद्वेदमग्र आसीत्" ( ब्रह्म० उप० पृ० ४ ) इति ।

† तन्मते, क्षणिकविज्ञानम् ( स्वयंवेदनम् ) एकमेव; तदतिरिक्तं बाह्यं ग्राह्यवस्तुजातं नास्ति । तच्च विज्ञानं तु द्विविधम् । प्रवृत्तिविज्ञानम्, आलयविज्ञानं च । तत्र 'अयं घटः' इति ज्ञानम् प्रवृत्तिविज्ञानम् । 'अहम्' इति विज्ञानम् आलयविज्ञानम्; अयमेवात्मा । सुषुप्तावप्यालयविज्ञानधाराऽस्त्येव । सुखादिकमप्यस्यैवाऽऽकारः; तदतिरिक्तवस्तुन एवाप्रसिद्धेः, इति । अत्र श्रुतिः–"अन्योऽन्तरात्मा विज्ञानमयः" ( ब्रह्म० उप० पृ० ३ ) इति । ( सि० च० १। पृ० १२ ) ( सर्व० बौद्ध० पृ० १५-१६ )

स्यासत्त्ववादी च । स च जैमिन्यादिपूर्वमीमांसकः, कपिलादिः सांख्यः, इत्यादिः ।

**नास्तिकता**—[ क ] मिथ्यादृष्टिः । ( अमरः, धीवर्ग० श्लो० ४ ) ( ख ) 'नास्ति परलोकः' इति बुद्धिः । ( मनु० टी० कुल्लूक० ४।१६३ ) यथा—"प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः । तस्मान्नास्तिकता चैव दुराचारश्च जायते" ( भा० शान्ति० अ० १२३ ) इत्यादौ । ( वाच० )

**नास्तिकदर्शनम्**—नास्तिकविरचितं शास्त्रम् । तच्च चार्वाक-बौद्ध-जैमिनि-सांख्य-इत्यादिदर्शनम् ।

**निःश्रेयसम्**—१ [ क ] जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणम् । [ ख ] शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः । ( वात्स्या० १।१।२ )

[ ग ] तदभावे संयोगाभावोऽप्रादुर्भावश्च मोक्षः । (वै० ५।२।१८ )

[ घ ] अशेषविशेषगुणध्वंसावधिकदुःखप्रागभावः । (वै० उ० १।१।४)

---

१ अत्रोच्यते—" नास्तिवादार्थशास्त्रं हि धर्मविद्वेषणं परम् " इति । हरिवं० अ० २८ )

२ निःश्रेयसं च, [ क ] शास्त्रश्रवणानन्तरं पदार्थतत्त्वज्ञानेनात्मसाक्षात्कारानन्तरमप्रारब्धकर्मणां ज्ञानात्, प्रारब्धकर्मणां भोगाच्च क्षये, उत्पद्यत इति बोध्यम् । [ ख ] द्रव्यादिषण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं निःश्रेयसहेतुः, ( प्रशस्त० पृ० १ )

३ तदर्थश्च—तदभावे (तस्यादृष्टस्याभावे सति, प्रारब्धेतरादृष्टानामात्मसाक्षात्कारेण, प्रारब्धानां च भोगेन क्षये सतीति यावत् ), संयोगाभावः ( देहप्रवाहसंबन्धस्य विच्छेदः ), तदनन्तरं चाप्रादुर्भावः ( अर्थात् दुःखस्यानुत्पत्तिः ); देहरूपस्यादृष्टस्य च कारणस्य विरहात्, इति तदानीमेव मोक्षोऽपवर्गः संभवतीति नापवर्गस्य शशविषाणसमानता, इति भावः । ( वै० वि० ५।२।१८ )

४ अयं ( अपवर्गः ) कस्माद्भवतीति तदाह—" दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः "* । ( गौ० १।१।२ ) इदमत्राकूतम्—योगबलेनात्मतत्त्वसाक्षात्कारे सति, तेन च सवासनमिथ्याज्ञाने ध्वस्ते, तन्निबन्धनानां रागद्वेषमोहानां दो-

---

* अयमाशयः—यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयान्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति, जन्मापाये दुःखमपैति, दुःखापाये चात्यन्तिकोऽपवर्गो निःश्रेयसम्, इति । ( वात्स्या० १।१।२)

[ङ] आत्यन्तिकी दुःखनिवृत्तिः । ( वै० उ० १।१।४ ) ( गौ० वृ० १।१।२ ) (सर्व० अक्ष० पृ० ११६) ( दि० १ ) ( त० दी० ) ( त० कौ० )

[च] स्वसमानाधिकरणदुःखासमानकालीनदुःखध्वंसः । ( त० प्र० ) ( गौ० वृ० १।१।२२ ) ( म० प्र० १।४ ) ( त० कौ० पृ० २२ )

[छ] एकविंशतिभेदभिन्नस्य दुःखस्यात्यन्तिकी निवृत्तिः । ( त० भा० प्रमेय० पृ० ४१ )

[ज] आत्यन्तिको दुःखाभावः । ( न्या० वा० पृ० ४ )

---

षाणामपायात्प्रवृत्तेरपाये, तन्निबन्धनस्य जन्मनोऽपाये, तन्निबन्धस्य दुःखस्यापायः, इति तावद्वस्तुगतिः । ( वै० उ० ५।२।१८ )

१ अत्रात्यन्तिकत्वं च [क] समानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । [ख] युगपदुत्पन्नसमानाधिकरणसर्वात्मविशेषगुणध्वंससमानकालीनत्वम् । ( वै० उ० १।१।४ ) [ग] स्वसमानाधिकरणदुःखासमानकालीनत्वम्* । ( दि० १ ) ( त० दी० ) [घ] निवर्त्यसजातीयस्य (दुःखस्य) पुनस्तत्रानुत्पादः । ( सर्व० अक्ष० पृ० ११६ )

२ अत्र दुःखध्वंसो दुःखानुत्पत्तिः; इत्यर्थः, इति वैशेषिकाः । ( त० व० )

३ एकविंशतिभेदास्तु,—शरीरम् †षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, ( षड्विधानि प्रत्यक्षाणि ), सुखम्, दुःखं चेति । ( त० भा० प्रमेय० पृ० ४१ ) ( सि० च० पृ० ३७ )

४ अत्र वार्तिककारा आहुः—श्रेयः पुनः सुखम्, अहितनिवृत्तिश्च । तच्छ्रेयो भिद्यमानं द्वेधा व्यवतिष्ठते दृष्टादृष्टभेदेन । दृष्टं सुखम्; अदृष्टमहितनिवृत्तिः । अहितनिवृत्तिरप्यात्यन्तिकी, अनात्यन्तिकी च । अनात्यन्तिकी कण्टकादेर्दुःखसाधनस्य परिहारेण । आत्यन्तिकी पुनरेकविंशतिभेदभिन्नदुःखहान्या । एकविंशतिभेदभिन्नं पुनर्दुःखम्—शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखम्, दुःखं चेति । तत्र शरीरम् दुःखायतनत्वाद्दुःखम्; इन्द्रियाणि, विषया बुद्धयश्च तत्साधनभावात्; सुखं दुःखानुषङ्गात्; दुःखम् स्वरूपतः, इति । तस्य हानिर्धर्माधर्मसाधनपरित्यागेन । अनुत्पन्नयोर्धर्माधर्मयोरनुत्पादेन; उत्पन्नयोश्चोपभोगात्प्रक्षयेण, इति । ( न्या० वा० पृ० २ ) ( त० भा० प्रमेय० पृ० ४१ )

---

* अत्र, संसारकालीनस्य दुःखध्वंसस्य मोक्षत्ववारणाय कालीनान्तं दुःखनिवृत्तिविशेषणम् । अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय स्वसमानाधिकरणेति दुःखविशेषणं बोध्यम् । ( त० कौ० पृ० २२ ) ( म० प्र० १। पृ० ४ )

† अत्र—शरीरादीनां दुःखसाधनत्वाद्दुःखत्वमुपचर्यते । ( त० भा० प्रमेय० पृ० ४१ )

[ ङ ] चरमदुःखध्वंसः । ( त० दी० ) यथा– "तत्त्वज्ञानान्निःश्रेयसाधिगमः" ( गौ० १।१।१ ) इत्यादौ हिरण्यगर्भरुद्रादियोग्यजीवनां मोक्षः ।

निःश्रेयसं तावद्द्विविधम् । परम्, अपरं च । तत्रापरम् जीवन्मुक्तिर्लक्षणं तत्त्वज्ञानानन्तरमेव; तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य, प्रारब्धं कर्मोपभुञ्जानस्य । परं निःश्रेयसं तु क्रमेण भवति । (गौ० वृ० १।१।१) वार्तिककारास्तु,– निःश्रेयसं पुनर्दृष्टादृष्टभेदात्

१ द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां *तत्त्वज्ञानं निःश्रेयसहेतुः† । (प्रशस्त० १।१। पृ० ५ )

२ तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यमिति । सर्वासु विद्यासु ( चतसृषु ) तत्त्वज्ञानमस्ति, निःश्रेयसाधिगमश्चेति । तथा हि–(१) त्रय्यां तावत्–तत्त्वज्ञानम् अग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानम्; निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः । (२) वार्तायां तु–भूम्यादिपरिज्ञानं तत्त्वज्ञानम्; कृष्याद्यधिगमश्च निःश्रेयसम् । (३) दण्डनीत्याम्–सामदानदण्डभेदानां यथाकालं यथादेशं यथाशक्ति विनियोगस्तत्त्वज्ञानम्; निःश्रेयसं पृथिवीजयः, इति । (४) इह तु अध्यात्मविद्यायाम् (आन्वीक्षिक्याम् )–आत्मज्ञानं तत्त्वज्ञानम्; निःश्रेयसाधिगमोऽपवर्गप्राप्तिः, इति । ( न्या० वा० १। पृ० २३ )

३ उभयविधनिःश्रेयससाधारणलक्षणं तु,—[ क ] सवासनमिथ्याज्ञानध्वंसत्वम् । [ ख ] तत्त्वसाक्षात्कारप्रागभावविरहत्वम् । [ ग ] योगजधर्मप्रागभावविरहत्वम् । ( न्या० सि० दी० पृ० २९ )

४ तथा चोक्तम्–"जीवन्नेव हि विद्वान् संहर्षायासाभ्यां विमुच्यते" इति । ( न्या० वा० १। पृ० २४ )

५ तत्र च क्रमस्तावत्—तत्त्वज्ञानेन मिथ्याज्ञाननाशः, मिथ्याज्ञाननाशे दोषनाशः, दोषनाशे प्रवृत्तिनाशः, प्रवृत्तिनाशे जन्मनाशः, जन्मनाशे दुःखनाशः, इति । ( गौ० वृ० १। १। २)

* अत्र—पदार्थतत्त्वज्ञानस्यात्मतत्त्वज्ञानद्वारा निःश्रेयसं प्रति साधनत्वमुच्यते । ( त० कौ० पृ० २१ )

† अत्र विप्रतिपत्तिः—(१) कर्मज्ञानयोस्तुल्यवत्समुच्चयेनापवर्गकारणत्वमित्येके । (२) तत्त्वज्ञानद्वारा कर्मणां तत्र कारणत्वम्. तथा च–न तुल्यवत्समुच्चय इत्याचार्याः ।

तत्र समुच्चयप्रतिपादिका श्रुतिः–" ततो विद्यां चाविद्यां ( कर्म ) च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते " इति । आचार्यमते तु श्रुतिः–" तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय " इति । ( न्या० सि० दी० पृ० २४ )

द्वेधा भवति। तत्र—प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं दृष्टम्। न हि, कश्चित्पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति। एवं च कृत्वा—सर्वे पदार्था ज्ञेयतयाऽपेक्ष्यन्त इति। परं तु निःश्रेयसम् आत्मादेस्तत्त्वज्ञानाद्भवति दृष्टम्; प्रमाणादिपरिज्ञानात्। अदृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानात् इति न प्रमाणमस्ति, इत्याहुः। (न्या० वा० १। पृ० १२)

इदानीं मतभेदेन निःश्रेयसभेदा उच्यन्ते—स्वातन्त्र्यं मृत्युर्वा मोक्षः, इति चार्वाका आहुः। आत्मोच्छेदो मोक्षः, इति माध्यमिकाः। धर्मिनिवृत्तौ निर्मलज्ञानोदयो महोदयः, इति विज्ञानवादिनः। आवरणमुक्तिर्मुक्तिः, इत्यार्हताः। ब्रह्मांशिकजीवस्याविद्याप्रभवमिथ्याज्ञाननिवृत्तौ स्वस्वरूपाधिगमः, इति मायावादिनोऽद्वैतिनः शांकरमतानुयायिनः। आनन्दमयपरमात्मनि जीवात्मलयो[1] मुक्तिः, इति त्रिदण्डिनः। जीवस्य लिङ्गशरीरापगमो मोक्षः, इति भास्करीयाः। सर्वकर्तृत्वमेकं विहाय, वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्त्वे सति, भगवद्याथात्म्यानुभवो मोक्षः, इति विशिष्टाद्वैतवादिनो रामानुजीयाः। जगत्कर्तृत्व—लक्ष्मीपतित्व—श्रीवत्स—वर्जं भगवज्ज्ञानायत्तनिर्दुःखपूर्णसुखं[2] मोक्षः, इति द्वैतवादिनो माध्वाः। द्विभुजकृष्णेन सह, स्वांशभूतानां जीवानां गोलोके लीलानुभवः, इति शुद्धाद्वैतवादिनो वल्लभीयाः। पारमैश्वर्यप्राप्तिः, इति पाशुपतशास्त्रज्ञा नकुलीशाचार्यादयो माहेश्वराः। चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनम्, इति कापालिकाः। पूर्णात्मतालाभः, इति प्रत्यभिज्ञावादिनोऽभिनवगुप्ताचार्याः। पारदरसपानेन देहस्थैर्ये, जीवन्मुक्तिरेव मोक्षः, इति रसेश्वरवादिनो गोविन्दभगवत्पादाचार्यादयः। आत्यन्तिकी दुःखनिवृत्तिः, इति

---

१ तत्र लयश्च,—[ क ] लिङ्गशरीरापगमः। लिङ्गशरीरं च एकादशेन्द्रियाणि, महाभूतानि पञ्च, सूक्ष्ममात्रयाऽवस्थितानि जीवात्मसुखदुःखावच्छेदकानि। (कि० व० पृ० ९) [ ख ] एकादशेन्द्रियपञ्चभूतरूपस्य लिङ्गशरीरस्य जीवात्मन्यपगमो विश्लेषः; स एव परे ब्रह्मणि जीवस्य लय इत्युच्यते। (न्या० सि० दी० पृ० २६)

२ अत्र श्रुतिः—"आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्" इति। (म० प्र० ४) स च मोक्षस्तन्मते—सारूप्य—सालोक्य—सामीप्य—सायुज्य—भेदाच्चतुर्विधः।

गौतमीयाः ( नैयायिकाः ) । आत्यन्तिकदुरितनिवृत्तिः, इति न्यायैकदेशिनः । दुःखात्यन्ताभाव एव मुक्तिः, इति प्राञ्चः । दुःखनिवृत्तिः ( दुःखानुत्पादः ) इति कणादादयो वैशेषिकाः । स्वर्गादिः, इति मीमांसकाः । तत्र—दुःखसाधनशरीरनाशे, नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः, इति तदेकदेशिनो भट्टसर्वज्ञादयस्तौतातिकाः । तत्रापि नित्यसुखसाक्षात्कारः, इति भट्टाः । आत्यन्तिकदुःखप्रागभावपरिपालनम् मोक्षः, इति प्राभाकराः । 'परा, पश्यन्ती, मध्यमा, वैखरी, इति वाणीचतुष्टये प्रथमायाः पराख्याया ब्रह्मरूपाया वाण्या दर्शनम्, इति पाणिनीयाः । प्रकृत्युपरमे ( प्रकृतितद्विकारोपधानाद्विविलये ) पुरुषस्य स्वरूपेणावस्थानम्; अहंकारनिवृत्तावौदासीन्यम्; आत्यन्तिकदुःखत्रयविगमो वा मुक्तिः, इति सांख्याः । पुरुषस्य निर्लेपस्य कैवल्येनावस्थानं कैवल्यम्; "पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम्; स्वरूपप्रतिष्ठा वा; चिच्छक्तिः," मोक्षः, इति पातञ्जलाः । ऊर्ध्वगतिः, इति केचित् । निरुपप्लवा चित्तसंततिः, इति परे । अग्रिमचित्तानुत्पादे पूर्वचित्तनिवृत्तिः, इत्यपरे । आत्महानिः, इत्येके । चित्तानुत्पादनं विरोधं (?) वाऽपवर्गः, इत्यन्ये आहुः, इति । ( न्या० वा० १।१।२२ पृ० ८८ ) ( सर्व० ) ( सि० च० पृ० ३७ ) ( न्या० सि० दी० पृ० २९ ) ( वै० वि० १।१।४। पृ० १६–१७ ) ( पात० सू० ४।३४ ) २ मङ्गलम् । ३ विज्ञानम् । ४ भक्तिः । ५ अनुभावः । यथा—"पण्डितो ह्यर्थकृच्छ्रेषु निःश्रेयसकरं वचः," (भार० स० श्लो० १६९ ) "तपो विद्या हि विप्रस्य निःश्रेयसकरं परम्" । ( मनु० अ० १२। श्लो० १०४ ) इत्यादौ । ( वाच० )

**निःश्वासः**—[ क ] प्राणवायोर्व्यापारविशेषः । ( गौ० वृ० ३।३० ) यथा—"निःश्वस्य मत्करधृतं निजमम्बरान्तमाकृष्य हन्त चलितैव कथं प्रिया मे" ( मुकुं० भाण ) इत्यादौ ।

[ ख ] प्राणवायोर्नासया बहिर्निःसरणम् । यथा—"वृषलीफेनपीतस्य निःश्वासोपहतस्य च" ( मनु० अ० ३। श्लो० १९ ) इत्यादौ ।

**निगमः**—१ न्यायशास्त्रम् । २ तन्त्रविशेषः । ३ वेदः । यथा—"निग-

मकल्पतरोर्गलितं फलम्, " ( भाग० १।१।३ ) " शतं जीव शरदो वर्धमान " इत्यपि निगमो भवति ( यास्कनिरुक्त० ) इत्यादौ ।

**निगमनम्**—( न्यायावयवः ) [क] हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् । ( गौ० १।१।३९ ) साधर्म्योक्ते वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते—'तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः' इति निगमनम् । निगम्यन्तेऽनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्र, इति निगमनम् ।

---

१ अत्र व्युत्पत्तिः—'निगम्यन्तेऽनेन, प्रतिज्ञादय एकार्थेन संबन्ध्यन्ते' इति । ( न्या० वा० १। पृ० १८)

लक्षणं तु निगमनत्वमेव । तच्च [ क ] अवयवार्थविशेष्यक-*स्वार्थबोधजनकन्यायावयवत्वम् † । ( दीधि० २। पृ० १७८ ) [ ख ] एतत् 'तस्माद्वह्निमान्' इति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० २। पृ० २४ )

निगमनप्रयोजनं च,—[ क ] अबाधितत्वासत्प्रतिपक्षितत्वप्रतिपत्तिः‡ । सा च तद्धटकहेतुपदात्संपद्यते । [ ख ] अबाधितत्वादिकं निगमनस्य प्रयोजनम् । ( त० दी० २। पृ० २२ ) [ ग ] उपनयानन्तरं निगमनम् । न च, व्याप्तपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्याप्तेः किं तेन, इति वाच्यम्; अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानात् । (चि० २। पृ० ८२ )

अत्र प्राञ्च आहुः—'तथा चायम्' इत्युपनयस्य, 'तस्मात्तथा' इति निगमनस्य शरीरत्वम्' इति । ( त० कौ० )

अत्रेदं बोध्यम्–[ १ ] निगमनस्य त्वन्वयि—व्यतिरेकि—भेदान्न भेदः । [ २ ] व्यतिरेकिणि तु 'तस्मान्न तथा' इत्येवाकारः§ इत्यपरे । ( गौ० वृ० १। ३८ )

२ तदर्थश्च–हेतोः ( व्याप्तिविशिष्टपक्षधर्मस्य ), अपदेशः ( कथनम् ), प्रतिज्ञायाः ( प्रतिज्ञार्थस्य साध्यविशिष्टपक्षस्य ), वचनम्, इति । ( गौ० वृ० १। ३८ )

---

* हेत्वर्थश्च प्रतिज्ञार्थे न विशेषणत्वेनान्वेति; किंतु–तदेकदेशार्थे, इति । ( दीधि० २। अवयव० पृ० १७८ ) अतः, न हेतावतिव्याप्तिरिति भावः ।

† अवयवजन्यप्रतीतिविशेष्यविशेष्यकस्वार्थप्रकारकबोधजनकावयवत्वमित्यर्थः । (ग० २।हेतु०)

‡ उत्तरकालमबाधितासत्प्रतिपक्षितत्वविषयकबोधो मानसो द्रष्टव्यः । (नील० २। पृ० २२) ( ग० अवयव० )

§ अथोच्यते—व्यतिरेकिणि तु प्रतिज्ञाहेतू तुल्यावेव; उदाहरणोपनयनिगमनानि तु भिद्यन्ते । यथा–' जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्' इत्यत्र 'यत् सात्मकं न भवति, तत् प्राणादिमन्न भवति यथा घटः' । 'न चेदं जीवच्छरीरं प्राणादिमन्न भवति' । 'तस्मान्न तथा' इति । ( त० कौ० २। पृ० १३ )

निगम्यन्ते समर्थ्यन्ते संबन्ध्यन्ते । तत्र साधर्म्योक्ते तावद्धेतौ वाक्यम्–'अनित्यः शब्दः' इति प्रतिज्ञा; 'उत्पत्तिधर्मकत्वात्' इति हेतुः; 'उत्पत्तिधर्मकं स्थाल्यादिद्रव्यमनित्यम्' इत्युदाहरणम्; 'तथा चोत्पत्तिधर्मकः शब्दः' इत्युपनयः; 'तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः' इति निगमनम् । वैधर्म्योक्तेऽपि–'अनित्यः शब्दः,' 'उत्पत्तिधर्मकत्वात्,' 'अनुत्पत्तिधर्मकमात्मादिद्रव्यम् दृष्टम्,' 'न च तथाऽनुत्पत्तिधर्मकः शब्दः,' 'तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्दः' इति ।........सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनम्, इति । ( वात्स्या० १।१।३९ )

[ ख ] व्याप्तिविशिष्टपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः; व्याप्तपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टबोधकः; तादृशसाध्यबोधको वा, न्यायावयवः । ( गौ० वृ० १।३८ )

[ ग ] अनुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकं वाक्यम् । ( चि० अव० २। पृ० ८२ )

[ घ ] पक्षे साध्योपसंहारः । ( त० भा० पृ० ४३ )

[ ङ ] हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनम् । ( त० दी० २। पृ० २२ )

[ च ] पक्षे साध्यस्याबाधितत्वप्रतिपादकं वचनम् । ( सि० च० २। पृ० २९ )

[ छ ] अबाधितत्वासत्प्रतिपक्षितत्वतात्पर्यकं वाक्यम् । ( त० कौ० २। पृ० १३ )

[ ज ] लिङ्गसंबन्धप्रयुक्तनिश्चितसाध्यवत्त्ववचनम् । यथा–पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले ( पर्वतो वह्निमान् धूमादित्यादौ )–'तस्मादग्निमान्' इति, 'तस्मात्तथा' इति वा वाक्यं निगमनम् । ( त० भा० पृ० ४३ ) ( त० कौ० २। पृ० १३ ) ( त० सं० )

---

१ हेतुज्ञानज्ञाप्यत्वविशिष्टसाध्यवद्विषयकबोधजनकवाक्यमित्यर्थः । ( नील० २। पृ० २२ )

२ अत्र, व्याप्तिधर्मपक्षताविशिष्टधूमस्तत्पदार्थः, ( ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः ) । तथा च–'व्याप्तिपक्षधर्मताविशिष्टधूमज्ञानज्ञाप्यवह्निमान्पर्वतः, इति बोधः । ( वाक्य० २। पृ० १५ )

[ ङ ] केचित्तु,—प्रतिकूलप्रमाणाभावसूचकं प्रतिज्ञोपसंहारवचनम्। तच्च 'तस्मात्तथा' इति वाक्यम्, इत्याहुः। (वाच०)

**निग्रहः**—१ [ क ] पराजयप्राप्तिः। (वात्स्या० १।२।१९) यथा—"स्यात्स्वामिनो निग्रहः" (मुद्रारा० नाट० ५।१०) इत्यादौ।

[ ख ] खलीकारः। (गौ० वृ० १।५९)

[ ग ] पराहंकारनिराकरणम्, इति केचिदाहुः। २ भर्त्सनम्। ३ सीमा। ४ बन्धनम्। ५ अनुग्रहाभावः। ६ चिकित्सा। ७ निषिद्धे प्रवृत्तस्य तिरस्कारः। ८ मारणे प्रवृत्तिवारणाय निरोधः। ९ निरोधरूपयोगे-नाभ्यासवैराग्याभ्यां मनसो निरोधः। यथायोग्यमुदाहरणे यथा—"निग्रहा-नुग्रहे शक्तः प्रभुरित्यभिधीयते," "तस्याहं निग्रहं मन्ये वायोरिव सुदु-ष्करम्" (गीता० अ० ६। श्लो० ३४) इति। (वाच०)

**निग्रहस्थानम्**—[ क ] वादिनोऽपजयहेतुः शब्दप्रयोगः। (त० दी० पृ० ४५)

[ ख ] कथायां पराजयहेतुर्वाक्यम्। (त० प्र० पृ० २४)

[ ग ] हेत्वाभासप्रयोगः। (गौ० वृ० १।१।१) (त० भा० पृ० ५१) (सर्व० अक्ष० पृ० ११४) यथा—"विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्" (गौ० १।२।६०) इत्यादौ।

---

१ अत्रोच्यते—"असकृदनुचिन्तितानामभ्याहततरनिजोपदेशानाम्। प्रामाण्यपरमसीम्नां नि-गमनमिदमेव निखिलनिगमानाम्" इति। (वेदान्त०) (वाच०)

२ समुदायश्लोकस्तु—"साध्ये निश्चितमन्वयेन घटितं बिभ्रत्सपक्षे स्थितिं व्यावृत्तं च वि-पक्षतो भवति यत्तत्साधनं सिद्धये। यत्साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धं च यत्त-स्याङ्गीकरणेन वादिन इव स्यात्स्वामिनो निग्रहः" इति। (मुद्राराक्षसम्, अ० ५। श्लो० १०)

३ निग्रहस्य खलीकारस्य स्थानं ज्ञापकमित्यर्थः।

तल्लक्षणं च [ क ] उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वम्। [ ख ] प्रतिज्ञाहान्याद्यन्यतम-त्वं वा, इत्यपि वदन्ति। (गौ० वृ० १।५९)

४ तदर्थश्च—[ क ] विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः, अप्रतिपत्तिः प्रकृताज्ञानम्। तथा च—विप्रति-पत्त्यप्रतिपत्ति—एतदन्यतरोन्नायकधर्मवत्त्वम्। (गौ० वृ० १।५८)

[ ख ] विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति।

निग्रहस्थानानि द्वाविंशतिधा । प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासंन्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अप्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासश्च । (गौ० ५।२।१) (त० भा० पृ० ५१) (त० दी० पृ० ४५) (प्र० प्र० पृ० २९)

**नित्यत्वम्**—१ [१] प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । (त० प्र०१। पृ०१८) (त०प्र०पृ० ४६) (वाक्य० १। पृ० ३) यथा—परमाण्वाकाशादीनां नित्यत्वम् । यथा वा—ईश्वरस्य तत्साक्षात्कारस्य च नित्यत्वम् । यथा वा—"नित्यः संसर्गाभावोऽत्यन्ताभावः" (न्या० म० १। पृ० ११) इत्यादौ [२] [क] ध्वंसाप्रतियोगित्वम् । (त० दी० १। पृ० ७)

[ख] प्रध्वंसवत्त्वविरहः । यथा—केषांचिन्मते ध्वंसस्य नित्यत्वम् । (स्व० )
२ अविच्छिन्नपरम्पराकत्वम् । यथा—शाब्दिकमते वर्णानां नित्यत्वम् । (वाच०) ३ कर्मज्ञास्तु,—यदकरणे प्रत्यवायः, तत्त्वं नित्यत्वम् । ( न्या०

---

निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषये न प्रारम्भः । परेण स्थापितं वा न प्रतिषेधति, प्रतिषेधं वा नोद्धरति । (वात्स्या० १। २। १९)

१ निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते । (वात्स्या० ५। २। १ अवतरणम् )

२ अत्र ध्वंसेऽतिव्याप्तिवारणाय सत्यन्तम् । प्रागभावेऽतिव्याप्तिवारणाय विशेष्यदलस्य निवेशः । (त० प्र० १। पृ० १८)

३ उत्पत्ति–नाश–शून्यत्वम्, इति समुदितार्थः ।

४ विहिततत्कालीनाकरणे इत्यर्थः । तेन, अन्यदा सन्ध्यावन्दनाकरणेऽपि न क्षतिः । (त० प्र० ख० ४। पृ० १०३)

५ प्रत्यवाय–*साधनीभूताभावप्रतियोगित्वमित्यर्थः । नियतनिमित्तकत्वमिति यावत् । इदं च कर्मणां नित्यत्वमिति ज्ञेयम् । (त० प्र० ख० ४। पृ० १०३) (म० प्र०) (ल० म० )

---

* [क] तथा चोक्तं मनुना—"अकुर्वन् विहितं कर्म प्रायश्चित्तीयते नरः" इति । [ख] "नित्यं १ सदा २ यावदायु–३र्न कदाचिदतिक्रमेत् ४। उपेत्यातिक्रमे दोषश्रुतेरत्यागदर्शनात् ॥ फलाश्रुतेर्वीप्सया च तन्नित्यमिह कीर्तितम्" इति । (ति० त०) (वाच०)

म० ४।पृ०२६)यथा–"अहरहः संध्यामुपासीत" इत्यादौ संध्योपासनाय नित्यत्वम्, इत्याहुः । ( ल० म० ) ४ नैरन्तर्यमिति काव्यज्ञा आहुः

**नित्यसमः**—( जातिः ) [ क ] नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः । ( गौ० ५।१।३५ ) अनित्यः शब्द इति प्रतिज्ञायते । तदनित्यत्वं किं शब्दे नित्यमथानित्यम् ? । यदि तावत्सदा भवति; धर्मस्य सदाभावाद्धर्मिणोऽपि सदाभाव इति नित्यः शब्द इति । अथ न सर्वदा भवति । अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः । ( वात्स्या० ५।१।३५ )

[ ख ] धर्मस्य नित्यत्वानित्यत्वविकल्पाद्धर्मिणि नित्यत्वसाधनम् । यथा–शब्दस्य यदनित्यत्वं भवद्भिरुच्यते, तन्नित्यमनित्यं वा? । यदि नित्यम्; तदा शब्दवृत्तेरेव तस्य सदातनत्वाच्छब्दस्यापि तथात्वमागतम् । अथानित्यम्; तदा शब्दे कदाचिदनित्यत्वाभावोऽस्तीति नित्य एव शब्दः, इत्युभयथापि शब्दस्य नित्यत्वमिति । ( नील० पृ० ४५ )

[ ग ] धर्मस्य तदतद्रूपविकल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् । ( तार्किकरक्षा. )

---

१ अत्रोच्यते—" नित्यं, नैमित्तिकं चैव नित्यनैमित्तिकं तथा । गृहस्थस्य त्रिधा कर्म तन्निशामय पुत्रक ।। पञ्चयज्ञादिकं नित्यं यदेतत्कथितं तव । नैमित्तिकं तथा चान्यत् पुत्रजन्मक्रियादिकम् ।। नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादि पण्डितैः " इति । ( श्रा० त० ( मार्क० पु० ) ( वाच० )

२ अयं च, आचार्यमते बाधदेशनाऽऽभासः, सत्प्रतिपक्षदेशनाऽऽभासश्च भवति । वृत्तिकारमते तु विरुद्धदेशनाऽऽभासो भवति, इति विज्ञेयम् । ( गौ० वृ० ५। ३५ )

३ तदर्थश्च—[ १ ] अनित्यस्य भावोऽनित्यत्वम्, तस्य नित्यं सर्वकालं स्वीकारे 'अनित्ये शब्दे नित्यत्वं स्यात्' इत्यापादनं नित्यसमा । अयमाशयः—अनित्यत्वस्य नित्यमस्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वं न, तस्यापि नित्यत्वापत्तिः । नहि, दण्डाभावदशायां 'दण्डी' इत्युच्यते । अतोऽनित्यत्वस्य नित्यमेव स्वीकार इत्यभ्युपगन्तव्यम् । तथा च–शब्दस्यापि नित्यत्वापत्तिः, इत्याचार्याः । [ २ ] वृत्तिकारास्तु,–अनित्यस्य भावो धर्मस्तस्य नित्यमभ्युपगमेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात् । यथा–क्षितिः सकर्तृकेत्यत्र अनित्यक्षितेर्धर्मः सकर्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा ? । न चेत्; तदा साध्याभावादंशतो बाधः । अथ—क्षितौ नित्यमेव सकर्तृकत्वमुपेयते; तदा क्षितेर्नित्यत्वं स्यात्, इत्याहुः । ( गौ० वृ० ५। ३५ )

तद्द्विविधम् । साधारणम्, असाधारणं च । तत्राद्यं स्वव्याघातकम् । द्वितीयं त्रिविधम् । युक्ताङ्गहीनत्वम्, अयुक्ताङ्गाधिकत्वम्, अविषयवृत्तित्वं चेति । ( सर्व० पूर्ण० पृ० ७०–७१ )

**नित्यसमासः**–( समासः ) [ क ] स्वान्तर्गतनामसु विभक्तिमात्रप्रक्षेपेण यल्लभ्यार्थस्याबोधः, सः । यथा–कृष्णसर्प–निर्मक्षिक–असुर–इत्यादिः । ( श० प्र० श्लो० ३२ । पृ० ४० तत्र जयादित्यः )

[ ख ] शाब्दिकास्तु,–समस्यमानयावत्पदरहितविग्रहवाक्यसूचितः समासविशेषः, इत्याहुः । ( वाच० )

**निदर्शनम्**—[ १ ] उदाहरणवदस्यार्थोऽनुसंधेयः । ( प्रशस्त० २। पृ० २८ ) [ २ ] दृष्टान्तवदस्यार्थोऽनुसंधेयः ।

**निदर्शनाभासः**—उदाहरणत्वेन भासमानः पदार्थः । (स्त्र०) यथा–नित्यः शब्दोऽमूर्तत्वात्; यत् अमूर्तं तत् नित्यं दृष्टम् । यथा–'परमाणुः, यथा–स्थाली, यथा–तमः', 'अम्बरवत् यत् द्रव्यं तत् क्रियावद्दृष्टम्' इति । ( प्रशस्त० २। पृ० ३० )

**निदिध्यासनम्**—[ क ] श्रुतस्यार्थस्य नैरन्तर्येण दीर्घकालमनुसंधानम् । ( त० प्र० १। पृ० ८ ) यथा–" आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो म-

---

१ अत्रोक्तं जयादित्येन—" विभक्तिमात्रप्रक्षेपान्निजान्तर्गतनामसु । स्वार्थस्याबोधबोधाभ्यां नित्यानित्यौ समासकौ " इति । (श० प्र० श्लो० ३२। पृ० ४० )

२ अत्र, कृष्णः सर्पः, मक्षिकाया निः, न सुरः, इत्यादितस्तल्लभ्यस्य वैजात्यादेरग्रहात् ( लक्षणसमन्वयः ) । ( श० प्र० श्लो० ३२ । पृ० ४० )

३ यथोक्तं मायावादिभिः—"आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितम् । घटादिवच्च संघातैर्जातावेतन्निदर्शनम्" इति । अत्र भाष्यम्–"यदा मन्दबुद्धिप्रतिपिपादयिषया श्रुत्यात्मनो जातिरुच्यते जीवादीनां तदा जातावुपगम्यमानायामेतन्निदर्शनं दृष्टान्तो यथोदितं आकाशवदित्यादीनि" इति । शब्दार्थचि० ) (वाच० )

४ तल्लक्षणादि यथा—" निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् । तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते " इति; " ताभ्यां* निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य यत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते " इति च । ( वाच० )

---

* ताभ्यां श्रवणमननाभ्याम् । ( वाच० )

न्तव्यो निदिध्यासितव्यः '' ( श्रुतिः ) इत्यादौ । ( नील० पृ० ९० )।
[ ख ] मतेऽर्थे सजातीयज्ञानधाराकरणम् । ( प० च० पृ० २० )
[ ग ] विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणम्, इति केचिदाहुः । ( नील० )

**निद्रा**—[ १ ] [ क ] मेध्यानाडीसंयोगः ।
[ ख ] योगजधर्मानुगृहीतस्य मनसो निरिन्द्रियप्रदेशावस्थानम् । [ २ ] योगाचार्यास्तु,—अभावप्रत्ययालम्बनो वृत्तिविशेषः, इत्याहुः । [ ३ ] सुषुप्तिः, इति वेदान्तिनः ।

**निन्दा**—[ १ ] दोषवत्तया ख्यापनम् । यथा—'शुक्लयजुर्याज्ञवल्क्यप्रणीतत्वात्पौरुषेयम्' इति निन्दा । [ २ ] आरोप्यमाणदोषकथनमिति प्रामाणिकाः । यथा—''वेदनिन्दारतान् मर्त्यान् देवनिन्दारतांस्तथा । द्विजनिन्दारतांश्चैव मनसाऽपि न चिन्तयेत्'' ( कूर्मपु० अ० १९ ) इत्यादौ । ( वाच० )

**निन्दा**—( अर्थवादः ) [ क ] अनिष्टफलवादः । वर्जनार्थं 'निन्दितं न समाचरेत्' इति । ( वात्स्या० २।१।६३ )
[ ख ] अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं वाक्यम् । यथा—''स एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो, य एतेनानिष्ट्वाथान्येन यजते ( सः ) गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा'' ( श्रुतिः ) इत्येवमादि । ( गौ० वृ० २।६४ ) ( वात्स्या० २।१।६३ )
[ ग ] निषेध्यनिन्दापरं वाक्यम् । यथा—'' बर्हिषि रजतं न देयम् '' इत्यादिनिषेधस्य शेषः ''सोऽरोदीत्[3],'' (तैत्ति० सं० १।५।१) ''असु-

१ अत्र सूत्रम्—''अभावप्रत्ययालम्बना वृत्तिर्निद्रा'' ( पात० सू० १।१० ) विवरणं च—जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमः; तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा, इति । ( वाच० )

२ निन्दार्थवादवाक्यं लक्षणया निषेध्यस्य निन्दितत्वबोधकतयाऽर्थवद्भवति, इति विज्ञेयम् । ( लौ० भा० पृ० ५४ )

३ अत्राम्नायते—''सोऽरोदी-*द्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्'' ( तै० सं० १।५।१ ) इति ।

* अस्मिन्विषये तैत्तिरीयसंहितायाः ( १।५।१ ) कथा श्रूयते—पूर्वं देवदैत्यसंग्रामोऽभूत् ।

ग्धि रजतम् " ( शत० ब्रा० ) इत्यादिः । यथा वा—"असत्रं वा एतद्यदच्छन्दोमम् " ( तैत्ति० सं० ७।४।२ ) इत्यादिश्च ।

[ घ ] अनिष्टसाधनत्वबोधनद्वारा विध्यर्थप्रशंसौवचनम् । यथा—" तैलस्त्रीमांससंभोगी पर्वस्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम प्रयाति नरकं ध्रुवम्" इत्यादि ।

**निपातः** }
**निपातनम्** } —१ अधोदेशसंयोगानुकूलव्यापारः । यथा—"पयोधरोत्सेधनिपातचूर्णिताः" ( कुमार० ५।२४ ), "क्व च निशितनिपाता वज्रसाराः शरास्ते " ( शाकु० अ० १ ) इत्यादौ । २ ( शब्दः ) [ १ ] यः शब्दः केवले यादृशस्वार्थे शब्दान्तरार्थस्य तादात्म्येनान्वयबोधं प्रत्यसमर्थः, सुबादिप्रत्ययेभ्यः प्रत्येकं भिन्नः, स तादृशार्थे( भेदेनान्वयबोधं प्रति योग्ये ) निपातः । यथा—चादयो निपाताः, स्वार्थे समुच्चयादौ नामाद्यर्थस्याभेदेनान्वयबोधं प्रत्ययोग्याः ।

---

१ अत्राम्नायते—"असृग्घि रजतं यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे* रुदन्ति" इति ( शतपथब्रा० ) ( तै० सं० १।५।१ )

२ अत्रायमभिप्रायः—सत्रं छन्दोमसूक्तयुक्तमेव कर्तव्यम् । तथाऽकरणे 'असत्रम्' इति निन्देयम्, इति ।

३ अत्र—'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते; अपितु विधेयं स्तोतुम्' इति न्यायोऽनुसंधेयः । (वाच० )

४ अत्रार्थे व्युत्पत्तिर्निरुक्तग्रन्थे—' निपतन्त्यर्थेषु उच्चावचेषु' इति । ( कर्तरि ज्वलादि० ण ) । नानाविधार्थेषु वृत्त्या स्वार्थबोधकतया पतनशील इत्यर्थः । ( वाच० )

५ अत्र विप्रतिपत्तिः—चादयो निपाताः सार्थका वाचकत्वात्, (प्रादय उपसर्गा एव द्योतकाः) इति नैयायिका आहुः । प्रादय उपसर्गा इव चादयो निपाता अपि द्योतका एव, इति शाब्दिका मेनिरे । ( वै० सा० निपा० पृ० ३३८ )

---

तत्र लब्धं द्रव्यं देवैः कनिष्ठभ्रातुरग्नेर्निकटे निक्षिप्तम् । तद्द्रव्यं गृहीत्वा पलायमानोऽग्निर्देवैर्निरुद्धः सन्नरोदीत् । तन्नेत्राश्रुणो जातस्य रजतस्यामङ्गलत्वेन रजतदक्षिणादाननिन्दा, इति ।

* अस्य वाक्यस्य निषेध्यरजतनिन्दापरत्वमस्ति । ( म० प्र० पृ० ६४ ) तथा हि—रजतस्यासृग्रूपत्वेनायोग्यत्वात्, कृतावृत्विग्भ्यो रजतदक्षिणादातुर्यजमानस्य गृहे संवत्सरात्प्राग्रोदनरूपानिष्टबोधनद्वारा बर्हिषि रजतदक्षिणादानं निन्दतीति । (स्व०)

स चायं निपातः चै-तु-नञ्-पुनरिवैव-मा-स्मादिभेदाद्बहुविधः । (श० प्र० श्लो० १० । टी० पृ० १२)

[२] [क] वर्णागमादिनाऽन्यथोत्पद्यमानः सूत्रानिष्पाद्यः शब्दविशेषो निपातः । यथा-हंसे-सिंह-इत्यादिशब्दः ।

[ख] शाब्दिकास्तु,-अन्यथा प्राप्तस्यान्यथोच्चारणं निपातनम्, इत्याहुः ।

**निबन्धः**—१ एकग्रन्थोपनिबन्धनम् । यथा-प्रमाणप्रमेययोर्न्यायदर्शने निबन्धनम् । (गौ० वृ० ३।११३) २ [१] कालविशेषे देयत्वेन प्रतिश्रुतं वस्तु । यथा-"दद्याद्भूमिं निबन्धं वा कृत्वा लेख्यं च लेखयेत्" इत्यादौ । [२] परिगणितं द्रव्यम् । (स्व०) यथा-"भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा" (याज्ञ० अ० २। श्लो० १२४) इत्यादौ, इति व्यवहारज्ञा आहुः । ३ मूत्ररोधरूपो रोगविशेषः, इति भिषजः । ४ बन्धनम् । ५ ग्रन्थः; ग्रन्थविशेषश्च ।

**निबन्धनम्**—१ [क] प्रयुक्तत्ववदस्यार्थोऽनुसंधेयः । यथा-वातादिनिबन्धनं दुःखमित्यादौ । (स्व०)

---

१ अत्र निपातत्वं च [क] असत्त्वार्थकत्वे सति चादिगणपठितत्वम्, इति शाब्दिका आहुः । [ख] नैयायिकास्तु,-शक्तिसंबन्धेन निपातपदवत्त्वम्, इत्याहुः । (वै० सा० निपा० पृ० ३३५ ।

२ वर्णागमादिप्रकारश्च स्मर्यते-"वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्" इति । (सारस्वत०)

३ अत्रार्थे व्युत्पत्तिः-निपतति स्वावयववर्णविनाशादिनाऽन्यथा निष्पद्यते' इति निपातः । (कर्तरि ज्वलादि० ण) (वाच०)

४ तदुक्तम्—"भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्" इति । (सि० कौ०)

५ अत्र मिताक्षरा-निबन्धः 'एकस्य पर्णभारकस्येयन्ति पर्णानि, तथा-एकस्य क्रमुकफलभारकस्येयन्ति क्रमुकफलानि' इत्याद्युक्तलक्षणः । (याज्ञ० मि० २ । श्लो० १२४) इति ।

---

† अत्र केचिच्छाब्दिकास्तु (नागोजीभट्टादयः),-उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारः, इति "अव्ययं विभक्तिसमीप-" (पा० सू० २।१।६) इति सूत्रस्थभाष्ये स्पष्टम्, इत्याहुः । (वाच०)

[ ख ] हे[1]तुत्वम्, इति केचिदाहुः । २ वीणायास्तन्त्रीनिबन्धनमूर्ध्वभागः, इति गायका आहुः । ( वाच० )

**निमन्त्रणम्**[2]—आवश्यके कर्मणि (श्राद्धभोजनादौ) प्रवर्तकं वाक्यम् । यथा—" ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे, " " निमन्त्रयेत[3] पूर्वेद्युर्ब्राह्मणानात्मवान् शुचिः " ( याज्ञ० १।२२४ ) ( मनु० अ० ३ । श्लो० १८७ ) इत्यादौ । यथा वा—" निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् " ( भार० व० अ० २२९ ) इत्यादौ । ( वाच० )

**निमन्त्रितत्वम्**—स्व[4]कर्तव्यत्वप्रकारकधीजनकं अप्र[5]त्याख्येयं यत् वाक्य[6]म्, तत्प्रतिपाद्यत्वम् । यथा—"श्राद्धे भुञ्जीत[7] भवान्," "इह भुञ्जीथास्त्वम्" इत्यादौ 'श्राद्धे भोजनाय निमन्त्रितो भवान्' इत्यनुभवात् निमन्त्रितत्वं लिङर्थः । ( श० प्र० श्लो० १०० । टी० पृ० १९९ )

**निमित्तमात्रगुणत्वम्**—असमवायिकारणभिन्नत्वे सति निमित्तकारणगुण-

---

१ अत्रार्थे व्युत्पत्तिर्द्रष्टव्या—'निबध्यतेऽनेनात्र वा' इति ।

२ अत्रोच्यते—यस्याकरणे प्रत्यवायः, तत् ( नित्यम् ) *निमन्त्रणम्, इति । (सि० कौ०)

३ तच्च निमन्त्रणम् 'भवताऽत्र भोक्तव्यम्' इत्यादि वाक्यम् । ( श० प्र० श्लो० १०० । टी० पृ० १५५ )

४ अत्र स्वपदं निरुक्तप्रतिपाद्यत्वाभिमतभवदादिपरम् । (श०प्र०श्लो० १०० । टी०पृ०१५६)

५ अप्रत्याख्येयत्वं च† प्रत्यवायजनकप्रत्याख्यानकत्वम् । ( श०प्र० श्लो० । पृ० १०० १५६)

६ तादृशधीजनकवाक्यं च 'भवताऽत्र भोक्तव्यम्' इत्यादिकं‡ निमन्त्रणरूपम्; तत्प्रतिपाद्यो भवदादिः, इति ज्ञेयम् । ( श० प्र० श्लो० १०० । पृ० १५६ )

७ अत्र, लिङर्थनिमन्त्रित्वैकदेशे स्वकर्तव्यत्वबोधे धात्वर्थो विशेष्यत्वेनान्वेति । तथा च—'श्राद्धभोजनधर्मिका या स्वकर्तव्यत्वधीः, तज्जनकवाक्यप्रतिपाद्यो भवान्' इत्याकारो बोधः । ( श० प्र० श्लो० १०० । टी० पृ० १५५ )

---

* अत्र नित्यत्वं च प्रत्यवायसाधनीभूताभावप्रतियोगित्वम् । ( वाच० )

† श्राद्धमुपक्रम्य 'अनिन्दितेनामन्त्रितो नापगच्छेत्' इति श्रुतेः सत्त्वेन तत्प्रत्याख्याने दोषः, इति ज्ञेयम् ( श० प्र० श्लो० १०० । टी० पृ० १५६ )

‡ अत्र, 'यस्य प्रत्याख्याने प्रत्यवायः, तत् निमन्त्रणम्' इति वृद्धस्मरणं ज्ञेयम् । ( श० प्र० श्लो० १०० । टी० पृ० १५६ )

त्वम् । ( ल० व०पृ०३७ ) यथा—आत्मविशेषगुणानां ( ज्ञानादीनाम् ) निमित्तगुणत्वमेव ।

**निमित्तम्**—१ [ १ ] ( कारणम् ) समवायिकारणभिन्नमसमवायिकारणभिन्नं च कारणम् । यथा—तुरीवेमादिकं पटस्य, दण्डचक्रादिकं च घटस्य निमित्तकारणम् । ( त० सं० )( त० कौ० पृ० ८ ) यथा वा—आत्मनो विशेषगुणा निमित्तकारणानि (भा० प० गु० श्लो० ८८–८९) [२] प्रयोजकम् । यथा—"रोधने बन्धने चापि योजने च गवां रुजः । उत्पाद्य मरणं वाऽपि निमित्ती तत्र लिप्यते" ( अङ्गिरस्मृ० ) इत्यादौ । [३] ज्ञापकम् । यथा—शकुनादि कार्यविशेषे निमित्तम् । यथा वा—"अनियतनिमित्तकं नैमित्तिकं कर्म" इत्यादौ पुत्रजन्म—ग्रहणादि जातेष्टि—स्नानादौ निमित्तम् । ( म० प्र० ४।पृ० ६० ) २ शाब्दिकास्तु,—उद्देश्यम्; फलं वा । यथा—"निमित्तात्कर्मयोगे" इति वार्तिके निमित्तं फलम्, इत्याहुः । ( सि० कौ० ) ३ शरव्यम्, इति काव्यज्ञा आहुः । (वाच०)

**निमित्तत्वम्**—१ [ १ ] [ क ] क्रियाजनिका या विनियोज्यत्वेनेच्छा,

---

१ समवायिकारणताभिन्ना, असमवायिकारणताभिन्ना च या कारणता, तद्वद्दित्यर्थः । ( त० कौ० १। पृ० ८ ) तेन, स्वगतरूपस्य समवायिकारणे दण्डादौ यथाश्रुतलक्षणासत्त्वेऽपि नाव्याप्तिः, इति ज्ञेयम् ।

२ अत्रोदाह्रियन्ते यथा—"निमित्तेषु च सर्वेषु ह्यप्रमत्तो भवेन्नरः" (स्मृतिः) "निमित्तानि च पश्यामि विपरीतानि केशव!" ( गीता० १ । ३१ ) "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" ( गीता० ११ । ३३ ) "अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह" ( ति० त० भविष्यपु० ) इत्यादीनि । ( वाच० )

३ अत्रोच्यते—"निमित्तमात्रमाश्रित्य यो धर्मः संप्रवर्तते । नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा" इति । ( मल० त० ) ( वाच० )

४ अत्र, विनियोज्यत्वेनेच्छा च 'इदं ( चर्म ) हननेन मम प्राप्यताम्' इति प्राप्यत्वप्रकारकेच्छा । तथा च,—चर्मणि द्वीपिनं हन्तीत्यादौ—हननादिक्रियाजनिका या विनियोज्यत्वेनेच्छा, तद्विषयत्वं चर्मादौ निमित्तत्वम्, इति विज्ञेयम् ।

तद्विषयत्वम् । यथा—चर्मणि[१] द्वीपिनं हन्तीत्यादौ चर्मादीनां निमित्तत्वम् । ( ग० व्यु० कारक० ७। पृ० ११६ )

[ ख ] फलवत्त्वेनेच्छा । यथा—चर्मणि[२] द्वीपिनं हन्तीत्यादौ सप्तम्यर्थः । [ ग ] शाब्दिकास्तु,—फलत्वम्, उद्देश्यत्वं वा निमित्तत्वम् । यथा—“ निमित्तात्कर्मयोगे ” इत्यादौ, आहुः । [ २ ] फलत्वेनेच्छा । यथा—मशकनिर्वृत्तौ[४] धूमं करोतीत्यादौ सप्तम्यर्थः । ( का० व्या० पृ० ११ )

**नियतत्वम्**—१ व्यापकत्वम् । यथा— “ नियतसामानाधिकरण्यं व्याप्तिः ” इत्यादौ वह्नेर्धूमव्यापकत्वम् । ( न्या० बो० २ । पृ० १४ ) (नील० २ । पृ० २० ) यथा वा—“अन्यथासिद्धिशून्यस्य नियता[५] पूर्ववर्तिता । कारणत्वं भवेत्” ( भा० प० श्लो० १६ ) इत्यत्र कारणभूतदण्डादिगतपूर्ववृत्तित्वस्य घटादिकार्यनियतत्वम् । २ नियमयुक्तत्वम्, इति योगिन आहुः ।

---

१ अत्र, “निमित्तात्कर्मयोगे*” (वार्तिकम्) इत्यनेन सप्तमी, यत्किंचित्कर्मप्रकारकबोधजनकधातुयोगे प्रयुज्यते । इयं सप्तमी, प्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति । तथा च—सप्तम्यर्थः †स्वविषयकतादृशेच्छाधीनत्वम्; तस्य क्रियायामन्वयः । तदेकदेशविषयितायां निरूपकत्वेन प्रकृत्यर्थस्यान्वयः । ( ग० व्यु० का० ७ । पृ० ११६ ) ( का० व्या० पृ० ११ ) एवं च ‘चर्मादिविषयकेच्छाधीना या व्याघ्रकर्मिका हननक्रिया, तत्कर्ता’ इति वाक्यार्थबोधः । ( स्व० )

२ समुदितश्लोकस्तु—“चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि‡ पुष्कलको हतः” इति । ( सि० कौ० )

३ अत्रायं विशेषो ज्ञेयः—चर्मात्मकफलस्य सिद्धतया स्वरूपफलवत्त्वेनैवेच्छा, प्रयोज्यत्वेन धात्वर्थेऽन्वेति । तथा च—‘चर्मप्रकारकेच्छाप्रयोज्यद्वीपिहननानुकूलकृतिमान्’ इति बोधः, इति । ( का० व्या० पृ० ११ )

४ अत्र मशकनिवृत्तिः फलम् । सप्तम्यर्थस्य मशकनिवृत्तीच्छायाः प्रयोज्यत्वसंबन्धेन करोत्यर्थेऽन्वयः । तथा च—‘मशकनिवृत्तीच्छाप्रयोज्यधूमकरणाश्रयः’ इति बोधः । ( का० व्या० पृ० ११ )

५ अत्र ‘सामानाधिकरण्यसम्बन्धेन यत्र ( दण्डादौ ) कार्यम्, तत्र स्वरूपसंबन्धेन पूर्ववृत्तित्वम्’ इति रीत्या व्याप्तेः सत्त्वेन पूर्ववृत्तित्वस्य व्यापकत्वं बोध्यम् ।

---

* तदर्थश्च—द्वीप्यादिरूपकर्मयोगे निमित्तात् चर्मादिरूपात् सप्तमी । निमित्तं हि फलम् । योगस्तु संयोगः समवायो वा ।

**नियमः**—१ [क] तद्वदन्यावृत्तित्वम्[1] (व्याप्तिः) । (ग० सिद्धा०) स च—“ कार्ये कारणनियमः ” इत्यत्र—कार्ये कारणवदन्यावृत्तित्वरूपो नियमः । यथा—धूमे वह्निमदन्यावृत्तित्वम् । (स्व०)

[ख] तन्मात्रसत्त्वम् । यथा—“ साहचर्यनियमः[2] ” इत्यादौ । (वाक्य० २ । पृ० १३) २ व्यापकत्वम् । (ग० सत्प्र० ?) ३ धर्मशास्त्रु,—प्रत्यवायजनकीभूताभावप्रतियोगित्वम्[3] । यथा—ऋतौ स्वदारानुपेयादित्यादौ लिङ्गर्थः, इत्याहुः । (श०प्र० श्लो०१०० । टी० पृ०१५८) ४ “ शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ” (योगसू० पा० २ । सू० ३२) इति योगाङ्गविशेषाः, इति योगिन आहुः । (गौ० वृ० ४ । १११) ५ तत्तद्व्यापारेषु भगवत्प्रेरणम, इति वेदान्तिनो मध्वाचार्यानुयायिनः प्राहुः । ६ प्रतिज्ञा । ७ स्वीकारः । ८ आगन्तुकसाधनकर्मरूपं व्रतम् । ९ नियन्त्रणा । १० निश्चयः, इत्यादि । (वाच०)

---

१ व्याप्यत्वमित्यर्थः । (ग० सत्प्र० पृ० २२) यथा—“स्वसाध्यविपरीतेनानियमात्” (चि० २। सव्य० पृ० ९७) इत्यादौ ।

२ अत्रायमर्थः—साहचर्यम् साध्यनिष्ठहेतुसामानाधिकरण्यम् । तन्नियमः तन्मात्रसत्त्वम् । तद्विरोध्यसत्त्वमिति यावत् । विरोधि च हेतुसमानाधिकरणाभावप्रतियोगित्वम् । ‘यादृशवह्नेर्यादृशधूमसाहचर्यम्, तस्मिन्न तदव्यापकत्वम्’ इति—विरोधः । अनुगतैकव्यक्तौ तु एकाधिकरणावच्छेदेनासत्त्वम् (विरोधः), इति । (वाक्य० २। पृ० १३)

३ अयोगव्यवच्छेद इति पर्यवसितोऽर्थः । अत्राधिकं तु नियमविधौ द्रष्टव्यम् ।

४ अत्र,—नियमार्थैकदेशेऽभावे ऋत्वादिकालस्यावच्छेदकत्वेनान्वयात् ‘ऋतुकालावच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताभावस्य प्रतियोगि स्वदारगमनम्’ इत्याकारको बोधः । यद्वा—प्रत्यवायहेतुत्वम्, अभावश्च, द्वयं तत्र लिङ्गर्थः । तेन, प्रतियोगिविधया धात्वर्थस्यावच्छेद्यत्वेन च कालस्यान्वयिन्यभावे लिङा प्रत्यवायहेतुत्वस्य बोधनात्, ‘ऋतुकालावच्छेद्यः स्वदारगमनाभावः प्रत्यवायहेतुः’ इत्याकार एव तत्र बोधः । (श० प्र० श्लो० १०० । टी० पृ० १५८)

---

† अत्र, स्वपदार्थश्चर्म, इति ज्ञेयम् ।

‡ सीम अण्डकोशः । पुष्कलको गन्धमृगः । (शि० को०)

**नियमविधिः**—( विधिः ) [ १ ] [ क ] यत्रोभयोः प्राप्तावेको नियम्यते तत्र नियमविधिः । यथा—"व्रीहीनवहन्ति" ( श्रुतिः ) इत्यादौ । ( सि० च० ४ । पृ० ३३ )

[ ख ] पक्षेऽप्राप्तस्य नियामको विधिः । यथा—"व्रीहीनवहन्ति" इति । ( म० प्र० ४ । पृ० ६२ )

[ ग ] नानासाधनसाध्यक्रियायामेकसाधनप्राप्तावप्राप्तस्यापरसाधनस्य प्रापको विधिः, इति मीमांसका आहुः । ( लौ० भा० पृ० ३९ )

[ घ ] यो विधिः पक्षेऽप्राप्तमर्थं नियमयति, सः । यथा—"व्रीहीनवहन्ति" इति । ( मीमां० परि० )

[ ङ ] परे तु,—यत्र क्रियायां विकल्पेन कारकान्वयः, सः । यथा—"या-

---

१ एतस्य प्रयोजनं च—एतद्विध्यभावे दर्शपूर्णमासादिकेषु, व्रीहिषु उत्पत्तिवाक्यावगतपुरोडाशोपयोगि तण्डुलनिष्पत्त्यनुकूलवैतुष्यकार्यायावहननवत् कदाचिन्नखविदलनमपि प्राप्नुयादिति तस्मिन्पक्षेऽवहननस्य प्राप्त्यभावात् कार्यान्यथोपपत्तेरवहननस्य पाक्षिकी प्राप्तिः स्यात् । सत्यस्मिन्विधौ—'अवहननेनैव वैतुष्यं कार्यम्' इति नियमे सति, विदलनं सर्वात्मना निवर्तेत इति नियमविधिरयम् । न च, वैतुष्यस्य नखविदलनेनापि संभवादवहनननियमो व्यर्थः; प्रयोजनाभावादिति वाच्यम् । अवघातेनैव वैतुष्यकरणे किंचिददृष्टं जन्यते, इत्यदृष्टाङ्गीकारात् । ( मीमां० परि० ) ( वाच० )

२ अत्र नियमोऽयोगव्यवच्छेदः । ( न्या० प्र० श्लो० । १०० । टी० पृ० १७८ )

३ अत्र व्रीहिषु नखविदलन-मुसलावहननयोः प्राप्तौ मुसलावहननमेव नियम्यते । ( सि० च० ४ । पृ० ३३ )

४ अत्र, "नियमः पाक्षिके सति" इत्यभियुक्तोक्तिः । तदर्थश्च—[ क ] पक्षेऽप्राप्तौ सत्यां नियमविधिः । तथा हि—व्रीहीनवहन्तीत्यादौ अवघातप्रयोजनस्य वैतुष्यस्य नखविदलनादिनापि संभवात् तदनुष्ठाने पक्षेऽप्राप्तस्यावघातस्य* अनेन नियमात् ( 'यागाङ्गव्रीहिषु वैतुष्यार्थं अवघात † एव कर्तव्यः, न तु नखविदलनादिः' इति नियमप्रतिपादनात् ) नियमविधिः । ( म० प्र० ४ । पृ० ६२ ) ( त० प्र० ख० ४ । पृ० १०८ ) [ ख ] विधिं विना प्रवृत्तेः पाक्षिकत्वे सतीत्यर्थः । प्रवृत्तिनियमे सतीति यावत् । तथा च—तद्गोचरप्रवृत्तिनियमनिर्वाहको विधिस्तन्नियमविधिः, इति ।

---

* नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । पक्षेऽप्राप्तावघातविधानमिति यावत् ।

† अवघातेनैव तुषोपवापः कर्तव्योऽपूर्वोत्पत्त्यर्थम्, न तु नखविदलनादिना, इति भावः ।

जनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इत्यादौ नियमविधिः, इत्याहुः । ( त० प्र० ख० ४ । पृ० १०८ )

[ २ ] अन्यनिवृत्तिफलकसिद्धविषयकविधिर्नियमविधिः, इति शाब्दिका वदन्ति ।

**नियामकत्वम्**—१ [ १ ] प्रयोजकत्ववदस्यार्थोऽनुसंधेयः । [ २ ] नियमकारकत्वम् । यथा—"कारणस्य कार्यं प्रति नियामकत्वम्" इत्यत्र अदृष्ट-कालादेः कार्यमात्रं प्रति नियामकत्वम् । २ निरासकत्वम् । यथा—"लोकप्रसिद्धमेवैतद्वारि वह्नेर्नियामकम्" ( कामन्द० ) इत्यादौ । ( वाच० )

**नियोगः**—१ [ १ ] 'एवं कुरु' इत्याज्ञा । ( कि० व० ६ ) यथा—पुत्रोत्पादनाय विधवाया नियोजनम् । [ २ ] प्रेरणम् । [ ३ ] इष्टसाधनत्वादिबोधनेन प्रवर्तनम् । [ ४ ] केचित्तु,—प्रवर्तकज्ञानोपधायकतानिर्वाहकव्यापारः । यथा—"स्वर्गकामो यजेत" इत्यादौ योग्यतया नियोगो बोध्यते, इत्याहुः । ( वाच० ) २ अवधारणम्[3] । यथा—"तत्सिषेवे नियोगेन सविकल्पपराङ्मुखः" ( रघु० स० १७ । श्लो० ४९ ) इत्यादौ ।

**नियोजकत्वम्**—तत्कामिकृतिसाध्यतया प्रतीयमानत्वम् । ( न्या० म० ४ । पृ० ६३ ) यथा—प्राभाकरमते, विध्यर्थस्यापूर्वात्मकस्य कार्यस्य नियोजकत्वम् । ( त० प्र० ख० ४ । पृ० १११ )

**नियोज्यत्वम्**—[ क ] प्रवर्तनीयत्वम्; प्रवर्तनाकर्मत्वम्[4] । यथा—"स्वर्गकामो यजेत" इत्यादौ स्वर्गकामो यागे नियोज्यः । ( चि० ४ )

---

१ अत्राधिकं तु परिसंख्याशब्दव्याख्यानावसरे संपादयिष्यत इत्यत्रैव विरम्यते ।

२ अत्रोच्यते—"उक्तो नियोगो मनुना निषिद्धः स्वयमेव हि" इति । ( बृहस्पतिः ) तथा हि—"नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः । अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् । नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः" इति । ( मनु० अ० ९ । श्लो० ६४-६५ )

३ अत्र कौटिल्यः—'अनेनैवोपायेन, नान्येन' इति नियोगः, इति । ( रघु० टी० १७।४९ )

४ अत्र, प्रवर्तनाकर्मत्वं च तज्जन्यप्रवृत्तिमत्त्वम् । ( वाच० )

[ ख ] केचित्तु ,–प्रवर्तकज्ञानोपधायकत्वम् , इत्याहुः । ( वाच० )

**निर्**[1]—( अव्ययम् ) १ वियोगः । यथा–निःसङ्गः, इत्यादौ । २ अत्ययः। यथा–निर्मेघम् , इत्यादौ । ३ आदेशः । यथा–निर्देशः, इत्यादौ । ४ अतिक्रमः । यथा–निष्क्रान्तः, इत्यादौ । ५ भोगः । यथा–निर्वेशः, इत्यादौ । ६ निश्चितम् । यथा–निश्चितमित्यादौ । ( गणरत्न० ) ७ निषेधः । यथा–निर्मक्षिकम् , इत्यादौ । ( वाच० )

**निरनुयोज्यानुयोगः**—( निग्रहस्थानम् ) [ क ] अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः । ( गौ० ५।२।२२ ) निग्रहस्थानलक्षणस्य मिथ्याध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन्निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति । ( वात्स्या० ५।२।२२ )

[ ख ] निग्रहस्थानरहिते निग्रहस्थानोद्भावनम् । ( नील० पृ० ४६ ) सोऽयं चतुर्धा । छलम्, जातिः, आभासः, अनवसरग्रहणं च । ( गौ० वृ० ५।६५ ) ( दि० १ )

**निरर्थकम्**[3]—१ ( निग्रहस्थानम् ) [ क[4] ] वर्णक्रमनिर्देशवन्निरर्थकम् । (गौ० ५।२।८) यथा–'नित्यः शब्दः कचटतपाः जबगडदशत्वात् झभञ्घढधषवत्' इति । एवंप्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तावर्थगतेरभावाद्वर्णा एव क्रमेण निर्दिश्यन्त इति । ( वात्स्या० ५।२।८ )

[ ख ] समयबन्ध[5]व्यतिरेकेण अवाचक[6]पदप्रयोगः । ( गौ० वृ० ५।५१ ) ( दि० १ )

---

१ अयं शब्दः प्रादिः, सान्तो रान्तश्चेति विज्ञेयम् । ( वाच० )

२ अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यत् निग्रहस्थानोद्भावनम्, तत्; इत्यर्थः । एतेन, अनवसरे निग्रहस्थानोद्भावने, एकनिग्रहस्थाने निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः । ( गौ० वृ० ५।६५ )

३ अस्य संभवः प्रमादात्, इत्यवधेयम् । ( गौ० वृ० ५। ५१ )

४ तदर्थश्च–वर्णानां क्रमेण निर्देशो जबगडेत्यादिप्रयोगः, तत्तुल्यो निर्देशः, इति । ( गौ० वृ० ५।५१ )

५ अनेन (विशेषणदानेन), यत्र 'अपभ्रंशेन विचारः कर्तव्यः' इति समयबन्धस्तत्रापभ्रंशे न दोषः । ( गौ० वृ० ५।५१ )

६ अत्र वाचकत्वं शक्त्या, निरूढलक्षणया, शास्त्रपरिभाषया, वा बोध्यम् । ( गौ० वृ० ५।२।६५ )

[ग] अवाचकशब्दप्रयोगः । यथा—शब्दो नित्यः जबगडदशत्वात्, इत्यादि । ( नील० पृ० ४९ ) २ काव्यदोषविशेषः, इत्यालंकारिका आहुः । ३ निष्फलम् । यथा—"प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः", ( भा० उ० अ० ३९ ) "इत्थं जन्म निरर्थकं क्षितितलेऽरण्ये यथा मालती" ( सा० द० ) इत्यादौ, इति काव्यज्ञा आहुः । ( वाच० )

**निराकाङ्क्षम्**—शाब्दबोधोपयोग्याकाङ्क्षाशून्यम् । यथा—"तेषां वाक्यं निराकाङ्क्षम्" ( कात्या० श्रौ० १।३।२) इत्यादौ । शिष्टं तु, "अनाकाङ्क्ष" शब्दव्याख्यानावसरे संपादितम् ।

**निरुपाख्यम्**—१ प्रमाणमात्राविषयोऽसत्पदार्थः । यथा—वन्ध्यापुत्र—शशशृङ्ग—कूर्मरोमादि । इदमेवालीकमित्युच्यते, तुच्छमिति वेदान्तिभिरुच्यते च । २ अभावपदार्थ इति केचिदाहुः । ( स्व० )

**निरूढः**—१ शक्तितुल्यलक्षणयाऽर्थबोधकः शब्दः । यथा—"पूर्वद्रव्यस्वामिसंबन्धाधीनं तत्स्वाम्युपरमे यत्र द्रव्येऽन्यस्वत्वम्, तत्र निरूढो दायशब्दः" इति जीमूतवाहनेनोक्तो निरूढशब्दः । ( वीरमित्रो० अ० २ । दायभाग० पृ० ९२२ ) २ धर्मशास्तु,—पशुयागविशेषः । यथा—"निर्मित ऐन्द्राग्नः", ( आश्व० श्रौ० ३।८४ ) "ऐन्द्राग्नो निरूढो नाम पशुः कर्तव्यः" इत्यादौ, इत्याहुः । ( वाच० )

**निरूढलक्षणा**—( लक्षणा ) [क] अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा । ( त० प्र० ख० १ । पृ० ४३ ) ( ग० व्यु० का० १ ) यथा—रथो गच्छतीत्यादौ तिबाख्यातस्याश्रयत्वे निरूढलक्षणा । ( दि०

---

१ अत्रोच्यते—"निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्" इति । ( चन्द्रा० )

२ निःस्वरूपम् । ( रत्नप्रभा० )

३ अत्र तात्पर्येऽनादित्वं च स्वज्ञानजन्यशाब्दबोधध्वंसकालीनस्वज्ञानजन्यशाब्दबोधसामान्यकत्वम् ( कृष्णं० )

४ तदन्वयश्च—अनादितात्पर्यं ( वक्तुरिच्छा ), तद्विषयीभूतो योऽर्थः, तन्निष्ठा शक्यसंबन्धरूपा लक्षणा, इति ।

४। पृ० १७९ ) यथा वा—कर्मणि कुशलं इत्यादौ। ( सर्व० पात० पृ० १७२ )

[ ख ] लक्ष्यतावच्छेदकीभूततत्तद्रूपेण पूर्वपूर्वं प्रत्यायकत्वात् निरूढा। यथा—"अरुणया पिङ्गाक्ष्या एकहायन्या (गवा) सोमं क्रीणाति" इत्यादौ आरुण्यादिप्रकारेण तदाश्रयद्रव्यानुभावकत्वादरुणादिपदस्य ( आरुण्ये निरूढलक्षणा )। ( श० प्र० श्लो० २४। टी० पृ० ३१ ) ( लौ० भा० पृ० १७–१८ )

[ ग ] केचित्तु ( शाब्दिकादयः ),—व्याकरणकोशादिहेतुतः प्रसिद्धार्थे शक्तितुल्या लक्षणारूपा शब्दस्यार्थबोधना शक्तिः, इत्याहुः। ( वाच० )

**निरूढिः**—१ निरूढलक्षणावदस्यार्थोऽनुसंधेयः। २ काव्यज्ञास्तु,—प्रसिद्धिः। यथा—"चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता" ( किरात० स० २ श्लो० ४ ) इत्यादौ, इत्याहुः।

**निरूपकत्वम्**—१ स्वरूपसंबन्धविशेषः। यथा—"दण्डो घटस्य कारणम्" इत्यादौ—घटनिष्ठकार्यतानिरूपकत्वम् दण्डनिष्ठकारणतायाम्[२]। यथा वा—"भूतले घटः" इत्यादौ—भूतलनिष्ठाया आधारताया निरूपकत्वं घटनिष्ठाधेयत्वे। यथा वा—"घटस्य ज्ञानम्" इत्यादौ—ज्ञाने घटनिष्ठविषयतानिरूपकत्वम्। एवमन्यत्रापि निरूप्यनिरूपकभावो ज्ञेयः। ( स्व० ) २ तज्ज्ञानजनकज्ञानविषयत्वम्। (ग०अव० हेतु० ) यथा—"वृक्षाद्विभजेत" इत्यादौ—विभागस्य वृक्षनिष्ठावधितानिरूपकत्वम्। ३ क्वचित्— प्रतियोगित्वम्, इति केचिदाहुः।

**निरूपणम्**—१ ज्ञानानुकूलशब्दः[३]। यथा—द्रव्यं निरूपयतीत्यादौ निरूप-

१ अत्र 'कुशांल्लाति' इति व्युत्पत्त्या कुशलपदं दर्भादानकर्तरि यौगिकम्; विवेचकत्वसारूप्यात्प्रवीणे वर्तमानमनादिवृद्धव्यवहारपरंपरानुपातित्वेनाभिधानवत्प्रयोजनमनपेक्ष्य प्रवर्तते। ( सर्व० पात० पृ० १७२ )

२ अत्रायं नियमः—'यन्निरूपितं यद्भवति, तन्निरूपकं तत्' इति।

३ लक्षण-स्वरूप-प्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारः, इति फलितोर्थः। ( त० प्र० ख० ४। पृ० ३ ) ( दायभा० श्रीकृष्ण० )। यथा—"अथ शब्दो निरूप्यते" ( न्या० म० ४। पृ० ०१) इत्यादौ।

४ अत्र—तादृशविशिष्टैकार्थस्य ( धात्वर्थस्य ) एकदेशे ज्ञानांशे द्रव्यस्य द्वितीयार्थविषयता-

यत्यर्थः । ( ग० व्यु० का० २ । पृ० ४६ ) यथा वा—"अथ हेत्वाभासास्तत्त्वनिर्णयप्रयोजकत्वान्निरूप्यन्ते" ( चि० २ ) इत्यादौ । २ विचारः । ३ निदर्शनम् । ४ आलोकः ; इति च काव्यज्ञा आहुः । ( वाच० )

**निरूपितत्वम्**—स्वरूपसंबन्धविशेषः । यथा—राज्ञः पुरुष इत्यादौ पुरुषनिष्ठस्वत्वे राजनिष्ठस्वामित्वनिरूपितत्वम् । शिष्टं तु निरूपकत्वशब्दे द्रष्टव्यम् । ( स्व० )

**निरूप्यत्वम्**—निरूपितत्ववदस्यार्थोऽनुसंधेयः ।

**निर्णयः**—१ [ १ ] तदभावाप्रकारकं तत्प्रकारकं ज्ञानम् । ( गौ० वृ० १।४० ) (त० भा० पृ० ४४) यथा—घटे 'अयं घटः' इति ज्ञानम् । [ २ ] विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः । ( गौ० १।१।४१ )

---

निरूपितविषयितयाऽन्वयः । ( ग० व्यु० का० २। पृ० ४६ ) तथा च—'द्रव्यविषयकज्ञानानुकूलशब्दप्रयोगकर्ता' इति बोधः ।

१ अत्रेदं बोध्यम्—निरूपण—प्रतिज्ञा—फलं तु शिष्यावधानमेवेति । (म० प्र० ३। पृ० ३३)

२ अधिकमुदाहरणं तु निरूपकत्वशब्दव्याख्यानावसरे संपादितम् ।

३ अत्रोच्यते—निर्णयो विशेषदर्शनजमवधारणम्, संशयविरोधी । तत् द्विविधम् । प्रत्यक्षम्, अनुमानं च । तत्राद्यं यथा—स्थाणु—पुरुषयोरूर्ध्वतामात्रसादृश्यालोचनाद्विशेषेषु प्रत्यक्षेष्वभयविशेषानुस्मरणात् 'किमयं स्थाणुः, पुरुषो वा' इति संशयोत्पत्तौ शिरःपाण्यादिदर्शनात् ' पुरुष एवायम् ' इत्यवधारणज्ञानं प्रत्यक्षनिर्णयः ।

द्वितीयं यथा—विषाणमात्रदर्शनात् 'गौर्गवयो वा' इति संशयोत्पत्तौ, सास्नामात्रदर्शनात् 'गौरेवायम्' इत्यवधारणज्ञानम् अनुमाननिर्णयः, इति । (प्रशस्त० २। पृ० ३२)

४ तदर्थश्च—विमृश्य संदिह्य पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्यामर्थस्यावधारणम्; तदभावाप्रकारकं तत्प्रकारकं ज्ञानमित्यर्थः । यद्यप्येतावदेव निर्णयसामान्यलक्षणम् । तथापि,—विमृश्येत्यादिकं जल्पवितण्डास्थालीयनिर्णयमधिकृत्य तदुक्तम् । भाष्ये शास्त्रे वादे च विमर्शवर्जमिति । एवम्—प्रत्यक्षतः शब्दाच्च निर्णये न विमर्श-पक्ष-प्रतिपक्षापेक्षेति । ( गौ० वृ० १। ४० ) ( वात्स्या० १।१।४१ )

५ अत्रायं विशेषो ज्ञेयः—[ क ] निर्णयस्तत्त्वज्ञानम्, प्रमाणानां फलम् । ( वात्स्या० १।१।१।पृ० ६ ) (त० भा० पृ० ४४)[ ख ] निर्णयस्तत्त्वज्ञानम्, प्रमाणानां फलम् । यदा वस्त्वन्तरपरिच्छेदहेतुत्वेन नोपादीयते तदा फलम् । यदा तेन परिच्छिनत्ति तदा प्रमाणम् इति न व्यवतिष्ठते प्रमाणफलभावः । ( न्या० वा० १। पृ० १९ )

स्थापना साधनम् । प्रतिषेध उपालम्भः[1] । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्तमानौ पक्षप्रतिपक्षावित्युच्येते । तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानमवश्यंभावि । यस्यावस्थानं तस्यावधारणं निर्णयः । ( वात्स्या० १।१।४१ ) २ अधिकरणविशेषः, इति मीमांसका आहुः । ३ सिद्धान्तसिद्धविचार्यवाक्यतात्पर्यावधारणमिति सांख्या आहुः । ( सांख्य० कौ० )

**निर्देशः**—१ [ क ] शब्दप्रयोगः । ( गौ० वृ० ५ । ५१ ) यथा—"वर्णक्रमनिर्देशवन्निरर्थकम्" ( गौ० ५।२।८ ) इत्यादौ ।

[ ख ] उच्चारणम् । यथा—'अनुनासिक इति निर्देशात्' इत्यादौ; "निर्दिश्यमानस्यादेशा भवन्ति" ( सि० कौ० ) इत्यादौ च । २ [ क ] यत्किंचिदर्थप्रतिपादकः शब्दः । यथा—"साध्यनिर्देशः प्रतिज्ञा" ( गौ० १।१।३३ ) इत्यादौ ।

[ ख ] प्रतिपादकः शब्दः । यथा—"ॐम् तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" ( गीता० अ० १७ । श्लो० २३ ) इत्यादौ । ३ निर्णयेन कथनम् । यथा—"अतुषत्पीठमासन्ने निरदिक्षच्च काञ्चनम्" ( भट्टिः ) इत्यादौ । ४ उपदेशः । ५ शासनम्; आज्ञा । ६ वेतनम् । यथा—"कालमेव प्रतीक्षेत निर्देशं भृतको यथा" (पुराणम्) इत्यादौ । (वाच० )

**निर्धर्मकत्वम्**—१ किंचिन्निष्ठप्रकारत्वानिरूपकत्वम् । यथा— निर्विकल्पकज्ञानस्य निर्धर्मकत्वम् । (स्व०) २ मायावादिनस्तु,—स्वभिन्नधर्मशून्यत्वम् । यथा—ब्रह्मणो निर्धर्मकत्वम्, इति वदन्ति । ( दि० १ )

**निर्धारणम्**— [ क ] विशेषस्य स्वेतरसामान्यव्यावृत्तधर्मवत्त्वम् । यथा—नराणां क्षत्रियः शूरतमः, नरेषु वा इत्यत्र । ( श० प्र० श्लो० ९३। टी० पृ० १२८ )

---

१ अत्रोच्यते—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इति ।

२ अत्र, विशेषान्यत्वम्*, व्यावृत्तत्वं च षष्ठ्यर्थः । तथा च-क्षत्रियस्य नरविशेषतया

[ ख ] जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम् । यथा—नराणां

षष्ठ्यर्थेन क्षत्रियान्यत्वेन ‡ विशिष्टस्य तत्प्रकृत्यर्थस्य नरस्य तादृशनरत्वावच्छिन्नाधेयत्वसंसर्गेण भेदेऽन्वयलब्धस्य क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमे, शूरतमस्य च क्षत्रिये, तादात्म्येनान्वय इति 'क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्ववच्छूरतमाभिन्नः क्षत्रियः' इत्याकारको बोधः । ( श० प्र० श्लो० ९३। टी० पृ० १२८ )

१ समुदितार्थान्वयस्तु—जात्यादयः जातिगुणक्रियासंज्ञाः । तथा च—नराणां क्षत्रियः शूर इत्यादौ—जातिः ( क्षत्रियत्वम् ), तच्च तत् विशेषणं च, तेन विशिष्टो यद्धर्मावच्छिन्नः ( नरत्वरूपसामान्यधर्मावच्छिन्नः ), तस्य; तादृशविशेषणम् ( क्षत्रियत्वम् ), तेन शून्यस्तद्धर्मावच्छिन्नः ( नरत्वावच्छिन्नः ), तस्मात् व्यावृत्तत्वम् ( अवृत्तित्वम् ), तेन विशिष्टम् ( सहितम् ), विधेयम् ( शौर्यम् ) तद्वत्तया प्रतिपादनम्, इति ।

२ 'नरेभ्यो राक्षसाः शूरतमाः' इत्यादौ—राक्षसत्वादिविशेषणविशिष्टे तच्छून्यनरादिभ्यावृत्तशूरतमत्वविवक्षायामपि न निरुक्तनिर्धारणम्; राक्षसत्वादिविशिष्टस्य नरत्वादिसामान्यधर्मानवच्छिन्नत्वात्; ( अतो नातिव्याप्तिः ) । ( ग० व्यु० का० ६। पृ० ११३ )

३ नराणां क्षत्रियः शूरतम इत्यादौ क्षत्रियादिनिष्ठशूरतमत्वादौ नरादिसामान्यव्यावृत्तत्वबाधात् ( असंभवः अतः, ) शून्यत्वान्तम् व्यावृत्त्यवधेर्विशेषणं दत्तम् । ( ग० व्यु० का० ६। पृ० ११३ )

* अत्र, विशेषस्तत्समभिव्याहृतक्षत्रियादिर्विशेष्य ग्राह्यः । ( श० प्र० श्लो० ९३। टी० पृ० १२८ )

† व्यावृत्तत्वं च भेदप्रतियोगित्वम् । ( श० प्र० श्लो० ९३। टी० पृ० १२८ )

इदं तु बोध्यम्—यत्रोद्देश्यविधेययोस्तादात्म्येनान्वयबोधसामग्री, तत्रैव निर्धारणषष्ठ्या भेदप्रतियोगित्वमर्थः । यत्र तु संबन्धान्तरेण; तत्रात्यन्ताभावप्रतियोगित्वम् । अतः, नराणां क्षत्रिये शौर्यमित्यादौ क्षत्रियान्यनरत्वावच्छिन्नवृत्तिकस्यात्यन्ताभावस्यैव प्रतियोगित्वं शौर्यादौ प्रतीयते; न तु तादृशभेदस्य, इति । ( श० प्र० श्लो० ९३। टी० पृ० १३० )

नराणां मध्ये क्षत्रियः शूर इत्यादौ तु—निर्धारणवाचिनो 'मध्ये' इत्यव्ययस्य तदर्थकषष्ठ्या सह संभेदे, 'हे चैत्र' इत्यादाविव, नान्यतरवैयर्थ्यम् । ( श० प्र० श्लो० ९३। टी० पृ० १३०—१३१ )

‡ क्षत्रियान्यनरस्याधेयतामात्रेण भेदेऽन्वये, नराणां क्षत्रियः सुंदर इत्यपि प्रयोगापत्तेः, क्षत्रियान्यकुरूपनरनिष्ठभेदप्रतियोगित्वस्य सुन्दरे सत्त्वात् । एवं च—नरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्वस्य शूरतमे बाधादुक्तवाक्यस्यायोग्यत्वापत्तिः । अतः षष्ठ्यर्थेन क्षत्रियान्यत्वेन तत्प्रकृत्यर्थो नरो विशेषितः, इति । ( श० प्र० श्लो० ९३। टी० पृ० १२९ )

क्षत्रियः शूरो, नरेषु वेत्यादौ षष्ठ्याद्यर्थो निर्धारणम्। ( ग० व्यु० का० ६। पृ० ११३ )

[ ग ] व्यावृत्तेन धर्मेण समुदायादेकदेशस्य जातिगुणक्रियासंज्ञाविशिष्टस्य पृथक्करणं निर्धारणम्, इति शाब्दिका वदन्ति। ( ल० म० सु० पृ० २० )

निर्वर्त्यम्—( कर्म ) [ क ] क्रियया यन्निष्पाद्यते, तत्। यथा—कटं, घटं वा करोतीत्यादौ। ( का० व्या० पृ० ६ )

---

१ नराणां क्षत्रियः शूरः, नरेषु वा; अध्वगानां रथगामिनः शीघ्रतराः, अध्वगेषु वा; गवां कृष्णा संपन्नक्षीरा, गोषु वा; इत्यादौ—"यतश्च निर्धारणम्" ( पा० सू० २।३।४१ ) इत्यनेन षष्ठीसप्तम्यौ विधीयेते। सूत्रार्थश्च—जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम्, तद्धर्मावच्छिन्नार्थकपदात् षष्ठीसप्तम्यौ, इति।

प्रकृते च—क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपविधेयसंबन्धोऽभिमतः, इति नरादिपदात् षष्ठी। ( ग० व्यु० का० ६। पृ० ११३ )

अत्र वैयाकरणाः ( नागोजीभट्टादयः ) एवमाहुः—" यतश्च निर्धारणम् " इति सूत्रम्। तदर्थश्च—यतः स्वेतरेभ्यः स्वघटितसमुदायघटकेभ्यो व्यावृत्तेन धर्मेण समुदायादेकदेशस्य जातिगुणक्रियासंज्ञाविशिष्टस्य पृथक्करणरूपं निर्धारणम्, ततः षष्ठीसप्तम्यौ इति। पृथक्करणं च व्यावृत्तधर्मप्रकारकज्ञानविषयीकरणम्। अस्ति च, 'नराणां विप्रः श्रेष्ठः' इत्यादौ—विप्रत्वादिविशिष्टस्य विप्रघटितनरसमुदायघटकविप्रेतरव्यावृत्तश्रेष्ठत्ववत्तया प्रतीतिः। एवं च—निर्धारकधर्मनिर्धारणावध्योर्व्यावृत्तत्वाख्यः संबन्धो निर्धारणविभक्तेरर्थः। नरादिपदं च सामान्यरूपेण विप्रतदितरनरादिघटितसमुदायोपस्थापकम्। 'तद्व्यावृत्तश्रेष्ठत्ववान्' इति क्रमेण बोधः। नराणां क्षत्रिये शौर्यमित्यत्र 'क्षत्रियेतरनरघटितसमुदायव्यावृत्तक्षत्रियवृत्तिशौर्यम्' इति बोधः। ( ल० म० सुब० पृ० १२० )

२ तल्लक्षणं च निर्वर्त्यत्वम्। तच्च [ क ] प्रकृतिवाचकपदा*—समभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वम्। ( वै० सा० द० सुब० पृ० १६३ ) [ ख ] प्रकृतिवाचकपदासमभिव्याहृता—पदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वम्। यथा—घटं करोतीत्यादौ—घटादेः क्रियाजन्योत्पत्तिमत्त्वान्निर्वर्त्यत्वम्। ( वाच० )

४ अत्र कुत्रः फलावच्छिन्नव्यापाराबोधकतया गौणकर्मत्वम्। तच्च साध्यताख्यं कृतिविषयत्वम्। ( का० व्या० पृ० ६. )

---

* अत्र तादृशं पदं तु मृत्पदादि।

[ ख ] प्रकृत्यविवक्षायां निष्पाद्यम् । यथा–घटं करोतीत्यादौ–सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा । ( वै० सा० द० सुव० पृ० १६३ )

**निर्वाहः**—१ [ १ ] कार्यसंपादनम् । [ २ ] निष्पादनम् । २ समाप्तिः । यथा–"यावता स्यात्स्वनिर्वाहः स्वीकुर्यात्तावदेव तु" ( नारदीयपु० ) इत्यादौ ( वाच० )

**निर्वाहकत्वम्**—( संगतिः ) १ [ १ ] कथंचिदनुकूलत्वम् । ( म० प्र० १ । पृ० १९ ) [ २ ] [ क ] एककार्यनिर्वाहकत्वम् । तच्च ( एककार्यनिर्वाहकत्वं च ) कारण–कारणतावच्छेदक–उभयसाधारणं प्रयोजकत्वम् । यथा–"व्याप्तिपक्षधर्मतयोरनुमित्यात्मकैककार्याजनकत्वेऽपि तज्जनकीभूतज्ञानविषयतावच्छेदकत्वेनैककार्यानुकूलत्वम् । तत्र–सामान्यतोऽनुमितिलक्षणैककार्यानुकूलत्वज्ञाने, 'किं तदनुकूलम्' इति जिज्ञासायाम्, अनन्तरं पक्षधर्मतानिरूपणमिति । ( भवा० )

[ ख ] एककार्यजनकत्वम् । ( वै० सा० द० ) २ कार्यत्वम्; प्रयोज्यत्वं वा निर्वाहकत्वमिति केचिदाहुः ।

**निर्वाहकैक्यम्**—( संगतिः ) एकप्रयोजकप्रयोज्यत्वम् । ( राम० २ । पृ० १३४ ) यथा–प्रत्यक्षनिरूपणानन्तरं परामर्शानुमित्योर्निरूपणे निर्वाहकैक्यम् संगतिः । ( स्व० )

---

१ अत्रोक्तं भर्तृहरिणा–"यदसज्जायते सद्वा जन्मना यत्प्रकाशते । प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा । तन्निर्वर्त्यम्" इति । ( ग० व्यु० का० २ । पृ० ६५ ) ( वै० सा० द० सुव० पृ० १६३ )

२ कारण–कारणतावच्छेदक–साधारणप्रयोजकत्वरूपमित्यर्थः ।

३ अत्र व्याख्यानम्–निर्वाहकत्वम् ( कारणतानिर्वाहकत्वम् ), कार्यत्वमिति यावत् । ( जग० )

४ इदं तु निर्वाहकत्वमित्यप्युच्यते । ( भवा० )

५ यत्रैकेन कारणेन कार्यद्वयम्, तदधिकसंख्याकं वा कार्यमुत्पाद्यते, तत्रेयं संगतिर्ज्ञेया ।

---

† तदुक्तं भर्तृहरिणा—"सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते" इति । तदर्थश्च–यस्य विकृतिकर्मणः, नाश्रीयते न प्रयुज्यते, न प्रेक्ष्यते, इति यावत् । ( वै० सा० द० सुव० पृ० १६३ )

**निर्विकल्पकम्**—( प्रत्यक्षम् ) [ १ ] [ क ] नामजात्यादियोजनारहितम्; वैशिष्ट्य[2]ानवगाहि; निष्प्र[3]कारकं प्रत्यक्षम् । (चि० १) (ता० र०) तच्च

---

१ तच्च ज्ञानमतीन्द्रियम्, अनित्यम्, निराकारं चेति ज्ञेयम् । (भा० प० श्लो० ५९) (न्या० म०) अत्र बौद्धैः (वैभाषिकैः) अभिधीयते—निर्विकल्पकज्ञानमेव प्रमाणम्; कल्पनापोढत्वात् । इतरं सर्वमप्रमाणम्; कल्पनाज्ञानत्वात्, इति । ( सर्व० बौद्ध० पृ० २२ )

[illegible]कल्पकज्ञानसत्त्वे प्रमाणमनुमानम् । तच्च [ क ] 'विशिष्टज्ञानम् ('अयं घटः' इति [illegible]नं जागराद्यसविकल्पकम् ) जन्यविशेषणज्ञान*—पूर्वकम्, जन्यविशिष्टज्ञानत्वात् 'दण्डी पुरुषः' इति विशिष्टज्ञानवत्' इति । ( न्या० दी० पृ० ३४ ) [ ख ] निर्विकल्पकासत्त्वे, १ सुप्तोत्थितस्य 'अयं घटः' इति विशिष्टज्ञानं न स्यात्; विशेषणीभूतस्य घटत्वस्याज्ञानात् । विशेषणज्ञानं विना विशिष्टज्ञानानुदयेन विशेषणज्ञानस्य विशिष्टज्ञानहेतुत्वात् । तथा च—विशेषणज्ञानमेव निर्विकल्पकम्, इति तस्यावश्यकत्वमिति भावः । (त०कौ० १।पृ०८) [ ग ] चक्षुःसंयोगाद्यनन्तरं 'घटः' इत्याकारकं घटत्वादिविशिष्टज्ञानं न संभवति; पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्; विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । तथा च—प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते; तदेव निर्विकल्पकम् । ( मु० १ । पृ० ११७—११८ ) [ घ ] निर्विकल्पकं यद्यपि न प्रत्यक्षसिद्धम्; तथापि 'अयं घटः' इति विशिष्टज्ञानरूपकार्यानुमेयम् । तथा हि—जन्यतद्विशिष्टज्ञानं प्रति जन्यतद्विशेषणज्ञानं कारणमिति निर्विवादम् । भवति च,—प्राथमिकमस्माकं 'अयं घटः' इति ज्ञानम् जन्यघटत्वविशिष्टज्ञानम्; अतस्तत्रापि घटत्वज्ञानं कारणम् । न च, तदानीं घटत्वविशिष्टज्ञानमस्ति; विशेषणीभूतघटत्वस्याज्ञानात् । अतो वैशिष्ट्यानवगाह्येव तद्वाच्यम् । तदेव निर्विकल्पकम्, इति । ( न्या० म० १ । पृ० ३ )

वैशिष्ट्यनिष्ठसांसर्गिकविषयताशून्यमित्यर्थः । ( त० प्र० १ ) ( म० प्र० १ । पृ० ९ )

तदर्थश्च—[ क ] प्रकारताशून्यं‡ज्ञानम् । ( न्या० बो० ) [ ख ] विशेषणविशेष्यसंबन्धानवगाहि §ज्ञानम् । ( त० दी० ) ( मु० ) ( त० कौ० १ । पृ० ८ ) ( प्र० प्र० )

---

* अत्र, पक्षधर्मताबलात्, अप्रकारकं विशेषणविषयकं जागराद्यज्ञाना(न?)व्यवहितपूर्वसमयवर्तिज्ञानं सिध्यति । सप्रकारत्वे विशेषणान्यविषयत्वे च पक्षधर्मताविरोधात् । सप्रकारत्वे हि तदेव जागराद्यसविकल्पकं स्यात् (इति दोषः प्राप्नुयात्) । (न्या० दी० पृ० ३४)

अत्रेदमवधेयम्—इन्द्रियजन्यज्ञानस्य कदा पुनर्ज्ञानं करणम्? इति चेत्; उच्यते—सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते; तदा निर्विकल्पकं ज्ञानं करणम्, सविकल्पकमवान्तरव्यापारः, हानादिबुद्धयः फलम्, इति । ( त० भा० पृ० ६ )

‡ ननु—निर्विकल्पकज्ञानस्य प्रकारतादिशून्यत्वे, तद्वति तत्प्रकारकत्वरूपं यथार्थत्वं कथम्? इति चेत्; उच्यते—[ १ ] तद्वन्निष्ठविशेष्यत्वानिरूपिता या या तत्तत्प्रकारता, तत्तदनिरूप-

वस्तुस्वरूपमात्रग्रहणम् । यथा–( १ ) 'किंचिदिदम्' इति ज्ञानम् (त०सं०) यथा वा–( २ ) दूरात् 'किंचिदस्ति' इति प्रत्यक्षम् । ( प्र० प्र० ) ( ३ ) 'घट–घटत्वे' इत्याकारकं वा प्रत्यक्षम् । (त० कौ० १।पृ०८) [ ख ] अलौकिक आलोचनात्मको ज्ञानविशेषः, इति केचित् । [ २ ] मायावादिनस्तु,–ज्ञातृज्ञेयादिविभागशून्यम्, ब्रह्मैक्यात्मविषयमखण्डाकारकं विशेष्यविशेषणसंबन्धरहितं ज्ञानम्, इत्याहुः । ( वाच० )

**निलयनम्**—किंचित् (कृष्ण)–कर्मकदर्शनाभावप्रयोजकदेशविशेषास्थितिः । यथा–मातुर्निलीयते कृष्ण इत्यादौ धात्वर्थो निलयनम् । (ल० म० सुब० का० ५। पृ० १०९ )

**निवृत्तिः**—१ [ १ ] ( प्रयत्नः ) [ क ] जिहासाप्रयुक्तस्य ( दुःखसाधनपरिवर्जनम् ) । ( वात्स्या० प्रस्तावना० १।१।१ )

---

१ यदाहुः सांख्यवृद्धाः—"संमुग्धं वस्तुमात्रं तु प्राक् गृह्णात्यविकल्पितम् । तत्सामान्यविशेषाभ्यां कल्पयन्ति मनीषिणः" इति । ( सांख्य० कौ० श्लो० २७। टी० पृ० ३ )

२ तदुक्तं सांख्यवृद्धैः–" अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम् । ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्याऽवसीयते सा प्रत्यक्षत्वेन संमता" इति । ( सांख्य० कौ० श्लो० २७। पृ० ३६ ) ।पृ०

३ धात्वर्थदर्शनकर्ताऽ*पादानम् । तत्पूर्वकनिवृत्तिर्धातोरर्थः । तत्र मातुरपादानत्वेनान्वये इति भाष्यमतम् । दर्शने मातृकर्तृकत्वं प्रत्यासत्तिगम्यम् (ल०म० सुब० का०५। पृ० १०

---

कत्वम्; स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता, तत्तन्निरूपकत्वाभावकूटवत्त्वं यथार्थ्यम् विवक्षणीयम् [ २ ] निर्विकल्पकं भ्रमप्रमा–बहिर्भूतमेव; प्रवृत्त्यनङ्गत्वात्, इति तत्र तद्वतितत्प्रकारकत्वाद्यभावेऽपि नाव्याप्तिशङ्का, इति । ( स्व० ) अत्रेदमवधेयम्–ज्ञानमात्रस्य सविषयकत्वेन निर्विकल्पकेऽपि विषयताऽपेक्षितेति प्रकारता-विशेष्यता-संसर्गता-एतत्त्रयातिरिक्ता तुरीया विलक्षणविषयता स्वीक्रियते, इति । ( नील० १। पृ० १७ )

§ तथा च–ज्ञानत्वघटितं विशेष्यताशून्यत्वम्; विशेषणताशून्यत्वम्; संसर्गताशून्यत्वं च लक्षणत्रयं पर्यवसितम्, इति भावः । ( नील० १। पृ० १७ ) ( वाक्य० १। पृ० १२ )

* अत्र "अन्तर्धौ येनादर्शनमिच्छति" (पा० सू० १।४।२८) इत्यनेन मातुरपादानसंज्ञा। सूत्रार्थस्तु–यत्कर्तृकदर्शनस्याभावमात्मनः 'माता मां न पश्यतु' इति इच्छति (कृष्णः) तस्यापादानसंज्ञा, इति ।

[ ख ] द्वेषजन्यो गुणः । ( सि० च० गु० पृ० ३९ )

[ ग ] द्वेषजनितः प्रयत्नविशेषः । ( वै० उ० ३।१।१९ )

[ घ ] उत्कटद्वेषजन्यो यत्नविशेषः । ( वै० वि० ३।२।१९ )

[ ङ ] द्विष्टसाधनताज्ञानजन्यो यत्नः । ( त० कौ० गु० पृ० १९ ) यथा—" अपरोक्षीकृतश्रीशो विषयेभ्यो निवर्तते " इत्यादौ । ( स्व० ) [ २ ] निवृत्तिश्च प्रवृत्त्यभाव एवेति नव्या आहुः । ( त० प्र० उ० ४ । पृ० ७३ ) ( प० मा० ) सुषुप्त्यवस्थायां ' अयमितो निवृत्तः ' इत्यादिव्यवहारेण निवृत्त्याख्यप्रयत्नसिद्धिर्दुर्वारेत्यन्ये (प्राचीननैयायिकाः) आहुः । (प० मा०) [३] सांख्यास्तु,—संयोगाभाव एव निवृत्तिः । यथा—"औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः" (सांख्य का० ५८) इत्यादौ, इत्याहुः । [ ४ ] कलञ्जाधिकरणे मीमांसकास्तु,—प्रवृत्त्युपाधिना विनाशं प्राप्स्यन् प्रागभाव एव प्रवृत्तिनिराकरणस्य साध्यमानो निवृत्तिरित्युच्यते, इत्याहुः । ( वाच० ) २ अभावः । ( स्व० ) यथा—" व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वात्" ( म० प्र० २। पृ० ३० ) इत्यादौ । यथा वा—निवृत्तपदार्थक इत्यादौ ( नञ्सूत्रभाष्य० ) ( वै० भू० )

**निशा**—१ रात्रिवदस्यार्थोऽनुसंधेयः । यथा—" न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि," ( मनु० ) "निशातुषारैर्नयनाम्बुकल्पैः" ( भट्टिः ) इत्यादौ । २ मेषादयो राशयः, इति ज्योतिषज्ञा आहुः । ३ हरिद्रेति भिषज आहुः । ( वाच० )

---

१ लक्षणं च निवृत्तित्वमेव । तच्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः । (दि०गु०) अत्रेदं बोध्यम्—'निवृत्तिं प्रति *फलगतद्वेषो द्विष्टसाधनताज्ञानं च कारणम्' ( भा० प० श्लो० १५३ ) इत्यन्वयव्यतिरेकाभ्यामवधार्यते ( मु० गु० पृ० २३१ )

२ अत्रायं नियमोऽनुसंधेयः—'इच्छा विषयसिद्धौ ( इष्टप्राप्तौ ) निवर्तते' इति । ( सांख्य० कौ० श्लो० ५८ )

---

* अत्रायं विवेकः—दुःखसाधनविषयकनिवृत्तिं प्रति द्विष्टसाधनताज्ञानं कारणम् । दुःखनिवृत्तिं प्रति तु दुःखद्वेष एव कारणम्, इति ।

**निश्चयः**—( बुद्धिः ) १ तदभावाप्रकारकत्वे सति तत्प्रकारकं ज्ञानम् । ( त० प्र० २ ) ( भा० प० श्लो० १३० ) ( मु० गु० पृ० २०९ ) यथा—' भूतलं घटवत् ' इति निश्चयः । (त्र०) २ क्वचित्—विशेषण-विशेष्यतावच्छेदक-भावानापन्नविरोधिकोटिद्वयप्रकारकैकधर्मिविशेष्यकज्ञानान्यज्ञानम् । यथा—द्वितीययत्तुकारमते—'पक्षतावच्छेदकविशिष्टे निरुक्तसाध्यहेतुवैशिष्ट्यावगाहिनिश्चयावृत्तिविषयितैव विरोधिविषयितापदार्थः ' इति निर्वचने—' ह्रदो वह्निमान् धूमात् ' इत्यादौ ' ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च ' इति निश्चयः । ( ग० २ । हेत्वा० सामा० पृ० २७ ) ३ क्वचित्तु—आधेयताविशेषणतापन्नस्याधिकरणस्य या संशयत्वनिरूपकविशेष्यतान्यविशेष्यता, तन्निरूपितप्रकारताशालिज्ञानम् । ( ग० २ साधा० ) ४ बुद्धेरसाधारणवृत्तिविशेषः, इति मायावादिनो मन्यन्ते । ( वेदा० प० ) ५ अध्यवसायः, इति सांख्याः । ( सांख्य० भा० २।१३ ) ६ अर्थालंकारविशेषः, इत्यालंकारिका आहुः । ( वाच० )

**निषिद्धम्**—निषेधविषयः । स च [क] अनिष्टसाधनताबोधकलिङ्गाद्यनुषक्तनञ्पदयोगिवाक्यगम्यः । यथा—' न कलञ्जं भक्षयेत् ' इत्यत्र

---

१ अत्र च—'संशयभिन्नं ज्ञानं निश्चयः' इति सर्वेषां सिद्धान्तः । निश्चयत्वं न जातिः; प्रत्यक्षत्वादिना सांकर्यात्; किं तु—विषयिताविशेष एव ।

२ [क] तद्विशेष्यकत्वावच्छिन्नतदभावप्रकारताशून्यतद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्ववज्ज्ञानमित्यर्थः । तेन न, 'महानसोऽयं वह्निमान् नवा, पर्वतो वह्निमान्' इत्यस्य (समूहालम्बन-ज्ञानस्य ) पर्वते वह्निनिश्चयत्वाप्राप्तिः । ( दि० गु० पृ० २०९ ) [ख] तदभावप्रकारत्वानिरूपित—तत्प्रकारतानिरूपित—विशेष्यताशालिज्ञानम्, इत्यर्थो वा । ( त० व० )

३ अत्र,—कोटिद्वये विशेषण—विशेष्यतावच्छेदक—भावानापन्नत्वनिवेशात्, 'निर्वह्निः पर्वतो वह्निमान्' इत्यादौ 'निर्वह्निः पर्वतो वह्निमान्, वह्निव्याप्यधूमवांश्च' इति निश्चयस्य नासंग्रहः । ( ग० २ । हेत्वा० सामा० पृ० २७ )

४ अत्रेदमवधेयम्—संशये च, प्रत्येककोटिनिश्चयीयविशेष्यताभ्यामतिरिक्तैव विशेष्यता वर्तते, इति । ( ग० साधा० )

५ तादृशज्ञानं च 'साध्याभावांशे निश्चयः' इत्युच्यते ।

कलञ्जभक्षणं निषिद्धम्, । यथा वा–'न सुरां पिबेत्' (श्रुतिः) इत्यादौ सुरापानं निषिद्धम् । (स्व०)

[ख] भ्रमावगतेष्टसाधनतानिषेधिनञ्पदयोगिवाक्यगम्यः, इत्यप्याहुः । (वाच०)

**निषेधः**—१ (वाक्यम्) [१] अनिष्टसाधनताबोधको वाक्यविशेषः । स च द्विविधः । लौकिकः, वैदिकश्च । तत्र लौकिकम्–'विषं मा भुङ्क्ष्व' इति वाक्यम् । वैदिकं तु–'न कलञ्जं भक्षयेत्,' 'न सुरां पिबेत्,' 'अष्टम्यां मांसं नाश्नीयात्,' इत्यादिवाक्यम् ।

[२] [क] मीमांसकास्तु,—पुरुषस्य निवर्तकं वाक्यं निषेधः । यथा–'न कलञ्जं भक्षयेत्' इत्यादिवाक्यम्, इत्याहुः । (लौ० भा० पृ० ४६)

---

१ अत्र निषिद्धत्वं चाधर्मोपादकत्वम् ।

२ अत्र,–मांसभोजनेऽनिष्टसाधनत्वं बोधयति, इति बोध्यम् । (वाच०)

३ तथा हि–निषेधस्तु, निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य (कलञ्जभक्षणादेः) परानिष्टसाधनत्वमाक्षिपन् पुरुषं ततो निवर्तयति, इति । (लौ० भा० पृ० ४६)

४ अत्र प्रत्ययार्थस्यैव* (आख्यातांशवाच्यायाः प्रवृत्तिरूपार्थभावनायाः) नञर्थेऽन्वयः ।

---

* अत्रायं विशेषो ज्ञेयः–यदा तु, प्रत्ययार्थस्य तत्र (नञर्थे) अन्वये बाधकम् तदा धात्वर्थस्यैव तत्र (नञर्थे) अन्वयः । तच्च बाधकं द्विविधम् ।–'तस्य व्रतम्' इत्युपक्रमः, विकल्पप्रसक्तिश्च । तत्राद्यम्–"नेक्षेतोद्यन्तमादित्यम्" इत्यादौ । तथा च–स्नातकव्रतस्य कर्तव्यार्थत्वेनोपक्रमात् तदनुरोधेनात्रत्यनञा धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यत इति पर्युदासाश्रयणम् । एवं च–'आदित्यविषयकानीक्षणसंकल्पेन भावयेत्' इति वाक्यार्थः ।

द्वितीयं बाधकं (विकल्पप्रसक्तिः) तु–"यजतिषु ये यजामहं करोति, नानुयाजेषु" इत्यादौ । अत्र विकल्पप्रसक्तौ च नञोऽनुयाजसंबन्धमाश्रित्य पर्युदासस्यैवाश्रयणम्; न प्रतिषेधस्याश्रयणम् । इत्थं च–'अनुयाजव्यतिरिक्तेषु यजतिषु "ये यजामहे" इति शब्दं कुर्यात्' इति वाक्यार्थबोधः; नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वात् । एवं च–न विकल्पः, इति । (लौ० भा० पृ० ४८—५१)

† अत्र प्रमाणम्–नञश्चैवं स्वभावः 'स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्' इति । यथा–घटो नास्तीत्यादौ–अस्तीतिशब्दसमभिव्याहृतौ नञ् घटसत्त्वविरोधिघटासत्त्वं गमयति; । तदिह

[ख] निवृत्तिपरं वाक्यम् । यथा—'न कलञ्जं भक्षयेत्'[1] इति । (त० कौ० ४। पृ० १७) २ अभावः । यथा—"त्रैकालिकनिषेधप्रतियोगित्वम्" इत्यादौ ।

**निषेधविधिः**[2]—(विधिः) अभावे इष्टसाधनताबोधकं वाक्यम् । यथा—"एकादश्यां न भुञ्जीत" इत्यादिवाक्यं[3] निषेधविधिः[4] । (वाच०)

**निषेधशेषः**—'निन्दा—अर्थवाद' शब्दवदस्यार्थोऽनुसंधेयः । (लौ० भा० पृ० ९४)

**निष्कर्षः**—१ निश्चयः । यथा—'निष्कृष्टार्थः' इत्यादौ । २ स्वरूपम् । यथा—"स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते" (भा० प० श्लो० १३९) इत्यादौ । ३ सारांशः । (मेधा०, कुल्लू०) । यथा—"एतद्विदन्तो विद्वांसस्त्रयीनिष्कर्षमन्वहम्" (मनु० अ० ४। श्लो० ९२) इत्यादौ । ४ इयत्तादिना स्वरूपपरिच्छेदः । (वाच०)

**निष्क्रमणम्**—१ स्पर्शवद्द्रव्यसंचारः । (वै० उ०) यथा—सांख्यमते "निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्" (वै० २।१।२०) इत्यादौ । २ आ

---

१ अत्र 'कलञ्जभक्षणं नेष्टविशेष*साधनम्' इति वाक्यार्थः । (त० कौ० ४ । पृ० १७)

२ तदर्थश्च—निषेधे (अभावे), विधिः (इष्टसाधनताधीहेतुः), इति । (वाच०)

३ अत्र, भोजनाभावे एवेष्टसाधनत्वं बोधयति; न तु भोजने विध्यर्थेष्टसाधनत्वाभावम् । अतः निषेधवाक्यादस्य भेदः । (ग०) अस्यापि ("एकादश्यां न भुञ्जीत" इति वाक्यस्यापि) निषेधत्वे, कालमात्रापेक्षतया† तत्कालमात्रेण निवृत्तिः स्यात्, इति । एवम्—"नेक्षेतोद्यन्तमादित्यम्" इत्यादावपि निषेधविधित्वमाहुः । (वाच०)

४ अत एव,—एकादशीभोजनाभावस्य अभोजनसंकल्परूपस्य व्रतत्वम्, तिथिखण्डविशेषनियमनं च संगच्छते ।

---

•* लिङ्समभिव्याहृतो नञ् लिङ्र्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति, इति । (लौ० भा० पृ० ४८)

* इष्टविशेषश्चात्र पापानुत्पत्तिरेव; तथैव वाक्यतात्पर्यात्, इति विज्ञेयम् । (त० कौ० ४ । पृ० १७)

† तदुक्तं भट्टैः—"निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते" इति । (वाच०)

प्रसवाच्चतुर्थे मासि शिशोः कर्तव्यः प्रथमनिष्क्रमनिमित्तः संस्कारविशेषो निष्क्रमणम्, इति धर्मज्ञा मौहूर्तिकाश्च वदन्ति ।

**निष्ठा**—१ [ क ] वृत्तिः ( विद्यमानत्वम् ) । ( मु० २। व्याप्ति० पृ० १४० ) यथा—“ अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ” ( भा० प० श्लो० ७० ) इत्यादौ ।

[ ख ] आधेयत्वम् । ( ख० ) २ “क्तक्तवतू ( प्रत्ययौ ) निष्ठा” इति शाब्दिका आहुः । ३ [ १ ] वेदान्तिनस्तु,—स्वरूपेण स्थितिः । ( गीताभाष्य० ) । यथा—“लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्” ( गीता० ३।३ ) इत्यादौ;। [ २ ] ज्ञानम् । यथा—“ॐ तन्निष्ठस्य मोक्षोपदेशात् ॐ” ( ब्र० सू० १।१।७) इत्यादौ, इत्याहुः । ४ पौराणिकास्तु,—अवधारणम् । यथा—“घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च । न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति” ( भा० आश्व० ६६९ ) इत्यादौ, इत्याहुः । ५ समाप्तिः; निष्पत्तिः; संस्कारसंपत्तिर्वा । ( मेधा०; कुल्लू०; नन्दन० ) यथा मनु—नारदावाहतुः—“पाणिग्रहणिका मन्त्रा नियतं दारलक्षणम् । तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ” ( मनु० अ० ८। श्लो० २२७ ) ( निर्ण० सिं० ३। पृ० ३७ ) इत्यादौ, इति धर्मज्ञा आहुः । ६ नाशः । ७ अन्तः । ८ सीमा । ९ निर्वहणम् । १० याच्ञा । (वाच०)

**नृत्यम्**—[ क ] नाट्यशास्त्रानुसारेण हस्तपादादीनामुत्क्षेपणादिकमङ्ग-

---

१ अत्र निष्ठाशब्दार्थः श्रद्धा, इति केचिदाहुः ।

२ तल्लक्षणादि यथा—“देवरुच्या प्रतीतो यस्तालमानरसाश्रयः । सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥ ताण्डवं च तथा लास्यं द्विविधं नृत्यमुच्यते । अङ्गविक्षेपबाहुल्यं तथाऽभिनयशून्यता ॥ ताण्डवं बहुरूपं तद्वारुणागलमुद्धत्तम् । छुरितं यौवतं चेति लास्यं द्विविधमुच्यते ॥ यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः । नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् ॥ मधुरं बद्धलीलाभिर्नटीभिर्यत्र नृत्यते । वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ॥ गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः । लयतालसमारब्धं ततो नृत्यं प्रवर्तते,” इति । ( संगीतदामो० )

प्रत्यङ्गोपाङ्गसहितं हावभावसमेतं च । ( सर्व० नकु० पृ० ७८ ) यथा—"शिवो नृत्यति संध्यायामुत्साहेन गणैः सह" इत्यादौ नृत्यत्यर्थः ।

[ ख ] तालमानयुक्तं सविलासाङ्गविक्षेपरूपं नर्तनम् । ( वाच० ) यथा—"गोपाङ्गनानृत्यमनन्दयत्तम्" ( भट्टिः ) इत्यादौ ।

**नैमित्तिकत्वम्**—१ निमित्तजन्यत्वम् । ( स्व० ) यथा—"द्वयोर्नैमित्तिको द्रवः" ( भा० प० श्लो० २८ ) इत्यादौ—सुवर्ण—लाक्षादीनां द्रवत्वस्य तेजःसंयोगरूपनिमित्तजन्यत्वम् । ( मु० १ ) २ धर्मज्ञास्तु—अनियतनिमित्तकत्वम् । यथा—पुत्रजन्माश्रित्य विहितस्य जातेष्ट्यादेः, ग्रहणादिनिमित्तमाश्रित्य विहितस्य स्नानादेश्च नैमित्तिकत्वम्, इत्याहुः । ३ स्मार्तास्तु,—निमित्तनिश्चयवदधिकारिकर्तव्यत्वम् । यथा—"यत्तु पापोपशान्त्यै च दीयते विदुषां करे । नैमित्तिकं तदुद्दिष्टं दानं सद्भिरनुष्ठितम्" ( गरुडपु० ) इत्यादौ, इत्याहुः । ( वाच० )

**नैमित्तिकी**-संज्ञा—( रूढनाम ) [ १ ] यत् नाम जात्यवच्छिन्नसंकेतवत्, सा नैमित्तिकी संज्ञा[1] । यथा—गो—चैत्रादिः । (श० प्र० श्लो० १८ । टी०) [ २ ] केचित्तु[2]—जात्यवच्छिन्नशक्तिमन्नाम नैमित्तिकम् । यथा—गो—गवयादि, इत्याहुः । ( श० प्र० श्लो० २२। पृ० २६ )

**नैयायिकः**[3]—षोडशपदार्थानुसारिन्यायज्ञः । यथा—"नैयायिकानां तु नये द्व्यणुकादावपीष्यते" ( भा० प० श्लो० १०७ ) इत्यादौ गोतमर्ष्यादिर्नैयायिकः । स च ( परममहर्षिर्गोतमः ) पञ्चाध्यायात्मकं न्यायदर्शनं[4] नाम सूत्रोपबद्धं प्रणिनाय ।

---

१ सा हि, गौर्गच्छतीत्यादौ गोत्व—चैत्रत्वादि—जात्यवच्छिन्नमेव गवादिकमभिधत्ते, न तु गोत्वादिजातिमात्रम्; 'गोपदं गोत्वे संकेतितम्' इत्याकारकग्रहात्, गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुपपत्तेः, एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्, इति । ( श० प्र० श्लो० १८ । पृ० १७)

२ ये तु जात्यवच्छिन्नसंकेतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुः, ते इत्यर्थः । ( श० प्र० श्लो० २२ । पृ० २६ )

३ अत्र व्युत्पत्तिः 'न्यायं वेत्त्यधीते वा' इति नैयायिकः । ( उक्थादि० ठक् )

४ तच्च "प्रमाणप्रमेयसंशयप्रयोजन—......" ( गौ० सू० १।१।१ ) इत्याद्यारभ्य "हेत्वा-

**नैर्ऋती**—१ ( दिक् ) [ क ] सुमेरुव्यवहितोदयगिरिव्यवहिता च दिक् । ( वै० वि० २।२।१० ) यथा—अक्कलकोटग्रामान्नैर्ऋत्यां [illegible]ळकीग्रामो द्वादशसु क्रोशेषु । ( स्व० )

[ ख ] दक्षिणपश्चिमदिक् । ( वै० उ० २।२।१० ) यथा—“नैर्ऋतीं दिशमाश्रयेत्” ( आ० त० ) इत्यादौ । ( वाच० ) २ मूलनक्षत्रम्, इति मौहूर्तिका आहुः ।

**नैवेद्यम्**—“निवेदनीयं द्रव्यं तु नैवेद्यमिति कथ्यते” ( स्मृतिः ) । तच्च पञ्चविधम्—‘भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पञ्चमम् । सर्वत्र चैतन्नैवेद्यमाराध्यस्य निवेदयेत्’ इति ( कालि० पु० ) ( वाच० )

**नोदनम्**—१ [ क ] स संयोगविशेषः, येन संयोगेन जनितं कर्म संयोगिनोः परस्परं विभागहेतुर्न भवति; यः संयोगः शब्दनिमित्तकारणं न भवति वा । ( वै० उ० ५।२।१ )

[ ख ] क्रियादिकारणीभूतः संयोगः । ( सि० च० )

[ ग ] चलस्य वेगवद्द्रव्यसंयोगविशेषः, इति मायावादिन आहुः । २ खण्डनम् । ३ [ १ ] प्रेरणम् । [ २ ] विधिरूपा ( चोदना ) ।

**न्यायः**—१ [ १ ] [ क ] प्रमाणैरर्थपरीक्षणम् ।

[ ख ] प्रत्यक्षागमाश्रितमनुमानम् । ( वात्स्या० १।१।१ ) ( न्या० वा० १। पृ० १४ ) [ २ ] परार्थानुमानम् । ( सर्व० अक्ष० पृ०

---

आसाश्च यथोक्ताः” ( गौ० सू० ५।२।२५ ) इत्येतत्पर्यन्तं सूत्रसमूहात्मकं न्यायशास्त्रम् । शिष्टं त्वक्षपादशब्दव्याख्याने द्रष्टव्यम् ।

१ तस्या अधिष्ठाता निर्ऋतः, इति विज्ञेयम् । (वै० उ० २।२।१०)

२ एतन्मतेऽभिघातस्तु, स्थिरस्य वेगवद्द्रव्यसंयोगविशेष एव ।

३ अत्र व्युत्पत्तिः—‘नीयते प्राप्यते विवक्षितार्थसिद्धिरनेन’ इति न्यायः, इति ।

४ किमुक्तं भवति ?,—समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः, इति । (न्या० वा० १। पृ० १४) .

५ प्रत्यक्षागमाश्रितमिति प्रत्यक्षागमाविरोधि । यदि ह्यनुमानाधिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसंधीयते, अथ स्फुटतरप्रत्ययो भवति । (न्या० वा० १ । पृ० १४)

६ इदं च शब्दात्मकमेवेति यद्यपि अग्रे एव (पृ० ४१०। अङ्क ३ [क] अत्रत्यग्रन्थे) अन्तर्भवति; तथाप्यस्यानुमानत्वेनोक्तत्वात्पार्थक्येनानुमानप्रकरणे एतत्स्थापितम्, इति ज्ञेयम् ।

११४ ) २ आन्वीक्षिकी विद्या, न्यायशास्त्रम् । ( वात्स्या० १।१।१ )* ( गौ० वृ० १।१।१ ) ३ [ क ] साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्यै ( पञ्चावयवोपेतवाक्यात्मकस्य न्यायस्य ) पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवाय आगमः प्रतिज्ञा; हेतुरनुमानम्; उदाहरणं प्रत्यक्षम्; उपनयनमुपमानम्; सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनम्, इति । सोऽयं परमो न्यायः, इति । ( वात्स्या० १।१।१ )

---

१ सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते । तथा च–"न्यायो मीमांसा धर्मशास्त्राणि" इति श्रुतिः ॥ "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इत्यादिस्मृतिः ( याज्ञव० अ० १ । श्लो० ३ ) ॥ "मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः" इति पुराणम् ॥ "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः" इति ( मनु० अ० ७ । श्लो० ४३ ) तथा–"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इत्यादि ( मनु० अ० १२ । श्लो० १०६ ) ॥ मोक्षधर्मे–"तत्रोपनिषदं तात! परिशेषं तु पार्थिव! । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं* पराम्" इति । ( गौ० वृ० १।१।१। पृ० ७ )

२ अत्रोक्तं पक्षिलस्वामिना ( वात्स्यायनेन )–"इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते; यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या" इति । सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपवत्† सर्वविद्यानां भवति; प्रकाशकत्वात्, इति । ( वात्स्या० १।१।१ )

३ अत्रायं नियमः,—[क] 'संशयितेऽर्थे न्यायः‡ प्रवर्तते' इति । ( वात्स्या० १।१।१ ) [ख] 'नानुपलब्धे, न निर्णीतेऽर्थे न्यायः प्रवर्तते; अपितु संदिग्धे' इति च । ( त० भा० पृ० १० )

---

* उपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्यः, इत्युक्तमिति । ( गौ० वृ० १।१।१ )

† "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे परीक्षिता" इति । ( वात्स्या० १।१।१ )

‡ अत्र गदाधर आह–"जल्पस्थले संशयस्यावश्यकत्वेऽपि वादस्थले न तथा; इति संशयमन्तरेणापि अनुमित्साधीनानुमितिनिर्वाहाय न्यायप्रयोगसंभवात्," इति । ( ग० २ । अवयव० पृ० २२) तथा च–'संदिग्धेऽर्थे न्यायः प्रवर्तते' इति नियमस्तु जल्पे एव, न तु वादे, इति भावः । ( स्व० )

[ख] समस्तरूपोपेतलिङ्गबोधकवाक्यजातम् न्यायः। (कु० १। टी० हरिदासः) (म० प्र० २। पृ० ३१)

[ग] अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम्। (चि० २। अव० पृ० ७६)

[घ] क्रमिकप्रतिज्ञादिसमुदायः। यथा—पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञादिघटितवाक्यपञ्चकं न्यायः। (न्या०

१ अत्र समस्तरूपाणि च,—पक्षसत्त्वम्, सपक्षसत्त्वम्, विपक्षासत्त्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षितत्वं चेति पञ्च। (म० प्र० २। पृ० ३१)

२ तल्लक्षणं च न्यायत्वम्। तच्चात्र [क] उचिता—*नुपूर्वीकप्रतिज्ञाद्यवयवपञ्चकसमुदायत्वम्। (दीधि० २। अव० पृ० १६५) (न्या० बो० २। पृ० १५) [ख] तादृशयत्किंचिच्छाब्दबोधनिरूपिता शब्दज्ञाननिष्ठा या या कारणता, तत्तदवच्छेदककोटिप्रविष्टयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वम्। (ग० अवयव० न्यायल०)

३ प्रतिज्ञादीनि पञ्च वाक्यानि तु,—प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनम्† इति। यथा—(१) पर्वतो वह्निमान्, (२) धूमात्, (३) यो यो धूमवान् स स वह्निमान्, (४) वह्निव्याप्यधूमवानयम्, (५) तस्माद्वह्निमान्, इति। (न्या० म० २। पृ० २३) अत्र—उदाहरणान्त एव प्रयोगः, इति न वाच्यम्; तृतीयलिङ्गपरामर्शस्य व्याप्तपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात्। तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात्, इति।

कथायामाकाङ्क्षाक्रमेणाभिधानमिति प्रथमं साध्याभिधानं विना 'कुतः' इत्याकारक—हेत्वाद्याकाङ्क्षाऽभावात् प्राथम्येन प्रतिज्ञाप्रयोगः। तथा हि—[क] विप्रतिपत्त्यग्रे समयबन्धानन्तरं 'शब्दानित्यत्वं साधय' इति मध्यस्थस्य वादिनो वाऽऽकाङ्क्षायां शब्दानित्यत्वं साध्यम्। न च, साध्यनिर्देशं विना हेतुवाक्यं निष्प्रतियोगिकमन्वयं बोधयितुमीष्टे। तस्मात् साध्यनिर्देशानन्तरं 'कुतः' इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम्, इति प्रतिज्ञानन्तरं हेतूपन्यासः। हेतावुक्ते 'कथमस्य गमकत्वम्' इत्याकाङ्क्षायां व्याप्तिपक्षधर्मतयोः प्रदर्शनप्राप्तौ, व्याप्तेः प्राथम्यात् तत्प्रदर्शनायोदाहरणम्। उदाहरणानन्तरं

* अत्रौचित्यं च कथकसंप्रदायसिद्धत्वम्। (चि० प्र० रुचि०)

† मीमांसकानामुदाहरणान्तो (प्रतिज्ञा—हेतु—उदाहरण—एतत्त्रयम्) न्यायः। बौद्धानामुदाहरण—उपनय—द्व्यावयवको न्यायः। अतिप्राचीननैयायिकानां दशावयवको न्यायः। दशावयवास्तु,—प्रतिज्ञादिपञ्चकम्, संशयः, जिज्ञासा, शक्यप्राप्तिः, प्रयोजनम्, संशयव्युदासश्चेति। (म० प्र० २। पृ० ३३) (ग० सव्य० पृ० २९) (चि० प्र० पृ० ५२) अधिकं त्ववयवशब्दव्याख्याने प्रपञ्चितम्।

म० २) ४ प्रमाणानामनुग्राहकस्तर्कः । (भा०) ५ वेदार्थनिर्णयसाधनं अधिकरणात्मकः पदार्थः । ६ उचितः । यथा—'मानाधीना मेयसिद्धिः' इत्यादिन्यायः । ७ लोक—शास्त्रप्रसिद्धदृष्टान्तविशेषः । तत्र लोकप्रसिद्धो यथा—"अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्" (सांख्य० कौ० श्लो० १। टी०) इति; 'कदम्बमुकुलन्यायः' 'सूचीकटाहन्यायः' इत्यादिश्च । शास्त्रप्रसिद्धस्तु यथा—'सविशेषणे हि वर्तमानौ विधिनिषेधौ विशेषणमुपसंक्रामतः, सति विशेष्यबाधे' इति न्यायः; 'अध्यारोपन्यायः' इत्यादिः ।

**न्यायशास्त्रम्**[३]—'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेन, न्या-

---

भवतु व्याप्तिः; तथाऽपि—'व्याप्तं किं पक्षे वर्तते न वा' इत्याकाङ्क्षायां, व्याप्तस्य पक्षधर्मत्वप्रदर्शनायोपनयः । उपनयानन्तरं निगमनम् । न च 'व्याप्तिपक्षधर्मतायाश्चतुर्भिरेवावयवैः पर्याप्तेः, किं तेन' इति वाच्यम्; अबाधितासत्प्रतिपक्षत्वयोरलाभे चतुर्णामप्यपर्यवसानात्, इति । (चि० २ । अव० पृ० ७७–८२) [ख] 'पर्वतो वह्निमान्' इति प्रतिज्ञाते 'कुतः' इत्याकाङ्क्षायां 'धूमात्' इति प्रयोगः । ततः—'कथमस्य गमकत्वम्?' इत्याकाङ्क्षायां, व्याप्तिपक्षधर्मताभ्यां; तत्र 'काऽसौ व्याप्तिः?' इत्याकाङ्क्षायां 'यो यो धूमवान् स वह्निमान् यथा* महानसम्' इति प्रयोगः । ततः—'व्याप्तस्य पक्षधर्मत्वमस्ति नवा?' इत्याकाङ्क्षायां 'वह्निव्याप्यधूमवांश्चायम्' इति, 'तथा चायम्' इति वा प्रयोगः । ततः—'व्याप्तिपक्षधर्मतावानप्ययं हेतुर्बाधित एव, सत्प्रतिपक्ष एव वा स्यात्?' इत्याकाङ्क्षायामबाधितत्वासत्प्रतिपक्षत्वबोधनाय 'तस्माद्वह्निमान्' इति, 'तस्मात्तथा, इति वा निगमनप्रयोगः । न च, अनेनाप्यबाधितत्वादिबोधः कथं जन्यते? इति वाच्यम् । साध्यपुनर्वचनस्यानुवादतया प्रयोजनजिज्ञासायां परिशेषाद्बाधादिविधूननमेव तत्, इत्यवसीयते; तथैव व्युत्पत्तेः । तदाहुः—"उपसंहारस्यायं महिमा, यद्विपरीतशङ्काविलोपनं नाम" इति । (म० प्र० २ । पृ० ३१—३२)

१ तदनुगृहीतप्रमाणगम्यो भगवानपि (विष्णुः) न्यायशब्देन लक्षितलक्षणया प्रतिपाद्यते । (आनन्दगिरिः) यथा—"न्यायप्रसूनाञ्जलिः" "न्यायकुसुमाञ्जलिः" इत्यादौ । (वाच०)

२ स च न्यायः पूर्वोत्तरवेदसंबन्धो जैमिनिवेदव्यासाभ्यां बहुप्रकारो दर्शितः ।

३ एतच्छास्त्रस्य प्रयोजनं च निःश्रेयसप्राप्तिः । यदाह भाष्यकारः—'आत्मादेः खलु प्रमेयस्य

---

*नेदं बोध्यम्—दृष्टान्तप्रयोगस्तु सामयिकः; न नियतः, इति ज्ञेयम् (म० प्र० २ । पृ० ३२)

यस्य परार्थानुमानापरपर्यायस्य सकलविद्यानुग्राहकतया सर्वकर्मानुष्ठानसाधनतया प्रधानत्वेन तथा (न्याय इति) व्यपदेशो युज्यते[1]। (सर्व० अक्ष० पृ० ११४) यथा—गोतममुनिप्रणीतं "प्रमाणप्रमेयसंशयप्रयोजन—" (गौ० १।१।१) इत्याद्यारभ्य "हेत्वाभासाश्च यथोक्ताः" (गौ० ५।२।२५) इत्येतत्पर्यन्तं पञ्चाध्यायात्मकं सूत्रोपनिबद्धं न्यायदर्शनम्[3]। अधिकं तु न्यायशब्दव्याख्यानावसरे संपादितम्।

**न्यायसिद्धान्तः**—न्यायो गोतमप्रणीतसूत्रसंदर्भरूपा तर्कविद्या, तत्र सिद्धान्तोऽबाधितार्थः। (म० प्र० पृ० ३) यथा—'न्यायसिद्धान्तमञ्जरी' इत्यादौ—नैयायिकस्य 'मनस इन्द्रियत्वम्, पार्थिवावयव-अवयवि-एतदुभयेषु च पाकः,' इति न्यायसिद्धान्तः।

**न्यायाभासः**—यत्पुनरनुमानं प्रत्यक्षागमविरुद्धम्, न्यायाभासः सः। (वात्स्या० १।१।१) (न्या० वा० १। पृ० १९) (ल० म० ५। ४५) तत्रागमविरुद्धं यथा—'शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवत्' इति। प्रत्यक्षविरुद्धं तावत्—'वह्निरनुष्णः कृतकत्वाद्घटादिवत्' इति। (न्या० वा० १। पृ० १९)

**न्यूनम्**—१ (निग्रहस्थानम्) [क] हीनमन्यतमेनाप्यवयवेन न्यूनम्। (गौ० ५।२।१२) प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं

---

तत्त्वज्ञानान्निश्रेयसाधिगमः। तच्चैतदुत्तरसूत्रेणानूद्यत इति। हेयं, तस्य निर्वर्तकं, हानमात्यन्तिकम्, तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति। (वात्स्या० १।१।१। पृ० २)

१ तथाऽभाणि सर्वज्ञेन—"सोऽयं परमो न्यायः; विप्रतिपन्नपुरुषप्रतिपादकत्वात्, तथा प्रवृत्तिहेतुत्वाच्च, इति। (सर्व० अक्ष० पृ० ११५)

२ तदुक्तम्—"कणादेन च संप्रोक्तं शास्त्रं वैशेषिकं महत्। गोतमेन तथा न्यायं सांख्यं च कपिलेन वै" इत्यादि। (पद्मपुराणे उत्तरखण्डे अ० २०७)

३ त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः। उद्देशः, लक्षणम्, परीक्षा चेति। (वात्स्या० १।१।२) (त० भा० पृ० १)

४ तदर्थश्च—अवयवेन स्वशास्त्रसिद्धेन, इति। तेन, सौगतस्य द्व्यवयवाभिधानेऽपि न न्यूनत्वम्। (गौ० वृ० ५।५५)

निग्रहस्थानम्। साधनाभावे साध्यासिद्धिरिति। (वात्स्या० ५।२।१२) [ख] यत्र विवक्षितार्थसमर्पकात्किंचिन्न्यूनम्, तत्। (त० भा० पृ० ९१) [ग] यत्किंचिदवयवशून्यावयवाभिधानम्। (गौ० वृ० ५।५५) (दि० १। पृ० २२) (नील० पृ० ४९) यथा—न्यायमते पञ्चानामवयवानां सिद्धान्तसिद्धत्वेन, 'पर्वतो वह्निमान्, धूमात्, यो यो धूमवान् स वह्निमान्, तथा चायम्,' इति चतुर्णामेवावयवानामभिधानं न्यूनं भवति। (स्व०) २ ऊनम्। ३ गर्ह्यम्, इति च काव्यज्ञा आहुः।

**न्यूनवृत्तित्वम्**—तदपेक्षयाऽल्पदेश—काल—वृत्तित्वम्। यथा—पृथिवीत्वस्य द्रव्यत्वमपेक्ष्य न्यूनवृत्तित्वम्। न्यूनवृत्तिधर्म एव व्याप्यधर्मो भवति। (स्व०)

---

## प.

**पक्षः**—१ [क] विप्रतिपत्त्येककोटिः। (गौ० वृ० १।४१) यथा—"पक्षप्रतिपक्षपरिग्रहो वादः" (गौ० १।४१) इत्यादौ—'शब्दो नित्यो न वा इति विप्रतिपत्तौ 'नित्यः' इति पक्षः; 'अनित्यः' इति प्रतिपक्षः। (स्व०)

[ख] वादिप्रतिवादिभ्यां दर्शितविप्रतिपत्तिरूपः संशायकः कोटिभेदः। यथा—पर्वतपक्षकवह्निसाध्यकस्थले 'पर्वतो वह्निमान्न वा' इति। २ पक्षतावान् (मु० २। पृ० १४६) यथा—"संदिग्धसाध्यधर्मा धर्मी; सिषाधयिषितसाध्यधर्मा धर्मी वा पक्षः" (चि० २। पृ० ३३) इत्यादौ—पर्वते धूमेन वह्निसाधने पर्वतः पक्षः। (त० सं०) (त० भा० पृ० १४–१९) ३ व्यवहारज्ञास्तु,—"प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः" इत्याहुः। (वीरमित्रो० अ० २। लेख्य० पृ० १९, तत्र बृहस्पतिः) ४ मौहूर्तिकास्तु,—शुक्ल-

---

१ न चायमपसिद्धान्तः; सिद्धान्तविरुद्धानभ्युपगमात्। अपि तु—समाक्षोभादिनाऽनभिधानात्। (गौ० वृ० ५।५५)

२ अत्र 'वह्निमान्' इत्येकः पक्षः, 'न वा' इत्यपरः पक्षः, इति ज्ञेयम्।

३ वक्ष्यमाणा पक्षता यस्मिन्नस्ति, स पक्ष इत्यर्थः। (वै० उ० ९।२।१)

कृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथ्यात्मकः कालः, इत्याहुः ५ वैयाकरणास्तु,—समूहः । यथा—केशपक्ष[1] इत्यादौ, इत्याहुः । ६ काव्यज्ञास्तु,—खगानां पतत्रम्; ७ पार्श्वभागः; ८ गृहम्; ९ विरोधः; १० सहायः; ११ बलम्; १२ मित्रम्; १३ वलयः; चेत्याहुः । १३ देहार्धभागः, इति भिषज आहुः । ( वाच० )

**पक्षता**[2]—[ क ] साध्यवत्त्वेन संदिह्यमानत्वम् । ( न्या० म० २ । पृ० १९ )

[ ख ] संदिग्धसाध्यत्वेनोपात्तत्वम् ।

[ ग ] संदिग्धसा[3]ध्यधर्मत्वम्[4] । ( चि० २ । पृ० ३३ ) ( त० सं० २ ) यथा—धूमानुमाने पर्वतस्य पक्षत्वम् । ( त० भा० पृ० १९ )

---

१ अत्र केशात्परः समूहार्थे पक्षप्रत्ययो ज्ञेयः । ( वाच० )

२ यत्र साध्यनिश्चयोऽस्ति, तत्रानुमितेरनुत्पत्तिः; इति साध्यनिश्चयकालेऽनुमितिवारणाय साध्यसंशयरूपा पक्षता* अनुमितेरङ्गम्; इति प्राचीनमताभिप्रायेणेयं पक्षता, इति बोध्यम् । ( न्या० म० २ । पृ० १९ ) ( म० प्र० २ । पृ० २३ )

३ अत्र 'संदिग्धं संदेहप्रकारीभूतं साध्यं यत्र' इति विग्रहे, संदेहप्रकारीभूतसाध्यवानित्यर्थः । संदेहः साध्यपारतन्त्र्येण धर्मिण्येवान्वेति; इति—विशेष्यतासंबन्धेन साध्यप्रकारकसंदेहवत्त्वम् इत्यर्थः । ( ग० संशय पक्ष० ) ( वाक्य० २ । पृ० १६ ) ( न्या० बो० २ । पृ० १६ ) तथा च–[ क ] यत्र साध्यस्य यादृशसंबन्धावगाहिनिर्णयनिवर्त्यो यः †संशयः, स तत्र तादृशसंबन्धेन साध्यानुमितौ पक्षता, इति निष्कृष्टोऽर्थः । ( दीधि० २ । पक्ष० पृ० १२३ ) [ ख ] जीवनाथमिश्रास्तु,—उत्पाद्यसाध्यवत्तानिर्णयनिवर्त्यसंशयोत्पत्तिप्रतिबन्धकमानत्वावच्छिन्नाभावः पक्षता, इत्याहुः । ( वै० उ० ९।२।१ )

४ इदं ( लक्षणत्रयम् ) 'अनुमितेः पूर्वं साध्यसंदेहो नियमेन वर्तते' इत्यभिप्रायेण प्राचीनैः कृतम् । ( न्या० बो० २ । पृ० १६ )

---

* अत्र भाष्यम्–"नानुपलब्धे, न निर्णीतेऽर्थे न्यायः प्रवर्तते; अपि तु–संदिग्धे" इति । ( वात्स्या० ) ( त० भा० पृ० १० ) अत्राधिकं तु 'न्याय'शब्दटिप्पण्यां द्रष्टव्यम् ।

† अत्र संशयत्वं निर्वक्ति—बाधप्रतिबाध्यतावच्छेदकीभूतस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता, तच्छालिसंशयत्वम्, इति । ( ग० २ । पक्ष० पृ० ३ )

अत्र, ऊहापोहादिकं सविस्तरं गदाधर्यादिक्रोडपत्रेषु द्रष्टव्यम्; विस्तरभयान्नात्र संपाद्यते ।

**पक्षता**— [ १ ] [ क ] सिषाधयिषाविरहसहकृतसाधकमानाभावः । ( चि० २। पृ० ३४ )

[ ख ] सिषाधयिषाविरहविशिष्टसिद्ध्यभावः । ( न्या० म० २। पृ० १९ ) ( भा० प० श्लो० ७१ )

---

१ श्रवणसंबद्धमात्रे घनगर्जिते 'इदं घनीयं गर्जितविशेषत्वात्' इत्यनुमानस्य * संशयं विनाप्यानुभाविकत्वात्; संशयविघटकशाब्दसिद्ध्यनन्तरं † अनुमितेर्विहितत्वेन तत्र संशयाभावात्; साध्यनिश्चये ( प्रत्यक्षेऽपि वह्नौ ) सत्यप्यनुमित्सायां सत्यामनुमितेरुत्पत्तेश्च; तन्निर्वाहार्थं नव्यमतानुसारेणेयं पक्षताऽनुमितिप्रयोजिका, इति बोध्यम् । ( न्या० म० २। पृ० १९ ) ( म० प्र० २। पृ० २४ ) ( त० दी० २। पृ० २४ )

२ अत्रायमर्थः—सिषाधयिषा अनुमित्सा, साधकमानं सिद्धिः ( साध्यनिश्चयः ), इति । एवं च—सिद्धिरनुमितिविरोधिनी; ( अतः ) तत्र सिषाधयिषा उत्तेजिका वाच्या; तत्सत्त्वेऽनुमित्युदयात् । तथा च—अनुमित्साविरहविशिष्टसिद्धिर्विरोधिनी, तदभावः पक्षता, इति पर्यवसितोऽर्थः । ( म० प्र० २। पृ० २३ )

३ अत्रेदं बोध्यम्—सिद्धेः ( 'पर्वतो वह्निमान्' इति निश्चयस्य ) सत्त्वे 'पर्वतो वह्निमान्' इत्यनुमितेरनुत्पत्तेः, सिद्धिरनुमितौ प्रतिबन्धिका; सिद्ध्यभावोऽनुमितौ कारणमिति वक्तव्यम् । एवं सत्यपि,—पर्वतादौ पक्षे साध्यनिश्चये सत्यपि, सत्यां च सिषाधयिषायां 'पर्वतो वह्निमान्' इत्यनुमित्युत्पत्तिदर्शनात् तत्र पक्षतासंपत्तये सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणम् । ( दीधि० २। पृ० १२४ )

४ सिद्धेः सिषाधयिषाविरहेण वैशिष्ट्यं चैककालावच्छेदेनैकात्मवृत्तित्वम् । ( दीधि० २। पृ० १३१ ) ( म० प्र० २। पृ० २४ ) तदर्थश्च—एकक्षणावच्छिन्नैकात्मसमवेतत्वम्, इति । ( ग० पक्ष० पृ० ५१ )

५ समुदितार्थस्तु—सिषाधयिषायाः ( साध्यानुमितीच्छायाः ) समवायेन योऽभावः, स्वरूप-

---

* अयमाशयः—गगनविशेष्यकमेघप्रकारकसंदेहाभावदशायामपि, गृहमध्यस्थपुरुषस्य घनगर्जितश्रवणेन 'गगनं मेघवत्' इत्याकारक—गगनत्वावच्छिन्नोद्देश्यतानिरूपितमेघत्वावच्छिन्नविधेयताक—अनुमितिदर्शनात्, प्राचीनलक्षणं विहाय नवीनैः 'अनुमित्युद्देश्यत्वं पक्षत्वम्' इति स्थिरीकृतम् । (न्या० बो० २। पृ० १६—१७) एवं सिषाधयिषामात्रं न पक्षता; विनाऽपि सिषाधयिषां, घनगर्जितमेघानुमानात् । अतः, संशयस्य सिषाधयिषायाश्च पक्षतात्वं तिरस्कृत्य सिद्धान्तसिद्धेयं पक्षता स्वीकृतेति भावः ।

† "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिश्रुत्या श्रवणानन्तरं मननं ( अनुमितिः ) विहितम् । तथा च—तत्रात्मनस्तादृशवेदवाक्येन निश्चितत्वेन संश-

3 वक्ष्यमा भिचार इति भावः ।

[ ग ] सिषाधयिषाविरोधिप्रमाणाभावः । ( वै० उ० ९।२।१ ) यथा— पर्वते धूमेन वह्निसाधने पर्वतस्य पक्षत्वम् । ( स्व० )

[ घ ] सार्वभौमस्तु,—सिसाधयिषाविरहविशिष्टस्वक्षणाव्यवहितोत्तरक्षणोत्पत्तिकानुमितिकभिन्ना या सिद्धिः, सिसाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता, इत्याह । ( दीधि० २। पृ० १२७ )

[ ङ ] उपाध्यायाश्च,—सिसाधयिषाविरहविशिष्टस्य सिद्धि—प्रत्यक्षसामग्र्योरन्यतरस्याभावः पक्षता, इत्याहुः । ( दीधि० २। पृ० १२९ ) ( दि० २। पृ० १९० )

[ २ ] [ क ] केचित्तु—अनुमित्युद्देश्यत्वम् । ( न्या० बो० २। पृ० १७)

[ ख ] सिषाधयिषामात्रं पक्षता, इत्याहुः । प्राभाकरास्तु,—विनाप्यनु-

---

समवाय—एतदुभयघटितसामानाधिकरण्य *—संबन्धेन तद्विशिष्टायाः सिद्धेः समवायेनाभावः, इति । ( नील० २। पृ० १९ ) ( ग० पक्ष० पृ० ५१ )

अत्रायं विशेषः—यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिः, तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता, इति वक्तव्यम् । ( दीधि० २। पृ० १२४ ) (मु० २ ) (न्या० म० २ ) तेन, सिद्धि—परामर्शसत्त्वे 'यत्किंचिज्ज्ञानं जायताम्' इतीच्छायामपि नानुमित्यापत्तिः; 'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इति प्रत्यक्षसत्त्वे ( शाब्दसामग्र्यसत्त्वे च ) 'प्रत्यक्षातिरिक्तं ज्ञानं जायताम्' इतीच्छायां तु भवत्येवानुमितिः । तल्लिङ्गकत्वप्रवेशेन च,—धूमपरामर्शसत्त्वे 'आलोकेन वह्निमनुमिनुयाम्' इतीच्छायामपि नानुमितिः, इति । ( मु० २। पृ० १४८—१४९ )

१ तेन, सिद्धिकाले, समानविषयकप्रत्यक्षसामग्रीकालेऽपि च नानुमित्यापत्तिः, इत्युपाध्यायानामाशयः । ( दि० २। पृ० १५१ ) अत्र,—प्रत्यक्षसामग्रीस्थाने 'अनुमानातिरिक्त—साधकमान' इति दीधितिकृत्संमतपाठोऽस्ति । ( दीधि० २। पृ० १२९ )

२ अयमभिप्रायः—पक्षताया अनुमित्यहेतुत्वमते ( प्राभाकरमते ),—विनाऽपि वह्न्यादिलिङ्गकवह्न्याद्यनुमितीच्छाम्, तादृशानुमित्युत्पत्त्या तादृशानुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य कारणताधिक्याद्गौरवम् । पक्षताहेतुतामते,—तादृशानुमितेरिच्छानियततया तत्रेच्छाया लघीयस्या हेतुतयैवोपपत्तेः, पक्षताऽपि तत्रेच्छैव, इति । ( ग० पक्ष० पृ०५८ )

---

* तदर्थस्तु—स्वरूपसंबन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसंबन्धावच्छिन्नाधेयतात्मकेन, इति । अत्र स्वपदेन सिषाधयिषाया अभावो ग्राह्यः ।

मित्सां क्वचित्परामर्शानुमितिप्रवाहस्याविरलग्नस्यानुभाविकत्वात्, कालभेदकल्पनायां च मानाभावाच्च, पक्षता नानुमितिहेतुः । परार्थानुमाने तु सिद्धसाधनमर्थान्तरविधया दूषणम्, इत्याहुः । ( दीधि० पक्षता० २। पृ० १३२–१३३ )

**पक्षधर्मता**— [ क ] व्याप्यस्य ( हेतोः ) पक्षे वर्तमानत्वम् । ( त० सं० २ ) ( भा० प० २ । श्लो० ६९ )

[ ख ] व्याप्यस्य पक्षसंबन्धः । ( वाक्य० २। पृ० १३ )

[ ग ] पक्षताश्रयवृत्तित्वम् । ( त० कौ० २। पृ० ११ ) यथा—पर्वते धूमेन वह्नौ साध्ये ' वह्निव्याप्यधूमवान् पर्वतः ' इत्यत्र धूमस्य पक्षधर्मता ।

**पक्षसमः**—( हेत्वाभासः ) संदिग्धसाध्यकधर्म्यन्तरम् । ( ग० साधा० )

**पक्षासिद्धिः**—आश्रयासिद्धिवदस्यार्थोऽनुसंधेयः । ( भा० प० २। श्लो० ७६–७७ )

**पक्षिणी**[1]—१ आगामि–वर्तमान–अहर्युक्ता रात्रिः । ( अमरः १ ) यथा—" यापयेत्पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च " ( मनु० ) इत्यादौ ।[2] २ विहगजातिस्त्री, इति काव्यज्ञा आहुः ।

**पक्षिलः**—गोतममुनिप्रणीतन्यायसूत्राणां भाष्यकर्ता वात्स्यायनो मुनिविशेषः । ( त्रिका० )

**पङ्क्तिः**—१ सजातीयपदार्थानां स्थितिविशेषः । यथा—" एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परम् । भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥ अग्निना भस्मना चैव पङ्क्तिर्पङ्क्तिर्विभिद्यते " ( कूर्मपु० अ० १९ ) इत्यादौ । २ छन्दोविशेषः, इति वृत्तशास्त्रज्ञा आहुः । ३ दशसंख्या, इति गणका आहुः । ४ गौरवम्; ५ पाकश्च; इति काव्यज्ञा आहुः । (वाच०)

---

१ अत्र 'पक्षतुल्यौ दिवसौ यस्याः सा' ( इनि, ङीप् ) इति व्युत्पत्तिः । ( वाच ० )

२ अत्रोच्यते—"*द्वावह्नावेकरात्रिश्च पक्षिणीत्यभिधीयते" इति । ( शुद्धि० त० )

---

* तत्र पूर्वदिनरात्रौ तन्निमित्ते जाते पूर्वदिवसीयदिनमादायैव 'पक्षिणी' इति व्यवहारः । ( शुद्धि० त० )

**पचनम्** }
**पचिः** } —पाकवदस्यार्थोऽनुसंधेयः। ( ल० म० ) ( गन्यु० का० २ )

**पञ्चमी**[1]— ( विभक्तिः ) तत्तद्धात्वर्थे ( पत्याद्यर्थे ) अपादानत्वादिबोधिका विभक्तिः। ( श० प्र० श्लो० ६९ ) यथा—वृक्षात्पर्णं पततीत्यादौ वृक्षपदोत्तरपञ्चमी।

**पञ्चम्यर्थश्च**[2] [ १ ] [ क ] अपादानम्[3]। यथा—भूभृतो गङ्गाऽवतरतीत्यादौ पञ्चम्यर्थः।

[ ख ] भेदप्रतियोगितावच्छेदकत्वम्, विभागश्च। यथा—वृक्षात्[4]पर्णं पततीत्यादौ पञ्चम्यर्थः। [ २ ] अवधित्वम्; अवधितानिरूपकत्वं वा।

---

१ तल्लक्षणं च पञ्चमीत्वम्। तच्च, पतधात्वर्थतावच्छेदक*-रूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वम्। ( श० प्र० श्लो० ६५। टी० )

२ तथा च सूत्रम्—"ध्रुवमपायेऽपादानम्" इति ( पा० सू० १।४।२४ )। तदर्थश्च—[ क ] अपाये विभागे, ध्रुवम् निश्चलम् ( परसमवेत—†क्रियाजन्यविभागाश्रयः). अपादानं स्यात्. इति। ( म० प्र० पृ० ६ ) [ ख ] अपाये ( विभागे ), यत्, अवधिभूतं ध्रुवम् ( निश्चलम्, प्रकृतपञ्चम्यर्थविभागजनकत्वान्वयिक्रियाशून्यम् ), तत् अपादानसंज्ञं स्यात्, इति। ( का० व्या० पृ० ९ ) ( सि० कौ० कारक० )

३ अत्र भूभृतो, गङ्गासमवेतक्रियाजन्यविभागाश्रयत्वात्, "ध्रुवमपायेऽपादानम्" ( पा० सू० १।४।२४ ) इत्यनेनापादानत्वम्। ( म० प्र० पृ० ६ )

४ वृक्षात्पर्णं पततीत्यादौ भेदप्रतियोगितावच्छेदकत्वं विभागश्च पञ्चम्यर्थः। भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः। प्रतियोगितावच्छेदकत्वस्याश्रयतासंबन्धेन, विभागस्य च जनकतासंबन्धेन, पत्यर्थक्रियायामन्वयः। एवं च—'वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं यत् वृक्षनिष्ठविभागजनकं पतनम्, तदाश्रयः पर्णम्' इत्याकारको बोधः। ( ग० व्यु० कारक० ५। पृ० १०४ ) ( का० व्या० पृ० ९ )

---

* तले पतंस्तरुं त्यजतीत्यादौ वस्तुगत्या पत्यर्थे विभागस्य बोधिकाऽपि द्वितीया न पतनत्वजात्यवच्छिन्ने; तस्या एव पत्यर्थतावच्छेदकत्वात्। नरकं पतित इत्यादौ भोगावच्छिन्नस्य दुरितस्य पत्यर्थत्वेऽपि द्वितीयया न तत्र विभागोऽनुभाव्यते; परं तु—आधेयत्वम्; ( अतो न तत्र पञ्चम्यापत्तिः ) इति। ( श० प्र० श्लो० ६५। टी० )

† अत्र गङ्गायामतिव्याप्तिवारणाय परसमवेतेति क्रियाविशेषणं दत्तम्।

अयं विशेषः—स्पन्दजन्यविभागाश्रयत्वेन वृक्षादेरपादानत्वे 'वृक्षात्पर्णं स्पन्दते, इत्यपि प्रयोगः स्यात्, अतः क्रियेति सकर्मकधात्वर्थपरम्, इति। ( का० व्या० पृ० ९ )

यथा—वृक्षाद्विभजते फलमित्यादौ पञ्चम्यर्थः । [ २ ] हेतुत्वम् । यथा—घटो दण्डात्, वह्निर्धूमात्, इत्यादौ पञ्चम्यर्थः । यथा वा—व्याघ्राद्बिभेती-

१ अत्रेदं बोध्यम्—[ १ ] अत्र, नापादाने पञ्चमी, किंतु—अवधौ; 'वृक्षावधिकविभागाश्रयः फलम्' इत्यवधित्वस्यैव बोधात्, इति । ( म० प्र० पृ० ६ ) [ २ ] अत्र विभागावधित्व-मपादानत्वम् । 'अपाये विभागे ध्रुवमवधिभूतमपादानमिति सूत्रार्थः । तथा च—'वृक्षनिष्ठावधितानिरूपकविभागाश्रयः फलम्' इति वाक्यार्थः । ( का० व्या० पृ० ९ ) ( श० प्र० श्लो० ६८ । टी० )

२ अत्र हेतुत्वं द्विविधम् । कारकत्वम्, ज्ञापकत्वं* च ( प्राचीनमते ) । तत्राद्यं यथा घटो दण्डादित्यादौ । द्वितीयं यथा—वह्निर्धूमादित्यादौ । ( म० प्र० पृ० ६ )

अत्र वदन्ति—दण्डाद्घटः, धूमाद्वह्निमानित्यादौ पञ्चमी नापादाने; क्रियायोगाभावात् । किंतु—जनकत्व—ज्ञापकत्वे, जन्यत्व—ज्ञाप्यत्वरूपे हेतुत्वे वा "हेतौ" ( पा० सू० २।३।२३ ) इति सूत्रेणानुशिष्टा पञ्चमी । न चैवम्,—"जनिकर्तुः प्रकृतिः" ( पा० सू० १।४।३० ) इति सूत्रं व्यर्थम्; काष्ठात्पचतीत्यत्रेव दण्डाज्जायत इत्यादावप्युत्पत्तिनिरूपितहेतुत्वार्थकपञ्चम्याः "हेतौ" इति सूत्रेणैव संभवात्, इति वाच्यम् । उत्पत्तेः सावधिकत्वव्यवहारात्, उत्पत्तिरूपधात्वर्थनिरूपितस्वरूपसंबन्धस्य हेतुत्वानात्मकतया "हेतौ" इति सूत्रेण तदर्थकपञ्चम्यसंभवात् । तथा च—दण्डाज्जायते इत्यत्र पञ्चम्युपपत्त्यर्थं "जनिकर्तुः प्रकृतिः" इति सूत्रमावश्यकम्, इति । ( का० व्या० कारक० ५ । पृ० ११ ) ( ग० व्यु० का० ५ । पृ० १०८ ) ( श० प्र० )

३ अत्र "भीत्रार्थानां भयहेतुः" (पा० सू० १।४।२५) इत्यनेनापादानत्वम् । सूत्रार्थश्च—भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानम्, इति । तेन, यस्य व्याघ्राधीनं भयमप्रसिद्धम्, अथ च व्याघ्रहेतुकत्वेन मरणादिकं संभावयति, तत्पुरुषपरः 'व्याघ्रादयं बिभेति' इति प्रयोगः संगच्छते । ( ग० व्यु० का० ५ । पृ० १०६ ) अधिकं च भयशब्दव्याख्याने संपादयिष्यते ।

* अत्रेदं बोध्यम्—कारकत्वम्, ज्ञापकत्वं च पञ्चम्यर्थ इति प्राचीननैयायिकमतम्; तत्र,—'घटो दण्डात्' इत्यादौ 'दण्डनिष्ठकारकत्वनिरूपको घटः' इत्याकारकः प्रथमान्तार्थमुख्यविशेष्यको बोधः । 'वह्निमान् धूमात्' इत्यादौ तु 'धूमनिष्ठज्ञापकत्वनिरूपको यो वह्निः, तद्वान्' इत्याकारको बोधः । नवीननैयायिकमते च—तत्र उत्पाद्यत्वम् ( जन्यत्वम् ), ज्ञाप्यत्वं ( प्रयोज्यत्वम् ) च पञ्चम्यर्थः । तथा च—'घटो दण्डात्' इत्यादौ 'दण्डोत्पाद्यत्ववान् घटः' इत्यन्वयबोधः । वह्निमान् धूमादित्यादौ तु 'धूमज्ञानज्ञाप्यत्ववान् यो वह्निः, तद्वान्' इत्याकारको बोधः । ( म० प्र० पृ० ६ )

† अत्राह—व्याघ्राद्बिभेतीत्यादौ नापादानपञ्चमी; किंतु—हेतुत्वार्थिका पञ्चमी । तथा हि—धातोर्यथायथं भयं भयाभावश्चार्थः । पञ्चम्या हेतुत्वमर्थः । तच्च धात्वर्थे भये, धात्वर्थतावच्छेदक

त्यादौ जन्यत्वं ( प्रयोज्यत्वम् ) पञ्चम्यर्थः । [ ४ ] वृत्तित्वम् । यथा—कूपादन्धं वारयतीत्यादौ पञ्चम्यर्थः । अधिकं तु वारणशब्दव्याख्यानावसरे संपादयिष्यते । [ ५ ] संयोगनाशाव्यवहितोत्तरक्षणवृत्तित्वम्; संबन्धाधीनत्वं वा । यथा—हिमवतो गङ्गा प्रभवतीत्यादौ पञ्चम्यर्थः । अधिकं तु प्रभवशब्दव्याख्यानावसरे संपादयिष्यते । [ ६ ] कर्मत्वम् ( विषयत्वम् ) । यथा—कृष्णात्पराजयते शिशुपालः, अध्ययनात्पराजयते बालः, इत्यादौ पञ्चम्यर्थः । अधिकं तु पराजयशब्दव्याख्यानावसरे

---

१ अत्रोदाह्रियन्ते—पण्डितात्पुराणं * शृणोति, उपाध्यायादधीते, रामादधीतसंदेशः, इत्यादौ प्रकृत्यर्थपण्डितादिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः; तस्य च श्रवण—उच्चारण—अर्थविशेषज्ञान—इत्यादिक्रियायामन्वयः । ( ग० व्यु० कारक० ५ । पृ० १०७ )

२ एवम्—अधर्माज्जुगुप्सते इत्यत्रापि पञ्चम्या वृत्तित्वमर्थः, धातोर्निन्दाऽर्थः । तथा चात्र 'अधर्मं निन्दति' इत्यर्थो बोध्यते । एवम्—उपाध्यायादन्तर्धत्ते शिष्य इत्यादौ पञ्चम्या वृत्तित्वमर्थः; धातोः स्वविषयकप्रत्यक्षविरोधिव्यापारोऽर्थः; पञ्चम्यर्थवृत्तित्वस्य धात्वर्थतावच्छेदकप्रत्यक्षेऽन्वयः; आख्यातस्य कृतिरर्थः । एवं च—'उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमान् शिष्यः' इति बोधः । ( का० व्या० पृ० १० )

३ अधर्माद्विरमतीत्यादावपि‡पञ्चम्याः कर्मत्वमर्थः; धातोः करणमकरणं चार्थः; पञ्चम्यर्थकर्मत्वस्य करणेऽकरणे चान्वयः । तथा च—'अधर्मं पुनर्न करोति' इत्यर्थः । एवम्—धर्मात्प्रमाद्यतीत्यादौ पञ्चम्या विषयत्वम्, धातोरनवधानम्, आख्यातस्याश्रयत्वम्, अर्थः । एवं च—'धर्मविषयकानवधानाश्रयः' इति बोधः ।

---

च भयेऽन्वेति । आश्रयत्वं व्यापारश्च यथायथं आख्यातार्थः । इत्थं च—हेतुपञ्चम्यैवोपपत्तौ प्रथमसूत्रम् ( भीत्रार्थानां भयहेतुः, इति ) प्रपञ्चार्थम्, इति बोध्यम् । ( का० व्या० पृ० ९—१० )

* अत्र, आख्यातुः ( पण्डितादेः ) "आख्यातोपयोगे" ( पा० सू० १।४।२९ ) इत्यनेनापादानता । ( ग० व्यु० का० ५ । पृ० १०७ )

† अत्र "अन्तर्धौ येनादर्शनमिच्छति" (पा० सू० १।४।२८ ) इत्यनेनापादानता । अधिकं तु 'निलयन' शब्दव्याख्यानावसरे संपादितम् ।

‡ शब्दशक्तिप्रकाशिकाकृतस्त्वत्राहुः—पापान्निवर्तते, अधर्माद्विरमतीत्यादौ पञ्चम्या द्वेषोऽर्थः । तत्र प्रकृत्यर्थस्य विषयत्वेन, तस्य च निवृत्तिरूपे धात्वर्थे जन्यत्वेनान्वयः । तेन 'पापगोचरद्वेषजन्यनिवृत्तिमान्' इत्येवं बोधः, इति । ( श० प्र० श्लो० ६८ । टी०पृ० ८० )

संपादयिष्यते । [ ७ ] यथेष्टविनियोगः । यथा—विप्राद्धनमादत्त इत्यादौ पञ्चम्यर्थः । ( का० व्या० पृ० ९–१० ) ( म० प्र० पृ० ६ ) ( ग० व्यु० का० ५। पृ० १०६ ) ( श० प्र० श्लो० ६८। टी० ) शिष्टं तु 'अपादानत्व' शब्दव्याख्याने संपादितमेव ।

**पञ्चमी**—१ पञ्चपाण्डवपतिका द्रौपदी, इति पौराणिका आहुः । २ सूर्यकिरणप्रतिबिम्बयोग्यत्वयोग्यत्वाभावयुक्ता, चन्द्रस्य पञ्चमी कला, इति ज्योतिर्विदः । ३ तादृशकलोपलक्षिततिथिश्च, इति मौहूर्तिका वदन्ति ।

**पञ्चलक्षणम्**—१ अनुमानचिन्तामण्युक्तं व्याप्तिस्वरूपपञ्चकम्[2] । २ पुराणं पञ्चलक्षणम्[3], इति पौराणिका आहुः ।

**पटः**—१ वेष्टनवस्त्रम् । यथा—"तन्तवः पटस्य समवायिकारणम्" इत्यादौ । ( त० सं० ) २ चित्रलेखनपटः, इति तन्त्रज्ञा आहुः । ( देवीपु० ) ( बृ० सं० अ० ७१ ) ( वाच० )

**पण्डा**—१ ( अपूर्वम् ) फलसाधनत्वायोग्योऽदृष्टविशेषः । यथा—मीमां-

---

१ अत्र,–धातोरपि यथेष्टविनियोगफलकस्वीकारोऽर्थः; पञ्चम्यर्थस्य विनियोगस्याव्यवहितोत्तरत्वसंबन्धेन* धात्वर्थतावच्छेदके विनियोगेऽन्वयः । इत्थं च–'विप्रीययथेष्टविनियोगाव्यवहितोत्तरधनवृत्तियथेष्टविनियोगफलकस्वीकारवान्' इति बोधः । ( का० व्या० पृ० १० )

२ तच्च,† ( १ ) साध्याभाववदवृत्तित्वम्; ( २ ) साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम्; ( ३ ) साध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यम्; ( ४ ) सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम्; ( ५ ) साध्यवदन्यावृत्तित्वम्; इति । ( चि० २ । पृ० २ )

३ अत्र पञ्च लक्षणानि तु,–'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्" इति । ( अमर० क्षेपक० का० १। शब्दादि० )

---

* अत्र–अव्यवहितोत्तरत्वं च स्वसमानविषयकपुरुषान्तरीयविनियोगाव्यवहितभिन्नत्वम् । तेन, शूद्रात् प्रतिग्रहीत्रा विप्रेण दत्तं धनमादातरि 'शूद्रादादत्ते' इति न प्रयोगः । ( का० व्या० पृ० १० )

† पञ्चलक्षणप्रतिपादकग्रन्थस्य 'पञ्चलक्षणी' इति नाम । तत्र 'पञ्चानां लक्षणानां समाहारः' ( ङीप् ) इति व्युत्पत्तिर्द्रष्टव्या ।

सकमते—" अहरहः सन्ध्यामुपासीत " इत्यादौ नित्यकर्मणः सन्ध्यावन्दनादेरभावे दुरदृष्टं जायते, संध्यादेर्वन्दने तु तस्यानुत्पत्त्या फलानुपहितं दुरदृष्टं नश्यति, इति तत्पण्डापूर्वम् । २ [ १ ] वेदोज्ज्वला बुद्धिः । यथा—" पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खाः, यः क्रियावान् स पण्डितः ", ( भा० व० ) इत्यादौ । [ २ ] आगमजन्यं ज्ञानम् । ( गी० भा० टी० ) यथा—"विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः " ( गीता० ५।१८ ) इत्यादौ । ३ " सर्वविद्याधिकत्वं यत्पाण्डित्यं तदुदाहृतम् " इति साहित्यशास्त्रज्ञा आहुः । ( प्रतापरुद्रे० )

**पतञ्जलिः**—१ योगसूत्रकारक ऋषिविशेषः । २ पाणिनिसूत्रव्याख्यानरूपमहाभाष्यकारः शेषावतारत्वेन प्रसिद्धो मुनिविशेषः ।

**पतनम्**—१ [ क ] अधःसंयोगावच्छिन्नस्पन्दः ।

[ ख ] स्पन्दत्वान्तरजात्यवच्छिन्नः । ( ग० २। अवयव० ) यथा—वृक्षात्पर्णं पततीत्यादौ पतत्यर्थः । स च, वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः पतनम् । (वाक्य० १। पृ० ९)

[ ग ] अधःसंयोगावच्छिन्नो गुरुत्वप्रयोज्यपतनत्वजात्यवच्छिन्नो वा स्पन्दः । ( श० प्र० श्लो० ६८ टी० पृ० ८० ) २ धर्मज्ञास्तु,—पातित्यम् ।

---

१ अत्र गुरवः,—कार्यत्वेन अपूर्वे एव विधेः शक्तिः । तथा च—न कलञ्जं भक्षयेत् इत्यादिनिषेधे 'कलञ्जभक्षणाभावविषयकं कार्यम्' इत्यन्वयबोधः । तच्चापूर्वम् न किंचित्फलजनकम्, अपितु—स्वतः प्रयोजनं नित्यकर्मणः, इत्यङ्गीचक्रुः । ( वाच० ) ( दि० गु० )

२ नैयायिकास्तु,—नित्यकर्मणामपि पापध्वंसादिरूपफलसत्त्वात्, पण्डापूर्वं नाङ्गीकुर्वन्ति । अधिकं तु 'विधि' शब्दव्याख्याने द्रष्टव्यम् ।

३ अत्र 'पतन् अञ्जलिर्नमस्यतया यस्मिन्' इति पतञ्जलिरिति व्युत्पत्तिर्द्रष्टव्या । (तत्वसु०)

४ अत्रार्थे ' पतन्नञ्जलित इति पतञ्जलिः' इत्यपि व्युत्पत्तिः । अत्रैतिह्यम्—'गोनर्दतीरे तपस्यतः कस्यचिदृषेरञ्जलितः पतितः' इति ( शकन्ध्वा० वार्तिक० शेखरे ) । अयं च पतञ्जलिर्योगसूत्रकाराद्भिन्न एवेति । ( वाच० )

५ अत्र पतनत्वं च गुरुत्वासमवायिकारणककर्मत्वम् । ( दि० १ । साधर्म्य० पृ० ६२ ) ( ग० व्यु० का० २ )

तच्च [ क ] भोगावच्छिन्नं दुरितम् । यथा—नरकं पतित इत्यादौ । (श० प्र० श्लो० ६९। टी० पृ० ७६ )

[ ख ] " द्विजातिकर्मभ्यो हानिः " ( गौतम० ) । यथा—" विहितस्याननुष्ठानात् निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति " ( याज्ञ० अ० ३। श्लो० २१९ ) इत्यादौ, इत्याहुः ।

**पदम्**—१ [ क ] ते विभक्त्यन्ताः पदम् । ( गौ० २ । २ । ६० ) यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी । नामिकी, आख्यातिकी च । ब्राह्मणः, पचति, इत्युदाहरणम् । उपसर्गनिपातास्तर्हि न पदसंज्ञाः; लक्षणान्तरं वाच्यमिति । शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः । तयोः पदसंज्ञार्थमिति पदेनार्थसंप्रत्यय इति प्रयोजनम् । नामपदं चाधिकृत्य परीक्षा गौरिति पदं खल्विदमुदाहरणम् । ( वात्स्या० २ । २ । ६० ) ( त० कौ० )

[ ख ] वर्णसमूहः । ( त० भा० प्रमाण० ४ । पृ० १८ )

[ ग ] शक्तम् । ( त० सं० ४ ) ( मु० ४ । पृ० १७९ )

---

१ तल्लक्षणं च पदत्वमेव । तच्च [ क ] वृत्तिमत्त्वम् । ( गौ० वृ० २।१२३ ) [ ख ] संकेतवद्वर्णत्वम् । ( वै० उ० २।२।२१ )

पदानां साधुत्वं च,—व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः । ( ल० म० )

पदज्ञानं च शाब्दबोधे करणम् । अत्राधिकं च 'शाब्दबोध' शब्दव्याख्याने संपादयिष्यते ।

२ विभक्त्यन्तत्वं च शाब्दबोधौपयिकविभक्तिप्रकृतित्वम् । ( ग० अव० हेतु० )

३ समूहश्चात्रैकज्ञानविषयभाव एव* । ( त० भा० प्रमाण० पृ० १८ )

---

* अत्रोच्यते—"वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः" इति ।( सा० द० परि० २। श्लो० २) एवं तत्र—वर्णानां क्रमवतामाशुतरविनाशित्वेनैकदाऽनेकवर्णानुभवासंभवात् पूर्वपूर्ववर्णाननुभूयान्त्यवर्णश्रवणकाले पूर्ववर्णानुभवजनितसंस्कारसहकृतेनानन्त्यवर्णसंबद्धेन पदव्युत्पादनसमयग्रहणानुगृहीतेन श्रोत्रेणैकदैव सदसदनेकवर्णावगाहिनो पदप्रतीतिर्जन्यते; सहकारिसामर्थ्यात् प्रत्यभिज्ञावत् । प्रत्यभिज्ञाप्रत्यक्षे हि अतीताऽपि पूर्वावस्था स्फुरत्येव, इति । ( त० भा० प्रमा० ४ । पृ० १८–१९ )

[घ] अर्थबोधकम्।

[ङ] सुप्तिङन्तं पदम्, इति शाब्दिका वदन्ति।

[च] वाक्यैकदेशः पदम्, इति केचिदाहुः। न्यायनये पदं द्विविधम्। मुख्यम्, गौणं च। यच्छक्तिवृत्त्या यमर्थमुपस्थापयति, तत् तस्मिन्नर्थे मुख्यम्। यथा—गोघटादिव्यक्त्युपस्थापकं गो—घटादिपदम्। (त० कौ०) मुख्यमपि चतुर्विधम्। यौगिकम्, रूढम्, योगरूढम्, यौगिकरूढं चेति। तत्राद्यं पाचकादिपदम्। द्वितीयं ब्राह्मणवाचकं विप्रपदम्, गो—मण्डपादि पदं च। तृतीयं पङ्कजादिपदम्। चतुर्थमुद्भिदादिपदम्,इति। (तर्का० ४) (मु० ४। पृ० १८९) (त० प्र० ख० ४। पृ० ३०) यत् लक्षणावृत्त्या यमर्थमुपस्थापयति, तत् तस्मिन्नर्थे गौणम्, लाक्षणिकम्, इति चोच्यते। यथा—गङ्गायां घोष इत्यत्र लक्षणावृत्त्या तीरोपस्थापकं गङ्गापदम्। (त० कौ० ४)

शास्त्रान्तरे चत्वारि पदजातानि। नामाख्याते चोपसर्गनिपाताश्च। (निरुक्त०) (वै० सा० द० पृ० ३१) कर्मप्रवचनीयं पञ्चमम्, इति हेलाराज आह। वाचकम्, लक्षकम्, व्यञ्जकं चेति त्रिविधं पदम्, इत्यालंकारिका आहुः। २ श्लोकचरणम्। ३ व्यवसायः। ४ स्थानम्। ५ त्राणम्। ६ चिह्नम्, इति च पदम्, इति काव्यज्ञा आहुः।

**पदार्थः**—पदाभिधेयः। (त० दी०) (त० कौ०) स च "जात्या-

---

१ अत्रोच्यते—"द्विधा कैश्चित्पदं भिन्नं चतुर्धा* पञ्चधाऽपि वा। अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत्" इति। (प्रकीर्णके) 'कर्मप्रवचनीयेन वै पञ्चमेन सह पदस्य पञ्चविधत्वम्' इति हेलाराजो व्याख्यातवान्।

२ लक्षणं च पदार्थत्वमेव। तच्च [क] पदशक्तिः†। (ग० व्यु० का० १) [ख] वृत्त्या पदोपस्थाप्यत्वम्। [ग] पदतात्पर्यविषयत्वम्। [घ] अभिधेयत्वम्। (वाक्य०) (त० दी०)

---

* संबन्धविशेषद्योतनद्वारेण क्रियाविशेषद्योतनवत् उपसर्गेष्वेवान्तर्भवन्ति कर्मप्रवचनीयाः इत्यभिसंधाय पदचातुर्विध्यं भाष्यकारेणोक्तम्।

† पदस्यार्थविशेषे शक्तिव्यवस्थापनादिकं तु 'शक्ति' शब्दव्याख्यानावसरे संपादयिष्यते।

कृतिर्व्यक्तयः पदार्थः" (गौ० २।१३१) (२।२।६८) यथा—घटमानयेत्यादौ घटपदाभिधेयः घटत्वात्मकजाति—कम्बुग्रीवादिरूपाकृति—विशिष्टो व्यक्तिविशेषो घटपदार्थः ।

पदार्थं विभजते—(क) पदार्थो द्विविधः । भावः, अभावश्चेति । (कि० व० १।पृ० ८) तत्र भावा द्रव्यादयः षट्; अभावस्तु प्रागभावादिभेदेन चतुर्विधः । (ख) पदार्थाः सप्त । द्रव्यम्, गुणः, कर्म, सामान्यम्, विशेषः,

---

१ अत्रेदं बोध्यम्—[ १ ] गवादिपदानामियं*गतिः । गुणकर्मादिवाचकपदानां तु जातिव्यक्ती एवार्थः, इति । ( वै० उ० ७ । २ । २० ) [ २ ] [ क ] जात्याकृतिव्यक्तिषु तिसृषु एकैव शक्तिरिति बोधनार्थं 'पदार्थः' इत्येकवचनम्, इति सांप्रदायिकाः । [ ख ] नव्यास्तु,—जातिव्यक्त्योरेव ( जातिविशिष्टव्यक्तौ ) एकशक्तिप्राप्त्यर्थं सौत्रमेकवचनम् । आकृतिरूपं तु संस्थानं पृथगेव शक्यम्, इत्याहुः । श० प्र० ) ( गौ० वृ० २ । १३१) (दि० ४ । पृ० १७८–१७९ ) [ ग ] वस्तुतः—आकृतिपदं न संस्थानपरम्; किंतु—जातिव्यक्त्योः समवायात्मकसंसर्गपरमेव; करणव्युत्पत्त्याऽऽकारनिरूपकार्थकत्वात् । ( श० प्र० )

२ एषु सप्तसु पदार्थेषु गोतमोक्तानां षोडशानां ( वक्ष्यमाणानाम् ) पदार्थानामन्तर्भावमाह—प्रमाणस्येन्द्रियादेर्द्रव्येन्तर्भावः। व्याप्तिज्ञानादेर्गुणे । प्रमेयस्यात्मशरीरेन्द्रियस्वरूपस्य द्रव्ये । अर्थस्य गन्धरसरूपस्पर्शशब्दस्वरूपस्य गुणे । बुद्धेर्गुणे । मनसो द्रव्ये । प्रवृत्तेर्गुणे । दोषाणामिच्छाद्वेषमिथ्याज्ञानस्वरूपाणां रागद्वेषमोहपदप्रतिपाद्यानां गुणे । प्रेत्यभावस्य मरणानन्तरजन्मनो गुणे । सुखदुःखसंवेदनस्वरूपस्य मुख्यफलस्य गुणे । गौणमुख्यसाधारणजन्यमात्रस्वरूपफलस्यापि द्रव्यादिषु । पीडालक्षणस्य दुःखस्य गुणे । अपवर्गस्यात्यन्तिकध्वंसरूपस्याभावे । संशयस्य गुणे । साध्यतयेच्छाविषयात्मकस्य प्रयोजनस्य यथायथं द्रव्यादिषु । साध्यसाधनोभयवत्तानिश्चयविषयस्य दृष्टान्तस्य यथायथं द्रव्यादिषु । तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य द्रव्यादिषु । शब्दस्वरूपप्रतिज्ञाद्यन्यतमरूपाणामवयवानां गुणे । व्याप्यारोपेण व्यापकारोपस्य तर्कस्य गुणे । निर्णयस्य गुणे । तत्त्वबुभुत्सुकथारूपवादस्य गुणे । विजिगीषुकथारूपजल्पस्य गुणे । स्वपक्षस्थापनाहीनकथारूपवितण्डाया गुणे । अनुमिति—तत्करणज्ञान—एतदन्यतरप्रतिबन्धकज्ञानविषयरूपाणां हेत्वाभासानां यथायथं द्रव्यादिषु । छलस्य गुणे । असदुत्तररूपजातेर्गुणे । पराजयहेतुस्वरूपनिग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भावः । तथा हि—प्रतिज्ञाहानेरभावेऽन्तर्भावः । प्रतिज्ञान्तरस्य गुणे । प्रतिज्ञाविरोधस्य गुणे । प्रतिज्ञासंन्यासस्याभावे । हेत्वन्तरस्य गुणे । अर्थान्तरस्य गुणे । निरर्थकस्य गुणे । अविज्ञातार्थस्य गुणे । अपार्थकस्य गुणे । अप्राप्तकालस्य गुणे । न्यूनस्य गुणे । अधिकस्य गुणे । पुनरुक्तस्य गुणे । अननुभाषणस्याभावे ।

---

* तेन, पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः । जातिपदं वा धर्मपरम् । (गौ० वृ० २।१३१)

समवायः, अभावः, इति । (त० सं०) (भा० प०) (न्या० म०) (चि०) दर्शनभेदेन मतभेदेन च पदार्था नानाविधाः । तथा हि—विषयता—तत्त्वादिवत्, प्रतियोगित्वाधिकरणत्व—तत्त्व—संबन्धत्वादयोऽप्यतिरिक्ता एव पदार्थाः, इत्येकदेशिन आहुः । ( दीधि० २। सिद्धा० ल० पृ० ४१) । चिदचिदात्मकौ द्वौ पदार्थौ, इति मायावादिनो वेदान्तिन आहुः । चिदचिदीश्वरभेदेन त्रयः पदार्थाः, इति रामानुजीयाः । स्वतन्त्रपरतन्त्रभेदेन द्वौ पदार्थौ, इति माध्वाः । पति—पशु—पाश—भेदेन त्रयः पदार्थाः, इति शैवा नाकुलीशाश्चाहुः । द्रव्यम्, गुणः, कर्म, सामान्यम्, विशेषः, समवायः, एते षट् पदार्थाः, इति कणादप्रधाना वैशेषिका आहुः । प्रमाणम्, प्रमेयम्, संशयः, प्रयोजनम्, दृष्टान्तः, सिद्धान्तः, अवयवः, तर्कः, निर्णयः, वादः, जल्पः, वितण्डा, हेत्वाभासः, छलम्, जातिः, निग्रहस्थानम्, इत्येते षोडश पदार्थाः, इति गोतमप्रधाना नैयायिका आहुः ।

---

अज्ञानस्याभावे । अप्रतिभाया अभावे । विक्षेपस्याभावे । मतानुज्ञाया गुणे । पर्यनुयोज्योपेक्षणस्याभावे । निरनुयोज्यानुयोगस्य गुणे । अपसिद्धान्तस्याभावे । हेत्वाभासानां द्रव्यादिषु; अन्तर्भावः, इति । ( दिन० १ । पृ० २०–२२ ) ( नील० पृ० ४५–४६ )

३ समान्यादयः पदार्था अलीका एव, इति विज्ञानवादिनो बौद्धा आहुः ( राम० १ )

१ अत्र सप्तानां षण्णां पञ्चानामित्यादिरीत्या पदार्थानां संभूय तत्तल्लक्षणं च 'साधर्म्य' शब्दव्याख्यानावसरे संपादयिष्यते, इत्यत्र विरम्यते ।

२ अत्र भाष्यम्—"प्रमेयाः पदार्थाः" इति । ( प्रशस्त० पृ० २६ )

३ एते*भावपदार्थाः । अभावस्तु† "कारणाभावात्कार्याभावः" ( वै० १।२।१ ) ( ९।१।१–१० ) इत्यादिसूत्रज्ञापितः, इति बोध्यम् । ( त० व० ) ( वै० वि० १।१।४ )

---

* नञर्थानुल्लिखितधीविषयतया भावरूपतया षडेवेति विवक्षिताः, इति । ( सर्व० औलू० पृ० १०५ ) तथा च—सूत्रम्—"धर्मविशेषप्रसूतात्, द्रव्य—गुण—कर्म—सामान्य—विशेष—समवायानां पदार्थानां साधर्म्य—वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" ( वै० १।१।४ )

† अत्र न्यायलीलावतीकाराः,—"अभावश्च वक्तव्यः, निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत्; कारणाभावेन कार्याभावस्य सर्वसिद्धत्वादुपयोगित्वसिद्धेः" इत्याहुः । न्यायाचार्यास्तु द्रव्यकिरणावल्याम्—"एते च पदार्थाः ( षड भावाः ) प्रधानतयोद्दिष्टाः । अभावस्तु स्वरूपवानपि नोद्दिष्टः; प्रतियोगिनिरूपणाधीननिरूपणत्वात्, न तु तुच्छत्वात्" इत्यभावः सप्तमः पदार्थः, इत्यङ्गीचक्रुः ( वै० वि० १।१।४ )

प्रकृतिर्विकृतिरुभयमनुभयमिति भेदेन चत्वारः (२९-२६) पदार्थाः, इति सांख्याः, पातञ्जलाश्चाहुः । तुतातभट्टमतानुयायिनस्तु,-द्रव्यगुणकर्मसामान्यरूपाश्चत्वार एव पदार्थाः, इत्यङ्गीचक्रुः । प्राभाकरास्तु,-द्रव्यगुणकर्मसामान्यसंख्यासमवायसादृश्यशक्तयः, इत्यष्टौ पदार्थाः, इत्यमन्यन्त । (वै० वि०) ( प० मा० ) अधिकं तु "तत्त्व" शब्दव्याख्याने द्रष्टव्यम् ।

**परकृतिः**—( अर्थवादः ) [ क ] अन्यकर्तृकस्य व्याहतस्य विधेर्वादः । (वात्स्या० २ । १ । ६३ )

[ ख ] पुरुषविशेषनिष्ठमिथोविरुद्धकथनम् । यथा-"हुत्वा वपामेवाग्रेऽभिघारयन्ति, अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति, अग्नेः प्राणाः पृषदाज्यमित्येवमभिदधति" (श्रुतिः) इत्येवमादि । ( गौ० वृ० २ । ६४ ) (वात्स्या० २ । १ । ६३ )

**परतन्त्रम्**—[ १ ] इतरसत्ताधीनसत्ताकम् । यथा-राजभृत्यः परतन्त्रः । (स्व०) [ २ ] क्वचित्,-स्वेतरबहिर्विषयकज्ञानजनकसामग्रीसापेक्षम् । ( त० प्र० १ ) यथा-मनश्चाक्षुषादिप्रत्यक्षे परतन्त्रम् । ( सर्व० चार्वा० ) ( त० भा० )

**परत्वम्**—( गुणः ) [ क ] पराभिधानप्रत्ययनिमित्तम् । तत्तु द्विविधम् । दिक्कृतम्, कालकृतं च । तत्र दिक्कृतम् दिग्विशेषप्रत्यायकम् । कालकृतं च वयोभेदप्रत्यायकम् । ( प्रशस्त० पृ० २० )

---

१ अत्र सूत्रम्-"एकदिक्काभ्यामेककालाभ्यां संनिकृष्टविप्रकृष्टाभ्यां परमपरं च" इति । (वै० ७।२।२१)

लक्षणं च परव्यवहारजनकतावच्छेदकतादृशप्रकारताश्रयत्वम् । ( वाक्य० १ पृ० ८ )

अत्र नव्याः,-बहुतरप्रदेशसंयोगान्तरितत्वरूपविप्रकृष्टत्व-बहुतरसूर्यपरिस्पन्दान्तरितजन्यत्वरूपज्येष्ठत्वाभ्यां दैशिक-कालिक-परत्वव्यवहारस्योत्पत्तेर्न परत्वस्य गुणान्तरत्वम्, इत्याहुः । ( दि० गु० पृ० २०९ )

वस्तुतस्तु-विप्रकृष्टत्वज्ञानात्परत्वमुत्पद्यते, इति विप्रकृष्टत्वात्परत्वम् भिन्नमेव, इति वैशेषिकसूत्रात् ( ७ । २ । २१ ) प्रतिभाति । ( स्व० )

२ यथा-"गण्डौ कपोलौ तत्परे हनू" ( अमरः ) इत्यादौ ।

३ यथा-"परश्वस्तत्परेऽहनि" ( अमरः ) इत्यादौ ।

[ ख ] परत्वत्वजातिमत्; परव्यवहारासाधारणकारणम् । परत्वं द्विविधम् । दिक्कृतम्, कालकृतं च । तत्र ( १ ) दूरस्थे दिक्कृतं परत्वम् । ज्येष्ठे कालकृतं परत्वम् । (त० सं०) ( २ ) यो यदपेक्षया दूरस्थः, तत्र तदवधिकं परत्वं दिक्कृतम् । अत्र दिक्पिण्डसंयोगोऽसमवायिकारणम्; दूरत्वज्ञानं निमित्तम्; तन्नाशश्च तन्नाशनिमित्तम् ।

---

१ परव्यवहारो द्विविधः । यथा—'अयं ज्येष्ठः; अयं दूरः' इति । ( वाक्य० १। पृ० ८ )

२ अत्र दिक्कृतत्वं च ज्ञायमानदिग्जन्यत्वम् । तथा हि—'वैराजाद्वेणासंगमापेक्षया करहाटकं स्वसमवायिसंयुक्तसंयोगेन बहुतरदेशसंयोगवत्' इति ज्ञानेन दैशिकपरत्वम् *उत्पद्यते । (वाक्य० १। पृ० ८) एवम्—'पाटलिपुत्रात् काशीमपेक्ष्य प्रयागः परः,' 'शल्कीग्रामात् विजयपुरमपेक्ष्य कृष्णा नदी परा' इत्यत्रापि ज्ञेयम् ।

३ अत्र कालकृतत्वं च [ क ] स्वसमवायिसंयुक्तसंयोगसंबन्धेन रविक्रियाप्रकारकज्ञानविषयकालजन्यत्वात्†तत्संबन्धघटककालजन्यत्वरूपम्, स्वसंयोगजन्यत्वरूपं वा । ( वाक्य० १।पृ० ८ ) [ ख ] बहुतरदिवाकरक्रियाविशिष्टशरीरज्ञानात्कालिकपरत्वोत्पत्तिरिति । (सि० च०) यथा—रामो लक्ष्मणापेक्षया ज्येष्ठ इत्यादौ—लक्ष्मणस्य सूर्यपरिस्पन्दापेक्षया, रामस्य सूर्यपरिस्पन्दा अधिकाः, इति रामो ज्येष्ठः । विशेषस्तु ( वै० उ०७।२।२१) तत्र द्रष्टव्यः ।

४ तत्र दिक्कृतस्योत्पत्तिरभिधीयते—एकस्यां दिश्यवस्थितयोः पिण्डयोः संयुक्तसंयोगबह्वल्पभावे सत्येकस्य द्रष्टुः संनिकृष्टमवधिं कृत्वा 'तस्माद्विप्रकृष्टोऽयम्' इति परत्वाधारे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण दिक्प्रदेशेन संयोगात्परत्वस्योत्पत्तिः । विप्रकृष्टं चावधिं कृत्वा 'परस्मात् संनिकृष्टोऽयम्' इत्यपरत्वाधारे इतरस्मिन् संनिकृष्टा बुद्धिरुत्पद्यते । तामपेक्ष्यापरेण दिग्देशेन संयोगादपरत्वस्योत्पत्तिः । (प्रशस्त० पृ० २०—२१)

५ अत्र [ क ] द्विविधयोः परत्वापरत्वयोर्नाशकोऽपेक्षाबुद्धिनाशः, इति मुक्तावलीकार आह । [ ख ] उपस्कारेतु—त्रिविधकारणनाशस्यैव परत्वापरत्वनाशकत्वमुक्तम् । (वै० वि० ७ । २ । २१ ) [ ग ] "नाशो दैशिकयोर्ज्ञेयः सप्तधा शांकरे मते । निमित्तस्य विनाशाद्वाऽसमवायिन एव वा ॥ समवायिविनाशाद्वा निमित्तासमवायिनोः । नाशाद्वापि, विनाशाद्वा निमित्तसमवायिनोः ॥ निमित्तभिन्नयोर्वापि नाशात्कारणयोः क्वचित् । विनाशादपि सर्वेषां हेतूनामेकदैव वा" इति । (त० व० २१० )

---

* [ क ] 'इदमस्माद्विप्रकृष्टम्' इत्यपेक्षाबुद्ध्या जायते । ( दि० १ ) [ ख ] तत्र च संबन्धघटकतया दिशः प्रवेशात् तज्जन्यत्वं बोध्यम् । ( वाक्य० १ । पृ० ८ )

† 'अयमस्माद्बहुतरकालसंबद्धः' इत्यपेक्षाबुद्ध्या जन्यते । ( दि० १ )

योयदपेक्षया ज्येष्ठः, तत्र तदवधिकं परत्वं कालकृतम् । अत्र कालपिण्डसंयोगोऽसमवायिकारणम्; ज्येष्ठत्वज्ञानं निमित्तम्; तन्नाशश्च तन्नाशनिमित्तम्, इति । ( त० कौ० पृ० ६ )

---

१ कालकृतयोरप्युत्पत्तिरभिधीयते—वर्तमानयोरनियतदिग्देशसंयुक्तयोर्युवस्थविरयो रूढश्मश्रुकार्कश्यवलीपलितादिसांनिध्ये सत्येकस्य द्रष्टुर्युवानमवधिं कृत्वा स्थविरे विप्रकृष्टा बुद्धिरुत्पद्यते । ततस्तामपेक्ष्य परेण कालप्रदेशेन संयोगात्परत्वस्योत्पत्तिः । स्थविरमवधिं कृत्वा यूनि संनिकृष्टा बुद्धिरुत्पद्यते तदा तामपेक्ष्यापरेण कालप्रदेशेन संयोगादपरत्वस्योत्पत्तिः । ( प्रशस्त० पृ० २१ )

२ [ क ] "त्रिधा कालिकयोर्नाशः समवायिविनाशतः । निमित्तनाशतो वाऽभ्यामुभाभ्यां वापि कुत्रचित् । निमित्तमात्रनाशेन तन्नाशः कस्यचिन्मते" इति । ( त० व० २११ ) [ ख ] विनाशस्त्वपेक्षाबुद्धि-संयोग-द्रव्यनाशात् ( अपेक्षाबुद्धिविनाशात्*, संयोगविनाशात् †, द्रव्यविनाशात्‡, द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशात्§, द्रव्यसंयोगविनाशात् ¶, संयोगापेक्षाबुद्ध्योर्युगपद्विनाशात्‖, त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशात् $, चेत्यर्थः ) ( प्रशस्त० पृ० २१ )

---

* तथा हि—उत्पन्ने परत्वे यस्मिन्काले सामान्यबुद्धिरुत्पन्ना भवति, ततोऽपेक्षाबुद्धिविनश्यता सामान्यज्ञानतत्संबन्धेभ्यः परत्वगुणबुद्धेरुत्पद्यतेत्येकः कालः । ततोऽपेक्षाबुद्धेर्विनाशो गुणबुद्धेश्चोत्पत्तिः, ततोऽपेक्षाबुद्धिविनाशात् गुणस्य विनश्यता गुणज्ञानतत्संबन्धेभ्यो द्रव्यबुद्धेरुत्पद्यमानतेत्येकः कालः । ततो द्रव्यबुद्धेरुत्पत्तिर्गुणस्य विनाशः, इति । ( प्रशस्त० पृ० २१ )

† संयोगविनाशाद्यथा—अपेक्षाबुद्धिसमकालमेव परत्वाधारे कर्मोत्पद्यते; तत्कर्मणा दिक्पिण्डविभागः क्रियते परत्वस्योत्पत्तिरित्येकः कालः, ततः सामान्यबुद्धेरुत्पत्तिः दिक्पिण्डसंयोगस्य विनाशः, ततो यस्मिन्काले गुणबुद्धिरुत्पद्यते तस्मिन्नेव काले दिक्पिण्डसंयोगविनाशाद्गुणस्य विनाशः । ( प्रशस्त० पृ० २१ )

‡ द्रव्यविनाशादपि यथा—परत्वाधारावयवे कर्मोत्पन्नं यस्मिन्नेव कालेऽवयवान्तराद्विभागं करोति तस्मिन्नेव काले संयोगविनाशः, तस्मिन्नेव कालेऽपेक्षाबुद्धिरुत्पद्यते, ततो विभागाद्यस्मिन्नेव काले संयोगविनाशस्तस्मिन्नेव काले परत्वमुत्पद्यते, ततः संयोगविनाशात् द्रव्यविनाशः, तद्विनाशाच्च तदाश्रितस्य गुणस्य विनाशः । ( प्रशस्त० पृ० २२ )

§ द्रव्यापेक्षाबुद्ध्योर्युगपद्विनाशादपि यथा—यदा परत्वाधारावयवे कर्मोत्पद्यते तदैवापेक्षाबुद्धिरुत्पद्यते, कर्मणा तदवयवान्तराद्विभागः क्रियते, परत्वस्योत्पत्तिरित्येकः कालः । ततो यस्मिन्नेव काले विभागात्संयोगविनाशस्तस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते, तदनन्तरं संयोगविनाशात् द्रव्यविनाशः, सामान्यबुद्धेरपेक्षाबुद्धिनाश इत्येकः कालः; ततो द्रव्यापेक्षाबुद्ध्योर्विनाशात् परत्वस्य विनाशः । ( प्रशस्त० पृ० २२ )

दिक्कृतं परत्वं मूर्तमात्रवृत्ति भवति । कालकृतं परत्वं तु जन्यद्रव्यमात्रवृत्ति भवति, इति ज्ञेयम् । (सि० च० १। पृ० १८) (त० कौ० १।पृ० ६)

परत्वम्—१ [क] प्रतिपादकेच्छाविषयत्वम् । (चि०) यथा–'हरिशब्दः सिंहपरः' इत्यादौ । यथा वा–सैन्धवमानयेत्यादौ भोजनसमये सैन्धवपदस्य लवणपरत्वम् । ( स्व० )

[ख] तत्प्रतीतीच्छयोच्चरितत्वम् । ( चि० १ ) (मू० म० ) यथा–"यत्परः शब्दः, स शब्दार्थः" इत्यादौ । २ अधिकदेशवृत्तित्वम्; व्यापकत्वं वा । यथा–"सामान्यं द्विविधं प्रोक्तं परं चापरमेव च" ( भा० प० श्लो० ८) इत्यादौ सत्ताया द्रव्यत्वमपेक्ष्य, द्रव्यत्वादेश्च पृथिवीत्वाद्यपेक्ष्य व्यापकत्वात् परत्वम् । ( मु० १ । पृ० ३४ ) ३ सूक्ष्मत्वम् । यथा–"परं वा त्रुटेः" ( गौ० ४ । ८२ ) इत्यादौ त्रुटिमपेक्ष्य पर-

---

१ तच्च शाब्दबोधप्रयोजकम् तात्पर्यापरपर्यायम्, इति बोध्यम् ।

---

¶ द्रव्यसंयोगविनाशादपि यथा–यदा परत्वाधारावयवे कर्मोत्पन्नमवयवाद्विभागं करोति तस्मिन्नेव काले पिण्डकर्मापेक्षाबुद्ध्योर्युगपदुत्पत्तिः, ततो यस्मिन्नेव काले परत्वस्योत्पत्तिस्तस्मिन्नेव काले विभागात् द्रव्यारम्भकसंयोगविनाशः, पिण्डकर्मणा दिक्पिण्डविभागः क्रियते, ततो यस्मिन्नेव काले सामान्यबुद्धिरुत्पद्यते तत्समानकालं संयोगविनाशात् पिण्डविनाशः, तद्विनाशाच्च पिण्डसंयोगनाशः, ततो गुणबुद्धिसमानकालं पिण्डदिक्पिण्डसंयोगयोर्विनाशात् परत्वस्य विनाशः । (प्रशस्त० पृ० २२)

|| संयोगापेक्षाबुद्ध्योर्युगपद्विनाशादपि यथा–यदा परत्वमुत्पद्यते तदा परत्वाधारकर्म, ततो यस्मिन्नेव काले परत्वसामान्यबुद्धिरुत्पद्यते तस्मिन्नेव काले पिण्डकर्मणा दिक्पिण्डविभागः क्रियते, ततः सामान्यबुद्धितोऽपेक्षाबुद्धिनाशो विभागाच्च दिक्पिण्डसंयोगविनाश इत्येकः कालः । ततः संयोगविनाशादपेक्षाबुद्धिनाशात्परत्वस्य विनाशः । (प्रशस्त० पृ० २३)

$ त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशादपि यथा—यदाऽपेक्षाबुद्धिरुत्पद्यते तदैव पिण्डावयवे कर्म, ततो यस्मिन्नेव काले कर्मणाऽवयवान्तराद्विभागः क्रियते परत्वस्योत्पत्तिः तस्मिन्नेव काले पिण्डेऽपि कर्म, ततो विभागात् पिण्डारम्भकसंयोगविनाशः, पिण्डकर्मणा च दिक्पिण्डविभागः क्रियते, सामान्यबुद्धेश्चोत्पत्तिरित्येकः कालः । ततः संयोगविनाशात् पिण्डनाशः, विभागाच्च दिक्पिण्डसंयोगविनाशः, सामान्यज्ञानादपेक्षाबुद्धेर्विनाशः, इत्येतत्सर्वं युगपत्त्रयाणां समवाय्यसमवायिनिमित्तानां विनाशात् परत्वस्य विनाशः, इति । (प्रशस्त० पृ०२३)

माणोः परत्वम्। ४ [ १ ] गुणविशेषः। यथा—"अयमस्मात्परः" इत्यादौ दिक्कृतं कालकृतं वा परत्वम्। [ २ ] नव्यमते,—विप्रकर्ष एव परत्वम्। यथा—"अयमस्मात्परः" इत्यादौ। ५ भिन्नत्वम्; ६ श्रेष्ठत्वम्। यथा—"द्वे ब्रह्मणी वेदितव्ये, परं चापरम्" ( श्रुतिः ) इत्यादौ। ७ ब्रह्मण आयुःकालविशेषः, इति पौराणिका आहुः। ८ शत्रुत्वम्, इति काव्यज्ञा आहुः। ( वाच० )

**परममुक्तिः**— ( निःश्रेयसम् ) समानाधिकरणविशेषगुणावच्छिन्नसवासनमिथ्याज्ञानध्वंसः। ( न्या० सि० दी० ) यथा—शुकभीष्मयुधिष्ठिरादीनां परममुक्तिः। ( स्व० )

**परमाणुः**—१ मूर्तत्वे सति निरवयवः। ( त० कौ० ) स च [ क ] "परं वा त्रुटेः" ( गौ० ४।२।१७ ) इति ज्ञेयः।

---

१ अत्र विशेषवक्तव्यं तु प्रथम'परत्व'शब्दे उक्तमेव।

२ अत्रोक्तम्—"निजेन तस्य मानेन चायुर्वर्षशतं स्मृतम्। तत्पराख्यं तदर्धं च परार्धमभिधीयते," "त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः।। ब्रह्मणः कथितं वर्षं पराख्यं तच्च यत्पदम्" इति। ( कूर्म० अ० ५ ) ( वाच० )

३ स च जन्यद्रव्यावयवः, अक्रियावान्, अतीन्द्रियः, निरवयवः, नित्यश्चेति *नैयायिकवैशेषिकाणां सिद्धान्तः। परमाणूनामुत्पत्तिं नाशं च स्वीकुर्वन्ति क्षणभङ्गुरवादिनो बौद्धाः। ( दि० १। पृथिवी० पृ० ६७–६८ )

भूतत्वादि परमाणोर्लक्षणमिति सांख्या आहुः। ( गौ० वृ० ४।३१ )

न्यायवैशेषिकनये परमाणुसद्भावे प्रमाणमुच्यते—जालसूर्यमरीचिस्थं सूक्ष्मतमं यद्रज उपलभ्यते, 'तत् सावयवम्, चाक्षुषद्रव्यत्वात् पटवत्' इति; 'त्र्यणुकावयवोऽपि सावयवः, महदारम्भकत्वात् तन्तुवत्' इति; यो द्व्यणुकावयवः, स एव परमाणुः; स च नित्यः। कार्यत्वेऽनवस्थाप्रसङ्गात् (असमवेतभावकार्योत्पत्तिप्रसङ्गाच्च )। तथा च—मेरुसर्षपयोरपि तुल्यत्वप्रसङ्गः, इति ( त० दी० १। पृ० १० ) ( मु० १। पृ० ६८–६९ )

४ त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः। वाशब्दोऽवधारणे। अथ वा—त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः। यद्वा—त्रुटेः परं सूक्ष्मं परमाणुः, त्रुटावेव †वा विश्रामः, इति विकल्पोऽभिमतः। ( गौ० वृ० ४।८२ )

अवयवविभागस्यानवस्थानाद्द्रव्याणामसंख्येयत्वात्त्रुटिनिवृत्तिरिति। ( वात्स्या० ४।२।१७ )

---

* अत्र सूत्रम्—"न प्रलयोऽणुसद्भावात्" इति। ( गौ० ४।२।१६ )

† इदं च नवीनमतम्। ( दि० १। पृ० ६९ )

[ ख ] " यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्तते । यतश्च नाल्पीयोऽस्ति, तं परमाणुं प्रचक्ष्महे " इति । ( वात्स्या० ४।२।१६ ) यथा-" जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यते " इति । ( वाक्य० )

[ ग ] " चरमस्तु विशेषाणामनेकासंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः" इति बादरायणाचार्या आहुः । ( भाग० ३।११।१ ) २ परमाण्ववच्छिन्नकालविशेषः । यथा—" स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् " ( भाग० ३।११।५ ) इत्यादौ ।

**परमात्मा**—( आत्मा ) [ १ ] [ क ] सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी । ( वात्स्या० १।१।९ )

---

१ परमत्वं चात्र [ क ] प्रकृतेः सृष्टिस्थितिलयकर्तृत्वम् । ( सि० च० १। पृ० १० ) [ ख ] नित्यज्ञानादिमत्त्वेन*सर्वोत्कृष्टत्वम् । ( त० प्र० १। पृ० ४ )

परमात्मलक्षणं चेश्वरत्वम् । तच्च नित्यज्ञाना-†द्यधिकरणत्वम् । ( त० दी० ) ( सि० च० १ । पृ० १० ) ( राम० )

परमात्मसत्त्वे प्रमाणम् [ १ ] [ क ] अनुमानम् । तच्च, ' क्षित्यङ्कुरादिकं‡कर्तृजन्यं कार्यत्वाद्घटवत् ' इति । [ ख ] क्षित्यादिमहाकार्यान्यथानुपपत्त्या§ स स्वीक्रियते । ( प्र० प्र० )

---

* ईश्वरस्य तज्ज्ञानादेर्नित्यत्वमित्थम्—सर्गाद्यवसरे ' परमाणुना द्व्यणुकं करिष्यामि ' इति ज्ञानस्यावश्यकत्वेन तदुत्पादकशरीरादिकारणकलापस्य तदानीं व्यतिरेकेण तस्य नित्यत्वमुररीकुर्मः । एवम्—ईश्वरेच्छाकृत्योरपि नित्यत्वम् । ( सि० च० १ । पृ० १० )

† अत्रादिशब्देनानन्दो गृह्यते, । केचित्तु,—श्रुतिस्थानन्दपदं दुःखाभावपरम्, इत्याहुः ।

‡ अत्रायमर्थः—[ क ] स्वरूपसंबन्धविशेषरूपकार्यत्वावच्छिन्नं पक्षः, विशेष्यतासंबन्धावच्छिन्नकृतित्वावच्छिन्नकारणतानिरूपितसमवायसंबन्धावच्छिन्नकार्यत्वम् साध्यम्, प्रागभावप्रतियोगित्वरूपं कार्यत्वम् हेतुः । तेन, न पक्षतावच्छेदक–साध्य–हेतूनामैक्यम्, इति । ( दि० १ । पृ० १३–१४ ) [ ख ] उपस्कारकृतस्तु,—कर्तृजन्यत्वं चादृष्टाद्वारककृतिमज्जन्यत्वम् । कार्यत्वं तु प्रागभावावच्छिन्नसत्ताप्रतियोगित्वम्, इत्याहुः । ( वै० उं० २।१।१९ ) [ ग ] वस्तुतस्तु,—' यत्र कार्यत्वं तत्र कृतिजन्यत्वम् ' इति व्याप्तेः ' जन्यं अदृष्टाद्वारककृतिजन्यम्, कार्यत्वात्, घटवत् ' इत्यनुमानं ज्ञेयम् । ( दि० १ । पृ० १४ )

§ तदुक्तम्—[ क ] " कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः । वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः " इति । ( कु० ५।१ ) [ख] "संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् " " प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः " ( वै० सू० २।१।१८–१९ ) तदर्थं चाह—" क्षित्य-

[ ख ] शरीरनिरपेक्षज्ञानवान् । ( प्र० प्र० ) यथा—"स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते " ( कु० स्त० १।श्लो० २ ), "परमात्मा परं ब्रह्म निर्गुणं प्रकृतेः परः । कारणं कारणानां च श्रीकृष्णो भगवान् स्वयम्" (ब्रह्मवै० पु० अध्याय २३), " उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः " ( गीता० १५।१७ ), " ब्रह्मेति परमात्मेति भगवानिति शब्द्यते " ( भाग० १।२।११ ) इत्यादौ परमात्मा ।

[ ग ] नित्यज्ञानादिमान् । ( त० कौ० ) स च ( क ) गुणविशिष्टमात्मान्तरमीश्वरः । ( वात्स्या० ४।१।२१ ) ( ख ) ईश्वर एकः एव ।

---

[ ग ] सर्गादौ व्यवहारान्यथानुपपत्तिरेव ईश्वरसत्त्वे मानम् । यः सर्वज्ञः ¶ एकः, स एव चास्माकमीश्वरः । ( न्या० म० ४ । पृ० ५ ) ( सि० च० १ । पृ० ११ )

अत्र कार्योत्पादने मतभेदाः प्रदर्श्यन्ते—शरीरमन्तरेणैवेश्वरेण मन्त्रादिवत्कार्योत्पादनम्,|| इति केचिन्नैयायिकाः संगिरन्ते । अन्ये तु नैयायिकाः,—शरीरहेत्वदृष्टाभावात्परमात्मा शरीररहित एवास्ति; यद्वा—सोऽपि शरीरी; पुरुषादृष्टेन कान्ताशरीरस्येवास्मदीयादृष्टेन तच्छरीरस्य ( इच्छाप्रयुक्तस्य ) जननसंभवात् । अत एव—चतुर्भुजत्वादिश्रवणं संगच्छते, इत्यङ्गीचक्रुः । परमाणव एवेश्वरस्य शरीरमिति केचिदाहुः । आकाशमेव शरीरमित्यपरे मन्यन्ते । ईश्वरः सर्गादौ शरीरद्वयम् ( प्रयोज्यप्रयोजकवृद्धशरीरद्वयम् ) परिगृह्य व्यवहरति, इति परे जानन्ति । संसारिणामदृष्टवशादीश्वरस्य शरीरम्, तच्च ब्रह्मविष्णुशिवानाम्, इत्यन्ये ब्रुवन्ति । भूतावेशन्यायेनेश्वरस्य शरीरम्,इत्यपरे मेनिरे । ईश्वरः शरीररहित एव, परं तु—संसारपङ्कनिमग्नानज्ञानिन उद्दिधीर्षुर्लीलाविग्रहं दधाति, इतीतरे प्रजल्पन्ति । जीवा एवेश्वरस्य शरीरम्, इति रामानुजीयाः । अप्राकृतं सच्चिदानन्दाद्येव शरीरम्, इति मतप्रवर्तकैकशिरोमणयो मध्वाचार्याः प्राहुः । क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय संप्रदायप्रद्योतकोऽनुग्राहकश्च, इति पातञ्जलाः संजगदिरे ।

१ मायावादिवेदान्तिनस्तु मायावच्छिन्नचैतन्यमीश्वरः, इत्याहुः ।

---

ङ्कुरादिकं कार्यं स्वर्गापूर्वादि नाम च । लिङ्गमीश्वरसद्भावे काणादाः संप्रचक्षते " (त० व० आ० श्लो० ९७ । पृ० १५५ ) अधिकं तु न्यायकन्दल्याम्, अनुमानचिन्तामण्यादौ च द्रष्टव्यम् ।

¶ अत एव—" द्यावाभूमी जनयन् देव एकः " " विश्वस्य कर्ता, भुवनस्य गोप्ता " " यः सर्वज्ञः स सर्वविद्यस्य ज्ञानमयं तपः " इत्याद्या आगमा अपि प्रमाणत्वेनानुसंधेयाः ।

|| अत्र सूत्राणि,—" ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् " " न पुरुषकर्माभावे फलानिष्पत्तेः " " तत्कारितत्वादहेतुः " ( गौ० ४।१।१९–२१ ) इत्यादीनि ।

(त० सं० ) तं परमात्मानं 'उपास्यत्वेन देशितः' (कर्मैव) इति मीमांसकाः समुपासते । वेदोक्तकर्मणः फलदातेश्वरः, इति मीमांसकैकदेशिनः । आदिविद्वान् सिद्धः, इति कापिलाः । लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रः, इति महापाशुपताः । निरावरणः, इति दिगम्बराः । यावदुक्तोपपन्नः ( कर्ता ), इति नैयायिकाः । शिवः, इति शैवाः । पुरुषोत्तमः, इति वैष्णवाः । पितामहः, इति पौराणिकाः । यज्ञपुरुषः, इति याज्ञिकाः । विशुद्धं चैतन्यम्, इति मायावादिनः । ब्रह्मशब्दवाच्यः ( गुणपरिपूर्णः ) विष्णुः, इति माध्वाः । द्विभुजः कृष्णः, इति वल्लभीयाः । परमेश्वरः, इति पातञ्जलाः । बुद्धः, सर्वज्ञो वा, इति बौद्धाः । अर्हन्नित्यार्हताः । पराख्यः शब्द एव, इति शाब्दिकाः । काल एव, इति ज्योतिषज्ञाः । लोकव्यवहारसिद्ध एव (परमात्मा), इति चार्वाकाः । विश्वकर्मा, इति कारव उपासते। तत्र नित्येश्वरं न मन्यन्ते सांख्या आर्हताश्चार्वाकाश्च।(कु० टी० १।२)(स्व०) न्यायनये परमात्मन्यष्टौ गुणा वर्तन्ते । संख्या ( एकत्वम् ), परममहत्परिमाणम्, एकपृथक्त्वम्, संयोगः, विभागः, बुद्धिः, इच्छा, प्रयत्नश्चेति । ( भा० प० श्लो० ३४ ) । अपरिमिता अप्राकृता ज्ञानानन्दादयो गुणाः परमात्मनि सन्ति, इति माध्वा जगुः । परमात्मा गुणशून्य एव, इति मायावादिनो मन्यन्ते ।

**परमापूर्वम्**—( अपूर्वम् ) [ क ] यत्र स्वर्गं प्रति दर्शपूर्णमासोभयत्वेन जनकत्वम्, तत्परमापूर्वम् । यथा—"दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः" इत्यादौ प्रधानविधिबोधितं दर्शपूर्णमासात्मकयागद्वयजन्यमपूर्वम् । ( दि० गु० पृ० २३९ ) ( चि० ४ ) ( मू० म० )

[ ख ] कालिकापूर्वजन्यः स्वर्गादिफलसाधनमपूर्वविशेषः ।

**परस्परम्**—'अन्योन्य' शब्दवदस्यार्थोऽनुसंधेयः । ( ल० म० )

---

१ अत्र—परमापूर्वं वाच्यम्; कालिकापूर्वाणि तु कल्प्यानि, इति मीमांसकानां सिद्धान्तो द्रष्टव्यः । (त० प्र० ख० ४ । पृ० ११४ )

**परस्मैपदम्**[1]—( तिङ् ) क्यजन्तधातोरर्थस्य स्वार्थे कर्तृत्वेऽन्वयबोधनक्षमं[2] यादृशमाख्यातम्, तत् परस्मैपदम्[3] । यथा—पुत्रीयतीत्यादौ[4] परस्मैपदम् ( तिप् ) । ( श० प्र० श्लो० ९८ । टी० )

**पराजयः**—१ [ क ] युद्धनिवृत्तिः । यथा—रणात्[5] पराजयते इत्यत्र[6] धात्वर्थः ।

[ख] कृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववत्त्वम्[7], इति केचिद्वदन्ति । ( श० प्र० श्लो० ६८ । टी. ) २ असहिष्णुता[8] । यथा—कृष्णात्पराजयते[9] शिशुपालः, अध्ययनात्पराजयते बालः, इत्यादौ पराजेरर्थः ।

---

१ अत्र व्युत्पत्तिः—' परस्मै परोद्देशार्थफलकं पदम् ' इति । ( अलुक्समासः ) ( वाच० )

२ घातिता, घातितारौ, इत्यादौ—आत्मनेपदानां निरुक्ताख्यातत्वेऽपि, तदन्यत्वेन विशेषणात् न प्रसङ्गः ( अतिव्याप्तिः ) । ( श० प्र० श्लो० ९८ । टी० )

३ तच्च तिप्, तस्, झि, इत्यादि नवविधम् । " शेषात्कर्तरि परस्मैपदम् " ( पा० सू० १।३।७८ )

४ अत्र—पुत्रीयतीत्यादावेव पुत्रादीच्छाकर्तृत्वमाश्रयत्वलक्षणं बोध्यते, न तु, पुत्रीयते इत्यादौ; इच्छार्थस्य क्यचो निवेशादिति ज्ञेयम् । ( श० प्र० श्लो० ९८ । टी० )

अत्र विशेषस्तु, ' आत्मनेपद'शब्दव्याख्यानावसरे उक्तः, इति तन्नात्र कथ्यते ।

५ अत्र पञ्चम्यर्थो द्वेषः । तथा च—'रणगोचरद्वेषजन्ययुद्धनिवृत्तिमान्' इत्येवं तत्र बोधः । ( श० प्र० श्लो० ६८ । टी० )

६ अत्रेदं बोध्यम्—शत्रुं पराजयते इत्यादौ त्वभिभवहेतुव्यापारः पराजेरर्थः, इति धात्वर्थतावच्छेदकफलशालितया शत्रुप्रभृतेः कर्मत्वमेवेति । ( श० प्र० श्लो० ६८ । टी० )

७ अत्रार्थे—रणात्पराजयते इत्यत्र पञ्चम्यर्थो विशेष्यत्वम् । तच्च धात्वर्थैकदेशे बुद्धावन्वेति । तथा च—'रणधर्मिकस्वकृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभाववान्' इत्याकारको बोधः, इति । ( श० प्र० श्लो० ६८ । टी० )

८ असहिष्णुता च द्वेषविशेषः, अभिभवाशक्यत्वज्ञानं वा । ( का० व्या० पृ० १० )

९ अत्र पञ्चम्याः कर्मत्वमर्थः; ' श्रीकृष्णम्, अध्ययनम्, न सहते ' इति विवरणात् । आख्यातस्याश्रयत्वमर्थः । तथा च—कृष्णात्पराजयते शिशुपाल इत्यादौ ' श्रीकृष्णविषयकाभिभवाशक्यत्वज्ञानवान् शिशुपालः' इति; अध्ययनात्पराजयते बाल इत्यादौ तु ' अध्ययनविषयकाभिभवाशक्यत्वज्ञानवान्बालः ' इति क्रमेण बोधः । ( का० व्या० पृ० १० )

**परामर्शः**—१ [क] व्याप्यस्य पक्षवृत्तित्वधीः । (भा० प० २ । श्लो० ६९) [ख] व्याप्तिविशिष्टपक्षधर्मताज्ञानम् । यथा—पर्वते धूमेन 'व-

---

१ स चानुमितिकारणम् *, तृतीयलिङ्गज्ञानमित्युच्यते, इति लिङ्गपरामर्शशब्दव्याख्यानावसरे व्यक्तीभविष्यति ।

अत्रेदमवधेयम्—'वह्निव्याप्यधूमवान् पर्वतः' इति शाब्दपरामर्शानुरोधेन व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वेनैव (व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन) परमर्शस्यानुमितिकारणत्वमङ्गीकार्यम्; न तु, व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन (मीमांसकमतमनुरुध्य) कारणत्वं स्वीकार्यम्, इति । (चि० २ । पृ० ३४) (मु० २ । पृ० १३७–१३८) (न्या० सि० दी० पृ० ४८)

२ व्याप्तिविशिष्टस्य (हेतोः) पक्षेण सह वैशिष्ट्यावगाहिज्ञानमित्यर्थः । (मु० २। पृ० १३६)

३ अत्र विग्रहः– [क] व्याप्तिविशिष्टं † (व्याप्तिप्रकारकम्) यत् पक्षधर्मताज्ञानम्; तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वमात्रं विवक्षितम् । (दीधि० २ । पृ०५) (न्या० बो० २ । पृ० १३) (त० दी० २ । पृ० २०) [ख] केचित्तु,—व्याप्तिविशिष्टं च पक्षधर्मश्चेति द्वन्द्वाश्रयणाद्व्याप्तिविशिष्टत्वपक्षधर्मत्वावगाहिज्ञानत्वं लभ्यते । पदार्थयोरभेदेऽपि पदार्थतावच्छेदकभेदेनैव, प्रमाणप्रमेयेत्यादिसूत्रे अन्यत्र च द्वन्द्वदर्शनात्; विशिष्टपदस्य कर्मधारयपरतया वा व्याप्तिवैशिष्ट्यपक्षधर्मतयोर्लाभात्, इत्याहुः । (दीधि० २ । पृ० ४)

४ समुदितार्थस्तु–[क] विषयितासंबन्धेन व्याप्तिविशिष्टं पक्षधर्मताज्ञानम् । (सि० च० २ । पृ० २३) (दि० १ । ३) [ख] पक्षनिष्ठविशेष्यतानिरूपितहेतुनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितप्रकारिताशालिज्ञानम् । (न्या० बो० २ । पृ० १३) [ग] व्याप्तिघटकपदार्थविषयतानिरूपितसंबन्धनिष्ठविषयतानिरूपितपक्षधर्मतावच्छेदकावच्छिन्नविषयतानिरूपको निश्चयः (वाक्य० १ । पृ० १३) [घ] व्याप्यवच्छिन्नप्रकारतानिरूपित-पक्षतावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयः, इति । (नील० २ । पृ० २०)

---

* अत्रायं कार्यकारणभावः—'तद्वत्ताज्ञानं प्रति तद्व्याप्यवत्ताज्ञानं कारणम्; तद्धर्मावच्छिन्नविधेयकानुमितौ तद्धर्मावच्छिन्नव्याप्यवत्ताज्ञानं कारणम्' इति यावत् । (न्या० म० ४ । पृ० ३३)

अत्रेदमधिकं बोध्यम्—परामर्श एवानुमितौ कारणम्, न तु परामृश्यमाणं लिङ्गम्; अतीतानागतधूमादिज्ञानेऽप्यनुमितिदर्शनात्, तदानीं लिङ्गाभावादनुमित्यनुपपत्तिः, इति । (चि० २ । पृ० ४३–४४) (मु० २ । पृ० १३५–१३६)

† अत्र [क] 'व्याप्तिविशिष्टं च तत्, पक्षधर्मताज्ञानं च' इति कर्मधारयः । अत्र विशिष्टपदस्य प्रकारतानिरूपकपरत्वात्, 'पक्षधर्मताया ज्ञानम्' इत्यत्र षष्ठ्या विषयत्वबोधनात्, पक्षधर्मतापदस्य संबन्धार्थकत्वात्, कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभाच्च 'व्याप्तिप्रकारकाभिन्नं यत् पक्षसंबन्धविषयकज्ञानम्, तत् परामर्शः

ह्निसाधने 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानम् । ( त० सं० ) परामर्शो द्विविधः 'पक्षे व्याप्यः' इति पक्षप्रकारको व्याप्यविशेष्यकः, 'पक्षो व्याप्यवान्' इति पक्षविशेष्यको व्याप्यप्रकारकश्च । तत्राद्यो यथा—'पर्वते वह्निव्याप्यो धूमः' इति ज्ञानम् । द्वितीयो यथा—'वह्निव्याप्य-

---

१ अनुमितौ व्याप्तिज्ञानं करणम्, परामर्शो व्यापारः । तथा हि—येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता, पश्चात् स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलामभ्रंलिहां धूमलेखां पश्यति । तदनन्तरम्—'धूमो वह्निव्याप्यः' इत्येवंरूपं व्याप्तिस्मरणं तस्य भवति । तस्माच्च 'वह्निव्याप्यधूमवानयम्' इति * ज्ञानं भवति, स एव 'परामर्शः' इत्युच्यते । तदनन्तरम्—'पर्वतोऽयं वह्निमान्' इति ज्ञानं जायते, तदेवानुमितिः, इति । ( मु० २ । पृ० १३५ ) ( त० भा० प्रमाण० पृ० ११ )

२ अत्रेदं बोध्यम्—'पक्षे व्याप्यः' इति परामर्शात् 'पक्षे साध्यम्' इत्याकारिकाऽनुमितिरुत्पद्यते । 'पक्षो व्याप्यवान्' इत्याकारकपरामर्शात्तु 'पक्षः साध्यवान्' इत्याकारिकाऽनुमितिरुत्पद्यते, इति प्राञ्चो नैयायिका आहुः । नव्यनैयायिकास्तु,—द्विविधादपि परामर्शात् 'पक्षः साध्यवान्' इत्याकारिका पक्षमुख्यविशेष्यिकैवानुमितिरुत्पद्यते, इति प्राहुः । ( मु० २ । पृ० १३६ )

---

इति लभ्यते । ( न्या० बो० २ । पृ० १३ ) [ ख ] वैशिष्ट्यं विषयता; पक्षधर्मः पक्षसंबन्धी; तस्य भावः पक्षधर्मता, ' पक्षसंबन्ध इति यावत्; तस्या ज्ञानम् । व्याप्तिविशिष्टं च तत्, पक्षधर्मताज्ञानं चेति कर्मधारयः । ' पक्षधर्मताविषयिताविशिष्टे व्याप्तिविषयिताभाने, तन्निरूपितविषयतयोरपि परंपरया निरूप्यनिरूपकभावः संबन्धो भासते इति व्याप्तिविषयतानिरूपितसंबन्धविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयतानिरूपकज्ञानं लभ्यते । ज्ञानपदं निश्चयपरम् । व्याप्तिविषयतानिरूपितविषयता च व्याप्तिघटकपदार्थविषयतानिरूपिता बोध्या । तेन भ्रमप्रमासाधारण्यनिर्वाहः, इति । ( वाक्य० २ । पृ० १३ ) [ ग ] अत्र 'व्याप्तिविशिष्टे पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता, तज्ज्ञानम्' इति सप्तमीतत्पुरुषाङ्गीकारे व्यभिचारिलिङ्गकानुमितौ (धूमवान्वह्नेरित्यादौ) व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावेनाव्याप्तिः; अतः—व्याप्तिविशिष्टपदस्य व्याप्तिविषयकेत्यर्थमवलम्ब्य ज्ञानान्तपदेन कर्मधारयोऽङ्गीकार्यः । ( नील० २ । पृ० २० ) ( दीपि० २ । पृ० ४ )

अनुमिति—परामर्शयोर्विशिष्य कार्यकारणभावश्चेत्थम्—' वह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नविधेयतानिरूपित—पर्वतत्वावच्छिन्नोद्देश्यताशाल्यनुमितित्वावच्छिन्नं प्रति, वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेष्यताशालिनिर्णयः कारणम् ' इति । ( न्या० बो० २ । पृ० १४ )

धूमवान् पर्वतः' इति ज्ञानम् । (मु० २ । पृ० १३६) २ विवेचनम्; तच्च युक्त्या श्रुतार्थावधारणम्, इति केचिदाहुः । ३ गुरुवाक्यतात्पर्यनिर्णायको विचारः । ( सां० प्र० भा० ४ । १७ ) यथा—"नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत्" ( सां० सू० अ० ४ । सू० १७ ) इत्यादौ, इति सांख्या आहुः ।

**परार्थानुमानम्**—( अनुमानम् ) [ १ ] [ क ] न्यायप्रयोज्यानुमानम् । ( न्या० बो० २ । पृ० १९ ) (चि० २ । पृ० ७६) यथा—परसमवेतानुमितिकरणं लिङ्गपरामर्शः परार्थानुमानम् । (नील० २ । पृ० २१) [ ख ] पञ्चावयवेनैव वाक्येनानिश्चितार्थप्रतिपादनम् । (प्रशस्त० २। पृ० २८)

[ २ ] पञ्चावयववाक्यम् । ( नील० २ । पृ० २२ ) यथा—'यत्तु, कश्चित्स्वयं धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयवोपेतमनुमानवाक्यं प्रयुङ्क्ते, तत् परार्थानुमानम्' ( त० भा० २ । प्रमाण० पृ० ११ ) ( त० सं० ) इत्यादौ—'पर्वतोऽग्निमान्, धूमवत्त्वात्, यो यो धूमवान्स

---

१ अत्र व्युत्पत्तिः—'येन परं प्रतिपादयति तत् परार्थानुमानम्' इति । ( न्या० बि० परि० २। पृ० २१ )

२ अत्र 'परस्य मध्यस्थस्यार्थः प्रयोजनं साध्यानुमितिरूपं ( मध्यस्थसंशयनिवृत्तिरूपं वा ) यस्मात्' इति व्युत्पत्तिर्द्रष्टव्या । (नील० २। पृ० २१)

३ अथावयवाः पुनः,—प्रतिज्ञा-अपदेश-निदर्शन-अनुसंधान-प्रत्याम्नायाः, इति । ( प्रशस्त० २। पृ० २८)

४ पञ्चावयवेनैव वाक्येन संशयितविपर्यस्ताव्युत्पन्नानां परेषामनिश्चितार्थप्रतिपादनं परार्थानुमानं विज्ञेयम् । ( प्रशस्त० २। पृ० २८)

५ तथा चोक्तम्—परार्थानुमानं* शब्दात्मकम् । स्वार्थानुमानं तु ज्ञानात्मकम् । ( न्यायबिन्दु० टी० प० २। पृ० २१)

६ तथा च—अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं (वह्निमान् धूमादित्यादौ) प्रतिपद्यते । ( त० सं० )

---

* अयं भावः—[ क ] तस्य शब्दात्मकत्वेऽपि अनुमानविषयत्वेन, अविनाभावोपनायकत्वेन वाऽनुमानम् (गौणम्), इति विज्ञेयम् । [ ख ] परार्थानुमानप्रयोजके पञ्चावयववाक्ये परार्थानुमानशब्दस्यौपचारिकः प्रयोगः, इति । ( नील० २। पृ० २२ )

सोऽग्निमान्यथा महानसः, तथा चायम्, तस्मात्तथा' इति पञ्चावयववाक्यं ( प्रतिज्ञादिसमुदायः ) परार्थानुमानम् । ( त० सं० ) ( नील० २ । पृ० २२ )

**परि**[3]—( अव्ययम् ) १ समन्ततो भावः । यथा—परिभ्रमति, इति । २ व्याप्तिः । यथा—परिणतः, इति । ३ दोषकथनम् । यथा—परिवादः, इति । ४ भूषणम् । यथा—परिष्करोति, इति । ५ आश्लेषः । यथा—परिष्वजते, इति । ६ पूजनम् । यथा—परिचरति, इति । ७ वर्जनम् । यथा—परि त्रिगर्तात्, इति । ८ मर्यादा । यथा—परिच्छिद्यते वासः, इति । ९ आच्छादनम् । यथा—परिदेवनम्, (?) इत्यादौ । ( गण० टी० ) १० व्याधिः । ११ शेषः । १२ उपरमः । १३ संतोषः । १४ संतोषभाषणम्, इत्यादि । ( वाच० )

**परिचयः** —ज्ञातस्य पौनःपुन्येन ज्ञानम् । ( वाच० ) २ सर्वतश्चयनम्, इति काव्यज्ञा आहुः ( माघ० २ । ७५ )

**परिचायकम्**—[ १ ] तदघटकत्वे सत्यर्थविशेषज्ञापकम् । यथा—शब्दगुणकत्वरूपाकाशलक्षणे गुणः परिचायकः । (स्व०) यथा वा—तत्तद्धर्मावच्छिन्ननिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वरूपे हेत्वाभासलक्षणे तत्तद्धर्मावच्छिन्ननिरूपितत्वं विषयितानां परिचायकम् । ( ग० हेत्वा० सामान्यनि० पृ० ३१ )

[ २ ] उपलक्षणवदस्यार्थोऽनुसंधेयः, इति केचिद्वदन्ति ।

**परिच्छित्तिः**—अनुभववदस्यार्थोऽनुसंधेयः । ( कु० टी० ४।५ )

**परिच्छेदः**—१ [ १ ] ज्ञानम् । ( चि० २ ) यथा—" वाक्यार्थसामानाधिकारण्येन संज्ञानिमित्तपरिच्छेदः " इत्यादौ । [ २ ] अवधारणम् । २ अवधिः । ३ सीमा । ४ परिमाणम् । ५ ग्रन्थस्य संधिविशेषः ।

---

१ अत्र 'परस्य प्रतिवादिनोऽर्थो निवृत्तिर्यस्मात्' इति व्युत्पत्तिर्द्रष्टव्या ।

२ अस्योपसर्गत्वम्, अर्थभेदे कर्मप्रवचनीयत्वं च यथायथं ज्ञेयम् ।
अस्यार्थविशेषद्योतकत्वमेव, न तु वाचकत्वमित्यपि विज्ञेयम् ।

३ अत्रोच्यते—"सर्गवर्गपरिच्छेदोद्घाताध्यायाङ्कसंग्रहाः । उच्छ्वासः परिवर्तश्च पटलं काण्ड-

**परिणामः**—१ जीर्णता (पाकः)। (सि० च०) (नील०) यथा—"भुक्तस्य परिणामहेतुरौदर्यम् (तेजः)" (त० सं०) इत्यादौ। २ सांख्याः पातञ्जलाश्च,—[१] [क] अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति। (वात्स्या० ३।२।१६)

[ख] सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरोत्पत्तिः (प्रादुर्भावः)। यथा—पयसः परिणामो[1] दधि, इति। (गौ० वृ० ३।८७) (वात्स्या० ३।२।१६)

[ग] प्रकृतेरन्यथाभावो[2] विकारः। यथा—"परिणामतापसंस्कारदुःखैः............"(पात० सू० पाद० २।सू० १९), "परिणामतः[3] सलिलवत्" (सां० का० १६) इत्यादौ, इत्याहुः। [२] मायावादिनो वेदान्तिनस्तु,—पूर्वरूपपरित्यागे सति नानाकारप्रतिभासः। यथा—क्षीरस्य दधिप्रतिभासः, इत्याहुः। (आथर्वभाष्ये सायण आह)। ३ शेषः (अन्त्यावस्था)। यथा—"परिणामेऽमृतोपमम्" (गीता० अ० १८। श्लो० ३७) इत्यादौ। ४ अर्थालंकारविशेषः, इत्यालंकारिका आहुः।

---

मक्रियाम् ॥ स्थानं प्रकरणं पर्वाह्निकं* च ग्रन्थसंधयः" इति। (त्रिकाण्ड०) एवमन्येऽपि,—पाद—लम्बुक—तरङ्ग—स्तबक—प्रपाठक—इत्यादयोऽपि यथायथं ग्रन्थसंधय ऊह्याः। (वाच०)

१ विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावोऽम्लरसात्मकगुणान्तरस्याविर्भावात्, इति। (गौ० वृ० ३।८७) नैयायिकास्तु,—अत्र परिणामो विनाश एव, इत्याहुः। (गौ० ३।२।१५)

२ अत्र,—अन्यथाभावश्च प्रकृत्युच्छेदेन, प्रकृतेर्गुणान्तराधानेन वा। यथा—मृदादेर्घटादिरूपेण, काष्ठादेर्भस्मादिना। (वाच०)

३ यथा हि,—वारिदविमुक्तमुदकमेकरसमपि तत्तद्भूमिविकारानासाद्य नारिकेलतालीबिल्वचिरबिल्वतिन्दुकामलककपित्थफलरसतया परिणामान् मधुराम्लतिक्तकटुकषायतया विकल्पते; एवम्—एकैकगुणसमुद्भवात् प्रधानं गुणमाश्रित्याप्रधानगुणाः परिणामभेदान् प्रवर्तयन्ति। (सांख्य० कौ० श्लो० १६)

---

* तत्र—काव्ये सर्गः; कोशे वर्गः; अलंकारे परिच्छेदोच्छ्वासौ; कथायामुद्घातः; नाटकेऽङ्कः; संहिता—पुराणादावध्यायः; तन्त्रे पटलम्; ब्राह्मणे काण्डम्; इतिहासे पर्व; भाष्ये आह्निकम्; इति। (वाच०)

**परिनिष्ठा**—१ अनन्यवृत्तित्वम् । २ पर्यवसानम् । ( सांख्य० भाष्य० १ । ६८ ) यथा—" पारंपर्येऽप्येकत्र परिनिष्ठा.... .... ...." ( सां० सू० अ० १ । सू० ६८ ) इत्यादौ ।

**परिनिष्ठितत्वम्**—अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । यथा—मायावादिनां वेदान्तिनां मते—ब्रह्मणः परिनिष्ठितत्वम् । ( स्व० )

**परिपाकः**—परिणामवदस्यार्थोऽनुसंधेयः । ( वाच० )

**परिभाषा**—[ १ ] आधुनिकसंकेतः । ( ग० शक्ति० ) ( वै० वि० ७ । २ । २० ) यथा—शाब्दिकमते वृद्धिपदस्याकारैकारौकारेषु पाणिनिसंकेतः । [ २ ] केचित्तु,—अवयवार्थमनादृत्य समुदायार्थे विशिष्टसंज्ञा परिभाषा । यथा—" यथोद्देशं संज्ञापरिभाषम् " इत्यादौ, इत्याहुः ।

**परिमण्डलम्**—१ [ १ ] परमाणुपरिमाणम् । [ २ ] परिमाणविशिष्टः परमाणुः । ( वै० वि० ७ । १ । २० ) (तच्च परिमण्डलम्) नित्यम् । ( वै० ७ । १ । २० ) । २ वर्तुलाकारः, इति काव्यज्ञा आहुः ।

**परिमाणम्**—( गुणः ) [ क ] परिमाणत्वजातिमत्; मानव्यवहारासाधारणकारणम् । ( वै० वि० ७ । १ । ८ ) यथा—'शतयोजनश्चन्द्रः' इति ज्योतिःशास्त्रोक्तं परिमाणम् । ( त० प्र० ४ । पृ० २९ ) [ ख ] यवाङ्गुलप्रस्थादिभिः, गुञ्जादिभिश्च द्रव्यस्य परिच्छेदः (माप०) ।

---

१ तच्च नवसु द्रव्येषु वर्तते । (त० सं०) तथा हि—[ क ] तत्राकाशादिषु चतुर्षु परममहत्त्वम्; परमाणुषु परमाणुत्वम्; द्व्यणुके अणुत्वम्; अतोन्येषु महत्त्व-दीर्घत्व-ह्रस्वत्वानि । [ ख ] तत्राणुपरिमाणं परमाणौ द्व्यणुके च तिष्ठति । तत्रापि परमाणावणुपरिमाणं परम्; विभुचतुष्टये महत्परिमाणं परमम् । त्रसरेण्वादिमहावयविपर्यन्तद्रव्येषु अवान्तर—जन्यमहत्परिमाणम् । ( वै० वि० ७।१।८ )

२ [ क ] मानव्यवहारश्च, हस्तवितस्त्यादिव्यवहारः; न तु पलसंख्यादिव्यवहारः । ( वै० उ० ७।१।८ ) [ ख ] मानं परिमितिः, तस्य यो व्यवहारः 'इदं महत्, इदमणु' इत्याद्यात्मकः । ( सि० च० १। पृ० १७ ) [ ग ] मानव्यवहारः 'अणुत्वादिर्गुणः' इति व्यवहारः । ( वाक्य० १। पृ० ७ )

३ अत्रोच्यते—जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञम्, तदष्टकं लिक्षा, तत्त्रयं राजसर्षपः, तत्त्रयं गौरसर्षपः, ते षट् यवः, तत्त्रयं कृष्णलः, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्धम्, स चतुर्माषकं सुवर्णः, तच्चतुःसौवर्णिको निष्कः, इति । द्वे कृष्णले रूप्यमाषकः, ते

परिमाणं विभजते— (क) परिमाणं द्विविधम् । महत्त्वम्, अणुत्वम् । (त० व०) (ख) प्रकारान्तरेण तच्चतुर्विधम् । अणु, महत्, दीर्घम्, ह्रस्वं च । (प्रशस्त०) (त० सं०) (मु० गु०) । (ग) अणु, ह्रस्वम्, महत्, दीर्घं चेति । तत्र—अणु—ह्रस्वपरिमाणे परमाणुद्व्यणुकयोः । महद्दीर्घपरिमाणे त्र्यणुकचतुरणुकादौ । (प्र० प्र०) चतुर्विधमपि परिमाणं द्विविधम् । नित्यम्, अनित्यं च । तत्र नित्यगतं नित्यम् । अनित्यगतमनित्यम् । तच्च (अनित्यम्) आश्रयनाशान्नश्यति च । (वै० ७ । १ । १८–१९) (प्रशस्त०) अनित्यं त्रिविधम् । संख्याजन्यम्, परिमाणजन्यम्, प्रचयजन्यं च । तत्राद्यम्—परमाणुद्वित्वजन्यं द्व्यणुके, द्व्यणुकबहुत्वजन्यं त्र्यणुके तिष्ठति । द्वितीयम्—कपालपरिमाणजन्यं घटपरिमाणम् । तृतीयम्—तूलावयवसंयोगजन्यं तूलपिण्डपरिमाणम् । (वै० ७ । १ । ८–२९) (भा० प० श्लो० ११०–११४) (प्रशस्त०) (सि० च० १ । पृ० २१) (त० कौ०) (घ) परिमाणं चतुर्विधम् । अणु, महत्, दीर्घम्, ह्रस्वं च । तत्र—महत् द्विविधम् । नित्यम्, अनित्यं च । नित्यम्-आकाश-काल-दिक्-आत्मसु परममहत्त्वम् । अनित्यम्-द्व्यणुकादावेव । तथा—अण्वपि द्विविधम् । नित्यम्, अनित्यं च । परमाणु-मनस्सु पारिमाण्डल्यम् (नित्यम्) । अनित्यं द्व्यणुक एव । कुवलामलकबिल्वादिषु महत्स्वपि तत्प्रकर्षभावाभावमपेक्ष्य भाक्तोऽणुव्यवहारः । दीर्घत्व-ह्रस्वत्वे तूत्पाद्य महदणुत्वैकार्थसमवेते ।

---

षोडश धरणम्, इति । ताम्रिकः कार्षापणः पणः, इति । (विष्णुस्मृतिः) (वाच०) मनुयाज्ञवल्क्यादयस्तु प्रकारान्तरेण परिमाणगणनं चक्रिरे ।

१ तत्राङ्गुलादिपरिमाणमेव वैशेषिकमते गुणविशेषत्वेन, चतुर्विधत्वेन च प्रतिपादितम्; न तु *गुञ्जादिपरिमाणम्, इति तारानाथतर्कवाचस्पतिराह ।

२ चतुर्विधमपि प्रत्येकं द्विविधम् । परम्, मध्यमं चेति । तत्र परमाणुत्व—ह्रस्वत्वे परमाणुमनसोस्तिष्ठतः । मध्यमाणुत्वह्रस्वत्वे द्व्यणुके तिष्ठतः । परममहत्त्वदीर्घत्वे गगनादौ तिष्ठतः । मध्यममहत्त्वदीर्घत्वे घटादौ तिष्ठतः, इति । (सि० च० १। पृ० १७)

अयं संयोगश्च 'शिथिल' इत्युच्यते । (भा० प० श्लो० ११३) (सि० च० १। पृ० २१)

तत्प्रपञ्चस्तु, ग्रन्थान्तरेषु कोशादौ कर्षादिशब्दे च द्रष्टव्यः ।

समिदिक्षुवंशादिष्वञ्जसा दीर्घेष्वपि तत्प्रकर्षभावमपेक्ष्य भाक्तो ह्रस्वव्यवहारः । अनित्यचतुर्विधमपि संख्या–परिमाण–प्रचय–योनि । तत्रेश्वरबुद्धिमपेक्ष्योत्पन्ना परमाणुद्व्यणुकेषु बहुत्वसंख्या, तैरारब्धे कार्यद्रव्ये त्र्यणुकादिलक्षणे रूपाद्युत्पत्तिसमकालं महत्त्वं दीर्घत्वं च करोति । द्विबहुभिर्महद्भिरारब्धे कार्यद्रव्ये कारणमहत्त्वान्येव महत्त्वमारभन्ते; न बहुत्वम् । समानसंख्यैरारब्धेऽतिशयदर्शनात् । प्रचयस्तु तूलपिण्डयोर्वर्तमानः पिण्डारम्भकप्रशिथिलसंयोगापेक्ष इतरेतरपिण्डावयवसंयोगापेक्षो वा द्वितूलके महत्त्वमारभते; न बहुत्व–महत्त्वानि । समानसंख्यापलपरिमाणैरारब्धेऽतिशयदर्शनात् । द्वित्वसंख्या चाण्वोर्वर्तमाना द्व्यणुकेऽणुत्वमारभते; महत्त्ववत् त्र्यणुकादौ कारणमहत्त्वबहुत्वसमानजातीयप्रचयेभ्यो दीर्घत्वस्योत्पत्तिः । अणुत्ववत् त्र्यणुके द्वित्वसंख्यातो ह्रस्वत्वस्योत्पत्तिः ।.......... एतच्चतुर्विधमपि परिमाणमुत्पाद्य स्वाधारविनाशादेव विनश्यति, इति । (प्रशस्त० पृ० १६) । (ङ) तच्च परिमाणं चतुर्विधम् । महत्त्वम्, अणुत्वम्, दीर्घत्वम्, ह्रस्वत्वं च । तत्र परममहत्त्व–परमदीर्घत्वे विभुचतुष्टयवर्तिनी । परमाणुत्व–परमह्रस्वत्वे परमाणुवर्तिनी । अवान्तराणुत्व–अवान्तरह्रस्वत्वे द्व्यणुकवर्तिनी । त्रसरेणुमारभ्य महावयविपर्यन्तं महत्त्वं–दीर्घत्वे । .... .... .... अत्र–दीर्घत्वह्रस्वत्वे नित्ये न वर्तेते, इत्येके । परिमाणे एव ते न भवतः, इत्यपरे । किं तु–अणुत्व–महत्त्वे द्वे एव परिमाणे; न तु चतुर्धा, इति सांख्या वेदान्तिनश्चाहुः[1] (वै० उ० ७।१।८) ।

इदानीं परिमाणकारणानि परिसंचष्टे–"कारणबहुत्वाच्च" (वै० ७ ।

---

१ एवं च–सर्वाण्यपि द्रव्याणि परिमाणद्वयवन्ति । बिल्वामलकादावणुत्वव्यवहारः, समित्–इक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः* । (वै० उ० ७।१।८)

---

* भक्तिश्चात्र प्रकर्षभावाभावः । आमलके यः प्रकर्षभावस्तस्याभावः कुवले । बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके । स च गौणमुख्योभयभागित्वात् भक्तिपदवाच्यः । (वै० उ० ७।१।८)

१ । ९ ) तत्र कारणबहुत्वं केवलं त्र्यणुके महत्त्वदीर्घत्वे जनयति; महत्त्वप्रचययोस्तत्कारणेऽभावात् .... .... .... । एवम्—परमाणुद्वयगतं द्वित्वं द्व्यणुके परिमाणोत्पादकम् । द्वाभ्यां तन्तुभ्यामप्रचिताभ्यामारब्धे पटे केवलं महत्त्वमेवासमवायिकारणम्; बहुत्व—प्रचययोस्तत्राभावात् । यत्र च द्वाभ्यां तूलकपिण्डाभ्यां तूलकपिण्डान्तरारम्भस्तत्र परिमाणोत्कर्षदर्शनात् प्रचयः कारणम्; बहुत्वस्याभावात्, महत्त्वस्य सत्त्वेऽपि परिमाणोत्कर्षे प्रत्यप्रयोजकत्वात्, एवं च सति—यदि महत्त्वं तत्र कारणम्, तदा न दोषः । तदुक्तम्—"द्वाभ्यामेकेन सर्वैर्वा" इति । (वै० उ० ७ । १ । ९)

**परिवृत्तिसहः**—(शब्दः) यौगिकः शब्दविशेषः । स च त्रिविधः । पूर्वपदपरिवृत्तिसहः, उत्तरपदपरिवृत्तिसहः, उभयपदपरिवृत्तिसहश्च । तत्राद्यम्,—जलधि—दिनकर—इत्यादिपदम् । द्वितीयम्,—वडवानलादिपदम् । तृतीयम्,—स्वस्वामिभावसंबन्धरूपेऽर्थे भूपालादिपदम् । उभयपदपरिवृत्त्य-

---

१ अत्रेदं ज्ञेयम्—तच्च बहुत्वं ईश्वरापेक्षाबुद्धिजन्यम्; तद्बुद्धेरनेकविषयत्वेऽप्यदृष्टविशेषोपग्रहो नियामकः, इति । (वै० उ० ७।१।९)

२ अत्र व्युत्पत्तिः—'परिवृत्तिं (परावृत्तिम्) सहते' (सह—अच्) इति । अयं च 'पर्यायपरिवृत्तिसहः' इत्यप्युच्यते । परिवृत्तिसहत्वं च समानार्थकत्वे सति विभिन्नानुपूर्वीकत्वम् ।

३ स च पूर्वोत्तरपदयोः परावृत्त्या योगलभ्यार्थं बोधयतीति तस्य तथात्वम् ।

४ अत्र जलपदस्थाने तोयादिपदस्य, दिनपदस्थाने च दिवसादिपदस्य, प्रक्षेपेण समानार्थप्रतीतेः पूर्वपदमेव (जल-दिन-पदमेव) पर्यायपरिवर्तनं क्षमते; नतूत्तरपदम् (धि-कर-इति पदम्); तत्स्थाने आधारादिपदप्रक्षेपे जलाधार—दिनजनकेत्यादिपदात् समुद्रसूर्याद्यर्थाप्रतीतेः ।

५ अत्र अनलपदस्थाने अग्न्यादिपदप्रक्षेपेण समानार्थप्रतीतेः उत्तरपदमेव (अनलपदमेव) परिवर्तनं क्षमते; न तु पूर्वपदम् (वडवापदम्); वडवापदस्थानेऽश्वादिपदप्रक्षेपे अश्वानल—हयानल—इत्यादिपदात्तादृशार्थाप्रतीतेः ।

६ अत्र तादृशसंबन्धस्य, भूपालादिपदादिव पृथ्वीभृत्—महीपत्यादिपदादपि बोधनेन समानार्थप्रतीतेस्तस्योभयपदपरिवृत्तिसहत्वं संगच्छते ।

७ तथा चोक्तं हेमचन्द्रेण—"वार्ध्यादिषु पदे पूर्वे, वाडवाग्न्यादिषूत्तरे । द्वयेऽपि भूभृदाद्येषु, पर्यायपरिवर्तनम् ॥ एवं परावृत्तिसहा योगाः स्युरिति यौगिकाः । मिश्राः पुनः परावृत्त्यसहा गीर्वाणसंनिभाः" इति । (वाच०)

सहं तु एतत्रितयलक्षणभिन्नं रूढमेव । तद्यथा,—गीर्वाणादिपदम् । [1]
( काव्यप्र० उल्ला० ७ )

**परिशेषः**—प्रसक्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गात्परिशिष्यमाणे संप्रत्ययः । ( सि० च० १। पृ० ९ ) यथा—परिशेषानुमानमित्यादौ[2] ।

**परिशेषानुमानम्**—[ क ] तदितरविशेषाभाववत्त्वे सति सामान्यवत्त्वरूपो हेतुः । ( राम० १। मङ्गल० पृ० ९ )

[ ख ] विशेषाभावसहकृतसामान्यहेतुकानुमानम् । ( स्व० ) यथा—अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे, 'मङ्गलं समाप्तिफलकम् समाप्त्यन्याफलकत्वे[3] सति सफलत्वात्' इत्यनुमानम् । ( राम० ) ( दि० १। मङ्गल० पृ० ४ )

**परिषत्**—[ १ ] जातिविशिष्टपुरुषोपग्रहेण वर्तमाना (सभा) । (न्या० वा० १। १ । १४ । पृ० ७९) [ २ ] धर्मज्ञास्तु,—" दशावरा वा परिषद्यं धर्मं परिकल्पयेत् । त्र्यवरा वाऽपि वृत्तस्था तं धर्मं न विचालयेत्" ( मनु० १२ । ११० ) इत्यादौ, इत्याहुः ।

---

१ अत्र 'गीः, बाण' एते उभे अपि पदे 'वचो,* बाण' इति परावर्तनं न क्षमेते, इति तस्य तथात्वम् ।

२ तथा हि—'शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितः, अष्टद्रव्यानाश्रितत्वे† सति समवायिकारणकत्वात्, यन्नैवम् तन्नैवम्, यथा रूपम्' इति परिशेषानुमानम् । ( सि० च० १। पृ० ९)

३ अत्र लक्षणसमन्वयः क्रियते—तस्मात् ( समाप्तिरूपात्फलात् ), इतरो विशेषः ( स्वर्गादिरूपं फलम् ), तस्याभाववत्त्वे ( जनकतासंबन्धेन स्वर्गादिफलस्याभाववत्त्वे ) सति, सामान्यवत्त्वम् ( फलवत्त्वम् ), इति ।

---

* अत्र गीःपदस्थाने 'वच' इति पदस्य, वाणपदस्थाने च बवयोरभेदात् बाणपदस्य प्रक्षेपे, गीर्वाणपदाद्देवतार्थस्येव वचोबाणपदात्तादृशार्थाप्रतीतेः; प्रत्युत—वाक्शररूपार्थप्रतीतेश्च, इति ।

† अत्र परिशेषपदार्थस्य समन्वयः क्रियते—प्रसक्तस्य (अष्टद्रव्याश्रितत्वस्य), प्रतिषेधे ( अभावे वक्तव्ये ), अन्यत्र ( शब्दादन्यत्र रूपादौ ), अप्रसङ्गात् ( तादृशप्रतिषेधस्य प्राप्त्यभावात् ), परिशिष्यमाणे ( शब्दे ), संप्रत्ययः ( प्रसक्तप्रतिषेधस्य संबन्धः ), इति ।

**परिसंख्या**—( विधिः ) [ क ] सर्वत्र प्राप्तस्य क्वचिद्विधिः । यथा—"पञ्च पञ्चनखा भक्ष्याः" इति । ( सि० च० पृ० ३३ )

[ ख ] अन्ययोगव्यवच्छेदः । यथा—पञ्च पञ्चनखान् भुञ्जीतेत्यादौ लिङा परिसंख्या बोध्यते । एवम्—याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदि-

---

१ तदुक्तं भट्टपादैः—"तत्र चान्यत्र च प्राप्तौ* परिसंख्येति कीर्त्यते" इति । ( न्या० म० ४। पृ० २८ )

२ अत्र सर्वेषां पञ्चनखानां भक्षणे प्राप्ते 'पञ्चैव पञ्चनखा भक्ष्याः, नत्वन्ये' इति विधीयते ( नियम्यते ) । ( त० प्र० ४। पृ० १०८ ) ( सि० च० पृ० ३३ ) पञ्चनखपञ्चातिरिक्ताभक्षणं विधीयते, इति तात्पर्यम् ।

पञ्चनखास्तु,—"शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः" इति । ( सि० च० पृ० ३३ ) ( त० प्र० ४। पृ० १०८ )

केचिदत्रैवमाहुः—ऋतौ भार्यामुपेयादित्यत्रापि परिसंख्यैव; तत्र ऋतुकाल एव भार्यागमनं विधीयते; ऋत्वतिरिक्तकाले भार्यागमनस्य निषेधात्, इति । वस्तुतस्तु,—तत्र 'ऋतुकाले भार्यागमनं कर्तव्यमेव' इति बोधात् नियमविधिरेव,† इति । अधिकं तु ( श० प्र० श्लो० १००। टी० ) तत्र द्रष्टव्यम् ।

३ अत्रत्यलिङा प्रत्यवायहेतुत्वं प्रत्याय्यते । प्राथमिकपञ्चपदेन लक्षणया शशादिपञ्चभिन्नोऽर्थो बोध्यते । ( श० प्र० श्लो० १०० टी० )

४ सा ( परिसंख्या ) च 'पञ्चैव पञ्चनखान् भुञ्जीत' इत्याकारैव‡ । तेन, 'शशादिपञ्चभिन्नानां पञ्चनखानां भोजनं प्रत्यवाय§हेतुः' इत्येव तत्र वाक्यार्थः । ( श० प्र० श्लो० १००। टी० )

---

* तदर्थश्च—यत्रोद्देश्ये यस्य विधानम्, तदन्यस्मिन्नपि तत्संबन्धस्य तस्मिन्वा तदन्यसंबन्धस्य प्रवृत्तितः प्रसक्तौ, इति ।

† अत्रायं भावः—"ऋतावुपेयात्स्वां भार्यामन्यथा भ्रूणहा भवेत्" इत्यादिनिन्दार्थवादबलात्, ऋतौ स्वदारगमनाद्यभावस्य दुरितहेतुत्वव्यवस्थित्यैव तद्विधेर्नियमपरत्वं कल्प्यते, इति । ( श० प्र० श्लो० १००। टी० )

‡ अत्र 'शशादिपञ्चविधान् पञ्चनखानेव भुञ्जीत' इत्याकारा परिसंख्या न भवति; पञ्चनखभिन्नस्य ओदनादेर्भोजनस्य निषिद्धत्वे प्रमाणाभावात्, इति । ( श० प्र० श्लो० १००। टी० )

§ अत्रायं भावः—"श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा । भक्ष्यान्पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः" इति ( अ० ५। श्लो० १८ ) मनुवचने—पञ्चनखेष्विति निर्धारणसप्तम्या 'शल्लकादिपञ्चभिन्नपञ्चनखानां भक्षणस्य प्रत्यवायहेतुत्वम्' इत्यर्थे कृप्तत्वात्, इति । ( श० प्र० श्लो० १०० टी० )

त्यादावपि लिङः परिसंख्यैवार्थः । ( श० प्र० श्लो० १०० । टी० )
[ ग ] उभयोर्युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः । यथा—पञ्च पञ्चनखा भक्ष्या इति । परिसंख्या द्विविधा । श्रौती, लाक्षणिकी च । तत्राद्या,—"अत्र ह्येवावयन्ति" ( श्रुतिः ) इति । द्वितीया,—"पञ्च पञ्चनखा

१ तेनात्रापि 'याजनादिभिन्नैर्ब्राह्मणस्य धनार्जनं प्रत्यवायहेतुः' इति वाक्यार्थः; "न कृष्याद्यैरनापन्नो ब्राह्मणो धनमर्जयेत्" इत्यादिवचनैरुपायान्तरेण विप्राणां धनार्जनस्य प्रत्यवायहेतुत्वस्य स्फुटत्वात्, इति बोध्यम् । ( श० प्र० श्लो० १००। टी० )

अत्राहुः—"याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इत्यत्र नियमविधिरेव । तथा हि—यत्र क्रियायां विकल्पेन कारकान्वयः, स नियमः । यथा—धनार्जने याजनप्रतिग्रहाभ्यामेकस्यार्जनस्यासंभवात् एकस्यां धनार्जनक्रियायां याजनादीनां मिलितानामन्वयासंभाविततया विकल्पेनैवान्वयः । शशकादिमांसनिर्मितस्यैकस्य पिण्डस्य संभवात्, भक्षणक्रियायां मिलितानामन्वयसंभवः, इति परिसंख्येति भेदः, इति । (त० प्र० ४। पु० १०८) शब्दशक्तिप्रकाशिकाकृतस्तु,—अत्र 'याजनाद्यैर्ब्राह्मणो धनमर्जयेदेव' इति न नियमविधिः; याजनादिना धनानर्जने ब्राह्मणस्य प्रत्यवायाश्रुतेः, इत्याहुः । ( श० प्र० श्लो० १००। टी० )

२ समुदायश्लोकस्तु,—"पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः" इति । ( लौ० भा० पु० ४२ )

३ तदर्थश्च—अत्र ( प्रकृते ), अवयन्ति ( अवजानन्ति ) गायन्तीति यावत्, ( लौ० भा० टी० पु ४२ ) अत्रैवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तिरभिधीयते, इति अस्याः परिसंख्यायाः श्रौतीत्वम्, इति विज्ञेयम् । ( लौ० भा० पु० ४१ )

४ इदं हि वाक्यम्, पञ्चानां पञ्चनखानां सेधागोधादीनां च न भक्षणपरम् (नापूर्वविधिः); तस्य रागतः प्राप्तत्वात् । नापि, तेषां भक्षणनियमपरम्; तेषां च तदितरपञ्चनखानां च भक्षणस्य युगपदपि रागतः प्राप्ततया, पक्षेऽप्राप्त्यभावात् । किं तु—लक्षणया पञ्चेतरपञ्चनखानां श्वाविधादीनां भक्षणनिवृत्तिपरम् * इति भवति परिसंख्या । ( म० प्र० पु० ६१–६२ ) ( लौ० भा० ४। पु० ४१ )

* अयं भावः-[ क ] दोषत्रयवती परिसंख्या भवति । दोषत्रयं च,—श्रुतहानिः, अश्रुतकल्पना, प्राप्तबाधश्चेति । श्रुतस्य पञ्चनखभक्षणस्य हानात्, अश्रुतायाः पञ्चेतरपञ्चनखभक्षणनिवृत्तेः कल्पनात्, रागतः प्राप्तस्य पञ्चेतरपञ्चनखभक्षणस्य बाधनाच्च । ( म० प्र० ४ । पु० ६२ ) ( लौ० भा० पु० ४१ ) [ ख ] केचित्तु,—इतरव्यवच्छेदस्याऽऽर्थत्व–शाब्दत्वाभ्यां नियमपरिसंख्ययोर्भेदः । तथा हि—याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादौ वित्तार्जने उपायत्रयसंबन्धस्य शब्दात्प्रतीतौ कृष्यादीनामनन्वयोऽर्थात्सिद्ध्यति । येषामेकान्वयेऽपरान-

भक्ष्याः'' इति । ( लौ० भा० पृ० ४१ ) ( म० प्र० ४ । पृ० ६२ )

[ घ ] प्रसञ्जकप्रवृत्तिविरोधिविधिः यथा—''इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते'' ( श्रुतिः ) इत्यादौ । ( वाच० )

**परीक्षकः**—[ १ ] [ क ] नैसर्गिकं वैनयिकं बुद्ध्यतिशयं प्राप्तः । परीक्षकस्तर्केण प्रमाणैरर्थं परीक्षितुमर्हतीति । ( वात्स्या० १ । १ । २९ ) यथा—''लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यम्, स दृष्टान्तः'' ( गौ० १ । १ । २९ ) इत्यादौ—गोतम—कणादौ मुनी परीक्षकौ । ( स्व० )

[ ख ] शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः ( प्रतिपादकः ) । ( गौ० वृ० १ । १ । २९ ) [ २ ] व्यवहारादौ दिव्यभेदपरीक्षाकारकः, इति व्यवहारशास्त्रज्ञा आहुः । ( वाच० )

**परीक्षा**—[ १ ] [ क ] 'लक्षितस्य यथालक्षणमुपपद्यते, न वा' इति प्रमाणैरवधारणम् । ( वात्स्या० १ । १ । २ )

[ ख ] 'यथावल्लक्षितस्यैतल्लक्षणमुपपद्यते, न वा' इति विचारः । ( त० भा० पृ० १ )

---

१ तथा हि—इमामित्यादिमन्त्रस्य रशनामात्रग्रहणप्रकाशकतया, अश्वरशनादान इव गर्दभरशनाया आदानेऽपि मन्त्रस्य विनियोगो लिङ्गाद्गम्यते । तथा च—तदादानकालेऽपि तन्मन्त्रपाठप्रवृत्त्या, तत्रापि तन्मन्त्रसंबन्धः स्यात् । एतस्माच्च विधितः, प्रथममश्वरशनाग्रहणे एतन्मन्त्रविनियोगलाभे निराकाङ्क्षतया, गर्दभरशनाग्रहणे न तद्विनियोगलाभ इति वैयर्थ्ये, न तदाचरणम्, इति एतद्विधेर्विधेयस्येतरोद्देश्यसंबन्धप्रसञ्जकप्रवृत्तिविरोधिता, इति । ( मीमां० परि० ) ( वाच० )

२ इयं च शास्त्रस्य प्रवृत्तिः । ( वात्स्या० १।१।२ ) ( त० कौ० ) प्रमाणादीनां षोडशानां पदार्थानां तत्त्वज्ञानार्थं परीक्षा कर्तव्या । ( त० भा० पृ० १ )

---

न्वयः, तेषां समुच्चयासंभवात् तत्रेतरोपायव्युदासे शब्दतात्पर्यं कल्प्यते । परंतु—धूमोऽस्तीति वाक्ये वह्नेरिव तस्यार्थत्वम् । परिसंख्यायां तु,—भक्षणक्रियायां पञ्चानामप्यन्वयसंभवात् इतरपञ्चनखव्युदासो नार्थः; तत्र पञ्चानामपि समुच्चयसंभवात् । किं तु—शाब्दः । एवं च—भक्ष्य—पञ्चनखपदयोर्विरोधिलक्षणया ' पञ्चेतरपञ्चनखा न भक्ष्याः' इति वाक्यार्थः । तथा च—उपस्थितपदार्थपरित्यागात्, अनुपस्थितपदार्थकल्पनात्, अभावविधित्वाच्च नियमापेक्षया दोषत्रयवती परिसंख्या, इत्याहुः । ( त० प्र० ख० ४ । पृ० १०५ )

[ ग ] उद्देशलक्षणयोरुपपत्त्यनुपपत्त्यन्यतरफलको विचारः । ( त० कौ० पृ० २१ )

[ घ ] लक्षणस्य सदसद्विचारः । ( प्र० प्र० ) यथा—'पृथिव्या गन्धवत्त्वमुपपद्यते, न वा' इति विचारः । ( स्व० ) [ २ ] प्रमाणतर्काभ्यां वस्तुतत्त्वावधारणम् ।

**परोक्षत्वम्**[1]—१ साक्षात्कारभिन्नज्ञानत्वम् । ( चि० १ ) ( म० प्र० १ ) ( ग० शक्ति० टी० पृ० ११७ ) यथा—अनुमित्यादीनां ज्ञानानां परोक्षत्वम् । २ परोक्षज्ञानविषयत्वम् । यथा—पर्वतो वह्निमान् धूमादित्यादौ वह्नेः परोक्षत्वम् । ( स्व० ) ३ [ क ] वक्तुः साक्षात्काराविषयत्वम् । ( ग० व्यु० ल० पृ० १३९ ) यथा—"बभूव योगी किल कार्तवीर्यः" ( रघु० स० ६ । श्लो० ३८ ) इत्यादौ लिटोऽर्थः परोक्षत्वम् । ( स्व० ) [ ख ] वक्तृभिन्नकर्तृकत्वमेव परोक्षत्वम्, इति केचिदाहुः । ( ग० व्यु० ल० पृ० १३९ )

[ ग ] शाब्दिकास्तु,—'साक्षात्करोमि' इत्येतादृशविषयताशालिज्ञानाविषयत्वम्[3], इत्याहुः । ( वै० सा० लका० पृ० १२३ )

**परोपकारः**—स्वभिन्नस्य साधुवृत्तस्य हितसंपादनम् । यथा—" परोपकारः पुण्याय, पापाय परपीडनम्" इत्यादौ । यथा वा—"परोपकाराय सतां विभूतयः" इत्यादौ च । ( स्व० )

**पर्यनुयोगः**—दूषणार्थं जिज्ञासा । यथा—"एतेनास्यापि पर्यनुयोगस्यानवकाशः" ( दायभागः ) इत्यादौ ।

---

१ अत्र—'अक्ष्णः परम्' इति व्युत्पत्त्या ( अव्ययी० सुट्, नि० पूर्वनिपातः ) परोक्षमिति रूपं सिद्ध्यति ।

२ प्रत्यक्षज्ञानभिन्नज्ञानत्वम्, इति तु वयं ब्रूमः । अत्रायं सिद्धान्तः—'परोक्षज्ञानमनाहार्यमेव, निश्चयश्च' इति । ( ग० हेत्वा० सामा० ) ( सम्म० )

३ 'साक्षात्करोमि' इत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम्, इत्यर्थः । तेन, पपाचेत्यादौ प्रत्यक्षविषयतासत्त्वेऽपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णम्, इति न तदनुपपत्तिः, इति । ( वै० सा० द० लका० पृ० १२४ )

**पर्यनुयोज्यः**—निग्रहोपपत्त्या चोदनीयः ( 'निग्रहस्थानं प्राप्तोऽसि' इत्य-नुयोज्यः ) । ( वात्स्या० ५ । २ । २२ )

**पर्यनुयोज्योपेक्षणम्**—( निग्रहस्थानम् ) [ क ] निग्रहस्थानप्राप्तस्यानि-ग्रहः पर्यनुयोज्योपेक्षणम् । (गौ० ५ । २ । २२) पर्यनुयोज्यो नाम नि-ग्रहोपपत्त्या चोदनीयस्तस्योपेक्षणम् 'निग्रहस्थानं प्राप्तोऽसि' इत्यननुयोगः । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम् । न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति । ( वात्स्या० ५ । २ । २२ )
[ ख ] निग्रहस्थानं प्राप्तवतो निग्रहस्थानानुद्भावनम् । (गौ० वृ० ५। ६४)[1]
[ ग ] उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनम् । ( नील० पृ० ४६ )

**पर्यन्तत्वम्**—तदवधिकविप्रकर्षशून्यत्वे सति तत्संनिकृष्टत्वम् । यथा—"नदीं यावन्मम पुरम्"[2] इत्यादौ यावदर्थो मर्यादा । ( श० प्र० श्लो० ९३ । टी० )

**पर्यवसितम्**[3]—[ १ ] पूर्वापरालोचनेनावधारितोऽर्थः । ( वाच० ) यथा—"इति पर्यवसितो वायुः" इत्यादौ । ( मु० १ । वायु० पृ० ८९ )
[ २ ] निष्कृष्टार्थः ।

**पर्याप्तिः**—१ ( संबन्धः ) 'अयमेको घटः, इमौ द्वौ' इत्यादिप्रतीतिसा-क्षिकः स्वरूपसंबन्धविशेषः । यथा—घटपटयो रूपगन्धावित्यादौ द्वित्व-

---

१ अत्रेदं बोध्यम्—यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनम्, तत्र न पर्यनुयोज्योपेक्षणम्; अवसरे निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात् । ननु—वादिना कथमिदमुद्भाव्यम्? स्वकौपीनविवरणस्यायुक्तत्वात्, इति चेत् । सत्यम् । मध्यस्थेनैवेदमुद्भाव्यम् । वादे च स्वयमुद्भावनेऽप्यदोषः । ( गौ० वृ० ५। ६४)

२ अत्र 'नदीपर्यन्तं मत्पुरम्' इति बोधः । ( श० प्र० श्लो० ९३ । टी० )

३ अत्र पर्यवसानं च तत्तदर्थावधारणम्; शेषावधिश्च, इति । ( वाच० )

४ तदर्थश्च—'अयमेको घटः, 'अयमेको घटः' इति नानेकत्वावगाहिन्याऽपेक्षाबुद्ध्या जन्यः, 'इमौ द्वौ' इत्याकारकप्रतीतिप्रमाणकः, द्वित्वस्वरूपसंबन्धविशेषः । द्वित्वे एव पर्याप्तिसं-बन्धता* स्वीक्रियते, इति । ( कृष्ण० )

---

* अत्रायमर्थः—'द्वित्वादिकं पर्याप्तिसंबन्धेन द्व्यादिष्वेव वर्तते, न प्रत्येकस्मिन्; समवायेन तु प्रत्येकवृत्ति । 'प्रत्येकावृत्तेः समुदायावृत्तित्वम्' इति नियमस्तु समवायादिनैव, न पर्या-

पर्याप्तिः । ( दीधि० ) ( ग० व्यु० का० १ ) ( दीधि० अवच्छे० निरु० पत्र० १ ) पर्याप्तिर्द्विविधा । अर्धपर्याप्तिः, पूर्णपर्याप्तिश्च । तत्र प्रथमा—यत्राधिकस्य निरासार्थं या पर्याप्तिर्निवेश्यते, साऽर्धपर्याप्तिः । यथा—पर्वतो वह्निमान् धूमादित्यादौ साध्यतावच्छेदकवह्नित्वनिष्ठा पर्याप्तिः । द्वितीया तु—यत्र च न्यूननिवारणार्थं या पर्याप्तिर्निवेश्यते, सा पूर्णपर्याप्तिः । यथा—पर्वतो महानसीयवह्निमानित्यादौ साध्यतावच्छेदकीभूतमहानसीयत्वविशिष्टवह्नित्वनिष्ठा पर्याप्तिः । ( स्व० )

**पर्यायः**—१ [ क ] समानप्रवृत्तिनिमित्तकत्वे सति विभिन्नानुपूर्वीकत्वम् । यथा—घटः, करीरः, कलशः, इति पर्यायः ।

---

१ तथा हि—साध्याभाववदवृत्तित्वादिरूपे व्याप्यलक्षणे, साध्याभावपदेन साध्यतावच्छेदकपर्याप्तावच्छेदकताकप्रतियोगिताकाभावः पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले महानसीयवह्न्यभाववारणाय विवक्षणीयः; एवमपि—संबन्धादिभेदेनावच्छेदकताभेदान्महानसीयवह्न्यभावप्रतियोगितानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतापर्याप्तेः साध्यतावच्छेदकवह्नित्वेऽपि सत्त्वेन तद्वारणासंभवः । अतः—साध्यतावच्छेदकपर्याप्तावच्छेदकताकेत्यनेन 'साध्यतावच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वम्' इति विवक्षणीयम् । तेन महानसीयत्वरूपाधिकधर्मव्युदासः, इति ।

२ अत्रेदं बोध्यम्—पक्षतावच्छेदकावच्छिन्ने साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितप्रकारिताशाल्यनुमितित्वव्यापकप्रतिबध्यतेत्यादिगादाधरीयहेत्वाभासलक्षणे—पर्वतो महानसीयवह्निमानित्यत्र 'पर्वतो वह्निमान्' इत्यनुमितेरपि तादृशानुमितित्वापत्त्या तत्रत्यबाधेऽव्याप्तिवारणाय 'साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकत्वम्' इति विवक्षणे च 'उभयं प्रत्येकानतिरिक्तम्' इति न्यायेन शुद्धवह्नित्वेऽपि साध्यतावच्छेदकतापर्याप्तेः सत्त्वेन पुनस्तद्दोषापत्त्या साध्यतावच्छेदकताव्यापकावच्छेदकताकप्रकारताकपक्षविशेष्यकानुमितित्वव्यापकप्रतिबध्यतेत्यादि विवक्षणीयम् । तेन, 'पर्वतो वह्निमान्' इति ज्ञानीयप्रकारतारूपन्यूनधर्मव्युदासः, इति ।

३ अत्र पर्यायत्वं च, शक्यतावच्छेदकैक्ये सति विभिन्नशक्ततावच्छेदककत्वम् । ( त० प्र० ख० ४ । पृ० ८३ )

---

प्तिसंबन्धेन, इति भेदः । स च (पर्याप्तिः) विशिष्टबुद्धिनियामकः संबन्धः । समवायेन गुणे गुणस्यासत्त्वेऽपि 'चत्वारो गुणाः' इति प्रतीत्या, गुणादिषु संख्यादिसत्त्वनियामकोऽपि तादृशः संबन्धः, इति । ( सामान्याभावे जगदीश आह ) ( वाच० )

[ ख ] समानार्थबोधकं शब्दान्तरम्, इति केचिदाहुः । २ अनुक्रमः । ३ प्रकारः । ४ अवसरः । ५ निर्माणम् । ६ द्रव्यधर्मविशेषः, इत्यप्यन्य आहुः । ( वाच० )

**पर्युदासः**—[ क ] अन्योन्याभावः । ( म० प्र० ४ । पृ० ४८ ) यथा—घटः पटो न भवतीत्यादौ, अब्राह्मणमानयेत्यादौ च नञर्थः ।

[ ख ] फलप्रत्यवायशून्यतया समभिव्याहृतपदार्थभेदः । यथा—"रात्रौ श्राद्धं न कुर्वीत" इत्यादौ नञर्थः पर्युदासः । ( ख० )

---

१ पर्युदासशब्दोऽ*न्योन्याभावे रूढः; 'पर्युदासे नञ्, प्रसज्यप्रतिषेधे नञ्' इति शब्दचिन्तामण्यादौ प्रयोगात् । प्राञ्चस्तु,—पर्युदासः, प्रसज्यप्रतिषेधश्च नञ्विशेषसंज्ञकावेव, इत्याहुः । ( ख० ) तन्मते—पर्युदासत्वं च अन्योन्याभावबोधकत्वम् । ( म० प्र० ४। पृ० ४८ )

२ अत्र प्राञ्चो नैयायिका आहुः—पर्युदासस्थले नञो लाक्षणिकत्वम्, इति । नव्यास्तु,—तत्र शक्त्यैवार्थबोधकत्वम्, इति प्राहुः ) ( म० प्र० ४ । पृ० ४८ )

३ अत्रोक्तमभियुक्तैः—"प्राधान्यं हि विधेर्यत्र † प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन‡ नञ्" इति ।

४ अत्र मणिकारा आहुः—नञ्समासे अब्राह्मणमानयेत्यत्र पर्युदासे पूर्वपदे नञ्युत्तरपदार्थसंबन्धिनि क्षत्रिये लक्षणा । अघटः पट इत्यादौ पर्युदासार्थे नञ्यपि सामानाधिकरण्यात् अभाववल्लक्षणा । व्यासेऽपि—न घटः पट इत्यादौ । यथा—शुक्लपट इत्यत्र शुक्लवल्लक्षणा । न पचतीत्यादौ क्रियासंबन्धे, भूतले न घट इत्यादौ प्रसज्यप्रतिषेधे तु नञो मुख्यार्थता । "यजतिषु ये यजामहं करोति, नानुयाजेषु" इत्यत्र पर्युदासे नञ् । तेनायमर्थः—नानुयाजेषु ( अनुयाजव्यतिरिक्तेषु ) यजतिषु, 'ये यजामहे' इति मन्त्रं करोति, इति । ( चि० ४ )

५ तथा हि—अत्र ( "रात्रौ श्राद्धं न कुर्वीत" इत्यादौ )—रात्रौ श्राद्धे न फलम्, न वा प्रत्यवायः, इति रात्रिः पर्युदस्ता; तद्भिन्नामावस्या नञा बोध्यते, इति ।

---

* प्रतिषेध—पर्युदासयोः स्वरूपमुक्तमभियुक्तैः—"प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ् । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इति । ( म० प्र० ४। पृ० ४८ )

† यथा—नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः, इत्यादौ । अत्र तत्पुरुषसमासे गुणीभावे नञः पर्युदासतया, निषेधस्य विधेयतानवगमः ।……तेन, "जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः । अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्" इत्यादौ अत्रस्तादितामनूद्यात्मगोपनाद्येव विधेयमिति नञः पर्युदासतया गुणभावो युक्तः ।

**पशुत्वम्**—१ लोमवल्लाङ्गूलवत्त्वम्। (श० प्र० श्लो० १०० । टी०) यथा—"पशुना रुद्रं यजते" इत्यादौ—मायावादिमते छागादीनां पशुत्वम्। २ पाशुपतशास्त्रज्ञास्तु,—सर्वजीवानां पशुत्वं मन्यन्ते।

---

१ अत्र मध्वाचार्यमतानुयायिनो वैष्णवाः समुत्तिष्ठन्ते—नायं साक्षात्पशुर्यज्ञादौ विहितः; अपि तु—पिष्टात्मकहविर्द्रव्यमेव तत्र विहितम्; पिष्टपशोरेव*श्रुतिस्मृतिपुराणादौ निर्वपणप्रतिपादनात्। साक्षात्पश्वालम्भनं तु काम्यमेव;† तत्र श्येनादिवत् नरकाद्यनिष्टान्तरस्यापि श्रवणात्, इति। (स्व०)

---

‡ तदर्थश्च—प्रथमान्तप्रतियोगिवाचकपदसमभिव्याहृतेन समासघटकेन वा नञा (नञ्-न-शब्द-एतदन्यतरेण) उत्तरपदार्थेन सह यस्यार्थस्यान्वयो बोध्यते सः, इति।

* अत्र श्रुतिः प्रमाणम्—[क] "पुरुषं वै देवाः पशुमालभन्त" इत्यादिना पुरुषादिभ्यो मेधोत्क्रमणमुक्त्वा "त एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्तमस्यामन्वगच्छंस्सोऽनुगतो व्रीहिरभवत्तद्यत्पशौ पुरोडाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्केवलेन नः पशुनेष्टमसदिति समेधेन हास्य पशुनेष्टं भवति, केवलेन हास्य पशुनेष्टं भवति; य एवं वेद" इति। (ऋ० ब्राह्म० २। ख० ८)। [ख] "तदाहुः—यदेष हविरेव यत्पशुः" (ऋ० ब्राह्म० २। ख० ११) इत्यादि।

स्मृतिरपि—"कुर्याद्घृतपशुं संगे कुर्यात्पिष्टपशुं तथा। न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन" इति। (मनु० अ० ५। श्लो० ३७)

महाभारतमपि—[क] "न हि यज्ञे पशुगणा विधिदृष्टाः पुरंदर!। धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो!॥ नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते। आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि॥ विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान् भवेत्। यज बीजैः सहस्राक्ष! त्रिवर्षपरमोषितैः॥ एष धर्मो महान् शक्र! महागुणफलोदयः" इति। (भार० आश्व० अ० ९१) [ख] "पिष्टमानीयतामत्र पश्वर्थमिति भाषते" "ऋषय ऊचुः—बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ॥ नैष धर्मः सतां देवाः! कथं वध्येत वै पशुः" इत्यादि। (भार० शान्ति० मोक्षधर्म०)

† अत्रोक्तम्—"इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम्। पुराणमृषिभिर्जुष्टं वेदेषु परिनिष्ठितम्॥ प्रवृत्तिलक्षणो धर्मः प्रतार्थिभिरुदाहृतः (?)" इत्यादिना काम्ये कर्मणि प्रत्यक्षं मांसमुक्त्वा—निष्कामकर्मणीदमुच्यते—"य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम्। स वर्जयेत मांसानि प्राणिनामिह सर्वशः। श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः। येनायजन्त यज्वानः पुण्यश्लोकपरायणाः॥ ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा" इत्यादि। (भार० शान्ति० दानधर्म०)

पाकः—१ [ १ ] [ क ] विजातीयतेजःसंयोगः । ( त० भा० ) ( त० दी० ) ( न्या० बो० ) यथा—आमनिक्षिप्ते घटे श्यामरूपादिपरावृत्तिफलकोऽग्निसंयोगः[3] ।

---

१ द्व्यादेः पाकप्रकारभेदादिकं पाकराजेश्वरे उक्तं यथा—"भर्जनं तलनं स्वेदः पचनं क्वथनं तथा । तान्दूरं पुटपाकश्च पाकः* सप्तविधो मतः" इति ।

२ रूपादिपरावृत्तिफलकः विजातीयतेजःसंयोगः, इत्यर्थः । (दि० गु०) ( वै० वि० ७ । १ । ६। पृ० २८७ )

अत्रोच्यते–[ १ ] स च संयोगो नानाजातीयः । तथा हि–रूपजनको विजातीयतेजःसंयोगः; तदपेक्षया रसजनको विजातीयः; एवं गन्धजनकोऽपि; एवं स्पर्शजनकोऽपि तथा । एवंप्रकारेण भिन्नभिन्नजातीयाः पाकाः कार्यवैलक्षण्येन कल्पनीयाः । ( न्या० बो० १। पृ० ५ ) [ २ ] गदाधरभट्टाचार्यास्त्वाहुः—रूप–रस–गन्ध–स्पर्शानां नाशं प्रति तु एकसजातीय एवाग्निसंयोगः कारणम्, इति स्पर्शनाशकाले रूपनाश आवश्यकः, इति । ( ग० चतुर्द० लक्ष० १। पृ० १२ )

३ अत्रेदं बोध्यम्—"कारणगुणपूर्वकाः पृथिव्यां पाकजाः" ( वै० ७।१।६ ) । पाकजा इति; रूपरसगन्धस्पर्शा अपीत्यर्थः । ........इदानीं प्रसङ्गात्पाकजप्रक्रिया चिन्त्यते–तत्र कार्यकारणसमुदाय एव पच्यते, इति पिठरपाकवादिनः ( नैयायिकाः ) आहुः । पीलवः परमाणव एव स्वतन्त्राः पच्यन्ते; तत्रैव पूर्वरूपनाशाग्निमरूपाद्युत्पत्तिः; कारणगुणप्रक्रमेण चावयविनि रूपाद्युत्पद्यते, इति पीलुपाकवादिनः ( वैशेषिकाः ) आहुः ।

अत्रेदं तत्त्वम्–[ क ] आमपाके निक्षिप्तस्य घटादेरामद्रव्यस्य वह्निना नोदनादभिघाताद्वा तदारम्भकेषु परमाणुषु द्रव्यारम्भकसंयोगविरोधिविभागेनारम्भकसंयोगनाशे द्रव्यनाशावश्यंभावात् । दृश्यते हि–स्थाल्यामाहितानां तण्डुलादीनामप्यधःसंतापनमात्रेण भर्जनात्तदानीमेव नाशः; क्षीरनीरादीनां चात्यन्तमुल्बणता । तथा च–'आमपाके वह्निज्वालजालाभिहतानां द्रव्याणामवस्थानम्' इति महती प्रत्याशा । ( वै० उ० ७।१।६ ) ( त० कौ० ) [ ख ] पार्थिवपरमाणुरूपादीनां पाकजोत्पत्तिविधानम्–घटादेरामद्रव्यस्याग्निना संबन्धस्याग्न्यभिघातान्नोदनाद्वा तदारम्भकेष्वणुषु कर्माण्युत्पद्यन्ते । तेभ्यो विभागाः । विभागेभ्यो द्रव्यारम्भकसंयोगविनाशाः । तद्विनाशेभ्यः कार्यद्रव्यं विनश्यति । तस्मिन्विनष्टे परमाणुष्वग्निसंयोगादौष्ण्यापेक्षाच्छ्यामादीनां विनाशः । पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात्पाकजा जायन्ते । तदनन्तरम्–भोगिनामदृष्टापेक्षादात्मानुसंयोगादुत्पन्नपाकजेष्वणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगात् द्व्यणुकादिक्रमेण कार्यद्रव्यमुत्पद्यते । तत्र च

---

* तत्र–भर्जनं केवलपात्रे; तलनं स्नेहद्रव्ये; स्वेदनमभ्युत्तापे; पचनं जले; क्वथनं सिद्धद्रव्यरसग्रहणे; तान्दूरं द्वारबद्धतप्तयन्त्रे; पुटपाक ऊर्ध्वाधोऽग्नितापे ज्ञेयः, इति । ( वाच० )

[ ख ] रूपादिपरावृत्तिजनकतेजःसंयोगः । यथा—तण्डुलं पचतीत्यादौ पच्यर्थः पाकः । ( ग० व्यु० का० २ । पृ० ४३ )

[ ग ] रूपादिपरावृत्तिफलकतेजःसंयोगावच्छिन्नक्रिया । यथा—तण्डुलं पचतीत्यत्र पचेरर्थः पाकः[3] । ( श० प्र० श्लो० ७२ )

---

कारणगुणपूर्वक्रमेण रूपाद्युत्पत्तिः । न च, कार्यद्रव्ये रूपादिविनाश उत्पत्तिर्वा संभवति ( अपि तु—परमाणुष्वेव ); सर्वावयवेष्वन्तर्बहिश्च वर्तमानस्याग्निना व्याप्त्यभावात् । अनुप्रवेशादपि च व्याप्तिर्न संभवति; कार्यद्रव्यविनाशात्, इति । ( प्रशस्त० पृ० १३ ) [ ग ] पाकोऽपि रूपादेरसमवायिकारणं भवति । तत्र च 'परमाणावेव पाकाद्रूपादिपरावृत्तिः, नावयविनि' इति पीलुपाकवादिन आहुः ।

तन्मते ( पीलुपाकवादिमते )—विजातीयाग्निसंयोगादारम्भकसंयोगनाशेन द्व्यणुकपर्यन्तावयविनाशे सति, परमाणौ रक्ताद्युत्पत्तिः; ततो विजातीयाग्निसंयोगादारम्भकसंयोगानुगुणक्रियाद्युत्पत्त्यारम्भकसंयोगादिप्रक्रमेण पुनर्द्व्यणुकादिमहावयविपर्यन्तानामुत्पत्तिर्भवतीति ।

पिठरपाकवादिमते तु—[ क ] अवयविनां सच्छिद्रतया विजातीयाग्निसंयोगात् तेषामपि रूपादिपरावृत्तिर्भवति, न तु तत्रावयविनां नाशः; प्रत्यभिज्ञाविरोधात्, इत्याहुः । ( वै० वि० ७।१।६। पृ० २८७–२८९ ) [ ख ] तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाजनकत्वे मानाभावेन, अवयविन्यपि पाकस्वीकार उचितः । अत एव—'सोऽयं घटः' इति प्रत्यभिज्ञा संगच्छते अनन्तावयविनाशाद्यकल्पनेन लाघवं च, इति । ( नील० १। पृ० १३ )

१ अत्र ( अवयविन्यपि पाकाङ्गीकर्तृनैयायिकमते )—तण्डुलं पचतीत्यादौ पचधात्वर्थघटके रूपादिपरावृत्त्यात्मकफले तण्डुलादिवृत्तित्वान्वयः । ओदनं पचतीत्यादौ तु—ओदनादिपदस्य तन्निष्पादकतण्डुलादौ लक्षणा ।

अवयविनि पाकानभ्युपगमे ( वैशेषिकमते ) च—तण्डुलं पचतीत्यादौ तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा । ( ग० व्यु० का० २ । पृ० ४३ )

अत्र वैयाकरणमते विशेषः—अनेन, विक्लेदनाया उत्पत्त्यनुकूलव्यापारस्य चेति व्यापारद्वयस्य वचनात् द्विकर्मकत्वम्; तण्डुलानोदनं पचतीत्यस्य 'तण्डुलान् विक्लेदयन् ओदनं निष्पादयति' इत्यर्थः । दुहादित्वेन गौणे कर्मणि लकारे च—तण्डुला ओदनं पच्यन्ते, इति । ( वाच० ) अधिकं तु 'दोहन' शब्दे द्रष्टव्यम् ।

२ अत्र, पचधात्वर्थनिविष्टे च निरुक्ते तेजःसंयोगे † तण्डुलस्याधेयत्वेनान्वयः । ओदनं पचतीत्यादौ तु—तण्डुलादावोदनादिपदस्य लक्षणा । तत्र क्रियायामन्वितमनुकूलत्वं द्वितीयार्थः, इत्यपि कश्चिदाह । ( श० प्र० श्लो० ७२ । टी० )

३ अत्रेदमवधेयम्—चुल्लीस्थाल्यारोपणादिकं हि, न प्रत्येकं पाकपदार्थः, किं तु—पाकश्च [1]

[ घ ] विक्लित्यनुकूलव्यापारः पाकः, इति शाब्दिका आहुः । [ २ ] विक्लित्तिः, इति मण्डनाचार्य आह । २ रसास्वादप्रभेदः पाकः, इत्यालंकारिका आहुः । ( प्रतापरु० ) ३ व्यक्तीकरणम् । शिष्टं तु पचधात्वर्थे द्रष्टव्यम् ।

**पाठः**—कण्ठताल्वाद्यभिघातः । यथा—यजमानं मन्त्रं पाठयतीत्यादौ धात्वर्थः । ( ग० व्यु० का० २ । पृ० ४७ ) अत्राधिकं च 'द्वितीया, कर्मत्वम्' इत्यादिशब्दे संपादितम्, तत्र दृश्यम् ।

**पाणिनिः**—पाणिनिनामकः 'शेषावतारः' इति प्रसिद्धो मुनिविशेषः । स च,—व्याकरणशास्त्रे अष्टाध्यायीरूपसूत्रपाठम्, गणपाठम्, धातुपाठम्, लिङ्गानुशासनम्, शिक्षारूपं चेति ग्रन्थपञ्चकं चकार ।

---

स्थाल्यारोपणाभिनिवेशनतुषप्रक्षेपाद्यनुस्फोटनपर्यन्तस्तत्तत्क्रियाकलापः । यदाह दुर्गः—क्रियत इति क्रिया । सा च पूर्वापरीभूतावयवैव, इति । ( श० प्र० श्लो० १०५ टी० ) [२] स च (पाकः) स्थालीमार्जनाधःसंतापनाद्योदनपरीक्षान्तो व्यापारसमूहः, इति (वाच०)

१ पाठस्य चतुर्दश दोषा यथा—"शङ्कितं भीतमुद्घुष्टमव्यक्तमनुनासिकम् । विस्वरं विरसं चैव विश्लिष्टं विसमाहतम् । काकस्वरं निरसितं तथा स्थानविवर्जितम् । व्याकुलं तालहीनं च पाठदोषाश्चतुर्दश" इति । ( वाच० )

अध्ययनक्रमो यथा—"आचम्य प्रयतो नित्यमधीयीत उदङ्मुखः । उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम्" इति ।

अध्यापनक्रमो यथा—"अधीष्व भो ! इति ब्रूयाद्विरामोऽस्त्विति चाचमेत्" ( कूर्मपु० उ० अ० १३ ) ( वाच० )

२ अत्रोच्यते—"येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्नं व्याकरणं चक्रे ( प्रोक्तं ) तस्मै पाणिनये नमः" इति ।

'व्याकरणशास्त्रप्रयोजनं तु निःश्रेयसम्'* इति पाणिन्यादिमतं सर्वदर्शनसंग्रह—महाभाष्य—कैयटादौ प्रतिपादितम्, इति ।

---

† 'परमाणुं पचति' इत्यपि प्रयुज्यत एव; अत एव—"स्वतन्त्राः परमाणवः पच्यन्ते" इति किरणावल्यामाचार्या आहुः । (श०प्र०श्लो०७२ । टी०) इदं टिप्पणं (पृष्ठे ४५६) ज्ञेयम् ।

* अत्र प्रयोजनं द्विविधम् । मुख्यम्, गौणं च । तत्र मुख्यम् निःश्रेयसम् । गौणं तु "रक्षोहागमलध्वसंदेहाः प्रयोजनम्" इति महाभाष्योक्तं द्रष्टव्यम् ।

**पातः**—१ पतनम् । यथा—दृष्टिपातः, बाणपातः, सूत्रपातः, इत्यादि । २ ज्योतिर्विदस्तु,—रविभिन्नग्रहाणां दक्षिणोत्तराकर्षकोऽदृश्यरूपः (कालमूर्तिरूपः) भचक्रस्थितो जीवविशेषः, (?) इत्याहुः । (सू० सि०) (वाच०)

**पातकम्**—१ पातित्यजनकदुरदृष्टप्रयोजकक्रियाविशेषः । यथा—गोब्राह्मणवधादि पातकम्[1] ।

**पानम्**—१ द्रवद्रव्यस्य गलाधःसंयोजनम् । यथा—"पानीयं पातुमिच्छामि त्वत्तः कमललोचने !" इत्यादौ । २ रक्षणम् । यथा—"पाहि मां भवसागरात्" इत्यादौ । ३ निःश्वासः । ( वाच० )

**पापम्**—( गुणः ) वेदैकप्रतिपाद्योऽनिष्टसाधनमदृष्टविशेषः । अधिकं तु अधर्मशब्देऽनुसंधेयम् ।

**पारमार्थिकत्वम्**—१ [ क ] कालसंबन्धित्वम् ।

[ ख ] प्रमाविषयत्वम् । यथा—घटपटादीनां पारमार्थिकत्वम्[2] । (ख०)

[ ग ] केचिद्वेदान्तिनस्तु,—त्रिकालाबाध्यत्वम्, यथा—ब्रह्मणस्तत्सत्तायाश्च पारमार्थिकत्वम्, इत्याहुः । २ निःश्रेयससाधनत्वम्, इति कर्मज्ञा आहुः । ३ स्वाभाविकत्वम्, इति काव्यज्ञा आहुः ।

**पारिभाषिकम्**—( शब्दः ) आधुनिकसंकेतेनार्थबोधकं पदम् । यथा—शास्त्रकारादिसंकेतितं सव्यभिचार—अप्राप्तकाल—नदी—वृद्धि—इत्यादिपदं पारिभाषिकम् । ( ग० शक्ति० पृ० ३ ) ( ख० )

**पारिभाषिकी—संज्ञा**—( रूढनाम ) [ १ ] उभयावृत्तिधर्मावच्छिन्नसंकेतवती संज्ञा । यथा—आकाश—डित्थादिः । सा हि, द्वितयावृत्तिनैव श-

---

१ अत्र महापातकान्युच्यन्ते—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" इति । ( मनु० अ० ११ । श्लो० ५५ )
उपपातकानि तु—"गोवधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः । गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च" इत्यादि । ( मनु० अ० ११ । श्लो० ५९–६६ )

२ अत्रेदं ज्ञेयम्—अपारमार्थिकत्वं तु पारमार्थिकत्वाभाव एव । यथा—खपुष्प—शशशृङ्ग—कूर्मरोम—वन्ध्यापुत्रादीनामपारमार्थिकत्वम्, इति ।

ब्दादिना रूपेण तदाश्रयमभिधत्ते । ( श० प्र० श्लो० २१ । टी० ) [ २ ] केचित्तु,–यत्रार्थे यन्नामाधुनिकसंकेतवत्, तदेव तत्र पारिभाषिकम् । यथा–पित्रादिभिः पुत्रादौ संकेतितं चैत्रादि । यथा वा–शास्त्रकृद्भिः सिद्ध्यभावादौ संकेतितं पक्षतादिपदम्, इत्याहुः । ( श० प्र० श्लो० २२ । टी० )

**पारिमाण्डल्यम्**—अणुपरिमाणम् । ( मु० १ । साधर्म्य० ) ( प्रशस्त० पृ० १९ )

**पार्थिवः**—१ पृथिवीकारणकः । यथा–"शरीरमस्मदादीनां पार्थिवम्" ( त० सं० ) इत्यादौ । २ राजा, इति काव्यज्ञा आहुः ।

**पिठरपाकवादी**—( नैयायिकः ) 'कार्यकारणसमुदायोऽपि ) अवयवावयविसमुदायः ) पच्यते; न तु परमाणव एव पच्यन्ते' इति यो मन्यते, सः । ( वै० उ० ७ । १ । ६ ) यथा–गोतमप्रधाना नैयायिकाः पिठरपाकवादिनः । ( स्व० )

**पिठरम्**—कार्यकारणसमुदायः ( अवयवावयविसमुदायः ) । यथा–' पिठरपाकवादिनो नैयायिकाः' इत्यादौ । ( स्व० )

---

१ ये तु जात्यवच्छिन्नसंकेतवतामपि चैत्रादिपदानां पारिभाषिकत्वमाहुः, ते, इत्यर्थः । ( श० प्र० श्लो० २२। टी० अवतरणम् )

२ अत्रार्थे 'पृथिव्या विकारः पार्थिवः' इति विग्रहो द्रष्टव्यः ।

३ अत्रार्थे 'पृथिव्या ईश्वरः पार्थिवः' इति विग्रहो द्रष्टव्यः ।

४ एतन्मते च–[ क ] पूर्वघटनाशं विनैवावयविन्यवयवेषु परमाणुपर्यन्तेषु च पाकेनैव युगपद्रूपान्तराद्युत्पत्तिः, इति । ( त० दी० १। पृ० १३ ) [ ख ] अतिशयवेगवता तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियाजनकत्वे मानाभावेन, अवयविन्यपि पाकस्वीकार उचितः । अत एव–'सोऽयं घटः' इति प्रत्यभिज्ञा संगच्छते; अन्त्यावयविनाशाद्यकल्पनेन लाघवं च, इति । ( नील० १। पृ० १३ ) [ ग ] घटादिकं सच्छिद्रमेव; अन्यथा,—तदन्तर्गततण्डुलादेः पाको न स्यात् । अतः,–एकदैव परमाण्वादिघटपर्यन्तेषु घटनाशं विना पाकेनैव रूपाद्युत्पत्तिः, इति ज्ञेयम् । ( सि० च० १। पृ० १६ )

**पिण्डीभावः**—[ क ] चूर्णादेर्धारणाकर्षणहेतुभूतो विलक्षणसंयोगः । ( न्या० बो० १ । पृ० ६ ) ( नील० १ । पृ० १४ )

[ ख ] फूत्कारादिना देशान्तरनिर्गमप्रतिबन्धकोऽवयवानां संयोगविशेषः । ( वाक्य० १ । पृ० ९ ) यथा—"चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः" ( त० सं० ) इत्यादौ पिण्डीभावः ।

**पितृत्वम्**—१ [ क ] श्राद्धोद्देश्यत्वम् ।

[ ख ] सपिण्डीकरणोत्तरश्राद्धजन्यफलभागित्वम् । ( कृष्ण० ) यथा—श्राद्धादौ—"पितृ[1]—पितामह—प्रपितामहाः, शालङ्कायनगोत्राः, वसु—रुद्र—आदित्यान्तर्गतप्रद्युम्न—संकर्षण—वासुदेवाः" इत्यादौ । ( स्व० ) २ जनकपुंस्त्वम् । यथा—चैत्रस्य पिता, इत्यादौ पितृत्वम् । ( त० कौ० ) ( त० प्र० ख० ४ । पृ० ९९ ) एवम्—जनकस्त्रीत्वं मातृत्वम्, इत्यादिकमूह्यम् ।

**पीलुः**—परमाणुः । ( वै० उ० ७ । १ । ६ ) यथा—"पीलुपाकवादिनो वैशेषिकाः" इत्यादौ ।

**पीलुपाकवादी**—( वैशेषिकः ) 'पीलवः ( परमाणवः ) एव स्वतन्त्राः[2] पच्यन्ते; तत्रैव पूर्वरूपनाशाग्रिमरूपाद्युत्पत्तिः; कारणगुणप्रक्रमेण चावय-

---

१ अत्रोक्तं याज्ञवल्क्येन—" वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः " इति । ( याज्ञ० स्मृ० अ० १। श्लो० २६८ )

२ एतन्मते च परमाणुष्वेव पाकः, न द्व्यणुकादौ । आमनिक्षिप्ते घटे श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तौ पुनर्द्व्यणुकादिक्रमेण रक्तघटोत्पत्तिः* । तत्र ( परमाणुरूपे ) परमाणवः समवायिकारणम्, तेजःसंयोगोऽसमवायिकारणम्, अदृष्टादिकं निमित्तकारणम्, इति । द्व्यणुकादिरूपे तु कारणरूपमसमवायिकारणम्; इति च ज्ञेयम् । ( त० दी० १ । पृ० १३ )

---

* अयमाशयः—अतिवेगवता तेजसा परमाणूनामभिघातसंयोगे सत्यवश्यं तेषु क्रिया जायते; ततो विभागः; तत आरम्भकसंयोगनाशे सत्यवश्यं यावदवयविनाशः; ततः स्वतन्त्रेषु परमाणुषु रूपान्तरोत्पत्तौ, पुनरदृष्टादिघटितसामग्रीवशात्परमाणुषु क्रिया—विभागादिक्रमेण यथावस्थितमहावयविपर्यन्तमुत्पत्तिः, इति । ( नील० १ । पृ० १३ )

विनि रूपाद्युत्पद्यते' इति यो मन्यते, सः । ( वै० उ० ७ । १ । ६ ) यथा—कणादप्रधानाः पीलुपाकवादिनः । अधिकं च पाकशब्दार्थटिप्पण्यां दृश्यम् । ( स्व० )

**पुंलिङ्गम्**—( नाम ) [ क ] पुंलिङ्गत्वेन परिभाषितम् । यथा—घटोऽस्तीत्यादौ घटशब्दः पुंलिङ्गः ।

[ ख ] क्वचित्,—विलक्षणसंस्थानरूपपुंस्त्वविशिष्टवाचकम् । यथा—न विप्रोऽध्ययनं त्यजेदित्यादौ । ( श० प्र० श्लो० ५३ । टी० )

**पुण्यम्**—१ ( गुणः ) धर्मवदस्यार्थोऽनुसंधेयः । यथा—"तस्मादात्मकृतं पुण्यं वृथा न परिकीर्तयेत्" इति ( देवलः ), "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" ( श्रुतिः ) "तद्यथेह कर्मचितो लोकः क्षीयते, एवममुत्र पुण्यचितो लोकः क्षीयते" ( श्रुतिः ) इत्यादौ पुण्यम् । २ लग्नावधिकं सप्तमस्थानम्, इति मौहूर्तिका आहुः । ३ मेष—कर्कट—तुला—मकर—रूपो राशिः, इति ज्योतिर्विद आहुः ।

**पुद्गलः**—१ परमाणुः । २ बौद्धास्तु,—द्व्यणुकादिपदार्थविशेषः, इत्याहुः । ३ सुन्दराकारः, इति काव्यज्ञा आहुः । ( वाच० )

**पुनः**—( अव्ययम् ) १ [ १ ] द्वितीयवारम् । [ २ ] अप्रथमः । २ [ १ ] भेदः । [ २ ] विशेषः । ( गणर० ) ( अमरः ) ३ अधिकारः । ४ पक्षान्तरम् । ( वाच० )

---

१ अत्र च, आमनिक्षिप्ते घटे हुताशनसंयोगात्परमाण्वादिकपालपर्यन्तावयवेषु क्रिया; ततः परस्परविभागः; ततः परस्परसंयोगनाशः; ततः 'असमवायिकारणनाशात् द्रव्यनाशः' इति नियमेन श्यामघटनाशे शिष्टाः परमाणवः पच्यन्ते; तत्र पाकेन रूपादिचतुष्टयोत्पत्तिः; ततः परमेश्वरेण सर्गादाविव द्व्यणुकादिक्रमेण पूर्ववद्रक्तघटो निर्मीयते । परमाणुरूपेण द्व्यणुकरूपं जन्यते, इत्येवं क्रमः । अन्यथा घटस्य दृढतरत्वे, हुताशनप्रवेशासंभवाद्रूपाद्युत्पत्तिर्न स्यात्, इति । ( सि० च० १ । पृ० १६ )

२ अत्र, परिभाषायाः प्रयोजनं च पदसंस्कारः । स च 'तटः' इत्यादौ पुंस्त्वेन सुबादिसद्भावः । ( श० प्र० श्लो० ५३ । टी० )

३ अत्र—अलुप्तेन सुबैव ( न तु प्रकृत्या ) उपस्थितं विलक्षणसंस्थानरूपं पुंस्त्वं विप्रेऽनुभूयते, इति ज्ञेयम् । ( श० प्र० श्लो० ५३ । टी० )

४ अत्रोक्तम्—"पूरणाद्गलनाद्देहे, पुद्गलाः परमाणवः" इति । ( विष्णुपु० )

**पुनरुक्तम्**—( निग्रहस्थानम् ) [ क ] शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । ( गौ० ५ । २ । १४ ) अन्यत्रानुवादाच्छब्दपुनरुक्तमर्थपुनरुक्तं[2] वा । 'नित्यः शब्दः, नित्यः शब्दः' इति शब्दपुनरुक्तम् । अर्थपुनरुक्तम्—'नित्यः शब्दः, निरोधधर्मको ध्वानः' इति । ( वात्स्या० ५ । २ । १४ )

[ ख ] अनुवादान्यत्वे सति निष्प्रयोजनं पुनरभिधानम् । ( गौ० वृ० ५ । ५७ ) ( दि० १ )

[ ग ] अनुवादं विना कथितस्य पुनः कथनम् । ( नील० पृ० ४९ )

**पुमान्**—१ पुरुषः[3] । २ मनुष्यत्वजातिविशिष्टमात्रम् । ( अमर० २ ) सत्त्वप्रधानत्रिगुणकार्यः, शब्दसंस्कारविशेषयुक्तः शब्दः पुमान्; इति शाब्दिका आहुः । ( वाच० )

**पुराकल्पः**—१ ( अर्थवादः ) [ क ] ऐतिह्यसमाचरितो विधिः । ( वात्स्या० २ । १ । ६३ )

[ ख ] ऐतिह्यसमाचरिततया कीर्तनम् । यथा—"तस्माद्वा एतेन पुरा ब्राह्मणा बहिः पावमानं सामस्तोममस्तौषन्, यज्ञं प्रतनवामहे" इत्येवमादिः । ( गौ० वृ० २ । ६४ ) ( वात्स्या० २ । १ । ६३ ) २ प्राचीनः कल्पः । यथा—"श्रूयते हि पुरा कल्पे नृणां व्रीहिमयः पशुः ।

---

१ अत्रायमर्थः—पुनर्वचनं पुनरुक्तम् । तस्य विभागार्थे 'शब्दार्थयोः' इति । तेन, शब्दपुनरुक्तम्, अर्थपुनरुक्तं च लभ्यते । अनुवादेऽतिव्याप्तिवारणाय 'अन्यत्रानुवादात्' इति । अनुवादस्तु व्याख्यारूपः सप्रयोजनक एव, इति । ( गौ० वृ० ५। ५७ )

२ तेन, पुनरुक्तं शब्दपुनरुक्त—अर्थपुनरुक्तभेदेन द्विविधम्, इति बोध्यते ।

३ अत्र पुंस्त्वस्वरूपं तु—" यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् । पुमान्* स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः " इति । ( मिता० अ० १ । श्लो० ५५ )

---

* अत्रायं विशेषः—" बिन्दुरेको विशेद्गर्भमुभयात्मा क्रमादसौ । रजोधिका भवेन्नारी भवेद्रेतोधिकः पुमान् ॥ उभयोः समतायां तु नपुंसकमिति स्मृतम् " इति । ( शा० ति० ), " पुमान् पुंसोऽधिके शुक्रे, स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा, क्षीणेऽल्पे च विपर्ययः " इति च । ( मनु० अ० ३ । श्लो० ४९ )

येनायजन्त यज्वानः पुण्यश्लोकपरायणाः" इत्यादौ । ( भार० शान्ति० दानधर्मे० )

**पुराणम्**—१ पुरातनम् । यथा—"पुराणपत्रापगमादनन्तरं लतेव सन्नद्धमनोज्ञपल्लवा" ( रघु० ३ । ७ ) इत्यादौ । २ पञ्चलक्षणात्मकः[1] शास्त्रविशेषः । यथा—वेदव्यासेन[2] कृतान्यष्टादश पुराणानि[3] ।

**पुरुषार्थः**[4]—[ क ] बलवद्द्वेषाविषयः । ( त० प्र० १ )

[ ख ] यत् ज्ञातं सत्स्ववृत्तितयेष्यते, सः । ( मु० गु० इच्छानि० पृ० २२१ ) यथा—सुखं[6] दुःखाभावश्च पुरुषार्थः । यथा वा—वैष्णवमते भक्तिरपि पुरुषार्थः । सांख्यमते तु भोगापवर्गौ पुरुषार्थः, इति ।[5]

**पूजा**—[ १ ] आराधनावदस्यार्थोऽनुसंधेयः । [ २ ] उपासनावदस्यार्थोऽनुसंधेयः । ( श० प्र० श्लो० ७२ । टी० )

---

१ तथोक्तम्—" सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् " इति ।

२ अत्रोक्तम्—" अष्टादशपुराणानां कर्ता सत्यवतीसुतः " इति ।

३ तानि* सात्त्विक-राजस-तामस-भेदेन विभक्तानि पद्मपुराणे यथा—" मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयं च षडेतानि तामसानि निबोधत " इति । " वैष्णवं नारदीयं च तथा भागवतं शुभम् । गारुडं च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै " इति ॥ " ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च । भविष्यं वामनं ब्राह्मं राजसानि निबोधत " इति । ( पद्मपु० उ० ख० अ० ४३ )

४ अत्र ' पुरुषस्य अर्थः ( प्रयोजनम् )' इति व्युत्पत्तिर्द्रष्टव्या ।

५ अत्रोच्यते—" धर्मार्थकाममोक्षाश्च पुरुषार्था उदाहृताः " इति । ( अग्निपु० )

६ अयमेव ' स्वतः पुरुषार्थः ' इत्युच्यते । तल्लक्षणं चेतरेच्छानधीनेच्छाविषयत्वम् । ( मु० गु० इच्छानि० पृ० २२१ )

---

* तत्र प्रतिपाद्यानामेव सात्त्विकादिकारणत्वमाह—" अग्नेः शिवस्य माहात्म्यं तामसेषु च कथ्यते । ब्रह्मणस्तत्पुराणस्य माहात्म्यं राजसेषु च ॥ सात्त्विकेष्वधिकं तत्तद्विष्णोर्माहात्म्यमुत्तमम् । तथैव योगसंसिद्धा गमिष्यन्ति परां गतिम् " इति ( मत्स्यपु० ) ( पद्मपु० उ० अ० ४३ ) ( वाच० )

**पूर्वकालीनत्वम्**—[ १ ] कालिकसंबन्धेन तत्प्रागभाववत्त्वम्[१] । ( ग० सार्व० पक्ष० पृ० ३८ ) यथा—“अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षता” ( दीधि० २ । पक्ष० पृ० २२७ ) इति पक्षतायाः शरीरप्रविष्टे ‘अनुमितिपूर्वकालीनध्वंसाप्रतियोगित्वरूपेऽव्यवहितत्वरूपे शरीरे ध्वंसस्य पूर्वकालीनत्वम् । ( स्व० ) [ २ ] [ क ] प्रागभावकालवृत्तित्वम् । यथा—भुक्त्वा व्रजतीत्यत्र भोजने गमनप्रागभावावच्छिन्नकालवृत्तित्वम् ।

[ ख ] तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वं[२] वा । ( तर्का० ४ । पृ० ११ ) यथा—ज्येष्ठस्य पुरुषस्य कनिष्ठं पुरुषमपेक्ष्य पूर्वकालीनत्वम् ।

**पूर्वत्वम्**—१ प्रागभाववत्त्वम्[३] । ( ग० सार्व० पक्ष० पृ० ३८ ) यथा—“कारणस्य कार्योत्पत्तिपूर्वक्षणवृत्तित्वम्” इत्यादौ क्षणस्य पूर्वत्वम् । यथा वा—फाल्गुनस्य मासस्य चैत्रात्पूर्वत्वम् । २ उदयगिरिसंनिहितदेशावच्छिन्नत्वम् । ( श० प्र० श्लो० ९३ । टी० ) यथा—पूर्वो ग्रामादित्यत्र झळकीग्रामात्[४] चन्नपत्तनपुरीदेशस्य पूर्वत्वम् । अधिकं प्राचीशब्दे दृश्यम् । ( स्व० )

**पूर्वपक्षः**—१ [ १ ] शास्त्रीयसंशयनिरासार्थप्रश्नरूपा फक्किका । [ २ ] सिद्धान्तविरुद्धकोटिः । [ ३ ] अधिकरणावयवविशेषः[५] । २ व्यवहारशास्त्रज्ञास्तु,—प्रतिज्ञाऽपरपर्यायः भाषापत्ररूपः प्रथमावयवः[६], पूर्वपक्षः, इत्याहुः ।

---

१ इदं च ध्वंसस्य ( जन्यमात्रस्य ) कालोपाधित्वपक्ष एव संगच्छते, इत्यवधेयम् । ( ग० सार्व० पक्ष० पृ० ३८ )

२ इदं च प्रागभावानभ्युपगन्तृमतेऽपि युज्यते, इति बोध्यम् । ( ग० सार्व० पक्ष० पृ० ३८ )

३ अत्र—पूर्वत्वं च आद्यत्वम्, इति लौकिकजना वदन्ति ।

४ अत्र,—पूर्वपदार्थैकदेशे तादृशसंनिहितत्वे ग्रामाद्यवधिकत्वं पञ्चम्या बोध्यते । ( श० प्र० श्लो० ९३ । टी० )

५ अत्रोक्तम्—“ विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ” इति ।

६ अत्रोक्तं बृहस्पतिना—“ पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा । क्रियापादस्तृतीयस्तु चतुर्थो निर्णयस्तथा ” इति । ( वीरमित्रो० अ० २ । लेख्य० पृ० ६० )

**पुस्तम्**—लिप्यादिशिल्पकर्मयुतं वस्तु । यथा—पुराणपुस्तकम्, इत्यादि ।

**पूर्ववत्**—( अनुमानम् ) [ १ ] यत्र कारणेन कार्यमनुमीयते । यथा—मेघोन्नत्या भविष्यति वृष्टिरिति । ( वात्स्या० १।१।५ ) ( गौ०वृ० १।५ ) [ २ ] यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम् । यथा—धूमेनाग्निरिति । ( वात्स्या० १।१।५ ) [ ३ ] केवलान्वयि । यथा—अभिधेयं प्रमेयत्वादित्यादि । ( गौ०वृ० १।५ )

**पृच्छा**—[ क ] जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा—गुरुं धर्मं पृच्छतीत्यादौ पृच्छतेरर्थः । ( ग० व्यु० का० २ । पृ० ४५ )

[ ख ] अभिधानानुकूलव्यापारः । यथा—पान्थं पन्थानं पृच्छतीत्यत्र पृच्छधात्वर्थः पृच्छा । ( श० प्र० श्लो० ७३ । टी० )

---

१ अत्रोच्यते—"मृदा वा दारुणा वाऽपि वस्त्रेणाप्यथ चर्मणा । लोहरत्नैः कृतं वाऽपि पुस्तमित्यभिधीयते" इति ।

२ अत्रार्थे 'पूर्ववत्' इत्यत्र 'पूर्वं कारणम्, तद्वत् तल्लिङ्गकम्' इति व्युत्पत्तिर्द्रष्टव्या । ( गौ० वृ० १।५ )

३ अत्र सांख्यानामयमर्थः—दृष्टस्वलक्षणसामान्यविषयं यत्, तत् पूर्ववत् । पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्; तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा—धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते । तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणवह्निविशेषो दृष्टो रसवत्याम् । ( सांख्य० कौ० का० ५। टी० पृ० १० )

४ अत्रार्थे 'पूर्ववत्' इत्यत्र 'पूर्वमन्वयव्याप्तिः, तद्वत्' इति व्युत्पत्तिर्द्रष्टव्या । ( गौ० वृ० १।५ )

५ अत्र,—पृच्छधात्वर्थघटके ज्ञाने गुरुवृत्तित्वस्य, शब्दे च धर्मविषयकत्वस्यान्वयः । शब्दस्य च विषयता व्यापारानुबन्धिनी । ज्ञानस्य परंपरया शब्दरूपधात्वर्थविशेषणत्वात् तदाश्रयीभूतगुरोर्गौणकर्मता । धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता, इति ज्ञेयम् । ( ग० व्यु० का० २। पृ० ४६ )

६ अभिधानमिहाभिलापः; तदनुकूलव्यापारश्च 'केन पथा गन्तव्यम्' इत्यादिप्रश्नः । ( श० प्र० श्लो० ७३ । टी० )

७ तथा च—'पान्थनिष्ठं यत् पथोऽभिधानम्, तदनुकूलव्यापारवान्' इत्येवं तत्र बोधः । ( श० प्र० श्लो० ७३। टी पृ० ११२)

[ग] केचिच्छाब्दिकास्तु,–जिज्ञासाविषयकज्ञानानुकूलव्यापारः[1] । यथा–पृच्छ्यते[2] शिष्येण गुरुर्धर्ममित्यादौ[3] पृच्छेरर्थः, इत्याहुः । (वाच०)

[घ] प्रश्नः, इति काव्यज्ञा आहुः ।

**पृथक्त्वम्**—असाहित्यम् । यथा—"दुनोति चन्द्रात्पृथगप्यनङ्गः" इत्यादौ पृथक्त्वमसाहित्यम् । (ग० व्यु० का० ५ । पृ० ११०)

**पृथक्त्वम्**—(गुणः) [क] उपोद्धाहर(?)—व्यवहारकारणम् । तत्पुनरेकद्रव्यम्, अनेकद्रव्यं च । तस्य च नित्यानित्यत्वनिष्पत्तिः संख्यावज्ज्ञेया । (प्रशस्त० पृ० १६)

[ख] पृथग्व्यवहारासाधारणकारणम्[4]; पृथक्त्वत्वजातिमत्[5]; वा । (त० सं०) (त० कौ०) यथा—'इदमस्मात्पृथक्' इत्यादौ । (स्व०) पृथक्त्वं सर्वद्रव्यवृत्ति । तथा च—पृथक्त्वं द्विविधम् । एकवृत्ति, अनेकवृत्ति चेति । तत्रैक[6]पृथक्त्वमेकवृत्ति । द्विपृथक्त्वा[7]द्यनेकवृत्ति । (त० कौ०) एवं च–पृथक्त्वम् एकपृथक्त्वद्विपृथक्त्वादिभेदेन बहुविधम् । (सि० च०)

---

१ स च 'कथं धर्म आचरितव्यः' इत्यभिलापादिः ।

२ अस्य द्विकर्मकत्वेन गौणे कर्मणि (गुरौ) लकारादिः ।

३ अत्र—ज्ञानविषयत्वेन धर्मस्य, तज्ज्ञानाश्रयत्वाच्च गुरोः, कर्मत्वम्; इति ज्ञेयम् ।

४ तदर्थश्च—'अयमस्मात् पृथक्' इति व्यवहारः । तादृशव्यवहारजनकतावच्छेदकमुख्यप्रकारतावत्त्वं लक्षणम्, इति । (वाक्य० १ । पृ० ८) विस्तरस्तु (वै० उ० ७।२।२) तत्र द्रष्टव्यः ।

५ अत्र सूत्रम्—"तथा* पृथक्त्वम्" इति । (वै० ७।२।२)

६ इदं च, नित्यगतं नित्यम्; अनित्यगतमनित्यम् । (त० कौ०)

७ तच्च [क] नानैकपृथक्त्वविषयकापेक्षाबुद्धिजन्यम्, तन्नाशनाश्यं च, इति सर्वमनित्यमेव, इति ज्ञेयम् । (त० कौ०) [ख] द्वित्वाद्युत्पत्तिविनाशवत् द्विपृथक्त्वाद्युत्पत्तिविनाशावूहनीयौ । (वै० उ० ७।२।८) (वाक्य १ । पृ० ८)

---

* तदर्थश्च—पृथक्त्वमपि संख्यावत् गुणान्तरमेव । तत्रैकपृथक्त्वम् एकत्वसंख्यातुल्यम् । द्विपृथक्त्वादिकं च द्वित्वादिसंख्यातुल्यम्, इति । (वै० वि० ७।२।२)

अत्र नव्याः ( दीधितिकाराः ), मीमांसकाश्चाहुः—पृथक्त्वमन्योन्याभाव एव, न तु गुणान्तरम्, इति । ( ग० व्यु० का० ९। पृ० ११० ) ( दि० गु० )

**पृथिवी**—( द्रव्यम् ) [ क ] गन्धसमवायिकारणम्[1] । ( मु० १ ) [ ख ] गन्धवती[2] । ( त० सं ) यथा—आम्रफलं पृथिवी भवति । [ ग ] पृथिवीत्वजातिमती[3] । यथा—घटः पृथिवी । पृथिवी द्विविधा । नित्या, अनित्या च । तत्र—नित्या परमाणुलक्षणा । अनित्या कार्यलक्षणा ।

---

१ अत्र—पृथिवीत्वं तु, पाकजरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः* । (सर्व० औलू०) लक्षणं च [ क ] कटुरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् । [ ख ] गन्धसमानाधिकरण–गन्धासमानाधिकरणगुणसमानाधिकरणजात्यधिकरण–† द्रव्यत्वम्; इत्यादि । ( वै० उ० २।१।१। पृ० ६५ )

पृथिव्या अध्यात्मादिभेदा यथा—“पृथिवी पञ्चमं भूतं घ्राणं चाध्यात्ममुच्यते । अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम् ” इति । ( भा० आश्व० अ० ४२ )

२ तथा च सूत्रे—“ रूप-रस-गन्ध-स्पर्शवती पृथिवी ” इति । ( वै० २।१।१ ), “ व्यवस्थितः पृथिव्यां गन्धः ” इति च । ( वै० उ० २।२।२ )

३ गन्धसमानाधिकरणद्रव्यत्वव्याप्यजातिमतीत्यर्थः । तेन, उत्पत्तिक्षणे ‡ घटादौ, उत्पन्नविनष्टे§ च द्रव्ये, गन्धासत्त्वेऽपि नाव्याप्तिः, इति । ( त० दी० १ ) पाषाणादिभस्मनि गन्धोपलम्भेन पाषाणादावपि‖ गन्धोऽनुमीयते । तत्रत्यगन्धस्यानुत्कटत्वान्नोपलम्भः, इति ज्ञेयम् । ( मु० १ पृथि० पृ० ६४–६५ ) ( त० व० पृ० १०२ )

---

* अत्र पृथिवीत्वजातिसिद्धिप्रकारस्तु दिनकर्यादिग्रन्थेषु द्रष्टव्यः, विस्तरभयान्नोक्तः ।

† अत्र द्रव्यपदप्रयोजनं चिन्त्यम् ।

‡ अत्रायं नियमः—‘प्रथमं द्रव्यं निर्गुणमेवोत्पद्यते, पश्चात्तत्समवेता गुणा उत्पद्यन्ते’ इति ।

§ अत्राव्याप्तिकथनं च बौद्धमतमनुसृत्य; तन्मते तदुत्पत्तिक्षणे एव तन्नाशस्वीकारात् । नैयायिकास्तु,–उत्पन्नविनष्टद्रव्यं न स्वीकुर्वन्ति; एतन्मते स्थितिक्षणेऽपि द्रव्यस्य सत्त्वस्वीकारात्, इति ।

‖ अत्रायं नियमः ( व्याप्तिः )—‘यत् द्रव्यं यद्द्रव्यध्वंसजन्यम्, तत् द्रव्यम् तदुपादानोपादेयम्’ इति । दृष्टं चैतत् खण्डपटे महापटध्वंसजन्ये । ( मु० १। पृथि० पृ० ६५) ‘भस्म-खण्डपटयोरवयवानां पाषाण-महापटयोरवयवानां चैक्यम्’ इति नियमस्याभिप्रायः ।

अनित्या[1] त्रिविधा । शरीरम्, इन्द्रियम्, विषयश्च । ( वै० ४ । २ । १ ) तत्राद्यं ( शरीरम् ) द्विविधम् । योनिजम्, अयोनिजं च । ( वै० ४ । २ । ५ ) तत्र योनिजमस्मदादीनां[2] शरीरं प्रत्यक्षसिद्धम् । अयोनिजं[3] तु क्रिमिदंशादीनाम् । द्वितीयं ( इन्द्रियम् ) गन्धग्राहकं घ्राणम्[4]; तच्च नासाग्रवर्ति । तृतीयो[5] ( विषयः ) मृत्पाषाणसरित्समुद्रादेर्ब्रह्माण्डान्तः । पृथिव्यां चतुर्दश गुणा वर्तन्ते । रूपम्[6], रसः, गन्धः, स्पर्शः, संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, गुरुत्वम्, द्रवत्वम्, संस्कारश्चेति । ( प्रशस्त० पृ० ३ ) ( त० भा० ) ( भा० प० ) ( त० सं० ) तत्र रूपरसगन्धस्पर्शाश्चत्वारः पृथिव्यामेव पाकजाः । अन्यत्र ( जलादौ ) अपाकजा भवन्ति । एते चत्वारः ( क ) पाकजा अपाकजाश्चापि नित्यायामनित्यायां च पृथिव्याम्[7] अनित्या एव भवन्तीति

१ सा च स्थैर्याद्यवयवसंनिवेशविशिष्टा, अपरजातिबहुत्वोपेता, शयनासनाद्यनेकोपकारकरी च । ( प्रशस्त० पृ० ३ )

२ अत्र शिष्टं च 'शरीर' शब्दव्याख्याने द्रष्टव्यम् ।

३ अयोनिजम्, अनपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरम्, धर्मविशेषसहितेभ्योऽणुभ्यो जायते । क्षुद्रजन्तूनां यातनाशरीराणि अधर्मविशेषसहितेभ्योऽणुभ्यो जायन्ते । ( प्रशस्त० पृ० ४ )

४ इदम्, सर्वप्राणिनां जलाद्यनभिभूतैः पार्थिवावयवैरारब्धम् । ( प्रशस्त० पृ० ४ )

५ विषयस्तु द्व्यणुकादिक्रमेणारब्धस्त्रिविधः । मृत्, पाषाणः, स्थावरश्चेति ।

तत्र* मृत्पाषाणौ प्रसिद्धौ । स्थावरो वृक्षलतादिः । ( त० कौ० )

६ पृथिव्यां रूपादीनां गुणानां वृत्तित्वेऽयं विवेकः—क्षितावेव गन्धः; रूपमनेकप्रकारं शुक्लादि; रसः षड्विधो मधुरादिः; गन्धो द्विविधः सुरभिरसुरभिश्च; स्पर्शोऽस्या अनुष्णाशीतत्वे सति पाकजः ( प्रशस्त० पृ० ३ ) परिमाणं परममहत्त्वातिरिक्तम्; द्रवत्वं नैमित्तिकम्; संस्कारस्तु वेगः, स्थितिस्थापकश्चेति ।

७ अत्र सूत्रे—"पृथिव्यादिरूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च" इति । ( वै० ७ । १ । २ ) "एतेन नित्येषु नित्यत्वमुक्तम्" इति च ( वै० ७ । १ । ३ )

* तत्र भूप्रदेशाः प्राकारेष्टकादयो मृद्विकाराः । पाषाणा उपलमणिवज्रादयः । स्थावरास्तृणौषधिगुल्मलतावतानवनस्पतयः, इति । ( प्रशस्त० पृ० ४ )

विज्ञेयम् । ( प्र० प्र० ) ( त० सं० ) ( ख ) द्विविधायाः पृथिव्या रूपरसगन्धस्पर्शाश्चानित्याः, पाकजाश्च । ( त० भा० अर्थ० पृ० २७)

**पेषणम्**—अवयवविभागेन चूर्णनम् । यथा—“पिष्टोऽपि[1] तनोषि परिमलै-स्तुष्टिम्” इत्यादौ ।

**पौनःपुन्यम्**—[ क ] प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्यम् । यथा—पापच्यते[2] इत्यादौ यङोऽर्थः पौनःपुन्यम् । (श० प्र० श्लो० १०८। टी० पृ० १९३)

[ ख ] इदानींतनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वम् । यथा—पापच्यते इत्यादौ यङोऽर्थः । ( तर्का० ४। पृ० ११ )

**पौरुषेयत्वम्**—सजातीयोच्चारणा-( न?-) पेक्षोच्चरितजातीयत्वम् । (चि० ४ ) यथा—महाभारतादेः पौरुषेयत्वम् । ( स्व० ) वेदस्य तु मीमांसकादिमतेऽपौरुषेयत्वमेव; तच्च ‘वेद’ शब्दव्याख्याने प्रदर्शयिष्यते ।

**प्रकरणम्**—१ संगतिप्रदर्शनप्रयोजिकाऽऽकाङ्क्षा । यथा—“प्रकरणलाघवाय” इत्यादौ । ( भवा० ) २ प्रस्तावः । ३ पक्षप्रतिपक्षौ ( साध्यतदभाववन्तौ ) । (वात्स्या० १ । २ । ४८) यथा—“यस्मात्प्रकरणचिन्ता” ( गौ० १ । २ । ४८ ) इत्यादौ । ४ ग्रन्थसंधिविशेषः । यथा—प्रथमं प्रकरणम्, द्वितीयं प्रकरणम्, इत्यादौ । ५ उभयाकाङ्क्षा[3] प्रकरणम्, इति

---

१ समुदायश्लोकस्तु—“पाटीर ! तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् । यत् पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैस्तुष्टिम्” इति ।

२ अत्र,—निरुक्तानन्तर्यरूपो यङर्थः प्रकृत्यर्थे विशेषणत्वेनान्वेति । तेन ‘पाकोत्तरपाकानन्तर्यवत्पाककर्ता’ इत्येवं वाक्यार्थः । ( श० प्र० श्लो० १०८। टी० पृ० १९३ )

३ अङ्गवाक्यसापेक्षं प्रधानवाक्यमित्यर्थः । अत्र शाबरभाष्यम्—कर्तव्यस्य इतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणम्, इति । यथा—“श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्” ( जै० सू० ३।३।१४५ ) इत्यादौ ।

मीमांसका आहुः । ६ काव्यज्ञास्तु,—अभिनेयनायकादिको दृश्यकाव्यविशेषः, इत्याहुः ।

**प्रकरणसमः**—( जातिः ) १ [ क ] उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः । ( गौ० ५ । १ । १६ ) उभयेन नित्येन चानित्येन साधर्म्यात् । पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्येकः पक्षं प्रवर्तयति । द्वितीयश्च नित्यसाधर्म्यात् । एवं च सति—प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानेन । हेतौ तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः । समानं चैतद्वैधर्म्येऽपि । उभयवैधर्म्यात्प्रक्रियासिद्धेः प्रकरणसम इति । ( वात्स्या० ५।१।१६ ) [ ख ] अधिकबलत्वेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानम् । यथा—शब्दोऽनित्यः कृतकत्वादित्युक्ते, नैतदेवम्; श्रावणत्वेन नित्यत्वसाधकेन बाधात् । ( गौ० वृ० ५ । १ । १६ ) २ वायुक्तहेतोः साध्यविपरीतसाधकहेत्वन्तरोद्भावनम् । सत्प्रतिपक्षोदाहरणमेवात्रोदाहरणं बोध्यम् । ( नील० पृ० ४४ )

**प्रकरणसमः**—( हेत्वाभासः ) [ १ ] [ क ] यस्मात्प्रकरणचिन्ता, स

---

१ तल्लक्षणमुक्तम्—"भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् । शृङ्गारोऽङ्गी नायकस्तु* विप्रोऽमात्योऽथ वा वणिक् ॥ सापायधर्मकामार्थपरो धीरप्रशान्तकः" इति । ( सा० द० परि० ६। श्लो० ५११ )

२ तदर्थश्च—उभयसाधर्म्यात्,—अन्वयसहचारात्, व्यतिरेकसहचाराद्वा । प्रक्रिया,—प्रकर्षेण क्रियासाधनम्, विपरीतसाधनमिति फलितार्थः । तत्सिद्धेः,—तस्य पूर्वमेव सिद्धेः, इति । ( गौ० वृ० ५।१।१६ )

३ बाधदेशनाऽऽभासोऽयम् । ( गौ० वृ० ५।१।१६ )

४ अनयोः ( क–ख–इत्यत्र स्थितयोः ) लक्षणयोः कर्तव्ययोः सतोः सूत्रार्थस्तु—प्रकृष्टं करणं लिङ्गं परामर्शो वा 'को हेतुरनयोः साधकः, एतयोः कः परामर्शः प्रमा' इति वा यत्र जिज्ञासा भवतीत्यर्थः । यस्मादित्यादि तु वस्तुस्थितिमात्रम् । ( गौ० वृ० १।२।४७ )

---

* तथा हि—विप्रनायकं मृच्छकटिकम्; अमात्यनायकं मालतीमाधवम्; वणिङ्नायकं पुष्पभूषितम्; इति । ( सा० द० वृ० ६।५११ )

निर्णयार्थमपदिष्टः प्रकरणसमः। (गौ० १।२।७) विमर्शाधिष्ठानौ पक्षप्रतिपक्षावनवसितौ प्रकरणम्। तस्य चिन्ता विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम्। सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात्प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते। प्रज्ञापनं तु—अनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि। (वात्स्या० १।२।७)

[ख] निबन्धे तु—'प्रकृतसाध्यहेत्वोः किं तत्त्वम्' इति जिज्ञासाजनिका व्याप्तिपक्षधर्मतोपस्थितिः (तद्विषयः)। (चि० २। हेत्वा० पृ० ९७) (म० प्र० २। २७) [२] यस्य प्रतिपक्षभूतं हेत्वन्तरमस्ति, स प्रकरणसमः। स एव सत्प्रतिपक्ष उच्यते। यथा—शब्दो नित्योऽनि-

१ लक्षणं तु [क] तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम्। [ख] स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शः*। (गौ० वृ० १।४७) अन्यत्सर्वं सत्प्रतिपक्षवज्ज्ञातव्यम्।

२ अस्मिन्नभिप्राये सूत्रार्थश्च—निर्णयार्थं प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात्; किं तु—धर्मिणः साध्यवत्त्वम् तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्तयति, स प्रकरणसमः, इति। (गौ० वृ० १।४७)

३ अत्र जिज्ञासा च, 'प्रकृतसाध्यहेत्वोः कः समीचीनः' इत्याकारिका ग्राह्या। (ग० सत्प्र० पृ० २३) तथा च—'अनयोः किं तत्त्वम्' इति जिज्ञासैव सत्प्रतिपक्षफलम्, इति बोध्यम्। (चि० २। हेत्वा० पृ० ९७) (ग० सत्प्र० पृ० २२) (म० प्र० २। पृ० २७)

४ तदर्थश्च—यादृशपरामर्शसहकारेण यादृशपरामर्शस्योक्तजिज्ञासाजनकत्वम्, तादृशपरामर्शसहिततादृशपरामर्शः,† इति। (ग० सत्प्र० पृ० २३)

* अत्रेदं बोध्यम्—विरोधिपरामर्शस्य च हेतुनिष्ठत्वम् एकज्ञानविषयत्वसंबन्धेन ज्ञेयम्; अन्यथा हेतोर्दुष्टत्वं न स्यात्।

अयं च दशाविशेषे दोषः, इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेव, इति। (गौ० वृ० १।२।४७)

† अत्र च—पर्वते धूमेन वह्निसाधने,—'पर्वतो वह्निव्याप्यधूमवान्, वन्ह्यभावव्याप्यजलवान्' इति परामर्शद्वयसंवलनदशायां 'प्रकृतो धूमो हेतुः सत्प्रतिपक्षितः' इति व्यवह्रियत इत्यनुभवमनुसृत्येदं विज्ञेयम्।

त्यधर्मानुपलब्धेः, इति; शब्दोऽनित्यो नित्यधर्मानुपलब्धेः, इति वा । (त० भा० पृ० ४९)

**प्रकारः**—१ सामान्यस्य भेदको विशेषः । (लौ० भा० टी० पृ० ८) यथा—द्रव्यं नवविधमित्यादौ—पृथिवीत्वादिकं द्रव्यस्य प्रकारः । (ख०) यथा वा—"प्रकारान्तरेण विभजते" इत्यादौ । २ वक्ष्यमाणप्रकारतावान् । (मु० १ । पृ० ११८) यथा—'दण्डवान्पुरुषः' इति वाक्यजन्यबोधे दण्डः प्रकारः । ३[१] विशेषणम् । यथा—"स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता, तत्तदनिरूपकत्वं सर्वांशे याथार्थ्यम्" (ग० सामा०) इत्यादौ प्रकारो विशेषणम् । [२] क्वचित्—उपलक्षणमपि प्रकारः । (चि०) ४ क्वचित्—सादृश्यमपि प्रकारशब्दार्थः, इत्यपि केचिदाहुः ।

**प्रकारता**—[१] (विषयता) [क] विशेषणत्वापरनामा विलक्षणविषयताविशेषः । (नील० १ पृ० १७) यथा—'अयं घटः' इति ज्ञाने विशेषणस्य घटत्वादेर्विशेषणत्वापरनामा विषयताविशेषः । (न्या० म० १ । पृ० ४)

---

१ अत्र च,—विपरीतार्थसाधकं समानबलमनुमानान्तरं प्रतिपक्ष इत्युच्यते । यथा—शब्दोऽनित्यो नित्यधर्मानुपलब्धेः, इति । यत्पुनरतुल्यबलम्, न स प्रतिपक्षः । तथा हि—विपरीतार्थसाधकानुमानं त्रिविधम् । उपजीव्यम्, उपजीवकम्, अनुभयं चेति । तत्राद्यम् बाधकम्; बलवत्त्वात् । यथा—अनित्यः परमाणुर्मूर्तत्वादिति । अस्य हेतोः, परमाणुसाधकानुमानं* नित्यत्वं साधयदपि न प्रतिपक्षः; किंतु—धर्मिग्राहकं (परमाण्वात्मकस्य अनित्यत्वरूपसाध्यधर्मिणो ग्राहकम्) प्रमाणं बाधकम्; उपजीव्यत्वेन बलवत्त्वात् । न हि,—प्रमाणेनागृह्यमाणे धर्मिणि (परमाणौ) परमाण्वनित्यत्वानुमानमिदं संभवति; आश्रयासिद्धेः, इति ।† द्वितीयम् दुर्बलत्वाद्बाध्यम् । यथा—इदमेवानित्यत्वानुमानं स्यात् । तृतीयं तु सत्प्रतिपक्षः तुल्यबलवत्त्वात् । (त० भा० पृ० ४९)

---

* तच्च 'अणुपरिमाणतारतम्यम् क्वचिद्विश्रान्तम्; परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवत्' इति । (त० भा० पृ० ४९)

† तथा च—तारतम्यपक्षकानुमानं न समानबलम्; किंतु—अधिकबलम्, इति तत् परमाण्वनित्यत्वानुमानं प्रति बाधत एवेति, न तत् प्रतिपक्षः, इति भावः ।

[ ख ] अन्ये तु,—भासमानवैशिष्ट्य[1]प्रतियोगित्वम् । ( नील० १ पृ० । १७ ) ( सि० च० १ ) ( न्या० म० १ । पृ० ९ ) यथा—'अयं घटः' इत्यत्र घटत्वस्य वैशिष्ट्यं भासते, तत्प्रतियोगि च घटत्वम्, इत्याहुः । ( न्या० म० १ । पृ० ९ )

[ ग ] अपरे तु,—ज्ञायमानविशेषणप्रतियोगिकसंसर्गावच्छिन्नविषयत्वम्, इत्याहुः । ( वाच० ) [ २ ] विषयतानात्मिका प्रतियोगित्वादिनिरूपितावच्छेदकतातुल्यावच्छेदे[2]कताविशेषरूपा, इति कश्चिदाह । ( ग० बाध० पृ० २ ) यथा—"पक्षनिष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्य[3]कत्वं बाधः" ( चि० २ । हेत्वा० पृ० १०३ ) इत्यत्र—तादृशविषयत्वनिरूपिता, अभावनिष्ठा प्रकारता ।

**प्रकाशः**—१ ज्ञानम् । यथा—"अर्थप्रकाशो बुद्धिः" इत्यादौ । ( त० भा० ) ( त० प्र० ) २ तेजः । यथा—प्रचुरप्रकाशो रविरित्यादौ । ( ख० ) ३ ज्ञानस्वरूप आ[4]त्मा प्रका[5]शः, इति सांख्या आहुः । ४ व्यवहारशास्त्रज्ञास्तु,—सर्वजनज्ञानविषयः । यथा—"प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः" ( वीरमित्रो० २ । पृ० ९८६ । स्मृतिः ) इत्यादौ, इत्याहुः । ५ सर्वश्राव्यं वाक्यं प्रकाशम्, इति नाटकज्ञा आहुः ।

---

१ संसर्गावच्छिन्न—*विषयतेति यावत् । ( नील० १। पृ० १७ ) ( सि० च० ) । प्रकारताश्रयो द्विविधः । विशेषणम्, उपलक्षणं च, इति । ( चि० )

२ 'सप्रकारकत्वं विषयताया एव, न तु ज्ञानस्य' इत्यतिरिक्तविषयतावाद्येकदेशिमताभिप्रायकमतिसूक्ष्मतरमेतत् ।

३ ह्रदो वह्निमान् धूमादित्यादौ—'पक्षः साध्याभाववान्' इति ज्ञाने पक्षनिष्ठप्रमाविषयत्वस्य प्रकारः साध्याभावः, इति लक्षणसमन्वयः । ( दीधि० २। पृ० २१८ )

४ अत्र वैशेषिका आहुः—प्रागप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगात् ज्ञानाख्यः प्रकाशो जायते, इति । ( सांख्य० प्र० भा० अ० १। सू० १४५ )

५ अत्र सूत्रम्—"जडप्रकाशायोगात् प्रकाशः" इति । ( सांख्य० सू० अ० १। सू० १४५ )

६ अस्मिन्मते प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिः; अनुगतव्यवहारात्, इति ज्ञेयम् । ( सांख्य० प्र० भा० अ० १। सू० १४५ )

---

* अत्र,—'विशेष्यता-संसर्गतयोस्तु किंचित्संबन्धावच्छिन्नत्वमप्रामाणिकम्' इति सिद्धान्तोऽनुसर्तव्यः । तथा च—संसर्गावच्छिन्नत्वं प्रकारताया एव, इति भावः ।

**प्रकीर्णम्**—१ ग्रन्थविच्छेदः । २ विशकलिततया विद्यमानत्वम् । यथा—"प्रकीर्णवादस्यायुक्तत्वात्" (त० दी० पृ० ३३) इत्यादौ । ३ विभिन्नजातीयानां मिश्रणम् । (वाच०) यथा भट्टिकाव्ये—नानाजातीयप्रत्ययोदाहरणबोधककाण्डम् । ४ विक्षेपः । ५ धर्मज्ञास्तु,—अनुक्तप्रायश्चित्तविशेषको पापभेदः । यथा—"प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम् । प्रायश्चित्तं बुधः कुर्याद्ब्राह्मणानुमतः सदा" (विष्णु०) इत्यादौ, इत्याहुः ।

**प्रकृतत्वम्**—[ १ ] [ क ] प्रतिज्ञाविषयत्वम् । (न्या० र० सामान्यनि० पृ० १०) यथा—"एवम्—दुष्टहेतुनिरूपणस्याप्रकृतत्वे दुष्टहेतूनां विभागानर्हतया" (ग० हेत्वा० पृ० २) इत्यादौ । यथा वा—प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपित—प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारता-घटिते हेत्वाभासलक्षणे—ह्रदो वह्निमान् धूमादित्यत्र पक्षतावच्छेदकीभूतह्रदत्वस्य साध्यतावच्छेदकीभूतवह्नित्वस्य च प्रकृतत्वम् । (स्व०)
[ ख ] उद्देश्यत्वम् । (म० प्र० ४ । पृ० ५६) यथा—"प्रकृतान्वयबोधसमानाकार-स्वजन्यान्वयबोधविरह आकाङ्क्षा" इत्यादौ । (न्या० म० ४ । पृ०२२)
[ ग ] वर्तमानकाले गृहीतत्वम् ।
[ घ ] प्रकरणप्राप्तत्वम् ।
[ ङ ] आरब्धत्वं वा, इति केचिदाहुः । [ २ ] अधिकृतत्वम् । (वाच०)

**प्रकृतिः**—१ (शब्दः) [ क ] स्वेतरशब्दार्थाविशेषितस्य यादृशस्वार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय

---

१ अत्रोक्तम्—"अनुक्तं तत्प्रकीर्णकम्" इति । (स्मृतिः) (वाच०)

२ चैत्रः, पचति, यजेत, इत्यादौ—शब्दान्तरधर्मिकसुबादिनिश्चयस्यासत्त्वेऽपि, तदर्थस्यैकत्व-वर्तमानत्वादेश्चैत्र—पाकादावन्वयात्, स्वाव्यवहितोत्तरत्वसंसर्गेण तादृशशब्दवत्ताया निश्चय एव तदुपस्थाप्ययादृशान्वयबोधं प्रति हेतुः, तादृशस्यैव च शब्दस्य प्रकृते तथाविधः स्वार्थः । स च पाकेत्यादेः शक्त्यादिविरहेऽपि पचनादिरूपः सुवच एव; पचनादेः कर्मत्वादावन्वयबोधं प्रति, अमादिधर्मिकतादृशशब्दवत्ताया निश्चयस्यैव हेतुत्वात् (लक्षणसमन्वयः) । (श० प्र० श्लो० ६ । टी०)

एवं हेतुः, तादृशस्तथाविधार्थे प्रकृतिः । यथा—पट-भू-प्रभृतयो हि शब्दाः स्वोत्तरविभक्त्याद्यंशे निश्चिता एव स्वोपस्थाप्यस्य वसन-जननादेरन्वयं प्रत्ययार्थे कर्मत्व-कर्तृत्वादौ बोधयन्ति, न त्वन्यथा ( अनिश्चिता अपि )[1] । ( श० प्र० श्लो० ६ । टी० )

[ ख ] स्वोपस्थाप्ययादृशार्थस्यान्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्तानिश्चयत्वेन हेतुत्वम्, तादृश एव शब्दस्तथाविधार्थे प्रकृतिः[2] । ( श० प्र० श्लो० ७ । टी० )

[ ग ] शाब्दिकास्तु ( पाणिनिप्रभृतयः ),—प्रातिपदिकं प्रकृतिः, इत्याहुः । ( श० प्र० श्लो० १३ । टी० )

[ घ ] नव्यशाब्दिकाः ( नागोजीभट्टादयः ),—अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः[3] शब्दविशेषः, इत्याहुः[4] । इयं प्रकृतिर्द्विविधा । नाम, धातुश्चेति । ( श० प्र० श्लो० १३ ) २ [ १ ] कारणम्[5] । यथा—मृ-

---

१ प्रत्ययास्तु, पदान्तरार्थानवच्छिन्नस्य संख्या—काल—इष्टसाधनत्व-इत्यादिस्वार्थस्यान्वयबोधं प्रत्यनिश्चिता अप्युपयुज्यन्ते ( इति तत्र नातिव्याप्तिः ) । ( श० प्र० श्लो० ६ । टी० )

२ बहुगुडो द्राक्षेत्यादौ बहुत्वाद्यर्थस्यान्वयबोधं प्रति, न गुडादिपदधर्मिकबहुत्वादिनिश्चयत्वेन हेतुत्वम्; अपि तु—सुबादिधर्मिक—बहुगुडादिपदनिश्चयत्वेन । अन्यथा, केवलादपि बहुगुडादिपदात् द्राक्षादौ बहुत्वाद्यर्थस्यान्वयबोधापत्तेः; इति न तत्र प्रसङ्गः । ( श० प्र० श्लो० ७ । टी० )

३ अत्रावधित्वं च पूर्वापरत्वरूपं ग्राह्यम् । तेन, बहुगुडो द्राक्षेत्यत्र बहुत्वादेर्निमित्तप्रकृतौ नाप्रसङ्गः । वस्तुतस्तु,—बहुगुडो द्राक्षेत्यत्र प्रकृतिप्रत्ययविभाग एव नास्ति, इति भाष्यकारमतम् ।

४ अत्रार्थे व्युत्पत्तिः 'प्रकरोति प्रत्ययं बोधं च' इति, प्रकृतिशब्दो योगरूढः । ( वाच० ) अत्र प्रकृतित्वं च [ क ] प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वम् । ( शेखर० ) [ ख ] प्रत्ययविधानावधित्वम् । ( ल० म० ) [ ग ] तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वम् ।

५ अत्र, समवायि-असमवायि-निमित्त-एतत्त्रितयसाधारणं कारणत्वम्; न तु समवायिकारणत्वमात्रम्, विज्ञेयम् । ( ख० ) तेन, दण्डाद्घटो जायते इति प्रयोग इष्यते । अत एव—"यतो ( ईश्वरात् ) द्रव्यं गुणाः कर्म" इत्यादौ पञ्चमी । ( ग० व्यु० का० ५ । पृ० १०८ )

त्पिण्डाद्घटो जायत इत्यादौ मृत्पिण्डः प्रकृतिः । ( ग० व्यु० का० ५ । पृ० १०८ ) [ २ ] समवायिकारणम् । ( वै० वि० ) ( वै० उ० ८ । २ । ५ ) यथा—"पृथिवी गन्धज्ञाने ( घ्राणे ) प्रकृतिः" ( गौ० ८ । २ । ५ ) इत्यादौ । ३ स्वजनकनाशप्रतियोगि । यथा—दुग्धं दध्नः प्रकृतिः । ( राम० १ । पृथिवी० पृ० ६८ ) यथा वा—महापटः खण्डपटस्य प्रकृतिः । ( स्व० ) ( मु० १ । पृथिवी० ) ४ यावदाश्रयभाविधर्मः । यथा—प्रकृत्या कृपणः, स्वभावेन सरलः, इत्यादौ । ( श० प्र० श्लो० ९३ । टी० ) ५ मीमांसकास्तु,—यत्र समग्राङ्गोपदेशः, सा प्रकृतिः । यथा—दर्शपूर्णमासादिरूपप्रधानयागः प्रकृतिः ( इष्ट्यग्निहोत्रसोमाः प्रकृतयः ), ( लौ० भा० पृ० २३ ) इत्याहुः । ६ सत्त्वरजस्तमसां साम्यावस्था

---

१ अत्र "जनिकर्तुः प्रकृतिः" ( पा० सू० १ । ४ । ३० ) इत्यनेनापादानत्वम् । न चात्र हेतुपञ्चमी; गुणातिरिक्तहेतौ* पञ्चम्यनुशासनविरहात् । ( ग० व्यु० का० ५ । पृ० १०८ )

२ तदर्थश्च—स्वम् दधि, तस्य जनको यो नाशः ( दुग्धनाशः ), तस्य प्रतियोगि ( दुग्धम् ), तत्त्वं दुग्धे, इति । एवम्—खण्डपटस्य जनकीभूतो नाशः ( महापटनाशः ), तत्प्रतियोगित्वं महापटादौ, इति द्रष्टव्यम् ।

३ अत्र, तृतीयार्थश्चाभेदस्तादात्म्यं वा । एवं च—'स्वाश्रयाधिकरणयावत्कालवृत्तिकार्पण्यवान्' इत्याकारस्तत्र बोधः । ( श० प्र० श्लो० ९३ । टी० )

४ अत्र "प्रकृत्यादिभ्य उपसंख्यानम्" ( वार्तिकम् ) इत्यनेन तृतीया विधीयते । ( श० प्र० श्लो० ९३ । टी० )

५ अत्रेदं बोध्यम्—यत्र कर्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते, सा प्रकृतिः । यत्र विशेषरूपमेव कर्तव्यं श्रुत्योपदिश्यते; इतरत्सर्वं कर्मान्तरादतिदिश्यते, सा विकृतिः । ( वाच० ) तत्रापि मूलप्रकृतिः, अवान्तरप्रकृतिः, इति प्रकृतेर्द्वैविध्यादिकं तु विस्तरभयान्नोच्यते, इति ।

६ सूत्रशेषस्यायमर्थः—प्रकृतेः कार्यं महत्तत्त्वम् ; महतश्च कार्योऽहंकारः, अहंकारस्य कार्यद्वयम्,—तन्मात्राणि, उभयमिन्द्रियं च । तत्रोभयमिन्द्रियं बाह्याभ्यन्तरभेदेनैकादशविधम् ; तन्मात्राणां कार्याणि च पञ्च स्थूलभूतानि; स्थूलशब्दात् तन्मात्राणां सूक्ष्मभूतत्वमभ्युपगतम् । पुरुषस्तु कार्यकारणविलक्षणः, इति । इत्येवं पञ्चविंशतिर्गणः पदार्थव्यूहः,

---

* अत्र गुणत्वं च स्वप्रयोज्याश्रयवृत्तित्वम् । तेन, वह्निमान् धूमादित्यादौ धूमस्य गुणत्वप्राप्त्या "विभाषा गुणेऽस्त्रियाम्" ( पा० सू० २।३।२५ ) इत्यनेन धूमपदात्तृतीयापञ्चम्यौ संगच्छेते । ( ग० अवय० हेतु० )

प्रकृतिः ( सांख्य० सू० अ० १ । सू० ६१ ) इति सांख्या आहुः । ७ मायाऽविद्या चेति द्विविधभेदभिन्ना प्रकृतिः, इति शांकरा अद्वैतवादिनो मन्यन्ते । ८ जडात्मको भगवदंशविशेषः, इति वाल्लभा आहुः । ९ लक्ष्मीरपीति श्रीमध्वाचार्यानुयायिनः प्राहुः । १० शरीरावस्था, इति भिषजो वदन्ति । ११ मूलस्वरः प्रकृतिः, इति गायका गायन्ति । १२ स्वभावः, इति काव्यज्ञाः संगिरन्ते । १३ शाक्तास्तु,—प्रकृत्यंशदेवीपञ्चकरूपशक्तिविशेषः, इत्याहुः । १४ प्रकृतिशब्दवाच्यो विष्णुः, इति श्रीपूर्णप्रज्ञाचार्या व्याचक्रुः । ( मध्वभा० ) १५ स्वाम्यमात्यादिराज्याङ्गं प्रकृतिः, इति नीतिशास्त्रज्ञा आहुः । १६ एकविंशत्यक्षरपादकश्छन्दोविशेषः प्रकृतिः, इति छन्दःशास्त्रज्ञा आहुः ।

**प्रक्रिया**—१ निरूपणम् । (दि० गु० पृ० १९८) यथा—"नवक्षणा प्रक्रिया, दशक्षणा प्रक्रिया, एकादशक्षणा प्रक्रिया"( मु०गु०पृ० १९८ ) इत्यादौ । २ पक्षप्रतिपक्षयोः प्रवृत्तिः । यथा—'अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवत्' इत्येकः पक्षं प्रवर्तयति । द्वितीयश्च, नित्यसाधर्म्यात् (श्रावणत्वात्)

---

एतदतिरिक्तः पदार्थो नास्तीत्यर्थः । दिक्कालौ चाकाशमेव, इति । ( सांख्य० प्र० भा० अ० १ । सू० ६१ । टी० )

१ एतन्मते प्रकृतित्वं च तत्त्वान्तरोपादानत्वम् । ( सर्व० सांख्य० पृ० १४९ )

२ एतन्मते च प्रकृतिर्द्विविधा । चित्प्रकृतिः, जडप्रकृतिश्च । तत्राऽऽद्या लक्ष्मीः । द्वितीया तु मृत्पाषाणादिस्थावरात्मकं सर्वं जगत्, इति विज्ञेयम् । (भाग० १ । टी० विजयध्व०) अत्र लक्ष्मीपदेन भगवदिच्छा संगृह्यते । ( मध्व० भाष्य० १ । ४ । २५ )

३ अत्रोक्तम्—"गणेशजननी दुर्गा १, राधा २, लक्ष्मीः ३, सरस्वती ४, । सावित्री ५, च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता" इति ।

४ अत्र ब्रह्मसूत्रम्—"ॐप्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ" इति । ( ब्र० सू० १ । ४ । २४ )
अत्र प्रकृतिशब्देन समवायिकारणं ( ब्रह्म ) माह्यम्, इत्यद्वैतमायावादिनो मन्यन्ते ।

५ अत्रोच्यते—"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि ( सप्त ) प्रकृतयः; पौराणां श्रेणयोऽपि च" इति । ( अमर, काण्ड० २ । क्षत्रि० श्लो० १७–१८ )

६ अत्रार्थे व्युत्पत्तिः—'प्रक्रिया प्रकर्षेण क्रियासाधनम्,' विपरीतसाधनमिति फलितार्थः, इति । ( गौ० वृ० ५ । १ । १६ )

'नित्यः शब्दः' इति । ( वात्स्या० ९ । १ । १६ ) ३ शब्दप्रयोगसाधनावस्था प्रक्रिया, इति शाब्दिका आहुः । ४ प्रकरणम् ; सा प्रक्रिया, या 'कम्' इत्यपेक्षा, ( इति पार्थसारथिमिश्र आह ) । ५ अधिकारः ( नृपादीनां चामरव्यजनच्छत्रधारणादिव्यापारः ); इति काव्यज्ञा आहुः ।

**प्रचयः**—१ [ क ] शिथिलाख्यः संयोगः । यथा—यत्र द्वाभ्यां तूलकपिण्डाभ्यां प्रचययुक्ताभ्यां तूलकपिण्डान्तरमारब्धम्, तत्र परिमाणोत्कर्षदर्शनात्, शिथिलाख्यसंयोगरूपः प्रचयस्तादृशावयविपरिमाणस्यासमवायिकारणम् । ( वै० वि० ७ । १ । ९ ) ( वै० उ० ७ । १ । ९ ) ( भा०प० गु० श्लो० ११३ )

[ ख ] किंचिदवयवावच्छेदेनावयवान्तरासंयोगिनि महत्यवयवे वर्तमानः संयोगः, इत्येके वदन्ति । (दि० गु० पृ०२०१) २ साहित्यम् । ( कि० व० ९ ) ३ चयनम् । ४ समूहः । ५ उपचयश्चेति काव्यज्ञा आहुः ।

**प्रज्ञापनम्**—१ उदाहरणम् । २ बोधनम् । ( स्व० )

**प्रणतिः**— / **प्रणामः**— ( नमस्कारः ) स्वापकर्षबोधकः करशिरःसंयोगादिव्यापारः ।

---

१ अत्र—प्रचयश्च आरम्भकः संयोगः । स च, स्वाभिमुखकिंचिदवयवासंयुक्तत्वे सति स्वाभिमुखकिंचिदवयवसंयोगलक्षणः । स स्वावयवसंयोगः स्वावयवप्रशिथिलसंयोगापेक्षः परिमाणजनकः; "गुणकर्मारम्भे सापेक्षः" इति वचनात् । ( वै० उ० ७ । १ । ९ ) (त० व०)

२ अन्ये आहुः—अत्र महत्पदं न देयम्; परमाणुसंयोगस्य प्रचयत्वे क्षतिविरहात्, इति । अपरे तु,—भूयोऽवयवावच्छेदेनावयवान्तरासंयोगिन्यवयवे वर्तमानः संयोगः प्रचयः । तेन, परमाणुसंयोगो द्व्यणुकसंयोगो वा, न प्रचयः, इत्याहुः । ( दि० गु० पृ० २०५ )

३ यष्ट्यादिना वृक्षाग्रस्थानां पुष्पाणां *प्रचयः, इत्येव । ( सि० कौ०कृद० पृ० ३८४ )

४ एतदर्थे वात्स्यायनभाष्यं ( १ । २ । ४८ ) ( १ । १ । १६ ) द्रष्टव्यम् ।

५ अत्रोच्यते—" पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । वचसा मनसा चैव प्रणामोऽष्टाङ्ग उच्यते " इति । ( वाच० )

---

* अत्र व्याकरणनियमः—" हस्तादाने चेरस्तेये " (पा०सू०३।३।४०) हस्तादाने तु घञ्—हस्तेन पुष्पप्रचाय इत्येव । चौर्ये तु अच्—प्रचय इत्येव, चौर्येण पुष्पादेः प्रचयः, इति ।

यथा–"बाहुभ्यां चैव जानुभ्यां शिरसा वचसा दृशा । पञ्चाङ्गोऽयं प्रणामः स्यात्पूजासु प्रवरः स्मृतः" इत्यादौ । ( वाच० )

**प्रणिधानम्**—१ सुस्मूर्षया ( स्मर्तुमिच्छया ) मनसो धारणम् । (वात्स्या० ३ । २ । ४४ ) २ मनसो विषयान्तरसंचारवारणम् । (गौ० वृ० ३ । ११३ ) ३ योगिनस्तु,–चिन्तनविशेषरूपः समाधिविशेषः, इत्याहुः । ४ भक्तिविशेषः । ५ अर्पणम् । ६ कर्मणां फलत्यागः, इति च योगशास्त्रज्ञा आहुः । ( पात० सू० भाष्य० ) ७ प्रयत्नः । ८ अभिनिवेशश्च; इति काव्यज्ञा आहुः ।

**प्रति**[2]—( अव्ययम् ) १ सादृश्यम् । यथा–प्रतिदेवता, इत्यादौ । २ आदानं । यथा–प्रतिगृह्णाति, इत्यादौ । ३ हिंसा । यथा–प्रतिहन्ति, इत्यादौ । ४ अङ्गीकारः । यथा–प्रतिज्ञानम्, इत्यादौ । ५ प्रतिनिधीकारणम् । यथा–आभिमन्युरर्जुनतः प्रति, इत्यादौ । ६ व्याधिः । यथा–प्रतिश्यायः, इत्यादौ । ७ आभिमुख्यम् । यथा–प्रतिसूर्यं गतः, इत्यादौ । ८ व्याप्तिः । यथा–प्रतिकीर्णं पांशुभिः, इत्यादौ । ९ वारणम् । यथा–प्रतिषिद्धः, इत्यादौ । ( गण० टीका० ) ( वाच० ) १० प्रतिदानम् । यथा–तिलेभ्यः प्रतियच्छति माषान्, इत्यादौ । ११ लक्षणम् । यथा– वृक्षं प्रति विद्योतते विद्युत्, इत्यादौ ।

**प्रतिकूलत्वम्**—१ द्वेषविषयत्वम् । ( मु० गु० पृ० २२० ) यथा–दुःखस्य द्विष्टत्वरूपं प्रतिकूलत्वम् । २ विरुद्धपक्षावलम्बित्वम्, इति काव्यज्ञा आहुः ।

**प्रतिग्रहः**—[ १ ] [ क ] स्वस्वत्वजन[3]केच्छारूपस्वीकारविशेषः । यथा–

---

१ इदं च स्मृतेरुद्बोधकरूपं निमित्तं बोध्यम् । अत्र भाष्यम्— "सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम्" इति । ( वात्स्या० ३ । २ । ४४ )

२ अत्र—प्रतेः सादृश्याद्यर्थविशेषेषु द्योतकत्वमेव; न तु वाचकत्वम्, इति ज्ञेयम् ।

३ अत्र मतविशेषो ज्ञेयः–'दानस्यैव, स्वस्वत्वध्वंसमिव परस्वत्वोत्पत्तिं प्रति जनकता; प्रति-

धनं प्रतिगृह्णातीत्यादौ धात्वर्थः । ( ग० व्यु० का० २ । पृ० ४३ )
[ ख ] पुण्यार्थकदानजन्यस्वत्वस्य जनकः स्वीकारः ( 'ममेदम्' इति ज्ञानम्) । यथा-धनं प्रतिगृह्णातीत्यत्र । (श० प्र० श्लो० ७२।टी०पृ०९)
[ ग ]दत्तद्रव्यस्वस्वत्वजनकस्वीकारः । यथा-गां प्रतिगृह्णातीत्यादौ । ( का० व्या० पृ० ९ )
[ २ ] [ क ] शाब्दिकास्तु,-अदृष्टार्थदत्तस्वीकारः । ( ल० म० )
[ ख ] अदृष्टार्थत्यक्तद्रव्यस्वीकारः, इत्याहुः ।

---

ग्रहस्य तु न* स्वत्वजनकता; अपि तु-दानेनोत्पन्नमपि स्वत्वं संप्रदानव्यापारेण प्रतिग्रहेण यथेष्टविनियोगार्हं क्रियते' इति जीमूतवाहनमतम् । (जीमूतवा० दायभाग० वीरमित्रो० २। पृ० ५४३ )

१ अत्र, स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः । ( ग० व्यु० का० २ । पृ० ४३ )

२ विक्रयादेर्दानविशेषत्वेऽपि, न तस्य पुण्यजनकत्वम् । अतः, तल्लब्धस्य स्वीकारो न प्रतिग्रहः, इति विज्ञेयम् । ( श० प्र० श्लो० ७२ । पृ० १०९ )

३ प्रतिग्रहस्य स्वत्वजनकत्वे प्रमाणं श्रुतिः-"याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत्" इति । स्मृतिरपि-"ब्राह्मणस्याधिकं लब्धम्" इति ( गौतमः ) । तदर्थश्च मिताक्षरायाम् ( अ० २ । व्यव० श्लो० ११६ )—ब्राह्मणस्य प्रतिग्रहादिना लब्धम्, तत् अधिकमसाधारणम्, इति । वीरमित्रो० २ । पृ० ५४३ )

४ अत्र, फलीभूतस्वत्ववत्तया धनस्य कर्मत्वं संगच्छते । ( श० प्र० श्लो० ७२ । टी० )

५ अयाचितविषये प्रतिग्रहे न दोषः । तदुक्तम्-"अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे । अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्" इति । ( गारुडे० अ० २१५ ) ( वाच० )

---

* अत्र प्रमाणम्—"मनसा पात्रमुद्दिश्य" इत्यादि शास्त्रम् ।

अयं भावः-१ [ क ] प्रतिग्रहस्य स्वत्वजनकत्वं यदि स्वीक्रियेत तदा देशान्तरस्थं पात्रमुद्दिश्य यद्धनं ददाति, तत्पात्रमरणानन्तरं तत्पुत्राणां तद्धने ( तत्पितृस्वत्वानुत्पत्त्या ) स्वत्वाभावेन प्रवृत्तिर्न स्यात् । अतः प्रतिग्रहस्यापि स्वत्वजनकत्वं नाङ्गीकर्तव्यम्, इति । [ ख ] विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणस्थले पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते । अन्यथा तैरिव उदासीनैरपि तद्धनस्यारण्यकुशादेरिवोपादाने यथेष्टविनियोगे च प्रत्यवायो न स्यात्, इति । ( श० प्र० श्लो० ६९ । टी० ) २ वीरमित्रोदयकारास्तु,-प्रतिग्रहादेव स्वत्वमुत्पद्यते । अन्यथा,-पात्रविशेषोद्देशेन त्यागे, तेनास्वीकृतेऽपि तत्स्वत्वोत्पत्तौ, परस्मै तस्य प्रतिपादनासंभवप्रसङ्गः, इत्याहुः । (वीरमित्रो० २ । दाय० पृ० ५४२ )

**प्रतिघातः**—[ १ ] बलवत्तरवेगप्रयुक्तद्रव्यसंयोगविशेषः । [ २ ] मारणम् । ( स्व० )

**प्रतिज्ञा**—१ [ क ] स्वकर्तव्यत्वेन निर्देशः ( राम० ) यथा—"अथ हेत्वाभासास्तत्त्वनिर्णयप्रयोजकत्वान्निरूप्यन्ते," "मया तर्कसंग्रहः क्रियते" इत्यादि प्रतिज्ञा । ( स्व० )

[ ख ] कर्तव्यत्वज्ञानम् । ( राम० पृ० २ ) यथा—"कारिकावलीं विशदीकरवाणि" इति प्रतिज्ञा । २ व्यवहारज्ञास्तु,—पक्षाभिधायकः पूर्वपक्ष—भाषाद्यपरपर्यायो वाक्यविशेषः प्रतिज्ञा । यथा—'ममेदं द्रव्यमनेन गृहीतम्, न ददाति' इत्यादिः प्रतिज्ञा, इत्याहुः । ३ अङ्गीकारः, इति काव्यज्ञा आहुः ।

**प्रतिज्ञा**—( न्यायावयवः ) [ क ] उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजक-

---

१ कर्तव्यत्वप्रकारकबोधानुकूलव्यापारः, इति परमार्थः ।

२ स च व्यवहारपादविशेषः; पूर्ववादः, अर्थिवादश्चेत्यभिधीयते । ( वीरमित्रो० २ । व्यव० पृ० ६० )

३ अत्र प्रतिज्ञालक्षणमाह याज्ञवल्क्यः—"प्रत्यर्थितोऽग्रतो लेख्यं यथा वेदितमर्थिना । समा— मास— तदर्धाहर्नामजात्यादि चिह्नितम्" इति । ( वीरमि० २ । पृ० ६१ )

४ पक्षज्ञानं प्रतिज्ञायाः प्रयोजनम् । ( त० दी० २ । पृ० २२ )

लक्षणं च प्रतिज्ञात्वमेव । तच्चात्र [ क ] हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम् । [ ख ] लिङ्गाविषयकलिङ्गिविषयकज्ञानजनकन्यायावयवत्वम् । (चि० २ । अव० पृ०७७) [ ग ] इतरान्वितस्वार्थबोधकत्वे सति, स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकान्वयबोधजनकत्वे सति, न्यायावयवत्वम् । [ घ ] अन्त्यपदवत्त्वे सति स्वीयानन्त्यपदार्थविशेष्यकान्वयबोधाजनकान्यत्वे सति न्यायावयवत्वम् । (दीधि० २। पृ० १७७) [ ङ ] एतन्न्यायघटकः 'पर्वतो वह्निमान्' इति यः शब्दः, तद्वृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० २। पृ० २३ ) [ च ] प्रतिज्ञात्वं जातिः, इति केचिदाहुः ( चि० २ अव० पृ० ७७) [ छ ] वस्तुतस्तु—प्रतिज्ञात्वमखण्डोपाधिरेव* इत्यन्ये आहुः । ( म० प्र० २ । पृ० ३३ )

---

* 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञाया न्यायावयवत्वप्रतिपादनाय पूर्वोक्तप्रतिज्ञात्वनिर्वचनात्मकगुर्वारम्भः, इति हृदयम् । ( म० प्र० २। पृ० ३३ )

शाब्दज्ञानजनकत्वे सत्युद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकं वाक्यम् ।

[ ख ] उद्देश्यानुमितिहेतुलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकत्वे सत्युद्देश्यानुमितिविषयक-लिङ्गाविषयक-शाब्दज्ञानजनकं वाक्यम् । ( चि० २ ।

---

१ सत्यन्तस्य प्रकृतन्यायावयवत्वं पर्यवसितार्थः । तेन, प्रकृतन्यायबहिर्भूतवाक्यवारणम् । ( दीधि० २ । अवय० पृ० १६७ ) एवमग्रेऽपि बोध्यम् ।

२ तदर्थश्च [ क ] यादृशसाध्यपक्षकन्यायावयवत्वम्, तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानजनकत्वम् । [ ख ] यादृशरूपावच्छिन्नपक्षकयादृशरूपावच्छिन्नसाध्यकसंप्रदायसिद्धप्रतिज्ञाः यादृशयादृशरूपावच्छिन्नपक्षे यादृशयादृशरूपावच्छिन्नप्रकारकबोधजनिकाः, तादृशरूपावच्छिन्ने तादृशरूपावच्छिन्नप्रकारकबोधानिवर्त्यसंशयानिवर्तकतादृशबोधान्यतमबोधजनकत्वे सति तादृशरूपावच्छिन्नपक्षकतादृशरूपावच्छिन्नसाध्यकन्यायान्तर्गतत्वम् । ( दीधि० अव० पृ०१७० )( ग० २ । अव० पृ० ३१ ) [ ग ] तावद्बोधानिवर्त्यसंशयानिवर्तक-तावद्बोधनिवर्त्ययावत्संशयनिवर्तक-बोधजनकत्वम् वाच्यम्, इत्यपि कश्चिदाह । ( दीधि० २ । अव० पृ० १७० )

३ तदर्थस्तु–[ क ]उद्देश्यानुमितिसमानविषयकलिङ्गाविषयकशाब्दज्ञानजनकन्यायावयवत्वम् । [ ख ] वस्तुतः,—लिङ्गं लिङ्गत्वम् । तथा च,—प्रकृतहेतावच्छेदकावच्छिन्नस्य प्रकृतसाध्यतावच्छेदकावच्छिन्नगमकतौपयिकं यत् व्याप्तिविषयत्वम्,* तच्छून्यत्वम्, इति । [ ग ]

---

* पक्षतावच्छेदकावच्छिन्नमुख्यविशेष्यतानिरूपितविषयतानिरूपिता या विषयता, तन्निरूपितविषयतानिरूपितविषयतायां विशेषणविधया प्रकृतानुमितिजनकतावच्छेदकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयतावच्छिन्ना या प्रतिबन्धकता, तदवच्छेदकविषयताशून्यबोधजनकवाक्यत्वम्, इति परमार्थः । तथा हि–प्रकृतानुमितिजनकतावच्छेदकीभूतं 'हेतुव्यापकसाध्यसमानाधिकरणहेतुमान्पक्षः' इत्यन्वयिपरामर्शीयं हेतुव्यापकत्वविशिष्टसाध्यविषयत्वं च,–पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितहेतुविषयतानिरूपिताधेयत्वविषयतानिरूपिताधिकरणविषयतानिरूपितं भवति;

एवम्–प्रकृतानुमितिजनकतावच्छेदकीभूतं 'साध्याभावव्यापकहेत्वभावप्रतियोगिहेतुमान्पक्षः' इति व्यतिरेकिपरामर्शीयं, साध्याभावव्यापकत्वविशिष्टहेत्वभावविषयत्वमपि तादृशपक्षविशेष्यतानिरूपितसंसर्गीयविषयतानिरूपितहेतुविषयतानिरूपितसंसर्गीयविषयतानिरूपितं भवति; इति तादृशविषयताद्वयशून्यबोधजनकवाक्यत्वम् 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञायामस्ति, इति लक्षणसंगतिरित्यवधेयम् । ( ग०२। अव० पृ० ४३–४४ ) अत्राधिकमूहापोहादिकं तु वङ्गदेशीयभट्टाचार्यकृतक्रोडपत्रादौ, वाग्मीश्रीनिवासाचार्य–हुलगीग्रामस्थश्रीपद्माचार्यादिकृतक्रोडपत्रादौ च द्रष्टव्यम् ।

अवय० पृ० ७७ ) सा च ( प्रतिज्ञा ) [ क ] साध्यनिर्देशः प्रतिज्ञा। (गौ० १।१।३३) प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा, साध्यनिर्देशः 'अनित्यः शब्दः' इति। (वात्स्या० १ । १ । ३३) [ ख ] साध्यधर्मविशिष्टधर्मिप्रतिपादकं वचनम् । ( त० भा० पृ० ४३) ( त० दी० २ । पृ० २२ ) यथा—पर्वतपक्षकवह्निसाध्यकस्थले 'पर्वतो वह्निमान्' इति वाक्यं प्रतिज्ञा ।

[ ग ] अनुमेयोद्देशोऽविरोधी प्रतिज्ञा; प्रतिपिपादयिषितधर्मविशिष्टस्य

केचित्तु,*—हेतुविषयकज्ञानजनकत्वव्याप्यावयवतावच्छेदकरूपशून्यत्वे सति उदाहरणान्यन्यायावयवत्वम्, इत्याहुः । । दीधि० २ । अव० पृ० १७१–१७२ )

१ साधनीयस्य † अर्थस्य यो निर्देशः, स प्रतिज्ञा । तथा च—पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधको न्यायावयवः, इत्यर्थः । (गौ० वृ० १।३३ ) (दीधि० २। अव० पृ० १६७ )

२ साध्यतावच्छेदकावच्छिन्नसाध्यप्रकारक—पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यक—बोधजनको न्यायावयवः ‡, इत्यर्थः । ( नील० २। पृ० २२ ) ( दीधि० )

३ अविरोधिग्रहणात्, प्रत्यक्ष—अनुमान-आगम-स्वशास्त्र-स्ववचन-विरोधिनो निरस्ता भवन्ति । यथा—'अनुष्णोऽग्निः' इति प्रत्यक्षविरोधी; 'घनमम्बरम्' इत्यनुमानविरोधी; 'ब्राह्मणेन सुरा पेया' इत्यागमविरोधी; वैशेषिकस्य 'सत्कार्यम्' इति ब्रुवतः स्वशास्त्रविरोधी; 'न शब्दोऽर्थप्रत्यायकः' इति स्ववचनविरोधी । ( प्रशस्त० २। पृ० २८ )

* यथाश्रुतलिङ्गविषयकत्वनिवेशे,—गन्धवतीतरेभ्यो भिद्यते गन्धादित्यादावव्याप्तिं प्रकारान्तरेण वारयन्तः केचिन्नैयायिकाः, इति ध्येयम् । ( ग० २। अव० पृ० ४७ )

† साधनीयश्च, वह्निमत्त्वादिना पर्वतादिः । ( गौ० वृ० १।३३ )

‡ अत्र [ क ] निगमनवारणाय च,—साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं वाच्यम् । तदर्थश्च—साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम्; तेन, प्रमेयवतः साध्यत्वे नासिद्धिः । उदासीनवारणाय च 'न्यायान्तर्गतत्वे सति, प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षक-प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताक-बोधाजनकत्वे सति, प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वम् । तथ प्रतिज्ञात्वावयवत्वादिकं परिभाषाविशेषविषयत्वरूपम्, तत्तद्व्यक्तित्वरूपं चेत्यपि वदन्ति । ( गौ० वृ० १।१।३३ ) [ ख ] उदाहरणाच्च न पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यज्ञानम्; उपनयाच्च न, पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानम्; इति तयोर्व्युदासः । ( दीधि० २। अवय० पृ० १६७ )

धर्मिणोऽपदेशविषयापादनार्थमुद्देशमात्रम् । यथा—'द्रव्यं वायुः' इति । ( प्रशस्त० २ । पृ० २८ )

**प्रतिज्ञान्तरम्**—( निग्रहस्थानम् ) [ क ] प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् । ( गौ० ५।२।३ ) प्रतिज्ञातार्थोऽनित्यः शब्द ऐन्द्रियकत्वाद्धटवदित्युक्ते योऽस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः 'सामान्यमैन्द्रियकं नित्यम्' इति । तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे । धर्मविकल्पादिति । दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामान्यमैन्द्रियकं सर्वगतम् । ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात् । तदर्थं निर्देश इति साध्यसिद्ध्यर्थम् । कथम् । यथा घटोऽसर्वगत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति । तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा । असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञान्तरम् । ( वात्स्या० ५।२।३ )

[ ख ] प्रतिज्ञातस्यार्थस्य[2] प्रतिषेधे[3] कृते तद्दूषणोद्दिधीर्षया, ( धर्मस्य धर्मान्तरस्य, विशिष्टः कल्पो विकल्पः, तस्मात् ) विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनम् । ( गौ० वृ० ५।४६ ) ( ता० र० परि० ३। श्लो० १३५ )

[ ग ] परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनम् । ( दि० १। पृ० २२ ) ( नील० पृ० ४५ ) यथा—क्षित्यादिकं गुणजन्यम् कार्यत्वादित्यत्रादृष्टजन्यत्वेन सिद्धसाधनोद्भावने 'सवि-

---

१ इदं च गुणेऽन्तर्भवति, इति ज्ञेयम् । ( दि० १। पृ० २२ )

२ प्रतिज्ञातार्थस्येत्युपलक्षणम् 'हेत्वतिरिक्तार्थस्य' इति तत्त्वम् । तेन, उदाहरणान्तरमुपनयान्तरं च प्रतिज्ञान्तरत्वेन संगृहीतं भवति । ( गौ० वृ० ५।४६ )

३ अत्र प्रतिषेध इत्यनेन, 'झटिति संवरणे विलम्बेनापि स्वयं दूषणं विभाव्य विशेषणे न दोषः' इत्युक्तम् । ( गौ० वृ० ५।४६ )

षयक' इति गुणविशेषणदानम्। ( नील० पृ० ४९ ) इदं च पक्षसाध्यविशेषणभेदात्प्रत्येकं द्विविधम्[1]। ( गौ० वृ० ५।४६ )

**प्रतिज्ञाविरोधः**[2]—( निग्रहस्थानम् ) [ क ] प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः। ( गौ० ५।२।४ ) गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा। रूपादितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः। सोऽयं प्रतिज्ञाहेत्वोर्विरोधः। कथम्—यदि गुणव्यतिरिक्तं द्रव्यं रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते। अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः। गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते। गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते, व्याहन्यते, न संभवतीति। ( वात्स्या० ५।२।४ ) [ ख ] कथायां स्ववचनार्थविरोधः[3]। यथा—पर्वतो वह्निमान् धूमात्, 'यो यो धूमवान् स स निरग्निः' इत्युदाहरणे, 'निरग्निश्चायम्' इत्युपनये च प्रतिज्ञाविरोधः। ( गौ० वृ० ५।४७ )

[ ग ] स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनम्। यथा—द्रव्यं गुणभिन्नं रूपादितः पृथक्त्वेनानुपलभ्यमानत्वादिति। ( दि० १। पृ० २२ ) ( नील० पृ० ४९ )

**प्रतिज्ञासंन्यासः**[5]—( निग्रहस्थानम् ) [ क ] पक्षप्रतिषेधे प्रतिज्ञातार्थ-

---

१ यथा—शब्दोऽनित्य इत्युक्ते ध्वनौ बाधेन परेण प्रत्युक्ते वर्णात्मकः शब्दः पक्ष इति प्रतिज्ञान्तरम्। एवम्—पर्वतो वह्निमान्सुरभिमलिनधूमवत्त्वादित्युक्ते, असमर्थविशेषणत्वेन च परेण प्रत्युक्ते कृष्णागुरुप्रभववह्निमानित्यत्र। एवम्—तादृशवह्नौ साध्ये 'यः सुरभिमलिनधूमवान्, स वह्निमान्' इत्युदाहरणे न्यूनत्वेन प्रत्युक्ते, स तादृशवह्निमानित्यत्र। एवमन्यदप्यूह्यम्। ( गौ० वृ० ५।४६ )

२ अयं च गुणेऽन्तर्भवति, इति विज्ञेयम्। ( दि० १। पृ० २२ )

३ अत्रोच्यते—" पदयोर्वाक्ययोर्वा य एकवक्तृकयोर्मिथः। व्याघातो निग्रहस्थानं स्यात्प्रतिज्ञादिरोधनः" इति। ( ता० र० परि० श्लो० १३६ )

४ अयं च गुणेऽन्तर्भवति, इति विज्ञेयम्।

५ पक्षस्य स्वाभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलापः, इत्यर्थः। ( गौ० वृ० ५।४८ )

स्थापनयनं प्रतिज्ञासंन्यासः । ( गौ० ५।२।५ ) अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात्—सामान्यमैन्द्रियकम्, न चानित्यम्; एवं शब्दोऽप्यैन्द्रियको न चानित्य इति । एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्—कः पुनराह 'अनित्यः शब्दः' इति । सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासंन्यास इति । ( वात्स्या० ५।२।५ )

[ ख ] स्वोक्तेऽर्थे परेण दूषिते तदपलापः । यथा—शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति—'क एवमाह—शब्दोऽनित्यः' इति । ( गौ० वृ० ५।४८ ) ( दि० १।२२ ) ( नील० पृ० ४५ ) ( ता० र० परि० ३। श्लो० १३७ )

**प्रतिज्ञाहानिः**—( निग्रहस्थानम् ) [ क ] प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः । ( गौ० ५।२।२ ) साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन्प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम्—ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते, अपर आह—दृष्टमैन्द्रियकत्वं सामान्ये नित्ये । कस्मान्न तथा शब्द इति प्रत्यवस्थिते, इदमाह—यद्यैन्द्रियकं सामान्यं नित्यम्, कामं घटो नित्योऽस्त्विति, स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति । ( वात्स्या० ५।२।२ )

[ ख ] स्वपक्षे परपक्षधर्माभ्यनुज्ञा । ( गौ० वृ० ५।४५ )

[ ग ] प्रतिज्ञातार्थविरुद्धाभ्युपगमः; प्रतिज्ञातार्थपरित्यागो वा । ( नील० पृ० ४५ )

---

१ इयमभावेऽन्तर्भवति, इति विशेषम् । ( दि० १। पृ० २२ )

२ तदर्थश्च—प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः । स्वः स्वीयो दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः, इति । ( गौ० वृ० ५।४५ )

३ स्वयं किंचिद्व्याभिहितपरित्यागः, *इति फलितार्थः । ( गौ० वृ० ५।४५ )

---

* अत्रोच्यते—"कथायां यत्र पक्षादि येन निर्दिष्टमादितः । तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते" इति । ( ता० र० परि० ३ । श्लो० १३४ )

[ घ ] विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागः[1] । ( दि० १। पृ० २२ ) यथा—शब्दोऽनित्यः प्रत्यक्षगुणत्वादित्यत्र 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञाबलात्परेण बाध उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन्वादी शब्दस्यानित्यत्वप्रतिज्ञां जहाति । ( नील० पृ० ४९ ) सेयं पक्ष-हेतु-दृष्टान्त-साध्य-तदन्य-हानिभेदात्पञ्चधा भवति । यथा—(१) शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युत्तरिते, अस्तु तर्हि घट एव पक्षः, इति । ( २ ) एवम्—तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते, अस्तु कृतकत्वादिति हेतुरिति । ( ३ ) एवम्—पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते, दृष्टान्तः साधनविकल इति प्रत्युक्ते, अस्तु तर्हि महानसवदिति । (४) एवम्—अत्रैव सिद्धसाधने च प्रत्युक्ते, अस्तु तर्हि इन्धनवानिति । ( ५ ) अन्यहानिस्तु विशेषणहान्यादिः । यथा—तत्रैव नीलधूमादित्युक्ते, असमर्थविशेषणत्वेन प्रत्युक्ते, अस्तु तर्हि 'धूमात्' इति हेतुः, इत्यादि । ( गौ० वृ० ५।४९ )

**प्रतितन्त्रम्**—स्वमतविरुद्धशास्त्रम् ।

**प्रतितन्त्रसिद्धान्तः**—( सिद्धान्तः ) [ क ] समानतन्त्र[3]सिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः । ( गौ० १।१।२९ ) यथा—नासत आत्मलाभः, न सत आत्महानम्, निरतिशयाश्चेतनाः, देहेन्द्रियमनस्सु विषयेषु तत्तत्कारणेषु च विशेषः, इति सांख्यानाम् । पुरुषकर्मनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते, उत्पन्नं विरुध्यते, इति योगानाम् । ( वात्स्या० १।१।२९ )

[ ख ] वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्तः । यथा—मीमांसकानां शब्दनित्यत्वम् । ( गौ० वृ० १।२९ ) यथा वा—

---

१ पक्षस्य पक्षत्वेन प्रतिपादनाभावरूपता, इति भावः । ( राम० १। पृ० २२ )

२ अयं च द्रव्यादावन्तर्भवति, इति ज्ञेयम् । ( दि० १। पृ० २२ )

३ अत्र, समानशब्द एकार्थः । तेन, एकतन्त्रसिद्ध इत्यर्थः; स्वतन्त्रसिद्धः, इति पर्यवसितोऽर्थः । ( गौ० वृ० १।२९ )

नैयायिकानां शब्दानित्यत्वम् । ( प्र० प्र० ) यथा वा—नैयायिकस्य मन इन्द्रियम्, तच्च समानतन्त्रे वैशेषिके सिद्धम् । ( त० भा० पृ० ४३ )

[ ग ] " स्वतन्त्र एव सिद्धोऽर्थः परतन्त्रनिवारितः । प्रतितन्त्रो यथा न्याये सर्वज्ञस्य प्रमाणता " इति । ( ता० र० श्लो० ६० )

**प्रतिदानम्**—द्रव्यान्तरग्रहणपूर्वकं दानम् । यथा—तिलानस्मै प्रतियच्छतीत्यादौ धात्वर्थः । ( श० प्र० श्लो० ६९। टी० )

**प्रतिदृष्टान्तसमः**—( जातिः ) [ क ] प्रतिदृष्टान्तेन प्रत्यवस्थानात्प्रतिदृष्टान्तसमः । ( गौ० ५।१।९ ) प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः । क्रियावानात्मा क्रियाहेतुगुणयोगाल्लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते—' क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियम् ' इति । कः पुनराकाशस्य क्रियाहेतुर्गुणः?[1]; वायुना संयोगः संस्कारापेक्षः, वायुवनस्पतिसंयोगवदिति । ( वात्स्या० ५।१।९ )

[ ख ] प्रतिदृष्टान्तमात्र[2]बलेन प्रत्यवस्थानम् । यथा—यदि घटदृष्टान्तबलेनानित्यः शब्दस्तदाऽऽकाशदृष्टान्तबलेन नित्य एव स्यात् । ' नित्यः किं न स्यात् ' इति बाधः प्रतिरोधो वाऽऽपादनीयः, हेतुरनङ्गम्; दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः । ( गौ० वृ० ५।९ )

[ ग ] दृष्टान्तान्तरेण साध्याभावसाधनम् । यथा—' आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत् ' इत्यत्र लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते, निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात्?; ' लोष्टदृष्टान्तेन क्रियावत्त्वम्, आकाशदृष्टान्तेन निष्क्रियत्वं न ' इत्यत्र नियामकाभावात्, इत्यादि । ( नील० पृ० ४४ )

[ घ ] अनङ्गत्वधिया हेतोः प्रतिदृष्टान्तमात्रतः । प्रत्यवस्थानमाचख्युः प्रतिदृष्टान्तलक्षणम् । ( ता० र० २। श्लो० ११४ )

---

१ अयं बाधप्रतिरोधान्यतरदेशनाभासः । ( गौ० वृ० ५।१।९ ) स च, असदुत्तरत्वेन गुणेऽन्तर्भवति । ( दि० १। पृ० २२ )

२ तेन ( मात्रपददानेन ) साधर्म्यसमव्युदासः । ( गौ० वृ० ५।१।९ )

**प्रतिनिधित्वम्**—तुल्यरूपतया मुख्यकार्यकारित्वार्थं निधीयमानत्वम् । यथा—वैदिककर्मणि पुरोहितस्य[1], औरसाभावे दत्तकादीनां[2] च प्रतिनिधित्वम्।

**प्रतिपक्षः**—१ विरोध्यनुमानम् । तच्च, [१] विरोधिव्याप्त्यादिमत्तया परामृश्यमानो हेतुः । [२] विरोधिपरामर्शो वा । (दीधि० २ । सत्प्रति० पृ० २०८) यथा—सत्प्रतिपक्ष इत्यत्र ह्रदे धूमेन वह्निसाधने 'वह्न्यभावव्याप्यवान् ह्रदः' इति परामृश्यमानो जलरूपो हेतुः, तादृशपरामर्शो वा प्रतिपक्षः । २ विप्रतिपत्त्यपरकोटिः । (गौ० वृ० १ । ४१।) यथा—"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" (गौ० १।१।४१) इत्यादौ । ३ विरुद्धपक्षः । यथा—परार्थानुमाने वादिना पर्वते वह्निसाधने कृते,—प्रतिवादिपक्षः 'पर्वतो न वह्निमान्' इति प्रतिपक्षः । (स्व०) ४ प्रतिवादी, इति व्यवहारज्ञा आहुः । ५ विरोधी । ६ शत्रुः, इति काव्यज्ञा आहुः ।

**प्रतिपक्षितत्वम्**—१ सत्प्रतिपक्षवदस्यार्थोऽनुसंधेयः । २ प्रतिपक्षवदस्यार्थोऽनुसंधेयः ।

**प्रतिपत्तिः**—१ बुद्धिवदस्यार्थोऽनुसंधेयः । २ [क] मीमांसकाश्च,—शेषस्य (प्रधानादिकर्मण्युपयुक्तादवशिष्टस्य) विहितस्थलविशेषे विनियोगः । यथा—"चात्वाले कृष्णविषाणां प्रास्यति" (तैत्ति० संहि० ६।१।३) इत्यादौ, इत्याहुः ।

[ख] धर्मज्ञास्तु,—फलशून्यकर्माङ्गविशेषः । यथा—श्राद्धादौ दत्तद्रव्यस्य कुशमयब्राह्मणपक्षे जलादौ निक्षेपः प्रतिपत्तिः । यथा वा—पूजितप्रतिमादेश्च जलादौ निक्षेपः प्रतिपत्तिः, इत्याहुः । ३ प्रवृत्तिः । ४ प्रागल्भ्यम् । ५ गौरवम् । ६ प्राप्तिः । ७ पदप्राप्तिश्च, इति काव्यज्ञा आहुः । (वाच०)

---

१ अत्रोच्यते—"पुत्रं च विनयोपेतं भगिनीं भ्रातरं तथा । एषामभाव एवान्यं* ब्राह्मणं विनियोजयेत्" इति । (स्कन्दपु०)

२ दत्तकक्रीतपुत्रादीनां प्रतिनिधित्वं दत्तकमीमांसादौ व्यवस्थापितम्; तत् तत्रैव द्रष्टव्यम् ।

---

* तद्यथा—वैदिककर्माङ्गद्रव्यादीनां मुख्यानामलाभे तुल्यरूपतयाऽन्यो विधीयते, इति । तदेतत् (कात्यायनश्रौत० १। कण्डिका० ४) तत्र व्यवस्थापितम्, तत् तत्रैव द्रष्टव्यम् ।

**प्रतिपादनम्**—१ प्रतिपत्त्यनुकूलशब्दप्रयोगः । यथा—श्रुत्यर्थं प्रतिपादयतीत्यादौ । २ दानम्, इति काव्यज्ञा आहुः ।

**प्रतिप्रसवः**—१ [ क ] प्रतिषिद्धैकदेशस्य पुनर्विधानम् । यथा—अग्नीषोमीयपश्वालम्भनविधानम्[1] । यथा वा—निषिद्धस्य सर्वपञ्चनखमांसभक्षणस्य[2] एकदेशस्य पञ्चपञ्चनखमांसभक्षणस्य विधानम्[3] । ( मनु० ५।१७–१८ )

[ ख ] निषिद्धस्य पुनः प्राप्तिसंभावना । यथा—स्मार्तानां मते, एकादश्यां निषिद्धस्य भोजनस्य एकादशीश्राद्धादौ प्राप्तिः संभाव्यते, इति । २ प्रतिजन्म, इति काव्यज्ञा आहुः ।

**प्रतिबन्दिः**—[ क ] प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादनम् । ( ख० ) यथा—'अनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्ध्यभावमात्ररूपपक्षता चानुमितौ कारणं चेत्, तदा स्वसमानाधिकरणानुमित्यव्यवहितपूर्वक्षणवर्तित्वविशिष्टज्ञानं कारणं स्यात्' इति प्रतिबन्दिः । ( दीधि० पक्षता० पृ० १२७–१२८ )

[ ख ] समानं विरोध्युत्तरम् । ( राम० )

**प्रतिबन्धः**—१ प्रतिरोधः । यथा—'मणिर्दाहं प्रति प्रतिबन्धकः' इत्यादौ । २ व्याप्तिः । ( सांख्य० भा० १।१०० ) यथा—"प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्" ( सांख्यसू० अ० १। सू० १०० ) इत्यादौ ।

---

१ अत्र रागतः प्राप्तस्य "मा हिंस्यात्सर्वा भूतानि" इति श्रुतिवाक्येन तु निषिद्धस्य हिंसासामान्यस्यैकदेश अग्नीषोमीयपश्वालम्भनम् "अग्नीषोमीयपशुमालभेत" इति श्रुतिवाक्येन विधीयते, इति ।

२ तदुक्तं मनुना—"न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् । भक्ष्येष्वपि समुद्दिष्टान् सर्वान् पञ्चनखांस्तथा" इति । ( मनु० अ० ५ । श्लो० १७ )

३ तदुक्तम्—"श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा । भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः" इति । ( मनु० अ० ५ । श्लो० १८ ) ( आपस्तम्ब–धर्मसू० १ । ५ । १७ । ३७ )

**प्रतिबन्धकत्वम्**—[१] कारणीभूताभावप्रतियोगित्वम्[3] । (कु० १) (दि०) (सि० च० १ । तेजोनि० पृ० ८) यथा—'ह्रदो वह्निमान्' इति बुद्धौ 'ह्रदो न वह्निमान्' इति निश्चयस्य[4] प्रतिबन्धकत्वम् । यथा वा—दाहं प्रति मणेः[5] प्रतिबन्धकत्वम् । [२] कार्यानुकूलकिंचिद्धर्मविघटकत्वम् । यथा—केषांचिन्मते दाहानुकूल—( शक्ति )विघटकत्वं मण्यादेः । ( न्या० दी० पृ० १४ ) निश्चयस्य प्रतिबन्धकत्वं पञ्चविधम् । तथा हि—तद्वत्ता-बुद्धिं प्रति,—तदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वम्; तदभावव्याप्यवत्ता-निश्चयत्वेन; तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन; तदसमा-नाधिकरणधर्मवत्तानिश्चयत्वेन; तद्व्यापकतावच्छेदकतया गृहीतधर्मावच्छि-न्नाभाववत्तानिश्चयत्वेन च, इति । तत्राद्यं यथा—'ह्रदो वह्निमान्' इति बुद्धिं प्रति—'ह्रदो न वह्निमान्' इति निश्चयस्य प्रतिबन्धकत्वम् । द्विती-यम्—'ह्रदो वह्न्यभावव्याप्यवान्' इति निश्चयस्य । तृतीयम्—'जलवान्वह्न्य-

---

१ अत्र—मीमांसकमतेन कार्यसहभावेन प्रतिबन्धकत्वं तु, कार्यसहभावेन प्रतिबन्धकाभाव-रूपकारणदिशा व्यवस्थापनीयम् ।

२ अत्र कारणपदं क्वचित्प्रयोजकपरमपि । ( मू० म० १ )

३ तदर्थश्च—स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावत्वावच्छिन्नकारणताया अवच्छेदको यो धर्मः, तद्वत्त्वम्,* इति । ( कु० १ । टी० )

४ तथा हि—'ह्रदो वह्निमान्' इत्यनुमितौ कारणीभूतो योऽभावः ( 'ह्रदो वह्न्यभाववान्' इति निश्चयाभावः ),† तस्य प्रतियोगी ('ह्रदो वह्न्यभाववान्' इति निश्चयः ), इति तस्य तथात्वं संपद्यते ।

५ तथा हि—मणिसमवधानदशायां वह्नेर्दाहानुत्पत्त्या, दाहं प्रति मण्यभावस्य कारणत्वेन त-त्प्रतियोगित्वं संपद्यते । ( स्व० ) तच्च ( कारणत्वम् ) मण्यभावत्वेन; न तु प्रतिबन्ध-काभावत्वेन, इति नान्योन्याश्रयः । एवम्—प्रतिबन्धकाभावकूट एव कारणम्; तेन, मणिसद्भावे यत्किंचिन्मण्याद्यभावेऽपि न कार्यम्, इति । ( चि० २ । )

६ एवम्—तद्वद्भेदवत्तानिश्चयत्वादिनाऽपि प्रतिबन्धकत्वमवसेयम् ।

---

* तद्धर्मावच्छिन्नकार्यतानिरूपिताभावत्वावच्छिन्नकारणतानिरूपितस्वावच्छिन्नप्रतियोगिताक-त्वसंबन्धावच्छिन्नावच्छेदकताश्रयधर्मवत्त्वम्, इति निष्कर्षः ।

† अयं भावः—'ह्रदो वह्न्यभाववान्' इति निश्चयदशायां 'ह्रदो वह्निमान्' इत्यनुमित्यनुद-यात् तादृशनिश्चयाभावस्य तादृशानुमितिं प्रति कारणत्वमङ्गीकर्तव्यम्, इति ।

भाववान्' इति निश्चयविशिष्टस्य 'जलवान्ह्रदः' इति निश्चयस्य । चतुर्थम्—'वह्न्यसमानाधिकरणजलवान् ह्रदः' इति निश्चयस्य । पञ्चमम्—'ह्रदो धूमवान्' इति बुद्धिं प्रति,—धूमव्यापकतावच्छेदकतया गृहीतं यत् वह्नित्वम्, 'तादृशवह्नित्वावच्छिन्नाभाववान्ह्रदः' इति निश्चयस्य, इति । कार्यमात्रं प्रति तु कामिनीजिज्ञासायाः स्वातन्त्र्येण (मणिमन्त्रादिन्यायेन) प्रतिबन्धकत्वम् । क्वचित्,—कार्यविशेषं प्रति स्वातन्त्र्येण कस्यचित् प्रतिबन्धकत्वम् । यथा—दाहं प्रति मणेः प्रतिबन्धकत्वम्, इति (स्व०) प्रत्यक्षं प्रति आनुमानिकनिश्चयो न प्रतिबन्धकः; किंतु—शाब्दबोधं प्रत्यानुमानिकनिश्चयः प्रतिबन्धकः, इति सामान्यतो निर्णयः । (दीधि०)

**प्रतिबन्धिः** (धी)—[क]—प्रतिबन्दिवदस्यार्थोऽनुसंधेयः। (गौ० वृ० २।१०१) (सर्व० अक्ष० पृ० ११३)

[ख] प्रतिवादिमतेऽनिष्टान्तरप्रसञ्जनम् । अत्राधिकं तु,—'प्रतिबन्दि' शब्देऽवलोकनीयम् । (स्व०)

**प्रतिबिम्बनम्**—१ अनुकरणम् । यथा—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" (सा० द० परि० १० । श्लो० ६९८) इत्यादौ । २ बिम्बानुरूपप्रतिच्छायाभवनम् । यथा—मायावादिवेदान्तिमते "जीवेश्वरयोर्बिम्बप्रतिबिम्बभावः" इत्यादौ । अत्राधिकं तु सिद्धान्तलेशे द्रष्टव्यम् ।

**प्रतिभा**—(बुद्धिः)१ [क] स्फूर्त्याख्यो बुद्धिविशेषः । (दि० १ । मङ्ग० पृ० ८) यथा—"समाप्तिस्तु बुद्धिप्रतिभादिकारणकलापात्" इत्यादौ । (मु० १ । मङ्गल०)

[ख] प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता । (रुद्र०) २ दीप्तिः, इति केचिद्वदन्ति ।

---

१ अत्रायमर्थः—समानविषये प्रत्यक्ष–अनुमिति–सामग्र्योः एककालावच्छेदेन सत्त्वे, तयोर्मध्ये प्रत्यक्षसामग्री प्रबला, इत्येतदनुभवसिद्धम् । तथा च—तादृशप्रत्यक्षसामग्री तत्रत्यानुमितिं प्रतिबध्नाति । भिन्नविषये तु अनुमितिसामग्र्येव प्रबला । एवं च—'प्रबलो दुर्बलं प्रतिबध्नाति' इत्यनुभवादत्रसविषये प्रतिबध्यप्रतिबन्धकभावप्रयोजकः प्रबलदुर्बलभाव एव, इति । अधिकं तु 'सामग्री'शब्दव्याख्याने संपादयिष्यते, इति तत् तत्रावलोकनीयम् ।

**प्रतियोगः**—१ विरोधः । २ विरुद्धसंबन्धः ।

**प्रतियोगिता**—१ [ १ ] विरोधि[1]त्वम् ( निषेध्यत्वम् ) । ( न्या० सि० दी० पृ० ९६ ) तच्च स्वरूपसंबन्ध[2]विशेषः । ( दीधि० २ ) ( त० प्र० ) यथा—घटो ना[3]स्तीत्यादौ घटे[4]ऽभावप्रतियोगिताऽस्ति । [ २ ] केचित्तु,—प्रतिकूलसंबन्धवत्त्वम् प्रतियोगित्वम् । यथा—घटाभावस्य संबन्धः ( स्वरूपसंबन्धः ), तस्य प्रतिकूलः ( संयोगः ), तद्वत्त्वात्, घटो घटाभावस्य प्रतियोगी भवति, इत्याहुः । [ ३ ] अखण्डो धर्मविशेषः, इति संप्रदायः । ( मू० म० १ ) [ ४ ] अन्योन्याभावविरहात्म[5]त्वम्, इत्यप्यन्ये आहुः । ( वै० उ० ९ । १ । ८ ) ( न्या० सि० दी० पृ० ९६ ) २ वित्तिवेद्यत्वम् । ( चि० ३ ) यथा—चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम् । ३ अन्वयित्वम् ( अन्वयप्रतियो-

---

१ घटाभावस्य घटो विरोधी भवति, इति तस्य तथात्वं संपद्यते ।

२ अत्रेदमवधेयम्—घटाभावादिबुद्धेर्विशिष्टवैशिष्ट्यावगाहिबुद्धितया ‘अभावबुद्धिर्विशेष्यविशेषणसंसर्गावगाहिनी, विशिष्टबुद्धित्वात्* ‘संयोगेन घटवद्भूतलम्’ इत्यादिबुद्धिवत्’ इत्यनुमानेन, अभावे घटादिवैशिष्ट्यबुद्धौ संबन्धतया अतिरिक्तप्रतियोगित्वसिद्धिः, इति नव्यनैयायिका आहुः । श्रीहर्षखण्डनादौ ( दीधितिकारमते च ) तु,—तस्य स्वरूपसंबन्धविशेषरूपत्वेन प्रतियोगिस्वरूपत्वमनुयोगिस्वरूपत्वं वा स्वीकार्यम्; तेनैवोपपत्तौ नातिरिक्तपदार्थ-( प्रतियोगित्व- )कल्पना, इति ।

३ अत्रोपयोगित्वेनाधिकमुच्यते—‘प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमता’ इति न्यायः । तदर्थश्च—यादृशसमभिव्याहारस्थले येन संबन्धेन यद्धर्मिणि येन रूपेण यद्वत्त्वं नञसत्त्वे प्रतीयते, तादृशस्थले नञा तद्धर्मिणि तादृशसंबन्धावच्छिन्न–तादृशधर्मावच्छिन्न–प्रतियोगिताकतदभावः प्रत्येतव्यः । ( ग० व्यु० का० १ ) यथा—पीतघटे ‘घटो न नीलः’ इति वाक्यं प्रयुज्यते; तत्र नञ्विनिर्मोकदशायां ‘घटो नीलः’ इत्यत्र—येन संबन्धेन ( तादात्म्यसंबन्धेन ) नीलपदार्थो घटे प्रतीयते, तेनैव संबन्धेन नीलप्रतियोगिकाभावः ‘घटो न नीलः’ इति वाक्यात्प्रत्येतव्यः, इति । ( कृष्ण० ) एवम्—अत्यन्ताभावस्थलेपि ( ‘भूतले घटो नास्ति’ इत्यादावपि ) पूर्वोक्तो न्यायः संयोजनीयः ।

४ अत्र—अभावनिरूपिता घटनिष्ठा प्रतियोगितास्ति, इति तदर्थो ज्ञेयः ।

५ अत्राचार्या आहुः—“अभावविरहात्मत्वं* वस्तुनः प्रतियोगिता” इति । ( कु० स्त० ३ । श्लो० १ ) एतन्मते–इदं च वस्तुनिष्ठमभावनिरूपितं प्रतियोगित्वम्, इति विज्ञेयम् ।

---

* अत्रायं नियमः—‘अभावप्रत्ययो विशिष्टमर्यादां नातिशेते’ इति ।

† अत्र च,—यस्य (पदार्थस्य) अभावः, तत्त्वं प्रतियोगित्वम्, इति लौकिकजना वदन्ति ।

गित्वम् ); तच्च स्वरूपसंबन्धविशेषः । यथा—चैत्रस्य पुत्र इत्यादौ षष्ठ्यन्तार्थस्य प्रतियोगित्वम् । यथा वा—संयोगेन घटवद्भूतलमित्यादौ[1] घटे भूतलानुयोगिकसंयोगसंबन्धप्रतियोगिता । ( स्व० ) ४ निरूपकत्वम् । यथा—प्रकारताप्रतियोगित्वमनुमितौ । ( ग० सामा० 'अत्र वदन्ति' इति कल्पे ) यथा वा—"विलक्षणविषयताप्रतियोगिकत्वं संशयत्वम्" इत्यादौ । ( ग० सत्प्र० अर्वाचीन० पृ० १४ ) ५ स्वाश्रयसंयुक्तत्वम् । ( स्व० ) यथा—"देवदत्तो जीवनमरणान्यतर[2]प्रतियोगी प्राणित्वान्मद्वदित्यत्र जीवनप्रतियोगित्वम्" ( दीधि० बाध० २ । पृ० २३) ( चि० २ । पृ० ६८ ) इत्यादौ—आत्मनो, जीवनस्य मरणस्य वा प्रतियोगित्वम् । ( स्व० )

**प्रतियोगितावच्छेदकः**—[ १ ] येन रूपेण ( धर्मेण ) यस्याभावादौ प्रतियोगिता बोध्यते स धर्मः[3] । यथा—घटाभावे घटस्य घटत्वरूपेण प्रतियोगिता बोध्यते; अतस्तत्र घटत्वं प्रतियोगितावच्छेदकम् । [ २ ] येन संबन्धेन प्रतियोगिताया अभावांशे भानम्, तादृशः संबन्धः । यथा—'संयोगेन घटो नास्ति' इत्यादौ—संयोगेन घटस्याभावांशे प्रतियोगिताभानम्, इति तत्र संयोगसंबन्धः प्रतियोगितावच्छेदकसंबन्धः । एवम्—साध्यतावच्छेदकसंबन्धः; पक्षतावच्छेदकसंबन्धः; आधेयतावच्छेदकसंबन्धश्च, इत्यादिकमूह्यम् । अधिकं चावच्छेदकशब्दे दृश्यम् ।

---

१ अत्र—विशिष्टबुद्धौ प्रकारतया भासमानस्य ( घटस्य ) संसर्गप्रतियोगित्वम्, इति; विशेष्यतया भासमानस्य तु ( भूतलस्य ) अनुयोगित्वम्, इति च ज्ञेयम् ।

२ अत्र—आत्मशरीरविभागस्य, चरमप्राणशरीरसंयोगध्वंसस्य, वा मरणरूपत्वे,—स्वं विभागः, ध्वंसो वा, तदाश्रयः शरीरम्; तत्संयुक्तत्वमात्मनः, इति लक्षणसंगतिः । जीवनप्रतियोगित्वं तु,—सदेहात्ममनःसंयोगस्य जीवनरूपत्वे स्वीकर्तव्ये तादृशसंयोगानुयोगित्वमेवात्मनः प्रतियोगित्वम्, इति विज्ञेयम् ।

३ स च क्वचिदेकः, क्वचिदनेकश्च । तत्र वह्निर्नास्तीत्यादौ—वह्नित्वमेकम् । महानसीयवह्निर्नास्तीत्यादौ—महानसीयत्वं वह्नित्वं चेत्युभयम्;। घटपटोभयं नास्तीत्यादौ तु—घटत्वम्, पटत्वम्, उभयत्वं चेति त्रयम्, इत्यादिकमनेकम् ।

**प्रतिरोधः**—१ सत्प्रतिपक्षदोषः । यथा—"पक्षसाध्यसाधनाप्रसिद्धि-स्वरूपासिद्धि-बाध-प्रतिरोधानां निरासः" ( दीधि० ) इत्यादौ । २ प्रतिबन्धः; कार्यविशेषानुत्पादो वा । यथा—"साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम्" ( चि० २ । सत्प्र० पृ० ९४ ) इत्यादौ । ३ तिरस्कारः । ४ हठचौर्यम्, इति व्यवहारज्ञा आहुः । (वाच०)

**प्रतिवादः**—वादिप्रयुक्तन्यायवाक्यविरुद्धन्यायवाक्यप्रयोगः । यथा—'अनेन चौर्यं कृतम्, लोप्त्रग्रहणकारणात्' इत्यादिवाक्ये वादिना प्रयुक्ते, 'तन्न कृतम्, तद्विपरीतकारणात्' इति प्रतिवादिप्रयोगः प्रतिवादः ।

**प्रतिवादी**—[ क ] वादिप्रयुक्तन्यायविरुद्धन्यायवाक्यप्रयोगकर्ता । यथा—पर्वते वह्निसिद्धये वादिना 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादिन्यायवाक्ये प्रयुक्ते, प्रतिवादिना 'पर्वतो न वह्निमान्, पाषाणमयत्वात्' इत्यादि विरुद्धवाक्यं प्रयुज्यते, इति । ( ख० )

[ ख ] अर्थिप्रतिपक्षः, प्रत्यर्थी च, इति व्यवहारशास्त्रज्ञा आहुः । ( मिता० अ० २ । श्लो० ६ )

**प्रतिविधानम्**—१ 'कृषि'शब्दे दृश्यम् । २ प्रतीकारः । ३ प्रकृतस्योपपादनाद्यर्थमुपायावलम्बनम् । ( वाच० )

**प्रतिश्रवणम्**—१ देयत्वेनाभ्युपगमः । यथा—गुरवे गां प्रतिशृणोति, आशृणोतीत्यादौ धात्वर्थः[1] । ( श० प्र० श्लो० ६९ । टी० ) २ प्रतिशब्दः, इति काव्यज्ञा आहुः ।

**प्रतिषेधः**—१ [ क ] प्रसज्यप्रतिषेधवदस्यार्थोऽनुसंधेयः[2] । ( म० प्र० ४ । पृ० ४८ )

[ ख ] निषेधः ।

---

१ अत्र,—धात्वर्थे गोर्विशेष्यत्वेन, तदेकदेशे च दाने गुरोरुद्देश्यत्वेन, अन्वयः । तेन,—'गुरूद्देश्यकदानकर्मत्वेन गामभ्युपगच्छति' इत्येवं तत्र बोधः । ( श० प्र० श्लो० ६९ । टी० )

२ तत्रोक्तमभियुक्तैः—"प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ् । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" इति । ( म० प्र० ४ । पृ० ४८ )

[ ग ] मीमांसकास्तु—'मा कुरु' इति निवारणम् । यथा—"प्राधान्यं हि विधेर्यत्र प्रतिषेधेऽप्रधानता" ( मीमां० का० ) इत्यादौ, इत्याहुः । २ दूषणाभिधानम् । ( स्व० ) ३ अर्थालंकारविशेषः, इत्यालंकारिका आहुः।

**प्रतिसंधानम्**—१ ज्ञानम् । अनुसंधानमप्येवमेव व्याख्येयम् । २ अन्वेषणम् । ३ अनुचिन्तनम् । ४ नष्टद्रव्यस्योपलब्धिव्यापारः । (वाच०)

**प्रतीकः**—१ अवयवः ( भागः ) । यथा—'प्रत्यक्षोपजीवकत्वात्' ( चि० २ । पृ० १ ) इति ग्रन्थस्य 'प्रत्यक्षेविति' ( दीधि० २ । पृ० १ ) इति प्रतीको दीधितिकारेण गृहीतः । २ प्रतिरूपम् । ३ विलोमः ।

**प्रतीची**—( दिक् ) [ क ] यदपेक्षया सूर्यास्ताचलसंनिहिता या दिक्, सा तदपेक्षया प्रतीची । ( वै० उ० २ । २ । १० । पृ० ११९ )

[ ख ] यदा यत्पुरुषस्योदयगिरिव्यवहिता या दिक्, सा तत्पुरुषस्य प्रतीची । ( मु० १ । पृ० ९३ )

[ ग ] अस्ताचलसंनिहितदेशावच्छिन्ना दिक् । ( वाक्य० १ । पृ० ९ )

---

१ अत्रायं नियमः—'यत्र समासघटकस्य,* अच्सहितस्य † प्रतीकधारणम्, तत्र श्रूयमाणाच्संवलितस्यैव प्रतीकधारणम्' इति । तेन, पूर्वोक्तस्थले 'प्रत्यक्षेति' इत्युपेक्ष्य 'प्रत्यक्षेविति' इति प्रतीकधारणं दीधितिकृतां संगच्छते । ( ग० पक्ष० पृ० १ )

२ संनिधानं तु संयुक्तसंयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः । ( वै० उ० २ । २ । १० । पृ० ११५ )

३ पश्चिमदिग्वर्तिनगादिना सह्यादित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताद्वा प्रतीचीव्यवहारः, इति सूत्रे ( वै० २ । २ । १५ ) स्पष्टम् ।

---

* तेन, "नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः" ( चि० २ । पृ० २ ) इत्यत्र 'नन्वेति' इत्युपेक्ष्य 'नन्विति' ( दीधि० २ । पृ० ११ ) इति प्रतीकधारणं दीधितिकृतां न विरुध्यते; तत्र ( नन्वनुमितीत्यत्र ) 'ननु' इत्यस्य समासघटकत्वाभावात् । ( न्या० र० पक्ष० पृ० ३१५ )

† तेन, "साध्यवदन्यावृत्तित्वम्" ( चि० २ । पृ० २ ) इत्यस्य 'साध्यवदेति' इत्युपेक्ष्य 'साध्यवदिति' ( दीधि० २ । पृ० १२ ) इति प्रतीकधारणं दीधितिकृतां न विरुध्यते; तत्र ( साध्यवदित्यादौ ) हलन्तस्यैव धारणात्, इति । ( न्या० र० पक्ष० पृ० ३१५ )

( न्या० बो० १ । पृ० ३ ) यथा—काशीतः प्रतीच्यां प्रयागः । ( दि० १ । २ । पृ० ९४ ) यथा वा—झळकीग्रामतः प्रतीच्यां रत्नागिरिपुरम्, इति । ( स्व० )

**प्रतीतिः**—१ [ १ ] बुद्धिवदस्यार्थोऽनुसंधेयः । ( स्व० ) [ २ ] ख्यातिः । २ आदरः । ३ हर्षः । ( वाच० )

**प्रत्यक्षम्**—( अनुभवः ) [ क ] इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानम्, ( अव्यपदेश्यमव्यभिचारि व्यवसायात्मकम् ) प्रत्यक्षम् । ( गौ० १ । १ । ४ ) ( त० सं० ) ( मु० १ । ३ । पृ० १०८ ) इन्द्रियस्यार्थेन संनिकर्षादुत्पद्यते यत् ज्ञानं, तत् प्रत्यक्षम् । न तर्हीदानीमिदं भवति । आत्मा

---

१ अत्र,—'काशीनिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्यापकसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयागः' इति शाब्दबोधः । ( दि० १ । २ । पृ० ९४ )

२ अत्र व्युत्पत्तिः—'अक्षमक्षं प्रतीत्योत्पद्यते, इति* प्रत्यक्षम्' इति । अक्षाणीन्द्रियाणि घ्राण–रसन–चक्षुस्त्वक्श्रोत्रमनांसि षट् । ( प्रशस्त० गु० पृ० २५ )
अत्र प्रत्यक्षत्वं च ज्ञानत्वव्याप्यजातिविशेषः ।

३ इन्द्रियत्वावच्छिन्नकारणतानिरूपितकार्यताशालिज्ञानत्वम्, इत्यर्थः, इति प्राञ्च आहुः । ( म० प्र० १ । पृ० ८ )
इदं च जन्यप्रत्यक्षस्यैव लक्षणम्, इति बोध्यम् । तदुत्पत्तिप्रकारस्त्वित्थम्—आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षं ज्ञानमुत्पद्यते, इति । ( वात्स्या० १ । १ । ४ ) ( त० भा० पृ० ६ ) ( त० कौ० )
अत्र ( 'इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानम्' इति प्रत्यक्षलक्षणे ) आत्ममनःसंयोगजन्यसुखादिवारणाय 'ज्ञानम्' इति पदं दत्तम् । ( गौ० वृ० १ । १ । ४ )

४ तदर्थस्तु—अव्यपदेश्यम्,–[ १ ] अशाब्दं ज्ञानम् । ( वात्स्या० १ । १ । ४ ) [ २ ] निर्विकल्पकज्ञानम् । ( गौ० वृ० १ । १ । ४ ) ( दि० १ । ३ ) । अव्यभिचारि,—भ्रमभिन्नं ज्ञानम् । ( वात्स्या० ) ( गौ० वृ० ) । व्यवसायात्मकम्,—सविकल्पकम्, इति । ( वात्स्या० १ । १ । ४ ) ( गौ० वृ० १ । १ । ४ )

---

* प्रतिगतमाश्रितमक्षम्; "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" ( वार्तिकम् ) इत्यनेन समासः । प्राप्तापन्नालंगतिसमासेषु परवल्लिङ्गप्रतिषेधात् । अभिधेयवल्लिङ्गे सति सर्वलिङ्गः प्रत्यक्षशब्दः सिद्धः । ( न्या० बि० १ । पृ० ७ )

मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति । ( वात्स्या० १ । १ । ४ )
[ ख ] ज्ञानाकरणकं ज्ञानम् । ( चि० १ ) ( न्या० बो० १ । पृ० ११ ) ( मु० १ । ३ । पृ० १०९ )
[ ग ] साक्षात्कारत्वव्यञ्जकविषयताविशेषवज्ज्ञानम् । ( ग० सत्प्र० )
[ घ ] प्रतिविषयाध्यासः प्रत्यक्षम्, इति सांख्याः आहुः ।
[ ङ ] साक्षाद्धीः, इति प्राभाकरा आहुः । ( चि० १ )
[ च ] यत्किंचिदर्थस्य साक्षात्कारिज्ञानमिति बौद्धा आहुः । ( न्या० वि० १ । पृ० ७ )
[ छ ] वैशिष्ट्यानवगाहिज्ञानं प्रत्यक्षम्, इति नास्तिका आहुः ।

---

१ अत्रेदं बोध्यम्—[ १ ] 'इन्द्रियाणां वस्तु प्राप्य प्रकाशकारित्वम्' इति नियमोऽत्र द्रष्टव्यः ( म० प्र० ) ( त० भा० पृ० ६ ) [ २ ] [ क ] 'प्रत्यक्षं प्रति विषयस्य तादात्म्येन हेतुत्वम्' इति नैयायिकानुभवसिद्धः कार्यकारणभावः । [ ख ] भट्टास्तु—विषयस्य कार्यकालवृत्तित्वेन हेतुत्वम् ( न तु नैयायिकमत इव कार्यपूर्ववृत्तित्वेन हेतुत्वम् ) इत्यङ्गीचक्रुः । ( त० प्र० ४ । पृ० १२४ )

२ ज्ञानाकरणकत्वाव्यभिचारिजातिशून्यज्ञानत्वम्, इति विवक्षितोऽर्थः । ( दि० १ । ३ । पृ० १०३ )
इदं च जीवेश्वरोभयप्रत्यक्षसाधारणं लक्षणम्, इति विज्ञेयम् । ( न्या० बो० १ । पृ० ११ ) तथा च—ईश्वरप्रत्यक्षस्य नित्यत्वेन न किंचिदपि करणमस्ति, इति; जीवप्रत्यक्षस्य चेन्द्रियमेव करणम्, न किंचिदपि ज्ञानं करणम्; इत्युभयोः प्रत्यक्षयोर्ज्ञानाकरणकत्वमक्षुण्णमेव, इति लक्षणसमन्वयः ।

३ अत्र साक्षात्कारत्वं च [ क ] 'साक्षात्करोमि' इत्यनुव्यवसायसाक्षिको जातिविशेषः । [ ख ] जन्यधीजन्यमात्रवृत्तिर्मानसावृत्तिर्या जातिः, तच्छून्यज्ञानत्वम् * ( न्या० म० १ । २ । पृ० ३ ) ( म० प्र० पृ० ९ )

४ साक्षात्त्वं च 'साक्षात्करोमि' इत्यनुव्यवसायगम्यो जातिविशेषः । ( चि० १ ) ( न्या० म० १ । पृ० २ )

---

* भवति हि,—जन्यं ज्ञानम्—( व्याप्तिज्ञानम्, अतिदेशवाक्यार्थज्ञानम्, पदज्ञानादि ), तज्जन्यम्—( अनुमिति–उपमिति–शाब्दबोधादि ), तन्मात्रवृत्तिर्मानसावृत्तिश्च या जातिः—( अनुमितित्व–उपमितित्व–शाब्दबोधत्वादिः ), तच्छून्यत्वं साक्षात्कारे वर्तते, इति लक्षणसङ्गतिः । ( त० प्र० १ । पृ० १५ )
अत्र पदप्रयोजनादिकं च तर्कप्रकाशे सविस्तरं कथितम्; तच्च विस्तरभयान्नात्र संगृहीतम् ।

[ ज ] अन्तःकरणवृत्त्यवच्छिन्नचैतन्येन विषयस्फुरणम् प्रत्यक्षम्, इति मायावादिनोऽमन्यन्त। न्यायमतसिद्धं प्रत्यक्षं द्विविधम्। नित्यम्, अनित्यं च। तत्र नित्यं भगवतः। अनित्यं जीवस्य। अनित्यं प्रत्यक्षं द्विविधम्। लौकिकम्, अलौकिकं च। तत्र लौकिकंप्रत्यक्षं द्विविधम्। सविकल्पकम्, निर्विकल्पकं च। प्रकारान्तरेण लौकिकं प्रत्यक्षं षड्विधम्। घ्राणजम्, रासनम्, चाक्षुषम्, स्पार्शनम्, श्रौत्रम्, मानसम्, चेति। ( न्या० म० १। पृ० ३ ) ( भा० प० श्लो० ५३ ) ( त० सं० ) ( त० भा० पृ० ६ ) ( त० कौ० पृ० ८ ) अलौकिकं तु त्रिविधम्। सामान्यलक्षणम्, ज्ञानलक्षणम्, योगजं च। त्रिविधमपीदं प्रत्यक्षं सविकल्पकमेव, इति। ( त० व० ) ( मु० १। परि० ३ )

**प्रत्यक्षम्**—१ ( प्रमाणम् ) [ १ ] [ क ] साक्षात्काररूपप्रमाकरणम्। ( न्या० म० १। पृ० २ )

[ ख ] साक्षात्कारिप्रमाकरणम्। ( त० भा० पृ० ५ )

[ ग ] प्रत्यक्षप्रमाऽयोगव्यवच्छिन्नम्। ( प्रत्यक्षप्रमाणम् )।

[ घ ] प्रत्यक्षज्ञानकरणम्। ( त० सं० ) तच्च ( करणम् ) त्रिविधम्।

---

१ अत्रोच्यते—"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्" इति। (पञ्चद० ७।९१ )

२ मायावादिमते प्रत्यक्षलक्षणं च तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वम् तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्। ( वेदा० परि० प० १। पृ० १२ )

३ अत्रोच्यते—"अपरोक्षप्रमाभ्यासं प्रत्यक्षं द्विविधं मतम्। सविकल्पकमित्येकमपरं निर्विकल्पकम्" इति। ( ता० र० श्लोक० ११—१२ )

४ अत्रार्थे,—[ क ] 'प्रतिगतमक्षं प्रत्यक्षम्' इति व्युत्पत्तिः। (गौ० वृ० १। ४) (न्या० वा० १ पृ० ३०) [ ख ] अक्षस्याक्षस्य प्रतिविषयं वृत्तिः। वृत्तिस्तु संनिकर्षो ज्ञानं वा। यदा संनिकर्षस्तदा ज्ञानं प्रमितिः। यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम्। ( वात्स्या० १। १। ३ )

५ तच्च, ईश्वर-घ्राण-रसन-चक्षुः-स्पर्शन-श्रोत्र-मनो-लक्षणम्।

६ इदं च प्रमाणतदाभाससाधारणं लक्षणमपि स्यात्, इति भाति।

क्वचित्—इन्द्रियम्, क्वचित्—इन्द्रियार्थसंनिकर्षः, क्वचित्—ज्ञानं च । तत्राद्यम्[2] निर्विकल्पकज्ञाने करणम् । द्वितीयम्[3] सविकल्पकज्ञाने निर्विकल्पकज्ञानद्वारा करणम् । तृतीयं[4] च (निर्विकल्पकज्ञानम्) सविकल्पकज्ञानानन्तरं यत्र हानोपादानोपेक्षाबुद्धयो भवन्ति, तत्र सविकल्पकज्ञानं द्वारीकृत्य करणम् । [1] (सि० च० १ । पृ० २१)

तत्रेन्द्रियात्मकं प्रत्यक्षं द्वेधा । द्रव्यग्राहकम्, द्रव्याग्राहकं च । आद्यम्, चक्षुस्त्वङ्मनांसि । द्वितीयम्,—घ्राणम्, रसनम्, श्रवणम्, इति । (न्या० म० १। पृ० ९) [२] "यत् संबद्धं सत् तदाकारोल्लेखि विज्ञानम्, तत् प्रत्यक्षम्" इति सांख्या आहुः । (सांख्य० सू० १ । ८९) ३ प्रत्यक्षा-

१ सर्वत्रापि द्रव्य*गुणकर्मादिप्रत्यक्षे इन्द्रियमेव करणम्; विषयेन्द्रियसंयोगः, इन्द्रियमनःसंयोगो वा व्यापारः; द्रव्यगुणकर्मादिप्रत्यक्षं फलम् ।

अत्र च 'येनेन्द्रियेण यद्वस्तु गृह्यते, तेनेन्द्रियेण तद्गतं सामान्यं तत्समवायस्तदभावश्च गृह्यते' इति नियमो ग्राह्यः । (प्र० प्र०)

२ तथा हि—इन्द्रियजन्यप्रत्यक्षस्य करणं त्रिविधम् । कदाचित्—इन्द्रियम्, कदाचित्—इन्द्रियार्थसंनिकर्षः, कदाचित्—ज्ञानम् , इति । तत्रेन्द्रियस्य करणत्वं यथा—यदाऽर्थसंनिकृष्टेनेन्द्रियेण निर्विकल्पकात्मकं ज्ञानं फलमुत्पद्यते, तस्य ज्ञानस्येन्द्रियं करणम्, छिदाया इव परशुः; इन्द्रियार्थसंनिकर्षो व्यापारः, छिदाकरणस्य परशोरिव दारुसंयोगः; निर्विकल्पकज्ञानं फलम्, परशोरिव छिदा ।

अत्र कश्चिदाह—सविकल्पकादीनामपीन्द्रियं करणम्; यावन्ति त्वान्तरालिकानि संनिकर्षादीनि, तानि सर्वाण्यवान्तरव्यापाराः, इति । (त० भा० प्रमाणनि० पृ० ६)

३ तथा हि—यदा निर्विकल्पकज्ञानानन्तरं सविकल्पकज्ञानमुत्पद्यते, तदा इन्द्रियार्थसंनिकर्षः करणम्; निर्विकल्पकज्ञानमवान्तरव्यापारः; सविकल्पकं ज्ञानं फलम्, इति । (त० भा० प्रमाण० पृ० ६)

४ तथा हि—यदा सविकल्पकज्ञानानन्तरं हानोपादानोपेक्षाबुद्धयो जायन्ते, तदा निर्विकल्पकं ज्ञानं करणम्; सविकल्पकज्ञानमवान्तरव्यापारः; हानादिबुद्धयः फलम्, इति । (त० भा० प्रमाण० पृ० ६)

* तत्र षड्विधद्रव्यप्रत्यक्षे त्वङ्मनःसंयोगः, महत्त्वं च कारणम् । तत्र द्रव्यचाक्षुषप्रत्यक्षे तु महत्त्वम्, अनेकद्रव्यत्वम्, उद्भूतरूपम्, प्रकाशश्च कारणम् । (प्रशस्त० गु० पृ० २५)

त्मकज्ञानविषयः[2] । यथा—“वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्” ( त० दी० १ । पृ० ९ ) इत्यादौ ।

**प्रत्यनुमानम्**—प्रतिपक्षानुमानम् । यथा—‘पर्वतो वह्निमान् धूमात्’ इति वादिनोक्ते, ‘पर्वतो वह्न्यभाववान् पाषाणमयत्वात्’ इति प्रतिवादिनः प्रतीपानुमानम् । ( स्व० )

**प्रत्यभिज्ञा**[3]—( प्रत्यक्षम् ) [ क ] अतीतावस्थावच्छिन्नवस्तुग्रहणम्[4] । [ ख ] अतीतावस्थावच्छिन्नस्य वर्तमानभेदावगाहि प्रत्यक्षम् । ( प० च० ) सा च यथा—‘स एवायं[5] घटः, यो मया पूर्वमुपलब्धः’ इत्याकारिका, पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा प्रत्यभिज्ञा । ( त० भा० हेत्वाभा० पृ० ५० ) यथा वा—‘स एवायं चैत्रः’ इति प्रतिसंधानेनाभिमुखीभूते वस्तुनि ज्ञानम् । ( सर्व० प्रत्यभिज्ञा० पृ० ९२ )

**प्रत्ययः**—१ [ १ ] बुद्धिवदस्यार्थोऽनुसंधेयः । [ २ ] सांख्यास्तु,—स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः ( महत्तत्त्वधर्मः ), स प्रत्ययः, इत्याहुः ( वै० उ० ८ । १ । १ ) २ अधीनः । ३ शपथः । ४ विश्वासः । ५ निश्चयः ।

---

१ मायावादिमतेऽत्रत्यप्रत्यक्षलक्षणं च, स्वाकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति वर्तमानयोग्यत्वम् । ( वेदा० प० परि० १ । पृ० १४ )

२ बहिरिन्द्रियजन्यप्रत्यक्षविषयः, इत्यर्थः । ( नील० १ । वायुनि० पृ० ९ )

३ अत्र व्युत्पत्तिः—‘प्रतिगता अभिज्ञाम्’ ( अत्या० स० ) इति प्रत्यभिज्ञा । ( वाच० ) तल्लक्षणं तु, इन्द्रियसहकृतसंस्कारजन्यज्ञानत्वम् । ( ल० व० ) ( न्या० सि० दी० पृ० ५९ ) प्रत्यभिज्ञायामुपनीततत्तादिविषयकत्वरूपमुपनीतभानमानुभाविकम्, इति बोध्यम् । ( दीधि० बाध० ) ‘प्रत्यभिज्ञायामात्मा विषयः’ इति सिद्धान्तः । मायावादिनस्तु,—अन्तःकरणविशिष्टात्मैव प्रत्यभिज्ञाविषयः, न तु केवलश्चिदात्मा, इत्याहुः । अत्र प्राभाकराः—‘सोऽहम्’ इति प्रत्यभिज्ञायां विषयत्वेनाश्रयो नात्मा सिध्यति, किं तर्हि ?—‘सोऽयं घटः’ इत्यादिप्रत्यभिज्ञाश्रयत्वेन, इत्यमन्यन्त । ( विवरणप्रमेयसंग्रहे ) ( वाच० )

४ प्रत्यभिज्ञाप्रत्यक्षे हि, अतीताऽपि पूर्वावस्था स्फुरत्येव । ( त० भा० प्रमाण० शब्द० पृ० १९ )

५ अत्र, तद्देशकालवृत्तित्वरूपतत्तासंस्कारात् ‘स एवायं घटः’ इति प्रत्यभिज्ञा जायते, इति बोध्यम् । ( नील० १ । पृ० १४ )

६ हेतुः । ७ छिद्रम् । ८ आचारः । ९ ख्यातिः । १० स्वादु । ११ सहकारिकारणम् । ( वाच० )

**प्रत्ययः**— ( सार्थकः शब्दः ) [ क ] यादृशार्थकप्रकृतिनिपाताभ्यां भिन्नो यादृशार्थे शक्तिनिरूढलक्षणान्यतरात्मकप्रशस्तवृत्तिमान् यादृशः शब्दः, स तादृशार्थकप्रत्ययः । यथा—एकत्वार्थकाः सुबादयः प्रत्ययाः । ( श० प्र० श्लो० ८ । टी० )

[ ख ] यः शब्दः शब्दान्तरार्थाविशेषिते यादृशस्वार्थे धर्मिणि तिङ्थस्यान्वयबोधने स्वरूपायोग्यः, स वा निभादिशब्देभ्यो भिन्नस्तादृशार्थे प्रत्ययः । यथा— पचतीत्यादौ तिङाम्, पाचकोऽस्तीत्यादौ कृताम्, काश्यपिरित्यादौ च तद्धितानाम्, प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्तमानत्वादेर्बोधकत्वम्; न तु तदनवच्छिन्ने; इति न तेष्वप्रसङ्गः ( अव्याप्तिः ) । ( श० प्र० श्लो० ९ । टी० )

[ ग ] स्व-स्वप्रकृति-अन्यतरार्थप्रत्यायको यः, स प्रत्ययः, इति केचित् ( नागोजीभट्टादयः ) आहुः ।

---

१ शक्त्या निरूढलक्षणया च गुण–गुणिनोः, स्थिति–प्रस्थानयोश्च बोधका अपि शुक्ल-स्था-प्रभृतयः प्रकृतिभ्यो न भिन्नाः; । तथा—शक्त्या समुच्चयादिप्रतिपादका अपि चादयो न निपातेभ्यः ( भिन्नाः ); ( इति तत्र नातिव्याप्तिः ) । ( श० प्र० श्लो० ८ । टी० )

२ चैत्रोऽस्तीत्यादावर्थान्तरानवच्छिन्ने स्वार्थे नाम्नां तिङर्थान्वयबोधकत्वम्; । एवम्–यजेत, स्थीयेत, इत्यादौ यजादिधातूनाम् ( तिङर्थान्वयबोधकत्वम्; इति तत्र नातिव्याप्तिः ) । ( श० प्र० श्लो० ९ । टी० )

३ निभनिपातादिकस्तु शब्दान्तरार्थानवच्छिन्ने सदृश–समुच्चयादिस्वार्थे तिङर्थस्यान्वयं प्रति स्वरूपायोग्योऽपि निभादिरेव, ( न तु तद्भिन्नः ); इति नात्र प्रसङ्गः । ( श० प्र० श्लो० ९ । टी० )

४ अयं भावः—बहुजादेर्निरर्थकतया मुख्यप्रत्ययत्वाभावादेव पूर्वत्वरूपावधित्वनिवेशेऽपि न दोषः । अत एवोक्तं हरिणा—“प्रत्ययः * परः” इति । परत्वेन विधीयमानत्वमेव † प्रत्ययत्वम्, इति । ( वाच० )

---

* समुदायश्लोकस्तु—“यः स्वेतरस्य यस्यार्थे स्वार्थस्यान्वयबोधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः, प्रत्ययः परः” इति । ( वाक्यप० )

† तन्न योग्यम्; बहुजादावव्याप्तिप्रसङ्गात्, इति शब्दशक्तिप्रकाशिकाकृत आहुः ।

[ घ ] अन्ये तु शाब्दिकाः,—प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः, इत्याहुः। ( शब्दार्थरत्न० ) ( वाच० ) प्रत्ययश्चतुर्विधः। विभक्तिः, धात्वंशः, तद्धितः, कृत्, इति। कादेस्टाबादेश्च तद्धितत्वानुपगमे पञ्चविधो वा प्रत्ययः, इति। ( श० प्र० श्लो० ९९। टी० )

**प्रत्यवस्थानम्**— १ [ १ ] उपालम्भः; प्रतिषेधः। ( वात्स्या० १। २। १८ ) [ २ ] दूषणाभिधानम्। ( गौ० वृ० १। ५८ ) यथा—"साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः" ( गौ० १। २। १८ ) इत्यादौ। २ प्रतिपक्षतयाऽवस्थानम्, इत्यपि केचिदाहुः।

**प्रत्यवायः**— १ अधर्मवदस्यार्थोऽनुसंधेयः। यथा—"अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्यते" ( जाबालिः ) इत्यादौ। २ विपरीताचरणम्। ( मनु० टी० कुल्लूक० ४। २४९ )

**प्रत्याम्नायः**— १ [ क ] निगमनवदस्यार्थोऽनुसंधेयः ( प्रशस्त० पृ० २८ ) [ ख ] प्रतिज्ञायाः पुनर्वचनम्। यथा—'तस्मात् द्रव्यमेव' इति पुनर्निश्चयापादनार्थं प्रत्याम्नायः। ( प्रशस्त० २। पृ० ३१ ) २

---

१ अत्र महाभाष्यम्—" स्वीयमर्थं प्रत्याययति" इति। अत्रावधिश्च पूर्वापररूपो ग्राह्यः। तेन, मधुनि ( मधुगुडो द्राक्षा इत्यादौ ) नाप्रसङ्गः।

२ अनुमेयत्वेनोद्दिष्टे चानिश्चिते च परेषां हेत्वादिभिरवयवैराहितशक्तीनां परिसमाप्तेन * वाक्येन पुनर्निश्चयापादनार्थं प्रतिज्ञायाः पुनर्वचनम्। ( प्रशस्त० २। पृ० २९-३० )

---

* अत्रार्थस्यैव परिसमाप्तिः। कथम्?—'अनित्यः शब्दः' इत्यनेनानिश्चितानित्यत्वमात्रविशिष्टः शब्दः कथ्यते;। 'प्रयत्नानन्तरीयकत्वात्' इत्यनेन साध्यसमधर्ममात्रमभिधीयते;। इह 'यत् प्रयत्नानन्तरीयकम्, तत् अनित्यं दृष्टम्; यथा घटः' इत्यनेन साध्यसामान्येन साधनसामान्यस्यानुगममात्रमुच्यते, 'नित्यमप्रयत्नानन्तरीयकं दृष्टम्, यथाऽऽकाशम्' इत्यनेन साध्याभावेन साधनस्यासत्त्वं प्रदर्श्यते;। तथा च—'प्रयत्नानन्तरीयकः शब्दः, न च तथाऽऽकाशवदप्रयत्नानन्तरीयकः शब्दः' इत्यन्वयव्यतिरेकाभ्यां दृष्टसामर्थ्यस्य शब्देऽनुसंधानं गम्यते;। 'तस्मादनित्यः शब्दः' इत्यनेन 'अनित्य एव शब्दः' इति प्रतिपिपादयिषितार्थपरिसमाप्तिर्गम्यते।

तस्मात् पञ्चावयवेन वाक्येन परेषां स्वनिश्चितार्थप्रतिपादनं क्रियते, इति चैतत्परामर्शेनमनुमानं सिद्धम्, इति। ( प्रशस्त० २। पृ० ३१ ) अधिकं च निगमनशब्दार्थे दृश्यम्।

धर्मशास्त्रज्ञास्तु,–प्रतिनिधित्वेन विधीयमानः पदार्थः प्रत्याम्नायः । यथा–दानार्थं साक्षाद्गोरलाभे गोप्रत्याम्नायः सुवर्णम्, इत्याहुः ।

**प्रत्यासत्तिः**—१ संबन्धः । यथा–"मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यं प्रत्यासत्तिः", "सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः", "सामान्यविषयकं ज्ञानं प्रत्यासत्तिः" ( मु० १ । पृ० १२९–१३० ) इत्यादौ प्रत्यासत्तिः संबन्धः । यथा वा व्याकरणशास्त्रे—"हस्तादाने चेरस्तेये" ( पा० सू० ३ । ३ । ४० ) इति सूत्रव्याख्याने "हस्तादाने इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते" (सि० कौ०) इत्यत्र प्रत्यासत्तिः संबन्धः । २ नैकट्यम्, इति व्यवहारशास्त्रज्ञा आहुः ।

**प्रत्यासन्नत्वम्**—१ संबद्धत्वम् । यथा–"समवायिकारणे प्रत्यासन्नं कारणम्, असमवायिकारणम्" (त० कौ० ) इत्यादौ । २ तद्विषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतिपत्तिविषयत्वम् । ३ समीपवर्तित्वम्, इति काव्यज्ञा वदन्ति । ( स्व० )

**प्रत्याहारः**—१[१] बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानम् (योगाङ्गविशेषः ) । ( गौ० वृ० ४ । १११ ) [२] "प्राणायामद्विषट्केन प्रत्याहार उदाहृतः" इत्यपि वदन्ति ( काशीख० ४१ ) २ वैयाकरणास्तु,–"आदिरन्त्येन सहेता" ( पा० सू० १ । १ । ७१ ) इत्यनेन कृतसंज्ञा । यथा–'अण्' इति अ-इ-उ-वर्णानां संज्ञा, इत्याहुः । ३ उपादानम्, इति काव्यज्ञा आहुः ।

**प्रत्युत**—( अव्यये ) [ १ ] वैपरीत्यमात्रम् । [ २ ] स्वस्वपक्षस्थापनाय परपक्षनिराकरणाय वा उक्तस्य तद्वैपरीत्यभावः । यथा–"न दोषः पुनरुक्तोऽपि प्रत्युतेयमलंक्रिया" ( काव्याद० ) इत्यादौ । ( वाच० )

**प्रथमा**—१ ( सुप्, विभक्तिः ) [ क ] या विभक्तिस्तादात्म्यभिन्नस्वार्थ-

---

१ धर्मशास्त्रे प्रत्यासन्नत्वं तु,—"तदभावे यः प्रत्यासन्नः स पिण्डः" इत्यादौ कुलगोत्रादिकृतः संनिकर्षः, इति स्वीकृतम् ।

धर्मिकप्रकृत्यर्थबोधं प्रति न स्वरूपयोग्या, सा प्रथमा। (श० प्र० श्लो० ६३। टी०) यथा—नीलो घट इत्यादौ घटपदोत्तरप्रथमा। (स्व०) [ख] धात्वर्थावच्छिन्नतिङर्थस्यान्वयबोधं प्रति यदन्तनामोपस्थाप्यत्वं तन्त्रम्, तादृशी सुप् प्रथमा। (श० प्र० श्लो० ६४)। प्रथमा त्रिविधा। सु, औ, जस्, इति। (श० प्र०)। २ आद्या। ३ प्रधानम्।

**प्रधानकर्मत्वम्**—(कर्मत्वम्) [क] साक्षाद्धात्वर्थतावच्छेदकफलशालित्वम्। यथा—गां दोग्धि पय इत्यादौ पयसः प्रधानकर्मत्वम्। (ग० व्यु० का० २। पृ० ४४)

१ विशेष्यवाचकपदोत्तरप्रथमा च स्वार्थैकत्वादिप्रकारकमेव प्रकृत्यर्थबोधं प्रति समर्था, इति तत्र नाव्याप्तिः।

२ द्वितीयादयः स्वार्थे कर्मत्वादौ प्रकृत्यर्थस्यान्वयबोधं प्रति समर्थाः (इति न तत्रातिप्रसङ्गः)। (श० प्र० श्लो० ६३। टी०)

३ प्रथमा तु विशेषणपदोत्तरस्था तादृशि तादात्म्ये तथान्वयं बोधयन्त्यपि, न तादात्म्यभिन्ने तथा; (इति नाव्याप्तिः)। (श० प्र० श्लो० ६३। टी०)

४ स्वर्गकामो यजेतेत्यादौ तिङर्थस्येष्टसाधनत्वादेर्न प्रकृत्यर्थावच्छिन्नस्य यागादावन्वयः; किं तु—केवलस्य। अतः—तस्य प्रथमान्तनामानुपस्थाप्यत्वेऽपि न क्षतिः (अव्याप्तिः)। चैत्रमैत्रौ स्त इत्यादौ च द्वन्द्वेनैव प्रथमान्तनाम्ना चैत्रस्योपस्थापनान्न व्यभिचारः। (श० प्र० श्लो० ६४। टी०)

५ स्वादित्रिकान्यतमत्वं प्रथमात्वम्। एवम्—अमादित्रिकान्यतमत्वादिना द्वितीयात्वादिकं निर्वाच्यम्, इत्यप्याहुः। (श० प्र० श्लो० ६५। टी०)

६ अत्र—प्रथमाया द्विवचनम् औ, द्वितीयायाः पुनः औट्, इति न तत्राव्याप्तिशङ्कापि, इति वदन्ति। (श० प्र० श्लो० ६३। टी०)

७ अत्र साक्षाद्धात्वर्थतावच्छेदकत्वं च धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वम्। (ग० व्यु० का० २। पृ० ४४)

८ तथा हि—विभागावच्छिन्नक्षरणानुकूलव्यापारस्य दुहधात्वर्थत्वेन साक्षाद्धात्वर्थतावच्छेदकीभूतक्षरणरूपफलाश्रयत्वात्पयसः प्रधानकर्मत्वम्, इति। (ग० व्यु० का० २। पृ० ४४)

अत्र शब्दशक्तिप्रकाशिकाकारास्तु,—मोचनानुकूलव्यापारो दुहधात्वर्थः। मोचनं च बहिःक्षरणानुकूलक्रिया। तत्र—क्षरणं पयोनिष्ठम्। तदनुकूलक्रिया तु गोनिष्ठा। तथा च साक्षाद्धात्वर्थतावच्छेदकीभूततादृशक्रिया—(मोचन—)—श्रयत्वेन गोः प्रधानकर्मत्वम्। तादृशक्रियायां विशेषणीभूतस्य (परंपरया धात्वर्थतावच्छेदकस्य) क्षरणस्याश्रयः पयः, इति पयसोऽप्रधानकर्मत्वम्, इत्यङ्गीचक्रुः। (श० प्र० श्लो० ७३। टी०) (श्लो० ७७। टी०)

[ ख ] वैयाकरणास्तु,—कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापारविशेषणफलाश्रयत्वम् । यथा—देवदत्तो ग्राममजां नयतीत्यादौ, गां दोग्धि

---

१ अत्रायं विशेषः—ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात् । तच्चोक्तोदाहरणयोः (तण्डुलानोदनं* पचति, काष्ठं भस्म करोतीत्यादौ ) निर्वर्त्यमानौदनभस्मनोरेव; तन्निष्ठफलविशेषणकव्यापारस्यैव तत्सूत्रस्थभाष्येण शाब्दप्राधान्यप्रतीतेः । तण्डुलरूपे कर्मणि लादय इति तु नव्यानां प्रमाद एव; दुह्यादिषु भाष्ये गणनाभावाच्च ।( ल० म० सुब० कार० २। पृ०८९)

२ नीहृकृष्वहां धातूनामुत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारार्थकानां द्विकर्मकत्वम् । संयोगस्य फलतावच्छेदकः संबन्धो ग्रामनिष्ठः, तदनुकूलव्यापारश्चाजानिष्ठः । प्रधानजन्यफलाश्रयत्वादजा प्रधानम् । तत्र लादयो भवन्ति; "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इति भाष्योक्तेः । ( ल० म० सुब० पृ० ८९ )

३ अत्र दुहेरन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थकत्वे—गोपयसोरुभयोरप्यनेन ("कर्तुरीप्सिततमं कर्म" इति सूत्रेण ) कर्मत्वम् । तत्र—गोः कर्तृव्यापारजन्यफलाश्रयत्वात् ( प्रधानकर्मत्वम्), पयसः कर्तृव्यापारप्रयोज्यफला-(विभाग )-श्रयत्वात् ( गौणकर्मत्वम् )

अत्र गोर्विभागाश्रयत्वेन तु न कर्मत्वम्; पयोनिष्ठविभागीयसंबन्धस्यैव फलतावच्छेदकत्वात्, तत्त्वेनानुद्देश्यत्वाच्च, उक्तप्राधान्यं च गोः, इति तत्र † लादयः । एवम्—अन्येषामपि याचि-दण्ड्यादीनां द्विकर्मकत्वं बोध्यम् । ( ल० म० पृ० ९० )

अत्रायं विशेषः—" कर्तुरीप्सिततमं कर्म " इत्यनेन गोः प्रधानकर्मत्वम्, तत्र लादयः । " अकथितं च " ( पा० सू० १ । ४ । ५१ ) इति सूत्रेण तु गोरपादानत्वाद्यविवक्षायां पूर्वोक्तप्राधान्यानाश्रयत्वादप्रधानकर्मत्वं विधीयते । गौणकर्मणि गवादौ लादयो भवन्ति; " अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः" इति प्रामाण्यात् । अत्र पक्षे—द्रवद्रव्यविभागानुकूलव्यापारमात्रं ‡ दुहेरर्थः; इति । ( ल० म० सुब० कार० २ । पृ० ९१ ) ( ग० व्यु० कार० २ । पृ० ४४ )

---

* अत्र विक्लेदनम्, निर्वर्तनं च पचेरर्थः । 'तण्डुलान् विक्लेदयन् ओदनं निर्वर्तयति' इत्यनेनैव ("कर्तुरीप्सिततमं कर्म" (पा० सू० १ । ४ । ४९) इति सूत्रेणैव ) द्वयोः कर्मत्वम् । ( ल० म० सुबर्थ० कार० २ । पृ० ८९ )

† तत्र निदर्शनम्—देवदत्तेन ग्राममजा नीयते, गौर्दुह्यते पय इत्यादौ च अजाया गोश्च प्रधानकर्मत्वेन लादिनाऽभिहितत्वात्तद्वाचकपदोत्तरं प्रथमैव भवति, न तु द्वितीया, इति ।

‡ अत्रायं भावः—तादृशविभागानुकूलव्यापारस्य कर्तृनिष्ठत्वेन, विभागस्य तु पयोनिष्ठत्वेन च गोः कर्मत्वाप्राप्तौ " अकथितं च " इत्यनेन क्रियाजन्यफलशालित्वादन्यदेव गौणं कर्मत्वं विधीयते, इति । (स्व० )

पय इत्यादौ च-अजायाः, गोश्च प्रधानकर्मत्वम् । ( ल० म० सुब० पृ० ८९ )

**प्रधानम्**—१ मुख्यम् । २ श्रेष्ठम् । ३ प्रशस्तम् । ४ सचिवः । ५ सेनापत्यध्यक्षः । ६ मूलप्रकृतिः, इति सांख्या आहुः ।

**प्रध्वंसः**—[ १ ] ध्वंसवदस्यार्थोऽनुसंधेयः । [ २ ] अतीतावस्था, इति सांख्या आहुः ।

**प्रपञ्चः**—१ विस्तारः । २ वैपरीत्यम् । ३ प्रतारणम् । ४ संसारः । (वाच०)

**प्रबन्धः**—१ संदर्भः । २ ग्रन्थादे रचनम् ।

**प्रभवः**—१ प्रथमप्रकाशः । यथा—हिमवतो गङ्गा प्रभवतीत्यादौ प्रभवत्यर्थः । ( ग० व्यु० का० ५ । पृ० १०८ ) एवम्—'वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य' इत्यादावप्यूह्यम् । २ संवत्सरविशेषः, इति मौहूर्तिका वदन्ति ।

**प्रभृतिः**—आदिः । यथा—"तदाप्रभृत्येव वनद्विपानाम्" ( रघु० स० २ । श्लो० ३८ ) इत्यादौ । यथा वा—"मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः" ( रघु० स० ४ । श्लो० ७ ) इत्यादौ ।

---

१ अत्र वल्लभीया वेदान्तिनोऽमन्यन्त—प्रपञ्चो भगवत्कार्यः; संसारस्तु मायाकार्यः । तथा च—प्रपञ्चस्य स्थावरजङ्गमात्मकस्य भगवत्कार्यत्वेन सत्यत्वम् । संसारस्य त्वहंताममतात्मकस्य मायाकार्यत्वान्मिथ्यात्वमेव । एवं च—प्रपञ्च-संसारयोर्भेद एव, इति ।

२ अत्र "भुवः प्रभवः*" ( पा० सू० १ । ४ । ३१ ) इत्यनेनापादानसंज्ञा । तदर्थश्च—यत्संबन्धात्प्रभवनं ( प्रथमप्रकाशः ) स प्रभवः, इति । ( ग० व्यु० का० ५ । पृ० १०८ )

३ अत्र [ क ] प्रकाशः ( आद्यवहिः—( भूखण्ड— ) संयोगः ) धात्वर्थः । संयोगनाशाव्यवहितोत्तरक्षणवृत्तित्वं पञ्चम्यर्थः । आख्यातार्थ आश्रयत्वम् । तथा च—'हिमालयसंयोगध्वंसाव्यवहितोत्तरक्षणवृत्त्याद्यपृथिवीसंयोगाश्रयत्ववती गङ्गा' इति बोधः । (का० व्या० पृ० १०) [ ख ] पञ्चम्यर्थः संबन्धाधीनत्वम् । तस्य तादृशक्रियायां (प्रभवत्यर्थे प्रथमप्रकाशे) अन्वयः । संबन्धे च हिमवदादेः प्रकृत्यर्थस्यान्वयः । ( ग० व्यु० कार० ५ । पृ० १०८ )

४ अत्र, ऊर्ध्वदेशसंयोगः प्रभवत्यर्थः । अन्यत्समानम् । ( का० व्या० पृ० १० )

---

* अत्र 'प्रभवत्यस्मिन्, इति प्रभवः' इति व्युत्पत्त्या [ क ] प्रथमप्रकाशस्थानम्, इत्यर्थो लभ्यते । ( वाच० ) [ ख ] अन्यतः सिद्धस्य प्रथमोपलम्भस्थानम्, इति हेमचन्द्र आह ।

प्रभेदः—१ सामान्यधर्मव्याप्यावान्तरधर्मविशिष्टः । यथा—घटो द्रव्यप्रभेदः, इत्यादौ । ( स्व० ) २ स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मः । यथा—"अनित्या पृथिवी त्रिविधा; शरीरेन्द्रियविषयभेदात्" इत्यादौ । ( वाक्य० १ । पृ० ३ ) ३ अन्योऽन्याभाववदस्यार्थोऽनुसंधेयः ।

प्रमा—( अनुभवः ) [ १ ] [ क ] यत् अर्थविज्ञानम्, सा प्रमा । ( वात्स्या० १।१।१। प्रस्तावना० ) सा च द्रव्यादिविषयं ज्ञानम् ( यथार्थम् ) । ( प्रशस्त० पृ० २६ )

[ ख ] तत्त्वानुभावः ।

[ ग ] यत्र यदस्ति तत्र तस्यानुभवः; तद्वति तत्प्रकारकानुभवो वा । ( चि० १ । पृ० ४०० ) ( त० सं० )

[ घ ] यथार्थानुभवः । ( ता० र० ) ( त० भा० ) ( न्या० म० १।

१ अत्र 'भेद-प्रभेदशब्दयोरेकार्थकत्वम्' इत्यभिप्रायेणेदमुक्तम्, इति विज्ञेयम् ।

२ लक्षणं च वक्ष्यमाणं प्रमात्वमेव, इति विज्ञेयम् । प्रमात्वस्य स्वतोग्राह्यत्वादिविचारः 'प्रमात्व'-शब्दे द्रष्टव्यः ।

३ फलितार्थस्तु,–[ क ] तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकताशाल्यनुभवः, इति । [ ख ] विशेष्यितासंबन्धेन तदवच्छिन्ना या तत्प्रकारिता, तच्छाल्यनुभवः, इति । तेन, रजत-रङ्ग्योः 'इमे रङ्गरजते' इत्यादिविपरीतसमूहालम्बनभ्रमे नातिव्याप्तिः । ( मू० म० १ । प्रामा० पृ० ४०३ )

निर्विकल्पकज्ञानं तु प्रमाऽप्रमाबहिर्भूतमेव; व्यवहारानङ्गत्वात् । ( चि० १ । प्रामा० पृ० ४०२ ) एवं च–निर्विकल्पकं प्रमालक्षणालक्ष्यमेव, इति तस्य प्रकारिताविशेष्यितादिशून्यत्वेऽपि न तत्राव्याप्तिशङ्का, इति भावः ।

४ अत्र याथार्थ्यं च तद्वति* तदवगाहित्वम् । ( न्या० म० १ ) ( त० सं० )

५ यदाहुरुदयनाचार्याः,–"यथार्थोऽनुभवो मानमनपेक्षतयेष्यते" इति । ( कु० ४ । १ ) अत्र मानशब्दस्यार्थः प्रमा, इति ज्ञेयम् ।

अत्र प्रयोगश्चेत्थम्—'यथार्थानुभवः प्रमापदवाच्यः, अनपेक्षत्वात्' इति । अत्रानपेक्षत्वं च,–स्वसमानाधिकरणं † स्वसमानविषयकं च यज्ज्ञानम्, तत्प्रमात्वानधीनप्रमात्वकत्वम् । ( म० प्र० १। पृ० ४ ) स्मृतौ तु तादृशपूर्वानुभवप्रमात्वाधीनप्रमात्वकत्वेन ‡ स्मृतिव्यावृत्तिः ।

* तद्वद्विशेष्यकत्वे सतीत्यर्थः । भवति हि,–रजते 'इदं रजतम्' इति ज्ञानं 'रजतत्ववति रजतत्वावगाहि,' इति लक्षणसमन्वयः । ( न्या० म० ) ( त० प्र० १ । पृ० १० )

पृ० १ ) ( त० सं० ) ( त० कौ० पृ० ७ ) यथा--रजते 'इदं रजतम्' इति प्रत्यक्षं प्रमा। ( त० सं० ) [ २ ] [ क ] विषयताश्रयोवृत्त्यप्रकारकानुभवः।

[ ख ] यत्प्रकारिका या विषयता तत्प्रकारसमानाधिकरणविषयताकः; स्वप्रकारसमानाधिकरणविषयताको वा, अनुभवः। [ ३ ] [ क ] विशेष्यनिष्ठात्यन्ताभावाप्रतियोगिप्रकारकविषयताप्रतियोगी;।

[ ख ] विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा;।

[ ग ] विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारकविषयत्वाप्रतियोगी वा;।

[ घ ] विषयतासमानाधिकरणात्यन्ताभावप्रतियोगिप्रकारानवच्छिन्नविषयताप्रतियोगी वा, अनुभवः। ( चि० १। प्रामा० पृ० ४००—

---

१ अत्रायं विशेषः—अज्ञायमानकरणजन्यतत्त्वानुभावः प्रत्यक्षप्रमा। ज्ञायमानकरणजन्यतत्त्वानुभावोऽनुमितिप्रमा, इति।

२ अतिरिक्तविषयतापक्षे ( विशेष्यतावच्छेदकतातिरिक्ता प्रकारता; विषयतापि च सविषयका, इति पक्षे ) इदं लक्षणद्वयं ( [ २ ] क, ख, इत्यत्र स्थितम् ) स्वीकृतम्, इति ज्ञेयम्। ( मू० म० १। प्रामा० पृ० ४१६–४१८ )

३ अत्र प्रकारपदं धर्मपरम्। तद्धर्मसमानाधिकरण-तद्विषयताकः, इत्यर्थः। एतल्लक्षणद्वये, 'इदम् रजतं रङ्गं च' इत्यादौ—प्रकारभेदेन विषयताभेदाभावेऽपि न क्षतिः, इति ध्येयम्। ( मू० म० १। प्रामा० पृ० ४१९ )

४ एकधर्मावच्छिन्नतत्तदभावोभयवन्निष्ठविशेष्यताकं 'द्रव्यं रजतम्' इत्यादिज्ञानं न लक्ष्यम्, इति मते लक्षणान्याह—विशेष्यनिष्ठेति। ( मू० म० १। प्रामा० पृ० ४२० )

---

† अत्र—उभयत्र स्वपदं फलीभूतज्ञानपरमेव।

‡ अत्रेयमभिसंधिः—[ १ ] प्रमात्वस्य स्मृतिसाधारणत्वे, स्मृतिकारणानुभवस्यापि प्रमाणान्तरत्वापत्त्या, शास्त्रे प्रमाणव्यवहारौपयिकं रूपमनुभवत्वघटितमेवानुमन्यन्ते तान्त्रिकाः। ( दि० गु० पृ० २११ ) [ २ ] यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारनिश्चयोत्तरत्वम्, तज्जातीयान्ययथार्थज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वम्। अत एव—धारावाहिप्रत्यक्षव्यक्तीनां समानाकारग्रहोत्तरवर्तित्वेऽपि न तासां प्रमात्वहानिः। हानिस्तु समानाकारानुभवसमुत्थानां स्मृतीनाम्, इति। ( श० प्र० )

४ २० ) [ ४ ] वृत्तीद्धो बोधः प्रमा, इति मायावादिनो वदन्ति । [ ५ ] अनधिगतार्थस्य वस्तुनोऽवधारणम्, इति सांख्या आहुः । [ ६ ] पुरुषनिष्ठबोधः प्रमा, इति पातञ्जला आहुः । ( पात० व्या० भा० ) (सां० भा० १ । ८७ ) न्यायनये प्रमा द्विविधा । नित्या, अनित्या च । तत्र नित्या भगवतः । अनित्या जीवस्य । ( ता० र० श्लो० ४ )

**प्रमाणबाधितार्थकप्रसङ्गः**[1]—तर्कविशेषः । शिष्टं तु 'तदन्यबाधितार्थप्रसङ्ग'शब्दव्याख्याने संपादितम्; तत् तत्र द्रष्टव्यम् ।

**प्रमाणम्**[2]—१ [ क ] प्रमाता येनार्थं प्रमिणोति, तत् । ( वात्स्या० १ । १ । १ । प्रस्तावना० )

[ ख ] प्रमायाः करणम् । ( न्या० म० पृ० १ ) ( त० सं० ) ( त० भा० पृ० ४ ) ( त० कौ० पृ० ८ ) यथा—चक्षुरादि[3] प्रत्यक्षात्मकप्र-

---

१ अत्र व्युत्पत्तिः—'प्रमाणेन बाधितोऽर्थो यस्य' इति ( कप् )।

२ अत्र 'प्रमीयतेऽनेन' इति व्युत्पत्तिर्द्रष्टव्या । प्रमाणस्य स्वभावस्तु 'सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति' इति । ( वात्स्या० १ । १ । १ । प्रस्तावना० )

तल्लक्षणं तु प्रमाणत्वमेव । तच्च [ क ] तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकरणत्वम् । ( गौ० वृ० १ । १ । ३ ) [ ख ] अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्यतानिरूपितकारणताशालित्वे सति व्यापारवत्त्वम् । ( त० प्र० १ । पृ० १४ ) [ ग ] अनधिगतार्थकानुभवकारणत्वम् । तच्च गृहीतग्राहीतरानुभवकारणत्वम्* इति मीमांसका आहुः । ( कु० टी० ३ ) ( त० प्र० ख० ४ । पृ० ९ ) [ घ ] सांख्यास्तु,—असंदिग्धाविपरीतानधिगत—†विषयबोधसाधनत्वम्, इत्याहुः ।

३ अत्रेदं बोध्यम्—इन्द्रियसंयोगादिरेव प्रमाकरणम्, न तु प्रमातृप्रमेयादीनि; सत्यपि प्रमातरि प्रमेये च प्रमाऽनुत्पत्तेः । इन्द्रियसंयोगादौ सत्यविलम्बेन प्रमोत्पत्तिः । अतः—इन्द्रियसंयोगादिरेव करणम्, न प्रमात्रादि । ( त० भा० पृ० ५ )

---

* स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमानाकार-निश्चयविषयविषयकेतर-तद्वद्विशेष्यक-तत्प्रकारकानुभवकारणत्वम्, इति यावत् । ( कु० टी० ३ )

† अत्र "द्वयोरेकतरस्य वाऽप्यसंनिकृष्टार्थपरिच्छित्तिः प्रमा, तत्साधकं यत्, तत् त्रिविधं प्रमाणम्" इति ( सांख्यसूत्रम् १ । ८७ ) । तदर्थश्च—असंनिकृष्टः प्रमातर्यनारूढः, अनधिगत इति यावत् । ( सां० भाष्य० )

मायाः प्रमाणम्। अनुमितौ च लिङ्गदर्शनं प्रमाणम्। उपमितौ तु सादृश्यज्ञानं प्रमाणम्। यथा वा—वेदाः प्रमाणमित्यादौ शब्दः प्रमाणम्।(स्व०)

[ग] साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तम्। (सर्व० अक्ष० पृ० ११३)

[घ] प्रमाऽयोगव्यवच्छिन्नम् (प्रमया सहायोगव्यवच्छेदेन संबन्धि)।

[ङ] अनधिगतार्थगन्तृ प्रमाणम्, इति भट्टमीमांसका आहुः। (सि० च० १। पृ० २०) (कु० टी० ४।९) (तत्त्वसंख्याने०)। न्यायनये प्रमाणानि चत्वारि। प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दश्च, इति। (गौ० १। १। ३) प्रकारान्तरेण प्रमाणं द्विविधम्। शब्दोपजीवि, शब्दानुपजीवि, च। (कु० टी०)

इदानीं मतभेदेन प्रमाणसंख्या कथ्यते—प्रत्यक्षमेकमेव प्रमाणम्,इति चार्वाका आहुः। प्रत्यक्षमनुमानं चेति द्वे प्रमाणे, इति कणादप्रधाना वैशेषिकाः,

---

१ अनेन च, प्रतितन्त्रसिद्धान्तसिद्धं परमेश्वरप्रामाण्यं संगृहीतम्*। (सर्व० अक्ष० पृ० ११३) (कु० टी० ४।५)

२ तदसत्;—एकस्मिन्नेव घटे 'घटोऽयम्, घटोऽयम्, घटोऽयम्' इति धारावाहिकप्रत्ययस्थलेऽधिगतार्थगन्तॄणामप्रामाण्यापत्तेः। (सि० च० १। पृ० २०) (त० भा० १। पृ० ५)

३ अत्र विवदन्ते—"अविसंवादिविज्ञानं प्रमाणमिति सौगताः। अनुभूतिः प्रमाणं सा स्मृतेरन्येति केचन ॥ अज्ञातचरतत्त्वार्थनिश्चायकमथापरे। प्रमेयव्याप्तमपरे प्रमाणमिति मन्वते ॥ प्रमानियतसामग्रीं प्रमाणं केचिदूचिरे" इति। (ता० र० श्लो० ५–७)

४ यत् प्रमाणम्, तत् प्रत्यक्षादिचतुष्टयान्यतमम्†, इति वाक्यार्थः। तेन, न्यूनाधिकसंख्याव्यवच्छेदलाभः। (म० प्र० १। पृ० ७)

५ एतन्मते शब्दोपमानयोरनुमानविधयैव‡ प्रामाण्यम्, न तु स्वातन्त्र्येणेति बोध्यम्§। (त० कौ० पृ० ८)

---

* अत्र सूत्रम्—"मन्त्रायुर्वेदवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति। (गौ० २। १। ६७)

† अत्रेदं बोध्यम्—नित्यप्रमाया आश्रयः (समवायी) प्रमाणं ईश्वरः। अनित्यप्रमायास्तु करणम् प्रत्यक्षादिचतुष्टयम्, इति। (ता० र० श्लो० ४)

‡ अत्र भाष्यम्—शब्दादीनामप्यनुमानेऽन्तर्भावः; समानविधित्वात्। (१) [क] यथा—प्रसिद्धसमयस्यासंदिग्धलिङ्गदर्शन-प्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियार्थे भवत्यनुमानम्;

बौद्धाः, आर्हताश्चाहुः । लौकिकम् (प्रत्यक्षानुमानाप्तवचनानि), आर्षम् (विज्ञानम्), इति द्विविधं प्रमाणम्, इति सांख्या आहुः । प्रत्यक्षं शब्दश्चेति द्वे प्रमाणे, इति श्रीमदानन्दतीर्थभगवत्पादाचार्याः प्राहुः । मानुष-दैव-भेदेन द्विविधं प्रमाणम्, (याज्ञ० २ । ११६) इति व्यवहारशास्त्रज्ञा आहुः । प्रत्यक्षमनुमानं शास्त्रं चेति मन्वादयः आहुः । प्रत्यक्षमनुमानमाप्तवचनंमिति त्रीणि प्रमाणानि, इति सांख्या योगिनो मा-

---

१ एतन्मते त्वनुमानं श्रुत्यनुसारित्वेन प्रमाणम्, न तु स्वातन्त्र्येणेति बोध्यम् ।

२ अत्र—अलौकिके विषये तु,—वेदो ब्रह्मसूत्रं भगवद्गीता श्रीमद्भागवतमिति प्रमाणचतुष्टयमिति वाल्लभा मन्यन्ते ।

---

एवं शब्दादिभ्योऽपि, इति । [ख] श्रुतिस्मृतिलक्षणोऽप्याम्नायो वक्तृप्रामाण्यापेक्षः, "तद्वचनादाम्नायस्य प्रामाण्यम्" (वै० १ । १ । ३) "लिङ्गाच्चानित्यः शब्दः" (वै० २ । २ । ३२) "बुद्धिपूर्वा वाक्यकृतिर्वेदे" (वै० ६ । १ । १) "बुद्धिपूर्वो ददातिः" (वै० ६ । १ । ३) इत्युक्तत्वात् । (२) प्रसिद्धाभिनयस्य चेष्टया प्रतिपत्तिदर्शनात् तदप्यनुमानमेव । (३) आप्तेन प्रसिद्धगवयस्य गवयप्रतिपादनार्थमुपमानमाप्तवचनमेव, दर्शनार्थापत्तिर्विरोधे वा शब्दश्रवणादनुमितमनुमानम् । (४) संभवोऽप्यविनाभावित्वादनुमानमेव । (५) अभावोऽप्यनुमानमेव । यथा—उत्पन्नं कार्यं कारणसंभवलिङ्गम्, एवम्—अनुत्पन्नं कार्यकारणसद्भावे लिङ्गम् । (६) ऐतिह्यमप्यवितथमाप्तोपदेश एव, इति । (प्रशस्त० पृ० २ । पृ० २८)

§ शब्दस्य स्वातन्त्र्येण प्रामाण्यमनिच्छन्तोऽनुमानान्तर्भावेन प्रामाण्यमिच्छन्ति वैशेषिकादयः । तेषामयमाशयः—'गामानय' इत्यादिवाक्यश्रवणसमनन्तरं तावदन्वयप्रतीतिरनुभूयते । वाक्ये आकाङ्क्षादिमत्त्वप्रतिसंधानं तदर्थप्रतिपत्त्यनुकूलतयाऽवधृतम् । तथा च—आकाङ्क्षादिमत्पदकदम्बकत्वप्रतिसंधानस्यावश्यकतया तस्य च स्मारितार्थसंसर्गविज्ञप्तिपूर्वकत्वनियमेनानुमानादेव तत्फलसिद्धौ,—किमिति शब्दस्य प्रमाणान्तरत्वाभ्युपगमः? । तथा हि—'एतानि पदानि स्मारितार्थसंसर्गज्ञानपूर्वकाणि; आकाङ्क्षादिमदाप्तोक्तपदत्वात् गामभ्याजेतिपदकदम्बकवत्' इति ज्ञानावच्छेदकतया संसर्गसिद्धिरनुमानादेव भवति; इति पदपक्षकानुमानेन शब्दो न प्रमाणान्तरम् ।

अर्थपक्षकानुमाने साक्षादेव संसर्गसिद्धिः । एवं हि तत्—'एते पदार्थाः मिथः संसर्गवन्तः, आकाङ्क्षादिमत्पदकदम्बकस्मारितत्वात् 'गामभ्याज' इति स्मारितपदार्थवत्' इति ।

एवमुपमानमपि न प्रमाणान्तरम् । तथा हि—'गवयपदं सप्रवृत्तिनिमित्तकम्, साधुपदत्वात्' इत्यनुमानेनैवात्रापि निर्वाहः । (त० कौ० पृ० ९८) (श० प्र० पृ० ३) (न्या० सि० दी० पृ० २२)

यावादिवेदान्तिनश्चाहुः । प्रत्यक्षानुमानोपमानानि त्रीणि, इति नैयायिकैकदेशिन आहुः । प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानि, इति गोतमप्रधाना नैयायिका आहुः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानि, इति प्राभाकरा आहुः । प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट् प्रमाणानि, इत्यपरे भट्टा वेदान्तिभेदाश्चाहुः । संभवैतिह्ये अप्यतिरिक्ते प्रमाणे, इति पौराणिका आहुः । चेष्टाप्यतिरिक्तं प्रमाणम्, इति तान्त्रिकाः अमन्यन्त । ( ता० र० श्लो० ८–११ ) ( सर्व० ) ( सि० च० १ । पृ० २० ) २ 'प्रमा' शब्दवदस्यार्थोऽनुसंधेयः । यथा—"स्वतः प्रामाण्यम्, परतः प्रामाण्यम्" इत्यादौ प्रमाणपदार्थः प्रमा । ३ सत्यवादी । ४ इयत्ता । ५ परिच्छेदः । ६ हेतुः । ७ प्रमाता । ( मेदिनी० ) । ८ विष्णुः । (विष्णुस०)

**प्रमाणान्तरम्**—( स्वतन्त्रं प्रमाणम् ) यत्, असाधारणं सहकारि समासाद्य मनो बहिर्गोचरां प्रमां जनयति, तत् । यथा—प्रत्यक्षे इन्द्रियं प्रमाणान्तरम् । संशय-स्वप्नौ तु न प्रमे इति, न निद्रादेः प्रमाणान्तरत्वम् । ( चि० २ । पृ० ३९ ) ( कु० टी० ४ )

**प्रमाता**—[ १ ] यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः, सः । ( वात्स्या० १ । १ । १ । प्रस्तावना० ) स च ( प्रमाता ) आत्मा । ( प्रशस्त० पृ० २६ )

---

१ तत्र सांख्य-पातञ्जल-मायावादि-मते अन्तःकरणवृत्तीनां पौरुषेयचित्तवृत्तिप्रकाशरूपबोधे कारणत्वम्; अन्तःकरणवृत्तिषु च ज्ञानत्वारोपेण तत्करणत्वमिन्द्रियाणाम्, इति विवेकः । ( सां० प्र० भा० ) ( पात० सू० )

२ 'शब्दात्प्रत्येमि' इति विलक्षणप्रतीतेर्व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादुत्पत्तेः, तत्करणतया शब्दस्यातिरिक्तं* प्रामाण्यं सिद्ध्यति, इति नैयायिकसिद्धान्तः ।

३ अत्र प्रमातृत्वं च प्रमासमवायित्वम् । एतच्च अकारणत्वेऽपि प्रमायाः, ईश्वरस्य सिद्धम् । ( कु० टी० ४ । ५ )

४ अत्रेदं बोध्यम्—प्रमाता स्वतन्त्रः । स्वातन्त्र्यं च कारकफलोपभोक्तृत्वम्, इति । ( न्या० वा० १ । पृ० ५ )

---

* तत्र शब्दस्य स्वतन्त्रप्रामाण्यमुक्तम्—"आप्तोपदेशसामर्थ्याच्छब्दार्थसंप्रत्ययः" इति । ( गौ० २ । १ । ५० )

यथा—चैत्रो घटं प्रमिनोतीत्यादौ चैत्रः प्रमाता । ( स्व० ) [ २ ] शुद्धचेतनो वृत्तिसाक्षी प्रमाता, इति सांख्या आहुः । [ ३ ] मायावादिनस्तु,—अन्तःकरणवृत्तिप्रतिबिम्बितम्, तदवच्छिन्नं वा चैतन्यमेव प्रमाता, इत्याहुः । ( वाच० )

**प्रमात्वम्**— [ १ ] [ क ] A [1] तद्वति तत्प्रकारकज्ञानत्वम्; B [2] तद्वति तद्वैशि-

---

१ दलद्वयस्यार्थश्च—[ क ] तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्यनुभवत्वम् । ( त० प्र० १ । पृ० १४ ) ( वाक्य० ) [ ख ] वस्तुतस्तु,—तद्वतीत्यत्र अवच्छिन्नत्वमेव सप्तम्यर्थः । अन्वयश्चास्य विशेष्यितासंबन्धेन तत्प्रकारकत्वे । तथा च—विशेष्यितासंबन्धेन* तदवच्छिन्ना या तत्प्रकारिता, तच्छाल्यनुभवत्वं तत्प्रमात्वम्, इति फलितम् । रङ्गरजतयोः 'इमौ रजतरङ्गौ' इति विपरीतभ्रमे च,—रजतावच्छिन्नं न रजतत्वप्रकारकत्वम्, अपि तु रङ्गावच्छिन्नम्; इति न तत्रातिव्याप्तिः । ( मू० म० प्रामा० सिद्धान्त० पृ० ४०३ ) [ ग ] A विशेष्यतावच्छेदेन तद्धर्मावच्छिन्नप्रकारितासंबन्धेन तद्धर्मवत्त्वम्; । B विशेष्यतासंबन्धेन तद्विशिष्टत्वे सति तद्वत्त्वम्;। C विशेष्यतासंबन्धेन तद्वदवच्छिन्ना या प्रकारिता, तच्छाल्यनुभवत्वम् । ( मू० म० १ ) [ घ ] तान्त्रिकास्तु,—तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वम् । तेन, वह्निगुञ्जयोर्गुञ्जावगाहिभ्रमे नातिव्याप्तिः, इत्याहुः । ( न्या० म० ख० ४ । पृ० ३४ ) ( म० प्र० ४ । पृ० ६९ ) [ ङ ] तत्संबन्धानुयोगिविशेष्यकत्वावच्छिन्न— तत्प्रतियोगिकसंबन्धावच्छिन्नप्रकारकज्ञानत्वम् † । ( स्व० ) [ च ] विशेष्यितासंबन्धेन ‡ तद्धर्मवदवच्छिन्नं प्रकारितासंबन्धेन तद्धर्मवत्त्वम् । ( मू० म० १ । प्रामाण्य० पृ० १७५ )

२ यद्यपि—अन्यान्यपि,—( १ ) 'विशेष्यावृत्त्यप्रकारकत्वम्; ( २ ) अगृहीतग्राहित्वं वा; सर्वधीयथार्थत्वपक्षेऽनुभवत्वजातेरभावेन,§—( ३ ) स्मरणान्यज्ञानत्वम्; ( ४ ) विशिष्टज्ञानत्वं वा,' ( चि० प्रामा० पृ० १२६ ) इत्यादीनि प्रमात्वस्वरूपाणि सन्ति । तथा-

---

* 'इदमत्रैतत्प्रकारकम्' इति प्रतीत्या, विशेष्यस्यापि विशेष्यितासंबन्धेन तत्प्रकारितायामवच्छेदकत्वात् ( लक्षणसमन्वयः ) । ( मू० म० प्रामा० पृ० ४०३ )

† अयमेव सिद्धान्तलक्षणोक्तप्रमात्वे गदाधरभट्टाचार्याणामाशयः, इति प्रतिभाति ।

‡ 'विशेष्यिता-प्रकारितयोरिव, विशेष्यिता-प्रकारितासबंन्धेन विशेष्यविशेषणयोरपि परस्परमवच्छेद्यावच्छेदकभावोऽभ्युपगम्यते' इत्यभिप्रायेणेदम् । ( मू० म० १ । प्रामाण्य० पृ० १७५ )

§ एतन्मते,—निर्विकल्पक-व्यधिकरणप्रकारक-ज्ञानयोरनभ्युपगमात्, इति भावः । ( मू० म० १ । प्रामा० पृ० १७० )

ष्टयज्ञानत्वं[1] वा । ( चि० १ । प्रामा० पृ० १७० ) ( गौ० वृ० १ । १ । ७ )
[ ख ] अनधिगतार्थग्राहित्वम्[2], इति मीमांसका आहुः । ( कु० ४ । टी० ) यथा—सत्यरजते 'इदं रजतम्' इति ज्ञानस्य प्रमात्वम् । यथा वा—घटे 'अयं घटः' इति ज्ञानस्य प्रमात्वम् । ( स्व० )
[ ग ] प्राभाकरमते सर्वज्ञानानां यथार्थत्वात्,—तत्प्रकारकज्ञानत्वमेव प्रमात्वम् । ( चि० १ प्रामा० ) ( त० प्र० ४ । पृ० १३३ ) ( न्या० म० ४ । पृ० ३९ )
अत्र[3] विप्रतिपत्तिः[4],—'प्रमात्वं स्वतो[5] ग्राह्यम्, परतो वा' इति । तत्र—

ऽपि—तानि मीमांसकादिमतोक्तरीत्या न *स्वतो ग्राह्याणि, इति नात्रोदाहृतानि ।
१ इदं ( A, B ) प्रमात्वद्वयं च निष्कम्पप्रवृत्त्युपयोगि, मीमांसकमते स्वतो ग्राह्यं च भवति, इति विज्ञेयम् । ( चि० प्रामा० पृ० १७० )
२ तच्च स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमानाकार—ज्ञानविषयविषयकत्वम्, इति निष्कर्षः । ( कु० ४ । टी० ) ( मू० म० प्रामा० पृ १७० )
३ परमकारुणिकमुनिप्रणीतायामष्टादशविद्यास्थानेष्वभ्यर्हिततमायां निःश्रेयसप्रयोजिकायामान्वीक्षिकीविद्यायां प्रेक्षावत्प्रवृत्त्यर्थं 'प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति सूत्रेण प्रतिपादितानां षोडशपदार्थानां मध्ये प्रथमोद्दिष्टस्य प्रमाणस्याधीन इतरेषां निश्चयः, इति प्रमाणतत्त्वनिश्चय आवश्यकः । स च प्रमात्वनिश्चयं विना न भवति, इति प्रमात्वनिश्चयोपाय इदानीं चिन्त्यते । ( चि० १ । प्रामा० पृ० ११४–११७ )
४ तत्र विप्रतिपत्तयः— ( १ ) 'ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यम्, न वा' इति । ( २ ) 'तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यम्, न वा' इति; । ( ३ ) 'स्वाश्रयग्राहकेण गृह्यत एव, न वा' इति; । ( ४ ) स्वाश्रयेण गृह्यत एव, न वा' इति; । ( ५ ) यद्वा—'घटोऽयम्' इति ज्ञानप्रामाण्यं एतज्ज्ञानग्राह्यम्, न वा' इति; । ( ६ ) एतज्ज्ञानग्राहकमात्रग्राह्यम्, न वा' इति । ( चि० १ । प्रामा० पृ० १२१–१२६ )
५ ज्ञानप्रमात्वस्य स्वतो ग्राह्यत्वं च, [ क ] स्वत एव ( स्वकीयेभ्य एव ) स्वजनकसामग्री— † स्वजन्यप्रत्यक्षसामग्री— † स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री— एतदन्यतमेभ्यो‡

* विशेष्यावृत्त्यप्रकारकत्वादेर्विशेषणस्य प्रागनुपस्थितौ तद्वैशिष्ट्यस्य ज्ञातुमशक्यत्वात् । ( चि० १ । प्रामाण्य० पृ० १२८ )
† अत्र,—'स्वजन्य' इति स्वप्रत्यक्ष—ज्ञाततयोर्विशेषणम् । पञ्चम्या जन्यत्वमर्थः । ( मू० म० १ । प्रामा० पृ० १२६ )
‡ अत्र त्रीणि मतानि क्रमेणोक्तानि—तथा हि—ज्ञानग्राहकं च सर्वमते 'घटमहं जानामि' इत्याकारकमेव ज्ञानं भवति । (१) स्वस्यैव ( ज्ञानस्य ) स्वप्रामाण्यविषयकतया, स्वजनकसामग्र्येव

(ज्ञानग्राहकसामग्रीभ्यः) ग्राह्यत्वम् । (मू० म० १ । प्रामा०) [ख] तथा च गुरु-भट्ट-मुरारिमिश्राणां मतत्रयसाधारणं स्वतस्त्वं च—तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वम् । (त० दी० प्रामा० पृ० ३४) (त० कौ० पृ० १८) तदर्थस्तु—ज्ञाननिष्ठाप्रामाण्याग्राहिका यावती *ज्ञानग्राहिका सामग्री (इन्द्रियसंनिकर्ष-परामर्श-अनुव्यवसायादिरूपा) तज्जन्यग्रह-†-विषयत्वम्; तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वम्, इति निष्कर्षः । इदमेव ज्ञप्तौ ‡ स्वतस्त्वमि-

स्वनिष्ठप्रामाण्यनिश्चायिका भवति, इति गुरव आहुः । (२) स्वोत्तरवर्तिस्वविषयकलौकिकप्रत्यक्षस्य स्वनिष्ठप्रामाण्यविषयकतया, स्वजन्यस्वविषयकप्रत्यक्षसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवति, इति मिश्रा आहुः । (३) ज्ञानस्यातीन्द्रियतया प्रत्यक्षासंभवेन, स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवति, इति भट्टा आहुः । (मू० म० १ । प्रामा० पृ० १२६)

* अत्र पदप्रयोजनम्—(१) नैयायिकमते प्रमात्वमनुमानेन, 'इदं ज्ञानं प्रमा' इत्याप्तवाक्येन च गृह्यते, इति सिद्धसाधनम्; तद्वारणाय 'यावत्' इति विशेषणम् । अनुमानं तु,—'इदं ज्ञानं प्रमा, समर्थप्रवृत्तिजनकत्वात्' इति । वस्तुतस्तु,—'यावत्' इति ग्रहस्य विशेषणम् । तथा च—ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वम्, इति फलितम् । (२) 'इदं ज्ञानमप्रमा' इति ज्ञानेन व्यवसायनिष्ठप्रामाण्याविषयीकरणात् बाधाख्यो दोषः; तद्वारणाय 'अप्रामाण्याग्राहिका' इति विशेषणं दत्तम् । तथा च—तादृशज्ञानसामग्र्याः साध्यकोट्यनिविष्टत्वात्, तया प्रामाण्यस्याग्रहणेऽपि न बाधः, इति भावः । (३) ज्ञाननिष्ठाप्रामाण्येत्यत्र ज्ञानं तु, यादृशं प्रामाण्यं प्रकृतानुमितावुद्देश्यं तादृशप्रामाण्याश्रयः, इति विज्ञेयम् । तेन, 'इदं ज्ञानमप्रमा' इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्याप्रामाण्याग्राहकत्वाभावेऽपि न स्वतस्त्वहानिः । (त० दी०) (नील० प्रामा० पृ० ३५)

† स च ग्रहः (प्राथमिकज्ञानग्रहः) गुरुमते व्यवसायः; भट्टमते ज्ञाततालिङ्गकानुमितिः; मुरारिमिश्रमतेऽनुव्यवसायः । (नील० प्रामा० पृ० ३५)

‡ अत्र—प्रामाण्ये स्वतस्त्वं नाम [१] यावत्स्वाश्रयविषयकज्ञानग्राह्यत्वम् । प्रामाण्याश्रयविषयकज्ञानं च स्वप्रकाशं तदेव, इति गुरव आहुः [२] [क] ज्ञानग्राहकातिरिक्तानपेक्षत्वम् [ख] यावत्स्वाश्रयानुमितिग्राह्यत्वम् । प्रामाण्याश्रयानुमितिर्ज्ञाततालिङ्गका, समर्थप्रवृत्तिलिङ्गकाऽपि, इति भट्टा आहुः । [३] मिश्रमते स्वतस्त्वं च [क] प्रामाण्यग्रहप्रतिबन्धकाभावकालीनयावत्स्वाश्रयानुव्यवसायग्राह्यत्वम् । (त० प्र० ख० ४ । पृ०१३२) (म० प्र० प्रामा० पृ० ७०) [ख] प्रामाण्यग्रहप्रतिबन्धकाभावकालीनप्रामाण्याश्रयीभूतज्ञानग्राहकसामग्रीग्राह्यत्वम् । [ग] विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वम् । इदं स्वतस्त्वं च मुरारिभट्टानां मते उत्पद्यते । (कु० १) (सर्वं० जैमि० पृ० १३३) (त० भा० ४) (सि० च० पृ० ३४)

उत्पत्तौ प्रामाण्यस्य स्वतस्त्वं नाम, कार्यकारणादेव कार्येण सहोत्पत्तिः। (अथर्वभाष्य० पृ० १२)

प्रमात्वं स्वतो ग्राह्यमेव, इति मीमांसका वदन्ति । परतो (अनुमानादिना)

---

त्युच्यते । (नील० पृ० ३४) (सि० च० पृ० ३३) [ग] यया कारणसामग्र्या ज्ञानं गृह्यते, तयैव तद्गतं प्रमात्वमपि गृह्यते, इति स्पष्टार्थः । (स्व०) [घ] वेदान्तिनस्तु (मायावादिनः),–दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्; यद्वा–यावत्स्वाश्रयग्राहकग्राह्यायोग्यत्वं स्वतस्त्वम्, इत्याहुः । एतन्मतेऽपि प्रमात्वं स्वत एवोत्पद्यते, ज्ञायते च । तथा हि–तच्च (प्रमात्वम्) ज्ञानसामान्यसामग्रीप्रयोज्यम्; न त्वधिकं गुणमपेक्षते; प्रमामात्रेऽनुगतगुणाभावात् । नापि, प्रत्यक्षप्रमायां भूयोवयवेन्द्रियसंनिकर्षः; रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात्, सत्यपि तस्मिन् 'पीतः शङ्खः' इति प्रत्यक्षस्य भ्रमत्वाच्च । अत एव–न सल्लिङ्गपरामर्शादिकमप्यनुमित्यादिप्रमायां गुणः; असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेनानुमित्यादेः प्रमात्वात्...............अस्मिन्मते स्वतो ग्राह्यत्वं च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वम्* । यद्वा–यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वम् स्वतस्त्वम् † । अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यम्; प्रमायामप्यप्रामाण्यापत्तेः; किं तु–दोषप्रयोज्यम् । नाप्यप्रामाण्यम् यावत्स्वाश्रयग्राहकग्राह्यम्; अप्रामाण्यघटकतदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा गृहीतुमशक्यत्वात्; किंतु–विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषयः, इति परत एवाप्रामाण्यमुत्पद्यते, ज्ञायते चेति । (वेदान्त प० अनुपलब्धिपरिच्छेदः । पृ० ७१–७२)

१ मीमांसकानामयमाशयः—यथा, दूरात्प्रत्यक्षेण (इन्द्रियेण) जलादिज्ञाने जाते तत्र स्वत एव यथार्थज्ञानत्वरूपप्रामाण्यमवधार्य जलार्थी प्रवर्तते । ज्ञानग्रहे तद्गतप्रामाण्यस्यापि ग्रहात्प्रमात्वस्य स्वतस्त्वमुपपद्यते, इति । (त० कौ० प्रामा० पृ० १८)

२ अत्र त्रयो मीमांसका विप्रतिपन्नाः,—प्रभाकरापरनामका गुरवः, तुतातात्स्या भट्टाः, मुरारिनामका मिश्राश्चेति । तत्र [क] गुरूणां मतम्, —ज्ञानस्य स्वप्रकाशरूपत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते, इति । भट्टानां मतं च–ज्ञानमतीन्द्रियम्; ज्ञानजन्या ज्ञातता प्रत्यक्षा; तया च ज्ञानमनुमीयते ‡ इति । मुरारिमिश्रमतं तु–अनुव्यवसायेन ज्ञानं गृ-

---

* तथा हि—स्वाश्रयः (वृत्तिज्ञानम्), तद्ग्राहकम् (साक्षिज्ञानम्), तेन वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते । न चैवं प्रामाण्यसंशयानुपपत्तिः; तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात्, इति । (वेदा० प० अनुपलब्धिपरि० पृ० ७१)

† संशयस्थले प्रामाण्यस्योक्तयोग्यतायाः सत्त्वेऽपि दोषवशेनाग्रहात्, न संशयानुपपत्तिः, इति । (वेदा० प० अनुपलब्धि० पृ० ७१)

‡ अत्रानुमानं तु; 'घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो घटत्वप्रकारकज्ञाततावत्त्वात्, यन्नैवं तन्नैवम्' इति । (नीक० प्रामा० पृ० ३५)

द्यते, इति । सर्वेषामपि मते, तज्ज्ञानविषयकज्ञानेन तज्ज्ञानप्रामाण्यं* गृह्यते । विषयनिरूप्यं† हि ज्ञानम्; अतो ज्ञानवित्तिवेद्यो विषयः, इति । ( मु० गु० ) [ ख ] अत्र प्राभाकराः,—ज्ञानस्य प्रत्यक्षत्वमेव । प्रमात्वं स्वत एव गृह्यते । प्रमात्वाश्रयीभूतं यत् ज्ञानम्, तत् यया कारणसामग्र्या ( आत्ममनःसंनिकर्षः, इन्द्रियविषयसंनिकर्षः, इत्यादिना ) जन्यते, तद्वृत्तिप्रमात्वमपि तयैव सामग्र्या गृह्यते । तथा हि— स्वप्रकाशमेव‡ ज्ञानम् ('अयं घटः' इति ज्ञानम् ) यथा घटादिकं विषयीकरोति, तथा स्वात्मानं ( स्वस्वरूपम् ) स्वस्वस्याधिकरणम् ( आत्मानम् ) च विषयीकरोति । अत एव ( ज्ञानस्य घटादिविषय-स्वस्वरूप-आत्मरूपाधिकरण-एतत्त्रयविषयकत्वादेव ) सर्वमेव ज्ञानम् 'घटमहं जानामि' इत्याकारकमेव । इत्थं च ( सर्वस्य व्यवसायस्यानुव्यवसायात्मकत्वे च ) ज्ञानस्य§ मितिमातृ-

* इदमत्र तत्त्वम्—गुरुमते, 'घटत्वेन घटमहं जानामि' इत्याद्याकारकं व्यवसायात्मकमेव सर्वं ज्ञानम् । तच्च स्वप्रकाशम् मितिमातृमेयैतत्त्रयविषयत्वात्त्रिपुटीत्युच्यते । स्वप्रकाशसामर्थ्यादेव स्वात्मानमिव, स्ववृत्तिप्रामाण्यं स्वत एव गृह्णाति, इति । भट्टमते—'अयं घटः' इति ज्ञानानन्तरं, घटे ज्ञाततानामकं फलं भवति । ततो 'ज्ञातो घटः' इति प्रत्यक्षम् । पश्चात्तया ( ज्ञाततया ) ज्ञानमात्रस्यातीन्द्रियत्वाज्ज्ञानं तन्निष्ठप्रामाण्यं चानुमीयते, इति । मिश्रमते च–[ क ] 'अयं घटः' इत्याकारकज्ञानानन्तरं, 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयकलौकिकमानसमुत्पद्यते । तेन प्रामाण्यस्य ग्रहणम् । [ ग ] 'घटमहं जानामि' इत्यनुव्यवसायस्तु, घटं घटत्वं समवायं च विषयीकुर्वन्नात्मनि प्रकारीभूतघटमात्मानं तत्संबन्धीभूतव्यवसायं विषयीकरोति । एवम्—पुरोवृत्तिप्रकारसंबन्धस्यैव ( पुरोवर्तिनि यः प्रकारसंबन्धः, तद्घटितस्यैव ) प्रमात्वपदार्थत्वेन स्वत एव प्रामाण्यं गृह्णातीति । ( नील० ) (सि० च० पृ० ३४ )

अत्रायमाशयः—नैयायिका अपि, अनुव्यवसाये विशेष्यत्वप्रकारत्वयोर्भानमङ्गीकुर्वन्ति; 'पुरोवर्तिनं घटत्वेन जानामि' इत्याकारकस्यैवानुव्यवसायस्य तैरङ्गीकारात् । परंतु—पुरोवर्तिनि घटादौ घटत्वादिरूपप्रकारसंबन्धभानं नाङ्गीकुर्वन्ति । अतस्तत्र प्रकारसंबन्धभानस्य व्यवस्थापने किमपि नावशिष्टम्, इति प्रामाण्यस्य भानं सिध्यति; अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसंमतत्वात्, इति । ( नील० प्रामा० पृ० ३६ )

† तदर्थश्च—विषयनिरूप्यम् विषयज्ञानजन्यसाक्षात्कारविषयीभूतम्, इति । (म० प्र० पृ० ६९)

‡ अत्र व्युत्पत्तिः—'स्वं प्रकाशते भासते यत्र, तत्' इति । ( त० प्र० ख० ४ । पृ० १२८ ) यथा न्यायनये घटज्ञानं घटविषयकत्वाद्घटप्रकाशम्, यथा वा—ईश्वरज्ञानं स्वविषयकत्वात्स्वप्रकाशमपि (अन्यथा तज्ज्ञानस्य सर्वविषयकत्वं न स्यात्) तथा गुरुमते सर्वमेव ज्ञानं स्वविषयकत्वात्स्वप्रकाशमेव । ( म० प्र० पृ० ६७ )

§ तदर्थश्च—ज्ञानस्य ( सर्वस्य ज्ञानस्य ), मितिः ( ज्ञानम् ), माता ( आत्मा ), मेयम् ( घटादि ), तद्विषयकत्वात् ( मितिमातृमेयानां ज्ञानस्य एकसामग्रीकत्वात् ), त्रिपुटा

मेयविषयत्वात् 'त्रिपुटीप्रत्यक्षता' इति प्रवादः । तथा च—स्वप्रकाशमहिम्ना* स्वमिव, स्वप्रामाण्यमपि सिद्ध्यति ( विषयीभवति ), इत्याहुः । ( न्या० म० ४ । पृ० ३३—३४ ) ( त० प्र० ख० ४ । पृ० १२८ ) ( म० प्र० पृ० ६९ )
भट्टास्तु,—ज्ञानं तावत्स्वविषये † ज्ञातताख्यं फलं जनयति, इति निरूढम् । तयैवानुमेयं ‡ ज्ञानम् । तथा च—ज्ञाततया § ज्ञानानुमितिर्ज्ञायमाना प्रमाण्यमपि विषयीकरोति, इत्याहुः । मुरारिमिश्रास्तु,—तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वं प्रामाण्यम् । तच्च प्रथमानुव्यवसायेनैव ( 'घटमहं जानामि' इत्यनुव्यवसायेन ) गृह्यते । तथा हि—घटत्ववांस्तावत् 'घटोऽयम्' इति व्यवसायेनोपनीतः ( मनसा सह संनिधापितः ) । अतः—तद्वद्विशेष्यकता संसर्गरूपा ज्ञानेन मनसा गृह्यते; विशेषणस्य पुरःस्फुरितत्वात् । एवम्—घटत्वमपि व्यवसायेनैवोपनीतम् । अतः—तत्प्रकारकता विषयतावत्सुग्रहा, इत्युभयस्यैकग्रहेण गृहीतं प्रामाण्यम्, इत्याहुः । (न्या० म० ४ । पृ० ३३—३४ ) ( म० प्र० )

२ [१] अथायमर्थः—द्वितीयानुव्यवसायेन प्रामाण्यं गृह्यते । तथा हि—प्रथमं 'अयं घटः' इति ज्ञानम्; ततः 'ज्ञान—ज्ञानत्वे' इति निर्विकल्पकम्; ततः 'घटमहं जानामि' इत्यनुव्यवसायः; ततो व्यवसायस्य नष्टत्वात् 'घटोऽयम्' इति व्यवसायः; ततश्च 'घटमहं जानामि' इत्यनुव्यवसायः; तेन प्रामाण्यं गृह्यते, इति । ( त० प्र० ख० ४ । पृ० १३१ ) [२] अनुमानादिजन्यग्रहविषयः, इत्यर्थः । ( नील० पृ० ३४ )

---

( त्रयाणां पुटानां समाहारस्त्रिपुटी, मितिमातृमेयविषया ) तत्प्रत्यक्षता, इति । ( त० प्र० ख० ४ । पृ० १२८—१२९ )

* [ क ] स्वस्मिन्स्वविषयकत्वं स्वीक्रियते, इति भावः । ( त० प्र० ख० ४ । पृ० १३० ) [ ख ] स्वप्रकाशस्वरूपज्ञानस्वभावेन यथा तेनैव ज्ञानेन तदेव सिद्ध्यति, तथा तद्गतं तत्प्रकारकत्वरूपं प्रामाण्यमपि सिद्ध्यति, इत्यर्थः । ( म० प्र० पृ० ६८ )

† स्वविषये ( ज्ञानविषये ) घटादावित्यर्थः । 'ज्ञातो घटः' इति प्रतीतेर्ज्ञातताख्यं फलं जन्यते, इति बोध्यम् । ( त० प्र० ख० ४ । पृ० १२८ )
अस्यां प्रतीतौ ज्ञानं निमित्तकारणम्, घटादिकं समवायिकारणम्, असमवायिकारणं तु नापेक्षितम्; 'भावकार्यस्य सासमवायिकारणकत्वम्' इति नियमस्य तु भट्टैरनङ्गीकारात्, इति । ( त० प्र० ख० ४ । पृ० १२९ )

‡ तथा हि—ज्ञानं न प्रत्यक्षम्, अनवस्थापत्तेः; किंतु—अनुमितिग्राह्यमेव, इति भट्टमतम् । ( त० प्र० ख० ४ । पृ० १२९ )
अनुमानं तु—'घटो ज्ञानवान्, ज्ञाततावत्त्वात्', इति । ( म० प्र० पृ० ६७ )

§ तदर्थश्च—[ क ] ज्ञाततया ( 'घटो ज्ञानवान् ज्ञाततावत्त्वात्,' इत्यादिना ) ज्ञानविषयकानुमितिर्ज्ञायमाना प्रामाण्यमपि ( घटत्ववति घटत्वप्रकारकत्वरूपं प्रामाण्यमपि ) विषयीकरोति, इति । ( त० प्र० ख० ४ । पृ० १३० ) [ ख ] 'घटो घटत्वप्रकारकज्ञानविशेष्यः, घटत्वप्रकारकज्ञाततावत्त्वात्' इत्यनेन घटे घटत्वप्रकारकज्ञानविशेष्यत्वानु-

ग्राह्यम्, उत्पाद्यं च, इति नैयायिकाः प्राहुः । तदुक्तम्–"प्रमाणत्वा-

१ अयं भावः–[क] प्रामाण्यस्य स्वतो ग्रहे,–अनभ्यासदशोत्पन्नज्ञाने* तत्संशयो न † स्यात् । ज्ञानग्रहे प्रामाण्यनिश्चयात् । अनिश्चये वा न स्वतः प्रामाण्यग्रहः । ज्ञानाग्रहे धर्मिज्ञानाभावात् न संशयः । (चि० १ । प्रामा० पृ० १८९) [ख] यदि मीमांसकाः प्रमात्वस्य स्वतो ग्राह्यत्वं स्वीकुर्युस्तदा–अनभ्यासदशायां (प्राथमिकजलज्ञानग्रहोत्तरदशायाम्) तन्मते प्रामाण्यसंशयानुपपत्तिः । तथा हि–ज्ञानग्रहानन्तरम् 'किंचिज्जातं मे यत् जलज्ञानम्, तत् प्रमा न वा' इति प्रामाण्यसंशयो लोकेऽनुभवसिद्धः, स न स्यात् । तन्मते–ज्ञानग्रहे प्रमात्वस्यापि निश्चितत्वेन तत्संशयायोगात्, इति । अतः–परत एव (अनुमानादिना) प्रमात्वमवश्यं ग्राह्यम्, इति । (त० कौ० पृ० १८) परतस्त्वं च ज्ञानसामान्यग्राहकातिरिक्तग्राह्यत्वम् । ईदृशपरतस्त्वं (ज्ञप्तौ) क्वचित्–द्वितीयानुव्यवसायमादाय, क्वचित्तु अनुमानमादाय बोध्यम् । तथा हि–परतो ग्रहणे प्रमाणमनुमानम् । तच्च, 'विमता प्रमा ज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वे सति तद्विशेषत्वादप्रमावत्' इति । (सर्व० जैमि० पृ० १३३) तथा च [क] द्वितीयानुव्यवसायेन क्वचित्प्रामाण्यग्रहे च प्रामाण्यरूपसाध्यप्रसिद्धौ अनुमानमपि प्रामाण्यग्राहकम् । तद्यथा–इदं (पुरुषज्ञानम्‡) प्रमा, करादिमति पुरुषज्ञानत्वात् संप्रतिपन्नवत्'; यद्वा–यन्नैवं तन्नैवम्', इति व्यतिरेकी । (न्या० म० ४ । पृ० ३५) [ख] अत्र च परतस्त्वं द्विविधम् । ज्ञप्तौ परतस्त्वम् उत्पत्तौ परतस्त्वम् § । आद्यं यथा,–प्रथमजलज्ञानानन्तरं

मितिर्ज्ञायमाना घटविशेष्यकघटत्वप्रकारकत्वं ज्ञानेऽपि विषयीकरोति; तयोः समानवित्तिवेद्यत्वात्, इति भावः । (म० प्र० पृ० ६७)

* तदर्थश्च—अनभ्यासदशोत्पन्नम्, प्रामाण्यव्याप्यवत्तानिश्चयकालीनम्; तत्संशयः, 'इदं प्रमा, न वा' इति प्रामाण्यसंशयः । (मू० म० १ । प्रामा० पृ० १८९)

† अयं भावः—न च 'संशयस्थले ज्ञानग्रहोऽपि (प्रामाण्याश्रयज्ञानस्य विशेष्यस्य ग्रह एव) नास्ति' इति वाच्यम्; ज्ञानाग्रहे,–ज्ञानधर्मिक–प्रामाण्यतदभावकोटिक–संशयानुपपत्तेः, संशये धर्मिज्ञानस्य हेतुत्वात्, इति । (चि० १ । प्रा० पृ० १८८–१८९) (त० कौ० पृ० १८)

‡ तदर्थश्च—'इदम् (द्वितीयानुमानेनागृहीतप्रामाण्यकम्) पुरुषज्ञानं प्रमा (पुरुषत्ववद्विशेष्यकत्वे सति पुरुषत्वप्रकारकत्ववत्); करादिमति (करादिमद्विशेष्यकत्वे सति) पुरुषत्वप्रकारकज्ञानत्वात्, संप्रतिपन्नवत् (द्वितीयानुव्यवसायेन गृहीतप्रामाण्यकपुरुषज्ञानवत्)' इति; यद्वा–'यन्न पुरुषत्ववति पुरुषत्वज्ञानम्, तन्न करादिमति पुरुषत्वज्ञानम्, यथा स्थाणौ पुरुषत्वभ्रमः' इति व्यतिरेकी । (न्या० म० पृ० ३५) (त० प्र० ख० ४ । पृ० १३२) (म० प्र० ४ । पृ० ७१)

§ अत्र प्रामाण्यस्य परत उत्पत्तिकत्वं च ज्ञानसाक्षाद्विभाजकोपाध्यवच्छिन्नकार्यताप्रतियोगिककारणतानिरूपितकार्यतावत्त्वम् । (मू० म० प्रामा०)

प्रमाणत्वे स्वतः सांख्याः समाश्रिताः । नैयायिकास्ते परतः, सौगताश्चरमं स्वतः ॥ प्रथमं परतः प्राहुः प्रामाण्यं, वेदवादिनः । प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणताम्" इति । ( सर्व० जैमि० पृ० १३१ ) एवम्—नैयायिकमते अप्रमात्वमपि परत एव ( अनुमानादिना ) गृह्यते, उत्पद्यते च, इति । ( चि० १ । प्रामा० ) ( त० दी० पृ० ३७ )

---

प्रवृत्तौ* सत्यां जललाभे† सति, 'पूर्वोत्पन्नज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात्, यत्प्रमा न भवति तत्समर्थप्रवृत्तिजनकं न भवति यथाऽप्रमा ( जलभ्रमः )' इति व्यतिरेकिणानुमानेनानभ्यासदशापन्नज्ञाने प्रमात्वं निश्चीयते, इति । अभ्यासदशापन्नज्ञानेषु तु ( द्वितीयतृतीयादिजलादिज्ञानेषु तु) प्रवृत्तेः पूर्वमप्यन्वयव्यतिरेकिणापि पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेन प्रामाण्यमवधार्यते । तद्यथा—'द्वितीयादिजलज्ञानं प्रमा समर्थप्रवृत्तिजनकजातीयत्वादाद्यजलज्ञानवत्' इति । ( त० कौ० पृ० १८ ) ( नील० )

द्वितीयं तु ( उत्पत्तौ परतस्त्वम् ) प्रमाया गुणजन्यत्वरूपम् । तद्यथा—( १ ) प्रत्यक्षप्रमायां विशेषणवद्विशेष्यसंनिकर्षात्मकगुणजन्यत्वम् । ( त० दी० पृ० ३६ ) ( २ ) भूयोवयवावच्छेदेनेन्द्रियसंनिकर्षात्मकगुणजन्यत्वम् । एवमनुमितौ, व्यापकवति व्याप्यवत्ताज्ञानरूपगुणजन्यत्वम्, उपमितौ यथार्थसादृश्यज्ञानात्मकगुणजन्यत्वम्, शाब्दबोधे च यथार्थयोग्यताज्ञानरूपगुणजन्यत्वम् यथार्थवक्तृवाक्यार्थज्ञानरूपगुणजन्यत्वं वा, उत्पत्तौ परतस्त्वम्, इत्याद्यूहनीयम् । ( नील० पृ० ३७ ) ( म० प्र० ४ । पृ० ७३ )

१ अत्रानुमानादिनैवाप्रमात्वं ‡ गृह्यते ( अनुमीयते ) । तत्र हेतुः—पुरोवर्तिनि प्रकाराभावस्य व्यवसायेनाविषयीकरणात् । तथा च—प्रत्यासत्तेरभावादप्रमात्वस्यानुव्यवसायेन ग्रहणं न भवति, इति भावः । एवं च—अनुमानादिग्राह्यत्वाज्ज्ञप्तौ परतस्त्वं इदम्, इति बोध्यम् । ( नील० पृ० ३७ ) अत्र, अप्रमायाः पित्त-मण्डूकवसाञ्जन-चाकचक्य-दूरत्वादि-§दोषजन्यत्वादुत्पत्तौ परतस्त्वमिति बोध्यम् । ( सि० च० )

---

* अनभ्यासदशापन्नजलादिज्ञाने ( प्राथमिकजलादिज्ञाने ) जाते तत्र प्रामाण्यसंशये सत्यपि पुरुषः प्रवर्तते, इति विशेषोऽत्र द्रष्टव्यः । ( त० कौ० पृ० १८ )

† अत्रेदं बोध्यम्—प्रथमं जलजलत्वयोर्निर्विकल्पकम्, ततः 'इदं जलम्' इति विशिष्टज्ञानम्, तत इच्छा, ततः प्रवृत्तिः, तदनन्तरं जललाभः, इति । ( सि० च० )

‡ अत्रानुमानप्रयोगस्त्वित्थम्—'इदं ज्ञानमप्रमा, विसंवादिप्रवृत्तिजनकत्वात्, यन्नैवम् तन्नैवम् यथा प्रमा' इति । ( नील० प्रामा० पृ० ३७ )

§ अत्र—पित्तदूरत्वादिदोषोऽननुगतोऽप्यन्वयव्यतिरेकाभ्यां हेतुर्भवति, इति विज्ञेयम् । ( म० प्र० प्रामा० पृ० ७३ )

( सि० च० ) [ २ ] भ्रमभिन्नज्ञानत्वम् । यथा–प्रमाणशब्द इत्यत्र प्रमात्वम् । ( त० प्र० परि० ४ । पृ० ६ )

**प्रमादः**—( दोषः ) [ १ ] [ क ] पूर्वं कर्तव्यतया निश्चितेऽप्यकर्तव्यताधीः[1] । ( गौ० वृ० ४ । ३ )

[ ख ] पूर्वमकर्तव्यतया निश्चितेऽपि कर्तव्यताधीः । यथा–"प्रमादात्कुर्वतां कर्म" इत्यादौ । ( स्व० ) [ २ ] कर्तव्येऽकर्तव्यत्वधिया ततो निवृत्तिः; अकर्तव्ये कर्तव्यत्वधिया तत्र प्रवृत्तिर्वा प्रमादः, इति केचिदाहुः । ( वाच० ) [ ३ ] अनवधानता, इति काव्यज्ञा आहुः । ( अमरः )

**प्रमितत्वम्**—१ [ क ] प्रमाविषयत्वम् । यथा—घटे 'स घट अस्ति' इति ज्ञानविषयत्वम् । ( स्व० ) यथा वा—स्थावरजङ्गमात्मकस्य सर्वस्य जगतः प्रमितत्वम् ।

[ ख ] क्वचित्,–स्वविशेष्यकप्रमाप्रकारत्वम् । ( ग० बाध० ) २ परिमितत्वम् ।

**प्रमितिः**—प्रमावदस्यार्थोऽनुसंधेयः । ( कु० टी० ४ । ९ )

**प्रमेयम्**—१ [ क ] योऽर्थः ( तत्त्वतः ) प्रतीयते तत्प्रमेयम्[2] । ( वात्स्या० ( १ । १ । १ । प्रस्तावना० ) यथा—घटपटादि सर्वं जगत्प्रमेयम् । यथा वा—मायावादिमते विशुद्धं चैतन्यमेव प्रमेयम् । ( स्व० )

[ ख ] परिच्छेद्यम् । २ संसारहेतुमिथ्याज्ञानविषयः; मोक्षहेतुधीविषयो वा । यथा—आत्मशरीरादि प्रमेयम्[3][4] । ( गौ० वृ० १ । १ । ९ ) ३ अवधारणविषयः ( अवधार्यम् )' इति काव्यज्ञा आहुः ।

---

१ एवं वैपरीत्येऽपि । (गौ० वृ० ४ । ३)

२ अत्र प्रमेयत्वं च [ क ] ईश्वरीयप्रमाविषयत्वम्* । ( त० दी० २ ) [ ख ] प्रमाविषयत्वम् ।

३ न्यायनये द्वादशविधं † प्रमेयम् । आत्मा, शरीरम्, इन्द्रियम्, अर्थः, बुद्धिः, मनः, प्रवृत्तिः, दोषः, प्रेत्यभावः, फलम्, दुःखम्, अपवर्गश्च, इति । ( गौ० १ । १ । ९ )

४ अत्र प्रमेयत्वं च तत्त्वज्ञाननियामकतावच्छेदकम्, इति ज्ञेयम् ।

---

* तच्च केवलान्वयि; सर्वस्यापि जगत ईश्वरज्ञानरूपप्रमाविषयत्वात् । ( न्या० म० )

† लक्षणं चात्माद्यन्यान्यत्वम् । ( गौ० वृ० १ । १ । ९ )

**प्रयत्नः**—( गुणः ) १ [ क ] प्रयत्नः; संरम्भः; उत्साहः; इति पर्यायः । ( प्रशस्त० २ । पृ० ३३ )

[ ख ] प्रयत्नत्वसामान्यवान् उत्साहरूपः । ( त० कौ० ) स च कृतिरित्युच्यते । ( त० सं० )

[ ग ] प्रयत्नव्यवहारसाधारणं कारणम् । ( प्र० प्र० १७ ) यथा—पचतीत्यादौ तिबर्थः । एनं प्रयत्नं विभजते—( १ ) स त्रिविधः । प्रवृत्तिः, निवृत्तिः, जीवनयोनियत्नश्चेति । ( भा० प० श्लो० १५० ) ( वाक्य० गु० पृ० २१ ) ( २ ) स ( प्रयत्नः ) द्विविधः । जीवनपूर्वकः, इच्छाद्वेषपूर्वकश्च । तत्र जीवनपूर्वकः,—सुप्तस्य प्राणापानसंतानप्रेरकः, प्रबोधकाले चान्तःकरणस्येन्द्रियान्तरप्राप्तिहेतुः । इतरस्तु ( इच्छा-द्वेषपूर्वकस्तु )—हिताहितप्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः, शरीरविधारकश्च, आत्ममनसोः संयोगात् इच्छापेक्षात्, द्वेषापेक्षाद्वा, उत्पद्यते । ( प्रशस्त० २ । पृ० ३३ ) २ फलार्थिभिः प्रारब्धस्य कर्मणोऽवस्थापञ्चकान्तर्गतोऽवस्थाविशेषः प्रयत्नः, इति साहित्यशास्त्रज्ञा आहुः । ( वाच० ) ३ प्रयासः, इति काव्यज्ञा आहुः ।

**प्रयुक्तत्वम्**—१ प्रयोज्यत्वम् । तच्च 'कारणाभावात्कार्याभावः' इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः । यथा—दण्डाभावाद्घटाभाव इत्यादौ

---

१ स च मनोग्राह्यः ( भा० प० श्लो० ५८ ), निराकारः, सविषयकः, आत्ममात्रधर्मश्च, इति विज्ञेयम् ।

प्रयत्नलक्षणं च [ क ] कृतित्वजातिमत्त्वम् । ( वाक्य० गु० पृ० २१ ) [ ख ] संस्कारेच्छाभिन्नत्वे सति संबन्धानवच्छिन्नप्रकारताकत्वम् । ( ल० व० )

२ तथा चोक्तम्—"प्रयत्नस्त्वात्मधर्मः स्यादुत्साहो भावना च सः" इति । ( ता० र० परि० १ । श्लो० ४६ )

३ प्रयत्नव्यवहारश्च 'अहं यते, स यतते' इत्यादिव्यवहारः ।

४ अस्य जीवनसंज्ञकस्यात्ममनसोः संयोगात् धर्माधर्मापेक्षादुत्पत्तिः । ( प्रशस्त० २ । पृ० ३३ ) शिष्टं तु जीवनयोनिशब्दव्याख्यानावसरे संपादितम् ।

५ तदुक्तम्—"प्रयत्नस्तु फलावाप्त्यै व्यापारोऽतित्वरान्वितः" इति । ( सा० द० परि० ६ । श्लो० ३२६ )

घटाभावाद्यन्वयि पञ्चम्यर्थः प्रयुक्तत्वम् । ( मू० म० १ ) ( गौ० वृ० १ । १ । २ ) ( ग० हेत्वा० साधा० पृ० २४ ) यथा वा—"पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा" ( त० सं० ) इत्यादौ प्रयुक्तत्वम् । ( नील० ४ । पृ० ३२ ) २ क्वचित्तु,—व्यापकत्वम् । यथा—दीधितिहेत्वाभाससामान्यनिरुक्तौ 'अत्र वदन्ति' इति कल्पे—"यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तः, तदुत्तरमनुमितौ द्वयोर्व्यतिरेकः" इति हेत्वाभाससामान्यलक्षणस्य 'निर्वह्निर्वह्निमान्' इत्यादौ बाधाद्यव्याप्त्यापत्तिवारणार्थं प्रथमयत्नुकारेण प्रयुक्तपदस्य 'व्यापकत्ववान्' इत्यर्थः स्वीकृतः । ( ग० २ । हेत्वा० सामा० पृ० २७ ) ३ प्रयोगकर्मत्वम् । यथा—"शब्दः प्रयुक्तः, वाक्यं प्रयुक्तम्" इत्यादौ शब्दवाक्ययोः प्रयुक्तत्वम् । ४ प्रेरितत्वम्, इति काव्यज्ञा आहुः ।

**प्रयोगः**—१ अनुमानम् । ( वै० उ० ७ । १ । ७ ) २ उदाहरणम् । ३ शब्दोच्चारणम् । तत्र ( क ) नैयायिकाः,—अनुमानाङ्गपञ्चावयववाक्योच्चारणम् । यथा—"अत्रायं प्रयोगः" इत्यादौ 'पर्वतो वह्निमान् धूमात्' इत्यादिप्रयोगः, इत्याहुः । ( ख ) शाब्दिकास्तु,—शब्दानां यथायोगं समभिव्याहृतत्वेनोच्चारणं प्रयोगः, इति वदन्ति । ४ यज्ञादिक्रियाकलापेतिकर्तव्यताबोधकानां समुच्चयप्रतिपादकः पद्धत्यपरपर्यायो ग्रन्थः, इति याज्ञिका आहुः । ५ उत्तमर्णेन स्वद्रव्यस्य वृद्ध्यर्थमधमर्णाय दानं प्रयोगः, इति व्यवहारज्ञा वदन्ति । ६ भूतप्रेताद्युच्चाटनसाधनमन्त्रोच्चारणाद्यनुष्ठानम्, इति तान्त्रिका आहुः । ७ नायकयोर्मेलने क्रियाविशेषः, इत्यालंकारिका आहुः । ८ शस्त्रादिमोचनम्, इति योद्धारो वदन्ति ।

**प्रयोगविधिः**—( विधिः ) [ क ] प्रयोगाविलम्बबोधको विधिविशेषः ।

---

१ एवं च—प्रथमयत्नुकारमते—'विरोधिविषयकयद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकः, प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व—साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्व—एतदुभयाभावः, तत्त्वम् हेतुदोषत्वम्' इति पर्यवसितोऽर्थः । ( ग० हेत्वा० सामा० पृ० २७ )

२ स च ( प्रयोगविधिः ) प्रयाजाद्यङ्गजातवाक्यैकवाक्यतामापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिप्रधानविधिरेव उक्तवक्ष्यमाणविधित्रयमेलनरूपश्चतुर्थोऽयं विधिः; न तु विध्यन्तरम् । ( लौ० भा० टी० पृ० ३० )

[ ख ] अङ्गानां क्रमबोधको विधिः । ( लौ० भा० पृ० ३०–३१ )
[ ग ] अनुष्ठीयमानपदार्थानां क्रमबोधको विधिः । यथा–"वेदं कृत्वा वेदिं करोति" इत्यादिः । यथा वा–"अग्निहोत्रं जुहोति, यवागूं पचति" इत्यादि । ( म० प्र० ४ । पृ० ६२ )

**प्रयोजकत्वम्**—[ १ ] [ क ] परम्परया ( न तु साक्षात् ) कार्यजनकत्वम् । ( त्व० ) यथा–काश्यां मरणान्मुक्तिरित्यादौ मोक्षं प्रति काशीमरणस्य प्रयोजकत्वम् । ( त० प्र० १ । मङ्गलवादे )

[ ख ] स्वरूपसंबन्धविशेषः । यथा–"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानां मध्ये यदुत्तरोत्तरम्, तेषामपाये तत्पूर्वस्यापायादपवर्गः" इत्यादौ पञ्चम्यर्थः । यथा वा–दण्डाभावाद्घटाभाव इत्यादौ दण्डाद्यन्वयी पञ्चम्यर्थः प्रयोजकत्वम् । ( गौ० वृ० १ । १ । २ ) [२] हेतुत्वम् । तच्च ज्ञाप-

---

१ अत्र क्रमो नाम विततिविशेषः * पौर्वापर्यरूपो वा ।

तन्नियमे षट् प्रमाणानि भवन्तीत्याह–तत्र ( क्रमे ) षट् प्रमाणानि श्रुति-अर्थ-पाठस्थान-मुख्य-प्रवृत्ति-इत्याख्यानि, इति । ( लौ० भा पृ० 31 ) ( म० प्र० ४ । पृ० ६२ ) अत्र 'उत्तरोत्तरमपेक्ष्य पूर्वपूर्वं बलीयः' इति विज्ञेयम् ।

२ अत्र क्रमस्तु [ क ] अव्यवहितोत्तरत्वम् । ( भाट्टदी० ) [ ख ] अव्यवहितपौर्वापर्यम् । स च ( प्रयोगविधिः ) अङ्गविध्येकवाक्यतापन्नः प्रधानविधिरेव; तेन क्रमेण ( केवलक्रमेण ) पदार्थानामनुष्ठानात् । ( म० प्र० ४ । पृ० ३२ ) ( लौ० भा० ३१—३३ )

३ अत्र 'पाठक्रमादर्थक्रमो बलीयान्' इति पाठक्रमं परित्यज्यार्थक्रम एवाश्रीयते । इत्थं च—पूर्वं यवागूपाकः, ततो यवाग्वाऽग्निहोत्रहोमः, इति । ( म० प्र० पृ० ६२ ) ( लौ० भा० 33 )

४ 'अत्रेदं तत्त्वम्–"यस्यानुकूलतर्कोऽस्ति स एव स्यात्प्रयोजकः"(हेतुः), इति । यस्यानुकूलतर्काभावः, सोऽन्यथासिद्धः । ( ता० र० श्लो० ८७–८८ )

५ अत्र—मुक्तौ तत्त्वज्ञानस्यैव साक्षात्कारणत्वम्; काशीमरणस्य तु मुक्तौ परंपरया कारणत्वम्, इति तस्य प्रयोजकत्वं ज्ञेयम् । ( त० प्र० १ । मङ्गल० )

६ अत्र वदन्ति—कारणस्य † यत् कारणम्, तस्य प्रयोजकत्वम्, इति ।

---

* विततनं वितानो वा विततिः; 'तनु विस्तारे' इति धातोर्भावे क्तिः । तथा च—बहुभिः कर्तृभिर्युगपत् कृतानामपि पदार्थानां वितानविशेषो भवत्येव, न तु क्रमव्यवहारः, इत्यरुच्या लक्षणान्तरमाह—पौर्वापर्येति । ( लौ० भा० टी० पृ० 31 )

† अत्र गुरुचरणाः प्राहुः—तन्निष्ठान्यथासिद्धिभिन्नान्यथासिद्धिशून्यत्वे सति कार्याव्यवहितपूर्ववृत्तित्वम्, इति ।

कज्ञानविषयत्वम् । यथा—पर्वतो वह्निमान् धूमादित्यादौ धूमस्य प्रयोजकत्वम् । ( ग० व्यु० का० ३ । पृ० ८७ ) [ ३ ] वैयाकरणास्तु,—हेतुसंज्ञककर्तृत्वम् । यथा—"तत्प्रयोजको हेतुश्च" ( पा० सू० १ । ४ । ५५ ) इत्यादौ, इत्याहुः । यथा वा धर्मशास्त्रे—"प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः । यो भूय आरभते तस्मिन् फलविशेषः" ( आपस्त० सू० २ । ११ । २९ । १—२ ) इत्यादौ प्रयोजकत्वम् ।

**प्रयोजनम्**[3]—[ क ] यमर्थमधिकृत्य प्रवर्तते, तत् प्रयोजनम् । ( गौ० १ । १ । २४ ) यमर्थमाप्तव्यं हातव्यं वाऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति, प्रयोजनं तद्वेदितव्यम् । प्रवृत्तिहेतुत्वादिममर्थमाप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः । एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति । ( वात्स्या० १ । १ । २४ )

[ ख ] येन प्रयुक्तः प्रवर्तते, तत् प्रयोजनम् । यमर्थमभीप्सञ्जिहासन्वा कर्मारभते, तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः । तदाश्रयश्च न्यायः प्रवर्तते । ( वात्स्या० १ । १ । १ ) ( त० भा० पृ० ४२ ) ( न्या० वा० १ । पृ० १४ )

[ ग ] यदुद्दिश्य प्रवर्तन्ते पुरुषास्तत्प्रयोजनम् । ( ता० र० श्लो० ९६ )

---

१ अत्रोक्तं हरिणा—"प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिता" इति । अधिकं तु—'णि' शब्दव्याख्यानावसरे संपादितम् ।

२ अत्र प्रयोजकस्य हन्तृत्वम् ( प्रा० वि० ) निर्णीतं यथा—निरन्तरव्यापाराव्यवधानेन वधनिष्पादकः कर्ता; यः कर्तारं कारयति स प्रयोजकः । सोऽपि द्विविधः । तत्रैकः,—स्वतोऽप्रवृत्तं पदातिं वेतनादिना वधार्थे प्रवर्तयति । अपरस्तु,—स्वतः प्रवृत्तमेव मन्त्रोपायोपदेशादिना प्रोत्साहयति, इति । ( वाच० )

३ अत्र वार्तिककारा आहुः—धर्मार्थकाममोक्षैः प्रयुज्यत इति केचित् । वयं तु पश्यामः—सुखदुःखाप्तिहानिभ्यां प्रयुज्यत इति । सुखदुःखसाधनभावात्तु सर्वेऽर्थाश्चेतनं प्रयोजयन्तीति । तदिदं प्रयोजनं न्यायस्याश्रयः । ( न्या० वा० १ । पृ० १४ )
लक्षणं तु प्रयोजनत्वमेव । तच्च प्रवृत्तिहेत्विच्छाविषयत्वम् * । ( गौ० वृ० १ । २४ )

---

* विषयत्वं च साध्यताख्यविषयताविशेषः । ( गौ० वृ० १ । २४ )

[घ] साध्यतयेच्छाविषयः। (दि० १) यथा—सुखं दुःखहानिश्च प्रयोजनम्। (त० दी०) (त० भा० पृ० ४२) प्रयोजनं द्विविधम्। मुख्यम्, गौणं च। तत्राद्यम्,—सुखं दुःखहानिश्च। द्वितीयम्,—यागभोजनादिकम्। (गौ० वृ० १। २४)

**प्रयोज्यत्वम्**—[१] प्रयोजकत्वनिरूपकत्वम्। [२] प्रयुक्तत्ववदस्यार्थोऽनुसंधेयः।

**प्रलयः**[3]—[१] अभावः (ध्वंसः)। (गौ० वृ० ४। २। ८०),

---

१ तल्लक्षणं तु स्वतः प्रयोजनत्वम्। तच्च [क] निरुपाधीच्छाविषयत्वम्। (चि० ४) (गौ० वृ० १। २४) [ख] इतरेच्छानधीनेच्छाविषयत्वम्। (ख०) [ग] समानाधिकरणेच्छाऽजन्येच्छाविषयत्वम्। [घ] प्रयोजनाजनकप्रयोजनत्वम्। (न्या० सि० दी० पृ० ७०)

२ तल्लक्षणं च मुख्यप्रयोजनेच्छाधीनेच्छाविषयत्वम् (गौ० वृ० १। २४)

३ प्रलयसद्भावे* प्रमाणं च श्रुतिः। सा च "धाता यथापूर्वमकल्पयत्" इति। (सि० च० १। पृ० ९) (त० दी० वायुनि० पृ० १०)

इदानीं प्रलयक्रमः कथ्यते—'साकारोपासनापरिवासितचेतसो यतयस्ते हिरण्यगर्भपदवीमनुप्राप्यापवृज्यन्ते' इत्यागमात्, ब्रह्मणो जीवभूतस्य ब्राह्मशतवर्षपर्यंतस्यापवर्गसमये शरीरिणां विश्रामार्थमीश्वरस्य संजिहीर्षा जायते। तदनन्तरं सर्वजीवगतादृष्टवृत्तिनिरोधे † आत्मसंयोगतो देहाद्यारम्भकपरमाणुषु (प्रथमं पृथिवीपरमाणुषु, एवं जलादिपरमाणुषु च) कर्मोत्पद्यते। ततः परमाणुद्वयविभागः। ततः परमाणुद्वयसंयोगनाशः,‡ ततो द्व्यणुकनाशः, ततस्त्र्यणुकनाशः। एवं चतुरणुकादिनाशक्रमेण महापृथिव्यादीनां§ नाशः। ततः प्र-

---

* मीमांसकास्तु,—संसारप्रवाहस्य बीजाङ्कुरन्यायेनानादित्वादनन्तत्वाच्च प्रलयसद्भावे मानाभावः, इत्यूचुः। (सि० च० १। पृ० ९)

† यथा सुषुप्तौ कतिपयजीवानां युगपददृष्टवृत्तिनिरोधः, तथा प्रलये सर्वेषामेव जीवानां युगपददृष्टवृत्तिनिरोधो भवतीति। (त० व० पृ० १२५)

‡ अत्र प्राञ्चः,—क्वचित्समवायिकारणनाशाद्द्रव्यनाशः (त्र्यणुकादिनाशः)। क्वचिदसमवायिकारणनाशाद्द्रव्यनाशः (द्व्यणुकनाशः), इत्यङ्गीचक्रुः। नव्यास्तु,—लाघवात्सर्वत्रासमवायिकारणनाशाद्द्रव्यनाशमङ्गीचक्रुः। (सि० च० १। पृ० ९)

§ इत्थं तेषां नाशः—पृथिव्युदकज्वलनपवमानानामपि—उदके सति पृथिव्याः, ज्वलने सत्युदकस्य, पवने सति ज्वलनस्य, पश्चात्पवनस्य च विनाशः, इति। (प० मा० कालनि० पृ० ९३) (प्रशस्त० पृ० ६) (त० व० परि० ५। श्लो० ५–६। पृ० १२५)

(गौ० ४।२।१९–१६) यथा–विश्वस्थितिप्रलयसर्गमहाविभूतीत्यादौ। न्यायमते स द्विविधः। खण्डप्रलयः, महाप्रलयश्च। (स्व०) तत्राद्यः सकलकार्यद्रव्यानाधार-कार्याधिकरणसमयः। (न्या० सि० दी० पृ० ७६) (दि० ४। पृ० १८९) [२] त्रैलोक्यनाशः, इति मायावादिन आहुः। (वेदा० परि० विषयप० पृ० ८१) [३] पौराणिकास्तु,–भूतादिलयाधारः कालविशेषः प्रलयः। स च चतुर्विधः। नित्यः, नैमित्तिकः, प्राकृतः, आत्यन्तिकश्च, इत्याहुः।

मायावादिनां मतेऽपि प्रलयश्चतुर्विधः। नित्यः, प्राकृतः, नैमित्तिकः, आत्यन्तिकश्चेति। तत्र नित्यप्रलयः सुषुप्तिः। प्राकृतप्रलयस्तु,–कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशः। नैमित्तिकप्रलयस्तु,–कार्यब्रह्मणो

विभक्ताः *परमाणवो दोधूयमाना अवतिष्ठन्ते, अदृष्टसंस्कारविशिष्टा आत्मान आकाशादयश्चावतिष्ठन्ते तावन्तमेव कालम् (शतवर्षम्)। अयमेव 'खण्डप्रलयः' इति, 'अवान्तरप्रलयः' इति चोच्यते। (प० मा० कालनि० पृ०९३) (त० व० पृ०१२५) (त० दी०)। महाप्रलयानन्तरं न सृष्टिः; सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात्, इति। (प० मा० पृ० ९३) [ख] चतुर्णां महाभूतानां संहारविधिरुच्यते—ब्राह्मेण मानेन वर्षशतान्ते वर्तमानस्य ब्रह्मणोऽपवर्गकाले, संसारे खिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनाधिपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियभूतोपनिबन्धकानां सर्वात्मगतानामदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः तत्संयोगनिवृत्तौ तेषामा परमाण्वन्तो विनाशः। तथा—पृथिव्युदकज्वलनपवमानानामपि महाभूतानामनेनैव क्रमेणोत्तरस्मिन्नुत्तरस्मिन् सति पूर्वस्य पूर्वस्य विनाशः। ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते; धर्माधर्मसंस्कारानुविद्धा आत्मानस्तावन्तमेव कालम्। (प्रशस्त० १। पृ० ६)

१ समुदायश्लोकस्तु—"विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः। यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि" इति। (द्वाद० स्तो० अ० ७। श्लो० १)

२ सचागमप्रतिपाद्यः। आगमस्तु–"नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्नचान्यत्" इति। (दि० ४। पृ० १८९)

३ अत्र कूर्मपुराणम्—नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा। चतुर्धाऽयं पुराणेऽस्मिन्

* अत्रोच्यते—"दोधूयमानास्तिष्ठन्ति प्रलये परमाणवः" इति। (भाष्य-कन्दली०) (प० मा० कालनि० पृ० ९३)

दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयः । चतुर्थस्तु,—ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः । स चैकजीववादे युगपदेव, नानाजीववादे तु क्रमेण; "सर्वे एकीभवन्ति" इत्यादिश्रुतेः । ( वेदा० प० विषयप० पृ० ८३-८४ ) इति । किं च—युगप्रलयः, मनुप्रलयः, दिनप्रलयः, महाप्रलयश्चेति भेदेन चतुर्विधः प्रलयः, इत्यपि पौराणिका वदन्ति । [ ४ ] नष्टचेष्टता ( नैमित्तिकप्रलयः ), इति काव्यज्ञा आहुः ।

**प्रवरः**—ऋषेर्नाम । ( मिता० अ० १ । श्लो० ९३ ) यथा—भार्गववीतहव्य-सावेतसाः, इति मम ( न्यायकोशकर्तुर्भीमाचार्यस्य ) त्रयः प्रवराः । ( स्व० )

**प्रवर्तकम्**—प्रवृत्तिजनकम् । यथा—नव्यनैयायिकमते, बलवदनिष्टाननुब-

---

प्रोच्यते प्रतिसंचरः, इति । तत्र नित्यो यथा—योऽयं संदृश्यते नूनं नित्यं लोके *क्षयस्त्विह । नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसंचरः ॥ नैमित्तिको यथा—ब्राह्मो नैमित्तिको † नाम कल्पान्ते यो भविष्यति । त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥ प्राकृतो यथा—महदाद्यं विशेषान्तं यदा संयाति संक्षयम् । प्राकृतः ‡ प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥ आत्यन्तिको यथा—ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि । प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥ आत्यन्तिकश्च कथितः प्रलयो लयसाधनः । इति ।

१ बलवदनिष्टेत्यत्र बलवद्द्वेषे, इष्टसाधनत्वघटकेच्छायाम्, कृतिसाध्यताघटककृतौ, च इदानीं-

---

* अत्र मायावादिन आहुः—नित्यप्रलयो नाम सुषुप्तिः । तस्याः सकलकार्यप्रविलयरूपत्वात् धर्माधर्मपूर्वसंस्काराणां च तदा कारणात्मनाऽवस्थानम् । यद्वा—अन्तःकरणस्य द्वे शक्ती । ज्ञानशक्तिः, क्रियाशक्तिश्च । तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः; न क्रियाशक्तिविशिष्टस्य, इति प्राणाद्यवस्थानमविरुद्धम्, इति । ( वेदा० प० विषय० प० पृ० ८१-८२ )

† तत्र नैमित्तिकप्रलयकालश्च कल्पतुल्यः; "यदा स देवो जागर्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति" इति ( मनु० अ० १। श्लो० ५२ ) मनुना हिरण्यगर्भस्य निद्रासमये तत्प्रलयस्योक्तेः । ( वाच० )

‡ अयमेव प्रलयः, 'खण्डप्रलयः' इति, 'अवान्तरप्रलयः' इति च नैयायिकैर्व्यवह्रियते, इति ज्ञेयम् । ( स्व० )

न्धीष्टसाधनत्वे सति कृतिसाध्यताविषयकं ज्ञानं प्रवर्तकम् । यथा वा—जरन्नैयायिकमते, इष्टसाधनताविषयकं कृतिसाध्यताज्ञानमेव प्रवर्तकम् । यथा वा—प्राभाकरमते— ( क ) स्वविशेषणवत्ताप्रतिसंधानजन्यं कार्यताज्ञानं प्रवर्तकम्, इति । ( चि० ४ ) ( न्या० म० ४ । पृ० २६—२७ ) ( दि० गु० पृ० २२२—२२४ ) ( ख ) यथा वा—"चोदनेति,—क्रियायाः ( नियोगस्य ) प्रवर्तकं ( ज्ञानद्वारा प्रवर्तकम् ) वचनम्" इत्यादौ । ( शाबरभाष्यम् )

अधिकं तु 'विधि, प्रवृत्ति' शब्दव्याख्यानावसरे सविस्तरं संपादयिष्यते, इति तत् तत्र द्रष्टव्यम् ।

---

तनत्वं विशेषणं देयम् । तेन वक्ष्यमाणं सर्वं संगच्छते, नानुपपत्तिश्च । तथा हि—दोषदूषितचित्तो विषभक्षणादौ प्रवर्तते; इदानीं बलवदनिष्टाननुबन्धित्वज्ञानात् । तृप्तश्च भोजने न प्रवर्तते; इदानीमिष्टसाधनत्वाज्ञानात् । भावियौवराज्ये बालस्य न प्रवृत्तिः, इदानीं कृतिसाध्यत्वाज्ञानात्, इति । ( दि० गु० पृ० २२५ )

१ तदर्थश्च—स्वम् ( प्रवर्तमानः पुरुषः ), तत्र विशेषणम् ( काम्ये हि यागादौ* कामना, नित्ये हि *संध्यावन्दनादौ तु विहितकाल-शौचादि ), तद्वत्ता ( पक्षे तत्संबन्धः ), तस्य प्रतिसंधानम् (तत्संबन्धज्ञानम्, तज्ज्ञानमेव † वा परामर्शात्मकम् ), तेन जन्यम् कार्यताज्ञानम् ( कृतिसाध्यताज्ञानम्‡ अनुमित्यात्मकम् ), इति ।

अत्र—'तदानींतनं स्वविशेषणम्' इति वक्तव्यम्; तेन, तृप्तश्च भोजने न प्रवर्तते; तदानीं कामनायाः पुरुषविशेषणत्वाभावात् । 'प्रतिसंधानं च बलवदनिष्टाननुबन्धित्वविषयकम्' इति वक्तव्यम्; तेन, मधुविषसंपृक्तान्नभोजने न प्रवृत्त्यापत्तिः । एवं च—बलवदनिष्टाननुबन्धित्वविषयकं यत् स्वविशेषणवत्ताज्ञानम्, तज्जन्यं कृतिसाध्यताज्ञानं प्रवर्तकं भवति, इति निष्कृष्टोऽर्थः । ( दि० गु० पृ० २२३ )

---

* स्वर्गकामो यजेत, भोजनकामः पचेत, इत्यादौ काम्ये; अहरहः संध्यामुपासीतेत्यादौ नित्ये, इत्यर्थः ।

† तथा च—काम्यस्थले काम्यसाधनताज्ञानम्; नित्यस्थले तु शौचादिज्ञानम्, इत्यर्थः । ( दि० गु० पृ० २२३ )

‡ अत्रानुमानप्रयोगः,—[ १ ] काम्ये—'पाको मत्कृतिसाध्यो मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वात्' इति । ( दि० गु० पृ० २२३ ) [ २ ] नित्ये तु—'अहमिदानींतनकृतिसाध्यसंध्यावन्दनः; संध्यासमये शौचादिमत्त्वात्, पूर्वसंध्यायामहमिव' इति । ( चि० ४ )

**प्रवर्तनम्**
**प्रवर्तना** }—१ प्रवृत्तिहेतुत्वम् । ( गौ० वृ० १ । १ । १८ ) यथा—"प्रवर्तनालक्षणा दोषाः" ( गौ० १ । १ । १८ ) इत्यादौ । २ [ क ] यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वम्, तत् । यथा—स्वर्गकामो यजेत, जलमाहरेतेत्यादौ लिङर्थो विधिः प्रवर्तनम् । ( वै० सा० ) ( कु० ५ । ६ )

[ ख ] भट्टपादास्तु,—प्रवर्तयितुः प्रवृत्त्यनुकूलव्यापारविशेषः, इत्याहुः । ३ प्रवृत्तिजनकज्ञानविषयितावच्छेदिका, इति वैयाकरणा आहुः । ( दि० गु० पृ० २२६ )

**प्रवृत्तिः**—१ [ १ ] ( प्रयत्नः ) [ क ] उत्कटरागजन्यः प्रयत्नविशेषः । ( वै० वि० ३ । १ । १९ ) । ( वै० उ० ३ । १ । १९ )

---

१ अत्र यत्पदार्थ इष्टसाधनत्वम् । तथा च—इष्टसाधनत्वस्य ज्ञानं प्रवृत्तिं जनयतीति इष्टसाधनत्व* प्रवर्तनं भवति, इति ज्ञेयम् । ( वै० सा० द० )

२ अत्रोक्तम् "अस्ति प्रवर्तनारूपमनुरूपं चतुर्ष्वपि" इति । ( वाच० )

३ स च चेतनस्याभिप्राय एव; अचेतनस्य तु वेदस्याभिधानामा कश्चिच्छब्दसमवेतः शाब्दभावनापरपर्यायो लिङ्त्वांशेनोच्यते, इति । ( दि० गु० विधिनि० पृ० २२६ )

४ लक्षणं तु प्रवृत्तित्वमेव । तच्च, [ क ] रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः । ( गौ० वृ० १ । १ । १७ ) [ ख ] चिकीर्षाजन्यतावच्छेदको जातिविशेषः । ( मू० म० १ ) ( ल० व० पृ० १३७ ) [ ग ] चेष्टाजनकतावच्छेदकतया सिद्धो जातिविशेषः । ( श० प्र० श्लो० ९५ । पृ० १३७ )

प्रवृत्त्युत्पत्तावयं क्रमः—[ क ] प्रथमतः फलज्ञानम्; ततः फलेच्छा; तत इष्टसाधनताज्ञानम् उपाये; तत उपायेच्छा; ततः प्रवृत्तिरुत्पद्यते, इति । ( त० प्र० ख० ४ । पृ० १०३ ) [ ख ] प्रवृत्तिर्हीच्छामपेक्षते; इच्छा चेष्टसाधनताज्ञानम्; तच्चेष्टसजातीयत्वे लिङ्गानुभवम्; सोऽपीन्द्रियार्थसंनिकर्षम् । ( कु० ५ । ६ ) ( सर्व० जैमि० ) [ ग ] प्रवृत्तिं प्रति चिकीर्षा, † कृतिसाध्यताज्ञानम्, इष्टसाधनत्वज्ञानं च कारणम् । ( भा० प० श्लो० १५१ )

---

* मण्डनमिश्राणामपीदमेव मतम्, इति विज्ञेयम् । ( दि० गु० प्रयत्न-नि० पृ० २२६ )

† कृतिश्चात्र प्रवृत्तिरूपा बोध्या । तेन, जीवनयोनियत्नसाध्ये प्राणपञ्चकसंचारे न प्रवृत्तिः । ( मु० गु० पृ० २२५ )

[ ख ] चिकीर्षाजन्यो यत्नः । ( त० कौ० ) यथा—विद्यार्थी विद्यायां प्रवर्तते, इति । [ २ ] तस्येप्साजिहासाप्रयुक्तस्य समीहा । ( वात्स्या० प्रस्तावना० ) [ ३ ] प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति । ( गौ०

---

अत्र—मधुविषसंपृक्तान्नभोजनादौ प्रवृत्त्यापत्तिवारणाय *चिकीर्षेति; ( मु० गु० पृ० २२२ ) वृष्ट्यादौ प्रवृत्त्यापत्तेर्वारणाय कृतिसाध्यताज्ञानम् ; अनिष्टसाधने प्रवृत्त्यापत्तिवारणाय इष्टसाधनत्वज्ञानं च कारणमित्युक्तम् । 'प्रवृत्तिं प्रति चिकीर्षामात्रं कारणम्', इति † प्राभाकरा आहुः । प्राभाकरमते—शुक्तौ रजतार्थिप्रवृत्तिं प्रति पुरोवर्तिनि इष्टतावच्छेदकासंसर्गाग्रह एव हेतुः; न तु न्यायमतसिद्ध इष्टतावच्छेदकप्रकारकं ज्ञानं हेतुः । ( त० प्र० खं० ४ । पृ० 133 )

१ तस्य ज्ञातुः, इत्यर्थः ।

२ तदर्थश्च—[ क ] वागारम्भो वाचिकी प्रवृत्तिः, सत्यं प्रियं हितमिति पुण्या । असत्यमप्रियमहितमिति पापा, बुद्धिः बुध्यते ज्ञायतेऽनेनेति मन उच्यते, तेन मानसी प्रवृत्तिर्भूतदयादिः । शारीरी प्रवृत्तिः, दानं परिचरणमित्यादिका दशविधा पापा, दशविधा पुण्या चेति । (वै० उ० ६ । २ । २४ ) [ ख ] शरीरेण मनसा वाचा च ( प्रवृत्ति-

---

* भोजनान्तरीयके श्रमे प्रवृत्तिवारणाय चिकीर्षा कारणम्, इत्यवश्यं मन्तव्यम् । तेन, इष्टसाधनत्वज्ञानस्य कारणत्वं न व्यर्थमिति भाति ।

† तेषामयमाशयः—कार्यत्वज्ञानं प्रवर्तकम् । तथा हि—ज्ञानस्य प्रवृत्तौ जनयितव्यायां चिकीर्षातिरिक्तं नापेक्षितमस्ति; तत्सत्त्वे कृतिविलम्बहेत्वन्तराभावात् । चिकीर्षा च कृतिसाध्यताज्ञानसाध्या; 'इच्छायाः स्वप्रकारकधीसाध्यत्वम्' इति नियमात् । ( अत एव स्वकृतिसाध्ये पाके प्रवर्तते ) न त्विष्टसाधनताज्ञानसाध्या; स्वकृत्यसाध्येऽपि चन्द्रमण्डलानयनादौ प्रवृत्त्यापत्तेः ( चिकीर्षापत्तेः ) । ( चि० ४ ) ( मु० गु० पृ० २२२—२२३ )

अत्रेदं बोध्यम्—प्राभाकरमते प्रवृत्तेर्हि, विषयता त्रिविधा । साध्यत्वाख्या, उपादानत्वापरनाम्नी सिद्धत्वाख्या, उद्देश्यत्वाख्या चेति । तत्राद्या,—यन्निष्ठकृतिसाध्यताज्ञान—चिकीर्षादिना प्रवृत्तिः, तन्निष्ठा । सा च घट-याग-पाकादिनिष्ठैव; न तु तज्जनकीभूतकपालहविस्तण्डुलादिसिद्धनिष्ठा । अत एव—'घटं करोमि, यागं करोमि' इत्याद्यनुव्यवसायः; न तु, कपालहविरादेः सिद्धतादशायां 'कपालं करोमि, हविः करोमि' इत्याद्यनुव्यवसायः, व्यवहारो वा । द्वितीया तु विषयता,—सिद्धकपालहविस्तण्डुलाद्युपायनिष्ठा 'कपालेन घटं करोमि हविषा यागं करोमि' इत्याद्यनुव्यवसायात् । तृतीया च,—यत्साधनताज्ञानाधीना चिकीर्षा, तन्निष्ठा । तच्च जलाहरणस्वर्गादिनादिरूपम्; 'जलाहरणमुद्दिश्य घटं करोमि, स्वर्गमुद्दिश्य यागं करोमि' इत्यनुव्यवसायात्, इति । ( मू० म० ) ( वाच० )

१ । १ । १७) मनोऽत्र बुद्धिरित्यभिप्रेतम् । बुद्ध्यतेऽनेनेति बुद्धिः । सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति । (वात्स्या० १ । १ । १७) प्रवृत्तिस्तु द्वयी । कारणरूपा कार्यरूपा च ( द्वे अप्यात्मसमवेते ) । तत्राद्या ( जन्यत्वेनाविशिष्टा विशिष्टा वा ) यत्नत्वजातिमती प्रत्यक्षसिद्धा । द्वितीया तु धर्माधर्मरूपा; यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया, कर्मनाशाजलस्पर्शादेः प्रायश्चित्तादेश्च नाश्यतया सिद्ध्यतीति । (गौ० वृ० ४ । १ । १ ) (कु० १ । ९ )

भट्टपादा आहुः–लोके प्रवृत्तिर्द्वेधा । स्वेच्छाधीना, परप्रेरणाजन्या च । तत्राद्यायां प्रवर्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ सा प्रयोजिका; 'आचार्यप्रेरणयेदं करोमि' इति व्यवहारात् । (दि० गु० प्रयत्ननि० पृ० २२६)।

२ शब्दानामर्थबोधनशक्तिविशेषः प्रवृत्तिः । यथा–"प्रवृत्तिरासीच्छब्दानां

---

रारभ्यते ) । सेयं प्रवृत्तिः प्रत्येकं दशविधा पुण्या च पापा च । पुण्या कायेन परित्राणम्, परिचरणम्, दानमिति । वाचा सत्यम्, हितम्, प्रियम्, स्वाध्यायः, इति । मनसा दया, स्पृहा, श्रद्धा चेति । विपर्ययेण पापा दशविधैव । ............प्रवृत्तिफले प्रवृत्त्युपचारः* । प्रवृत्तिफलं धर्माधर्मौ । (न्या० वा० १ । १ । १७ । पृ० ८५)

१ अत्र वार्तिककारा आहुः–प्रवृत्तेर्द्वैविध्यम्, पुरुषभेदानुविधानात् । तेषां पुरुषाणां प्रवृत्तयस्ताः पुरुषभेदमनुविधीयमाना उभयरूपा भवन्ति । वीतरागप्रवृत्तिरेकधा—तत्र या वीतरागाणां प्रवृत्तिः सा खल्वेकरूपा, अनिष्टप्रतिषेधार्था; अनिष्टं हास्याम इत्येव ते प्रवर्तन्ते, न पुनरेषां क्वचिदभिषङ्गोऽस्ति । रागादिमत्प्रवृत्तिस्तु द्विरूपा—ये तु रागादिमन्तस्तेषां या प्रवृत्तयस्ता द्विविधा भवन्ति; इष्टानिष्टविषयाधिगमप्रतिषेधार्थाः; इष्टमाप्स्यामीति सक्तः प्रवर्तते; अनिष्टं हास्यामीति द्वेषान्निवर्तते । रागादिमत्प्रवृत्तेरपि द्वैविध्यं भवति; समर्थासमर्थभेदात् । या खलु रागादिमत्प्रवृत्तिः सा समर्थाऽसमर्था च भवति । इष्टमाप्स्यामीति प्रवर्तमानो यदा प्राप्नोति तदा समर्था । अनिष्टं हास्यामीति प्रवर्तमानो यदा जहाति तदा समर्था । यदा विपर्ययस्तदाऽसमर्थेति । (न्या० वा० पृ० ३ )

२ तदुक्तम्—"† कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् । गण्डकीबाहुतरणाद्धर्मः क्षरति कीर्तनात्" इति ।

---

* तद्यथा—'अन्नं वै प्राणिनः प्राणाः' इति । ( न्या० वा० १ । १ । १७ । पृ० ८५ )

† अत्र—कर्मनाशा गयानिकटवृत्तिर्नदीविशेषः, इति ज्ञेयम् ।

चरितार्था चतुष्टयी" ( कुमार० ) इत्यादौ । ३ स्वविषये इन्द्रियादीनां संचारः । ४ प्रवाहः । ५ वार्ता, इति काव्यज्ञा आहुः । ( वाच० ) .

**प्रवृत्तिनिमित्तम्**[1]—[ क ] पदशक्यतावच्छेदकम् । यथा—घटत्वं घटपदस्य प्रवृत्तिनिमित्तम् । एवम्—शुक्लादिपदस्य शुक्लत्वम्; पाचकादेः पाकः; देवदत्तादेस्तत्तत्पिण्डादि प्रवृत्तिनिमित्तं भवति ।

[ ख ] निरवच्छिन्नविशेष्यतानिरूपितप्रकारतावत्, इति शाब्दिका वदन्ति ।

**प्रवेशनम्**—निष्क्रमणवदस्यार्थोऽनुसंधेयः ।

**प्रशंसा**—( स्तुतिः ) गुणाविष्करणम् ।

**प्रश्नः**[2]—[ १ ] [ क ] अभिधानप्रयोजनादिजिज्ञासा[3] । ( कु० ५ ) यथा—'भोः किं तव नामधेयम् ?', 'किमर्थं च भवताऽत्रागतम्?' इति प्रश्नः । ( स्व० )

[ ख ] जिज्ञासाविष्करणम्[4] । यथा—'कीदृशो गवयपदवाच्यः' इति प्रश्नः । ( म० प्र० ३ । पृ० ३४ )

---

१ अत्र व्युत्पत्तिः—'प्रवृत्तेः ( शब्दानामर्थबोधनशक्तेः ) निमित्तं ( प्रयोजकम् )' इति । तच्च शक्यतावच्छेदकं भवति, इति ज्ञेयम् ।

लक्षणं च [ क ] प्रकारतया शक्तिग्रहविषयत्वम् । ( चि० ) [ ख ] वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वम्, इति । ( ग० शक्ति० )

२ अत्रेदं बोध्यम्—[१] यद्धर्मविशिष्टे यद्धर्मावच्छिन्नस्य संबन्धो यत्प्रश्नवाक्यात्प्रतीयते, तदुत्तरवाक्यात्तु तद्धर्मविशिष्ट एव तद्धर्मव्याप्यधर्मावच्छिन्नसंबन्धश्चेत्प्रतीतो भवति; तदैव च प्रश्नोत्तरभावनिर्वाहः । यथा—'कस्माद्घटः?' इति प्रश्ने 'दण्डाद्घटः' इत्युत्तरम् । यथा वा—'किं करोति?' इति प्रयत्नविशिष्टे प्रश्ने 'पचति' इत्यनेन पाककृतिबोधः । ( त० प्र० ख० ४ । पृ० ७३ ) । [ २ ] प्रश्नवाक्ये यत्प्रधानम्, तत्समानलिङ्गवचनशब्देनैवोत्तरं यथाकथंचित्प्रश्नविषयजिज्ञासानिवर्तकम् । एवं च—'के शिष्या अस्य ?' इति प्रश्ने 'कठाः' इत्येवोत्तरम्; न तु 'कठः' इति । एवम्—'किंशिष्योऽयम् ?' इति बहुव्रीहिसमासेन प्रश्ने 'कठः' इत्येव; न तु 'कठाः' इति; तस्य कठत्वे शिष्याणां कठत्वमर्थप्राप्तम्, इत्याशयेनेदमुत्तरम्, इति । ( ल० म० लका० पृ० ७६ )

३ अत्र जिज्ञासाशब्देन तत्प्रयोजककथानुकूलव्यापारो लक्ष्यते ।

४ अत्रोच्यते—"अविज्ञानप्रार्थनं च प्रश्न इत्यभिधीयते" इति ।

[ग] शाब्दिकास्तु,—उत्तरप्रयोजिकेच्छा ( लिङ्गर्थविधिः ), इत्याहुः । ( वै० सा० द० )

[२] [क] जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा—गुरुं धर्मं पृच्छतीत्यादौ पृच्छतेरर्थः । ( ग० व्यु० का० २ । पृ० ४६ )

[ख] शाब्दिकास्तु,—जिज्ञासाविषयार्थज्ञानानुकूलः 'केन पथा गन्तव्यम् ?' इत्यभिलापादिरूपो व्यापारः । यथा—माणवकं पन्थानं पृच्छतीत्यादौ पृच्छेरर्थः, इत्याहुः । ( ल० म० सुब० पृ० ९२ )

प्रसक्तिः—१ अनुमितिः । ( दीधि० ) २ आपत्तिः । ३ प्रसङ्गः । ४ व्याप्तिः । यथा—"अतिप्रसक्तिरन्यधर्मत्वे" ( सां० सू० अ० १ । सू० ५३ ) इत्यादौ । ५ प्राप्तिः । यथा—"प्रसक्तं हि निषिध्यते" इत्यादौ ।

प्रसङ्गः—१ ( संगतिः ) [क] उपोद्घातादिभिन्नस्मरणप्रयोजकसंबन्धः । ( राम० )

[ख] स्मृतस्योपेक्षानर्हत्वम् । ( नील० १ । पृ० १५ ) ( म० प्र० २ । पृ० १५ ) यथा—यथार्थानुभवरूपप्रमाविभजनानन्तरं प्रमाकरणविभजने प्रसङ्गः संगतिः । ( त० दी० १ । पृ० १५ ) २ व्याप्तिरूपः प्रकृष्टसंबन्धः । यथा—"अतिप्रसङ्गः, अप्रसङ्गः" इत्यादौ । ३

---

१ अत्र धात्वर्थघटकज्ञाने गुरुवृत्तित्वस्यान्वयः; शब्दे च धर्मविषयकत्वस्य* अन्वयः । ( ग० व्यु० का० २ । पृ० ४६ )

२ अत्र, माणवकस्य व्यापारे संबन्धसामान्येनान्वयः । ज्ञानविषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वम् सबन्धः । ( ल० म० सुबर्थ० पृ० ९२ )

३ तदर्थश्च—बन्धतत्कारणयोर्भिन्नधर्मत्वेऽतिप्रसक्तिः, मुक्तस्यापि बन्धापत्तिः, इति । ( सां० प्र० भा० १ । ५३ ) तथा च—अत्र, अतिप्रसक्तिः,—अतिव्याप्तिरित्यर्थः । ( स्व० )

४ प्रतियोगित्वानुयोगित्वाधारत्वादीनामप्यत्रैवान्तर्भावः । ( म० प्र० २ । पृ० १५ ) प्रसङ्गत्वं च, सङ्गतित्वे सत्युपोद्घातादिभिन्नत्वम् । ( जगदीशः )

५ तदर्थश्च—[क] स्मृतिकालावच्छेदेनोपेक्षानर्हत्वम् । ( भवा० ) [ख] द्वेषविषयतानवच्छेदकः स्मृतिविषयतावच्छेदको धर्मः, इति । ( अनुमितिग्रन्थे गदाधरः ) [ग] स्मृतिकालावच्छिन्नोपेक्षानर्हतावच्छेदकधर्मवत्त्वम् । ( वै० सा० द० )

---

* शब्दस्य च विषयता व्यापारानुबन्धिनी । व्यापारस्तु ज्ञानम्, इति बोध्यम् । अत्राधिकं तु 'पृच्छा' शब्दव्याख्यानावसरे संपादितम्, तत्तत्रैव द्रष्टव्यम् ।

वैयाकरणास्तु,–प्राप्तिः । यथा—"कृताकृतप्रसङ्गि नित्यम्, तद्विपरीतमनित्यम्" (न्या० परि०) इत्यादौ, इत्याहुः । ४ मीमांसकास्तु,–अन्योद्देशेन प्रवृत्तौ तदन्यस्यापि सिद्धिः प्रसङ्गः । यथा—पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्याप्युपकारः सिद्ध्यति । यथा वा—"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्" इत्यत्र–आमिक्षार्थं प्रवृत्तौ, अनुद्देश्यवाजिनस्यापि सिद्धिः । यथा वा–काम्ययागनिष्पत्त्यर्थमनुष्ठितैराग्नेयादिभिर्नित्ययागादिसिद्धिः, इत्याहुः । ( मिता० ) ( प्रा० त० ) ( वाच० )

**प्रसङ्गसमः**[1]—( जातिः ) [ क ] दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थाना[2]त्प्रसङ्गसमः । ( गौ० ५ । १ । ९ ) साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः । क्रियाहेतुगुणयोगी क्रियावाँल्लोष्ट इति हेतुर्नापदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति । (वात्स्या० ५ । १ । ९ । )

[ ख ] साधनपरंपराप्रश्नः । यथा–( आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ )—क्रियावत्त्वे क्रियाहेतुगुणवत्त्वं साधनम्, तत्र किं साधनम् ?, न हि साधनं विना कस्यचित्सिद्धिरस्ति; एवं तत्रापि किं साधनम् ? इत्यादि । ( नील० पृ० ४४ )

[ ग ] अनवस्थाभास[3]प्रसङ्गः प्रसङ्गसमः, इत्याचार्याः ( उदयनाचार्याः ) आहुः । ( गौ० वृ० ५ । ९ )

---

१ अनवस्थादेशनाभासोऽयम्, इति विज्ञेयम् । ( गौ० वृ० ५ । ९ )

२ तदर्थश्च—दृष्टान्तस्य कारणम् प्रमाणम्, तदनपदेशोऽनभिधानम् । अभिधानं चानतिप्रयोजकम् । तथा च–दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानम्, अर्थः । यद्यपीदमसदुत्तरमेव, तथापि 'दृष्टान्ते प्रमाणं वाच्यम्, तत्रापि प्रमाणान्तरम्' इत्यनवस्थया प्रत्यवस्थाने तात्पर्यम् । तदुक्तमाचार्यैः–"अनवस्थाभासप्रसङ्गः प्रसङ्गसमः" इति । एतन्मते–'हेतोर्हेत्वन्तरम्' इत्यनवस्थापि प्रसङ्गसम एव । पूर्वमते तु–हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेष्वन्तर्भूतम्, इति विशेषः । ( गौ० वृ० ५ । ९ )

३ तथा चोक्तम्—"सिद्धे दृष्टान्तहेत्वादौ कारणप्रश्नपूर्वकम् । अनवस्थाभासवाचः प्रसङ्गसमजातिता" इति । ( ता० र० परि० २। श्लो० ११३ )

**प्रसज्य:**— १ प्रसज्यप्रतिषेधवदस्यार्थोऽनुसंधेयः । २ प्रसञ्जनकर्म (आपाद्यः) । उदाहरणं तु ‘ प्रसञ्जन ’शब्दे दृश्यम् ।

**प्रसज्यप्रतिषेधः**—( नञर्थः ) [ क ] संसर्गाभावः । यथा—चैत्रो न पचतीत्यादौ नञर्थः । ( चि० ) यथा वा—भूतले घटो नास्तीत्यादौ नञर्थोऽत्यन्ताभावः ।

[ ख ] शाब्दिकादयस्तु,—यस्यार्थस्य धात्वर्थेनान्वयो नञा प्रत्याय्यते, सः । यथा—न कलञ्जं भक्षयेदित्यादौ नञर्थः प्रसज्यप्रतिषेधः, इत्याहुः ।

**प्रसञ्जनम्**—१ [ १ ] आपादनम् । यथा—‘अत्र घटः स्यात्, तर्हु-

---

१ अत्रार्थे—भीमो भीमसेनवत्, प्रसज्यप्रतिषेधशब्दस्यान्त्यलोपे ‘प्रसज्य’ इति रूपं सिद्ध्यति।

२ [ १ ] [ क ] अत्र व्युत्पत्तिः—‘प्रसज्य विधाय विहितस्य प्रतिषेधः’ इति; “प्रसज्य क्रियागुणौ ततः पश्चान्निवृत्तिं करोति” इति महाभाष्यप्रामाण्यात् । ( ल० म० ) [ ख ] केचित्तु,—‘प्रसज्य ( प्रसक्तिं संपाद्य, आरोप्येति यावत् ) प्रतिषेधः,’ इत्याहुः ।

अत्रायं विवेकः—‘प्रसक्तं हि प्रतिषिध्यते’ इति न्यायेन आरोपितप्रसक्तस्यैव निषेधः । तेन, वायौ रूपं नास्तीत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते, इति । ( वाच० ) [ २ ] अत्रायमप्यन्यो विशेषः—प्रसज्यनञा तत्पुरुषो भावकृदन्तपदयोग एव, न घटादिपदयोगे; वादिनामविवाद इत्याद्युदाहरणेषु भावकृदन्तस्यैवोत्तरपदत्वात्, इति संप्रदायविद आहुः । ( श० प्र० )

३ तदर्थश्च,—क्रियासमभिव्याहृतनञ्प्रतिपाद्योऽत्यन्ताभावः, इति । ( ल० म० )

४ अत्र ‘पाककृत्यभाववांश्चैत्रः’ इति शाब्दबोधः ।

५ तदुक्तमभियुक्तैः—“प्रसज्यप्रतिषेधः स्यात्क्रियया सह यत्र नञ्” इति ।

६ अत्र विशेषः—[ क ] न कलञ्जं भक्षयेदित्यत्र बलवदनिष्टासाधनत्वविशिष्टेष्टसाधनत्वरूपस्य विध्यर्थस्याभावो नञा भक्षणक्रियायां बोध्यते । तेन विधेरप्राधान्यम्, नञर्थाभावस्य च* प्राधान्यम् । तेन तत्र क्रियापदान्वयिनञ् प्रसज्यप्रतिषेधार्थकः । [ ख ] “अमुक्ता भवता नाथ मुहूर्तमपि सा पुरा” इत्यादावमुक्तेत्यत्र नञः प्रसज्यप्रतिषेधार्थत्वमिति विधेयत्वमेवोचितम्, इति ।

गुरुमते तु—‘कलञ्जभक्षणाभावविषयकं कार्यम्’ इति बोधेन अभावविशेष्यकबोधेऽपि प्रतिषेधस्य प्राधान्यात् तथात्वम् । तथा च—तन्मते क्वचित्—विधेरप्राधान्येन, क्वचिच्च—प्रतिषेधस्य प्राधान्येन, इति व्यस्तमेव प्रसज्यप्रतिषेधप्रबोधप्रयोजकम्, इति बोध्यम् । ( वाच० )

---

* तदुक्तम्—“अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्” इति ।

पलभ्येत' इति । [ २ ] आहार्यारोपः । ( राम० ) यथा—'यदि पर्वतो निर्वह्निः स्यात्तर्हि निर्धूमः स्यात्' इति । ( स्व० ) २ क्वचित्—तुल्यत्वेनाभावयोः प्रतिभाववचनम् प्रसञ्जनम् ।

**प्रसादः**—कर्तृत्व–( फलविशेष– )–निर्वाहकं वरप्रदानम् । ( कि० व० ६ ) यथा—" प्रसादं कुरु ! देवेश "इत्यादौ ।

**प्रसारणम्**—( कर्म ) [ क ] शरीरविप्रकृष्टहेतुः कर्मविशेषः । ( त० सं० ) ( त० कौ० )

[ ख ] एवमाकुञ्चिताङ्गानां यत्कर्मोत्पद्यते पुनः । अनारम्भकसंयोगनाशकं तत्प्रसारणम् । ( त० व० पृ० २४१ )

[ ग ] तद्विपर्ययेण ( आकुञ्चनविपर्ययेण ) संयोगविभागोत्पत्तौ येन कर्मणाऽवयवी ऋजुः संपाद्यते, तत् प्रसारणम् । ( प्रशस्त० पृ० ३७ )

[ घ ] प्रसारणत्वजातिमत् ।

[ ङ ] विस्तारकरणक्रियाविशेषः, इति केचित् । ( वाच० )

**प्रसिद्धिः**—१ [ क ] ज्ञानम् ।

[ ख ] ख्यातिः । २ भूषणम् । ३ टङ्कारः, इति केचिदाहुः । (वाच०)

**प्रस्तावना**—१ आरम्भः । यथा—" आर्य ! बालचरितप्रस्तावनाडिण्डिमः" ( वीरच० ) इत्यादौ । २ आमुखाख्यं नाटकाङ्गम्, इति साहित्यशास्त्रज्ञा आहुः । ( वाच० )

**प्रस्थानम्**—१ गमनवदस्यार्थोऽनुसंधेयः । २ अभीष्टवस्तुचालनम् मौहूर्तिका आहुः । ( धर्मसिन्धौ–प० ३ । पृ० ११७ )

**प्रागभावः**—[ १ ] ( अभावः ) [ क ] प्रतियोगिसमवायिकारणवृत्तिः,

---

१ लक्षणं च दूरदेशसंयोगजनकक्रियानुकूलक्रियात्वम् । ( ल० व० )

२ ऋजुतासंपादकम्, इत्यर्थः । ( त० दी० )

३ तदुक्तम्—"आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा" इति । ( सा० द० परि० ६ । श्लो० २८७ )

४ उत्पन्नस्यैव पदार्थस्य पुनरुत्पत्त्यापत्तिनिवारणार्थं प्रागभावोऽवश्यं स्वीकार्यः । स च कार्यस्योत्पत्तेः पूर्वं, कार्यस्य समवायिकारणे तिष्ठति । ( त० व० २६९ )

प्रतियोगिजनको, 'भविष्यति' इति व्यवहारहेतुरभावः । ( त० दी० ) ( न्या० म० पृ० ११ ) ( त० प्र० ) यथा—'इह कपाले घटो भविष्यति' इति प्रतीतिसाक्षिकोऽभावः । ( त० कौ० ) ( प्र० प्र० )

[ ख ] उत्पत्तेः प्राक् समवायिकारणे कार्यस्य संसर्गाभावः । [ २ ] शाब्दिकास्तु,—कारणे शक्तिरूपेणावस्थानम्, इत्याहुः । ( ल० म० धात्व० पृ० ६ ) [ ३ ] सांख्यास्तु,—भावस्यानागतावस्थैव प्रागभावः, इत्याहुः ।

**प्राची**—( दिक् ) [ क ] यदपेक्षया सूर्योदयाचलसंनिहिता[2] या दिक्, सा तदपेक्षया प्राची[1] । ( वै० उ० २ । २ । १० )

[ ख ] यस्यां दिशि मेरुप्रदक्षिणक्रमेण भ्रमत आदित्यस्य प्रथमं संयोगो[3] भूतपूर्वो भविष्यन्वा भवन्वा[4], सा दिक्प्राची । ( वै० उ० २ । २ । १४ )

[ ग ] उदयाचलसंनिहितदेशावच्छिन्ना दिक् । ( वाक्य० १ । पृ० ९ )

[ घ ] उदयाचलसंनिहितमूर्तावच्छिन्ना दिक् । ( नील० १ पृ० १० )

[ ङ ] उदयाचलसंनिहिता या दिक्, सा । ( न्या० बो० पृ० ३ )

[ च ] यदपेक्षयोदयगिरिसंनिहितं[5] यन्मूर्तं, सा ततः प्राची । यथा—म-

---

प्रागभावलक्षणं तु विनाश्यभावत्वम् । ( मु० ) ( न्या० म० १ । पृ० ११ ) ( त० सं० ) अत्रायं विशेषो ज्ञेयः—प्रागभावस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्ति; किं तु—तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वमेव, इति । ( वाच० )

१ अत्र व्युत्पत्तिः—'प्राक् अस्यां सविता अञ्चति' इति प्राची । ( वै० उ० २ । २ । १४ )

२ संनिधानं तु संयुक्तसंयोगाल्पीयस्त्वम् । ते च सूर्यसंयोगा अल्पीयांसो भूयांसो वा दिगुपनेयाः । ( वै० उ० २ । २ । १० )

3 अत्र सूत्रम्—"आदित्यसंयोगाद्भूतपूर्वाद्भविष्यतो भूताच्च प्राची" ( वै० २ । २ । १४ )

४ अत्र पुरुषाभिसंधिभेदमाश्रित्य कालत्रयोपवर्णनम् । भवति हि,—कस्यचित् 'पूर्वेद्युः प्रातरस्यां दिशि आदित्यसंयोगः प्रथमं वृत्तः' इति 'इयं प्राची' इति प्राचीव्यवहारः । कस्यचित् 'अपरेद्युरस्यां आदित्यसंयोगः प्रथमं भावी' इत्यभिसंधाय प्राचीव्यवहारः । कस्यचित् 'इदानीमस्यामादित्यसंयोगो भवन्नस्ति' इत्यभिसंधाय प्राचीव्यवहारः । ( वै० उ० २ । २ । १४ ) एवम्—दिगन्तरव्यवहारोऽपि स्वयं परिकल्पनीयः ।

५ तदपेक्षयोदयगिरिसंनिहितत्वं च तन्निष्ठोदयगिरिसंयुक्तसंयोगापेक्षयाऽल्पतरोदयगिरिसंयुक्तसंयोगवत्त्वम् । ( दि० १ । २ )

थुरातः प्राच्यां प्रयागः, इति। (दि० १ । २) यथा वा—झळकीग्रामात्प्राच्यां तिरुपतिः, इति । (स्व० )

**प्राणः**—१ (वायुः) [ १ ] [ क ] मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः । (दि० १ । २)

[ ख ] शरीरान्तःसंचारी वायुः । स चैकोऽप्युपाधिभेदात् (हृदयादिस्थानभेदात्, मुखनिर्गमादिक्रियाभेदाच्च) प्राणापानादिसंज्ञां लभते । (त० सं०) (सि० च०) (मु० १) यथा—"मूलाधारोद्गतः प्राणः" (शा० ति०) इत्यादौ । [ २ ] कश्चित्,–प्राणो वायुविशेष एव; स चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियत इति कृत्वा 'प्राणोऽन्तःकरणवृत्तिः' इत्यभेदनिर्देशः, इत्याह । २ इन्द्रियाणां साधारणी कारणत्रयस्य वृत्तिः (परिणामः), न तु वायुविकारः, इति सांख्या आहुः । ३ परब्रह्म (विष्णुः) प्राणशब्दवाच्यम्, इति वेदान्तिन आहुः ।

**प्राणायामः**—(योगाङ्गम्) [ क ] तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः । (पात० सू० पाद० २ । सू० ४९)

---

१ अत्र च—'मथुरानिष्ठोदयगिरिसंयुक्तसंयोगपर्याप्तसंख्याव्याप्यसंख्यापर्याप्त्यधिकरणोदयगिरिसंयुक्तसंयोगवन्मूर्तवृत्तिः प्रयागः' इत्यन्वयबोधः । (दि० १ । २)

२ स च [ १ ] विषयात्मको वायुः । (त० सं०) [ २ ] शरीरेन्द्रियविषयात्मकवायुभ्यो भिन्नश्चतुर्थः प्राणाख्यो वायुः, इत्यप्याकरग्रन्थेषु प्रतिपादितम्, तत्तस्मादेवावगन्तव्यम् ।

३ अत्रत्यः प्रपञ्चो वायुशब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्र प्रमाणानि—[ १ ] "ॐ अत एव प्राणः ॐ" (ब्रह्मसू० १ । १ । २३) "तद्वै त्वं प्राणो अभवः, महाभोगः, प्रजापतेर्भुजः करिष्यमाणः, यद्देवान् प्राणयो नव" इति;–"श्रीश्च ते लक्ष्मीश्च पत्न्यौ, अहोरात्रे पार्श्वे" इति च (श्रुतिः) (मध्वभा० १ । १ । २३) [ २ ] "ॐ प्राणस्तथाऽनुगमात् ॐ" (ब्रह्मसू० १ । १ । २८) "तं देवाः प्राणयन्त, स एषोऽसुः स एष प्राणः स एष भूतिश्च प्राणश्च इत्येवं विद्यात्, तदयं प्राणोऽधितिष्ठति" इति । (श्रुतिः) (मध्वभा० १ । १ । २८) [ ३ ] "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः" इति (श्रुतिः) मध्वभाष्य० १ । ४ । १३)

५ तस्मिन्, आसनस्थैर्ये सति, इत्यर्थः । (गी० वृ० ४ । १११)

[ ख ] प्राणवायोर्गतिविच्छेदकारकव्यापारविशेषः । स च प्राणायामो द्विविधः । सगर्भः, निगर्भश्च । तत्राद्यो मन्त्रजपेन । द्वितीयो मात्रया ।

**प्रातः**—( अव्ययम् ) [ १ ] सूर्योदयावधि मुहूर्तत्रयैमितः कालः । यथा—"सर्वेषामुपवासानां प्रातरेव हि पारणम्" इत्यादौ । [ २ ] सार्धप्रहरात्मकः कालः, इति कर्मज्ञा आहुः ।

**प्रातिपदिकम्**—१ [ क ] 'नाम'वदस्यार्थोऽनुसंधेयः । ( श० प्र० )

[ ख ] "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" ( पा० सू० १ । २ । ४५ ) इति वैयाकरणा आहुः । २ प्रतिपत्तिथिभवो वह्निः प्रातिपदिकः, इति याज्ञिका आहुः । ( वाच० )

**प्रातिस्विकम्**—[ क ] विशेषधर्मः । यथा—घटस्य प्रातिस्विको धर्मो घटनिष्ठं तद्व्यक्तित्वम् । ( स्व० )

[ ख ] असाधारणधर्मः, इति केचिदाहुः ।

**प्रादुर्भावः**—[ १ ] प्रथमप्रकाशः । [ २ ] आविर्भावः । यथा—"प्रादुरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इत्यादौ । ( भाग० स्कं० १० । अ० ४ । श्लो० ९ )

**प्रादेशिकगुणत्वम्**—स्वाधिकरणवृत्तिदैशिकाभावप्रतियोगिगुणत्वम् । ( ल० व० ) यथा—विभूनां विशेषगुणानाम्, संयोगस्य विभागस्य च प्रादेशिकगुणत्वम् । ( भा० प० श्लो० १०० )

---

१ अत्रोक्तं ज्ञानार्णवे—"कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् । प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना" इति । ( वाच० )

२ मात्रा तु वामजानुनि तद्धस्तभ्रामणमात्रकालः । अधिकं तु तन्त्रसाराज्ज्ञेयम् ।

३ अत्र स्मृतिः—"प्रातःकालो मुहूर्तांस्त्रीन् सङ्गवस्तावदेव तु" इति । ( वाच० )

४ स च वृद्धिश्राद्धाङ्गम् । तत्रोक्तम्—"प्रहरोऽप्यर्धसंयुक्तः प्रातरित्यभिधीयते" इति । ( नि० सि० भा० )

५ अत्रार्थवत्त्वं च, एतत्संज्ञाफलीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वम् ।

६ समुदायश्लोकस्तु—"देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । प्रादुरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इति । ( भाग० १० । ४ । ९ )

७ अत्राधिकं तु "अव्याप्यवृत्तिगुणत्व"शब्दव्याख्यानावसरे संपादितम्, इति तत् तत्र द्रष्टव्यम् ।

**प्रादेशिकत्वम्**—दैशिकाव्याप्यवृत्तित्वम् । ( मु० गु० ) ( दि० गु० पृ० १९१ ) यथा—विभुविशेषगुणनाम्[1], संयोगविभागयोश्च प्रादेशिकत्वम् । (भा० प० श्लो० १०० )

**प्रापणम्**—नयनवदस्यार्थोऽनुसंधेयः । ( ग० व्यु० का० २ । पृ० ४९)

**प्राप्तिः**—१ संबन्धः । यथा—"अप्राप्तयोऽस्तु या प्राप्तिः, सैव संयोग ईरितः" ( भा० प० गु० श्लो० ११६ ) इत्यादौ । २ लाभः । स च स्वत्वावच्छिन्नो व्यापारः । यथा—धनं प्राप्नोतीत्यादौ धात्वर्थः । ( श० प्र० श्लो० ७२ । टी० ) ३ प्रापणम् । ४ संहतिः । ५ अणिमाद्यष्टविधैश्वर्यान्तर्गतैश्वर्यविशेषः[2] । ६ सुखाङ्गविशेषः[3], इत्यालंकारिका आहुः । ७ जरासंधसुता; । ८ कंसभार्या; । ( भा० स० १३ ) ( हरिवंश० ९१ ) ९ कामभार्या, चेति पौराणिका आहुः । ( भा० आ० अ० ३६ ) ( वाच० )

**प्राप्तिसमः**—( जातिः ) [ क ] प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वात् ( असाधकत्वाच्च ) प्राप्तिसमः । ( गौ० ५ । १ । ७ ) हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा? । न तावत्प्राप्य । प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा? । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः । ( वात्स्या० ५ । १ । ७ ) [ ख ] प्राप्त्योऽविशेषादनिष्टापादनेन प्रत्यवस्थानम्[4] । ( गौ० वृ० ५ । ७ ) यथा—आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणव-

---

१ विभुविशेषगुणाश्च शब्दः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेष, प्रयत्नः, धर्मः, अधर्मः, भावनाख्यसंस्कारश्च, इति ।

२ तदुक्तम्—"अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशत्वं वशित्वं चाष्टभूतयः" इति ।

३ अत्रोच्यते—"संप्रधारणमर्थानां युक्तिः, प्राप्तिः सुखागमः" इति । ( सा० द० परि० ६ । श्लो० ३४४ )

४ प्रतिकूलतर्कदेशनाभासोऽयम् । ( गौ० वृ० ५ । १ । ७ )

५ अत्र प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् । ( नील० पृ० ४४ )

त्वेनैव किमिति क्रियावत्त्वं साध्यते; किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न ?; उभयोरविशेषादिति । ( नील० पृ० ४४ )

[ ग ] "प्राप्य साध्यं साधयति हेतुश्चेत्प्राप्तिकर्मणः । साध्यस्य पूर्वसिद्धिः स्यादिति प्राप्तिसमोदयः" । ( ता० र० २ । श्लो० १११ )

**प्राप्यप्रकाशकारित्वम्**—संनिकृष्टग्राहित्वम् ( विषयदेशं गत्वा विषयप्रकाशकत्वम् ) । ( राम० १ । पृ० ७९ ) यथा—न्यायमते चक्षुरिन्द्रियस्यैव[1] प्राप्यप्रकाशकारित्वम् । (दि० १ । तेजोनि० पृ० ८०) मायावादिमते तु,—श्रोत्रस्यापि प्राप्यप्रकाशकारित्वम्, इति । ( वाच० )

**प्राप्यम्**[2]—१ [ १ ] ( कर्म ) क्रियाप्रयोज्यासाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वे सति[3] फलाश्रयः ( क्रियाजन्यफलवत्त्वेनोद्देश्यः ) । ( वाच० ) यथा—ग्रामं गच्छतीत्यादौ[4] ग्रामः प्राप्यं कर्म । [ २ ] गम्यम्; २ लभ्यं चेति काव्यज्ञा आहुः ।

**प्राभाकरः**[5]—मीमांसकविशेषप्रभाकरमतानुयायी; तन्मतज्ञश्च ।

---

१ 'गोलकमेव चक्षुः, न तैजसम्' इत्युच्छृङ्खलमते तु—चक्षुरप्राप्यप्रकाशकार्येव भवति । यदि प्राप्यप्रकाशकारि स्यात्तदा रसनादिवत् अधिष्ठानसंबद्धं गृह्णीयात् । न चैवम्; गोलकासंबद्धग्रहणात्, इत्यादि । ( दि० १। तेजो० पृ० ७९ )

२ तदुक्तं वाक्यप्रदीपे हरिणा—"क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते" इति । ( ग० व्यु० का० २। पृ० ६५ )

३ निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम् । तत्रापि विषयताऽनाश्रयत्वस्य, धर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वस्य, असाधारणधर्मघटितस्य वा तस्य, 'घटं जानातीत्यादौ' घटादावसंभवः, इति प्रयोज्यान्तं धर्मविशेषणम् । तत्रैव क्रियाप्रयोज्यधर्मसंयोगप्रतीतिविषये ग्रामादिकर्मण्यव्याप्तिनिरासायासाधारणेति । क्रियाजन्यफलानाश्रयेऽतिप्रसक्तिनिरासाय विशेष्यम् ।

४ अत्र,—ग्रामादेः कर्तृसाधारणसंयोगरूपफलवत्त्वेऽपि क्रियाप्रयोज्यश्रमादिरूपासाधारणविशेषफलस्यानाधारत्वेन तादृशफलप्रकारकबोधाविषयत्वात् प्राप्यत्वम् । निर्वर्त्य-विकार्ययोस्तु क्रियाजन्योत्पत्त्यादिफलस्य कर्ममात्रनिष्ठतया असाधारण्येन तद्वत्त्वान्नातिप्रसङ्गः, इति बोध्यम् । ( वाच० )

५ अत्र व्युत्पत्तिः—'प्रभाकरस्य इदं, तन्मतं वेत्ति वा' ( अण् ) इति ।

प्रभाकरस्य 'गुरु' इत्यपरनाम । तन्मतं तत्र तत्र प्रादर्शि, इति विरम्यते मया ।

**प्रामाण्यम्**—१ प्रमात्ववदस्यार्थोऽनुसंधेयः । २ प्रमाणत्ववदस्यार्थोऽनुसंधेयः ।

**प्रायश्चित्तम्**—[क] दुरितनाशकत्वेन विहितः (साधनविशेषः) । यथा—गोवधे प्रायश्चित्तमित्यादौ । (श० प्र० श्लो० ९३ । टी०) [ख] पापक्षयमात्रसाधनत्वेन विधिबोधितः कर्मविशेषः । (वाच०)

**प्रारब्धम्**—(कर्म) [क] तत्तच्छरीरभोगजनकं हि यत्कर्म, तत् । यथा—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इत्यादौ कर्म प्रारब्धमस्ति । (मु० गु० पृ० २२९)

[ख] देहाद्यारम्भकोऽदृष्टविशेषः । तस्य च भोगेनैव क्षयः, न तु ज्ञानेन; प्रारब्धातिरिक्तं कर्म तु ज्ञानेन नश्यति, इति विवेकः ।

**प्रार्थनम्**, **प्रार्थना**—१ उत्कर्षप्रतिपादनेच्छा । (कु० ९ । टी०) यथा—देवदत्त ईश्वरं प्रार्थयतीत्यादौ धात्वर्थः । (स्व०) २ [१] [क] दानाय प्रेरणम् । यथा—नृपमर्थं प्रार्थयते, याचते, भिक्षते, इत्यादौ धात्वर्थः ।

---

१ अत्रत्यः स्वतःप्रामाण्यादिप्रपञ्चस्तु 'प्रमात्व'शब्दे संपादितः, तत्र द्रष्टव्यः ।

२ अत्राङ्गिरःस्मृतौ व्युत्पत्तिः—"प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते । तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्" इति । (वाच०)

३ अत्र "निमित्तात्कर्मयोगे" (वार्तिक०) इत्यनेन सप्तमी ज्ञेया । तथा च—जन्यत्वं सप्तम्यर्थः; तस्य प्रायश्चित्तपदार्थैकदेशे दुरितेऽन्वयः; जन्यत्वे च गोवधादेरन्वयः । (श० प्र० १३४)

४ अत्र मात्रपदात्, तुलापुरुषाश्वमेधादिभ्यावृत्तिः; तत्र पापविशेषस्यैव कामाकामकृतस्य शक्तिविशेषस्य ततो नाशः (मतभेदेन), इति विज्ञेयम् (वाच०)

५ अत्र व्युत्पत्तिः—'प्रकृष्टमारब्धं स्वकार्ये (जननाय कृतारम्भम्) येन' इति । (वाच०)

६ अत्रोक्तम्—"अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति ।

७ अत्रोक्तम्—"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति । (गीता अ० ४ । श्लो० ३७)

८ प्रेरणा प्रवर्तना । सा च 'दीयताम्' इत्याद्यभिलापरूपा । (श० प्र० श्लो० ७३ । टी० पृ० ११२)

९ अत्र 'नृपनिष्ठं यत् अर्थस्य दानम्, तत्प्रेरणावान्' इत्यर्थः । (श० प्र० श्लो० ७३ । टी० पृ० ११२)

( श० प्र० श्लो० ७३ । टी० पृ० ११२ )

[ ख ] याच्ञा । यथा—बलिं याचते वसुधाम्, इत्यादौ । [२] [ क ] स्वसंप्रदानकदानधर्मिकसंबोध्यकर्तव्यत्वप्रकारकत्वक्रिच्छाविषयत्वम् । यथा—धेनुं दद्यास्त्वमस्मभ्यमित्यादौ लिङर्थः प्रार्थना ।[1] ( श० प्र० श्लो० १०० । टी० पृ० १७६ )

[ ख ] शाब्दिकास्तु,—प्राप्तीच्छा ( लिङर्थः, विधिः ) प्रार्थना ।

[ ग ] स्वाभिलषितवस्तुदानादौ स्वीयेच्छाबोधनम् । यथा—भोजनं लभेयेत्यादौ लिङर्थः, इत्याहुः । ( वै० सा० द० ) । ३ आलंकारिकास्तु,—गर्भाङ्गविशेषः प्रार्थना,[2] इत्याहुः । ४ मुद्राविशेषः प्रार्थना,[3] इति तान्त्रिका आहुः । ( वाच० )

**प्राशस्त्यम्**—१ [ १ ] विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वे सति, क्रियाजन्यसुखापेक्षयाऽधिकेष्टजनकत्वम् । यथा—मीमांसकमते विध्यर्थवादेन लक्षणया बोधितं प्राशस्त्यम्, शब्दभावनायामितिकर्तव्यतात्वेनान्वेति । निषेधार्थवादेषु ( निन्दार्थवादेषु ) त्वप्राशस्त्यं लक्ष्यते,[4] इति । ( लौ० भा० टी० पृ० ८ ) [ २ ] शीघ्रफलदातृत्वम्, इति वैयाकरणा आहुः । ( ल० म० ) [ ३ ] प्रशंसनीयत्वम्, इत्यन्य आहुः । २ क्षेमत्वम् । ( वाच० ) यथा—"न भद्रं भद्रमिति ब्रूयात्"

---

१ अत्र, चैत्रकर्तृकैतादृशवाक्यस्थले 'धेनुकर्मकचैत्रसंप्रदानकदानत्वावच्छिन्नधर्मिका या युष्मत्कर्तव्यत्वप्रकारिका चैत्रेच्छा, तद्विशेष्यीभूतस्य दानस्यानुकूलकृतिमांस्त्वम्' इत्याकारको बोधः । ( श० प्र० श्लो० १०० । टी० पृ० १७६ )

२ अत्र—"अभूताहरणं मार्गो रूपोदाहरणे क्रमः । संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च । त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा" इति गर्भाङ्गान्युद्दिश्य—"रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत्" इति प्रार्थना लक्षिता । ( सा० द० परि० ६ । श्लो० ३६४–३७२ )

३ तदुक्तम्—"प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च संमुखे । कुर्यात्स्वहृदये सेयं मुद्रा स्यात्प्रार्थनाभिधा" इति । ( तन्त्र– सा० ) ( वाच० )

४ स चायमर्थवादः 'प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यादिः । ( लौ० भा० टी० पृ० ८ ) अत्राधिकं च 'अर्थवाद'शब्दव्याख्यानावसरे संपादितम्, तत्तत्र द्रष्टव्यम् ।

६९

"पुण्यं प्रशंस्तमित्येव ब्रूयात्" (आपस्त० धर्मसू० १।११।३१।१३-१४) इत्यादौ । ३ श्रेष्ठत्वम्, इति काव्यज्ञा आहुः ।

**प्रीणनम्**—[१] प्रीत्यनुकूलव्यापारः । यथा—हरिं प्रीणयतीत्यादौ प्रीधातोरर्थः । [२] इच्छा । यथा—प्रीयते इत्यादौ । ( वाच० )

**प्रीतिः**—१ [१] सुखविशेषः । ( मु० गु० )

[२] हर्षः । यथा—प्रीयतां पुरुषोत्तम इत्यादौ । ( स्व० ) २ तृप्तिः । ३ कामस्य पत्न्या रत्याः सपत्नी, इति पौराणिका आहुः । (मात्स्यपु० अ० ८२ ) ( वाच० )

**प्रेत्यभावः**—[क] पुनरुत्पत्तिः प्रेत्यभावः । ( गौ० १ । १ । १९) उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः, स प्रेत्यभावः । उत्पन्नस्य संबद्धस्य संबन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः पुनरुत्पत्तिः पुनर्देहादिभिः संबन्धः । ( वात्स्या० १ । १ । १९ )

[ख] पूर्वोपात्तशरीरादिपरित्यागादन्यशरीरसंक्रान्तिः । (न्या० वा० १ । १ । १९ । पृ० ८६ )

[ग] मरणोत्तरं जन्म । ( दि० १ ) ( त० दी० ) ( नील० ) ( ता० र० श्लो० ३१ ) तद्यथा श्रूयते—वसिष्ठर्षेरुर्वश्यां पुनरुत्पत्तिः, इति । ( स्व० )

[घ] जन्ममरणप्रबन्धः संसारः । ( वै० उ० ६ । २ । १५ )

[ङ] प्रवाहरूपेणानादिसंबन्धः संसारः । ( वाच० )

---

१ प्रेत्य मृत्वा भावो जननं प्रेत्यभावः । तत्र पुनरित्यनेनाभ्यासकथनात्,—प्रागुत्पत्तिस्ततो मरणम्, तत उत्पत्तिरिति प्रेत्यभावो जननादिरपवर्गान्तः । एतज्ज्ञानं च वैराग्य उपयुज्यते, इति 'प्रेत्य' इति न व्यर्थम् । (गौ० वृ० १ । १ । १९ ) (नील० ) अयं धर्माधर्माभ्यामुत्पाद्यते । अस्यैव च प्रेत्यभावस्य 'अजरंजरीभाव' इति वैदिकी संज्ञा । (वै० उ० ६ । २ । १५ )

२ स च,—आत्मनः पूर्वदेहनिवृत्तिः, उत्तरदेहसंघातलाभः, इति । (त० भा० पृ० ४० ) पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम् । (न्या० वा० १ । १ । १९ । पृ० ८६ )

९ प्रबन्धः प्रवाहः । (वै० वि० ६ । २ । १५ )

**प्रेरणम्**—[ १ ] [ क ] प्रयोजकवृत्तिः (व्यापारः)धर्मविशेषः । यथा—देवदत्तो यज्ञदत्तेन तण्डुलं पाचयतीत्यादौ णिजर्थो देवदत्तसमवेतव्यापारः । ( स्व० )

[ ख ] प्रेषणम्; तच्च, निकृष्टस्य भृत्यादेः कार्यादौ नियोगः, इति वैयाकरणा आहुः ।

[ २ ] [ क ] मीमांसकास्तु,—प्रवर्तकनिष्ठः प्रवृत्त्यनुकूलव्यापारः । ( ल० म० )

[ ख ] स्वाभिलषितोपायाज्ञानादप्रवृत्तापकृष्टप्रयोज्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापारः । यथा—स्वर्गकामो यजेत, जलमाहरेत्यादौ लिङाद्यर्थो विधिः प्रेरणम्, इत्याहुः । ( वै० सा० द० )

**प्रोत्साहनम्**—हर्षानुकूलव्यापारः । यथा—होत्रे प्रतिगृणातीत्यादौ गृणातेरर्थः प्रोत्साहनम् । (श० प्र० कार० ४ । श्लो० ६९ । टी० पृ० ९९)

---

## फ.

**फक्किका**—१ असद्व्यवहारः । २ तत्त्वनिर्णयार्थं पूर्वपक्षः । यथा—"फणिभाषितभाष्यफक्किका" ( नैष० ) इत्यादौ । ( वाच० ) ३ कर्मकलापादिबोधको वाक्यरचनारूपः शब्दः, इति याज्ञिकादयो वदन्ति ।

**फल्**—( धातुः ) १ भेदनम् । यथा—फलति इत्यादौ धात्वर्थः । २ आरम्भः । यथा—फलितः, फलूतः, इत्यादौ । ३ निष्पत्तिः । यथा—फलितः, इत्यादौ । ४ गतिः । यथा—फलयति, इत्यादौ ( वाच० )

**फलम्**—१ [ क ] प्रवृत्तिदोषजनितोर्थः फलम् । ( गौ० १ । १ । २० ) सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकं च । त-

---

१ स च लिङादिसमभिव्याहारे लिङाद्यन्तशब्दरूपः । ( ल० म० )

२ अत्र—धात्वर्थप्रोत्साहनैकदेशे हर्षे होत्रादेरन्वयः । तेन,—'होतृनिष्ठहर्षानुकूलव्यापारवान्' इत्याकारकस्तत्र बोधः । ( श० प्र० कार० ४ । श्लो० ६९ । टी० पृ० ९९ )

३ [ १ ] फलसामान्यलक्षणं तु जन्यत्वम्* । ( गौ० वृ० १ । २० ) [ २ ] कश्चित्—प-

---

* यथा—घटजन्यो घटध्वंसोऽपि घटस्य फलम् । ( स्व० )

त्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभि प्रेतम् । ( वात्स्या० १ । १ । २० )

[ ख ] वैयाकरणादयस्तु,—यदुद्देशेन श्रुतेर्लोकतो वा प्रवृत्तिरवगता, तत्, इत्याहुः । ( वै० भू० द० धात्व० पृ० ७ ) न्यायमते फलं द्विविधम् ।१, मुख्यम्, गौणं च । तत्राद्यं सुखदुःखोपभोगः । द्वितीयं शरीरादिकं सर्वमेव । ( गौ० वृ० १ । १ । २० ) (२ न्या० वा० १ । १ । २० । पृ० ८६ )

२ [ क ] धात्वीयवृत्तिग्रहप्रकारताश्रयः । यथा—" क्रियाजन्यफलशालित्वं कर्मत्वम् " इत्यत्र ग्रामं गच्छतीत्यादावुत्तरदेशसंयोगः फलम् । ( स्व० )

[ ख ] केचिच्छाब्दिकास्तु,—कर्तृप्रत्ययसमभिव्याहारे,—धात्वर्थजन्यत्वे सति धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयः फलम्, इति वदन्ति । अत्राधिकं तु 'धातु'शब्दव्याख्यानावसरे संपादितं द्रष्टव्यम् ।

---

वृत्युद्देश्यत्वम्* । ( दि० १ । मङ्ग० पृ० ८ ) [ ३ ] कचित्तु—स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम् † । ( मु० म० १ ) अधिकं तु 'प्रयोजन'शब्दव्याख्यानावसरे संपादितम् ।

१ अत्र वेदान्तिन आहुः—"अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्" इति । ( गीता० अ० १८ । श्लो० १२ )

२ लक्षणं च [ क ] सुखदुःखान्यतरसाक्षात्कारत्वम् । ( गौ० वृ० १ । २० ) [ ख ] तदीयमुख्यफलत्वं तु,—यत्कामनात्वेन तदीयफलं प्रति जनकता, तत्त्वम् । यथा—स्वर्गादिकामना स्वप्रयोज्यदर्शादिसंबन्धेन दर्शादिफलस्वर्गादिकं प्रति जनिका । ( मु० म० मङ्गल० पृ० २२ )

३ अत्रोच्यते—"फलं प्रवृत्तिसाध्यं स्यात्, तच्च देहसुखादिकम्" इति । ( ता० र० श्लो० ३२ )

४ अत्र—'सकर्मकधातूनां फलावच्छिन्नव्यापारे‡ शक्तिः' इत्यभिप्रायेणोक्तमिदम्, इति ज्ञेयम् ।

५ अत्र शाब्दिका आहुः—"यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत्प्रधानं फलं तेषां न लाभादिः प्रयोजनम्" इति । ( भर्तृ० ) तेन, पाकादिजन्यं भोजनम्, यागादिजन्यं च पुण्यमेव फलम्, न वेतनादिरूपं फलम् । तेन, सूदकस्य ऋत्विगादेर्वा न धात्वर्थजन्यफलभागित्वम्, इति ।

---

* यथा—नव्यमते मङ्गलस्य विघ्नध्वंस एव फलम् । ( मु० १ । मङ्गल० पृ० ८ )

† यथा—स्वर्गार्थयागकर्तव्यताप्रयोजकस्वर्गेच्छाविषयत्वेन स्वर्गो यागफलं भवति ।

‡ कर्माख्यातसमभिव्याहारस्थले तु,—शाब्दबोधे फलस्य द्विधाभाने चेष्टापत्तिरेव शरणम्, इति भावः ।

**फलोपधायकत्वम्**—उपधायकत्ववदस्यार्थोऽनुसंधेयः।

**फलोपहितत्वम्**—( जनकत्वम् ) उपधायकत्ववदस्यार्थोऽनुसंधेयः।

---

## ब.

**बध**—( धातुः ) १ संयमनम् । यथा—बाधयति, इत्यादौ धात्वर्थः। २ निन्दा। यथा—बीभत्सते, इत्यादौ। ३ बन्धनम्। यथा—बधते, इत्यादौ। ( वाच० ) यथा वा—प्रतिबध्यत्वम्, इत्यादौ च।

**बन्ध**—( धातुः ) [ १ ] संयमनम्। यथा—संसारपाशः पुरुषं बध्नाति, इत्यादौ धात्वर्थः। [ २ ] निरोधनम्। यथा—अनुमितिप्रतिबन्धकत्वम्, इत्यादौ। ( स्व० )

**बलम्**—[ १ ] साधनसामग्री। ( स्व० ) यथा—"गमकतौपयिकरूपसाकल्यं हि बलम्" इत्यादौ। ( चि० २। बाध० पृ० १०६ ) [ २ ] शरीरादिशक्तिविशेषः, इति काव्यज्ञा वदन्ति। [ ३ ] सैन्यम्, इति पौराणिका आहुः।

**बहिः**—समभिव्याहृतपदार्थतावच्छेदकानधिकरण-तत्संनिहितदेशः, तत्स्थं वस्तु च। यथा—ग्रामाद्बहिरित्यादौ। ( ल० म० सुबर्थ० पृ० ११२ )

**बहिरिन्द्रियम्**—( इन्द्रियम् ) मनोभिन्नमिन्द्रियम्। ( राम० १। साधर्म्य०

---

१ यथा—तत्र, अनुमितौ व्याप्तिपक्षधर्मतात्मकं बलम्। ( चि० २। सत्प्र० पृ० ९४ ) ( ग० बाध० )

२ अत्र—बहिर्योगे पञ्चमीसमासविधानसामर्थ्यात्, तद्योगे पञ्चमी। बहिष्ट्वं च नियतमवध्याकाङ्क्षम्, इति स पञ्चम्यर्थः। ( ल० म० सुबर्थ० पृ० ११२ )

३ तल्लक्षणं च घ्राणाद्यन्यान्यत्वम्। ( गौ० वृ० १। १२ )

अत्रेदमवधेयम्—प्राचीननैयायिकमते वायोरप्रत्यक्षत्वेन 'बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणम्' इति कार्यकारणभावः स्वीकृतः। तेन, वायौ रूपाभावेन न तत्प्रत्यक्षम्, इति। नवीननैयायिकमते तु—वायोरपि त्वाचप्रत्यक्षविषयत्वेन 'बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे रूपं कारणम्' इति न कार्यकारणभावः; किंतु—'तादृशप्रत्यक्षे आत्मावृत्ति-शब्दभिन्नविशेषगुणवत्त्वं प्रयोजकम्' इति प्रयोज्यप्रयोजकभावः स्वीकृतः। तेन, वायोरपि त्वाचप्रत्यक्षत्वमुपपद्यते, इति, ( भा० प० श्लो० ५७। टी० मु० १। पृ० ११३ )

पृ० ९८ ) यथा—घ्राणम् बहिरिन्द्रियम्। बहिरिन्द्रियाणि पञ्च। घ्राणम्, रसनम्, चक्षुः, त्वक् , श्रोत्रम्। ( गौ० १। १।१२)

**बहिर्द्रव्यम्**[1]—आत्मान्यद्रव्यम्। (नील० २। पृ० २६) यथा—पृथिवी बहिर्द्रव्यम्।

**बहुत्वम्**—(संख्या) [ १ ] प्रतिनियतैकत्वानालम्बनापेक्षाबुद्धिजनितशतादिसंख्या। ( वै० उ० ) यथा—बहवो ब्राह्मणाः सन्ति, इत्यादौ बहुत्वम्। (स्व० ) [ २ ] उपस्कारमते तु—त्रित्वादिसमानाधिकरणं संख्यान्तरमेव[2] बहुत्वम्। यथा—भवति हि, 'शतं वा सहस्रं वा चूतफलान्यानयामि?' इति प्रश्ने 'बहवस्तावदानीयन्ताम्, किं विशेषजिज्ञासया' इत्युत्तरम्। ( वै० उ० ७। २। ८। पृ० ३२३ [ ३ ] क्वचित्—त्रित्वमात्रपर्यवसायि; ('कपिञ्जल'[4]न्यायात्) इति।

तच्च ( बहुत्वम् ) पर्याप्त्या सर्वत्र वर्तते; समवायेन प्रत्येकं वृत्तिमत्।

**बहुव्रीहिः**—१ (समासः) [ क ] स्वांशस्य निरूढलक्षणया ज्ञापकेन शब्देन घटितः, स्वगर्भस्य यादृशार्थस्य संबन्धित्वप्रकारेणान्वयबोधं प्रति समर्थः समासः, स्वगर्भतादृशार्थसंबन्धिबोधने बहुव्रीहिः। यथा—आरूढवानरो[5] वृक्षः, पीतपयस्कं पात्रम्, दत्तदक्षिणो द्विजः, चित्रगुः, इत्यादौ। ( श० प्र० श्लो० ४२ )

---

१ अत्र बहिष्ट्वं च आत्मान्यत्वम्; मानसलौकिकप्रत्यक्षविषयान्यत्वं वा। ( म० प्र० २। पृ० २९ )

२ अत्रेदं बोध्यम्—सेना-वनादौ च शताद्यभिव्यक्तिस्तु न भवति; तादृशव्यञ्जकाभावात्, इति। ( वै०उ० ७। २। ८। पृ० ३२३ )

३ इदं च त्रित्वादिजनकापेक्षाबुद्ध्या जन्यते*। ( वै०उ० ७। २। ८। पृ० ३२३ )

४ "वसन्ताय कपिञ्जलानालभेत" इत्यादौ 'कपिञ्जलपदोत्तरबहुवचनबोध्यबहुत्वं अमुकसंख्याकेष्वेव तिष्ठति' इति संख्यानियमने नियामकाभावात्त्रिष्वेव बहुत्वं कल्प्यते, इति।

५ आरूढवानरो वृक्ष इत्यत्र 'आरूढो वानरो यम्' इति व्युत्पत्त्या, स्वकर्मकारोहणकर्तृवान-

---

* अत्रेदं बोध्यम्—द्वित्वसहितापेक्षाबुद्ध्या त्रित्वमुत्पद्यते; त्रित्वसहितापेक्षाबुद्ध्या चतुष्ट्वमुत्पद्यते। एवमुत्तरोत्तरम्। बहुत्वोत्पत्तौ तु नापेक्षाबुद्धौ पूर्वपूर्वसंख्याविशिष्टत्वनियमः। अत एव—सेनावनादिषु बहुत्वमात्रमुत्पद्यते, न तु संख्यान्तरम्। संशयस्त्वसत्कोटिकोऽपि भवत्येव, इति। ( वै०उ० ७। २। ८ )

[ ख ] नियमतः समासप्रयुक्तलाक्षणिकोत्तरनामकसमासः[1] । यथा—चित्रगुरित्यादौ[2] ।

[ ग ] शाब्दिकास्तु,—प्रायेणान्यपदार्थप्रधानः समासविशेषः[3] ।

[ घ ] बहुव्रीहिप्रकरणपठितः समासो वा बहुव्रीहिः, इत्याहुः ।

बहुव्रीहिर्द्विविधः । समानाधिकरणः, व्यधिकरणश्च । तत्र समानाधिकरणो यथा—चैत्रदत्तधनः[4] इत्यादौ, आरूढवानरो[5] वृक्ष इत्यादौ च । व्य-

रसंबन्धित्वेन* वृक्षम्; पीतपयस्कं पात्रमित्यत्र 'पीतं पयो येन' इति रीत्या स्वकरणकपानकर्मजलसंबन्धित्वेन पात्रम्; दत्तदक्षिणो द्विज इत्यत्र 'दत्ता दक्षिणा यस्मै' इति क्रमेण स्वसंप्रदानकदानकर्मदक्षिणासंबन्धित्वेन द्विजम्; चित्रगुरित्यत्र† 'चित्रा गौर्यस्य' इति वाक्यानुसारेण चित्राभिन्नस्वगोसंबन्धित्वेन चैत्रं च; बहुव्रीहिर्बोधयतीति सर्वत्र स्वगर्भतत्तदर्थसंबन्धित्वेन धर्मिणामवगमो भवति, इति । ( श० प्र० श्लो० ४२ । टी० )

१ अत्र पदप्रयोजनम्—'राजपुरुषः' इत्यादिवारणाय उत्तरेति नामविशेषणम् । 'अर्धपिप्पली' इत्यादितत्पुरुषवारणाय 'नियमतः' इति पदम् । तत्पुरुषे तु न नियमतः; समासप्रयुक्तलाक्षणिकोत्तरनामके 'राजपुरुषः' इत्यादौ व्यभिचारात् । ( म० प्र० ख० ४ । पृ० ४४ )

२ अत्र,—चित्रगोस्वामिनि समासप्रयुक्तलक्षणा उत्तरपदे एव, इति लक्षणसंगतिः । अन्यथा सुबर्थैकत्वादेस्तत्रान्वयो न स्यात्; 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तेः । ( म० प्र० ख० ४ । पृ० ४४ )

३ तेन, उन्मत्तगङ्गाद्यव्ययीभावे नातिव्याप्तिः ।

४ अत्र, 'चैत्रेण दत्तं धनं यस्मै' इति व्यासवाक्यात् 'चैत्रकर्तृक–यत्संप्रदानक-दानकर्म धनम्' इत्यन्वयबोधः । समासे तु–'चैत्रकर्तृकदानकर्मधनसंबन्धी' इत्यन्वयबोधः । संबन्धश्च स्वकर्मकदानसंप्रदानत्वम्, इति बोध्यम् । ( त० प्र० ख० ४ । पृ० ४९ )

५ अत्र—'आरूढो वानरो यम्' इति व्यासे—आङ्पूर्वकरुहधातोरूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रिया, क्तप्रत्ययस्याश्रयः, द्वितीयाया आधेयत्वम्, अर्थः । तथा च–'वृक्षवृत्त्यूर्ध्वदेशावच्छिन्नसं-

* आरूढवानरो वृक्ष इत्यत्र 'आरूढो वानरो यम्' इति विग्रहात् 'यत्कर्मकारोहणकर्ता वानरः' इति बोधेन, समासाच्च 'वानरकर्तृकारोहणकर्म वृक्षः' इति बोधः; 'व्याससमासयोः समानार्थकत्वम् ( समानविषयकबोधजनकत्वम्' ) इति नियमात् । ( त० प्र०ख० ४ । पृ० ४२ )

† अत्र गोपदं स्वगोसंबन्धिलक्षकम्; तदेकदेशे च गवि तादात्म्येन चित्रपदार्थस्यान्वयः । आरूढवानरो वृक्ष इत्यादावपि—रुहधातुना स्वकर्मकारोहणकर्तुः, वानरपदेन च वानरसंबन्धिन उपस्थापनात्, अस्याकाङ्क्षादिधीसाचिव्यादेव स्वकर्मकारोहणकर्माभिन्नवानरसंबन्धित्वादिना वृक्षादेर्बोधः, इति । ( श०प्र०श्लो० ४२ । टी० )

धिकरणो यथा--चक्रपाणिरित्यादौ[1] । ( त० प्र० ख० ४ । पृ० ४९ ) प्रकारान्तरेण बहुव्रीहिर्द्विविधः । तद्गुणसंविज्ञानः, अतद्गुणसंविज्ञानः । ( श० प्र० श्लो० ४४ ) बहुव्रीहिः प्रकारान्तरेणापि विभजते—द्विपद-त्रिपद-चतुष्पदादिभेदेन बहुविधः । यथा—चित्रगुः, जरतीचित्रगुश्चैत्रः, महन्नीलोत्पला सरित्, इत्यादौ । ( श० प्र० श्लो० ४६ । टी० ) । २ काव्यज्ञास्तु,—अनेकधान्यादियुक्तः । यथा—"तत् पुरुष ! कर्म धारय, येन स्यां सदा बहुव्रीहिः" ( उद्भटः ) इत्यादौ, इत्याहुः ।

**बाधः**—१ अभावः । ( वाक्य० ४ । पृ० १९ ) यथा—"अर्थाबाधो योग्यता" इत्यादौ । ( त० सं० ) २ प्रतिबन्धः । ३ पीडनम्, इति काव्यज्ञा आहुः ।

**बाधः**—( हेत्वाभासः, हेतुदोषः ) [ १ ] स च प्राचीनमते—[ क ] साध्याभाववत्त्वप्रमा[2]विषयपक्षकत्वम् ।

[ ख ] प्रमितसाध्याभाववत्पक्षकत्वम् । [ २ ] एकदेशिमतेन—पक्षनिष्ठप्रमाविषयत्व[3]प्रकाराभावप्रतियोगिसाध्यकत्वम् । (चि० २ । पृ० १०३) [ ३ ] रघुनाथ[4]शिरोमणिभट्टाचार्यमतेन च—बाधस्तु, साध्याभाववा[5]न्पक्षः ।

---

योगानुकूलक्रियाश्रयो वानरः' इत्यन्वयबोधः । समासे तु—'आरोहणकर्तृवानरसंबन्धी वृक्षः' इत्यन्वयधीः । संबन्धः स्वकर्तृकारोहणकर्मत्वम्, इति ज्ञेयम् । ( त० प्र० ख० ४ । पृ० ४९ )

१ अत्र, 'चक्रं पाणौ यस्य' इति विग्रहवाक्ये 'यत्संबन्धिपाणिवृत्ति चक्रम्' इत्यन्वयधीः । समासे तु 'चक्रयुक्तपाणिसंबन्धी' इति बोधः । ( त० प्र० ख० ४ । पृ० ४९ )

२ तथा च—साध्याभावप्रमैव *दोषः । सा च प्रमात्वेन ज्ञाता, न स्वरूपसती; हेत्वाभासत्वात् प्रमात्वज्ञानं विना अधिकबलत्वाभावेनादोषत्वात्, अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च । ( चि० २ । पृ० १०३–१०४ )

३ अत्रत्यविषयः 'प्रकारता' शब्दव्याख्यानावसरे संपादितः, इत्यत्रैव विरम्यते ।

४ साध्याभावबुद्धेः प्रमात्वज्ञानस्य प्रतिबन्धकतां निराकृत्य तदप्रमात्वस्य दोषताया अग्रे दूषणीयतया दीधितिकारो वस्तुतो बाधस्वरूपाण्याह । ( ग० बाध० पृ० ९ )

५ अत्र साध्याभाववत्त्वमनवच्छिन्नं ग्राह्यम् । अतो न, अव्याप्यवृत्तिसाध्यकस्थले 'कपिसं-

---

* अयं भावः—एतादृशबाधज्ञानस्य प्रमात्वविषयकतानियमेन प्रतिबन्धकताभ्रौव्यात् । तथाचैतन्मते—प्रमात्वविषयकत्वस्यैव प्रतिबन्धकतायां प्रयोजकत्वाद्धेत्वाभासलक्षणस्य समन्वयो भवति, इति । ( ग० बाध० पृ० १ )

साध्यवदन्यः पक्षः[1] । पक्षावृत्ति[2]साध्यम् । पक्षे साध्याभावः[3] । पक्षनिष्ठसाध्याभाववत्त्वा[4]दिकम् । साध्यादेः पक्षावृत्तित्वादिकम् । साध्यवत्सामान्यादेः पक्षान्यत्वा[5]दिकम् । विशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्त्वादि[6]कम् ।

---

योगवानयं वृक्षः' इत्यादावतिप्रसङ्गः । व्याप्यवृत्तिसाध्यकस्थले तु-पक्षनिष्ठानवच्छिन्नसाध्याभाववत्त्वं बाधः । यथा-जलं पृथिवी स्पर्शवत्त्वादित्यादौ जलनिष्ठपृथिवीत्वाभावो बाधः । अत्रायं विशेषो ज्ञेयः-यत्र तु देशकालावच्छेदेन साध्यसाधनम्; यथा-मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादौ,* उत्पत्तिकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ * च; तत्र तदवच्छेदेन साध्याभाववत्त्वं बाधः । यत्र तु पक्षतावच्छेदके धर्मेऽनतिरिक्तवृत्तित्वरूपसाध्यावच्छेदकताभानमुद्देश्यम्; यथा-पर्वतो वह्निमानित्यादौ; तत्र पक्षतावच्छेदकसामानाधिकरण्येन साध्याभाववत्त्वं बाधः । यत्र तु तादृशधर्मसामानाधिकरण्यमात्रेण साध्यसिद्धिरुद्देश्या; यथा-ह्रदो वह्निमानित्यादौ; तत्र तादृशधर्मावच्छिन्नं साध्याभाववत्त्वं बाधः, इति । ( ग० बाध० पृ० ९ ) ( दीधि० २ ) ( म० प्र० २ । पृ० २८ )

१ तद्वत्ताबुद्धौ, तदत्यन्ताभावस्येव, तद्वद्भेदस्यापि धियो विरोधित्वात् ( हेत्वाभासलक्षणस्यापि समन्वयः ), इति भावः ।

एवं च-वृत्त्यनियामकसंबन्धेन (तादात्म्यसंबन्धेन) अनुमितिस्वीकारे, तत्संबन्धस्य प्रतियोगितावच्छेदकत्वे च-तत्र साध्यवद्भेदस्य बाधत्वं बोध्यम् । ( ग० २ । बाध० पृ० ९ )

२ प्राचीनमते-'पक्षः साध्यवान्, पक्षे साध्यम्' इति ज्ञानयोः समशीलयोरेकस्य यत्प्रतिबध्यत्वम्, अन्यस्यापि तत्प्रतिबध्यत्वमनुभवसिद्धम्, इत्याशयेन तदुक्तिः । एवं च-एतादृशबाधज्ञानस्य प्राप्ताभावानवगाहित्वेऽपि, नानुमितिं प्रति प्रतिबन्धकत्वहानिः । ( ग० २ । बाध० पृ० १० )

३ तदर्थश्च-आधेयतया पक्षेण, पक्षवृत्तित्वेन वा विशिष्टः, इति । तथा च-'विशेषणविशेष्यभाववैपरीत्येपि प्रतिबन्धकत्वमक्षतम्' इत्याशयेनेदं लक्षणम्, इति ज्ञेयम् । ( ग० बाध० २ । पृ० १० )

४ साध्याभावाधिकरणत्वम्, साध्यवद्भेदाधिकरणत्वं चेत्यर्थः । अधिकरणताभेदात्पूर्वस्माद्भेदः । एतदपि प्राचीनमतेन । ( ग० २ । बाध० पृ० १० )

५ साध्यवत्त्वव्यापकानुयोगिताकत्वादिविशिष्टं पक्षभेदादिकम्, इत्यर्थः । तथा च-'भेदप्रतियोगिता-भेदानुयोगित्वयोः समनियतयोरेकज्ञानं यत्र विरोधि, अपरज्ञानमपि तत्र तथा' इत्याशयेनेदम् । ( ग० बाध० पृ० १० )

६ इत्यादिकम्, यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि, प्रत्येकमेव बाधः । ( दीधि० २ । बाध० पृ० २१९ )

---

* इमे 'असंकीर्णबाधोदाहरणे' इति ज्ञेयीयेते । ( न्या० म० २ । पृ० २१ ) ( म० प्र० २ ।

पक्षादेः साध्यासमानाधिकरणधर्मवत्त्वम्, इति । ( दीधि० २ । बाध० पृ० २१९ ) यथा—ह्रदे धूमेन वह्निसाधने ( ह्रदो वह्निमान् धूमादित्यादौ ) वह्न्यभाववद्ध्रदादिर्बाधः । ( न्या० म० २ । पृ० २१ )

स चायं दशविधः, धर्मिग्राहकमानबाधितम्—( १ ) 'घटो व्यापकः सत्त्वादिति' प्रत्यक्षेण; ( २ ) 'परमाणवः सावयवा मूर्तत्वादिति' अनुमानेन; ( ३ ) 'मेरुः पाषाणमयः पर्वतत्वादिति' सुवर्णमयत्वबोधकागमेन । साध्यप्रतियोगिग्राहकमानकबाधितम्—( ४ ) 'वह्निरनुष्णः कृतकत्वादिति' प्रत्यक्षेण; ( ५ ) 'शब्दोऽश्रावणो गुणत्वादिति' अनुमानेन; ( ६ ) 'गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादिति' उपमानेन । साध्यग्राहकमानबाधितम्—( ७ ) 'नरशिरःकपालं शुचि प्राण्यङ्गत्वादिति' आगमेन । हेतुग्राहकमानबाधितम्—( ८ ) 'जलानिलावुष्णौ पृथिवीतो विपरीतस्पर्शत्वात्तेजोवदिति' प्रत्यक्षेण; ( ९ ) 'मनो विभु ज्ञानासमवाय्याधारत्वादिति' अनुमानेन; ( १० ) 'राजसूयो ब्राह्मणकर्तव्यः स्वर्गसाधनत्वादग्निष्टोमवदिति' राज—( सूय— )—कर्तव्यताबोधकागमेन, इति । ( चि० २ । बाध० पृ० ११० )

---

१ बाधविभाजकं* तु—प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुन्नायकत्वे, प्रकृतपक्षप्रकृतसाध्यग्रहाविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोधित्वम्,† इति । ( दीधि० २ । बाध० पृ० २२० )

२ अत्र—"राजा राजसूयेन यजेत" इति श्रुत्या 'राज्ञैव राजसूयः कर्तव्यः' इति बोधनेन ब्राह्मणकर्तव्यत्वस्य बाधः, इति विज्ञेयम् ।

---

पृ० २८ ) परे तु—घटः सकर्तृकः कार्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासते, तत्र तदभावोऽसंकीर्णोदाहरणम्, इति वदन्ति । ( गौ० वृ० १ । ४९ )

* पूर्वोक्तानां ( रघुनाथभट्टाचार्यशिरोमणिनोक्तानाम् ) बाधानामनुगमकं बाधत्वम्, इत्यर्थः ।

† समुदितस्यार्थश्च,—उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्त—विशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारता—ऽवच्छिन्नप्रतिबध्यतानिरूपिता या स्वनिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकविषयित्वानवच्छिन्ना प्रतिबन्धकता,

**बाधकमानम्**—[1]बाधवदस्यार्थोऽनुसंधेयः । ( दीधि० २ । पक्ष० पृ० १२३ ) यथा—“नापि साधक–बाधक–मानाभावः ( पक्षत्वम् )” ( चि० २ । पक्ष० पृ० ३३ ) इत्यादौ । २ बाधकं प्रमाणम् । ( स्व० )

**बाधितः**—( हेत्वाभासः ) [ क ] साध्याभाववत्पक्षको हेतुः । यथा—वह्निरनुष्णः पदार्थत्वात्, इति । ( प्र० प्र० ) ( त० कौ० पृ० १९ ) [ ख ] यस्य साध्याभावः प्रमाणान्तरेण निश्चितः, सः । यथा—वह्निरनुष्णो द्रव्यत्वात् जलवदिति । ( त० सं० ) यथा वा—ह्रदो वह्निमान् धूमादित्यादौ धूमो बाधितः । ( स्व० )

**बालः**—१ [ क ] ग्रहणधारणपटुः । ( त० दी० १ । पृ० २ ) यथा—“बालानां सुखबोधाय क्रियते तर्कसंग्रहः” इत्यादौ ।

[ ख ] अधीतकाव्यकोशव्याकरणोऽनधीतन्यायो बालः, इति केचिद्वदन्ति । ( सि० च० पृ० १ ) २ [ १ ] “आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते” इति व्यवहारज्ञा आहुः । [ २ ] स्तनंधयो बालः, इति लौकिकजना वदन्ति ।

**बाह्यैकैकेन्द्रियग्राह्यगुणत्वम्**—[ क ] चक्षुस्त्वगुभयाग्राह्य-बहिरिन्द्रिय-

---

१ अत्र बाधितत्वं च [ क ] कालात्ययापदिष्टत्वम् । तच्च, उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वम् । [ ख ] बाधात्मकहेतुदोषवत्त्वम् ।

२ तदर्थश्च [ क ] पक्षविशेष्यकप्रमानिश्चयप्रकारीभूतसाध्याभावरूपबाधवान् । [ ख ] पक्षनिष्ठसाध्याभावादिरूपबाधवान्यः, स बाधितः, इति । ( वाक्य० २ । पृ० १८ )

३ अत्र च—वह्नौ पक्षे क्रियमाणे अनुष्णत्वाभावस्योष्णत्वस्य (साध्याभावस्य) त्वगिन्द्रियेण निश्चयात्, द्रव्यत्वं हेतुर्बाधितः ।

एतज्ज्ञानं साक्षादनुमितिप्रतिबन्धकम्; ‘वह्नावनुष्णत्वं नास्ति’ इति ज्ञाने सति ‘वह्निरनुष्णः’ इति अनुमितेरसंभवात्; तदभावलौकिकनिर्णयस्य तद्वत्ताज्ञाने प्रतिबन्धकत्वात्, इति । ( त० कौ० २ । पृ० १५ )

४ तथा च—ग्रहणपूर्वकधारणयोग्यः, इत्यर्थः । (वाक्य०) अयं शास्त्राध्ययने बालः, इति ज्ञेयम् ।

---

तदवच्छेदकीभूता यादृशविशिष्टनिरूपितविषयिता भवति, तादृशत्वम्, इति । ( ग० बाध० पृ० १०–११ ) पदप्रयोजनादिकं तु तत्रैव द्रष्टव्यम्; विस्तरभयान्नोपदर्शितम् ।

ग्राह्य-परिमाणान्यगुणसमवेत-जाति-( रूपत्वादि )-मत्त्वम् । ( दि० गु० पृ० १९३ ) यथा—रूपादेर्बाह्यैकैकेन्द्रियग्राह्यगुणत्वम् [2] ।

[ ख ] बहिरिन्द्रियद्वयावेद्य-बहिरिन्द्रियवेद्य-गुणत्वसाक्षाद्व्याप्य-जातिमत्त्वम् । ( प० मा० )

**बुद्धः**—१ वेद-तत्कर्मणोर्निन्दाकर्ता[3] भगवतोऽवतारविशेषः[4] । २ जागरितः, इति वेदान्तिन आहुः । ३ पण्डितश्च, इति काव्यज्ञा आहुः ।

**बुद्धिः**[5]—१ [ १ ] ( गुणः ) [ क ] बुद्धित्वसामान्यवती । ( प्र० प्र० ) ( त० कौ० १ । पृ० ६ )

[ ख ] आत्माश्रयः प्रकाशः । ( प० च० पृ० ३० )

[ ग ] आत्मगुणत्वे सत्यर्थप्रकाशः । ( त० प्र० ) ( त० भा० ) ( त० कौ० ) ( ता० र० श्लो० २९ )

---

१ एतादृशजातिघटितलक्षणकरणेन,—संख्यादौ नातिव्याप्तिः; अतीन्द्रियरूपादौ नाव्याप्तिश्च, इति ज्ञेयम् ।

२ बाह्यैकैकेन्द्रियग्राह्यगुणाश्च—रूपम्, रसः, गन्धः, स्पर्शः, शब्दश्च, इति । ( भा० प० गु० श्लो० ९४ ) ( प० मा० )

३ तन्मतं तु 'बौद्ध' शब्दव्याख्यानावसरे संक्षेपतः प्रदर्शयिष्यते, तत्तत्र द्रष्टव्यम् ।

४ स च विष्णोश्चतुर्विंशत्यवतारमध्ये एकविंशोऽवतारः । यथोक्तम्—"ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् । बुद्धो नाम्ना जिनसुतः कीकटेषु भविष्यति" इति। (श्रीमद्भाग० स्क० १ । अ० ३ । श्लो० २४ )

५ सा चात्ममात्रवृत्तिः ( न त्वन्तःकरणवृत्तिः ), अव्याप्यवृत्तिः, मनोमात्रगम्या च ।
लक्षणं च [ क ] बुद्ध्यादिपदवाच्यत्वम्; अनुभवसिद्धज्ञानत्वजातिरेव वा । ( गौ० वृ० १ । १५) [ ख ] 'जानामि' इत्यनुव्यवसायगम्यज्ञानत्वम् । ( त० दी० १ । पृ० १४ ) ( सि० च १ । पृ० १६ ) [ ग ] संबन्धावच्छिन्नप्रकारतानिरूपितप्रकारितासमानाधिकरण—गुणत्वव्याप्य-जातिमत्त्वम् । ( ल० व० ) बुद्धिविशेषाः केचिदुच्यन्ते—संनिकृष्टे वस्तुनि तावत् 'अयम्' इति बुद्धिरुत्पद्यते । विप्रकृष्टे वस्तुनि 'एषः' इति बुद्धिः । 'क्रियायां स्वतन्त्रोऽयम्' इति बुद्धिमपेक्ष्य 'त्वया' इति कर्तृत्वोपरक्ता बुद्धिः । करणव्यापारविषयत्वबुद्धिमपेक्ष्य 'कृतम्' इति कर्मबुद्धिः । 'अयं भुजिक्रियायां कर्ता, प्रयोजकश्चायम्' इति बुद्धिमपेक्ष्य 'भोजय' इति बुद्धिः । 'नियोज्यनियोक्तृव्यापारस्य विषयोयम्' इति बुद्ध्यपेक्षम् 'एनम्' इति ज्ञानम् । एवमन्यदपि बुद्ध्यपेक्षमूहनीयम् । (वै० उ० ८।२।१। पृ० ३६८—३६९)

[ घ ] सर्व[1]व्यवहारहेतुर्ज्ञानम् । ( त० सं० ) यथा—भोगः । ( वात्स्या० १।१।९ )

सा च ( बुद्धिः ) [ क ] बुद्धिरुपलब्धिर्ज्ञानमित्य[2]नर्थान्तरम् । ( गौ० १।१।१५ )

[ ख ] बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः । ( वै० उ० ८।१।१ ) ( प्रशस्त० गु० पृ० २३ ) ( वै० उ० ३।१।२ ) ( ३।१।१८ ) यथा—'सा मणिकर्णिका, स विश्वेश्वरः' इत्यादिः । ( त० कौ० )

[ २ ] सांख्यास्तु,—[ क ] सत्त्वरजस्तमोगुणात्मिकाया अनादि-परिणामि-नित्य-व्यापि-प्रकृतेर्जडाया आद्यः परिणामोऽन्तःकरणरूपो महत्तत्त्वापरपर्यायो बुद्धिः । ( कु० १ ) ( वै० उ० ८।१।१ ) ( सि० च० पृ० १९ ) [ ख ] "अध्यवसा[3]यो बुद्धिः" इत्याहुः । ( सांख्यसू० अ० २ । सू० १३ )

[ ३ ] मायावादिनस्तु,—निश्चयात्मकवृत्तियुतमन्त[4]ःकरणं बुद्धिः, इत्याहुः । ( वेदान्तसारे ) २ धर्मपत्नीभेदः, इति पौराणिका आहुः । ( भा० आ० अ० ६६ )

न्यायमते—( क ) बुद्धिर्द्विविधा, नित्या, अनित्या च । तत्र नित्या प-

---

१ तदर्थश्च [ क ] व्यवहारः बुबोधयिषापूर्वकवाक्यप्रयोगः । तथा च—तादृशव्यवहारजनकतावच्छेदकजातिमती समुदायार्थः । तेन ( जातिपर्यन्तानुधावनेन ), निर्विकल्पकादौ नाव्याप्तिः । बुबोधयिषापूर्वकवाक्यप्रयोगे वाक्यार्थज्ञानत्वेन कारणत्वात्, कारणतावच्छेदकज्ञानत्वमादाय सर्वत्र लक्षणसमन्वयः । ( वाक्य० १ । पृ० ९ ) [ ख ] सर्वे ये व्यवहारा आहारविहारादयः, तेषां हेतुर्बुद्धिः, इत्यर्थः । ( सि० च० १ । पृ० १९ )

२ बुद्धेर्ज्ञानपर्यायत्वकथनेन, सांख्यमतनिरासः । तन्मते—बुद्धेरन्तःकरणस्वरूपत्वम् । न्यायमते तु—मनोभिन्नान्तःकरणे मानाभावात् बुद्धेरन्तःकरणभिन्नत्वमेव, इति बोध्यम् । ( सि० च० १ । पृ० १९ )

३ योऽयं 'कर्तव्यम्' इति निश्चयः ( वृत्तिः ) चितिसंनिधानादापन्नचैतन्यायाः, सोऽध्यवसायः, इति तल्लक्षणम् ।

४ अत्रोच्यते—[ १ ] "निश्चयात्मा निराकारो बुद्धिरित्यभिधीयते" इति ( वाशिष्ठे ) ( सांख्य० भा० १।६४ [ २ ] मनो बुद्धिरहंकारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया अमी" इति ( वेदा० सा० )

रमात्मनः । सा च साक्षात्काराभिधा प्रत्यक्षप्रमात्मिकैव । अनित्या तु जीवस्य । अनित्या द्विविधा । स्मृतिः, अनुभवश्च । तौ च प्रत्येकं द्विविधौ । यथार्थौ, अयथार्थौ च । तत्र स्मृतिरेकविधैव । अनुभवस्तु चतुर्विधः । प्रत्यक्षम्, अनुमितिः, उपमितिः, शाब्दबोधश्च । तत्र यथार्थानुभवः 'प्रमा' इत्युच्यते । अयथार्थानुभवस्तु 'अप्रमा' इति, 'भ्रमः' इति च उच्यते । प्रत्यक्षमपि सविकल्पक-निर्विकल्पक-भेदेन द्विविधम् । तत्र निर्विकल्पकं च न प्रमा, नापि भ्रमः । संशय-प्रत्यभिज्ञा-उपनीतभान-इत्यादिकं तु सविकल्पकप्रत्यक्ष एवान्तर्भवति । ( ख ) बुद्धिर्द्विविधा । स्मृतिः, अनुभवश्च । उभयमपि प्रत्येकं यथार्थायथार्थभेदेन द्विविधम् । तत्र सर्वा स्मृतिरनित्या जीवात्ममात्रसमवेता च । अनुभवस्तु, प्रत्यक्षानुमित्युपमितिशाब्दबोधभेदेन चतुर्विधः । तत्र प्रत्यक्षं नित्यानित्यभेदेन द्विविधम् । तत्र नित्यं प्रत्यक्षमेव परमात्मसमवेतम्, यथार्थमेव । अनित्यं प्रत्यक्षं तु जीवात्मसमवेतम्, यथार्थमयथार्थं च । अनुमि-त्युपमिति-शाब्द-बोध-एतत्त्रयं चानित्यमेव, जीवात्ममात्रसमवेतं च, इति ।

वैशेषिकनये—( क ) बुद्धिर्द्विविधा, विद्या चाविद्या च । विद्या चतुर्विधा, प्रत्यक्ष-लैङ्गिक-स्मृति-आर्षलक्षणा । अविद्यापि चतुर्विधा,

---

१ तत्र यथार्थानुभवस्तु शास्त्रे 'प्रमा' इत्युच्यते ।

२ प्रत्यभिज्ञा-उपनीतभानादिकं चानित्यप्रत्यक्ष एवान्तर्भवति, इति नाधिक्यम् ।

३ इदं च यथार्थमयथार्थं चेत्युभयविधमप्यस्ति ।

४ साचानेकप्रकारा; अर्थानन्त्यात् प्रत्यर्थंनियतत्वाच्च । तस्याः सत्यप्यनेकविधत्वे समासतो द्विधा । विद्या चाविद्या च । ( प्रशस्त० पृ० २३ )

५ विशेषणवद्विशेष्यसंनिकर्ष—लिङ्गपरामर्श—इत्यादिरूपगुणजन्या विद्या । ( त० व० पृ० २१३ )

६ दूरत्व—पित्तादीन्द्रियदोष—जन्या अविद्या । ( त० व० पृ० २१३ )

७ आर्षस्वरूपं च [ क ] गालवादृषीणामतीतानागतवस्तुविषयकं ज्ञानमार्षम् । अत्र नैयायिकाः,—इदं च, योगिनां योगजधर्मसहकारेण जायमानेऽलौकिकप्रत्यक्षे एवान्तर्भवति, न चतुर्थम्, इत्याहुः । ( त० व० पृ० २२० ) [ ख ] आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च यत्प्रातिभं ज्ञानं यथार्थनिवेदनमुत्पद्यते, तदार्षमित्याचक्षते । ( प्रशस्त० पृ० ३२ )

संशय-विपर्यय-स्वप्न-अनध्यवसाय-लक्षणा । तत्र यल्लैङ्गिकं[1] तदनिन्द्रियजम् । इन्द्रियजमपि द्विविधम् । सर्वज्ञीयमसर्वज्ञीयं च । सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानम् । असर्वज्ञीयं च प्रत्यक्षं द्विविधम् । सविकल्पकम्, निर्विकल्पकं च । तत्र—सविकल्पकं ज्ञानं न प्रमाणम्, इति कीर्तिदिङ्नागादयो मन्यन्ते । स्वमते तु—सविकल्पकमपीन्द्रियार्थसंनिकर्षजत्वात्प्रत्यक्षं निर्विकल्पके प्रमाणं चेति । ( वै० उ० ८ । १ । २ ) (प्रशस्त० पृ० २३ ) ( ख ) बुद्धिः प्रथमतो द्विविधा, अनुभूतिः, स्मृतिश्च । अनुभूतिरपि कणादमते द्विविधा, प्रत्यक्षम्, अनुमितिश्च । प्रत्यक्षमपि घ्राणजादिभेदेन षड्विधम्; सविकल्पक-निर्विकल्पकभेदेन च द्विविधम्; लौकिकालौकिकभेदेन द्विविधं च । अनुमितिरपि केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकि-रूपत्रिविधानुमानजन्यत्वात्त्रिविधा । स्मृतिश्चोपेक्षानात्मकनिश्चयाधीन-समानाकारक-भावनाख्यसंस्काराधीनैकविधैव । ( ग० ) प्रकारान्तरेणापि बुद्धिर्द्विविधा, प्रमाऽप्रमा चेति । संशयनिश्चयभेदेनापि बुद्धिर्द्विविधा । एतन्मते ( वैशेषिकमते )—सादृश्यज्ञानस्थले, पदज्ञानस्थले च तदुत्तरं लिङ्गपरामर्शोत्पत्त्यैवानुमितिर्भवति; ( प्रत्यक्षानुमानातिरिक्तस्य प्रमाणान्तरस्यानभ्युपगमात् ) । ( वै० वि० ८। १ । ११ )

वेदान्तिमते—बुद्धिः सात्त्विक-राजस-तामस-भेदेन त्रिविधा । तत्र सात्त्विकी यथा—"प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी" ॥ राजसी यथा—"यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी" ॥ तामसी यथा—"अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ! तामसी" इति । ( गीता—अ० १८ । श्लो० ३०—३२ )

बुद्धेः पञ्च गुणा यथा—"इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता । संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान्विदुः" इति । ( महाभा० मोक्ष-

---

1 लिङ्गदर्शनात्संजायमानं लैङ्गिकम् । ( प्रशस्त० पृ० २६ )

धर्मे० ) बुद्धेः सप्त गुणा यथा—"शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" इति । ( हेमच० ) बुद्धेर्वृत्तिः पञ्चधा । यथा—"प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति ( पात० सूत्र० पा० १ । सू० ६ ) बुद्धिक्षयकरा यथा—"शोकः क्रोधश्च लोभश्च कामो मोहः परासुता । ईर्ष्या मानो विचिकित्सा हिंसाऽसूया जुगुप्सता ॥ द्वादशैते बुद्धिनाशहेतवो मानसा मलाः" इति । ( कालिकापु० अ० १८ )

**बोधः**—१ बुद्धिवदस्यार्थोऽनुसंधेयः । यथा—शाब्दबोध इत्यादौ । २ देशविशेषः, इति पौराणिका आहुः । ३ जागरः, इति वेदान्तिनो वदन्ति ।

**बौद्धः**—( नास्तिकः ) 'वेदो न प्रमाणम्' इति यत्किंचिद्वेदविशेष्यकाऽनाहार्यनिश्चयवान् । ( मू० म० १ ) यथा—सुगतादिर्बौद्धः । ( स्व० ) तत्र बौद्धाश्चतुर्विधाः । माध्यमिकाः, योगाचाराः, सौत्रान्तिकाः, वैभाषिकाश्च, इति । ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति । चतुर्विधभावना च,–( १ ) 'सर्वं क्षणिकं क्षणिकम्' इति; ( २ ) 'दुःखं

१ अत्र व्युत्पत्तिः—'बौद्धं ( बुद्धप्रोक्तशास्त्रम् ) वेत्त्यधीते, वा बौद्धः' इति । अत्र व्याकरणम्—'तदधीते, वेत्ति वा पुनः' ( अण् ) इति ।

२ तत्र माध्यमिकादीनां संक्षेपतो मतमुपन्यस्यते–( १ ) भगवतोपदिष्टे माध्यमिकाः * तावदुत्तमप्रज्ञा इत्थमचीकथन्—'भिक्षुपादप्रसारण' न्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्व-अनुकूलवेदनीयत्व–अनुगतसर्वसत्यत्व-भ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानम् । अतः—तत्त्वम् सदसदुभयानुभयात्मकचतुष्कोणविनिर्मुक्तं शून्यमेव ।

दृष्टार्थव्यवहारश्च, न स्वप्नव्यवहारवत् संवृत्त्या संगच्छते । अत एवोक्तम्–"परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ । 'कुणपः, कामिनी, भक्ष्य', इति तिस्रो विकल्पनाः" इति । तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ परं निर्वाणं शून्यरूपं सेत्स्यति; इति वयं कृतार्थाः, नास्माकमुपदेश्यं किंचिदस्ति, इति ।

* शिष्यैस्तावत् 'योगश्चाचारश्च' इति द्वयं करणीयम् । तत्राप्राप्तप्राप्तये पर्यनुयोगो योगः; गुरूक्तस्याङ्गीकरणमाचारः; गुरूक्तस्याङ्गीकरणादुत्तमाः; पर्यनुयोगस्याकरणादधमाश्च । अतस्तेषां 'माध्यमिका' इति प्रसिद्धिः । ( सर्व० बौद्ध० पृ० १५ )

दुःखम्' इति; ( ३ ) 'स्वलक्षणं स्वलक्षणम्' इति; ( ४ ) 'शून्यं शून्यम्'

---

( २ ) योगाचाराश्च*(क्षणिकविज्ञानवादिनः) इत्थमचीकथन्—स्वयंवेदनं तावदङ्गीकार्यम् । अन्यथा जगदान्ध्यं प्रसज्येत । स्वव्यतिरिक्तग्राह्यग्राहकविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका, प्रकाशवदिति । ग्राह्यग्राहकयोरभेदश्च मन्तव्यः—'यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते, यथा ज्ञानेनात्मा'; वेद्यन्ते तैश्च नीलादयः । यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः, स एकस्मिंश्चन्द्रमसि द्वित्वाभास इव भ्रमः । अत्राप्यनादिरविच्छिन्नप्रवाहाभेदवासनैव निमित्तम् । वस्तुतः—वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्ष्णां केशेन्द्रनाडीज्ञानाभेदवत् अनाद्युपप्लववासनासामर्थ्यात् व्यवस्थोपपत्तेः, पर्यनुयोगायोगात् । तस्माद्बुद्धिरेवानादिवासनावशादनेकाकाराऽवभासते, इति सिद्धम् । ततश्च—प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदयः ( मोक्षः ) इति । ( ३ ) सौत्रान्तिका † इत्थं मन्यन्ते—बाह्यमर्थजातमस्त्येव । तच्चानमीयते,—'यथा—पुष्ट्या भोजनमनुमीयते, यथा च—भाषया देशः, यथा वा-संभ्रमेण स्नेहः; तथा—ज्ञानाकारेण ज्ञेयमनुमेयम्' इति । तथा च बाह्यार्थसद्भावे प्रयोगः—'ये यस्मिन्सत्यपि कादाचित्काः, ते सर्वे तदतिरिक्तसापेक्षाः; यथा—अविवक्षत्यजिगमिषति मयि वचनगमनप्रतिभासा विवक्षु-जिगमिषु-पुरुषान्तरसंतानसापेक्षाः' । तथा च—विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखनाः, इति । तत्रालयविज्ञानं नाम अहमास्पदं विज्ञानम् ( आत्मा ); नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम् । ततश्च—कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान्प्रतीत्योत्पद्यन्ते । ते चत्वारः प्रत्ययाः प्रसिद्धाः,—आलम्बन-समनन्तर-सहकारि-अधिपति-रूपाः । एवम्—चित्तचैत्तात्मकानां सुखादीनां चत्वारि कारणानि द्रष्टव्यानि । एवम्—चित्तचैत्तात्मकः स्कन्धः पञ्चविधः,—रूप-विज्ञान-वेदना-संज्ञा-संस्कार-संज्ञकः ।

'तदिदं सर्वं दुःखम्, दुःखायतनम्, दुःखसाधनं च' इति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं संपादयेत् । तच्च प्राचीनभावनाबलाद्भवति, इति परमं रहस्यम् ।

( ४ ) वैभाषिका ‡ इत्थं मन्यन्ते—अर्थो§ द्विविधः । ग्राह्यः, अध्यवसेयश्च । तत्र

---

* गुरूक्तभावनाचतुष्टयम्, बाह्यार्थस्य शून्यत्वं, चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वं चाङ्गीकृतं कथम्? इति पर्यनुयोगस्य करणात्, केषांचित् 'योगाचार' प्रथा । (सर्व० बौद्ध० पृ० १५)

† सूत्रस्यान्तं (रहस्यम्) पृच्छतां 'भवन्तश्च सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्तु' इति भगवता (बुद्धेन) अभिधानात् सौत्रान्तिकसंज्ञा संजाता, इति । ( सर्व० बौद्ध० पृ० २२ )

‡ केचन बौद्धाः ( वैभाषिकाः ),—बाह्येषु गन्धादिषु, आन्तरेषु च रूपादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं 'सर्वं शून्यम्' इति प्राथमिकान् ( माध्यमिकान् ) विनेयानचीकथत् भगवान् । द्वितीयांस्तु ( योगाचारान् ) विज्ञानमात्रग्रहाविष्टान् 'विज्ञानमेवैकं सत्'

इति च । ते च बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यशून्यत्व-बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्व-वादानातिष्ठन्ते । ( सर्व० बौद्ध० पृ० ९) ( सि० च० १ । पृ० १२ )

अत्र—बौद्धानामष्टादश भेदाः प्रसिद्धाः; उपभेदास्तु बहवो विस्तरभयान्नोदाहृताः । ( सि० च० १ । १२ )

विवेकविलासे बौद्धमतमित्थमभ्यधायि—"बौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् । आर्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥ दुःखमायतनं चैव ततः समुदयो मतः । मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥ दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः । विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥ पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम् । धर्मायतनमेतानि द्वादशायतनानि तु ॥ रागादीनां गणोऽयं स्यात्समुदेति नृणां हृदि । आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः पुनः । क्षणिकाः सर्वसंस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥ प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा । चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥ अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते । सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥ आकारसहिता बुद्धिर्योगाचारस्य संमता । केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥ रागादिज्ञानसंतानवासनोच्छेदसंभवा । चतुर्णामपि बौद्धानां मुक्तिरेषा

---

ग्रहणं निर्विकल्पकरूपं (प्रत्यक्षम्) प्रमाणम्; कल्पनाऽपोढत्वात् । अध्यवसायस्तु सविकल्पकरूपः ( अनमानम् ) अप्रमाणम्; कल्पनाज्ञानत्वात् । अवशिष्टं सौत्रान्तिकप्रस्तावे प्रपञ्चितम्, इति नेह प्रतन्यते । ( सर्व० बौद्ध० पृ० १४–२३ ).

१ यद्यपि,—भगवान् बुद्ध एक एव बोधयिता; तथापि,—बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यम् । यथा—'गतोऽस्तमर्कः' इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरण-परस्वहरण-सदाचरणादि-समयं बुद्ध्यन्ते, इति । ( सर्व० बौद्ध० पृ० ९ )

---

इत्यचीकथत् । तृतीयान् ( सौत्रान्तिकान् ) 'उभयं सत्यम्' इत्यास्थितान् 'विज्ञेयमनुमेयम्' इत्यचीकथत् । सेयं 'विरुद्धा भगवतो भाषा' इति वर्णयन्तो वैभाषिकाख्यया ख्याताः, इति । ( सर्व० बौद्ध० पृ० २२ )

§ वैभाषिकमते,—प्रात्यक्षिकं वस्तु सत्, आनुमानिकं त्वसत्, इति ज्ञेयम् ।

प्रकीर्तिता ॥ कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम्। संघो रक्ताम्बरत्वं च शिश्रिये बौद्धभिक्षुभिः" इति। (सर्व० बौद्ध० पृ० २३–२४)

**बौद्धम्**[1]—प्रथमं बृहस्पति[2]प्रणीतम्, ततो बुद्धावतारे प्रपञ्चितं च शास्त्रम्। तच्च शास्त्रं 'बौद्धः' इति शब्दस्यार्थे तत्तन्मतोपन्यासवेलायां संक्षेपतः प्रादर्शि, इति।

**ब्रह्म**—१ वेदः। यथा—"तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" (श्रुतिः); यथा वा—"तेने ब्रह्म हृदा य आदिकवये" (भा० १।१।१) इत्यादौ। २ तपः। ३ सत्यम्। ४ तत्त्वम्। ५ हिरण्यगर्भादयो जीवाः। ६ विप्रः। ७ ऋत्विग्विशेषः। यथा—"यज्ञस्य हैष भिषक् ब्रह्मा" (श्रुतिः) इत्यादौ। ८ विष्कम्भादिषु पञ्चविंशो योगविशेषः, इति मौहूर्तिका आहुः। ९ परब्रह्म[3] (परमात्मा), इति वेदान्तिनो[4] वदन्ति।

---

१ अत्र व्युत्पत्तिः—'बुद्धेन प्रोक्तम्' (अण्) इति।

२ अत्र कथा श्रूयते मत्स्यपुराणे—"आयुषो राज्ञो नहुष-वृद्धशर्म-रजि-दम्भ-विपाप्म-संज्ञकाः पञ्च पुत्रा आसन्। तत्र रजेः पुत्रशतं जज्ञे। तै रजिपुत्रैर्बलाच्छिन्नयज्ञभागवैभवः शक्रो दीनः सन् स्वेष्टप्राप्तये वाचस्पतिं प्रार्थयामास। ततो बृहस्पतिः किं कृतवान्?, तदाह—"गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः। जिनधर्मं समास्थाय वेदबाह्यं स वेदवित्। वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः। वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान्। जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान्" इति। (मत्स्यपु० अ० २४) (वाच०)

३ अत्राम्नायते—"यद्वाचाऽनभ्युदितम्, येन वागभ्युद्यते। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (श्रुतिः), "वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इति। (भाग० १।२।११)। तस्य नवधा रूपं यथा—"तर्कानामेव षण्णां यं षड्विधं रूपमीश्वरम्। वैष्णवानामेकरूपं वेदानामेकमेव च ॥ पुराणानामेकरूपं तस्मान्नवविधं स्मृतम्। न्यायो निर्वर्णनीयं (वदति) च, यन्मतं शंकरोऽब्रवीत् ॥ नित्यं वैशेषिकास्त्वन्यं वदन्ति च विचक्षणाः। सांख्यो वदति तं देवं ज्योतीरूपं सनातनम् ॥ मीमांसा सर्वरूपं च वेदान्तः सर्वकारणम्। पातञ्जलोऽप्यनन्तं च वेदाः सत्यस्वरूपकम् ॥ स्वेच्छामयं पुराणं च भक्ताश्च नित्यविग्रहम्" इति। (ब्रह्मवै० पु० अ० १०८) अत्राधिकं तु 'परमात्म'शब्दव्याख्यानावसरे संपादितं तत्र द्रष्टव्यम्।

४ अत्र—मध्वमते विष्णुरेव परब्रह्म; स चैक एव, सच्चिदानन्दविग्रहः, गुणपरिपूर्णः, पर-

**ब्रह्मज्ञानम्**—[ १ ] ब्रह्मविषयकतत्त्वज्ञानम् । ( त्व० ) [ २ ] मायावादिनस्तु,—"तत्त्वमसि" "ब्रह्माहमस्मि" इत्यादिमहावाक्यार्थज्ञानानन्तरं मनननिदिध्यासनादिना 'सर्वात्मकोऽहम्, ब्रह्मैवाहमस्मि' इति प्रमारूपं प्रत्यक्षम्, इति मन्यन्ते । [ ३ ] श्रवणमननादिना पञ्च[२]भेदाः—विष्णुसर्वोत्तमत्वादि-ज्ञानानन्तरं भगवत्प्रसादफलं ( अहैतुकम् ) भगवदपरोक्षज्ञानम्, इति श्रीपूर्णप्रज्ञाचार्यानुयायिनः प्राहुः ।

**ब्राह्मणः**—[३]अदृष्टविशेषप्रयोज्यधर्म—(ब्राह्मणत्व-)—वान् । यथा—जात्या

मार्थतो जगदादिकारणम्, सर्वान्तर्यामी,* स्वतन्त्रश्च, इति विज्ञेयम् । मायावादिमते तु—सगुण-निर्गुण-भेदेन द्विविधं ब्रह्म । तत्र मायाश्रितः, जाग्रदाद्यवस्थात्रयसाक्षी च ( ईश्वरः ) सगुणः† । मायातीतम्, अवस्थात्रयातीतं च निर्गुणम्‡; इति विशेषो ज्ञेयः ।

१ तत्रारोपज्ञानं न्यायमतसिद्धम्, इति केचित्प्रलपन्ति । ( वाच० ) वयं तु,—तच्च न्यायमते यथार्थज्ञानमेव, इति वदामः ।

२ पञ्च भेदास्तु,—जीवेशयोर्भेदः, जडजीवयोर्भेदः, जीवयोर्भेदः, जडेश्वरयोर्भेदः, जडयोर्भेदश्च, इति । (परमा श्रुतिः) (सर्व० पूर्ण० पृ० ६७)

३ अत्रार्थे व्युत्पत्तिः—'ब्रह्म वेदम्, परब्रह्म, वा वेत्त्यधीते वा' ( अण् ) इति ।

ब्राह्मणलक्षणं च §विशुद्धमातापितृजन्यत्वम् । ( त० कौ० पृ० २१ )

तस्य स्वरूपं यथा—"जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभिर्युक्तो हि यस्तिष्ठेन्नित्यं स द्विज उच्यते" इति । ( वह्निपुराण० ) ( वाच० )

वसिष्ठेनोक्तं ब्राह्मणस्वरूपं यथा—"योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या

* रामानुजमते तु विशेषः—शेषशेषिभावाङ्गीकारेण परमात्मा शेषी; जीवास्तु परमात्मशरीररूपत्वाच्छेषाः, इति ।

† तल्लक्षणं ( तटस्थलक्षणम् ) च,—'जगज्जन्म-स्थिति-प्रलयानां प्रत्येकं उपादानप्रत्यक्ष-चिकीर्षा-कृति-मत्त्वम्' इति । तेन, नवलक्षणवत्त्वम् ।

अत्र श्रुतिः प्रमाणम्—"यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति,......तद्विजिज्ञासस्व तद्ब्रह्म" इति । (तैत्ति० ब्रह्म० उप० पृ० १०)

‡ तल्लक्षणं ( स्वरूपलक्षणम् ) च,—'सच्चिदानन्दात्मकत्वम्' इति ।

अत्र श्रुतिः—"सत्यं ज्ञानमनन्तं ब्रह्म" इति । ( तैति० उ० ); "निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्च ( श्रुतिः ) ।

§ अत्र विशुद्धत्वं च षडूर्मीविकारवत्त्वम् । (त० कौ० पृ० २१ )

ब्राह्मण इत्यादौ[1] । २ मन्त्रेतरवेदभागो ब्राह्मणम्[3] । ( ऋग्वे० भाष्य० उपो० पृ० २० )

**ब्रुवणम्**—ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा—शिष्यं धर्मं ब्रूत[4] इत्यादौ ब्रूञोऽर्थः । ( ग० व्यु० का० २ । पृ० ४६ )

---

## भ.

**भक्तिः**—१ [ १ ] 'गौणी'शब्दवदस्यार्थोऽनुसंधेयः । यथा—"ततो भक्त्या[5] दश दिशः सिद्धाः" ( प्रशस्त० दिङ्निरू० पृ० ८ ) इत्यादौ । [ २ ] प्रकर्षभावाभाव[6]ः । यथा—"बिल्वामलकादावणुत्वव्यवहारः, समिदिक्षुदण्डादिषु च ह्रस्वत्वव्यवहारो भाक्तः" इत्यादौ—आमलके यः प्रकर्षभावस्तस्याभावो कुवले; बिल्वे यः प्रकर्षभावस्तस्याभाव आमलके । ( वै० उ० ७ । १ । ८ )

---

विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्" इति । ब्राह्मणगुणप्रयुक्तं फलमाह—"सर्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः । प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः" इति । तस्य माहात्म्यादि यथा—"सर्वेषामेव वर्णानां ब्राह्मणः परमो*गुरुः । तस्मै दानानि देयानि भक्तिश्रद्धासमन्वितैः" इति । ( वाच० ) किंच—"अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत्" इति । ( मनु० ९ । ३१७ )

१ अत्र ब्राह्मणपदार्थघटकतादृशधर्मे तृतीयान्तार्थस्य जात्यभेदस्यान्वयः ।

२ अत्र, आपस्तम्बः सूत्रयामास—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति । जैमिनिरपि—"तच्चोदकेषु मन्त्राख्या," "शेषे ब्राह्मणशब्दः" इति । (जैमि० अ० २ । पा० १ । सू० ३२–३३)

३ तल्लक्षणं तु—"नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम् । प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते " इति । ( याज्ञव० ) ( वाच० )

४ अत्र—धात्वर्थघटके ज्ञाने शिष्यवृत्तित्वस्य, शब्दे च धर्मविषयकत्वस्यान्वयः । तथा च—'शिष्यवृत्तिज्ञानोद्देश्यकप्रवृत्त्यधीन-धर्मविषयक-शब्दप्रयोगकर्ता' इति बोधः । ( ग० व्यु० का० २ । पृ० ४६ ) अत्राधिकं च 'पृच्छा' शब्दव्याख्याने द्रष्टव्यम् ।

५ इयं भक्तिस्तु गौणत्वम्, उपचारश्च, इति व्यवह्रियते, इति वदन्ति ।

६ स च, गौणमुख्योभयभागित्वात् भक्तिपदवाच्यः । ( वै० उ० ७ । १ । ८ )

---

* अत्र "जन्मना ब्राह्मणो गुरुः" इति स्मृतिर्ज्ञेया । मनुनाप्युक्तं यथा—"वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात् । संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः" इति । ( मनु० अ० १० । श्लो० ३ )

२ [ १ ] [ क ] आराध्यत्वप्रकारकं ज्ञानम् । ( कि० व० पृ० ४ ) ( म० प्र० १ । पृ० १६ ) ( श० प्र० श्लो० ७२ । टी० पृ० ९९ ) ( त० प्र० १ । पृ० ६ ) ( सि० च० ) यथा—भक्त्या हरिमुपास्त इत्यादौ । ( ख० ) यथा वा—"भक्तिर्ज्ञानाय कल्पते" इत्यादौ । [ ख ] निरतिशयानन्दप्रियानन्यप्रयोजनसकलेतरवैतृष्ण्यवज्ज्ञानविशेषो भक्तिः, इति रामानुजीया आहुः । ( सर्व० रामा० पृ० ५९ ) [ २ ] [ क ] परे तु,—"सा परानुरक्तिरीश्वरे" ( शाण्डि० सू० १ । १ ) यथा—"रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" ( तैति० उ० पृ० १० ) इत्यादौ रसो भक्तिः । यथा वा—"ब्रह्मसंस्थोऽमृतत्वमेति" ( छान्दो० पृ० १३७ ) इत्यादौ संस्थापदवाच्या भक्तिः, इत्याहुः । ( शाण्डि० सू० टी० २ । २ )

[ ख ] "सुखानुशयी रागः" ( पात० सू० २ । ७ ) इति शाण्डिल्यसूत्रटीकाकृत आहुः ।

[ ग ] जीवोपाध्यनवच्छिन्नचेतनविषयिणी अनुरक्तिरेव भक्तिः, इत्यप्यन्य आहुः । ( शाण्डि० सू० टी० ) [ ३ ] माहात्म्यज्ञानपूर्वः सुदृढः स्नेहो[3] भक्तिः, इति पञ्चरात्रागमकुशला आहुः । ३ रचना ।

---

१ तल्लक्षणं च—'आराध्यविषयकरागित्वम्*' । ( शाण्डि० सू० टी० )
अत्र वल्लभीया वदन्ति—इयं भक्तिर्द्विविधा । साधनीभूता, फलीभूता च । तत्र साधनभूता,—"भक्तिर्ज्ञानाय कल्पते," "वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्" इत्यादौ । फलभूता तु,—"स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यव्यवहिता ययात्मा संप्रसीदति" ( भाग० १ । २ । ६–७ ), "ब्रह्मसंस्थोऽमृतत्वमेति" इत्यादौ, इति ।

२ अत्रापि रसशब्दवाच्यं संस्थाशब्दवाच्यं च भगवदपरोक्षज्ञानमेव, इति वयं जानीमः ।

३ इयं भक्तिस्त्रिविधा—"सा ( उत्तमा ) भक्तिः साधनं भावः प्रेमा चेति त्रिधोदिता" इति । तत्र साधनभक्तिर्यथा—"कृतिसाध्या भवेत्साध्यभावा सा साधनाभिधा । नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता" इति । भावभक्तिर्यथा—"शुद्धसत्त्वविशेषात्मा प्रेमा सूर्यांशुसाम्यभाक् । रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते" इति । प्रेमभक्तिर्यथा—"सम्यङ्मसृणित-

---

* भक्ते रागरूपत्वे प्रयोगः—'भक्तिर्भजनीयगोचररागरूपा; तदनुवर्तनादिहेतु-हितसाधनताधीभिन्नात्मविशेषगुणत्वात्, यन्नैवम्, तन्नैवम्, यथा द्वेषः' इति । ( शाण्डि० टी० )

(र० टी० ) यथा—"भवति विरलभक्तिर्म्लानपुष्पोपहारः" (रघु० स० ९। श्लो० ७४) इत्यादौ। ४ भागः, इति काव्यज्ञा आहुः । ५ विभागः, इति व्यवहारज्ञा वदन्ति । ६ भङ्गी, इत्यालंकारिका आहुः ।

भक्ष—[ १ ] ( धातुः ) कठिनद्रव्यस्य गलाधःसंयोगानुकूलव्यापारः । यथा—भक्षयत्यन्नमित्यादौ धात्वर्थो भक्षणम्। [ २ ] भक्षणकर्म । यथा—"वषट्कर्तुः प्रथममभक्षः" ( श्रुतिः ) इत्यादौ । ( वाच० )

भजिः—( धातुः ) प्रीत्यनुकूलो व्यापारः । यथा—हरिं भजतीत्यादौ भजेरर्थः। ( ल० म० सुब० पृ० ८६ )

भट्टः—१ [ क ] वेदाभिज्ञः पण्डितः ।

[ ख ] चतुःशास्त्रज्ञः, इति मालतीमाधवटीकाकार आह । २ [ १ ] तुतातारूयो मीमांसकविशेषः । [ २ ] कुमारिलाख्यो मीमांसकः, इत्यपि मीमांसकानुयायिन आहुः । ३ "क्षत्रियाद्विप्रकन्यायां भट्टो जातोऽनुवाचकः" ( ब्रह्मवै० पु० ) इति पौराणिका आहुः ।

---

स्वान्तो ममतातिशयाङ्कितः। भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते" इति। ( भक्तिरसामृतसिन्धौ पूर्वभागः )

४ अत्रोच्यते—"अनन्यममता विष्णौ ममता प्रेमसङ्गता । भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः" इति । ( नारदपञ्चरात्रे )

भक्तिरपि ब्रह्मविद्यायामधिकारो भवति; "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति । ( कठोप० २।२२ ) ( मध्वभा० १ । १ । १ । उपोद्घा० )

१ अत्र 'हरिरूपं यत् कर्म, तन्निष्ठशक्तिनिरूपक—*प्रीत्यनुकूलो व्यापारः' इति बोधः। ( ल० म० सुबर्थ० पृ० ८६ )

२ तुतात—कुमारिलाभ्यां 'भट्ट' इत्युपनाम विद्ययाऽर्जितम्, इति विज्ञेयम् ।

भट्टमतं तु, मीमांसावार्तिकादौ, लौगाक्षिभास्करी-आपदेवी-भाट्टदीपिकादौ च द्रष्टव्यम् ।

३ एतस्याख्यायिका नारायणपण्डिताचार्यैर्मणिमञ्जर्यां (५–६ सर्ग) प्रतिपादिता, तत्र द्रष्टव्या ।

---

* अत्र—हरिरूपप्रकृत्यर्थनिष्ठशक्तिनिरूपकत्वं ( विभक्त्यर्थः ) धात्वर्थप्रीतौ संसर्गतयान्वेति । ( ल० म० सुबर्थ० पृ० ८६ )

**भट्टाचार्यौ**—तुतातभट्ट-उदयनाचार्यौ ।

**भयम्**—१[ १ ] ( दोषः ) अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम् । ( गौ० वृ० ४ । ३ )

[ २ ] [ क ] परतोऽनिष्टसंभावना । यथा—व्याघ्राद्बिभेतीत्यादौ बिभेत्यर्थः । ( ग० व्यु० का० ५ । पृ० १०६ )

[ ख ] भावित्वेन स्वानिष्टचिन्तनम् । यथा—व्याघ्राद्बिभेति, त्रस्यतीत्यादौ धात्वर्थः । ( श० प्र० श्लो० ६८ । टी० पृ० ८२ )

[ ग ] शाब्दिकास्तु,—अनिष्टज्ञानम् । यथा—चोराद्बिभेतीत्यादौ धात्वर्थो

---

१ अत्र विग्रहः—'भट्टश्च, आचार्यश्च, भट्टाचार्यौ' इति ।

२ अत्रोच्यते—"नास्तिकानां निग्रहाय भट्टाचार्यौ भविष्यतः" इति । ( वाच० )
तत्रोदयनाचार्यस्तु न्यायतर्कग्रन्थेषु 'आचार्य' इति व्यवह्रियते । 'स च, किरणावली-कुसुमाञ्जलिप्रभृतिग्रन्थद्वारेण परमात्मास्तित्वं प्रदर्श्य नास्तिकानजयत्' इति सुप्रसिद्धम् ।

३ अत्र "भीत्रार्थानां भयहेतुः" ( पा० सू० १ । ४ । २५ ) इत्यनेनापादानसंज्ञा । तदर्थश्च—भयार्थकधातुयोगे भयहेतुत्वेन संभावितम् अपादानम्, इति । तथा च—व्याघ्राद्बिभेतीत्यादौ प्रयोज्यत्वप्रकारकत्वं*पञ्चम्यर्थः । तस्यानिष्टसंभावनायामन्वयः । एवं च ( 'संभावितम्' इत्युक्त्या ),—शत्रुभ्रमेण 'मित्रादपि बिभेति' इति वाक्यस्यापि प्रामाण्यनिर्वाहः । ( ग० व्यु० का० ५ । पृ० १०६ )
अत्र शाब्दिका वदन्ति—"भीत्रार्थानां भयहेतुः" इति सूत्रस्थस्य 'भयहेतुः' इत्यस्य 'भयपदार्थैकदेशानिष्टहेतुः' इत्यर्थः । यज्जन्यं भयमेव न प्रसिद्धम्, तत्र पञ्चमी न भवत्येव । तस्याः ( पञ्चम्याः ) इष्टत्वे तु—हेतुत्वारोपेण सा (पञ्चमी), इति । ( ल० म० सुब० कार० ५ । पृ० १०९ )

४ अत्र—हेतुत्वं जन्यत्वं वा पञ्चम्यर्थः । तच्च धात्वर्थैकदेशेऽनिष्टे, चिन्तन एव, वाऽन्वितम् । तथा च—'व्याघ्रहेतुकस्य स्वानिष्टस्य भावित्वेन चिन्तनवान्' इति; व्याघ्रहेतुकत्वेन भाव्यनिष्टधर्मिकचिन्तनवान्' इति वा तत्र बोधः । ( श० प्र० श्लो० ६८ । टी० पृ० ८२ )

५ अत्र 'चोरापादनकानिष्टज्ञानम्' इति बोधः । ( ल० म० सुब० का० ५ । पृ० १०९ )

---

* अत्र प्रयोज्यत्वमात्रस्य पञ्चम्यर्थत्वाङ्गीकारे तु—यस्य व्याघ्राधीनं भयमप्रसिद्धम्, अथ च व्याघ्रहेतुकत्वेन मरणादिकं संभावयति, तत्पुरुषपरो 'व्याघ्रादयं बिभेति' इति प्रयोगोऽप्रामाणिकः स्यात्; अनिष्टे व्याघ्राधीनत्वस्य बाधात् । अतः—तादृशप्रयोगोपपत्त्यर्थं प्रयोज्यत्वप्रकारकत्वपर्यन्तस्य पञ्चम्यर्थत्वस्वीकार आवश्यकः, इति । ( ग० व्यु० का० ५ । पृ० १०६ )

भयम्, इत्याहुः (ल० म० सुब० का० ९। पृ० १०९) [३] भयस्थायिभावको रसविशेषः, इति रसशास्त्रज्ञा आहुः। २ निर्ऋतिपुत्रविशेषः, इति पौराणिका आहुः। (भा० आ० अ० ६६)

**भवनम्**—१ [१] उत्पत्तिः; कालस्य वस्तुना संबन्धविशेषो वा। यथा—घटो भवतीत्यादौ भूधात्वर्थो भवनम्। (स्व०) [२] वैयाकरणास्तु,—उत्पत्त्यनुकूलो व्यापारः। यथा—घटो भवतीत्यादौ भूधातोरर्थः, इत्याहुः। (वै० सा० द०) (वाच०) २ मन्दिरम्, इति काव्यज्ञा आहुः।

**भविष्यत्कालः**—[क] यत्प्रागभावेन यः कालोऽवच्छिद्यते, स तस्य भविष्यत्कालः। (वै० उ० २। २। ८) यथा—घट उत्पत्स्यते, इत्यादौ—घटप्रागभावेन यः कालोऽवच्छिन्नः (विशिष्टः), स घटस्य भविष्यत्कालः। (स्व०)

[ख] तद्व्यक्तिप्रागभावविशिष्टः कालस्तद्व्यक्तेरनागतकालः। (त० कौ०)

[ग] वर्तमानप्रागभावप्रतियोग्यवच्छिन्नकालः। (प० मा० काल-नि० पृ० ९२)

**भविष्यत्त्वम्**—१ [१] वर्तमानकालवृत्तिप्रागभावप्रतियोगित्वम्। यथा—'अनागतः कालः' इत्यादौ कालस्य भविष्यत्त्वम्। (वाक्य० १। पृ० ६) (नील० १। काल० पृ० १०) [२]

[क] आद्यकृतिप्रागभावः। (न्या० म० ४। पृ० २०)

[ख] वर्तमानप्रागभावः। यथा—पक्ष्यतीत्यादौ लृडर्थः। (ग० व्यु० ल० पृ० १३६)

---

१ अत्रोच्यते—"रौद्रशक्त्या तु जनितं चित्तवैकल्यदं भयम्" इति। (सा० द० परि० ३। श्लो० २०७। पृ० ५२)

२ अत्रायं विशेषः—कालस्य संबन्धमात्रत्वमते 'अवच्छिन्न' इति न देयम्। (प० मा० कालनि० पृ० ९२)

३ अत्र—लृडर्थस्य तादृशप्रागभावस्य तदर्थकृतौ प्रतियोगितासंबन्धेनान्वयः। प्रागभावानङ्गीकारे तु वर्तमानध्वंस एव लृडर्थः। (ग० व्यु० ल० पृ० १३६)

[ग] वर्तमानप्रागभावप्रतियोगित्वम् । यथा—घटो भविष्यतीत्यादौ धात्वर्थोत्पत्तेर्भविष्यत्त्वम्; पक्ष्यतीत्यादौ चाख्यातार्थकृतेर्भविष्यत्त्वम् (त० प्र० ख० ४ । पृ० ८२) (ल० म० लकार०)

[घ] विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । (तर्का० ख० ४) (दीधि० २) यथा—'नङ्क्ष्यतीत्यादौ लृडर्थः । (त० प्र० ख० ४ । पृ० ८३) (ग० व्यु० ल० पृ० १३५) यथा वा—आगमिष्यतीत्यादौ लृटोऽर्थः । (तर्का० ख० ४ । पृ० ११)

[ङ] वर्तमानकालोत्तरकालोत्पत्तिकत्वम् । (त० प्र० २) (दीधि० २) यथा—"अव्याक्षेपो भविष्यन्त्याः" (रघु० १० । ६) इत्यादौ ।

[च] वर्तमानध्वंसः । यथा—पक्ष्यतीत्यादौ । लृडर्थः । (ग० व्यु० ल० पृ० १३६) २ पौराणिकास्तु,—महापुराणान्तर्गतपुराणविशेषवृत्तिर्धर्मः । यथा—"भविष्यत्पुराणमित्यादौ," इत्याहुः । (नारदीय० पु० पा० ४ । अ० १००)

भाक्तः—१ [१] लाक्षणिकः । यथा—सिंहो माणवक इत्यादौ सिंहशब्दः । (स्व०) [२] गौण्या वृत्त्या बोधितोऽर्थः (औपचारिकः) । २ भक्तमन्नम्, तत्संबन्धि भाक्तम्, इति काव्यज्ञा आहुः ।

---

१ अत्र 'विद्यमानप्रागभावप्रतियोग्युत्पत्तिकागमनानुकूलकृतिमान्' इत्यर्थो बोध्यते । (तर्का० ख० ४ । पृ० ११)

२ समुदायश्लोकस्तु,—"ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः । अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम्" इति । (रघु० स० १० । श्लो० ६)

३ अयं च प्रागभावानङ्गीकारपक्षेऽपि संगच्छते, इति विज्ञेयम् । (ग० व्यु० ल० पृ०१३६)

४ गौण इत्यर्थः ।

५ अत्र—सिंहपदस्य सिंहसदृशे लक्षणा । सादृश्यं च शौर्यादिना* इति नैयायिका आहुः शाब्दिकास्तु,—सिंहपदस्य सिंह एवार्थः । माणवके च सिंहवृत्तिशौर्य-क्रौर्यादयो गुणा† आरोप्यन्ते, इत्याहुः ।

---

* तथा च—'सिंहवृत्तिगुणसदृशगुणवान्माणवकः' इति शाब्दबोधः ।

† तथा चैतन्मते—'सिंहवृत्त्यारोपितगुणवान्माणवकः' इति बोधः ।

**भागः**—१ पक्षतावच्छेदकाश्रयो यत्किंचित्पक्षैकदेशः । यथा—भागासिद्धिरित्यादौ । ( स्व० ) २ स्वत्वाश्रयः ( धनम् ) । "यो मां प्रति स्यात्" इत्यादौ । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ ) ३ एकदेशः । ४ "त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" इति ज्योतिषज्ञा आहुः । ५ पूर्वाफल्गुनीनक्षत्रम्, इति मौहूर्तिका आहुः । ६ एकादशसंख्या, इति गणका आहुः

**भागवतम्**—१ मोक्षप्रदश्रीभगवज्ज्ञानभक्तिवैराग्यप्रतिपादको महापुराणविशेषः । यथा—"यैर्न श्रुतं भागवतं पुराणम्" ( भाग० ), "पिबत भागवतं रसमालयम्" ( भाग० १ । १ । ३ ) इत्यादौ । २ भगवद्भक्तः पुरुषः । यथा—"यत्र ह वा वीरव्रत औत्तानपादिः ( ध्रुवः ) परमभागवतः" ( भाग० स्क० ५ । अ० १७ । गद्यम् २ )

**भागासिद्धिः**—(स्वरूपासिद्धिः ) पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावः । यथा—पृथ्वी गन्धवती घटत्वादित्यादौ पृथिवीत्वसामानाधिकर-

---

१ अत्र—भागः ( स्वत्वाश्रयः ) प्रत्ययार्थः । तदन्वयी संबन्धो द्वितीयार्थः । इत्थं च—'अस्मत्संबन्धी यो भागः स्यात्' इति बोधः । (ग० व्यु० कार० २ । खण्ड० २। पृ० ७६ )

२ तथोक्तं श्रीमद्भागवते—"धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् । श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्" इति । ( भाग० १ । १ । २ )

३ अत्रोच्यते—"मरीचे! शृणु वक्ष्यामि वेदव्यासेन* यत्कृतम् । श्रीमद्भागवतं नाम पुराणं ब्रह्मसंमितम् ॥ तदष्टादशसाहस्रं कीर्तितं पापनाशनम् । सुरपादपरूपोऽयं स्कंधैर्द्वादशभिर्युतः ॥ भगवानेव विप्रेन्द्र! विश्वरूपी समीरितः" इति । (नारदीय–पु० ४ । अ० ९६)

४ तत्स्वरूपमुक्तं यथा—"सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः" इति । ( भाग० स्कन्ध०—११ । अ० २ । श्लो० ४५ ); "येन सर्वात्मना विष्णुभक्त्या भावो निवेशितः । वैष्णवेषु कृतात्मत्वान्महाभागवतो हि सः" इति । ( गारुडे० )

---

* तेन, 'श्रीमद्भागवतं बोपदेवकृतम्' इति केषांचित्तामसानां प्रलापो निरस्तः । 'बोपदेवकृतं तु देवीभागवतमेव' इति तु वयं तत्त्वतो जानीमः ।

ण्येन पटादौ घटत्वाद्यभावः । ( ग० बाध० ) यथा वा—पृथिव्यादय- [1] श्चत्वारः परमाणवोऽनित्या गन्धवत्त्वादिति । (त० भा० हेत्वा० पृ० ४९)

**भाणः**—( रूपकम् ) दृश्यकाव्यविशेषः [2] । यथा—मुकुन्दानन्दभाणः, पञ्चायुधप्रपञ्चभाणः, इत्यादिः ।

**भानम्**—१ विषयतावदस्यार्थोऽनुसंधेयः । ( दि० १ । २ ) यथा—उपनीतभानमित्यादौ । २ ज्ञानम् । ३ प्रकाशः । ४ दीप्तिः ।

**भारतम्**—१ सत्यवतीसुतव्यासप्रणीतो लक्षश्लोकात्मको ग्रन्थविशेषः [3] । २ जम्बुद्वीपान्तर्गतो वर्षविशेषः [4] । ३ भरतनृपस्य वंश्यः, इति पौराणिका आहुः । ४ अग्निविशेषः, इति याजका आहुः । ५ भरतमुनिकृतं नाट्यशास्त्रम्, इति साहित्यशास्त्रज्ञा आहुः ।

**भावः**—१ अन्यनिगूढेच्छा । ( प्रशस्त० २ । पृ० ३३ ) २ सत्ता ( सामान्यम् ) । यथा—"द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यातः" ( वै० ७ । २ । २७ ) इत्यादौ । ३ द्रव्यादिषट्कम् [5] । ( मु० १ । पृ० १९ )

---

१ अत्र गन्धवत्त्वं हेतुः, पक्षीकृतेषु सर्वेषु नास्ति; पृथिवीमात्रवृत्तित्वात् । अत एव भागे स्वरूपासिद्धत्वम् । ( त० भा० हेत्वा० पृ० ४५ )

२ तल्लक्षणं च—[ १ ] "भाणः स्याद्धूर्तचरितो नानावस्थान्तरात्मकः । एकाङ्क एक एवात्र निपुणः पण्डितो विटः" इत्यादि । ( सा० द० परि० ६ । श्लो० ५१३ ) [ २ ] "अहोरात्रं विटानां च चरितं भाण इष्यते" इति ( मुकु० भा० टी० )

३ एतस्य 'महाभारतम्' इति संज्ञा । तथा हि—"चत्वारश्चैकतो वेदा भारतं चैतदेकतः । पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् । चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा । तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते । महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् । महत्त्वात् भारतत्वाच्च ( भारवत्त्वाच्च ) महाभारतमुच्यते" इति । ( भार० आ० अ० १ )

४ अत्रोच्यते—"हिमाह्वं दक्षिणं वर्षं भरणाय ददौ पिता । तस्माच्च भारतं वर्षम्" इति । ( वाच० )

५ तल्लक्षणं च भाववत्त्वमेव । तच्चात्र [ क ] समवाय-*-एकार्थसमवाय-एतदन्यतरसंबन्धेन सत्तावत्त्वम् । ( दि० १ । पदार्थनि० पृ० २० ) [ ख ] समवाय-सामानाधिकरण्य-एतदन्यतरसंबन्धेन सत्तावत्त्वम् । ( दि० १ । अभावनि० पृ० ४१ )

---

* अत्र—समवायस्य स्वरूपत्वेन स्वसंबन्धत्वाङ्गीकारेण, समवायस्य समवायेनावृत्तावपि समवाये नाव्याप्तिः, इति ज्ञेयम् । ( राम० १ । पृ० २० )

४ नव्यास्तु,—इतराविशेषणतया क्रियाबोधपरत्वम् । यथा—कृष्णेन स्थीयते इत्यादौ—आत्मनेपदविधायक—"भावकर्मणोः" ( पा० सू० १ । ३ । १३ ) इति—पाणिनिसूत्रस्थभावपदार्थः, इत्याहुः । ( ग० व्यु० आख्यातार्थनि० पृ० १२९) ५ वैयाकरणास्तु,— साध्यरूपा; सिद्धरूपा वा क्रिया (धात्वर्थः ) । यथा—"भावप्रधानमाख्यातम्" ( यास्कनिरुक्तम् ) इत्यादौ, इत्याहुः । ६ उत्पत्त्यादिरूपषड्भावविकारयुक्तः पदार्थः, इति यास्क आह । ७ धर्मादयोऽष्टौ भावाः, इति सांख्या आहुः । ८ प्रकृतिजन्यबोधे प्रकारो ( असाधारणधर्मः ) भावः । यथा—घटस्य भावो घटत्वम्, इत्यादौ, इति सर्वशास्त्रकारा आहुः । ९ वासना; संस्कारश्च, इति मीमांसकाः प्रवदन्ति । १० चेतनमचेतनम्, इति द्विविधभेदयुतोऽस्वतन्त्रतत्त्वविशेषो भावः,

---

१ यास्केनापि, साध्यरूपाया भावत्वमुक्तं यथा—"तत् यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे—व्रजति—पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्" इत्यादि ।

२ अत्रायं भावः—शाब्दिकमते शाब्दबोधस्य धात्वर्थमुख्यविशेष्यकत्वस्वीकारेण भावस्य प्राधान्यं युज्यते । नैयायिकमते तु प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकारेण तन्मते भावना ( कृतिः ) भावशब्दार्थः, इति । तथा च—भावप्रधानमाख्यातमित्यत्र 'भावः प्रधानं धात्वर्थे' इति विग्रहं वर्णयन्ति ।

३ अत्रोच्यते—"षड्भावविकारा भवन्तीति वार्ष्यायणिः,—जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति, इति । तत्र ( १ )—'जायते' इति पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति । ( २ )—'अस्ति'इत्युत्पन्नस्य सत्त्वस्यावधारणम् । ( ३ )—'विपरिणमते' इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् । ( ४ )—'वर्धते' इति स्वाङ्गाभ्युच्चयम्, सांयौगिकानां वाऽर्थानाम्, वर्धते विजयेनेति वा, वर्धते शरीरेणेति वा । ( ५ )—'अपक्षीयते' इत्येतेनैव व्याख्यातः प्रतिलोमम् । ( ६ )—'विनश्यति' इत्यपरभावस्यादिमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति, इति । ( निरुक्त० )

४ धर्मादयस्तु,—"भावैरधिवासितं लिङ्गम्" ( सांख्यकारि० ४० ) इत्यादौ—धर्माधर्म-ज्ञानाज्ञान-वैराग्यावैराग्यै-श्वर्यानैश्वर्याणि भावाः, इति । ( सांख्य० कौ० का० ४० । पृ० ४५)

५ अत्रायं विशेषो ज्ञेयः—प्रकृतिजन्यबोधे येन संबन्धेन तत्प्रतिपाद्यतावच्छेदकधर्मस्य प्रकारता, तेन संबन्धेन तदितरावृत्तित्वे सति तद्वृत्तिधर्मः, इति । ( भवानन्दी० )

६ अत्र—"तस्य भावस्त्व-तलौ" ( पा० सू० ५ । १ । ११९ ) इति सूत्रेण भाववाचकस्त्वप्रत्ययो विहितः, इति ज्ञेयम् ।

इति मध्वाचार्याः प्राहुः । ११ भक्तिरपीति सर्वे वेदान्तिनो वदन्ति । १२ हृद्गतावस्थावेदको मानसविकारो ( खेदसंपादको व्यभिचारिभावः; संचारिभावो रत्यादिभावश्च ) भावः, इति रसिका आहुः । १३ नाट्योक्तनानापदार्थचिन्तकः पण्डितः, इति नाटकज्ञा ब्रुवते । १४ संगीतसंगतपदार्थद्योतकहस्तचेष्टाविशेषो भावः, इत्यभिनयकलाज्ञा नर्तकाश्च संगिरन्ते । १५अभिप्रायोऽपीति काव्यज्ञा संजगदिरे । १६ अलंकारविशेषः, इत्यालंकारिका आहुः । १७ जन्म, इति पौराणिकाः संवदन्ते । १८ लग्नादितस्तन्वादिद्वादशभावः, इति मौहूर्तिका आहुः । १९ ग्रहाणां द्वादशविधचेष्टाविशेषः, इति ज्योतिर्विद आहुः । २० दिव्य-वीर-पशु-भेदेन त्रिविधो भावः, इति तन्त्रज्ञा आहुः ।

**भावना**—१ ( गुणः ) [ क ] अनुभवजन्यः स्मृतिहेतुर्गुणविशेषः । ( त० सं० ४ )

---

१ तदुक्तम्—"विभावेनानुभावेन व्यक्तः संचारिणा तथा । रसतामेति रत्यादिः स्थायी भावः सचेतसाम्" इति । ( सा० द० परि० ३ । श्लो० ३२ ) ते च यथा—आलम्बनोद्दीपनौ, शृङ्गारादिषु स्थायिनः, रत्यादयश्च, निर्वेदादयस्त्रयस्त्रिंशच्च व्यभिचारिभेदा भावाः, इति । ( सा० द० परि० ३ । श्लो० २०२ )

२ स्त्रीणां यौवनकाले सत्त्वभवाष्टाविंशत्यलंकारान्तर्गतोऽङ्गजः प्रथमालंकारोऽयम् । तथा चोक्तम्—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति ।

३ स तु संस्कारप्रभेदः, जीवमात्रवृत्तिः, अतीन्द्रियश्चेति बोध्यम् ( भा० प० ) ( त० सं० )

अत्र भाष्यम्,—भावनासंज्ञकस्त्वात्मगुणः, दृष्टश्रुतानुभूतेष्वर्थेषु स्मृति-प्रत्यभिज्ञान-हेतुः, ज्ञानमददुःखादिविरोधी, पटु-अभ्यास-आदर-प्रत्ययजः* । ( प्रशस्त० २ । पृ० ३४ )

अत्रेदं बोध्यम्—उपेक्षानात्मकेन निश्चयेन ( अनुभवेन ) यः संस्कारो जायते स एवोद्बुद्धः स्मृतिजनकः । उपेक्षात्मकनिश्चयजन्यस्तु न स्मृतिं जनयतीति । संस्कारोऽयमपि सविषयकः ।

---

* तथा हि—( १ ) पटुप्रत्ययजो यथा—पटुप्रत्ययापेक्षादात्ममनसोः संयोगादाश्चर्येऽर्थे पटुः संस्कारो जायते । यथा—दाक्षिणात्यस्योष्ट्रदर्शनात्, इति । ( २ ) अभ्यासप्रत्ययजो यथा—शिल्पविद्याक्रिया-व्यायामादिष्वभ्यस्यमानेषु तस्मिन्नेवार्थे पूर्वपूर्वसंस्कारमपेक्षमाणादुत्तरोत्तरस्मात् प्रत्ययादात्ममनसोः संयोगात् संस्कारातिशयो जायते । ( ३ ) आदरप्रत्ययजो यथा—प्रयत्नेन मनश्चक्षुषि स्थापयित्वाऽपूर्वमर्थं दिदृक्षमाणस्य विद्युत्संपातदर्शनवत् आदरप्रत्ययः ( उत्पद्यते ); तमपेक्षमाणादात्ममनसोः संयोगात्संस्कारातिशयो जायते । यथा—देवहृदे सौवर्ण-राजत-पद्मदर्शनात्, इति । ( प्रशस्त० २ । पृ० ३४ )

[ख] पूर्वानुभूतवस्तुनः स्मृतिहेतुः संस्कारः।* (त० प्र०) (त० कौ०) [ग] ज्ञानजः संस्कारः। २ कृत्यपरनामा प्रयत्नः। (त० प्र० ख० ४। पृ० ८१) यथा–चैत्रस्तण्डुलं पचतीत्यादावाख्यातार्थः प्रयत्नो[1] भावना। ३ शाब्दिकास्तु,–धातुवाच्यो व्यापारः[2]। यथा–पचतीत्यादा[3]-वधःसंतापनादिरूपव्यापारोऽपि धात्वर्थः[4], इत्याहुः। ४ मीमांसकास्तु,– भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः। यथा–यजेतेत्यादौ लिङाद्याख्यातार्थो[5] भावना, इत्याहुः। (लौ० भा०) ५ [१] पौराणिकास्तु,–मानसज्ञानविशेषो भावना (चिन्ता०) सा च,–"त्रिविधा भावना विप्र! विश्वमेतन्निबोधत। ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका" इत्याहुः। (विष्णुपु० अं० ६। अ० ७) [२] यथा च बौद्धमते भावनाचतुष्टयम्, तथैतत् 'बौद्ध' शब्दे द्रष्टव्यम्। ६ भिषजस्तु,–निर्यासादिना चूर्णद्रव्यस्य मिश्रीकरणे,–चूर्णद्रव्यस्य निर्यासादिना संस्कारविशेषो[6] (औषधसंस्कारविशेषः) भावना, इत्याहुः।

---

* संस्कारश्च अन्त्यस्मृत्युत्पादनेन, रोगेण, कालविशेषेण, वा नश्यति। केचित्तु,–समानविषयस्मृत्या स नश्यति, इत्याहुः। (त० व० पृ० २३१) (मु० स्मृतिनि० पृ० १९०)

१ अत्रायं नियमः–'भावनान्वयिन्येव संख्याया अन्वयः' इति। तेन,–कृष्णेन स्थीयते इत्यादौ भावनाया अनन्वयेन, संख्याया अप्यनन्वयेऽपि न क्षतिः, इत्यवधेयम्। (त० प्र० ख० ४। पृ० ८१)

२ अत्रोक्तं भर्तृहरिणा–"व्यापारो भावना सैवोत्पादना सैव च क्रिया। कृञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते" इति। (वै० सा० धात्व० पृ० ५०)

३ अत्राधःसंतापनत्व-फूत्कारत्व-चुल्युपरिधारणत्व-यत्नत्वादिभिर्बोधः सर्वसिद्धः। (वै० सा० धात्व० पृ० ५१)

४ पचति, पाकमुत्पादयति, इत्यस्य 'पाकानुकूला भावना तादृश्युत्पादना' इति विवरणात्,–विग्रियमाणस्यापि तद्वाचकता, इति भावः। (वै० सा० धात्व० पृ० ५०)

५ अत्रायं विशेषो ज्ञेयः—भट्टमते शाब्दी भावना, आर्थी भावना चेति भेदेन द्विविधा भावना। तत्राद्यायां भावनायां च भाव्यजनकत्वम्। भाव्यत्वं चेष्टत्वम्, इति विज्ञेयम् (त० प्र० ख० ४। पृ० ९४)

६ तत्प्रमाणमुक्तं भावप्रकाशे यथा–"द्रवेण यावन्मानेन चूर्णं सर्वं प्लुतं भवेत्। भावनायाः प्रमाणं तु चूर्णे प्रोक्तं भिषग्वरैः" इति। (वाच०)

**भावित्वम्**—१ भविष्यत्त्ववदस्यार्थोऽनुसंधेयः । २ भावविशिष्टत्वम् ।

**भाषणम्**[1]—यत्किंचिज्ज्ञानानुकूलशब्दप्रयोगः।(श०प्र०श्लो०२२)तत्र दृश्यम्।

**भाषा**[2]—१ तत्तद्देशस्थजनवर्तननिर्वाहकं वाक्यम् । यथा—संस्कृतभाषा । २ व्यवहारशास्त्रज्ञास्तु,–प्रतिज्ञासूचकं[3] वाक्यम्, इत्याहुः । अत्र शिष्टं तु, 'पूर्वपक्ष'शब्दे संपादितम्, तत् तत्र द्रष्टव्यम् । ( वाच० )

**भासनम्**—१ दीप्तिः । २ विषयता । यथा–घटत्वं घटे[4] भासते इत्यत्र भासधात्वर्थः । ( श० प्र० श्लो० ७१ । टी० )

**भास्वरत्वम्**—[ १ ] परप्रकाशकत्वम् । ( वै० उ० २ । १ । ३ ) यथा–"भास्वरं शुक्लं तेजसि" ( त० सं० ) इत्यादौ, "स्पर्श उष्णस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्" ( भा० प० श्लो० ४२ ) इत्यादौ च सूर्यतेजसि विद्यमानस्य शुक्लरूपस्य भास्वरत्वम् । [ २ ] जातिविशेषः[5] । ( दि० १ । तेजोनि० पृ० ७८ )

---

१ अत्रायं नियमः—"साधु भाषितव्यम्, नापभ्रंशितवै, न* म्लेच्छितवै" इति ( श्रुतिः ) खरादिशब्दास्तु, रासभादौ म्लेच्छैरिवाचार्यैरपि संकेतिताः; इति तत्प्रयोगे न दोषः । ( श० प्र० श्लो० २२ टी० )

२ अथ भाषाविभागः—( १ ) संस्कृता, ( २ ) शौरसेनी, ( ३ ) महाराष्ट्री, ( ४ ) मागधी, ( ५ ) अर्धमागधी, ( ६ ) प्राच्या, ( ७ ) अवन्तिका, ( ८ ) दाक्षिणात्या, ( ९ ) शाकारी, ( १० ) बाह्लीका, ( ११ ) द्राविडी, ( १२ ) आभीरी, ( १३ ) चांडाली, ( १४ ) शाबरी, ( १५ ) पैशाची, ( १६ ) शौरसेनिका, ( १७ ) प्राकृता, ( १८ ) एतदन्या तत्तद्देशभाषा, चेति । ( सा० द० परि० ६ । श्लो० ४३२)।
तत्तद्भाषालक्षणानि च भाषार्णवे दृश्यानि । पात्रवर्णादिभेदेन भाषाप्रयोगस्तु साहित्यदर्पणादौ ( परि० ६ । श्लो० ४३२ । पृ० १२५–१२६ ) दृश्यः । तत्र संस्कृता सर्वदेशभाषाणां मूलभूता ।

३ अत्र स्मृतिः–"यदावेदयते राज्ञे तद्भाषेत्यभिधीयते" इति । ( मिता० अ० २ । पृ० ५ )

४ अत्र–घटनिष्ठं विशेष्यत्वमवच्छेद्यतासंबन्धेन सप्तम्याऽनुभाव्यते । एवम्—ज्ञाने घटत्वं भासते इत्यादौ–निरूपितत्वमपि सप्तम्याऽनुभाव्यते, इति विज्ञेयम् । ( श० प्र० श्लो० ७१ । टी० )

५ स तु तेजोरूपमात्रवृत्तिः, शुक्लत्वव्याप्यश्च, इति विज्ञेयम् । ( दि० १ । तेजोनि० पृ० ७८ )

---

* तदर्थस्तु,—म्लेच्छितवै म्लेच्छमात्रसंकेतितैः, इति। (श० प्र० श्लो० २२। टी० पृ०२६)

**भिक्षणम्**—प्रार्थनवदस्यार्थोऽनुसंधेयः । यथा—नृपमर्थं भिक्षते इत्यादौ । ( श० प्र० श्लो० ७३ । टी० पृ० ११२ )

**भिक्षा**—१ याचनवदस्यार्थोऽनुसंधेयः । ( ल० म० ) २ भक्षणीयमन्नम् । यथा—भिक्षां देहि त्वमर्थिभ्य इत्यादौ । ( श० प्र० श्लो० १०० । टी० पृ० १७६ )

**भिद्**—( धातुः ) १ [ १ ] अन्यत्वेन ज्ञापनम् । [ २ ] भेदः । यथा—पटाद्भिन्नम्, घटाद्भिद्यते, इत्यादौ धात्वर्थः । ( ग० व्यु० का० ५ । पृ० १११ ) २ विदारणम् । यथा—"भिद्यते हृदयग्रन्थिः" इत्यादौ; भिद्यते कुसूल इत्यादौ वा भिद्धात्वर्थः । ( ग० व्यु० का० ५ )

**भिन्नत्वम्**—१ भेदानुयोगित्वम् । यथा—'घटः पटाद्भिन्नः' इत्यादौ घटस्य पटप्रतियोगिकभेदानुयोगित्वम् । एवम्—अन्यत्वादयः शब्दाः स्वयं निर्वाच्याः, इति । ( स्व० ) २ रोगविशेषनिष्ठो धर्मः, इति भिषज आहुः । ३ विदारणकर्मत्वम्, इति काव्यज्ञा आहुः ।

**भूतकालः**—[ क ] यत्प्रध्वंसेन यः कालोऽवच्छिद्यते, स तस्यातीतकालः । ( वै० उ० २ । २ । ८ )

[ ख ] तद्व्यक्तिध्वंसविशिष्टः कालस्तद्व्यक्तेरतीतकालः । ( त० प्र० ) ( त० कौ० )

[ ग ] वर्तमानध्वंसप्रतियोग्यवच्छिन्नः कालः । ( प० मा० ) यथा—

---

१ अत्र,—भिक्षाशब्दस्य 'भक्षणीय' इत्यर्थे "कृद्भिहिते" इति वैयाकरणानां न्यायोऽनुसंधेयः। ( श० प्र० श्लो० १०० । टी० पृ० १७६ )

२ अत्र—ज्ञापनं च ज्ञानविषयताप्रयोजकव्यापारपक्षधर्मता; । तदाश्रयोऽसाधारणधर्म एव भिदादिकर्तृत्वाद्भेदक उच्यते । अन्यत्वप्रकारकानुमितिविषयतारूपधात्वर्थतावच्छेदकफलाश्रयो भिदाकर्मतया भेद्यः, एवं च—पृथिवी इतरेभ्यो भिद्यते इत्यादौ पृथिव्यादेः कर्मतैव, न केवलकर्तृता, इति । ( ग० व्यु० का० ५ । पृ० १११ )

३ तदुच्यते भावप्रकाशे—"शक्तिकुन्तेषु खड्गाग्रविषाणैराशयो ( कोष्ठः ) हतः । यत्किंचित्प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते" इति । ( वाच० )

४ तल्लक्षणं तु,—[ क ] 'अतीतकाल' शब्दव्याख्यानावसरे टिप्पण्यां संपादितम्, तत्र द्रष्टव्यम् । [ ख ] 'भूतत्व' शब्दस्य प्रथमोऽर्थः ।

"गतः स कालो यत्रासीत्[1]" इत्यादावतीतकालः । ( स्व० )

**भूतत्वम्**—१ विद्यमानध्वंसप्रतियोगित्वम् । यथा—अपाक्षीदित्यादौ लुङर्थो भूतत्वम् । ( न्या० म० ख० ४ । पृ० २४ ) ( ल० म० ) ( तर्का० ४ )।[2] २ [ क ] बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्[3] । ( गौ० वृ० १ । १३ ) ( न्या० बो० ) ( ग० चतु० ) ( मु० १ । साधर्म्य० पृ० ९८ ) [ ख ] आत्मावृत्तिविशेषगुणवत्त्वम्[4] । ( मु० १ । साधर्म्यनि० पृ० ९८ ) यथा—पृथिव्यादीनां[5] पञ्चानां भूतत्वम्[6] । ( गौ० १ । १ । १३ )

१ समुदायश्लोकस्तु,—"गतः स कालो यत्रासीदवज्ञा कल्पशाखिनाम् । उदुम्बरफलेभ्योऽपि स्पृहयामोऽधुना वयम्" इति ।

२ अत्र,—उत्पत्तिः, भूतत्वं च लुङोऽर्थः । भूतत्वं चोत्पत्त्यावन्वेति । तथा च—'विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम् । ( तर्का० ४ । पृ० ११ )

३ अत्र पदप्रयोजनादिविशेष उच्यते—आत्मन्यतिव्याप्तिवारणाय बहिःपदम् । बहिरिन्द्रियग्राह्यजातीयसंयोगादिमति कालादावतिव्याप्तिवारणाय 'विशेष' इति । द्रव्यत्वमादायातिव्याप्तिवारणाय 'गुण' इति । ( दि० १ । साधर्म्यनि० पृ० ५८ ) । अत्र लौकिकत्वनिवेशस्य फलमाह—ग्राह्यत्वं च लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्; तेन, 'ज्ञातो घटः' इति प्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात् तद्वत्यात्मनि नातिव्याप्तिः । न च, प्रत्यक्षाविषयरूपादिमति परमाण्वादावव्याप्तिः; तस्यापि स्वरूपयोग्यत्वात् । महत्त्वलक्षणकारणान्तरासंनिधानाच्च न ( परमाणुवृत्तिरूपादेः) प्रत्यक्षत्वम्, इति । (मु० १ । साध० पृ० ५८)

४ अत्र कल्पे—दैशिकपरत्वापरत्वमादाय मनस्यतिव्याप्तिवारणाय 'विशेष' इति पदं दत्तम् । ( दि० १ । साधर्म्य० पृ० ५९ )

५ पृथिव्यादयश्च, "पृथिव्यापस्तेजो वायुराकाशमिति*" ( गौ० १ । १ । १३ )

६ अत्रायं प्रसङ्गोपात्तो विशेषः—भौतिकं च भूतारब्धम् । यथा—"पाञ्चभौतिको देहः †" इत्यादौ । ( सां० सू० अ० ३ । सू० १७ )

---

* भूतानां विशेषगुणास्तु,—"शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः" इति । भूतानामेकैकविशेषगुणा उक्ता यथा—"आकाशस्य गुणः शब्दः, वायोः स्पर्शः, तेजसो रूपम्, जलस्य रसः, भूमेर्गन्धः," इति । ( गौ० १ । १ । १४ ) ( शा० ति० )
सांख्यास्त्वन्यथाऽङ्गीचक्रुः,—"शब्दैकगुण आकाशः शब्दस्पर्शगुणो मरुत् । शब्दस्पर्शरूपगुणैस्त्रिगुणं तेज इष्यते ॥ शब्दस्पर्शरूपरसैरापो ज्ञेयाश्चतुर्गुणाः । शब्दस्पर्शरूपरसगन्धैः पञ्चगुणा मही" इति ( ईशानसंहिता ) ( वाच० )

† अत्र,—स्थूलशरीरे विप्रतिपत्तिः-स्थूलशरीरं "चातुर्भौतिकमित्येके," "ऐकभौतिक-

( भा० प० श्लो० २६ ) ३ सत्यत्वम् । यथा—“भूतमप्यनुपन्यस्तं हीयते व्यवहारतः” ( स्मृतिः ) इत्यादौ । ४ तत्त्वानुसंधानम् । यथा—“छलं निरस्य भूतेन” ( स्मृतिः ) इत्यादौ । ५ पिशाचत्वम्, इति मान्त्रिका वदन्ति । ६ कृष्णचतुर्दशीत्वम्, इति मौहूर्तिका आहुः । ७ प्राणित्वम्।

**भूतार्थवादः**—( अर्थवादः ) [ १ ] तत्कालेऽपि तद्गुणज्ञापकः शब्दः । यथा—“जरायामप्ययं शूरः” इत्यादि । ( सि० च० पृ० ३३ ) यथा वा—राज्यभ्रंशेऽप्यमात्यैः ‘अयं राजा’ इति प्रयुज्यते, इति । ( त० प्र० ख० ४ । पृ० १२४ ) [ २ ] [ क ] मीमांसकास्तु,—प्रमाणान्तरविरोध-तत्प्राप्ति-रहितार्थबोधको[3] वादः । यथा—“इन्द्रो वृत्राय वज्रमुदयच्छत्” इत्यादिः । (श्रुतिः) ( लौ० भा० पृ० ५५ ) ( म० प्र० ४ । पृ० ६४ ) यथा वा—“वज्रहस्तः पुरन्दरः” इत्यादिश्च । ( त० कौ० ) [ ख ] अविरुद्धाप्राप्तार्थबोधकः शब्दः, इत्याहुः ।

**भूमिका**—१ प्रयोजनसंपादिका युक्तिः । ( राम० ) यथा—“विशेषपदस्य प्रयोजनमभिधातुं भूमिकामाह” इत्यादौ । ( दि० १ ) यथा वा—“तदेवोपपादयितुं भूमिकां रचयति” इत्यादौ । ( सि० च० २ । पृ०

---

१ यथा—“ब्रह्मविद्या क्षत्रविद्या नक्षत्रविद्या भूतविद्या सर्पविद्या” ( छा० उप० ) इत्यादौ—भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागमहाद्युपसृष्टचेतसां शान्तिकर्म; बलिहरणादि महोपशमनार्थम्” इति । सा च ( भूतविद्या ) तत्र उत्तरतन्त्रे दर्शिता ।

२ विधिसमभिव्याहाराभावेऽप्ययमप्यर्थवादः संभवति, इति बोध्यम् । (गौ० वृ० २ । ६५)

३ तदुक्तम्—“विरोधे गुणवादः स्यात्, अनुवादोऽवधारिते । भूतार्थवाद*स्तद्धानादर्थवादस्त्रिधा मतः” इति । ( न्या० म० ख० ४ । पृ० ३१ )

४ अयं भावः—अस्य, वृत्रं प्रतीन्द्रवज्रोद्यच्छनामात्रावगाहिप्रमाणान्तरस्यादर्शनात्, न तद्बोधने प्रमाणान्तरविरोधः । नापि प्रमाणान्तरावगतार्थप्रतिपादकत्वम्; वृत्रं प्रतीन्द्रवज्रोद्यच्छनप्रतिपादकप्रमाणान्तरस्यादर्शनात्, भूतार्थवादत्वम्, इति । ( लौ० भा० पृ० ५५ )

---

मित्यपरे” ( सांख्य० सू० अ० ३ । सू १८–१९), ‘सार्वभौतिकम्’ इति पूर्णप्रज्ञाचार्याः प्राहुः । ( ब्र० सू० भा० ३ । १ । २ )

सांख्यास्तु,—शरीरं न पाञ्चभौतिकम्(?), किं तु पृथिव्युपादानकमेव, इत्याहुः । मायावादिवेदान्तिनस्तु,—त्र्यात्मकमेव, ( तेजोऽबन्नात्मकम् ), इत्यङ्गीचक्रुः ।

* तदर्थश्च—तद्धानात्, तयोः प्रमाणान्तरविरोध-प्रमाणान्तरप्राप्त्योः, हानात्, अभावात् इति ।

२४ ) २ नाट्ये अभिनेयपात्रादिवेशान्तरसूचिका रचना, इति नाट्यकलाभिज्ञा आहुः ।

**भूयस्त्वम्**—१ क्वचित्–[ क ] इतरद्रव्यानभिभूतैः पार्थिवावयवैरारब्धत्वम् । ( वै० उ० ८ । २ । ५ )
[ ख ] जलाद्यनभिभूतभागारब्धत्वम् । ( वै० वि० ८ । २ । ५ ) यथा—"भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः" ( वै० सू० ८ । २ । ५ ) इत्यादौ घ्राणेन्द्रियस्य भूयस्त्वम् । २ पुनःपुनः परिशीलनवत्त्वम् । यथा—भूयोदर्शनमित्यादौ । ( स्व० )

**भूयोदर्शनम्**—साध्यसाधनयोर्व्याप्तिग्रहे जनकं, तयोर्भूयःसहचारदर्शनम् । यथा—धूम-धूमध्वजयोर्नानास्थानावच्छेदेन सामानाधिकरण्यावगाहिज्ञानम् । ( त० दी० २ । पृ० २० ) ( सि० च० २ । पृ० २४ )

**भेदः**—१ अन्योन्याभाववदस्यार्थोऽनुसंधेयः । २ प्रभेदवदस्यार्थोऽनुसंधेयः । ३ तादात्म्यातिरिक्तः संबन्धः । ( म० प्र० ४ । पृ० ४८ ) यथा—

---

१ अत्रोच्यते [ १ ] "अन्यरूपैर्यदन्यस्य प्रवेशस्तत्र भूमिका" इति । [ २ ] "रङ्गसंचारिपात्राणां स्थानकं भूमिकां विदुः" इति च ।

२ अत्र व्याकरणम्—अतिशयेन बहुः, ( ईयसुन् ); "बहोर्लोपो भू च बहोः" (पा० सू० ६ । ४ । १५८ ) इत्यनेन ईयसुन्प्रत्ययस्थस्य ईकारस्य लोपः, बहुशब्दस्य लोपः, 'भू' इत्यादेशश्च । तेन 'भूयस्' इति रूपं सिद्ध्यति ।

३ पारिभाषिकं चैतद्भूयस्त्वं समानतन्त्रेऽपि । ( वै० उ० ८ । २ । ५ )

४ भूयोदर्शनशब्दस्यार्थविशेषं विकल्प्य तस्य व्याप्तिग्राहकत्वं खण्डयति नीलकण्ठः—'भूयोदर्शनम्' इत्यस्य ( १ ) 'भूयसां दर्शनानां समाहारः' इति; ( २ ) 'भूयसां साध्यहेतूनां दर्शनम्' इति; ( ३ ) 'भूयस्त्वाधिकरणेषु दर्शनम्' इति वाऽर्थः ? । नाद्यः;—एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात् । न द्वितीय-तृतीयौ;—एतद्रूपवानेतद्रसादित्यादौ साध्यहेत्वोरधिकरणे च भूयस्त्वाभावेन ( साध्यहेत्वोरेकव्यक्तित्वात् ) व्याप्तिनिश्चयानुत्पादप्रसङ्गात्, इति । ( नील० २ । पृ० २१ )

५ अत्र–भूयःसहचारदर्शनं च व्यभिचारज्ञानविरहेण सहितमेव व्याप्तिग्राहकं भवति, न त्वन्यथा; केवलसहचारदर्शनेऽपि ( पार्थिवत्वलोहलेख्यत्वयोः शतशः सहचारग्रहेऽपि ) हीरकादौ व्यभिचारदर्शनेन व्याप्तिग्रहानुदयात्, इति । ( सि० च० २ । पृ० २४ ) (त० दी० २ । पृ० २१ )

'राजपुरुष इत्यादौ राजपदार्थपुरुषपदार्थयोर्भेदेनान्वयबोधोऽव्युत्पन्नः' इत्यादौ भेदः । ( ख० ) ४ राज्ञः सामाद्युपायविशेषः, इति नीतिशास्त्रज्ञा आहुः । ५ पृथक्करणम् । ६ विदारणं च, इति काव्यज्ञा आहुः ।

**भेदकम्**—१ ( व्यावर्तकम् ) भेदज्ञापकम् । यथा—नीलो घट इत्यादौ नीलत्वं विशेषणं रक्तघटादिभेदकम् । यथा वा—पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वादित्यादौ गन्धवत्त्वरूपं पृथिवीलक्षणं जलादिभेदकम् । २ भेदकारकम् । यथा—कुठारो भिनत्तीत्यादौ कुठारो भेदकः ।

**भोगः**—१ [ १ ] [ क ] सुखदुःखान्यतरसाक्षात्कारः । (त० भा० पृ० ४) (त० दी० १ । पृ० ७) (वाक्य० )

[ ख ] स्वसमवेतसुखदुःखान्यतरलौकिकसाक्षात्कारः । (प्र० प्र० ) यथा—"आत्मनो भोगायतनं शरीरम्" (त० दी० १ ) इत्यादौ भोगः । [ २ ] अत्र वेदान्तिनस्तु,—आनन्दमात्रानुभवो भोगः । यथा— "ॐभोगमात्रसाम्यलिङ्गाच्च ॐ" (ब्रह्म-सू० ४ । ४ । २१ ) इत्यादौ, इत्याहुः । २ रव्यादीनां राशिगतिकालः, इति ज्योतिर्विद आहुः । ३ सर्पदेहः, इति काव्यज्ञा आहुः ।

---

१ अत्रायं नियमः—'निपातातिरिक्तनामार्थयोः साक्षात् ( विभक्त्यर्थमद्वारीकृत्य ) भेदेनान्वयबोधोऽव्युत्पन्नः' इति । एतादृशनियमस्वीकारेण, 'राज्ञः पुरुषः' इत्यत्रापि—स्वस्वत्वसंबन्धेन राजपदार्थस्य पुरुषपदार्थे नान्वयबोधापत्तिः ।

२ तदुक्तमग्निपुराणे—"परस्परं तु ये द्विष्टाः क्रुद्धभीतावमानिताः । तेषां भेदं प्रयुञ्जीत परमं दर्शयेद्भयम्" इत्यादि । ( अग्निपु० अ० २२५ )

३ अत्र 'विशेष्यस्य यादृशे लिङ्ग-वचने, तादृशलिङ्गवचनविशिष्टस्यैव विशेषणस्य भेदकत्वम्' इति विशेषमाह—"स्त्रीदाराद्यैर्यद्विशेष्यं यादृशैः प्रस्तुतं पदैः । गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः" इति ( अमर० का० ३ । वर्ग० १ । श्लो० २ )

४ तदुक्तम्—"भेद्यं विशेष्यमित्याहुर्भेदकं च विशेषणम्" इति ।

५ अत्र श्रीमध्वाचार्यैरुच्यते—"विद्यमानस्य भेदस्य ज्ञापको नैव कारकः" इति । (उपा०ख० )

६ अत्र भविष्यत्पुराणम्—"मुक्ताः प्राप्य परं विष्णुं तद्भोगाँल्लेशतः क्वचित् । बहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथंचन" इति । ( मध्व-भा० ४ । ४ । ४ )

७ अत्रोच्यते—"अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः" इति । ( तिथि०त० )

**भोगायतनम्**—भोगस्यावच्छेदकम् । यथा—"यदवच्छिन्नात्मनि भोगो जायते, तत् भोगायतनम्" ( त० दी० १ ) इत्यादौ—शरीरावच्छिन्न आत्मनि भोगो जायते, इति शरीरं भोगायतनम् । (स्व०)। तच्च (भोगायतनम्) स्थूलदेहः, इति सांख्या आहुः ।

**भोजनम्**—गलाधोनयनम् । तच्च [क] गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा—ओदनं भुङ्क्ते इत्यादौ धात्वर्थः । ( ग० व्यु० का० २ । पृ० ४३ )

[ख] प्राञ्चस्तु,—कठिनद्रव्यस्य गलबिलाधःसंयोजनं भोजनम्, इत्याहुः ।

**भ्रमः**—१ ( अप्रमा ) [ १ ] [ क ] यत्र यन्नास्ति, तत्र तस्य ज्ञानम् ।

---

१ अत्र केचिद्वेदान्तिन आहुः—भोगसाधनं च लिङ्गशरीरमेव । तथा चोक्तम्—"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" इति । सांख्यमते तु,—पञ्चप्राणस्थले पञ्चभूतमात्राः, इति भेदः । स्थूलदेहस्य भोगावच्छेदकत्वात्, उपचारात्* तथात्वम्, इति बोध्यम् ।

२ अत्र सूत्रम्—"भोक्तुरधिष्ठानाद्भोगायतननिर्माणम्; अन्यथा पूतिभावप्रसङ्गात्" इति । (सांख्य–सू० अ० ५ । सू० ११४)

३ अत्र—भुजधात्वर्थघटके तादृशक्रियारूपफल एव ओदनवृत्तित्वान्वयः । ( ग० व्यु० का० २ । पृ० ४३ )

४ भ्रमश्च दोषाज्जन्यते । भ्रमलक्षणं तु,—स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्व-स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्व-एतत्रितयसंबन्धेन संबन्धविशिष्टान्यप्रकारताशालिज्ञानत्वम्, इति ( ग० अव० हेतु० ) अत्र स्वपदार्थस्तु, विशेष्यविशेषणयोर्भासमानः संबन्धो ज्ञेयः ।

अत्रेदमवधेयम्—विपर्ययोऽपि प्रत्यक्षानुमानविषय एव भवति । प्रत्यक्षविषये तावत्—प्रसिद्धानेकविशेषयोः पित्तकफानिलोपहतेन्द्रियस्यायथार्थालोचनात् संप्रत्यसंनिहितविषयविज्ञानजसंस्कारापेक्षादात्ममनसोः संयोगादधर्माच्चातस्मिन् 'तत्' इति प्रत्ययो विपर्ययः । यथा—गव्येव 'अश्वः' इति । असत्यपि प्रत्यक्षे प्रत्यक्षाभिमानो भवति । यथा—'अपगतघनपटलमचलजलनिधिसदृशमम्बरम्; अञ्जनचूर्णपुञ्जश्यामं शार्वरं तमः' इति । अनुमानविषयेऽपि—बाष्पादिभिर्धूमाभिमतैर्वह्न्यनुमानम्; गवयविषाणदर्शनाच्च 'गौः' इति; त्रयीदर्शनविपरीतेषु शाक्यादिदर्शनेषु 'इदं श्रेयः' इति मिथ्याप्रत्ययो विपर्ययः । (प्रशस्त० पृ० २४)

५ समुदायार्थश्च—तदभाववन्निरूपित–तन्निष्ठविषयता-प्रतियोगि ज्ञानम्, इति । अत्र,—स्मृतेरपि भ्रमतया, अनुभवत्वमपहाय ज्ञानत्वप्रवेशः । ( मु० म० १ । प्रामा० पृ० ४०५ )

---

* अत्र सूत्रम् "तदधिष्ठानाश्रये देहे तद्वादात्तद्वादः" इति । (सांख्य–सू० अ० ३ । सू० ११)

[ ख ] तदभाववति तत्प्रकारकज्ञानं वा । ( चि० १ । प्रामा० पृ० ४०१ ) ( त० प्र० १ ) ( त० दी० )

[ ग ] अतस्मिन् 'तत्' इति प्रत्ययः । ( न्या० वा० १ । पृ० २६ ) ( सर्व० अक्ष० ) ( भा० प० श्लो० १२८ ) ( त० भा० पृ० ४० )

[ घ ] विशेष्यताव्यधिकरणप्रकारकं ज्ञानम् । ( म० प्र० ४ । पृ० ७३ ) यथा—पुरोवर्तिन्येवारजते शुक्त्यादौ रजतारोपः ( 'इदं रजतम्' इति ज्ञानम् ) । ( त० भा० पृ० ४० ) ( त० प्र० १ ) ( त० दी० ) यथा वा—'पीतः शङ्खः, लोहितः स्फटिकः' इत्यादि ज्ञानम् । ( त० कौ० ) ( भा० प० श्लो० १२९ ) यथा वा—'कृशोऽहं, बधिरः, स्थूलः' इति ज्ञानम् । ( त० व० ) भ्रमो द्विविधः;—विपर्यासः ( विपर्ययः ), संशयश्च । तत्राद्यो यथा—शरीरादौ यदात्मत्वप्रकारकं 'गौरोऽहम्' इत्याकारकं निश्चयरूपं ज्ञानम् । ( मु० गु० ) द्वितीयो यथा—'स्थाणुर्वा पुरुषो वा' इति संशयरूपः । ( भा० प० श्लो० १३० )

[ ङ ] मिथ्याज्ञानापरपर्यायोऽयथार्थनिश्चयः । ( गौ० वृ० ४ । ३ ) ( त० सं० )

[ छ ] विपरीतनिर्णयः । ( त० कौ० ) [ २ ] [ क ] अतिरिक्त-

---

१ अत्र—[ क ] विशेष्यित्वं सप्तम्यर्थः; तस्यावच्छिन्नतासंबन्धेन तत्प्रकारकतायामन्वयः । तथा च—तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववद्विशेष्यकत्वावच्छिन्न-तद्व्यक्तिप्रकारिताशालिज्ञानम्, इति फलितम् । [ ख ] यद्वा—विशेष्यितासंबन्धेनावच्छिन्नत्वमेव सप्तम्यर्थः । तथा च—विशेष्यितासंबन्धेन तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाववदवच्छिन्ना या तद्व्यक्तिप्रकारिता तच्छालिज्ञानम्, इति फलितम् । तेन ( फलितार्थकथनेन ), 'रङ्ग-रजते' इति समूहालम्बनप्रमायां नातिव्याप्तिः, इति । ( मू० म० १ । प्रामा० पृ० ४०५ ) [ ग ] तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकतदभाववति तत्संबन्धेन तद्धर्मविशिष्टतन्निरूपितवैशिष्ट्यविषयताशालि*ज्ञानम् । ( मू० म० १ । प्रामा० पृ० ४०६ )

२ अयं च मोहपक्षान्तर्गतो दोषविशेषः, इति विज्ञेयम् ।

३ अयं तु, अप्रमाप्रभेदः; 'भ्रम-संशय-भेदेन द्विविधाऽप्रमा' इति विभजनात् । तेन, अत्रत्यभ्रमत्वस्य निर्णयत्वरूपस्य संशयासाधारणत्वेऽपि न क्षतिः ।

---

* 'इदं तु, तद्धर्मरूपेण तद्भ्रमस्वरूपम्' इति बोध्यम् । ( मू० म० १ । प्रामा० पृ० ४०६ )

विषयतापक्षे—यत्प्रकारिका या विषयता, तत्प्रकारव्यधिकरणविषयताकं ज्ञानम् ।

[ ख ] स्वप्रकारव्यधिकरणविषयताकं ज्ञानम् [ ३ ] [ क ] स्वव्यधि-करणप्रकारावच्छिन्नविषयताप्रतियोगि ज्ञानम् ।

[ ख ] स्वसमानाधिकरणप्रकारानवच्छिन्नविषयताप्रतियोगिज्ञानम् । ( चि० १ । प्रामा० पृ० ४१८–४२० ) २ जलनिर्गमस्थानम् । ३ भ्रमणं च, इति काव्यज्ञा आहुः ।

**भ्रमणम्**—( कर्म ) गतिविशेषः । अयं च गमनेऽन्तर्भवति । ( भा० प० श्लो० ७ )

**भ्रान्तिः**—१ भ्रमवदस्यार्थोऽनुसंधेयः । ( अमरः ) २ योगान्तरायश्चित्त-विक्षेपो भ्रान्तिः, इति योगशास्त्रज्ञा आहुः । (पात० पा० १ । सू० ३०)

---

१ 'प्रकारता विशेष्यतावच्छेदकतातिरिक्ता, सविषयका च' इति पक्षे, इत्यर्थः ।

२ तदर्थश्च–[ १ ] प्रकारो धर्मः, तद्धर्माधिकरणावृत्तितद्विषयताकं ज्ञानम्, इति । [ २ ] मिश्रास्तु,–तत्प्रकारव्यधिकरणत्वं तत्प्रकारानधिकरणवृत्तित्वम्, इत्याहुः । ( मू० म० १ । पृ० ४१९ )

३ अत्र,—स्वप्रकारव्यधिकरणत्वं च [ १ ] स्वप्रकाराधिकरणावृत्तित्वम् । मिश्रास्तु,–[ २ ] स्वप्रकारव्यधिकरणत्वं च स्वप्रकारानधिकरणवृत्तित्वम्, इत्याहुः । तेन,—ग्रन्थकर्तृमते रजतारजतसाधारणधर्मद्रव्यविशेष्यकं 'द्रव्यं रजतम्' इत्यादिज्ञानस्य न रजतत्वादिभ्रम-त्वम् । मिश्रमते तु तस्य तद्भ्रमत्वमिष्टमेव, इति । ( मू० म० १ । प्रामा० पृ० ४२० )

४ स्वव्यधिकरणेति,–स्वाश्रयावृत्तिधर्मप्रकारकेत्यर्थः । ( मू० म० १ । प्रामा० पृ० ४२२ )

५ तथा च लक्षणं संगमयति—'इदं रजतम्' इति भ्रमे च विषयताद्वये व्यधिकरणप्रकारा-वच्छिन्नत्वस्य, विषयत्वप्रतियोगित्वस्याविरोधात्; समूहालम्बने च विषयताभेदान्नाप्रमाल-क्षणेऽव्याप्त्यतिव्याप्ती । (चि० १ । प्रामा० पृ० ४२१–४२२) सर्वत्र 'स्व'पदेन विशेष्यता ।

६ स्वसमानाधिकरणेति,–स्वसमानाधिकरणधर्मप्रकारकेत्यर्थः । प्रकारता च विशेष्यताव-च्छेदकतातिरिक्ता ग्राह्या । तेन,—'इदं रजतम्' इति शुक्तिमात्रविशेष्यकभ्रमे नाव्याप्तिः । विशेष्यतावच्छेदकांशे भ्रमरूपम्, विधेयांशे च प्रमारूपं ज्ञानम् न लक्ष्यम्, इति न तत्रा-( ति )व्याप्तिरिति भावः । (मू० म० १। प्रामा० पृ० ४२२)

७ अयं च कल्पः क्वचित्पुस्तके दृश्यते । ( मू० म० १ । प्रामा० पृ० ४२२ )

८ अत्रोच्यते व्यवहारविषये—"षाण्मासिके तु संप्राप्ते भ्रान्तिः संजायते नृणाम् । धात्राऽक्ष-राणि सृष्टानि पत्रारूढान्यतः पुरा" इति । ( ज्यो० त० ) ( वाच० )

म.

**मङ्गलम्**—१ [१] विघ्नध्वंसद्वारकार्य-(समाप्ति)-फलकं कर्म । तच्च यथा,—ग्रन्थारम्भे कर्तव्यमाशीर्वादाद्यन्यतमम् "निधाय हृदि विश्वेशं

१ मङ्गलत्वं च [क] प्रतिबन्धकान्यस्य सतः, प्रारिप्सितप्रतिबन्धकदुरितनिवृत्त्यसाधारणकारणत्वम् । (कि० व० पृ० ६) [ख] विघ्नोत्सारणासाधारणकारणत्वे सति साध्यत्वम् । (न्या० सि० दी० पृ० ३)

२ अत्र मङ्गलत्वं च 'निर्विघ्नमारब्धं परिसमाप्यताम्' इति कामनया वेदविहितत्वम् । (चि० १ । मङ्ग० पृ० १०१) अयं कल्पः प्राचीनमताभिप्रायेण । तन्मते-समाप्तिरेव सुखसाधनतया पुरुषार्थत्वात्फलम्,* न तु विघ्नध्वंसो मङ्गलस्य फलम्; तस्यापुरुषार्थत्वात्, इति । (वै० उ० १ । १ । १)

३ अत्र शङ्का—कृतमङ्गलस्यापि कादम्बर्यादौ फलादर्शनात्, अकृतमङ्गलस्यापि किरणावल्यादौ फल-(समाप्ति-)दर्शनाच्च, ग्रन्थारम्भे मङ्गलं नानुष्ठेयम् । नहि निष्फले प्रेक्षावान् प्रवर्तते, इति ।

अत्रोत्तरम्—मङ्गलाकरणस्थले (किरणावल्यादौ) जन्मान्तरीयस्य † मङ्गलस्य; मङ्गलकरणस्थले (कादम्बर्यादौ) चाङ्गवैगुण्यस्य; कल्पनया सफलत्वं निश्चीयते, इति ।

४ अत्र—[१] मङ्गलस्य स्वाभिमतहेतुत्वे तथाविधशिष्टाचारानुमितश्रुतिरेव‡ मानम् । (चि० १। मङ्गलवा० पृ० १५) [२] मङ्गलस्य कर्तव्यत्वे प्रमाणमनुमानमपि । तच्च, 'मङ्गलं सफलम्, § अलौकिकाविगीतशिष्टाचारविषयत्वात्,¶ अग्निहोत्रवत्' इति । अनेनानुमानेन सफलत्वं सिद्ध्यत्समाप्त्यादिरूपमुपस्थितफलमादायैव पर्यवस्यति । (म० प्र० १) (म० वा० १) तथा अनुमानम्—'मङ्गलं समाप्तिफलकम्, समाप्त्यन्याफलकत्वे सति सफलत्वात्' इति (दि० १ । मङ्गल० पृ० ४) अनेनानुमानेन समाप्तिफलकत्वं सिद्ध्यत्कर्तव्यत्वं साधयितुं क्षमते । तथा हि—'मङ्गलं कर्तव्यम्, समाप्तिफलकत्वात्' इति । (नील० १ । मङ्ग० पृ० २)

५ तदुक्तम्—आशीर्वादनमस्कारवस्तुनिर्देशभेदतः । मङ्गलं त्रिविधं प्रोक्तं शास्त्रादीनां मुखा-

* तदुक्तम्—"श्रौतात्साङ्गात्कर्मणः फलावश्यंभावनियमात्" इति । (वै० उ० १।१।१। पृ०५)

† जन्मान्तरीयमङ्गलानुमानं तु 'इदम् (मङ्गलम्) आरब्धकर्माङ्गम्, कर्मार्थितया शिष्टैस्तत्पूर्वं क्रियमाणत्वात्, फलान्तराभावे सति फलवत्कर्मारिप्समानेन नियमतस्तत्पूर्वं क्रियमाणत्वाच्च, दर्शे प्रयाजवत्' इति (चि० १ । मङ्गलवा० पृ० १९)

‡ अनुमितश्रुतिश्च "समाप्तिकामो मङ्गलमाचरेत्" इति । अत्र श्रुत्यनुमानं तु—[१] 'नमस्कारादिकम् (मङ्गलम्) वेदबोधितसमाप्तिसाधनताकम्, समाप्त्युद्देश्यकालौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्' इति । अत्र 'यो यदुद्देश्यकाविगीतशिष्टाचारवि-

विधाय गुरुवन्दनम्" इत्यादि । [ २ ] नव्यास्तु ( चिन्तमाणिकृतः )—
[ क ] विघ्नोत्सारणासाधारणं कारणम् । ( म० प्र० १ । पृ० २ )
[ ख ] विशेषणतादिसंबन्धावच्छिन्नप्रारिप्सितविघ्नध्वंसत्वावच्छिन्नकार-

---

दिषु, इति । ( सि० च० ) अत्र वस्तुनिर्देशश्च पुण्यजनकशब्दनिबन्धः, पुण्यकृत्स्तुतिप्रतिपादकशब्दो वा । ( म० वा० पृ० १० )

१ एतन्मते मङ्गलत्वं च तद्विघ्नोपशमहेतुत्वेन वेदविहितत्वम् । ( चि० १ । मङ्ग० पृ० १०१) तथा चैतन्मते—मङ्गलस्य फलं विघ्नध्वंस एव । समाप्तिस्तु बुद्धि-प्रतिभादिविघ्नसंसर्गाभावरूपस्वकारणकलापाद्भवति, इति विज्ञेयम् । ( नील० १ । मङ्गल० पृ० २) ( मु० १ । मङ्गल० ) ( दि० १ । मङ्ग० ८–९ )

२ इदं लक्षणं शशधरीये ( न्यायसिद्धान्तदीपे ) उक्तम् । तदर्थश्च—समाप्तिप्रतिबन्धकदुरितविशेषो विघ्नस्तस्योत्सारणं नाशस्तदसाधारणं कारणं मङ्गलपदवाच्यम्, इति । ( म०प्र० १ । पृ० २ ) अत्र [क] किरणावली—'मङ्गलमाचरेत्' इति न विधिः; किं तु 'नमस्कारादिकमाचरेत्' इति प्रत्येकमेव विधिकल्पनम्, इत्यस्मद्गुरवः" इति । ( किर० पृ० ६ ) [ ख ] तत्त्वचिन्तामणिः—'मङ्गलमाचरेत्' इति न विधिः, किंतु—'निर्विघ्नसमाप्तिकामो ( प्रारिप्सितविघ्नोपशमनकामो वा ) देवतास्तुतिमाचरेत्' इत्यादिः प्रत्येकमेव विधिः । "मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् । जपतां जुह्वतां चैव विनिपातो न वि इत्यनेन बोधिताऽऽदर्शदर्शनादेः पृथगेव मङ्गलत्वम्, न तु विघ्ननिवर्तकतया; तत्र न तैव, इति । ( चि० १ । मङ्ग० पृ० १०१–१०२ )

---

षयः, स वेदबोधिततत्साधनताकः, यथा दर्शः' इति सामान्यतो व्याप्तिर्द्रष्टव्या म० १। मङ्गल० पृ० १६ ) । [ २ ] मङ्गलं वेदबोधितकर्तव्यताकम्, अलौकिका शिष्टाचारविषयत्वात् दर्शश्राद्धवत्' इति च । ( त० दी० १ । मङ्ग० पृ० २'

§ अत्र [ १ ] शिष्टश्च वेदप्रामाण्याभ्युपगन्ता, वेदप्रामाण्यानभ्युपगमविरोधिमत्त्वमिति र विरोधी तु 'सर्वे वेदाः प्रमाणमिति' ज्ञानं तादृशसंस्कारश्च । ( म० प्र० १ ) (मु० १ । मङ्गल० पृ० १६ ) सफलत्वं च बलवदनिष्टाननुबन्धीष्टफलकत्वम् । अविगी [ क ] बलवदनिष्टाननुबन्धित्वम्, तच्च, स्वजन्येष्टापेक्षयाऽधिकानिष्टजनकत्वं यद्यत् र त्वम् । ( म० वा० पृ०१ ) [ ख ] धर्मशास्त्रानिषिद्धत्वम् । ( नील०१ । मङ्ग० पृ० [ २ ] शिष्टत्वं चेष्टसाधनत्वांशेऽभ्रान्तत्वम् । आचारविषयत्वं तु साध्यत्वेन फल[illegible]त्वेन वा ( विधेयतया ) कृतिविषयत्वम् । ( म० वा० पृ० १ ) ( दि० १ । मङ्ग० पृ० ५ ) अलौकिकत्वं विधिमन्तरा रागादिप्राप्तभिन्नत्वम् । ( नील० १ । पृ० २ )

¶ अत्र सांख्यसूत्रम्—"मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति" इति । ( सां० सू० अ० ५ । सू० १ )

णतावत्, इत्याहुः । ( म० वा० पृ० १० ) [ ३ ] अगर्हिताभीष्टा-वाप्तिर्मङ्गलम्, इति योगशास्त्रज्ञा आहुः । ( सर्व० पात० पृ० १५७ ) २ प्रशस्ताचरणं मङ्गलम्, इति धर्मज्ञा वदन्ति । ३ हरिद्रा, ४ दूर्वा, चेति काव्यज्ञा आहुः ।

मतानुज्ञा—( निग्रहस्थानम् ) [ १ ] [ क ] स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा । ( गौ० ५ । २ । २१ ) यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति 'भवत्पक्षे समानो दोषः' इति, स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन्परमतमनुजानातीति मतानुज्ञानाम निग्रहस्थानमापद्यत इति । ( वात्स्या० ५ । २ । २१ )

[ ख ] स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम् । ( दि० १ ) ( नील० पृ० ४६ ) यथा—शब्दो नित्यः श्रावणत्वादित्युक्ते 'ध्वनाव-नैकान्तिकत्वेन हेत्वाभासोऽयम्' इत्युक्तौ—शब्दोऽनित्यः कृतकत्वादिति साधिते 'ध्वनेरपि पक्षत्वान्न दोषः' इत्युक्तौ 'असिद्धत्वात् तवापि हेत्वाभासोऽयम्' इत्युक्तौ सोऽयं मतानुज्ञया निगृहीतः स्यात्; अप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् । ( गौ० वृ० ५ । ६३ ) [ २ ] स्वसिद्धान्ते परापादितदोषमनुद्धृत्य परस्यानिष्टबुद्ध्येष्टप्रसञ्जनम्[३] । यथा—केनचिदात्मनः 'पुरुषत्वाच्चोरस्त्वमसि' इत्युक्ते तत एव हेतोः 'त्वमपि चोरः' इति प्रसञ्जनम् । ( सार-सं० परि० ३ । श्लो० १४८ । टी० पृ० ११९ ) [ ३ ] पराभिमतस्यार्थस्य स्वप्रतिकूलस्य स्वयमेवाभ्यनुज्ञा( स्वीकारः ) । ( त० भा० पृ० ५१ )

---

१ अभीष्टं च सुखावाप्ति-दुःखपरिहार-रूपतयेष्टम् । ( सर्व० पात० पृ० १५७ )

२ पौराणिकमते—मङ्गलद्रव्याण्यष्टौ—"लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः" इति । ( मत्स्यसूक्ते, प० ४२ ) ( वाच० )

३ इष्टप्रसञ्जनं यथा—'नित्यः शब्दः कार्यत्वादित्युक्ते तत एव हेतोस्तवाप्यनित्यः* स्यात्' इत्यादीन्युदाहरणानि द्रष्टव्यानि । (सार-सं० पृ० ११६ )

---

* अत्र 'अनिष्टमेव परस्परं ब्रूयात्' इति रहस्यम् । ( सार-सं० पृ० ११६ )

**मतिः**—१ बुद्धिः । यथा—"तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता" (भा० प० श्लो० १२८) इत्यादौ मतिशब्दार्थो बुद्धिः । २ इच्छा । ३ मतिकरौषधम् । (गरु०अ०१९८), इति भिषज आहुः । (वाच०)

**मत्सरः**—[ १ ] (दोषः) [ क ] स्वप्रयोजनप्रतिसंधानं विना पराभिमतनिवारणेच्छा । यथा—'राजकीयादुदपानान्नोदकं पेयम्' इत्यादि ।[1] [ ख ] परगुणनिवारणेच्छा । (गौ० वृ० ४ । ३) [ २ ] अन्यशुभद्वेषः, इति केचिदाहुः । (वाच०) [ ३ ] अन्ये तु—"निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम् । इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सरः" इत्याहुः । (क्रियायोगसारे) (वाच०)

**मद्यम्**[2]—मदहेतुर्द्रवद्रव्यविशेषः । यथा—"सर्वं मद्यमपेयम्" (आपस्तम्बसू० १ । ५ । १७ । २१) इत्यादौ । मुख्यतो मद्यानि द्वादशविधानि । "माध्वीकं पानसं द्राक्षं खार्जूरं तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं माधूकं नारिकेलजम् ॥ मुख्यमन्नविकारोत्थं मद्यानि द्वादशैव तु" इति ।

**मध्यवर्ती** / **मध्यस्थः**—१ [ १ ] [ क ] वादिप्रतिवाद्युभयप्रयुक्तन्यायवाक्यद्वयजन्यविरुद्धकोटिद्वयोपस्थितिजन्यसाध्यादिसंदेहप्रयोज्यैकतरसत्कोटिकानुमितिर्यस्य भवति, सः । यथा हि—पर्वतादौ वन्ह्यादिसाधने वादिना 'पर्वतो वह्निमान्धूमवत्त्वात्' इत्यादिन्याये प्रयुक्ते, प्रतिवादिना च 'पर्वतो न वह्निमान्पाषाणमयत्वात्' इत्यादिवाक्ये प्रयुक्ते च सति मध्यस्थपुरुषस्य 'पर्वतो वह्निमान्न वा' इति संशयानन्तरं परामर्शादिद्वारा 'पर्वतो वह्निमान्' इत्यनुमितिर्भवतीति । (स्व०)

[ ख ] वादिप्रतिवादिनोरन्ययोर्वा पक्षप्रतिपक्षयोर्वाक्यादिविषयविमर्शपूर्वकं तत्त्वनिर्णायकः । [ २ ] स्वार्थाविरोधेन परार्थसंपादकः । २ पूर्वापरयोः पदार्थयोरन्तरालस्थः । ३ उदासीनः । (मल्लि० टी०) यथा—

१ अत्रापि 'स्वप्रयोजनप्रतिसंधानं विना' इति पूरणीयम्, इति तु वयम् ।

२ अत्र व्युत्पत्तिः—'माद्यत्यनेन' (करणे यत्) इति मद्यम् ।

"माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे" (कुमार० स० १ । श्लो० ५२) इत्यादौ, इति काव्यज्ञा आहुः ।

**मध्याह्नः**—( कालः ) [ १ ] त्रिधा विभक्तदिनस्य द्वितीयो भागः । [ २ ] पञ्चधा विभक्तदिनस्य तृतीयो भागः ।

**मन**—( धातुः ) १ पूजायाम्—[ १ ] गर्वः । यथा—मनति, अमानीत्, इति । [ २ ] मानयते, अमीमनत्, इति च । २ बोधे—[ १ ] मनुते, अमनिष्ट, मेने, इति । [ २ ] मन्यते, अमंस्त, मेने, इति । ३ धृतौ—मनयति, अममनत्, इति ।

**मनः**—( द्रव्यम् ) १ [ १ ] [ क ] निस्पर्शमणु । ( न्या० म० १ । १४ ) ( वै० ७ । १ । २३ ) ( गौ० वृ० १ । १ । १६ )

---

१ तदुक्तं दक्षस्मृतौ—"प्रातःकालो मुहूर्तांस्त्रीन् संगवस्तावदेव तु । मध्याह्नस्त्रिमुहूर्तं स्यात्" इति । ( वाच० )

२ अत्र व्युत्पत्तिः—'मन्यतेऽनेन' ( करणेऽसुन् ) मनः, इति ।

तच्च ( मनः ) सर्वेन्द्रियप्रवर्तकम्, आन्तरेन्द्रियम्; तत्संयोगेन बाह्येन्द्रियानुग्राहकम्; अत एव सर्वोपलब्धिकारणम् । ( त० भा० प्रमेयनि० पृ० ३२ )

मनःसद्भावे प्रमाणमनुमानम् । तच्चानुमानम् [ क ] 'सुखादिसाक्षात्कारः करणसाध्यः, जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवत्' इति । [ ख ] आत्मेन्द्रियार्थसंनिकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम् । ( वै० ३ । २ । १ ) [ ग ] युगपज्ज्ञानानुत्पत्तिर्मनसो * लिङ्गम् । ( गौ० १ । १ । १६ ) [ घ ] यत्संयोगव्यतिरेकात्सुषुप्तिकाले कार्यानुत्पादः, तदेव मनः, इति । ( प० मा० )

३ मनोलक्षणं च, [ क ] युगपज्ज्ञानानुत्पत्तिः † मनसो लिङ्गम् । ( गौ० १ । १ । १६ )

---

* अत्र भाष्यम्—अनिन्द्रियजनिमित्ताः स्मृत्यादयः कारणान्तरनिमित्ता भवितुमर्हन्ति, इति युगपच्च खलु घ्राणादीनां गन्धादीनां च संनिकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते; तेनानुमीयते—'अस्ति तत्तदिन्द्रियसंयोगि सहकारिनिमित्तान्तरम्, अव्यापि; यस्यासंनिधेर्नोत्पद्यते ज्ञानम्, संनिधेश्चोत्पद्यते' इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसंनिकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानि, इति । ( वात्स्या० १ । १ । १६ )

† एतस्यार्थं वृत्तिकार आह—युगपत् एककाले, 'एकात्मनि' इति पूरणीयम् । ज्ञानानामनुत्पत्तिर्यतः, स एव धर्मो ( ज्ञानकारणाणुत्वम् ) मनसो लिङ्गम् लक्षणम्, इति । ( गौ० वृ० १ । १ । १६ ) अत्र विप्रतिपत्तिः—( १ ) समयसौक्ष्म्यानाकलनात्तत्र ( दीर्घश-

[ ख ] मनस्त्वाभिसंबन्धवत् । ( त० भा० ) ( प्रशस्त० पृ० २३ ) ( न्या० म० )

[ ग ] 'मयि सुखम्' इति सुखप्रत्यक्षस्यासाधारणं कारणम् । ( त० कौ० ) ( ता० र० श्लो० ३० )

[ घ ] सुखाद्युपलब्धिसाधनमिन्द्रियम् । ( गौ० वृ० १ । १ । १६ ) ( त० भा० अर्थ० पृ० ३१ ) ( भा० प० ) ( त० सं० )

यथा—'सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्ति' इति सर्वविषयमन्तःकरणं मनः । (वात्स्या० १ । १ । ९) तच्च (मनः), प्रत्यात्म नियतत्वा-

---

[ ख ] स्पर्शरहितत्वे सति क्रियावत्त्वम् * ( त० दी० ) [ ग ] मानसत्वावच्छिन्नकार्यतानिरूपितकारणत्वे सतीन्द्रियत्वम् । ( वाक्य० पृ० ६ ) [ घ ] द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिः । ( सर्व० औलू० ) [ ङ ] मीमांसकास्तु,—आत्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वम्, इत्याहुः । ( न्या० म० पृ० १४ )

१ अत्र—मनसः प्रत्यक्षकरणत्वे, आत्ममनःसंयोगो व्यापारो बोध्यः । ( त० कौ० )

२ मनस इन्द्रियत्वमाह—[ क ] नैयायिकस्य मन इन्द्रियम्, तच्च समानतन्त्रे वैशेषिके सिद्धम्, इति प्रतितन्त्रसिद्धान्तोऽत्र द्रष्टव्यः । ( त० भा० पृ० ४२–४३ ) [ ख ] सुखादिप्रत्यक्षसाधनत्वेनापि मन इन्द्रियम्, इति । ( न्या० वा० पृ० ४१ )

३ अत्रेदं बोध्यम्—मनः सर्वविषयकज्ञानजनकमपि बहिर्विषयकज्ञानजनने परतन्त्रम् ( स्वेतरबहिर्विषयकज्ञानजनकसामग्रीसापेक्षम् ) । अबाह्यविषयकज्ञाने तु—मनः स्वतन्त्रम् । अबाह्यानि तु—आत्मा, तद्योग्यगुणाः, तदभावः, तद्वृत्तिजातिश्च, इति । ( न्या० म० १। पृ० ५ ) ( त० प्र० १ । पृ० ३० )

४ अत्र,—समवेतभोगकारणत्वे सति, असमवेतभोगकारणत्वं नियतत्वशब्दार्थः । द्वितीयार्थो निरूपितत्वम्; तस्य च समवेतत्वद्वयेऽन्वयः । पञ्चम्यर्थः प्रयुक्तत्वम्; । तस्य चानन्तत्वेऽन्वयः । तथा च—[ क ] तत्तदात्मसमवेतभोगजनकत्वविशिष्टतत्तदात्मासमवेतभो-

---

ष्कुलीभक्षणादौ, नानाऽवधानादौ च ) यौगपद्याभिमानः ( भ्रमः ), इति नैयायिकाः संवदन्ते । ( न्या० दी० पृ० २१ ) ( २ ) वेदान्तिनस्तु,—मनसः संकोच-विकाश-शालित्वात्, ज्ञानानां यौगपद्यमयौगपद्यं चोपपद्यते, इत्याहुः । ( म० प्र० १ । पृ० १४ )

* वेगवत्प्राणपवनसंयोगाच्चलनोपपत्तिः, इति केचिद्वदन्ति । ( न्या० सि० दी० पृ० ४१ )

दनन्तम्, अणु, नित्यम्², अतीन्द्रियं³ चेति। (त० सं०) (त० भा० प्रमे० पृ० ३२) केचित्तु (आर्हताः),—भौतिका एव परमाणवः, अणवो वा मनांसि, इत्याहुः। वायुरेव मनः, इत्यपि केचिदाहुः। (गौ० वृ० ३। १४०) नव्यास्तु,—अनुद्भूतविशेषगुणवदसमवेतभूतमेव मनः, इत्याहुः। (राम० १। पृ० ११८) मनो विभु, इति मीमांसका आहुः। मनो नेन्द्रियम्, इति मायावादिवेदान्तिनो व-

गजनकत्वप्रयुक्तानन्तत्ववन्मनः, इति वाक्यार्थः। (वाक्य० पृ० ७) [ख] प्रतिजीवं भिन्नम्। (त० कौ०) [ग] प्रतिशरीरमेकैकमेव*। (वै० उ० ३। २। ३)

१ अत्र—मनसो विभुत्वाङ्गीकारे तु आत्मनो मनसा संयोगस्य (ज्ञानस्य कारणस्य) अनुपपत्तिः† इति दूषणं बोध्यम्।

२ अत्र प्रमाणं सूत्रम्—"तस्य द्रव्यत्व-नित्यत्वे वायुना व्याख्याते" (वै० ३। २। २) इति द्रष्टव्यम्।

३ मनो न प्रत्यक्षम्; अपि तु—अनुमेयमेव। तथा हि–[क]'सुखदुःखोपलब्धयः चक्षुरादिव्यतिरिक्तकरणसाध्याः; असत्स्वपि चक्षुरादिषु जायमानत्वात्, घटवत्' इति; यच्च सुखाद्युपलब्धिकारणम्, तन्मनः। (त० भा० प्रमेयनि० पृ०३२) [ख] सत्यप्यात्मेन्द्रियार्थसांनिध्ये ज्ञानसुखादीनामभूत्वोत्पत्तिदर्शनात्, कारणान्तरमनुमीयते; श्रोत्राद्यव्यापारे स्मृत्युत्पत्तिदर्शनात्, बाह्येन्द्रियैरगृहीतसुखादिग्राहकान्तराभावाच्चेति। (प्रशस्त० मनोनि० पृ० २३)

४ तन्मते मनसो विभुत्वे प्रमाणमनुमानम्। तच्च [क] 'मनो विभु, निस्पर्शद्रव्यत्वात्, आकाशवत्' इति। जातेर्नियतसंस्थानव्यङ्ग्यत्वात्, मनसि च संस्थानाभावात् मनस्त्वं न जातिः, किंतु—मनस्त्वं च, आत्मान्यत्वे सति ज्ञानासमवायिकारणसंयोगाश्रयत्वम्। (न्या०

* अत्र प्रमाणम्—[क] "प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्" इति। (वै० ३।२।३) [ख] प्रयत्नज्ञानायौगपद्यवचनात्प्रतिशरीरमेकत्वं सिद्धम्। अत एव पृथक्त्वम्। (प्रशस्त०)

† इदमत्राकूतम्—[क] आत्मा विभुः,' इति सिद्धान्तः। तथा च–मनसोऽपि विभुत्वाङ्गीकारे विभुद्वयस्यापि संयोगापत्तिः। न च, 'विभुद्वयसंयोगोऽस्तु' इति वाच्यम्; तादृशसंयोगस्य सर्वदा सर्वत्र सत्त्वप्राप्तौ सुषुप्तिरेवानुपपन्ना स्यात्। अतो 'मनोऽण्वेव' इत्यङ्गीकर्तव्यम्, इति। [ख] सुखादीनां 'पादे मे सुखम्, शिरसि मे वेदना' इति प्रादेशिकत्वनियमार्थं प्रादेशिकासमवायिकारणम् (आत्ममनःसंयोगः) अङ्गीकर्तव्यम्; शब्दादौ विभुकार्ये तथैवावधारणात्, इति। [ग] योगशास्त्रबोधितप्रत्याहारान्यथानुपपत्त्या च मनोऽणुत्वसिद्धिः, इति केचिदाहुः। (न्या० सि० दी० पृ० २१)

दन्ति । न्यायनये मनस्यष्टौ गुणास्तिष्ठन्ति,—संख्या, अणुपरिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, वेगश्चेति । ( वै० ३ । २ । २-३ ) ( प्रशस्त० मनोनि० पृ० २३ ) ( त० भा० ) ( न्या० म० ) ( भा० प० ) ( सि० च० ) [ २ ] मायावादिनस्तु,—संकल्पविकल्पात्मकवृत्तिमदन्तःकरणं मनः, इत्याहुः । २ मनःशिलानामको धातुविशेषः, इति भिषज आहुः ।

**मननम्**—[ क ] अनुमितिवदस्यार्थोऽनुसंधेयः । ( कु० १ ) [ ख ] युक्तिभिरनुचिन्तनम् । ( त० प्र० १ । पृ० ८ ) ( म० प्र० पृ० १ ) ( नील० पृ० ५० ) यथा—“आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः” ( श्रुतिः ) इत्यादौ—इतरभेदानुमितिः । ( प० च० पृ० २० )

**मनोग्राह्यगुणत्वम्**—प्रत्यक्षात्मविशेषगुणवृत्ति-गुणत्वव्याप्य-जाति-(बुद्धित्व-सुखत्वादि)-मत्त्वम् । ( प० मा० )

**मन्त्रः**—[ १ ] ( वेदः ) [ क ] अनुष्ठानकारकद्रव्यदेवतादिलिङ्गस्मार-

---

म० १।१४ ) [ ख ] 'मनो विभु, विशेषगुणशून्यद्रव्यत्वात्, कालवत्' इति । [ ग ] 'मनो विभु, ज्ञानासमवायिकारणसंयोगाधारत्वात्, आत्मवत्' इति च । ( वै० उ० ३।२।१ )

१ तथा च—मनसः क्रियावत्त्वान्मूर्तत्वम्, गुणवत्त्वाद्द्रव्यत्वम्, प्रयत्नादृष्टपरिग्रहवशादाशुसंचारित्वम्, इति । ( प्रशस्त० पृ० २३-२४ )

२ तच्च तन्मते सुखदुःखादीनामाधारः* । न्यायमते तु—तदाधार आत्मैव, इति भेदः ।

३ अत्र मननं च, 'आत्मा इतरेभ्यो भिद्यते' इत्यात्मन इतरभिन्नत्वेनानुमानम् । ( नील० पृ० ५० )

४ अत्र मनोग्राह्यत्वं तु मनोजन्यप्रत्यक्षविषयत्वम् । तच्च, बुद्धित्व-सुखत्वादौ सामान्ये; जीवात्मनि च संगच्छते, इति ज्ञेयम् । ( मु० १ )

५ मनोग्राह्यगुणाश्च बुद्धिसुखदुःखेच्छाद्वेषयत्नाः । ( प० मा० ) ( भा० प० श्लो० ५८ )

---

* अत्र श्रुतिं प्रमाणयन्ति मायावादिनः—“कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव” इति । ( उपनि० )

को वेदभागः । यथा–" आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन " इति अब्लिङ्गो ऋगादिमन्त्रः ।

[ ख ] प्रयोगसमवेतार्थस्मारको मन्त्रः, इति मीमांसका आहुः । ( लौ० भा० पृ० ३९ ) । ऋग्यजुःसामभेदादेते मन्त्रास्त्रिविधाः ।

[ ग ] क्वचित्—प्रतिसूचितः शब्दः । यथा–" तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् " इति । ( ऋ० १ । १२६ ) [ २ ] रहसि कर्तव्यावधारणार्थं गुप्तभाषणं मन्त्रः, इति नीतिशास्त्रज्ञा वदन्ति ।

**मन्थनम्**—उत्थानावच्छिन्नोन्मन्थनम् । यथा–सुधां समुद्रं मथ्नातीत्यत्र धात्वर्थः । ( श० प्र० श्लो० ७३ । टी० पृ० ११२ )

**ममता**—[ १ ] स्वकीयत्वाभिमानः । यथा–" ममत्वं मम राज्यस्य " ( देवीभाग० ) इत्यादौ । [ २ ] केचिद्वेदान्तिनस्तु,–अहंकारः । यथा–वल्लभमते–' अहंताममतात्मकः संसारः ' इत्यादौ, इत्यमन्यन्त ।

**मरणम्**—[ १ ] [ क ] जीवनादृष्टनाशः ।

---

१ अत्रापस्तम्बबौधायनसूत्रम्—" मन्त्रब्राह्मणयोर्वेदनामधेयम् " इति ।

२ अत्रेदं बोध्यम्—मन्त्राणामुच्चारणस्य प्रयोजनं च प्रयोगसमवेतार्थस्मरणमेव;* नत्वदृष्टम् ( धर्माधर्मौ ); 'संभवति दृष्टफलेऽदृष्टफलकल्पनमन्याय्यम्' इति न्यायात् । ( लौ० भा० पृ० ३९ )

३ उन्मन्थनमालोडनम् । ( श० प्र० श्लो० ७३ । टी० पृ० ११२ )

४ अत्र—'सुधोत्थानानुकूलं यत्समुद्रस्योन्मन्थनम्, तत्कर्ता' इत्यर्थः । ( श० प्र० श्लो० ७३ ) अत्रत्यगौणकर्मत्वादिविषयविशेषविचारस्तु दोहनादिशब्दव्याख्याने द्रष्टव्यः ।

५ अत्र व्याकरणं बोध्यम्—षष्ठ्यर्थवृत्तेरस्मच्छब्दस्यार्थे 'मम' इत्यव्ययम्, तदुत्तरं तल्प्रत्ययः, एवं च—'ममता' इति रूपं सिद्ध्यति ।

६ तच्च धर्माधर्माधीनम् । ( वै० उ० ६ । २ । १५) तथा च सूत्रम्–"तत्संयोगो विभागः" इति । ( वै० ६ । २ । १५ )

---

* अत्र नियमः—'मन्त्रैरेवार्थोऽनुस्मर्तव्यः, नान्येन' इति । ( लौ० भा० पृ० ३९ ) एतादृशनियमस्य फलं त्वदृष्टमेव । एवं च–मन्त्राणां प्रयोगविधिना सहैकवाक्यतया प्रामाण्यम्, इति ज्ञेयम् ।

[ ख ] प्राणध्वंसः । [ ग ] चरमप्राणशरीरसंयोगध्वंसः । ( गौ० वृ० १ । १ । १९ ) ( नील० पृ० ४२ ) ( दि० १ । पृ० २० ) ( वै० वि० ६ । २ । १९ ) [ घ ] शरीरमनोविभागः । ( वै० उ० ६ । २ । १९ ) यथा—" न जायते म्रियते वा कदाचित् " ( गीता० २ । २० ) इत्यादौ । [ २ ] उपात्तानां जातिविशिष्टदेहेन्द्रियमनोहंकारबुद्धिवेदनानां परित्यागो मरणम्, इति सांख्या आहुः । ( सांख्य० कौ० ) [ ३ ] स्कन्धनाशो मरणम्, इति बौद्धा आहुः । [ ४ ] केचित्तु,—देहात्मनोर्विच्छेदरूपः; प्राणवायोरुत्क्रमणरूपो व्यापारविशेषो वा मरणम्, इत्याहुः ।

**मर्यादा**—१ [ क ] सीमा । सा द्विविधा,—कालरूपा, देशरूपा च । तत्र कालरूपा यथा—" आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम् " इत्यादौ यावदर्थो मर्यादा । देशरूपा मर्यादा यथा—" काशीतः कौशिकीं यावत् याति " इत्यादौ यावदर्थो मर्यादा । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

---

१ प्राणशरीरसंयोगे चरमत्वं च, स्वसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधिकरणत्वम् । ( राम० १ । पृ० २० )

२ कालनिष्ठं मर्यादात्वं च तत्कालनिष्ठस्वसमभिव्याहृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वम् । ( ग० व्यु० का० २ । पृ० ७५ )

३ देशनिष्ठं मर्यादात्वं चात्र,—कौशिक्या गमनसीमात्वं प्रतीयते । तच्च, काशीपूर्व-कौशिकीपश्चिम-देशव्यापकगमनानधिकरणत्वम् । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

४ अत्र यावच्छब्देन, पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते । तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते ।···············अत्र च,—प्रागभाव एव यावत्पदार्थः; द्वितीयार्थः प्रतियोगित्वम्, अनुयोगित्वं वा; तत्र तत्प्रकृत्यर्थदशम्या अन्वयः । तावता दशमीप्रतियोगिकप्रागभावलाभः । तस्य, स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासंबन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः । ( ग० व्यु० का० २ । ख० २ । पृ० ७५ )

५ अत्र—यावत्पदेन च कौशिक्यनधिकरणकत्वे सति, काशीपूर्व-कौशिकीपश्चिम-देशव्यापकत्वं गमने प्रत्याय्यते । तत्र द्वितीयार्थोऽवधित्वम्, अवधिमत्त्वं वा; तस्य च प्रतीचीत्वाद्यन्वयः । निष्कर्षः पूर्ववत्स्वयमूहनीयः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ ) अत्राधिकं च 'पर्यन्तत्व' शब्दव्याख्याने द्रष्टव्यम् । ( श० प्र० श्लो० ९३ । पृ० ११३ )

[ ख ] वैयाकरणास्तु,—स्थित्यनतिक्रमः । मर्यादा द्विविधा,—कालरूपा[1], देश[2]रूपा च । तत्राद्या ( कालरूपा ) यथा—' आ[3]मुक्तेः संसारः ' इत्यादावाङोऽर्थः । द्वितीया ( देशरूपा ) यथा—' प्रयागात्प्रभृत्या[4] काश्या वृष्टो देवः ' इत्यादौ,—देशे मर्यादा, इत्याहुः । २ न्यायपथस्थितिः, इति नीतिशास्त्रज्ञा आहुः । ३ कूलम्, इति काव्यज्ञा आहुः ।

**महत्त्वम्**—१[5] [ १ ] ( परिमाणम् ) ' इदं महत् ' इति प्रतीतिसाक्षिकः परिमाणविशेषः । यथा—" महत्त्वं षड्विधे हेतुः " ( भा० प० श्लो० ९९ ) इत्यादौ । महत्त्वं द्विविधम्,—अवान्तरमह[6]त्त्वम्, परममहत्त्वं च । तत्राद्यम्, त्रसरेणुमारभ्य महावयविपर्यन्तद्रव्येषु वर्तते, षड्विधे द्रव्यप्रत्यक्षे का[7]रणम्, अनित्यं च । द्वितीयं तु विभुचतुष्टये वर्तते, अतीन्द्रियम्, नित्यं च । [ २ ] संयोगविशेष एव महत्त्वम्, इति नव्यनास्तिका आहुः । ( पा० मा० ) २ [ १ ] सांख्यास्तु,—मूलप्रकृतेर्बुद्धिरूपपरि-

---

१ कालगतमर्यादात्वं च,—स्वस्वोत्तरकालोभयप्रागभावाधिकरणकालभवो यः समभिव्याहृतपदार्थः, तदनधिकरणत्वम् । ( ल० म० सुबर्थ० पृ० ११३ )

२ अत्र देशगतमर्यादात्वं तु,—स्वस्वोत्तरदेशयोः प्रयागतदाद्यन्तरालदेशवृत्तिसमभिव्याहृतपदार्थवृष्ट्याद्यनधिकरणत्वम् । ( ल० म० सुबर्थ० पृ० ११३ )

३ अत्र—मुक्तिपदं तत्कालपरम्; मर्यादामर्यादिभावसंबन्ध आङ्द्योत्यः पञ्चम्यर्थः । एवं च—'मुक्तिमर्यादकः संसारः' इति बोधः । संसारे मुक्तिकालप्रागभावाधिकरणनिरूपिततद्भिन्नकालावृत्तित्वविशिष्टव्यापकताबोधस्त्वार्थः । ( ल० म० सुबर्थ० पृ० ११३ )

४ अत्र 'प्रयागादिकाशीमर्यादकवृष्टिकर्ता देवः' इति बोधः । वृष्टौ प्रयागादिकाशीपश्चिमदेशनिरूपितस्वभिन्नावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः । (ल० म० सुबर्थ० पृ०११३)

५ तल्लक्षणं च महत्त्वत्वमेव । तत्रात्र,—[ क ] मानव्यवहारासाधारणकारणत्वम्; । [ ख ] द्रव्यसाक्षात्कारकारणविषयनिष्ठसामान्यगुणत्वं वा । ( वै० उ० ७ । १ । ८ ) [ ग ] जातिविशेषः । ( मु० १ । पृ० ५४ ) [ घ ] अपकर्षानाश्रयपरिमाणत्वं, वा चिन्त्यम् ।

६ इदं तु नातीन्द्रियम्; किं तु—प्रत्यक्षविषयो भवति । तथा च सूत्रम्—" अणोर्महतश्चोपलब्ध्यनुपलब्धी नित्ये व्याख्याते " इति । ( वै० ७ । १ । ८ )

७ अत्र युक्तिः—द्रव्यप्रत्यक्षतायां रूपवत्, परिमाणमपि कारणम् । न हि, महत्त्वमन्तरेण द्रव्यं प्रत्यक्षं भवति । ( वै० उ० ७ । १ । ८ )

णामविशेषो महत्त्वम्, इत्याहुः। [२] हिरण्यगर्भस्य लिङ्गशरीरधर्मः, इति वेदान्तिन आहुः।

**महाकालः**—१ (कालः) [क] अनवच्छिन्नः कालः।

[ख] उपाध्यविशिष्टकालः। यथा—"कालो घटवान्, कालपरिणामादित्यादौ हेत्वधिकरणस्य महाकालस्य जगदाधारतया, घटाधारत्वेऽपि महाकाले महाकालभेदाभावेन महाकालान्यत्वविशिष्टघटानाधारत्वात् महाकालान्यत्वविशिष्टघटाभावोऽपि प्रतियोगिव्यधिकरणो (व्याप्तौ) भवति" (मु० २। पृ० १४९) इत्यादौ महाकालः।

[ग] अखण्डकालः। २ शिवः, इति पौराणिका आहुः। ३ भैरवविशेषश्च, इति तन्त्रज्ञा आहुः।

**महापुराणम्**[1]—व्यासकृतः पुराणविशेषः। यथा—श्रीमद्भागवतम्।

**महाप्रलयः**[2]—(प्रलयः) [१] [क] चरमसंयोगनाशः। (ग० सिद्धा०)

[ख] सर्वभावकार्यध्वंसः। (त० दी० १। पृ० १०)

[२] केचित्तु (पौराणिकादयः),—जन्यभावानधिकरणकालः[3], इत्याहुः। महाप्रलयो न प्रमाणसिद्धः, इति नव्यनैयायिका आहुः। अत्राधिकं तु 'प्रलय'शब्दे द्रष्टव्यम्।

**महावाक्यम्**—[१] स्वघटकानेकनामलभ्यतादृशार्थबोधकं[4] वाक्यम्। (श० प्र० श्लो० ३०। टी० पृ० ४४) यथा—"महावाक्यार्थबुद्धि

---

१ तल्लक्षणं च—"सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम्। कर्मणां वासना वार्ता मनूनां च क्रमेण च। वर्णनं प्रलयानां च मोक्षस्य च निरूपणम्। उत्कीर्तनं हरेरेव देवानां च पृथक् पृथक्॥ महापुराणं विज्ञेयमेकादशकलक्षणम्" इति। (ब्रह्म-वै० श्री० अ० १३२)

२ अत्रेदं बोध्यम्—महाप्रलयानन्तरं न सृष्टिः, सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात्, सर्वमोक्षप्रवृत्तौ प्रयोजनाभावाच्च। न हि, बीजप्रयोजनाभ्यां विना कार्योत्पत्तिः, इति। (प० मा०)

३ तस्योत्पत्तिनियमस्तु 'महान् प्रलयो, ब्रह्मणः स्वमानेन शतवर्षावसाने जायते' इति।

४ अत्र—तादृशार्थबोधस्तु तत्तदर्थावच्छिन्नविषयताशाली, इति बोध्यम्। (श० प्र० श्लो० ३०। टी० पृ० ४४)

प्रति खण्डवाक्यार्थज्ञानं कारणम्'' इति कार्यकारणभावे वक्तव्ये पञ्चावयवोपेतन्यायवाक्यम् । [ २ ] परस्परसंबद्धार्थकं वाक्यसमुदायरूपमेकवाक्यम् । यथा—मीमांसकानां नये,—" दर्शपूर्णमासाभ्यां यजेत " 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादि प्रधानवाक्यम् । यथा वा मायावाद्यद्वैतमते,—" तत्त्वमसि, ब्रह्माहमस्मि " इत्यादीनि द्वादश महावाक्यानि । यथा वा—दानादौ अभिलापवाक्यम् । ( वाच० )

[ ३ ] साहित्यशास्त्रज्ञास्तु,—वाक्योच्चयो महावाक्यम् । यथा—रामायण-महाभारत-रघुवंशादि, इत्याहुः । ( सा० द० उ० २ । श्लो० ७ )

**मानः**—१ [ १ ] (दोषः) आत्मन्यविद्यमानगुणारोपेणोत्कर्षधीः । ( गौ० वृ० ४ । ३ ) यथा—" पराभवोप्युत्सव एव मानिनाम् " इत्यादौ मानः । ( किरा० स० १ । श्लो० ४१ ) [ २ ] अभिमानः, इति केचन मन्यन्ते । २ परिमाणम् । यथा—" मानव्यवहारासाधारणकारणं परिमाणम् " इत्यादौ—हस्ततुलाप्रस्थादिरूपो द्रव्यपरिच्छेदो मानम् । ३ प्रमाणम् । यथा—" मानाधीना मेयसिद्धिः " इत्यादौ मानम् । ४ गानाङ्गे तालक्रियायां तालविरामोपलक्षितः कालव्यापारो मानम्, इति गायका आहुः । ५ आलंकारिकास्तु,—अनुरक्तदंपत्योरवस्थाविशेषः (शृङ्गाराङ्गं कोपः ) । यथा—" मुञ्च मयि मानमनिदानम् " ( जयदेवः ) इत्यादौ, इत्याहुः । ६ संमानः ( आदरः ), इति काव्यज्ञा आहुः ।

**मानसिकः**—( नमस्कारः ) 'अयं मत्त उत्कृष्टः, अहमस्मादपकृष्टः'

---

१ अत्र—'प्रतिज्ञादिघटितपञ्चावयवोपेतमहावाक्यजनितसमुदितार्थविषयकशाब्दबुद्धौ प्रतिज्ञादिरूपावान्तरवाक्यार्थज्ञानं कारणम्' इति कार्यकारणभावो द्रष्टव्यः ।

२ अत्रोच्यते भर्तृहरिणा—"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इति । ( वाक्यपदीये )

३ तथा चोक्तम्—[ १ ] "मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः । द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि ॥ प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना" इति । ( सा० द० प० ३ । श्लो० २१८ ) [ २ ] "स्वाभीष्टाश्लेषवीक्षादिनिरोधी मान उच्यते" इति ।

४ अत्र मानसिकत्वं च, मानसत्वव्याप्यो जातिविशेषः । ( मू० म० १ । पृ० १०५ ) अत्राधिकं तु 'नमस्कार'शब्दे द्रष्टव्यम् ।

इति ज्ञानविशेषः[1] । ( त० प्र० १ । पृ० ३–४ ) यथा–" प्रणम्य परमात्मानं जानकीनाथशर्मणा " ( न्या० म० १ । पृ० १ ) इत्यादौ भगवन्नत्यात्मकं मङ्गलम् ।

**माया**—१ ( दोषः ) परवञ्चनेच्छा । ( गौ० वृ० ४।३ ) यथा–'मायावादतमोव्याप्तं जगत्' इत्यादौ, "त्वद्व्याख्यासिंहनादे सपदि ददृशिरे मायिगोमायवस्ते" ( वायुस्तुतौ ) इत्यादौ च माया । २ [ १ ] भगवदिच्छा । भाग० टी० विज० ११ । २ । ३७ ) यथा–"यन्मायया ऽतो बुध आभजेत्तम्" ( भाग० ११।२।३७ ) ( ब्र० सू० मध्व० भा० १।४।२९ ) इत्यादौ । यथा वा–"मम माया दुरत्यया" ( गीता० ७।१४ ) इत्यादौ, इति मध्वमतानुयायिनः प्राहुः । [ २ ] भगवच्छक्तिविशेषः, इति वल्लभीया मन्यन्ते । ३ मायावादिवेदान्तिनस्तु,–मिथ्याबुद्धिहेतुभूतमज्ञानम्; तच्चेश्वरोपाधिः, इत्यङ्गीचक्रुः । ४ 'आदिमाया–आदिशक्ति–चण्डी' इत्याद्यपरनाम्नी कालिका, इति शाक्ता आहुः । ५ कापट्यम् । ६ दंभश्च, इति काव्यज्ञा वदन्ति ।

**मितिः**–१ मानम् । २ ज्ञानम् । ३ अवच्छेदः । ४ विक्षेपः । ( वाच० )

**मिथ्याज्ञानम्**–१ भ्रमवदस्यार्थोऽनुसंधेयः । ( त० सं० ) २ नास्तिकत्वम् । ( अमरः ) यथा–" मिथ्याज्ञानेन च तमो ज्ञानेनैव परं पदम्" ( अणुवे० ) इत्यादौ ।

**मिथ्यात्वम्**–[ १ ] कालासंबन्धित्वम् । यथा–शशविषाण-कूर्मरोम-वन्ध्यापुत्रादीनां मिथ्यात्वम् । [ २ ] तुच्छत्वम्, इति माध्वाः प्राहुः । [ ३ ] निरुपाख्यत्वं ( निःस्वरूपत्वम् ), इति बौद्धा आहुः । [ ४ ] बाधज्ञाननिवर्त्यत्वम् । यथा–"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः" इत्यादौ, इति मायावादिवेदान्तिनः ( शंकरभारतीप्रभृतयः ) अमन्यन्त ।

**मिषम्**–१ पराभिभवेच्छा । २ छलम् । ३ स्पर्धनम् । ( वाच० ) ४ प्रयोजनान्तरप्रवृत्तस्य प्रयोजनान्तरोद्भावनम् । एवं व्याजादिशब्दोऽपि व्याख्येयः ।

---

१ 'अयं तु नमस्कारसामान्यस्वरूपम्' इति तर्कप्रकाशकृतोऽभिप्रायः, इति तद्ग्रन्थात्प्रतिभाति । ( त० प्र० १ । पृ० ३–४ )

**मीमांसकः**—१ [ १ ] मीमांसाशास्त्रज्ञः; तदध्येता वा । यथा—कुमारिल-तुतातभट्ट-प्रभाकरादयो मीमांसकाः । [ २ ] 'कर्मैव वेदमुख्यतात्पर्यकम्' इति यो मन्यते, सः । यथा—महर्षिर्जैमिनिः । २ सिद्धान्तकारकः ।

**मीमांसा**—१ लाघवज्ञानात्मकस्तर्कः । ( दि० ४ । पृ० १८९ ) २ [ १ ] विचारपूर्वकतत्त्वनिर्णयः । यथा—धर्ममीमांसा, ब्रह्ममीमांसा, इत्यादौ वेदार्थस्य मीमांसा । [ २ ] विचारः, इत्यपि केचिद्वदन्ति । ३ तादृशतत्त्वनिर्णयप्रतिपादको ग्रन्थविशेषः ( शास्त्रविशेषः ) ।

---

१ अत्रार्थे व्युत्पत्तिः—'मीमांसां वेत्ति, अधीते वा' ( वुन् ) मीमांसकः, इति ।

२ अस्मिन्मते तात्पर्यम्—मीमांसकाः,—कर्मैवेश्वरः, तदन्यश्चेतनरूपो भगवान् नास्ति; स्वर्गादिकमेव पुरुषार्थः, मन्त्रमयी, मन्त्रगतलिङ्गलिङ्गित अग्नीन्द्रादिर्वा देवता; अर्थवादो न प्रमाणम्; इति वदन्ति । तत्र मीमांसकैकदेशिनस्तु,—यथा भूपालः परिचारककृतकर्मणः फलदाता, तथा वेदोक्तकृतकर्मणः फलदातेश्वर एव, इति समूचिरे । ( सि० च० १ । पृ० ११ )

अत्रेदं ज्ञेयम्—अर्वाचीना मीमांसकाश्च त्रयः, प्राभाकरापरनामा गुरुः, भट्टः ( तुतातः, कुमारिलो वा ), मुरारिमिश्रश्च, इति ।

३ अत्रेदमवधेयम्—वेदे भागत्रयम् । *कर्मकाण्डः, उपासनाकाण्डः, ज्ञानकाण्डश्चेति । तत्र कर्मकाण्डे द्वादशाध्यायात्मकं सूत्रग्रन्थं प्रणिनाय जैमिनिः । शिष्टं तु 'जैमिनि' शब्दे द्रष्टव्यम् ।

४ अत्रार्थे व्याकरणम्—'मान-विचारे ( स्वार्थे सन्, ण्वुल् ), इति ज्ञेयम् ।

अत्र व्याकरणम्—'मान-विचारे ( स्वार्थे सन्, अ )' इति ज्ञेयम् ।

सा च कर्म-ब्रह्म-विषयभेदेन द्विविधः । तत्राद्यः,—कर्मविषयकसंशयनिवारको ग्रन्थो महर्षिजैमिनिना प्रणीतः । स च "अथातो धर्मजिज्ञासा" इत्यारभ्य "अन्वाहार्ये च दर्शनात्" एतत्पर्यन्तो द्वादशाध्याययुतः सूत्रोपनिबद्धः पूर्वमीमांसात्वेन प्रसिद्धोऽस्ति । द्वितीयस्तु,—

---

* कर्मकाण्डोपयोगस्तु,—'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति भगवद्गीतया, "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन तपसाऽनाशकेन" इति श्रुत्या च, कर्मणां विविदिषाहेतुत्वोक्तेः, विविदिषायामेव कर्मकाण्डप्रतिपाद्यकर्मण उपयोगः, इति केचिद्वदन्ति । ( वाच० ) वयं तु,—"कर्मणा ज्ञानमाप्नोति" इत्यादिवचननिचयेन कर्मणोऽप्यपूर्वद्वारा भगवज्ज्ञानतत्प्रसादप्राप्तिहेतुत्वमस्ति, इति बाहुल्येन तदुपयोगः' इति; भगवदपरोक्षज्ञानानन्तरमपि कृतात्कर्मणो मोक्षफले सौकर्यविशेषो भवति, इति कर्मणो बहूपयोगः, इति च मन्यामहे ।

**मुक्तिः**—१ निःश्रेयसवदस्यार्थोऽनुसंधेयः । २ मोचनम्; निःसरणं वा मुक्तिः, इति काव्यज्ञा आहुः ।

**मुख्यः**—१ प्रथमकल्पः । २ श्रेष्ठः । ३ प्रधानम् ।

**मूर्छनम्**—१ समानजात्योः (समानजवयोर्वा) वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः (संयोगविशेषः)। (प्रशस्त०वायुनि०पृ० १८) यथा—"वायोर्वायुसंमूर्छनं नानात्वलिङ्गम्" (वै०२।१।१४) इत्यादौ । २ वेदान्तिनस्तु,—मोहः; स च, जाग्रत्स्वप्नसुषुप्त्येतत्त्रयावस्थातिरिक्तो बाह्येन्द्रियव्यापारशून्यावस्थाविशेषः, । यथा—"ॐ मुग्धेऽर्धसंपत्तिः परिशेषात् ॐ" इत्यादौ मोहो मूर्छा, इत्याहुः । ३ गानाङ्गं स्वरारोहावरोहैक्रमविशेषः ।

---

ब्रह्मविषयकसंशयनिवारको ग्रन्थो विष्ण्ववतारेण सत्यवतीसुतश्रीवेदव्यासेन निर्मितः। स च "ॐ अथातो ब्रह्मजिज्ञासा ॐ" इत्यारभ्य "ॐ न पुनरावर्तते ॐ" इत्यन्तः सूत्रोपनिबद्धोऽध्यायचतुष्कसमेतो वेदान्तत्वेनोत्तरमीमांसात्वेन च प्रसिद्धोऽस्ति, इति ।

१ अत्रायं विशेषो ज्ञेयः—(१) कारणनिष्ठं मुख्यत्वं च, स्वेतरासाधारणकारणककार्यकभिन्नत्वम् । (त० प्र० १।पृ०७) यथा—मुक्तिं प्रति तत्त्वज्ञानरूपकारणस्य मुख्यत्वम् । (२) फलनिष्ठं मुख्यत्वं च प्रवृत्त्युद्देश्यत्वम् । (राम०) यथा—सुखसंवेदनरूपफलस्य मुख्यत्वम् (स्व०) (३) विशेष्यतानिष्ठं मुख्यत्वं च, प्रकारतान्यत्वम्* (त० प्र० २) यथा—'घटवद्भूतलम्' इति ज्ञाने भूतलनिष्ठविशेष्यताया मुख्यत्वम् । एवम्—अन्यनिष्ठान्यपि मुख्यत्वानि स्वयमूह्यानि

२ संमूर्छनं तृणतूलादीनामूर्ध्वगमनानुकूलं तत्संपादकतयाऽनुमीयमानं वायुनानात्वे लिङ्गम् इति सूत्रार्थः। (वै० वि० २।१।१४)

३ मूर्छाभवने कारणमुच्यते भिषग्भिः—"क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः । वेगाघातादभिघातात् हीनसत्त्वस्य वा पुनः ॥ करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च। निविशन्ते यदा दोषास्तदा मूर्छन्ति मानवाः" इति । (भावप्र०)

४ अस्या जाग्रदाद्यवस्थात्रयातिरिक्तत्वेन तुरीयत्वे मानं तु दुःखानुसंधानमेव, इति; मोहावस्थायां जीवस्य परमेश्वरेऽर्धप्राप्तिः, इति च विज्ञेयम् । (मध्व० भा० ३।२।१०)

५ अत्र मूर्छनालक्षणमुच्यते—[१] [क] "स्वरः संमूर्छितो यत्र रागतां प्रतिपद्यते । मूर्छनामिति तां प्राहुः कवयो ग्रामसंभवाम्" इति । (वाच०) [ख] "क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् । सा मूर्छेत्युच्यते; ग्रामस्था एताः सप्त सप्त च" इति । ग्रामत्रयेऽपि, प्रत्येकं सप्त सप्त मूर्छना इत्येकविंशतिर्मूर्छना भवन्ति । (माघ-टी० स० १। श्लो० १०) [२] अन्यच्च—"सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः । तानास्त्वेकोनपञ्चाशदित्येतत्स्वरमण्डलम्" इति । (पञ्चतन्त्रे)

---

* इदं च संसर्गतादिभेदस्याप्युपलक्षणम्, इति विज्ञेयम् ।

यथा—"स्फुटीभवद्ग्रामविशेषमूर्छनाम्" ( माघ० स० १ । श्लो० १० ) इत्यादौ, इति गायका वदन्ति । ४ काव्यज्ञास्तु,—प्रसरणम् । यथा—"शिलोच्चये मूर्छति मारुतस्य" ( रघु० २।३४ ) इत्यादौ, इत्याहुः ।

**मूर्तगुणत्वम्**—[ क ] अमूर्तगुणवृत्तिः संस्कारत्वान्या गुणत्वव्याप्या च या जातिः ( संख्यात्वबुद्धित्वादिः ), तच्छून्यगुणत्वम् ।

[ ख ] मूर्तत्वव्याप्यतावच्छेदकै-गुणवृत्ति-जातिमत्त्वम्।(दि०गु०पृ०१९२)

[ ग ] केचित्तु,—विभ्ववृत्ति—संख्यादिपञ्चकभिन्न—गुणत्वम्, इत्याहुः । ( ल० व० )

**मूर्तम्**—( द्रव्यम् ) १ क्रियावद्द्रव्यम् । यथा—वायुर्मूर्तः । मूर्तानि पञ्च,—पृथिवी, आपः, तेजः, वायुः, मनश्च । ( न्या० बो० १ । पृ० ३ ) ( वाक्य० १ । पृ० ५ ) ( भा० प० श्लो० २५ ) २ कठिनम्, । ३ मूढम्, इति च काव्यज्ञा आहुः ।

---

१ अमूर्तावृत्तिगुणत्वम्, इत्यर्थः । अमूर्तावृत्तिगुणास्तु, रूपम्, रसः, गन्धः, स्पर्शः, परत्वम्, अपरत्वम्, गुरुत्वम्, द्रवत्वम्, स्नेहः, वेगः, स्थितिस्थापकश्चेति । ( भा० प० गु० श्लो० ८७–८८ )

२ अत्र—शून्यान्तेन संख्यादेः, बुद्ध्यादेश्च व्युदासः । वेग-स्थितिस्थापकोपसंग्रहाय 'संस्कारत्वान्य' इति विशेषणं दत्तम् । ( दि० गु० पृ० १९२ )

३ अत्रावच्छेदकान्तेन संख्यात्वादेः, वृत्तित्वान्तेन कर्मत्वादेः, व्युदासः । (दि०गु०पृ० १९२)

४ लक्षणं तु मूर्तत्वमेव । तच्च, १ [ १ ] [ क ] अपकृष्टपरिमाणवत्त्वम्* । (मू० १ । पृ० ५७) [ ख ] परिच्छिन्नपरिमाणवत्त्वम् । ( त० दी० १ ) [ २ ] वेगवत्त्वम् । [ ३ ] क्रियावत्त्वम् । ( न्या० बो० १ पृ० ३ ) ( वाक्य० १ । पृ० ५ ) [ ४ ] इयत्तावच्छिन्नपरिमाणयोगः, इति प्राञ्च आहुः । २ मूर्तत्वं जातिः†, इति नव्या आहुः । ( प० मा० )

५ मूर्तद्रव्यमात्रवृत्तिगुणास्तु, परत्वम्, अपरत्वम्, परममहत्त्वभिन्नं परिमाणं चेति । ( भा० प० श्लो० २५ )

६ अत्रेदं बोध्यम्—'निबिडानामेव मूर्तानां समानदेशत्वं विरुद्धम्' इति नियमः । तेन, चक्षुरालोकयोर्मूर्तयोरेकदेशवृत्तित्वे न तादृशनियमभङ्गः; तयोरनिबिडत्वात्, इति । ( त० प्र० १ )

---

* अविभुवृत्तिपरिमाणवत्त्वमित्यर्थः । तेन परमाणौ नाव्याप्तिः ।

† सा च, क्रियाजनकतावच्छेदकतया सिद्ध्यति, इति ज्ञेयम् । ( दि० १ )

मूर्तामूर्तगुणत्वम्—[ क ] [illegible] ।¹
[ ख ] द्रव्यत्वसमव्यापकतावच्छेदकजातिमत्त्वम् । ( दि० गु० पृ० ११२ )

मूर्तिः—१ [ १ ] व्यक्तिवदस्यार्थोऽनुसंधेयः । [ २ ] परे तु,—संस्थानविशेषः, तद्वान् यथा—"व्यक्तिर्गुणाश्रयो मूर्तिः" ( गौ० २ । १३२ ) इत्यादौ, इत्याहुः । [ ३ ] अन्ये तु,—अवच्छिन्नपरिमाणस्याश्रयः, इत्याहुः । ( गौ० वृ० २ । १३२ ) २ शब्दार्थौ ( काव्यस्य ) मूर्तिः, इति काव्यशास्त्रज्ञा वदन्ति । ( प्रतापरु० ) ३ प्रतिमा, इति पौराणिकाः संगिरन्ते । ४ काठिन्यम्, इति पदार्थविज्ञानिन आहुः । देहः, इति काव्यज्ञजना जगुः ।

मृदुत्वम्—१ [ १ ] अवयवसंयोगविशेषः । ( त० दी० १ । पृ० ६ ) [ २ ] [ क ] स्पर्शविशेषः । ( सि० च० ) यथा—"शिरीषपङ्क्तेः कुरुकामिनीनां शरीरवल्ल्या सह मार्दवेन" ( भार० च० ) इत्यादौ । (स्व०) [ ख ] कोमलत्वम्, इति काव्यज्ञा वदन्ति । २ चित्रानुराधामृगरेवतीनक्षत्रवृत्तिधर्मः, इति मौहूर्तिका आहुः ।

मोक्षः—१ निःश्रेयसवदस्यार्थोऽनुसंधेयः । २ मोचनम् । यथा—"नीविमोक्षो हि मोक्षः" ( सा० द० ) इत्यादौ, इत्यालंकारिका आहुः । ३ मरणम् । ( हेम० )

मोचनम्—१ [ क ] द्रवद्रव्यविभागानुकूलक्रिया । यथा—जलं मुञ्चति मेघ इत्यादौ । ( स्व० )
[ ख ] बहिःक्षरणावच्छिन्नव्यापारः । ( श० प्र० श्लो० ७३ । टी० पृ० ९८ ) शिष्टं तु 'दोहन' शब्दव्याख्याने द्रष्टव्यम् । २ मुक्तिः ( त्यागः ) । यथा—रोगात्पापाद्वा मुच्यते, इत्यादौ ।

मोहः—१ [ १ ] मिथ्याप्रतिपत्तिलक्षणः ( दोषः ) । ( वात्स्या० ४ । १ । ३ ) यथा—शरीरादावात्मभ्रमः । ( त० दी० ) [ २ ] तमोगुण-

---

१ मूर्तामूर्तगुणाश्च,—संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागश्चेति । ( [illegible] गु० श्लो० ८९ )

२ तेन, मूर्तमात्रवृत्तिसंख्यादौ नाव्याप्तिः । ( दि० गु० पृ० ११२ )

प्रयोज्योऽन्तःकरणपरिणामविशेषः, इति सांख्या आहुः । [ ३ ] संसारहेत्वविद्याप्रयोज्यान्तःकरणवृत्तिविशेषः, इति मायावादिन आहुः । [ ४ ] भ्रान्तिसाधनमज्ञानम्, इति मेदिनीकार आह । २ वेदान्तिनस्तु,—मूर्छा, इत्याहुः । ३ दुःखम् । ( शब्दर० )

**मौनम्**—वाग्व्यापारराहित्यम् । यथा—"मौनं सर्वार्थसाधनम्" इत्यादौ ।

**म्लेच्छः**—१ अपशब्दः । २ नीचजातिः । यथा—"अशपत्तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः" ( भाग० स्क० ९ । अ० ११ । श्लो० २३ ) इत्यादौ किरातादिजातिः । (अमरः) । ३ पापरतः । (मेदिनी०)

---

## य.

**यङ्**—( धात्वंशः प्रत्ययः ) १ [ क ] पौनःपुन्यम् । यथा—पापच्यते इत्यादौ यङर्थः ( श० प्र० श्लो० १०८ । टी० पृ० १९२ )
[ ख ] इदानींतनप्रकृत्यर्थसजातीयक्रियान्तरध्वंसकालीनत्वे सति वर्तमानादिकृतिविषयत्वम् । यथा—पापच्यते, इत्यादौ । ( तर्का० ४ । पृ०

---

१ तत्स्वरूपं तु, उपेक्षाविषयत्वम् । ( सर्व० सांख्य० पृ० १५१ )
२ अधिकं तु 'मूर्छन' शब्दव्याख्याने द्रष्टव्यम् ।
३ अत्रोच्यते—"उच्चारे मैथुने चैव प्रस्रावे दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेत्" इति । ( स्मृतिः )
४ अत्र प्रमाणं श्रुतिः—"म्लेच्छो ह वा नाम यदपशब्दः" इति ।
५ तदुक्तम्—"गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते" इति । ( बौधायनः ) ( वाच० )
६ अयं धातुप्रकृतिकः प्रत्ययो बोध्यः । ( श० प्र० श्लो० १०८ )
७ पौनःपुन्यं च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियानन्तर्यरूपं प्रकृत्यर्थे विशेषणत्वेनान्वेति । तेन, 'पाकोत्तरपाकानन्तर्यवत्पाककर्ता' इत्येवं तत्र वाक्यार्थः । द्विःपचति पुनः पक्तुरेऽपि न भिरक पुनः पुनः पक्तृत्वम्; अतो न तत्र 'पापच्यते' इति प्रयोगः । ( श० प्र० श्लो० १०८ । टी० पृ० १९२ )
८ अत्र,—इदानींतनत्वं च स्थूलकालमादायान्वेति, इति विज्ञेयम् । ( तर्का० ४ । पृ० ११ )
९ अत्रायं विवेकः—तदनन्तरकमेव यत्र प्रत्याय्यते; विशेष्यदलं व्याख्यातेन बोध्यते, इति यत्र न विशिष्टवाचकत्वम्, इति ।

११ ) २ कौटिल्यम् । यथा—चङ्क्रम्यते, दन्द्रम्यते, इत्यादौ यङोऽर्थः । ३ निन्दितत्वम् । यथा—लोलुप्यते, चञ्चूर्यते, जञ्जभ्यते, दन्दश्यते, जेगिल्यते, इत्यादौ निन्दितत्वमपि यङोऽर्थः । ( श० प्र० श्लो० १०८ । पृ० १९३ )

**यजतिः**[3]—यागविशेषः । यथा—"यजतिषु ये यजामहं ( करोति ) नानुयाजेषु" ( श्रुतिः ) इत्यादौ ।

**यजनम्**[4]—यागवदस्यार्थोऽनुसंधेयः ।

**यज्ञः**—१ 'याग' शब्दवदस्यार्थोऽनुसंधेयः । २ ज्ञानविशेषः । ३ क्रियाविशेषो वा । स च ( यागः ) सात्त्विक-राजस-तामस-भेदेन त्रिविधः । तदुक्तं गीतायाम्—( १ ) "अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ( २ ) अभिसंधाय तु फलं दम्भार्थमपि चैव यत् । इज्यते भरतश्रेष्ठ । तं यज्ञं विद्धि राजसम् ॥ ( ३ ) विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते" इति । ( गीता—अ० १७ । श्लो० ११—१३ ) । यज्ञो नानाविधः,—"द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे । स्वाध्यायज्ञानयज्ञाश्च यतयः शंसितव्रताः" इति । ( गीता—अ० ४ । श्लो० २८ ) । गृहस्थकर्तव्याः पञ्च महायज्ञा यथा—[ क ] "अध्यापनं ब्रह्मयज्ञः, पितृयज्ञस्तु तर्पणम् । होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथिपूजनम्" इति । ( गारुड० अ० ११९ )

---

१ अत्र गत्यर्थात् ( धातोः ) कौटिल्य एव यङ् विहितः । तेन 'पुनः पुनः कुटिलगतिमान्' इत्येवं तत्र बोधः । शेषं पूर्ववत् । ( श० प्र० श्लो० १०८ । पृ० १९३ )

२ अत्रोत्सर्गत एव एकाचो हलादेरेव धातोर्यङ् विहितः । तेन, 'पुनः पुनर्गर्हितं लुम्पति, चरति' इत्यादिकोऽर्थः । ( श० प्र० श्लो० १०८ । पृ० १९३ )

३ तल्लक्षणम्—"तिष्ठद्धोमा वषट्कारप्रदाना याज्या-पुरोऽनुवाक्यावन्तो यजतयः" इति । ( कात्या० श्रौ० सू० १ । २ । ६ ) अत्र कर्कभाष्यं द्रष्टव्यम् ।

४ तत्स्वरूपमुक्तं देवलेन—"पशुक्षीराज्यपुरोडाशसोमौषधिचरुप्रभृतिभिर्हविर्भिः, खदिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृतिभिः समिद्भिः, स्रुक्स्रुवोलूखलमुसलकुठारखनित्रयूपदारुदर्भचर्मग्रावपवित्रभाजनादिभिर्द्रव्योपकरणैः, उद्गातृहोत्रध्वर्युब्रह्मादिभिर्ऋत्विग्भिः, काम्यनैमित्तिकानां पश्वादिपूर्वकाणां यथोक्तदक्षिणानां समापनं यजनम्' इति । ( आ० मि० )

[ख] ''देवयज्ञो भूतयज्ञः पितृयज्ञस्तथैव च । ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः'' ।

तत्र च—''होमो दैवो, बलिर्भौतः, पित्र्यः पिण्डक्रिया स्मृतः । स्वाध्यायो ब्रह्मयज्ञश्च, नृयज्ञोऽतिथिपूजनम्'' इति । ( शङ्खस्मृतिः )

**यज्ञसूत्रम्[1]** / **यज्ञोपवीतम्** — उपनयनसंस्कारेण पवित्रीकृतः सूत्रविशेषः[2] । स च द्विजैर्धार्यो धर्मार्थम् ।

**यत्**—[1]बुद्धिविशेषविषयः[3] । स च क्वचित्—[१] [क] [4]तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । यथा—'यो यो धूमवान्, स वह्निमान्' इत्यादौ यच्छब्दार्थः । ( ग० शक्ति० टी० पृ० ११३ )

---

१ अत्र व्युत्पत्तिः—[१] 'यज्ञार्थं योग्यं संस्कृतं वा सूत्रम्' ( शाक० त० ) [२] 'यज्ञेन संस्कृतमुपवीतम्, इति । ( वाच० )

२ तत्स्वरूपमुक्तं यथा—''ऊर्ध्वं तु त्रिवृतं सूत्रं सधवानिर्मितं शनैः । तन्तुत्रयमधोवृत्तं यज्ञसूत्रं विदुर्बुधाः'' इति । ( कालिकापु० अ० ४ )
उपवीतमाह गोभिलः—''यज्ञोपवीतं कुरुते सूत्रं वस्त्रं वा अपि वा कुशरज्जुमेव'' इति । मनुरपि—''कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् । शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्'' इति । ( मनु० अ० २ । श्लोक० ४४ )
नवतन्तुत्वं व्यक्तमाह देवलः—''यज्ञोपवीतं कुर्वीत सूत्राणि नव तन्तवः । एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा'' इति । ( मनु० टी० कुल्लू० २ । ४४ )
यज्ञोपवीतधारणार्थं मन्त्रस्तु—''यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः'' इति । ( बौधायनः )

३ अत्रार्थे यच्छब्दश्च तच्छब्दार्थमित्यपेक्षी; उत्तरवाक्यस्थस्तु न तदपेक्षी, इति सामान्यतो विवेकः । ( काव्य० प्र० ) अत्र विशेषः,—'यत्तच्छब्दार्थयोरन्वये च न समानविभक्तेस्तन्त्रता' इत्याकरे द्रष्टव्यः ।

४ अत्र तत्पदार्थस्तु स्वप्रयोजकबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नः । ( ग० श० टी० पृ० ११३ )
वस्तुतस्तु—स्वपूर्वपदप्रतिपाद्यतया बुद्धिविषयतावच्छेदकधर्मावच्छिन्ने यत्पदस्य शक्तिः कल्प्यते । अतो न, 'यत्पदशक्तिग्रहस्तत्पदशक्तिग्रहाधीनः' इत्यन्योऽन्याश्रयः । ( ग० शक्ति० पृ० ११५ )

५ इयं च व्युत्पत्तिः प्रकम्यमाणपरामर्शक-*-यच्छब्दस्य द्रष्टव्या । ( ग० शक्ति० पृ० ११३ )

---

* लोकप्रयोक्तृपरोपस्थापितत्वबोधकः । ( ग० शक्ति० टी० पृ० ११३ )

[ ख ] शाब्दिकास्तु,—तच्छब्दप्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थः, इत्याहुः । [ २ ] क्वचित्—स्वप्रयोजकबुद्धिविषयतावच्छेदकस्वोच्चारकपुरुषोच्चरितस्वपूर्वपदोपस्थाप्यतावच्छेदक-धर्मावच्छिन्नः । यथा—"चैत्रः समागतो यस्तत्रावलोकितः" इत्यादौ । यथा वा—"साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिकैः" इत्यादौ । एवम्—यं सर्वशैला इत्यादावपि । ( ग० शक्ति० पृ० ११४ ) ( ग० श० टी० पृ० ११४ ) २ 'यस्मात्' इत्यर्थः । ३ शाब्दिकास्तु,—तद्धितसंज्ञकः प्रत्ययविशेषः । यथा—पृष्ठ्यम्, दिश्यम्, इत्यादौ, इत्याहुः । ४ गर्हा । ५ अवधृतिश्च, इति काव्यज्ञा आहुः । ( मेदिनी० )

**यत्नः**—१ 'प्रयत्न'शब्दवदस्यार्थोऽनुसंधेयः । २ आयासः, इति काव्यज्ञा आहुः । ३ उद्योगः, इति व्यवहारज्ञा वदन्ति ।

**यथा**—१ 'येन प्रकारेण' इत्यर्थः । २ सादृश्यम् । ३ योग्यता । ४ आनुरूप्यम् । ५ पदार्थानतिवृत्तिः । ( सि० कौ० )

**यथार्थबुद्धिः**—तद्वति तत्प्रकारकं ज्ञानम् । यथा—घटे 'अयं घटः' इति ज्ञानम् । ( स्व० )

**यथार्थवक्ता**—( आप्तः ) प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकता-

---

१ अत्र चैत्रादिपदेनाप्युपस्थितोऽर्थो यच्छब्देन बोध्यते । ( ग० शक्ति० पृ० ११३ )

२ अत्र तत्पदासत्त्वेऽपि न दोषः; पूर्वप्रक्रान्तस्यैव 'कृत'शब्दोपस्थापितव्यापारस्याभेदेन मीलनान्वयितया यच्छब्देन बोधनात् । ( ग० शक्ति० पृ० ११३ )

३ श्लोकशेषार्धे तु—उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः, इति । ( ग० शक्ति० टी० पृ० ११३ )

४ समुदायश्लोकस्तु—"यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वद्रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम्" इति । ( कुमार० स० १ । श्लो० २ )

५ अत्र याथार्थ्यं च, [ क ] फलवत्प्रवृत्तिजननयोग्यत्वम् । ( त० कौ० १ । पृ० ७ ) [ ख ] तद्वति तदवगाहित्वं वा । [ ग ] सर्वांशे याथार्थ्यं तु, स्वव्यधिकरणप्रकारावच्छिन्ना या या विषयता, तत्तदनिरूपकत्वम् । ( ग० २ । हेत्वा० सामा० )

६ इदं च लक्षणं, स्मृत्यनुभवोभयसाधारणमपि भवति, इति विज्ञेयम् ।

७ अत्र,—शाब्दबोधे याथार्थ्यं च, तद्वति तत्प्रकारकनिश्चयत्वमेव, इति ज्ञेयम् ।

स्पर्यवान्। ( वाक्य० ४ । पृ० १९ ) यथा—'आप्तवाक्यं प्रमाणशब्दः' इत्यादौ,—सत्यवतीसुतव्यासो गोतमकणादौ च यथार्थवक्तारः। (स्व० )

**यथार्थानुभवः**—'प्रमा' शब्दवदस्यार्थोऽनुसंधेयः । ( कु० ४ । १ ) ( चि० ) ( त० सं० )

**यदा**—१ 'यस्मिन्काले' इत्यर्थः। यथा—"यदा मनः पुरीतति प्रविशति तदा सुषुप्तिः" इत्यादौ। २ शाब्दिकास्तु,—'यच्छब्देन' इत्यर्थः, इत्याहुः।

**यदि**—१ पक्षान्तरम्। यथा—"अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वम्, तदा रासन-चाक्षुषादि-प्रत्यक्षकाले त्वाचप्रत्यक्षं स्यात्" ( मु० १ । पृ० ११९ ) इत्यादौ । २ संभावना । यथा— "यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते" ( भा० प० श्लो० १३ ) इत्यादौ संभावनाद्योतको 'यदि' शब्दः । ३ गर्हा । ४ विकल्पः । ( मेदिनी० )

**यदृच्छा**—[ १ ] स्वातन्त्र्यम् । [ २ ] स्वैरता । यथा—"यदृच्छालाभसंतुष्टः" ( गीता० ४ । २२ ) इत्यादौ । [ ३ ] भगवदिच्छा । यथा—"यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्" ( गीता० २ । ३२ ) इत्यादौ, इति वेदान्तिन आहुः ।

**यदृच्छाशब्दः**—जातिगुणक्रियाद्यवाचकः संज्ञाशब्दः । यथा—'डित्थ' इत्यादिशब्दः ।

**यद्वा**—१ बुद्धौ संक्षिप्तार्थविषयीकरणम् । २ पक्षान्तरम् । यथा—"यद्वाऽभ्युदययोग्यता" इत्यादौ । ( भर्तृहरिः )

---

१ अत्र प्रमाणम्—"स्वेच्छा यदृच्छा स्वच्छन्दः स्वैरता चेति ते समाः" इति। ( केशवः)

२ जात्यादिप्रवृत्तिनिमित्तशून्यः ( इच्छाप्रकल्पितः ), इत्यर्थः । ( माघ० टी० स० २ । श्लो० ४७ )

३ अत्रोदाहरति—"असंपादयतः कंचिदर्थं जातिक्रियागुणैः । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम्" इति । ( माघ० स० २ । श्लो० ४७ )

४ तदुक्तं काव्यप्रकाशे—"डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन निवेश्यते, इति संज्ञारूपो यदृच्छात्मकः, इति । 'गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः' इति महाभाष्यकाराः" । ( काव्यप्र० उ० २ । पृ० १२ )

५ अत्राहुः—पूर्वकल्पशैथिल्यप्रयुक्तारुच्या कल्पान्तरबोधनम्, इति ।

याग:—[ १ ] प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागः । यथा—पुष्पेण विष्णुं यजेते इत्यत्र यजेरर्थः । ( श० प्र० श्लो० ७२ । टी० पृ० १०८ ) [ २ ] [ क ] देवतोद्देशेन हविस्त्यागः । ( म० प्र० ४ । पृ० ९३ ) [ ख ] देवतोद्देश्यकद्रव्यत्यागात्मकेच्छाविशेषः । ( ग० व्यु० का० ३ । पृ० ८१ ) यथा— "दर्शपूर्णमासाभ्यां यजेत" "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादौ च यजधात्वर्थः ।

[ ग ] देवतोद्देश्यकस्वस्वत्वध्वंसफलकस्त्यागो यागः, इति वाचस्पतिमिश्रा आहुः । ( का० व्या० का० ४ । पृ० ५ ) [ ३ ] कश्चित्,— हविः-

---

१ अत्र,—[ क ] प्रीतौ विष्णोराधेयत्वेन, द्रव्ये च पुष्पादेरभेदेनान्वयः । तेन, 'विष्णुनिष्ठ-प्रीतिहेतुर्यो मन्त्रकरणकः पुष्पाभिन्नद्रव्यत्यागः, तद्वान्' इत्याकारकस्तत्र बोधः । अथ वा—स्वत्वध्वंसजनकेच्छापर्यवसन्नस्य त्यागस्यैकदेशे स्वत्व एव पुष्पादेराधेयत्वेन तत्रान्वयः । तेन, 'द्रव्येण विष्णुं यजते' इत्यादौ—द्रव्यस्य द्रव्याभिन्नत्वेन शाब्दासत्त्वेऽपि न क्षतिः । ( श० प्र० श्लो० ७२ । टी० पृ० १०८ ) [ ख ] विष्णुं यजते इत्यादौ द्वितीयार्थ उद्देश्यत्वम्, तच्च 'तस्येदम्' इत्यारोपज्ञानविषयत्वम् । देवतायाः स्वत्वोपगमे तु—'न दानत्वं यागत्वव्याप्यम्, होमत्वं यागत्वव्याप्यम्' इति सर्वजनसिद्धम् । देवपूजनमपि याग एव, इति । ( का० व्या० का० ४ । पृ० ५ )

२ अत्रेदमधिकं ज्ञेयम्—दर्शपूर्णमासाङ्गानि* प्रयाजादीनि । तत्र प्रयाजाश्च पञ्च,—"समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति" इत्येवंरूपाः श्रुत्युक्ताः । ( कात्या० श्रौ० ३ । २ । ८ । १७ )

३ अत्र [ १ ] यागत्वं च, देवतोद्देश्यक-†-स्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम्, इति संप्रदायः । [ २ ] यागत्वं मानसप्रत्यक्षगम्यो जातिविशेषः, इत्यन्य आहुः । अपरे तु,—श्राद्धस्य पित्रपेक्षया यागत्वेन, ब्राह्मणापेक्षया तु दानत्वेन, तत्र सांकर्यान्नेदं युक्तम् ( जातिर्न भवति ), इत्याहुः । ( दि० गु० धर्मनि० पृ० २३४ ) ( का० व्या० का० ४ । पृ० ५ )

---

* अङ्गं द्विविधम्,—आरादुपकारकम्, संनिपत्योपकारकं च । तत्राद्यम्—प्रयाज-अनुयाज-सूक्तवाक-शंयुवाक-पत्नीसंयाजाः, इति । द्वितीयम्—अभ्यन्वाधान-इध्माबर्हिषोः संभरणम्, इत्यादि ।

† अत्र देवतोद्देश्यकत्वं च देवतास्वत्ववद्विशेष्यकत्वम् । 'शब्दमयी देवता' इति पक्षे तु—'तस्या इदम्' इत्यारोपज्ञानविषयत्वमुद्देश्यत्वम्, इति बोध्यम् । ( दि० गु० धर्मनि० पृ० २३४ )

प्रक्षेपात्मको व्यापारः। यथा—याजका यजन्तीत्यादौ धात्वर्थः। ( ग० व्यु० का० ३। पृ० ८१ )

**याचनम्**—१ [ क ] स्वोद्देश्यकदानेच्छा। यथा—पौरवं गां याचते विप्र इत्यादौ याचत्यर्थः। ( ग० व्यु० का० २। पृ० ४९ )

[ ख ] शाब्दिकास्तु,—स्वामिस्वत्वनिवृत्ति-स्वस्वत्वोत्पत्ति-एतदुभयानुकूलः 'दीयताम्' इत्यभिलापरूपो दिदापयिषाव्यञ्जको व्यापारः। यथा—बलिं याचते वसुधामित्यादौ याचेरर्थः, इत्याहुः। २ स्वीकारानुकूलो व्यापारः। यथा—अविनीतं विनयं याचते, इत्यादौ याचेरर्थः। ( ल० म० सुबर्थ० का० २। पृ० ९२ ) ३ व्यापारजन्यत्वप्रकारकेच्छा। यथा—याचमानः शिवं सुरानित्यादौ याच्ञा। ( ग० व्यु० का० २। पृ० ४९ ) शिष्टं तु 'प्रार्थना'शब्दव्याख्याने दृश्यम्। ( श० प्र० श्लो० ७३। टी० पृ० ११२ )

**याथार्थ्यम्**—सत्यत्वम्; वास्तविकत्वं वा।

---

१ अत्र च—ऋत्विजामेव स्वातन्त्र्यम्, न तु यजमानस्य। एवं च—यागपदस्यायं लक्ष्यार्थ एव, इति ज्ञेयम्। ( ग० व्यु० का० ३। पृ० ८१ )

२ [ १ ] भिक्ष्यर्थोऽप्येवमेव बोध्यः। ( ग० व्यु० का० २। पृ० ४५ ) [ २ ] अत्र वैयाकरणाः समुत्तिष्ठन्ते—यत्तु, स्वोद्देश्यकदानेच्छा याचनम्, इति, तन्न;—पुत्रार्थं 'कन्यां याचते' इत्यनापत्तेः; स्वसंप्रदानकदानेच्छावति फलालाभशङ्कया 'देहि' इत्यवदत्यपि, तथा प्रयोगापत्तेश्च, इति। ( ल० म० सुबर्थ० का० २। पृ० ९२ )

३ अत्र—*प्रधानकर्मगवाद्यन्वितद्वितीयार्थो विषयत्वम्, तस्य धात्वर्थतावच्छेदकदाने ( निरूपकत्वसंबन्धेन ) अन्वयः। पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः। तस्या दानेऽन्वयः। ( ग० व्यु० का० २। पृ० ४५ )

४ स्वीकारश्च 'इदमवश्यं करिष्यामि' इत्यभिलापादिजनको ज्ञानविशेषः। ( ल० म० सुब० का० २। पृ० ९२ )

५ अत्र—धात्वर्थेच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः। व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयान्तार्थस्यान्वयः। तथा च 'सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रयः' इत्यन्वयबोधः। ( ग० व्यु० का० २। पृ० ४५ )

---

* अत्रेदं विज्ञेयम्—सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम्। अत एव—'घटो जिज्ञास्यते' इत्यादौ घटादेः सन्नन्तकर्मता। पौरवस्य तु तादृशदानाश्रयत्वमेवाप्रधानकर्मत्वम्, इति। ( ग० व्यु० का० २। पृ० ४५ )

**यापनम्**—१ 'नयन'शब्दवदस्यार्थोऽनुसंधेयः । २ कालादेः क्षेपणम् । ३ निरसनम् ।

**यावत्**—१मर्यादा । सा च, कालरूपा, देशरूपा चेति द्विविधा । तत्र कालरूपा सीमा यथा—'आरभ्य तस्यां दशमीं तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम्' इत्यादौ यावदर्थो मर्यादा । देशरूपा सीमा यथा—'काशीतः कौशिकीं यावत् याति' इत्यादौ यावदर्थो मर्यादा । २ अभिविधिः । यथा—'कार्तिकमारभ्य चैत्रं यावच्छीतं भवति' इत्यादौ, 'काशीतः पाटलिपुत्रं यावद्वृष्टो देवः' इत्यादौ च यावदर्थोऽभिविधिः । ( ग० व्यु० का० २ । ख० २ । पृ० ७४–७६ ) अधिकं च 'मर्यादा' 'अभिविधि' शब्दव्याख्याने संपादितम्, तत्तत्र द्रष्टव्यम् ।

**यावत्त्वम्**—१ [ १ ] अपेक्षाबुद्धिविशेषविषयत्वम् । ( त० प्र० २ ) यथा—"यत्समानाधिकरणा यावन्तोऽभावाः" ( दीधि० २ । चतु० ) इत्यादौ यावत्त्वम् । ( स्व० ) [ २ ] व्यापकत्वम् । ( ग० सिद्धा० ) यथा—'यावन्तो घटा रूपवन्तः' इत्यादौ । यथा वा—यावन्तो मनुष्या मरणशीला इत्यादौ । ( स्व० ) [ ३ ] व्यासज्यवृत्तिर्धर्मविशेषः । यथा—सर्वे घटा रूपवन्त इत्यादौ सर्वशब्दप्रवृत्तिनिमित्तं घटनिष्ठं यावत्त्वम् । ( ग० शक्ति० पृ० ९३ ) [ ४ ] साकल्यम् ( अशेषत्वम् ) । २ अवधित्वम् । ३ मानत्वम् ( मर्यादात्वम् ) । ४ अवधारणत्वम् । ( अमरः )

**यावद्द्रव्यभावित्वम्**—स्वाश्रयनाशजन्यनाशप्रतियोगित्वम् । ( दि० १ । २ । आकाशनि० पृ० ८८ ) यथा—घटादिवृत्तिरूपादेर्यावद्द्रव्यभावित्वम् । ( स्व० )

---

१ एवम्—'आङ्' शब्दोपि 'यावत्' शब्दवदेव व्याख्येयः । किं तु—तद्योगे ( आङ्योगे ) च पञ्चमी साधुः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

२ अत्र च,—'घटत्वव्यापकरूपवन्तः' इत्यन्वयबोधो जायते ।

३ अत्रापि,—मनुष्यत्वव्यापकत्वं मरणशीलत्वे बोध्यते, इति विज्ञेयम् ।

४ इदं च, उद्देश्यतावच्छेदक-( घटत्व- )व्यापिका, विधेय—(रूप-)व्याप्या च या पर्याप्तिः, तादृशपर्याप्तिकं भवति, इति विज्ञेयम् । ( ग० शक्ति० पृ० ९३ )

५ अत्र 'घटस्य नाशे तद्गतरूपस्यापि नाशः' इत्यनुभवो मन्तव्यः । स्वपदार्थो रूपम्;—

युक्तः—१ यत्किंचित्प्रतियोगिकसंबन्धानुयोगी। यथा—भूतलं घटेन युक्तमित्यादौ। २ उचितम्। यथा—युक्तमुच्यते, इत्यादौ। ३ योगशास्त्रज्ञास्तु,—

[ क ] योगाभ्यासवशात्सर्वदा सकलविषयकज्ञानवान् ( योगी )। (भा० प० श्लो० ६७)

[ ख ] प्रथमप्रत्यासत्त्या निरन्तरमखिलपदार्थज्ञानवान्, इत्याहुः। (सि० च० १। पृ० २३)

युक्तिः—१ [ १ ] साधकबाधकप्रमाणोपन्यासः। ( त० प्र० १ ) ( म० प्र० पृ० ३ ) [ २ ] अनुमानम्। तच्च साध्यसाधकलिङ्गज्ञानम्। [ ३ ] न्यायः, इति मीमांसका आहुः। २ लिङ्गोद्देशः ( लिङ्गनिश्चयः ), इति व्यवहारशास्त्रज्ञा आहुः। ( वीरमि० लेख्य० पृ० २२२ ) ३ नाटकाङ्गविशेषः, इत्यालंकारिका आहुः।

युञ्जानः—१ [ क ] चिन्तासहकारेण सकलज्ञानवान् ( योगी )। (भा० प० श्लो० ६७)

---

तथा च—स्वम् घटस्य रूपम्, तस्याश्रयो घटः, तस्य नाशः, तज्जन्यो यो नाशः ( रूपनाशः ), तस्य प्रतियोगित्वं रूपे, इति लक्षणसमन्वयः। शब्द—ज्ञानादीनां तु न तथात्वम् ( यावद्द्रव्यभावित्वम् ) इति, अतो नातिव्याप्तिः। ( स्व० ) अतएव ( अयावद्द्रव्यभावित्वेनैव )—शब्दादीनां वायुविशेषगुणत्वं नास्ति, इति। ( मु० १। आकाशनि० पृ० ८८ )

१ युक्तस्य ( वियुक्तस्य प्रशस्तभाष्ये ) योगजधर्मसहायेन मनसाऽऽकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव ( ध्यानाद्यभावेऽपि ) भवितुमर्हति। ( मु० १। पृ० १३१ ) ( प्रशस्त० बुद्धिनि० पृ० ४३ )

२ अत्रोच्यते—“श्रुत्योर्विरोधे न्यायस्तु बलवानर्थनिर्णये। युक्तिहीनविचारे तु धर्महानिः प्रजायते” इति।

३ व्यवहारे कानिचिल्लिङ्गानि नारदेनोक्तानि यथा—“उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः। केशाकेशिगृहीतश्च युगपत्पारदारिकः॥ कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः। तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः॥ प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः। असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम्” इति। ( वीरमित्रो० लेख्यनि० पृ० २२३ )

तदुक्तम्—“संप्रधारणमर्थानां युक्तिः, प्राप्तिः सुखागमः” इति। ( सा० द० परि० ६। श्लो० ३४३। पृ० १०५)

[ख] चिन्ताविशेषसनाथद्वितीय[1]प्रत्यासत्त्या समयविशेषे ज्ञानवान्। (सि० च० १। पृ० २३) २ रथसारथिः। ३ विप्रश्च, इति काव्यज्ञा आहुः। (वाच०)

**युतसिद्धिः**[2]—[क] द्वयोरन्यतरस्य वा पृथग्गतिमत्त्वम्[3]; युताश्रयाश्रयि[4]त्वं वा। (वै० उ० ७।२।९) (प्रशस्त० पृ० १७) यथा—मेषयोः, घटभूतलयोर्वा युतसिद्धिः। (स्व०)

[ख] असंबन्धयोर्विद्यमानत्वम्, पृथगाश्रयाश्रितत्वं वा। (वै० उ० ७।२।१३)

[ग] परस्परसंबन्धशून्ययोरवस्थानम्। (वै० वि० ७।२।१३)

**युष्मद्**—संबोध्यचेतनः। अधिकं तु 'त्वम्' शब्दार्थे द्रष्टव्यम्।

**योगः**—१ संबन्धः। (स्व०) २ [क] समुदायशब्दस्य अवयव[5]शक्तिः। (त० दी० ४) (नील० ४। पृ० ३१) (सि० च० ४। ३१) यथा—पाचकादि[6]पदेषु योगः।

[ख] वैयाकरणास्तु,—शास्त्रकल्पितावयवार्थमात्रबोधे प्रयोजको योगः (शक्तिः)। यथा—पाचकादौ, इत्याहुः। (ल० म० आकाङ्क्षादिवि०

---

१ अत्र, युक्तपदार्थघटकप्रथमप्रत्यासत्तिमपेक्ष्य द्वितीयप्रत्यासत्तिः, इत्यनुसंधेयम्।

२ इयं च संयोगं प्रति प्रयोजिकाऽस्ति। (वै० उ० ७। २। ९–१३) (प्रशस्त० पृ० १७)

३ इयं*(युतसिद्धिः) नित्यानाम्। (प्रशस्त० गु० पृ० १९)

४ अनित्यानां तु, युतेष्वाश्रयेषु समवायो †युतसिद्धिः, इति। (प्रशस्त० गु० पृ० १९)

५ अत्र—"योगबलं समाख्या" इति मीमांसका वदन्ति। (वाच०)

६ अत्र च—पाचकादिपदात्, 'पचति' इति व्युत्पत्त्या पाककर्ता बुध्यते, इति बोध्यम्।

---

* अण्वाकाशयोराश्रयान्तराभावेऽप्यन्यतरस्य पृथग्गतिमत्त्वात् संयोगविभागौ सिद्धौ। तन्तुपटयोरनित्ययोः पृथगाश्रयान्तराभावात् परस्परतः संयोगविभागाभावः। दिगादीनां तु पृथग्गतिमत्त्वाभावात्परस्परेण संयोगविभागाभाव इति। (प्रशस्त० गु० १९)

† त्वगिन्द्रियशरीरयोः पृथग्गतिमत्त्वं नास्ति; युतेष्वाश्रयेषु समवायोऽस्तीति परस्परेण संयोगः सिद्धः। (प्रशस्त० गु० पृ० १९)

पृ० १२ ) ३ चित्तवृत्तिनिरोधः, इति योगिन[2] आहुः। (पात० पा० १। सू० २ ) ४ उपायः। ५ युक्तिः। ६ जीवात्मपरमात्मनोः संबन्धः[3], इति केचिद्वेदान्तिन आहुः। ७ 'देवतानुसंधानं योगः' इति रामानुजीयाः ( नारदपञ्चरात्रविदः )आहुः। (सर्व० रामा०पृ०५५) ८ अप्राप्तस्यार्थस्य प्राप्तये पर्यनुयोगो योगः। यथा—योगाचारः, इत्यादौ, इति बौद्धा आहुः। ९ शब्दादीनां प्रयोगः, इति वैयाकरणा आहुः। १० भेषजम्, इति भिषज आहुः। ११ योगः कर्मसु कौशलम्, इति कर्मकर्तारोऽङ्गीचक्रुः। १२ छलम्[4] ( उपधिः ), इति व्यवहारशास्त्रज्ञा आहुः। १३ रविचन्द्रयोगाधीना विष्कम्भादयः सप्तविंशतिः पदार्थाः; इति ज्योतिषज्ञा

---

१ अत्रेदं बोध्यम्—[ क ] विषयेष्वलंप्रत्ययवत उदासीनस्य बहिरिन्द्रेभ्यो व्यावृत्तं मनो यदाऽऽत्ममात्रनिष्ठं भवति, तदा तत्कर्मानुगुणप्रयत्नाभावात् कर्म मनसि नोत्पद्यते, स्थिरतरं मनो भवति, स एव योगः। वै० उ० ५। २। १६ ) [ ख ] आत्मस्थे मनसि षडङ्गयोगेन* इन्द्रियादिकं परित्यज्य मनो यदाऽऽत्ममात्रे तिष्ठति तदा मनःकर्मणोऽनुत्पादः; तदा मनो निश्चलं भवति। तदवस्थायां शरीरावच्छेदेन दुःखं न जायते। स आत्मना बाह्यव्यावृत्तमनसः संयोगो योग उच्यते। (वै० सू० ५। २। १६) (वै० वि०) [ ग ] इन्द्रियाणि विषयेभ्यः प्रत्याहृत्येन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनःप्रणिधानं योगः, इति। ( नील० )। योगं विभजते–[ १ ] स च योगो द्विविधः। राजयोगः, हठयोगश्च। तत्र राजयोगः पतञ्जलिनोक्तः। हठयोगस्तु तन्त्रशास्त्रोक्तः। प्रकारान्तरेणापि योगो द्विविधः,—संप्रज्ञातः, असंप्रज्ञातश्चेति। [२] योगस्त्रिविधः। ज्ञानयोगः, कर्मयोगः, भक्तियोगश्च, इति। ( भाग० स्क० ११। अ० २०। श्लो० ६ )

२ योगाचार्यस्तु,—षष्ठभगवदवतारो दत्तात्रेयः। स च "आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्" इति। (भाग० १। ३। १२) तेन च स्वसंहितायां योगोऽनुशिष्टः, इति विज्ञेयम्।

३ तदुक्तम्–"योगं संयोगमित्याहुर्जीवात्मपरमात्मनोः" इति। (वाच०)

४ अत्र स्मृतिः-"योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यस्य वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्" इति। ( याज्ञ० अ० २। श्लो० १८१। टी० मिता० पृ० ९४)

---

* अत्र—( १ ) षडङ्गानि स्कन्दपुराणे उक्तानि यथा–"आसनं प्राणसंरोधः प्रत्याहारश्च धारणा। ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट्" इति। ( वै० वि० ।५। २। १६)

( २ ) योगस्याष्टावङ्गानि यथा–"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" इति। ( पात० पा० २। सू० २९)

आहुः । १४ तिथिवारनक्षत्राणां संबन्धविशेषः । यथा—सिद्धियोगः, अमृतयोगः, अर्धोदययोगः, दग्धयोगः, इत्यादिः, इति मौहूर्तिका आहुः । १५ लग्नादिगृहविशेषे स्थितो ग्रहविशेषः । यथा—राजयोगः, नाभसयोगः, इत्यादिः; इति कार्तान्तिका आहुः । १६ यात्रायाम्—आलग्नात्केन्द्रत्रिकोणस्थितो बुधजीवशुक्रान्यतमः, इति ज्योतिःशास्त्रज्ञा आहुः । १७ कामुककामिनीसंमेलनं योगः, इत्यालंकारिका वदन्ति ।

**योगक्षेमः**—१ अनुभवमनुरुध्य वस्तुस्थितिसंगमनम् । यथा—'भूतले न घटः' इत्यादौ 'घटांशे भूतलवृत्तित्वाभावः संगम्यते' इति । ( स्व० ) यथा वा—प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्य हेतुतायां प्रविष्टा योगक्षेमसाधारणी साधनता । ( दि० गु० विधिनि० पृ० २२८ ) २ वेदान्ति-

---

१ तदुक्तम्—"एको ह्यज्यसितेषु पञ्चमतपःकेन्द्रेषु योगस्तथा द्वौ चेत्तेऽत्रधियोग एषु सकलयोगाधियोगः स्मृतः" "योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वधः" इति । ( मु० चि० )

२ अत्र च,—'भूतले घटः' इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वावगाहित्वस्यानुभवसिद्धतया, 'भूतले न घटः' इति वाक्यजन्यशाब्दबोधे घटांशे भूतलवृत्तित्वाभावोऽवश्य*मभ्युपगन्तव्यः, इति ।

३ तथा हि—यथा हि 'नित्ये कृते † प्रत्यवायप्रागभावस्तिष्ठति, तदभावे तदभावः,' एवम् 'प्रत्यवायाभावसत्त्वे दुःखप्रागभावसत्त्वम्, तदभावे तदभावः (दुःखरूपः)' इति योगक्षेमसाधारणकारणताया दुःखप्रागभावं प्रत्यपि सुवचत्वात्, इति । ( मु० गु० विधिनि० पृ० २२८ )

४ अत्र—योगेऽप्राप्तप्राप्तौ क्षेमः सिद्धस्य रक्षणम्, इत्यर्थोनुसंधेयः । ( दि० गु० पृ० २२८ )

---

* इदमत्राकूतम्—'भूतले न घटः' इति वाक्यजन्यस्याप्रामाण्यज्ञानानास्कंदितबोधस्य 'भूतले घटः' इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितया 'नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति, तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते' इति नियमोऽङ्गीकर्तव्यः । अयमेव 'प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ' इति न्यायस्यार्थः, इति । ( गा० व्यु० का० १ )

† नैयायिकमते—संध्यावन्दनादिनित्यकर्मणामर्थवादोपस्थापितब्रह्मलोकावाप्ति-प्रत्यवायानुत्पत्तिरूपफलकल्पनेन, तादृशफलस्य तु स्वतः पुरुषार्थत्वाभावेन तत्रेच्छानुत्पत्तौ कथं तादृशकर्मसु प्रवृत्तिः ?; इत्याशङ्कायां समाधत्ते—।

नस्तु,—अलभ्यलाभसहितं लब्धपरिरक्षणम् ( मोक्षः ) । यथा—"योगक्षेमं वहाम्यहम्" ( गीता० ९ । २२ ) इत्यादौ, इत्याहुः ।

**योगजः**—( संनिकर्षः ) योगाभ्यासजनितो धर्मविशेषः; स चादृष्टविशेषः । स च, युक्तयुञ्जानेति द्विविधयोगिभेदतो द्विविधः । ( भा० प० श्लो० ६६ ) ( सि० च० ) तत्र युक्ताख्ययोगिनो योगजधर्मसंनिकर्षेण वस्तुमात्रस्य ( अन्यात्मनां, ( अतीन्द्रियाणामपि ) आकाशदिक्कालपरमाणुवायुमनसाम्, तत्समवेतगुणकर्मसामान्यविशेषाणां, समवायस्य च ) सर्वदा प्रत्यक्षं जन्यते । युञ्जानाख्ययोगिनस्तु चिन्तया प्रत्यक्षं जन्यते, इति । ( मु० १ ) ( त० कौ० ) तथा च—एकत्र ध्यानापेक्षा, अन्यत्र तु ध्यानापेक्षा नास्ति, इति । ( त० व० ) ( प्रशस्त० गु० पृ० ४३ )

**योगरूढम्**—( नाम, शक्तपदं वा ) [ क ] यत्र ( पदे ) त्ववयवशक्तिविषये समुदायशक्तिरप्यस्ति, तत् । ( मु० ४ । पृ० १७९ )

[ ख ] अवयव-समुदाय-एतदुभयशक्तिकमेकजातीयार्थप्रतिपादकं पदम् । ( सि० च० ख० ४ । पृ० ३१ )

[ ग ] योगरूढिभ्यां परस्परसहकारेणार्थप्रतिपादकं पदम् । यथा—पङ्कजादिपदम् । ( नील० ४ । पृ० ३१ ) एवम्—धेनुपदं च । ( त० प्र० ४ । पृ० ३२ )

---

१ अत्रार्थे 'योगश्च, क्षेमं च' इति समाहारद्वन्द्वो ज्ञेयः ।

२ समुदायश्लोकस्तु,—"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इति । ( गीता० अ० ९ । श्लो० २२ )

३ स चालौकिके योगिप्रत्यक्षे कारणभूतोऽलौकिकसंनिकर्षविशेषः । ( भा० प० १ । श्लो० ६४ )

४ अत्र व्युत्पत्तिः—'योगो रूढिश्चैते एकसजातीयार्थबोधकतया स्तोऽस्य' ( अच् ) इति ।

५ अत्र च—'पङ्काज्जायते' इत्यवयवशक्त्या पङ्कजनिकर्तृत्वेन, रूढिशक्त्या च कमलत्वेन कमलं बोधयतीति पङ्कजपदं योगरूढम् । ( सि० च० ४ । पृ० ३१ ) तथा च—समुदायशक्त्या ( रूढिशक्त्या ) उपस्थिते पद्मेऽवयवार्थपङ्कजनिकर्तुरभेदेनान्वयो*भवति, इति मणिकृन्मतम् । ( श० प्र० श्लो० २७ )

---

* तेन, पङ्कजातेऽपि कुमुदादौ, स्थलपद्मे च, न 'पङ्कज' पदप्रयोगप्रसङ्गः, इति मणिकृन्मताभिप्रायः ( त० प्र० ४ । पृ० ३१ )

अत्रायं विशेषो ज्ञेयः—यत्र रूढ्यर्थस्य बाधः प्रतिसंधीयते, ( कुमुदत्वेन बोधे च तात्पर्यम् ) तत्र ल-

[ घ ] यन्नाम स्वावयववृत्तिलभ्यार्थेन समं स्वार्थस्यान्वयबोधकृत्, तन्नाम योगरूढम् । यथा—[1]पङ्कज-कृष्णसर्प-अधर्म-इत्यादिपदम् । योगरूढं द्विविधम्,—समासात्मकम्, तद्धितात्कं चेति । तत्र समासात्मकं कृष्णसर्पादि । तद्धितात्कं तु वासुदेवादिपदम् । कृदन्तस्य पङ्कजादियोगरूढस्य सामासिक एवान्तर्भावः, इति नाधिक्यम् । ( श० प्र० श्लो० २८ । टी० )

**योगरूढिः[2]**—( पदशक्तिः ) [ क ] शब्दस्य वृत्तिविशेषः, यया वृत्त्या पङ्कजनिकर्तृत्वविशिष्टपद्मस्य बोधः । ( हेमचन्द्रः ) यथा—[3]पङ्कज-ब्राह्मणादिपदे योगरूढिः । ( स्व० )

[ ख ] वैयाकरणास्तु,—यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थ-

---

१ तद्धि, स्वान्तर्निविष्टानां पङ्कादिशब्दानां वृत्तिलभ्येन पङ्कजनिकर्त्रादिना * समं, स्वशक्यस्य पद्मादेरन्वयानुभावकम्; 'पङ्कजम्' इत्यादितः 'पङ्कजनिकर्तृ पद्मम्' इत्यनुभवस्य सर्वसिद्धत्वात् । ( श० प्र० श्लो० २५ । टी० पृ० ३६ )

२ अत्र व्युत्पत्तिः—'योगेन सहिता रूढिः' इति । ( नील० ४ । पृ० ३१ )

३ अत्र विप्रतिपत्तिः—पङ्कजादिपदानां योग एव, इत्येके वदन्ति । रूढिः, इत्यपरे वदन्ति । योगरूढिः, इति † गौतमीयाः आहुः । ( न्या० सि० दी० पृ० ४२ )

अत्रायं विशेषः—यत्र योगार्थान्वितरूढ्यर्थावबोधः, तत्र सर्वत्र योगरूढिः; यौगिकार्थबुद्धिरूपसहकारित्वाभात् विशिष्टार्थोपस्थापकत्वं रूढेर्योगरूढित्वम् । ( न्या० सि० दी० पृ० ४८ )

---

क्षणया कुमुदादेर्बोधः । यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानम्, पद्मत्वस्य च बाधः, तत्रावयवशक्तिमात्रेण कुमुदबोधनिर्वाहः । यत्र तु स्थलपद्मादाववयवार्थबाधः, तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः । यदि तु स्थलपद्मं विजातीयमेव, तदा पङ्कजपदात् लक्षणयैव स्थलपद्मबोधः, इति । ( मु० ४ । पृ० १८० )

* अत्रेयांस्तु विशेषः—यत् रूढमपि मण्डप-रथकारादिपदम्, ( तत् ) योगार्थविनाकृतस्य रूढ्यर्थस्येव रूढ्यर्थविनाकृतस्यापि योगार्थस्य बोधकम् ( भवति ); मण्डपे शेते इत्यादौ योगार्थस्य मण्डपानकर्त्रादेरिव, मण्डपं भोजयेदित्यादौ समुदितार्थस्य गृहादेरयोग्यत्वेनान्वयाबोधात् । योगरूढं तु पङ्कजादिपदमवयववृत्त्या रूढ्यर्थमेव, समुदायशक्त्या चावयवलभ्यार्थमेवानुभावयति, नत्वन्यम्, इति । ( श० प्र० श्लो० २५ । टी० पृ० ३६--३७ )

† अयं भावः—पङ्कजपदात् पद्मत्वविशिष्टप्रतीतये पद्मत्वविशिष्टे पङ्कजसमुदायस्य रूढिरावश्यकी; पदान्नियतोपस्थितेर्वृत्तिसाध्यत्वात्; पङ्कजपदात् योगेन कुमुदस्यापि बोधप्रसङ्गाच्च । मन्मते—कदाचित्कुमुदबोधस्तु लक्षणयैव, इति । ( त० प्र० ख० ४ । पृ० ३१ )

निरूपितं समुदाये बोधकत्वम्, सा योगरूढिः। यथा—पङ्कजादिपदे, इत्याहुः। ( ल० म० आकाङ्क्षा० पृ० १२ )

**योगाचारः**—( बौद्धः ) क्षणिकविज्ञानवादी बौद्धविशेषः। तन्मतं तु 'बौद्ध' शब्दव्याख्यानावसरे टिप्पण्यां ( पृ० ५६१ ) संक्षेपतः संपादितम्।

**योग्यता**—कार्यविशेषजनने सामर्थ्यम्। तच्च १ [ क ] ( A ) एकपदार्थेऽपरपदार्थप्रकृतसंसर्गवत्त्वम्। ( न्या० म० ४। पृ० २२ ) ( B ) इतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्मशून्यत्वम्। ( C ) बाधकप्रमाणाभावः। (D) बाधकप्रमाविरहश्च। यथा—प्रमेयं वाच्यमित्यादौ योग्यता। ( चि० ४ ) ( तर्का० ४। पृ० १० )

[ ख ] अबाधितार्थकत्वम्। ( ग० अव० )

[ ग ] अर्थाबाधः। ( त० सं० ४ ) यथा—जलेन स्थलं सिञ्चतीत्यादौ योग्यता। ( न्या० म० ४। पृ० २२ )

[ घ ] बाधनिश्चयाभावो योग्यता, इति नव्या आहुः। ( नील० ख० ४। पृ० ३२ )

---

१ अत्र—'पङ्कजनिकर्तृ पद्मम्' इति बोधात्, पद्मस्यानुपपत्तिप्रतिसंधानं संबन्धप्रतिसंधानं च विना बोधान्न तत्र लक्षणाया अवसरः। क्वचित्—तात्पर्यग्राहकवशात्, केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः। यथा—"भूमौ पङ्कजमुत्पन्नं कल्हार-कैरव-मुखेष्वपि पङ्कजेषु" इत्यादौ। ( ल० म० आकाङ्क्षादिवि० पृ० १२ )

२ इयं योग्यता च ज्ञाता सती शाब्दबोधप्रयोजिका * 'शब्दयोग्यता' इति व्यवह्रियते।

३ स चेतरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावः † ( चि० ४ )

४ अत्र-[ क ] जले सेकसंसर्गस्य कार्यकारणभावलक्षणस्य सत्त्वाद्योग्यता। ( प्र० प्र० ) ( त० कौ० ) [ ख ] सेकनिरूपितकार्यकारणभावलक्षणसंसर्गस्य जले सत्त्वाद्योग्यता। ( म० प्र० ४। पृ० ५६ )

---

* इयं योग्यता अयोग्यवाक्यनिरासिका च भवति। अत एव—वह्निना सिञ्चतीत्यादिवाक्यात् नान्वयबोधः प्रमात्मको भवति; योग्यताविरहात्। ( त० कौ० ) ( त० सं० )

† निष्कृष्टार्थस्तु,—तदीयान्वयितावच्छेदकसंबन्धे तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वसामान्याभावः, इति। तेन, 'वह्निना सिञ्चति' इत्यादौ वह्निनिष्ठकरणताया निरूपकत्वरूपान्वयितावच्छेदकसंबन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वस्यैव सत्त्वान्नातिव्याप्तिः। ( मा० शब्द० )

[ ङ ] परे तु,—असंसर्गग्रहः प्रतिबन्धकः, तदभावो योग्यता । सा च स्वरूपसती हेतुः ( न तु ज्ञाता ), इत्याहुः । ( न्या० म० ४ । पृ० २२ )[1]

[ च ] अन्वयविरोधिरूपविरहो योग्यता, इत्यन्य आहुः ।

[ छ ] अन्वयप्रयोजकरूपवत्त्वम्, इति प्राभाकरा आहुः । ( दीधि० प्रामा० ) ( न्या० म० ४ । पृ० २९ )[2]

[ ज ] अपरे तु,—तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नरूपवैत्त्वम्, इत्याहुः । ( मा० श० ) ( भा० प० श्लो० ८४ )[3]

[ झ ] केचित्तु,—तत्सजातीये तत्सजातीयस्य संसर्गनिश्चयः, इत्याहुः । ( मा० शब्द० )[4]

२ [ क ] प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसमवहितत्वम् । ( मु० म० १ )[5]

[ ख ] चिन्तामणिकृन्मतेन च—प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वम्[6] । ( मु० १ । पृ० १२३ )

---

१ तदर्थः—पयसा सिञ्चतीत्यादौ 'पयःसेककरणतावज्जवा' इत्यसंसर्गग्रहः शाब्दबोधप्रतिबन्धकः, तदभावस्तत्र योग्यता, इति । ( म० प्र० ४ । पृ० ५७ )

२ सेकान्वयप्रयोजकं द्रवद्रव्यत्वं जलेऽस्तीति तद्योग्यम्, वह्नौ च नास्तीति तदयोग्यम्, इति प्राभाकराभिप्रायः । ( न्या० म० पृ० । २९ )

३ अत्र नीलकण्ठ आह—'एकपदार्थेऽपरपदार्थवत्त्वं योग्यता' इति मते—संशयनिश्चयसाधारणतज्ज्ञानत्वावच्छिन्न-शाब्दधीहेतुः । 'बाधनिश्चयाभावो योग्यता' इति नवीनमते तु—स्वरूपसत्येव योग्यता तद्धेतुः, इति । ( नील० ख० ४ । पृ० ३२ )

४ अस्ति च, पयसा सिञ्चतीत्यादौ प्रकृतसेकसजातीयेतरकरणकसेके प्रकृतपयःकरणकत्वसजातीयस्य पयःकरणकत्वस्य संसर्गनिश्चयः । वह्निना सिञ्चतीत्यादौ तु सेकसजातीये क्वापि सेके वह्निकरणकत्वसजातीयस्य कस्यापि वह्निकरणकत्वस्य संसर्गनिश्चयो नास्ति; बाधितत्वात् । ( मा० श० )

५ न्यायमते—योग्यानुपलब्धिरभावप्रत्यक्षे इन्द्रियस्य सहकारिणी, न तु भट्टमते इव प्रमाणान्तरम् । तथा च—इयं योग्यता, प्रतियोग्युपलम्भाभावात्मकानुपलब्धिनिष्ठा 'अनुपलब्धियोग्यता' इति व्यवह्रियते ।

६ तदर्थश्च—प्रतियोगिनः ( घटादेः ), सत्त्वस्य यत् प्रसञ्जनम् ( आपादनम् ) 'यद्यत्र घटः स्यात्' इत्याहार्यारोप इत्यर्थः; तेन प्रसञ्जितः (आपादितः) 'तर्ह्युपलभ्येत, इति, भूतलमिवाद्रक्ष्यत् इति वा' आपादित इत्यर्थः; एतादृशः (उपलम्भरूपः) प्रतियोगी यस्य (उपल-

[ग] प्रतियोगिसत्त्वापादनापादितोपलम्भप्रतियोगिकत्वम् । (नील० १ । पृ० १८) यथा—'यद्यत्र घटोऽभविष्यत्तदा भूतलमिवाद्रक्ष्यत्' दर्शनाभावात् 'नास्ति' इति । (त० दी० १ । पृ० १८)३ योग्यमात्रप्रतियोगिकत्वे सति योग्यधर्ममात्रावच्छिन्नप्रतियोगिताकत्वम् । ४ जात्यवच्छिन्नप्रतियोगिताकत्व-जात्यतिरिक्तयोग्यधर्मावच्छिन्नप्रतियोगिताकत्व-

म्भाभावस्य) सः तादृशप्रतियोगिकः (उपलम्भाभावरूपः), तस्य (तादृशप्रतियोगिकस्य) भावः, इति । तथा च—उपलम्भाभावात् (घटदर्शनाभावात्) 'नास्ति घटः' इति प्रत्यक्षं भवति । एवं च—तादृशघटोपलम्भाभावो 'भूतले घटो नास्ति' इत्याकारके घटाभावप्रत्यक्षे हेतुः (इन्द्रियस्य सहकारी) भवति, इति समुदायार्थः । (त० दी०) (नील० १ । पृ. १८) (मु० १ । पृ. १२३) (दि०)

१ तथा हि—यत्रालोकसंयोगादिकं वर्तते, तत्र 'यद्यत्र घटः स्यात्तर्ह्युपलभ्येत' इत्यापादयितुं शक्यते, तत्र घटाभावादेः प्रत्यक्षं भवति । अन्धकारे तु नापादयितुं शक्यते; तेन,—घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्; स्पार्शनप्रत्यक्षं तु भवत्येव; आलोकसंयोगं विनाऽपि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात् । गुरुत्व-पिशाचादिकं यत् अयोग्यम्, तदभावस्तु न योग्यः (प्रत्यक्षविषयः) । अतः,—तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात् * गुरुत्व-पिशाचाद्यभावानां, जलपरमाणौ पृथिवीत्वाद्यभावस्य च न प्रत्यक्षम्, इति । (मु० १ । पृ० १२४—१२६)

२ अत्र पदप्रयोजनम्—द्रव्यसामान्याभाववारणाय 'मात्र' इति पदम् । गुरुत्ववद्घटात्यन्ताभाववारणाय विशेष्यदलम् । रूप-गुरुत्व-एतदन्यतरावच्छिन्नाभाववारणाय विशेष्यदले 'मात्र' इति पदम् । (दि० १ । ३ । पृ० १२७)

३ तेन,—वायावुद्भूतरूपाभावस्य प्रत्यक्षमुपपद्यते, वायौ गुरुत्वाभावप्रत्यक्षापत्तिवारणं च भवति; रूपाभावस्य योग्यमात्रप्रतियोगिकत्वात्, गुरुत्वाभावस्य च योग्यमात्राप्रतियोगिकत्वाच्च, इति ।

४ इयं योग्यता च, संसर्गाभावनिष्ठा संसर्गाभावप्रत्यक्षे प्रयोजिका च 'प्रतियोगियोग्यता' इति व्यवह्रियते ।

५ अनेन विशेषणेन,—स्तम्भे पिशाचान्योऽन्याभावप्रत्यक्षम् ('स्तम्भः पिशाचो न' इति प्रत्यक्षम्) उपपद्यते । (राम. १ । ३ । पृ० १२८)

६ अनेन विशेषणेन, घटवदन्योन्याभावादेः प्रत्यक्षमुपपद्यते, इति ज्ञेयम् । (राम. १ । ३ । पृ. १२८)

* अत्र—'योग्यानुपलब्धौ योग्यता च, योग्यप्रतियोगिप्रकारक-योग्याधिकरणविशेष्यक-उपलम्भप्रतियोगिकत्वम्' इति निर्वचनमपि चिन्तामणिकृन्मते सम्भवति, इति । (राम० १ पृ० १२३)

एतदन्यतरत् । ( दि १ । ३ । पृ० १२६–१२७ ) ५ [ क ] अनुमित्सानन्तरं लिङ्गदर्शनादिक्रमेण यावता कालेनोत्सर्गतः परामर्शो जायते, तावानेव कालः ।

[ ख ] अनुमित्सोत्पत्त्यनन्तरमनुमित्सानाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते, तावानेव कालः । ( दीधि० २ । पक्ष० पृ० १३६ )

६ साधकबाधकमानाभावः । ( चि० २ । पक्ष० पृ० ३३ )

**योग्यानुपलब्धिः**—( अनुपलब्धिः ) [ क ] प्रतियोगितद्व्याप्येतरप्रतियोग्युपलम्भकयावत्सामग्रीविशिष्टप्रतियोग्युपलम्भाभावः । ( कु० ३ । टी० )

[ ख ] अभावप्रत्यक्षसामग्रीविशिष्टप्रतियोग्यनुपलब्धिः । ( त० प्र० १ )

---

१ इयं योग्यता चान्योऽन्याभाववृत्तिरन्योऽन्याभावप्रत्यक्षे प्रयोजिका च, 'अधिकरणयोग्यता*' इति व्यवह्रियते । तेन, स्तम्भेऽपि पिशाचान्योन्याभाव–पिशाचवदन्योऽन्याभावयोः प्रत्यक्षत्वाप्रत्यक्षत्वोपपत्तिः । ( दि० १ । ३ । पृ० १२७ )

२ अनुमित्सोत्पत्त्यधिकरणक्षणमारभ्य क्रमेण पक्षविषयकलिङ्गज्ञान–व्याप्तिस्मरणयोरुत्पत्तौ सत्यामुत्सर्गतो यावता कालेन परामर्शोत्पत्तिः; अनुमित्सोत्पत्तिक्षणमारभ्य तत्क्षणपर्यन्तं यावन्तः क्षणाः, यो वा तावन्मात्रक्षणावस्थायी स्थूलकालस्तत्समुदाय एव वेत्यर्थः, एवं च—'क्षणचतुष्टयं, तदधिककालानवस्थायी † स्थूलसमयश्च योग्यता' इति पर्यवसितम् । ( ग० २ । पक्ष० पृ० २८ )

३ इयं च योग्यता, मिश्रमतानुसारिण्यनुमितिप्रयोजिका च 'अनुमित्सायोग्यता' इति व्यवह्रियत इति बोध्यम् ।

४ इयं योग्यता त्वनुमितौ प्रयोजिका 'पक्षतात्मकसंशययोग्यता' इत्युच्यते ।

५ अत्र,—अनुपलब्धौ योग्यत्वविशेषणदानेन, अन्धकारे न घटाभावप्रत्यक्षापत्तिः । तथा हि—आलोकसंयोगाद्यसत्त्वदशायां 'अत्र घटः स्यात्, तर्ह्युपलभ्येत' इत्यापादनासंभवेन योग्यानुपलब्ध्यभावात्, न तत्र घटाभावप्रत्यक्षम्, इति । ( नील० । पृ० १८ )

अत्र भट्टा आहुः—अभावप्रत्यक्षे चेन्द्रियं न करणं, किं तु—योग्यानुपलब्धिरेव, इति । ( दि० १ )

६ अत्रेदं बोध्यम्—यस्य सत्त्वं यत्रानुपलब्धिविरोधि, तस्याभावस्तत्र गृह्यते, इति । ( चि० ४ )

---

* योग्याधिकरणवृत्तित्वमित्यर्थः । तेन, स्तम्भ इव वाय्वादौ न पिशाचान्योन्याभावप्रत्यक्षम्, इति भावः । ( दि० १ । ३ । पृ० १२७ )

† तदनुगमश्च—स्वप्रागभावानधिकरणत्व-स्वनाशाधिकरणसमयध्वंसाधिकरणसमयध्वंसानधिकरणत्व–एतदुभयसंबन्धेन सिषाधयिषाविशिष्टकालत्वम् । ( ग० २ । पक्ष० पृ० २८ )

शिष्टमुदाहरणप्रयोजनादिकं च 'अनुपलब्धि' 'योग्यता' शब्दव्याख्यानावसरे संपादितम्, तत् तत्र दृश्यम्।

**योनिजम्**—(शरीरम्) शुक्रशोणितयोः परस्परमेलनजन्यम्। (दि० १। २। पृ० ७०) (सि० च० १। पृ० ६) यथा—मनुष्यादिशरीरं योनिजम्। शिष्टं तु 'शरीर' शब्दे दृश्यम्।

**यौगपद्यम्**—१ एककालवृत्तित्वम्[1]। (ग० सत्प्र०) यथा—घट-पटयोर्यौगपद्यम्। २ एककालोत्पत्तिकत्वम्। (मु०) यथा—"अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहोच्यते" इत्यादौ यौगपद्यम्। (भा० प० श्लो० ८६)

**यौगिकम्**—(नाम, शक्तपदं वा) [क] यत्रावयवार्थ एव बुध्यते, तत् पदम्। (मु० ४। पृ० १७९) (त० प्र० ख० ४। पृ० ३०)
[ख] अवयवशक्तिमात्रेणार्थप्रतिपादकम्। यथा—पाचकादिपदम्[2]। (नील०) (मु० ४)
[ग] यन्नाम स्वान्तर्निविष्टशब्दानां योगलभ्यस्यैव यादृशार्थस्यान्वयबोधं प्रति हेतुः, तन्नाम तादृशार्थे यौगिकम्। तच्च यौगिकं त्रिविधम्,—समासः, तद्धितान्तम्, कृदन्तं चेति[3]। (श० प्र० श्लो० २९। टी० पृ० ४३)

**यौगिकरूढम्**[4]—(नाम, शक्तपदम्) [क] यत्रावयवार्थ-रूढ्यर्थयोः स्वा-

---

१ अनेकेषामेकक्षणसंबन्धः, इत्यर्थः।

२ अत्र—'पचति' इति व्युत्पत्त्या (प्रकृतिप्रत्ययादिना) पाककर्ता बोध्यते, इति विज्ञेयम्।

३ अत्र विशेषो ज्ञेयः—द्वन्द्वोऽपि समासः, स्वघटकशब्दानामाकाङ्क्षया लभ्यस्य धवखदिराद्यर्थस्यान्वयबोधकतया यौगिक एव। ब्राह्मणी, श्वश्रूः, शूद्रेत्यादौ ङीबादेः स्त्रीत्ववाचित्वे,—तादृशं नाम यौगिकमेव;। अन्यथा तु,—स्त्रीत्वादिमति तत्तदर्थे रूढमेव; नातो विभागस्य व्याघातः, इति। (श० प्र० श्लो० २९। टी० पृ० ४३)

४ अत्र,—'यौगिकं च तद्रूढं च' इति व्युत्पत्तिरनुसंधेया। (नील० ४। पृ० ३१)
अत्र शब्दशक्तिप्रकाशकृत आहुः—इदं (यौगिकरूढम्) पदं 'रूढयौगिकम्' इत्यप्युच्यते। (श० प्र० श्लोक० १५), इति। एतस्योदाहरणं तु 'नाम' शब्दव्याख्याने संपादितम्, इति तत्र दृश्यम्।

तन्त्र्येण बोधः, तत् । (मु० ४ । पृ० १८०) (त० प्र० ४ । पृ० १०) [ख] यौगिकार्थ-रूढार्थयोः स्वातन्त्र्येण बोधकं पदम् । [ग] योगेन रूढ्या च परस्परासहकारेणार्थप्रतिपादकम् । यथा—उद्भिदादिपदं यौगिकरूढम् । नील० ४ । पृ० ३१ ) यथा वा—अश्वगन्धादिपदं यौगिकरूढम् ।

---

## र.

**रक्तः**—१ (गुणः) रूपविशेषः । यथा—रक्तो घट इत्यादौ । २ शरीरस्थो रसपाकजन्यो मांसहेतू रुधिराख्यो धातुविशेषः ।

---

वयमत्राधिकं ब्रूमः—योगरूढिरूपशक्तिवत् यौगिकरूढिरूपा शक्तिर्नातिरिक्ता, किंतु—योग—रूढि—एतदुभयात्मिकैव । योगरूढिशक्तिस्तु योगविशिष्टरूढित्वेन रूपेण विशिष्टैकार्थबोधकतयाऽतिरिक्ता, इति विशेषः, इति । (स्व०)

१ अत्र,—[१] उद्भित्पदं योगेन * तरुगुल्मादेः, रूढ्या तु यागविशेषस्य † वाचकम् । (नील० ४ । पृ० ३१) (मु० ४) [२] उद्भित्पदं यौगिकं खनित्रे; रूढं यागविशेषे । (त० प्र० ख० ४ । पृ० ३०)

२ तथा हि—[क] अश्वगन्धादिपदात्कदाचिदोषधिनिष्ठसमुदायनिरूपितशक्त्यौषधिबोधः । कदाचित्तु—'अश्वस्य गन्धोऽस्याम्' इति व्युत्पत्त्या वाजिशालादिबोधोऽवयवशक्त्या, इति । (वै० सा० द०) [ख] अश्वगन्धादिपदमोषधिविशेषबोधे रूढम्, अश्वसंबन्धवत्तया वाजिशालाबोधे यौगिकमिदं 'यौगिकरूढम्' इत्युच्यते । 'रूढिर्योगापहारिणी' इति तु प्रकरणाद्यभावे बोध्यम् । यत्र मण्डपपदादिभ्यो मण्डपानकर्त्रादे रूढ्यर्थमण्डपादिगुणवत्त्वेन बोधस्तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थापरित्यागेन योगाद्रूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः । (ल० म० आकाङ्क्षादिवि० पृ० १२)

३ अत्र—रक्तपदस्य शक्तिबोध्योऽर्थो रक्तरूपमेव; तथापि—रक्तघटयोः सामानाधिकरण्यानुरोधेनात्र रक्तपदस्य रक्तरूपवति लक्षणा न्यायमते स्वीक्रियते । तेन, 'रक्तरूपवदभिन्नो घटः' इति शाब्दबोधः । शाब्दिकास्तु,—"गुणवचनान्मतुपो लुगिष्टः" इति वार्तिकेन लुप्तेन मतुपैव विशिष्टार्थो बोध्यते; इति रक्तपदस्यात्र शक्त्यैव बोध्योऽर्थो गृह्यते, नात्र लक्षणा स्वीकार्या, इत्याहुः ।

४ तत्स्वरूपमुक्तं भावप्रकाशे यथा—"यदा रसो यकृद्याति तत्र रञ्जकपित्ततः । रागं पाकं च संप्राप्य स भवेद्रक्तसंज्ञकः" इति ।

---

* अत्र प्रमाणम् 'उद्भिदस्तरुगुल्माद्याः' इति । (अमर० का० ३ । वर्ग० १ । श्लो० ५१)

† "उद्भिदा यजेत पशुकामः" (श्रुतिः) इत्यादावुद्भित्पदं तन्नामकयागविशेषवाचकम् ।

रसनम्—'घ्राण'वदस्यार्थोऽनुसंधेयः।

रसः—(गुणः) १ [क] रसनग्रहणो योऽर्थः, सः। (वै० उ० ३। १। १) प्रशस्त० पृ० १२)

[ख] रसनमात्रग्राह्यजातिमान्। (त० कौ० १। पृ० ४)

[ग] रसवृत्ति-गुणत्वसाक्षाद्व्याप्य-जाति-(रसत्व-)मान्। (वै० उ० ७। १। ६) स च षड्विधः,—मधुरः, अम्लः, लवणः, कटुः, कषायः, तिक्तश्च, इति। स च (रसः) पृथिवीजलवृत्तिः। तत्र पृथिव्यां

---

१ अत्र व्युत्पत्तिः—'रस्यते (आस्वाद्यते) अनेन' इति रसः (करणे ल्युट्)।

२ [क] रसनग्राह्यो गुण इत्यर्थः। (त० भा०)(त० सं०) [ख] अत्र निष्कर्षस्तु—रसनग्रहणवृत्ति-गुणत्वावान्तर-जातिमत्त्वम्, इति। तेन नातीन्द्रियरसाद्यनुपग्रहः (असंग्रहः)। (वै० उ० ३। १। १)

३ अत्र—अर्थशब्देन धर्मी भावभूत उच्यते। तेन, गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः। (वै० उ० ३। १। १)

४ स च बाह्यैकेन्द्रियग्राह्यः (वै० उ० ३। १। १), रसनसहकारी च। (प्रशस्त० पृ० १२) लक्षणं तु रसत्वमेव। तच्च, रसनग्राह्यगुणविभाजकधर्मवत्त्वम्। (वाक्य० १। पृ० ७) (वै० उ० ७। १। ६)

५ अत्र—रसनग्राह्यां रसादिगतां सत्तां (सामान्यम्) आदाय द्रव्यादावतिव्याप्तिवारणाय 'मात्र' इति पदं दत्तम्।

६ [क] द्रव्यगतमधुरादिषड्विधरसानां कारणादिकमुच्यते सुश्रुतग्रन्थे—"स खल्वाप्यो रसः शेषभूतसंसर्गाद्विभक्तः षोढा विभज्यते। तद्यथा—मधुरोऽम्लो लवणः कटुकस्तिक्तः कषायः, इति। ते च भूयः परस्परसंसर्गात् त्रिषष्टिधा(६३)भिद्यन्ते। तत्र (१) भूम्यम्बुगुणबाहुल्यान्मधुरः। (२) भूम्यग्निगुणबाहुल्यादम्लः। (३) तोयाग्निगुणबाहुल्याल्लवणः। (४) वाय्वग्निगुणबाहुल्यात्कटुकः। (५) वाय्वाकाशगुणबाहुल्यात्तिक्तः। (६) पृथिव्यनिलगुणबाहुल्यात्कषायः, इति। तत्र मधुराम्ललवणा वातघ्नाः। मधुरतिक्तकषायाः पित्तघ्नाः। कटुतिक्तकषायाः श्लेष्मघ्नाः। तत्र—वायुरात्मनैवात्मा, पित्तमाग्नेयम्, श्लेष्मा सौम्यः, इति। त एव रसाः स्वयोनिवर्धनाः, अन्ययोनिप्रशमनाश्च। (सुश्रुते० रसविशेष०) [ख] केचिदाहुः—अग्नीषोमीयत्वात् जगतो रसा द्विविधाः; सौम्याः आग्नेयाश्च। तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः। मधुराम्ललवणाः स्निग्धाः, गुरवश्च। कटुतिक्तकषाया रूक्षा लघवश्च। सौम्याः शीताः, आग्नेयाश्चोष्णाः। (सुश्रु०)

मधुरादिषट्प्रकारः, पाकजोऽनित्यश्च । अप्सु, मधुरोऽपाकजो नित्यानित्यात्मा; नित्यगतो ( जलपरमाणुगतः ) नित्यः । अनित्यगतो ( द्व्यणुकादिजलगतः ) अनित्यः । ( त० भा० प्रमेयनि० पृ० ३२ ) ( प्रशस्त० पृ० १२ ) ( त० सं० ) २ रसायनशास्त्रज्ञास्तु,—सारः । यथा—"ओषधीनां रसः" ( ताण्ड्यब्राह्मणम् ) इत्यादौ गुडमधूकपुष्पबकुलखर्जूरबदरीमूलादिभवः सारः, इत्याहुः । ३ देहस्थो भुक्तान्नादेः प्रथमपरिणामः, इति भिषज आहुः । ४ आलंकारिकास्तु,—विभावानुभावसंचारिभावव्यङ्ग्यो रत्यादिस्थायिभावकः ( शृङ्गारादिर्नवविधः ) रसः, इत्याहुः । ६ ब्रह्मणो आनन्दः; ज्ञानं वा । यथा—"रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" ( तैत्ति ब्रह्मोपनि० ७ ) इत्यादौ, इति वेदान्तिन आहुः ।

**रसनम्**—( इन्द्रियम् ) [ क ] 'गुडे मधुरो रसः' इति रसप्रत्यक्षासाधा-

---

१ अत्रेदं बोध्यम्—जले मधुर एव रसोऽस्ति; जम्बीररसादावम्लत्वमहस्त्वौपाधिकः ( जम्बीरगतोऽम्लस्तद्गतजले परंपरया प्रतीयते ) इति । ( वाक्य० १ पृ० ७ ) ( मु० १ । पृ० ७६ ) अत्र शिष्टं तु 'जल' 'आपः' इति शब्दव्याख्याने द्रष्टव्यम् ।

२ ( १ ) सारोऽत्र मदिरा । ( २ ) अलंकारशास्त्रे तु धर्मदत्त आह—" रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते । तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः" इति । ( सा० द० परि० ३ । श्लो० ३३ टी० । पृ० १७ )

३ अत्रोच्यते भावप्रकाशे—"यत्राथो रसधातुर्यस्ततोऽभवदपां रसः । सद्रवं सकलं देहं रसतीति रसः स्मृतः" इति ।

अथ रसस्य स्वरूपमाह—"सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः" इति । ( वाच० )

४ तल्लक्षणं चोक्तम्—"विभावेनानुभावेन व्यक्तः संचारिणा तथा । रसतामेति रत्यादिः स्थायी भावः सचेतसाम्" इत्यादि । ( सा० द० परि० ३ । श्लो० १२ । पृ० १६ )

५ नवविधस्तु,—"शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोऽद्भुत इत्यष्टौ रसाः, शान्तस्तथा मतः" इति । ( सा० द० परि० ३ । श्लो० २०९ ) वत्सलाख्यं दशममपि रसं मुनीन्द्रादयोऽङ्गीचक्रुः । ( सा० द० परि० ३ । श्लो० २४१ । पृ० ६५ )

६ अत्रालंकारिका आहुः—"सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः । वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः" इति । ( सा० द० परि० ३ । श्लो० ३३ । पृ० १६ )

७ रसनं जलीयमिन्द्रियम्, सर्वप्राणिनां रसोपलम्भकम्, विजातीयावयवानभिभूतैर्जलावयवैरारब्धम्, जिह्वाग्रवर्ति च । ( प्रशस्त० पृ० ४ ) ( त० भा० प्रमे० पृ० २६ ) ( त० सं० ) रसनस्य जलीयत्वेऽनुमानं प्रमाणम् । तद्यथा,—'रसनेन्द्रियं जलीयम्, रूपादिषु पञ्चसु मध्ये रसस्यैवाभिव्यञ्जकत्वाल्लालोदकवत्, सक्तुरसाभिव्यञ्जकोदकवद्वा' इति । ( सि० च० ) ( मु० १ । जलनि० पृ० ७७ ) ( त० भा० प्रमेयनि० पृ० २६ )

रणं कारणम्। (त० कौ० १। पृ० १०) यथा—"पित्तेन दूने रसने सिताऽपि" (नैषध०) इत्यादौ।

[ख] रसग्राहकं महदिन्द्रियम्। (न्या० म० १। पृ० १४)

**रसाभासः**[1]—दोषविशेषयुक्तो रसः। यथा—उपनायकादिगतशृङ्गारादी रसः।

**रागः**—१ (दोषः) [क] आसक्तिलक्षणो दोषः। यथा—तृष्णा। (वात्स्या० ४। १। ३)

[ख] पुनः पुनर्विषयानुरञ्जनेच्छा[3]। (प्रशस्त० २। पृ० ३३) २ गायकास्तु—निषादादिस्वरयोनिकः स्वरविशेषः[3]। यथा—मालव-भैरवादी[4] रागः, इत्याहुः। ३ महारजनादिवर्णविशेषः, इति काव्यज्ञा आहुः।

---

१ अत्रोच्यते—"अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः" इति। (सा० द० परि० ३। श्लो० २४७। पृ० ६७)

२ अनुरागलक्षणं चोज्ज्वलमणिनोक्तम्—"सुख(दुःख)मप्यधिकं चित्ते सुखत्वेनैव रज्यते। यतस्तु प्रणयोत्कर्षात्स राग इति कथ्यते" इति। (वाच०)

३ तत्स्वरूपं च—"यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्तिनाम्। ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः" इति। (वाच०)

४ तेषां मतभेदेन भेदा यथा—"आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः। श्रीरागश्च ततः पश्चाद्वसन्तस्तदनन्तरम्॥ हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु" इति। (संगीतदामो०)

भरतमते तु—"भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा। श्रीरागो मेघरागश्च रागाः षडिति कीर्तिताः" इति। (वाच०)

अत्र एकैकरागे षट् रागिण्यः* (स्त्रियः), एवं षट्सु रागेषु रागिणीभेदाश्च षट्त्रिंशत्(३६) यथा—"षट्त्रिंशद्रागिणीभेदाः क्रमशः कथिता मया। 'धानसी १, मालसी २, चैव रामकीरी ३, च सिन्धुडा ४। आशावरी ५, भैरवी ६, च मालवस्य (१) प्रिया इमाः" ॥ "वेलावली १, पुरवी २, च कानडा ३, माधवी ४, तथा। कोडा ५, केदारिका ६, चापि मल्लार-(२)-दयिता इमाः" ॥ "गान्धारी १, सुभगा २, चैव गौरी ३, कौमारिका ४, तथा। वेलोयारी ५, च वैरागी ६, श्रीरागस्य (३) प्रिया इमाः" ॥ "तुडी १, च पञ्चमी २, चैव ललिता ३, पठमञ्जरी ४। गुर्जरी ५, च विभाषा ६, च वसन्तस्य (४) प्रिया इमाः" ॥ "मायूरी १, दीपिका २, चैव देश-

---

* रागिण्यो गीताङ्गानि स्वरभेदाः, तास्तु 'रागपत्न्यः' इत्युच्यन्ते। (संगीतदा०)

**रात्रिः**—१ [ १ ] [ क ] निरस्तैतद्वीपवर्तिरविरश्मिजालः कालविशेषः । ( कि० व० १ )

[ ख ] संपूर्णादित्यमण्डलदर्शनयोग्यो यः कालः, तद्भिन्नः कालः । (वै०)

[ ग ] अन्ये तु,—नृणां स्वस्वदेशापेक्षया सूर्यमण्डलस्यादर्शनयोग्यः कालः, इत्याहुः ।

[ घ ] धर्मज्ञास्तु,—अहर्विपरीता रात्रिः, इत्याहुः । ( मिताक्षरा १ )

[ २ ] पौराणिकादयस्तु,—पितॄणां शुक्लपक्षरूपः[1] कालः । [ ३ ] देवानां दक्षिणायनरूपः[2] कालः, इत्याहुः । २ हरिद्रा, इति काव्यज्ञा आहुः ।

**रामायणम्**—दशरथपुत्ररामचरितप्रतिपादकम्, आदिकविवाल्मीकिकृतं[3] महाकाव्यम् । तच्च सप्तकाण्डात्मकम्[4]; ब्रह्मलोके कोटिश्लोकात्मकम्, मनुष्यलोके चतुर्विंशतिसाहस्रं पञ्चशतसर्गयुतम् ।

**रुचिः**—१ [ क ] प्रीतिजनकता । यथा—नारदाय रोचते कलह इत्यादौ रुच्यर्थः[5] । ( ग० व्यु० का० ४ । पृ० ९६ )

---

कारी ३, च पाहिडी ४ । वराडी ५, सोरहाटी ६, च हिन्दोलस्य (५) प्रिया इमाः"॥ "नाटिका १, चाथ भूपाली २, रामकेली ३, गडा ४, तथा । कामोदा ४, चाथ कल्याणी ६, कर्णाटस्य ( ६ ) प्रिया इमाः " इति । ( संगीतदा० ) एवम्—तत्तद्गानकालभेदाः, तत्तत्पुत्रादयश्च तत्रैव द्रष्टव्याः । ( वाच० )

१ तदुक्तम्—" मासेन च मनुष्याणां पितॄणां तदहर्निशम् । कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्तिता " इति ।

२ तदुक्तम्—" उत्तरायणे (?) दिनं प्रोक्तं रात्रिः स्याद्दक्षिणायने " इति । ( वाच० )

३ अत्रेदं बोध्यम्—अध्यात्मरामायणं तु 'व्यासेन विरचितम्' इति प्रलापमात्रम्, न तु व्यासेन विरचितम्; किं तु—अद्वैतमायावादिना केनचित्पण्डितेनैव विरचितम्; तद्वचनात: प्रतिपत्तेः, इति ।

४ सप्त काण्डानि तु—बालकाण्डम्, अयोध्याकाण्डम् , अरण्यकाण्डम्, किष्किन्धाकाण्डम्, सुन्दरकाण्डम्, युद्धकाण्डम् , उत्तरकाण्डं च, इति । तत्प्रतिपाद्यविषयाश्च ( संक्षिप्तकथाः ) गरुडपुराणे ( अ० १४८ ), पद्मपुराणे चोक्तास्तत्र द्रष्टव्याः ।

५ अत्र—" रुच्यर्थानां प्रीयमाणः " ( पा० सू० १।४।३३ ) इत्यनुशासनेन प्रीतिजनकतानिरूपकरुच्यर्थघटकप्रीतिभागिनः संप्रदानसंज्ञा विहिता । तादृशक्रियाश्रयतया कलहादेः

[ ख ] वैयाकरणास्तु,—विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारः । यथा—हरये रोचते भक्तिरित्यादौ रुचेरर्थः, इत्याहुः । ( ल० म० का० ४ । पृ० १०२ ) २ आसङ्गः । ३ अभिलाषः । ४ किरणः । ५ शोभा । ६ बुभुक्षा । ७ गोरोचना चेति काव्यज्ञा आहुः । ८ प्रजापतिविशेषः, इति पौराणिका आहुः । ९ आलिङ्गनविशेषः, इति कामशास्त्रज्ञा अङ्गीचक्रुः । ( वाच० )

**रूढम्**—१ ( नाम ) [ क ] यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेणार्थो बुध्यते, तत् पदम् । यथा—गो-मण्डलादिपदम् । ( मु० ख० ४ । पृ० १७९ ) ( त० प्र० ख० ४ । पृ० ३० )

[ ख ] रूढिशक्तिमात्रेणार्थप्रतिपादकं पदम् । यथा—गोपद-घटादिपदम् । ( नील० ४ । पृ० ३१ )

[ ग ] यन्नाम यादृशार्थे संकेतितमेव ( नतु यौगिकमपि ), तद्रूढम् । यथा—गोप्रभृतौ ( अर्थे ) गवादि-(भानु-धेनु)-शब्दो रूढः । ( श० प्र० श्लो० १९ । पृ० १८ ) २ जातम् । ३ प्रसिद्धं च, इति काव्यज्ञा आहुः ।

**रूढयौगिकम्**—( नाम ) 'यौगिकरूढ' शब्दवदस्यार्थोऽनुसंधेयः । ( श० प्र० श्लो० १९ )

---

कर्तृता । तथा च—आश्रितत्वं चतुर्थ्यर्थः, तस्य प्रीतावन्वयः, तादृशजनकत्वस्य कलहेऽन्वयः, इति ज्ञेयम् । ( ग० व्यु० का० ४ । पृ० ९६ )

१ अत्र—व्यापारफलभूतप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान् । तथा च—'हरिसंप्रदानिका भक्तिकर्तृका रुचिः' इति बोधः; 'हरिनिष्ठा या भक्तिविषया प्रीतिः, तदनुकूलो भक्तिनिष्ठो व्यापारः' इति यावत् । ( ल० म० का० ४ । पृ० १०२ )

२ रूढं 'संज्ञा' इति पदेनाभिलप्यते । ( श० प्र० श्लो० १६ । टी० पृ० १९ ) अतः—'रूढ' इति शब्दस्य विभागः 'संज्ञा' शब्दव्याख्याने द्रष्टव्यः ।

तदर्थश्च—प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्याऽर्थबोधकम्, इति ।

अत्र—"गमेर्डोः" ( उणा० सू० २ । ६७ ) "दाभाभ्यां नुः" ( उणा० सू० ३ । ३२ ) "धेट इच्च" ( उणा० सू० ३ । ३४ ) इत्यादेरौणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्वविरहात्, गकारोत्तरौकारत्वाद्यानुपूर्वीकत्वेनैवार्थबोधकत्वम् ।

**रूढलक्षणा**—[ क ] 'निरूढलक्षणा' शब्दवदस्यार्थोऽनुसंधेयः ।

[ ख ] शाब्दिकास्तु,–असति प्रयोजने शक्यार्थबाधप्रतिसंधानपूर्वक–तत्संबन्ध्यपरार्थबोधे 'निरूढलक्षणा' इति व्यवहारः । अन्यथा–(बाध-प्रयोजनाभावे ) रूढिशक्तिरेव । यथा–कुशलपदे, तैलपदे[1] च, इत्याहुः । ( ल० म० आकाङ्क्षावि० पृ० १४ ) शिष्टं तु 'निरूढलक्षणा'शब्दे दृश्यम् ।

**रूढिः**[2] —१ ( शब्दशक्तिः ) [ क ] समुदायशक्तिः । ( त० दी० ४ ) यथा–मण्डप[3] इत्यादिपदे रूढिः शक्तिः ।

[ ख ] शाब्दिकास्तु,–शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थनिरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वम्, तत्पदे सा तदर्थनिरूपिता रूढिः । यथा–मणि-नूपुरादौ, इत्याहुः । ( ल० म० आकाङ्क्षादिवि० पृ० १२ ) २ जन्म । ३ प्रसिद्धिश्च, इति काव्यज्ञा आहुः ।

**रूढिलक्षणा**—'निरूढलक्षणा' शब्दवदस्यार्थोऽनुसंधेयः ।

**रूप**—( धातुः ) प्रमाणोपन्यासेन स्वरूपादिकथनम् । यथा–रूपयति, अरुरूपत्, इत्यादौ धात्वर्थः ।

**रूपकम्**—१ मूर्तम् । २ शुक्लादिवर्णविशेषः । ३ आकारः । ४ साहित्यशास्त्रज्ञास्तु,–अभिनयप्रदर्शको दृश्यकाव्यविशेषः । यथा–शाकुन्तलादि,

---

१ अत्र—तैलपदस्य तिलविकारद्रव्ये शक्तस्य सार्षपादौ निरूढलक्षणा ।

२ अत्र कुमारभट्ट आह–" लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी" । कल्पनीया तु लभते नात्मानं योगबाधतः " इति ।

३ अत्र—मकारादिवर्णानुपूर्वीकत्वेन शक्त्या मनाश्रयो बोध्यते, इति विज्ञेयम् ।

४ रूपकस्य दशविधा भेदाः—" नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश " इति । (सा० द० परि० ६ । श्लो० २७४)

५ तस्य रूपकसंज्ञाहेतुमाह—" तत् रूपारोपात्तु रूपकम् " इति । तत् दृश्यं काव्यम्; इति । यथा–नटे रामादिस्वरूपारोपात् 'रूपकम्' इत्युच्यते । ( सा० द० परि० ६ । श्लो० २७३ )

---

* तदर्थस्तु,—लब्धात्मिका सृप्ता शक्तिर्योगबाधिका; कल्पनीया तु योगबाध्या, इति । ( वाच० )

इत्याहुः । ५ आलंकारिकास्तु,—अर्थालंकारविशेषः, इत्याहुः । ६ गणकास्तु,—गुञ्जात्रयपरिमाणम्, इत्याहुः । ७ राजतो नाणकविशेषः इत्याधुनिका व्यवहरन्ति ।

**रूपम्**—(गुणः) [क] चक्षुर्मात्रग्रहणो योऽर्थस्तत् । (वै०उ० ३।१।१)

---

१ तल्लक्षणं तु "रूपकं रूपितारोपाद्विषये निरपह्नवे" इति । (सा० द० परि० १० श्लो० ६६९)

२ अत्रोच्यते—"संचाली प्रोच्यते गुञ्जा तास्तिस्रो रूपकं भवेत्" इति । (युक्तिक०)

३ तच्च बाह्यैकेन्द्रियग्राह्यम् (वै० उ० ३।१।१), द्रव्याद्युपलब्धिकारणम्*, नयनसहकारि च भवति । (भा० प० श्लो० १०१) (प्रशस्त०) परमाणुगतं तु रूपं न प्रत्यक्षम्; एवं रसगन्धादिकमपि बोध्यम् ।

अत्रेदं बोध्यम्—रूपस्य चाक्षुषप्रत्यक्षे च महत्परिमाणम् (मध्यमम्), उद्भूतत्वम्, अनभिभूतत्वम्, रूपत्वं च † प्रयोजकम् । तत्र महत्परिमाणं तु सामानाधिकरण्यसंबन्धेन, इति ज्ञेयम् । (वै०) (वै० उ० ४।१।८) (वै० वि०)

लक्षणं तु रूपत्वमेव । तच्च [क] चक्षुर्मात्रबहिरिन्द्रियग्राह्यजाति-(रूपत्व—नीलत्वादि—)-मत्त्वम् । (वै० उ० ७।१।६) [ख] नीलसमवेत-गुणत्वापरजातिः । (सर्व० औलू० पृ० १०६)

४ अत्र,—(१) अर्थशब्देन धर्मी भावभूत उच्यते, तेन, गन्धत्वादौ गन्धाद्यभावे च नातिव्याप्तिः । (वै० उ० ३।१।१) (२) "द्रव्यादित्रयमेवार्थः' इति काश्यप-(कणाद-)निर्णयः । अतो रूपादिसामान्यैर्नातिव्याप्तिर्भविष्यति" इति । (ता० र० श्लो० ४१–४२)

---

* अत्र प्राञ्चो नैयायिका आहुः—'द्रव्य-गुण-कर्म-सामान्यानां चाक्षुषं स्पार्शनं च प्रत्यक्षं प्रति, रूपं कारणम्' इति कार्यकारणभावः; तेन,—वायौ रूपाभावान्न स्पार्शनप्रत्यक्षम्, इति । नव्यास्तु,—'चाक्षुषे द्रव्यप्रत्यक्षे एव रूपं कारणम्' इति कार्यकारणभावः, तेन,—वायौ रूपाभावेऽपि स्पार्शनप्रत्यक्षमुपपद्यते, इत्यङ्गीचक्रुः । (भा० प० श्लो० ५७) (मु० १ पृ० ११३)

† तेन, परमाणौ महत्परिमाणाभावेन तद्वृत्तिरूपस्य प्रत्यक्षनिवारणम्; चक्षुर्वृत्तिशुक्लरूपस्यानुद्भूतत्वेन तादृशरूपस्य प्रत्यक्षनिवारणम्; वैश्वानरे मरकतकिरणादौ च विद्यमानस्य शुक्लरूपस्य वैश्वानरादिसंबद्धपार्थिवरूपेणाभिभवात् प्रत्यक्षनिवारणम्; रसस्पर्शादौ रूपत्वविरहात् चाक्षुषत्वाभावः, इति । (वै० उ० ४।१।८) (मु० १। तेजोनि० पृ० ७८)

[ ख ] चक्षुर्मात्रग्राह्यो विशेषगुणः । ( त० कौ० ) ( त० सं० ) ( प्रशस्त० )

[ ग ] चक्षुर्मात्रग्राह्यजातिमान् गुणः । (त० कौ० १ । पृ० ४ ) तच्च सप्तविधम्,—शुक्लः, नीलः, पीतः, रक्तः, हरितः, कपिशः, चित्रः; इति । तच्च (रूपम्) [ क ] पृथिवीजलतेजोवृत्ति । तत्र—पृथिव्यां सप्तविधम्, पाकजम्, अनित्यं च । जले तेजसि च शुक्ल एव रूपं तिष्ठति । त-

---

१ तदर्थश्च—[ क ] इतरेन्द्रियाग्राह्यत्वं मात्रपदार्थः; चक्षुषश्चेतरत्वे ग्रहे चान्वयः । अथ वा—चित्रगुरित्यादौ गोपदस्येव, ग्राह्यपदस्यैव चक्षुरितरेन्द्रियाग्राह्यत्वविशिष्ट-चक्षुर्ग्राह्यत्व-विशिष्टे लक्षणा । अवशिष्टपदे तात्पर्यग्राहके । उभयत्र ग्राह्यत्वं* लौकिकविषयताश्रयत्वम् । जन्यत्वं चेतरनिरूपितमसाधारणं ग्राह्यम् । तथा च—चक्षुरितरेन्द्रियजन्यग्रहीयलौकिक-विषयताशून्यत्वे † सति, चक्षुर्जन्यग्रहीयलौकिकविषयताशालित्वे च सति, विशेषगुणत्व-वत् । [ ख ] वस्तुतः—त्वगग्राह्य-चक्षुर्ग्राह्य-गुणविभाजकधर्मवत् ‡ । ( वाक्य० १ । पृ० ६ ) [ ग ] चक्षुर्ग्रहणवृत्ति-गुणत्वावान्तर-जातिमत् । ( वै० उ० ३ । १ । १ )

२ अत्र—गुणपदं प्रभावारणाय दत्तम् । ( त० कौ० १ । पृ० ४ )

३ केचिच्चित्ररूपं नाङ्गीकुर्वन्ति । ( त० कौ० १ । पृ० ४ ) सिद्धान्तस्तु—नीलपीतादिरूप-कदम्बस्य चित्ररूपजनकत्वमध्यक्षसिद्धम् ( न्या० ली० पृ० १२ ), इति चित्ररूपमङ्गी-कर्तव्यम् ,§ इति ।

४ अयं भावः—क्वचित्—पाकजम्, क्वचित्तु—अपाकजम्, एवमुभयविधमपि पृथिव्यां तिष्ठति । तथा च—पाकजन्यस्यापाकजन्यस्य ( अवयवगतरूपजन्यस्य ) चोभयविधस्याप्यनित्य-त्वम्, इति ।

---

* तेन,—गुरुत्वादीनां चक्षुषाऽलौकिकग्रहेऽपि नातिव्याप्तिः; न वा, रूपस्येतरेन्द्रियेणा-लौकिकग्रहेऽप्यसंभवः, इति । ( वाक्य० १ । पृ० ६ )

† अत्र—संयोगादिवारणाय प्रथमसत्यन्तं दत्तम्; गुरुत्वादिवारणाय द्वितीयं सत्यन्तम्; रूप-त्वादिवारणाय गुणत्वं दत्तम्; प्रभाभित्तिसंयोगादिवारणाय 'विशेष' इति पदं दत्तम्, इति विज्ञेयम् । ( वाक्य० १ । पृ० ६ )

‡ तेन, न परमाणुरूपेऽव्याप्तिः, इति विज्ञेयम् । ( वाक्य० १। पृ० ६ )

§ अयं भावः—पटादिप्रत्यक्षान्यथानुपपत्त्या चित्ररूपमवश्यमङ्गीकार्यम् । तथा हि—'द्रव्यवि-षयकलौकिकचाक्षुषप्रत्यक्षं प्रति, रूपं कारणम्' इत्यनुभवसिद्धः कार्यकारणभावः स्वीकार्यः । तथा च—चित्ररूपानङ्गीकारे—रूपस्य दैशिकव्याप्यवृत्तित्वनियमादेकस्मिन्पटे नानारूपा-नङ्गीकारेण रूपसामान्याभावप्रसङ्गात्पटप्रत्यक्षस्यानुपपत्तिः, इति । (त०दी० १ । पृ०१२)

अपाकजम्, नित्यमनित्यं च; नित्यगतं नित्यम्; अनित्यगतमनित्यम्। भास्वराभास्वरभेदेन द्विविधं च,—शुक्लं भास्वरं तेजसि; अभास्वरं शुक्लं जले। (त० भा०) (त० सं०) रूपं उद्भूतानुद्भूतभेदेनापि द्विविधम्,—तत्रोद्भूतरूपमेव चक्षुर्विषयः; तच्च घटपटादिचाक्षुषद्रव्ये तिष्ठति। अनुद्भूतं त्वप्रत्यक्षमेव, तच्च चक्षुरादौ तप्तवारिस्थतेजसि च तिष्ठति। [ख] रूपं पृथिव्युदकज्वलनवृत्ति। (तत्र)—सलिलादिपरमाणुषु नित्यम्; पार्थिवपरमाणुष्वग्निसंयोगविरोधि (पाकजमनित्यम्); सर्वकार्यद्रव्येषु कारणगुणपूर्वकम्; आश्रयविनाशादेव विनश्यति, इति। (प्रशस्त० गुणनि० पृ० १२)

**रूपम्**—१ तत्तद्वृत्तिरुद्दिष्टधर्मः। यथा—"अनुमितिविरोधितावच्छेदकं रूपम्" इत्यादौ। (स्व०) २ आकारः[1]। यथा—घटरूपं द्रव्यमित्यादौ। ३ स्वरूपम्; स्वभावो वा। यथा—'परमाणुरूपा नित्यपृथिवी' इत्यादौ। ४ सादृश्यम्। यथा—'पितृरूपस्तनयः[2], मातृरूपा कन्या' इत्यादौ। ५ ज्योतिषज्ञास्तु,—एकत्वसंख्यान्वितं वस्तु। यथा—"रूपं भजेत्स्यात्परिपूर्तिकालः" (लीलावती) इत्यादौ, इत्याहुः। ६ गणकास्तु,—अव्यक्तराशिसहचरितव्यक्तसंख्यान्वितं[3] वस्तु, इत्याहुः। ७ केचिद्वेदान्तिनस्तु,—(१) वाच्यम्; (२) विकार्यम्; (३) ईश्वरस्याविद्यात्मकोपाधिविशेषो वा। यथा—" नामरूपे व्याकरवाणि " (छा० उ० ६। ३। २) इत्यादौ, इत्याहुः। (शारीर० २। १। १४) ८ शुक्रशोणितम्, इति बौद्धा आहुः। ९ नाटकादिदृश्यकाव्यम्, इति साहित्यशास्त्रज्ञा आहुः। १० वैयाकरणास्तु,—शब्द-धातूनां विभक्त्यादियोगेन निष्पन्नशब्दः। यथा—"सुधी उपास्यः' इति स्थितौ 'यण्' इत्यादेशे जाते 'सुध्युपास्यः'

---

१ एतस्य, परिमाणकृताश्चत्वारो भेदाः,—ह्रस्वः, दीर्घः, चतुरस्रः, वृत्तश्च, इति। स्पर्शकृतास्तु कठिण-चिक्कण-श्लक्ष्ण-पिच्छिल-मृदु-दारुण-भेदेन आकारस्य भेदाः षड्विधाः सन्ति। (वाच०)

२ स च (रूपशब्दः) उत्तरपदस्थश्चेत् सदृशार्थको भवति, इति ज्ञेयम्।

३ तदुक्तं बीजगणिते—"एकाव्यक्तं शोधयेदन्यपक्षाद्रूपाण्यन्यस्येतरस्माच्च पक्षात्" इति।

इति रूपं सिध्यति" इत्यादौ, इत्याहुः । ११ शृङ्गारकाव्यज्ञास्तु,—सौन्दर्यम्, इत्याहुः ।

**रूपहानिः**—[ क ] रूपस्य ( निःसामान्यत्वगर्भस्य विशेषलक्षणस्य ) व्याघातः ( विशेषावृत्तित्वम् ) । ( दि० १ । सामान्यनिरू० पृ० ३९ ) ( त० प्र० )

[ ख ] स्वतो व्यावर्तकत्वस्य हानिः । यथा—विशेषत्वस्य जातित्वस्वीकारे रूपहानिः । ( स्व० )

**रेतः**—१ पुंसो रक्तादिपरिपाकजन्यो देहस्थो मज्जाहेतुश्चरमधातुः । (वाच०) यथा—"रेतोधाः पुत्रं नयति नरदेव! यमक्षयम्" ( भाग० स्क० ९ । अ० २० । श्लो० २१ । दुष्यन्त० ) इत्यादौ । २ रसेश्वरदर्शनज्ञास्तु,—शिववीर्यस्वरूपः पारदरसः, इत्याहुः । ( सर्व० रसे० पृ० ९७ )

---

१ तल्लक्षणमुज्ज्वलमणिनोक्तम्—"अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येन भूषितवद्भान्ति, तद्रूपमिति कथ्यते" इति । ( वाच० )

२ सा च, विशेषस्य जातिमत्त्वे बाधिका, इति जातिबाधकेषु संगृहीता द्रव्यकिरणावल्यामुदयनेन, इति विज्ञेयम् । ( दि० १ । सामान्यनि० पृ० ३४ )

३ विशेषलक्षणं, स्वतो व्यावर्तकत्वं चैतद्द्वयं 'विशेष'शब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्रायमाशयः—विशेषे जात्यन्तराङ्गीकारे सामान्यशून्यत्वघटितविशेषलक्षणासंभवः, इति ।

५ अत्र—'विशेषस्य विशेषत्वात्मकजातिमत्त्वस्वीकारे स्वतो व्यावर्तकत्वं न संभवति' इत्याशयः ।

६ तथा हि—[ १ ] यदि विशेषाः द्रव्याश्रितत्वे ( मूर्तवृत्तित्वे ) सति जातिमन्तः स्युः, ( तदा ) गुणाः कर्माणि वा स्युः; विभुवृत्तित्वे सति यदि जातिमन्तः स्युः, ( तदा ) गुणाः स्युः; इति विशेषपदार्थस्वरूपहानिः । ( वै० उ० १ । २ । ३ ) [ २ ] यदि विशेषत्वं जातिः स्यात्, तदा जातिमतः स्वतो व्यावृत्तत्वासंभवेन स्वतो व्यावृत्तत्वरूपस्यासाधारणधर्मस्य व्याघातः स्यात्; अतो विशेषत्वं न जातिः । ( वै० वि० १ । २ । ३ )

७ रेतस उत्पत्तिस्थानं तु मस्तकादि, इति भारतीयभिषजां मतम् । रेत उत्पत्तिस्थानमण्डमेव, इति पाश्चात्यभिषजो वदन्ति । वयंतु—पुंस्त्वोद्दीपकमेवाण्डम्, न तु रेतस उत्पत्त्याश्रयः, इति प्रतीमः ।

८ अत्र प्रसङ्गत उदाह्रियते—"पुमान्पुंसोऽधिके शुक्रे, स्त्री भवत्यधिके स्त्रियाः । समेऽपुमान् पुंस्त्रियौ वा, क्षीणेऽल्पे च विपर्ययः" इति । ( मनु० अ० ३। श्लो० ) ( याज्ञ० १ )

९ तदुक्तं रसार्णवे—"मम देहरसो यस्माद्रसस्तेनायमुच्यते" इति । ( सर्व० रसे० पृ० ९७ )

**रोगः**—१ धातुवैषम्यजातो व्याधिः[1] । ( राजनि० ) २ कुष्ठौषधम् । ( मेदिनी० ) ( वाच० )

**रोदनम्**—[ १ ] इष्टवियोगेन, अभिघातेन वा यत् बाष्पनिर्मोचनम्, तत् । यथा—"सोऽरोदीत्[2]" इत्यादौ । ( शाबरभा० १ । २ । १ । पृ० ३९ )

[ २ ] क्रन्दनम्; तच्च दुःखजन्यो ध्वनिविशेषः, इति काव्यज्ञा आहुः ।

**रोधनम्**—[ क ] देशान्तरसंचारविरोधि[3]व्यापारः । यथा—गां व्रजं रुणद्धीत्यादौ रुधधात्वर्थो रोधनम् । ( ग० व्यु० का० २ । ख० १ । पृ० ४९ )

[ ख ] शाब्दिकास्तु,—निर्गमप्रतिबन्धद्वारा व्रजाद्यधिकरणकचिरस्थित्यनुकूलव्यापारः । यथा—[4]व्रजमवरुणद्धि गामित्यादौ रुधेरर्थः, इत्याहुः । ( ल० म० सुब० का० २ । पृ० ९२ )

---

१ तल्लक्षणादिकं च—"रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते" इति । "ते च स्वाभाविकाः केचित्केचिदागन्तवः स्मृताः । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः" "कर्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्मदोषोद्भवाश्चान्ये व्याधयस्त्रिविधाः स्मृताः" इति च । साध्या याप्या असाध्याश्च व्याधयस्त्रिविधाः स्मृताः । सुखसाध्यः कष्टसाध्यो द्विविधः साध्य उच्यते" इति च । ( राजनि० )

२ इदमत्राम्नायते—"सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तत् रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयꣳ" इति । ( तैत्तिरीयसंहिता १ । ५ । १-२ )

३ अत्र—संचारविरोधित्वं च संचारानुत्पादप्रयोजकत्वम्; अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः; देशान्तरपदार्थैकदेशे देशविशेषणभेदे 'व्रजम्' इति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः । रुध्यते गां व्रजः* इत्यादावन्वयबोधः† स्वयमूहनीयः । ( ग० व्यु० का० २ । ख० १ । पृ० ४५ )

४ अत्र 'व्रजे गौस्तिष्ठति, तत्र तां निर्गमप्रतिबन्धेन चिरं स्थापयति' इति संप्रत्ययः । ( ल० म० सुबर्थ० का० २ । पृ० ९२ )

---

* अत्र—व्रजस्याधिकरणत्वाविवक्षायाम् "अकथितं च" ( पा० सू० १ । ४ । ५१ ) इत्यनेन गौणकर्मत्वम्, तत्र लकारः; "गौणे कर्मणि दुह्यादेः" इत्यनुशासनात् । अत्राधिकं च 'दोहन'शब्दव्याख्याने ज्ञेयम् ।

† अत्रोहनं तु—'रुध्यते गां व्रजः' इत्यादौ—'व्यापारप्रयोज्यगोनिष्ठानुत्पादसंबन्धिसंचारावच्छेदकदेशनिष्ठभेदप्रतियोगी व्रजः' इति शाब्दबोधः, इति ।

## ल.

**लः**—१ 'तिङ्'शब्दवदस्यार्थोऽनुसंधेयः । स च लकारो दशविधः; लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ्, इति । २ एकलघुको वर्णविशेषः ( ल ), इति वैयाकरणा आहुः । ३ इन्द्रः, इति मेदिनीकार आह । ४ भूमिदेवताको मन्त्रविशेषः, इति तान्त्रिका आहुः ।

**ला**—( धातुः ) आदानम् । यथा—विठ्ठल इत्यादौ ।

**लक्षकम्**—( नाम ) यादृशार्थसंबन्धवति यन्नाम्नि संकेतितं, तदेव तादृशार्थे लक्षकम्, यदि तादृशार्थे शक्तिशून्यं भवेत् । यथा—गङ्गायां घोषः प्रव-

---

१ अत्र—लकारस्य कर्मत्वाद्यर्थबोधने सूत्रम्—"लः कर्मणि च भावे चाकर्मकेभ्यः" इति । ( पा० सू० ३ । ४ । ६९ )

२ अयं व्याकरणशास्त्रप्रसिद्धः प्रत्ययो विज्ञेयः । संक्षेपतस्तदर्थस्तु,—"लड्वर्तमाने, लेड्वेदे, भूते लङ्लुङ्लिटस्तथा । विध्याशिषोश्च लिङ्लोटौ, लङ्लृटौ लुड्भविष्यति*" इति । ( संग्रहे ) अयं लकार 'आख्यातम्' इत्युच्यते । ( म० प्र० ४ पृ० ५५ )

३ अत्र विग्रहः—'विदा ( ज्ञानेन ), ठान् ( शून्यान्, मुमुक्षून् ) लाति ( गृह्णाति स्वप्रसादपात्रतया )' इति विठ्ठलः ।

४ अत्र मीमांसका वदन्ति—पदमिव वाक्यमपि लक्षकम् । यथा—'गभीरायां † नद्यां घोषः' इति पदकदम्बकं गभीरनदीतीरस्य लक्षकम्, इति ( श० प्र० श्लो० २३ । पृ० ३२ )

५ सैन्धवादयश्च शब्दाः, तुरगादिसंबन्धिनि लवणादाविव तुरगादावपि शक्ता एव, इति न ते लक्षका भवन्ति । चटपटाद्यनुकरणस्य हुंफडादिस्तोमस्य च स्वानुभावकत्वमपभ्रंशानामिव शक्तिभ्रमादेव; अतो न तेषां लक्षकत्वम, इति विज्ञेयम् । ( श० प्र० श्लो० २३ । टी० पृ० ३२–३३ )

---

* अयमत्र संग्रहः—कालो द्विविधः—अद्यतनः, अनद्यतनश्च । अद्यतनस्त्रिविधः,—भूतः, भविष्यः, वर्तमानश्च । अनद्यतनो द्विविधः,—भूतः, भविष्यश्चेति । तत्र वर्तमानत्वे लट् । भूतत्वमात्रे लुङ् । भविष्यत्तामात्रे लृट् । लिङर्थे लेट् । लिङर्थेषु आशिषि च लोट् । विध्यादौ लिङ् । हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ् । अनद्यतने भूते तत्त्वेन विवक्षिते लङ् । तत्रैव परोक्षत्वविवक्षायां लिट् । अनद्यतने भविष्यति लुट्, इति । (वै०सा०ल० पृ०१४७)

† अत्रायमाशयः—अत्र, न केवलं नदीपदं तीरलक्षकम्; 'गभीरायाम्' इत्यस्यानन्वयापत्तेः; न हि तीरं गभीरम् । नापि गभीरपदं तथा ( तीरलक्षकम् ); 'नद्याम्' इत्यस्यायोग्यताऽऽपत्तेः; न हि तीरं नदी । तस्माद्वाक्यमेव तत्र गभीरनदीतीरस्य लक्षकम्, इति ।

अत्र सिद्धान्तविदः ( नैयायायिकाः ) समुत्तिष्ठन्ते—मीमांसकैर्यदुक्तं तन्न; नदीपदस्यैव गभीरनदीतीरात्मके विशिष्टे लक्षणा; गभीरपदं तु तात्पर्यग्राहकमेव, इति वाक्ये लक्षणा नास्त्येव, इति । ( श० प्र० श्लो० २३ । टी० पृ० ३२–३३ ) ( मु० ४ । पृ० १०१ ) ( न्या० म० ४ । पृ० १२ )

सतीत्यादौ—गङ्गादयः शब्दाः, तीरादावसंकेतितास्तत्संबन्धिनीरादिशक्तत्वेन गृहीता एव तीराद्यन्वयं बोधयन्ति, इति तत्र लक्षका भवन्ति । ( श० प्र० श्लो० २३ । टी० पृ० ३२ ) लक्षकं च जहत्स्वार्थादिविविधलक्षणावत्त्वेनानेकविधम् । ( श० प्र० श्लो० २४ )

**लक्षणम्**—१ [ १ ] [ क ] उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः । ( वा-

---

१ तथा हि—जहत्स्वार्थलक्षणया तीरत्वादिना तीरादिबोधकं गङ्गादिपदम्; । अजहत्स्वार्थलक्षणया द्रव्यत्वादिना, नीलघटत्वादिना च द्रव्य-नीलघटादिबोधकं घटादिपदम्; । निरूढलक्षणया, आरुण्यादिप्रकारेण तदाश्रयद्रव्यबोधकमरुणादिपदम्; । आधुनिकलक्षणया ( स्वारसिकलक्षणया ) घटत्वादिना घटादिबोधकं पटपदम्; । गौण्या लक्षणया अग्निसदृशत्वादिना माणवकबोधकमग्न्यादिपदम्; इति । ( श० प्र० श्लो० २४ । टी० पृ० ३५ )

२ त्रिविधा शास्त्रस्य प्रवृत्तिः,—उद्देशः, लक्षणम्, परीक्षा चेति; तत्र 'उद्दिष्टस्य' इत्यादिना लक्षणमाह—

३ लक्षणस्य प्रयोजनं च—[ क ] सर्वं हि लक्षणमितरपदार्थव्यवच्छेदकम् । ( न्या० वा० १ । १ । १४ । पृ० ८२ ) [ ख ] पदार्थतत्त्वज्ञानं लक्षणस्य प्रयोजनम् । ( त० भा० पृ० १ ) [ ग ] व्यावृत्तिर्व्यवहारो* वा, इति विज्ञेयम् । ( त० दी० पृ० ५ ) ( सि० च० ) तत्र व्यावृत्तेः प्रयोजनत्वे—पृथिव्यामितरभेदे साध्ये गन्धवत्त्वरूपं लक्षणं † हेतु‡र्भवति । लक्षणस्य लक्षणं तु, लक्ष्यतावच्छेदकसमनियतत्वम् । यथा—गोर्लक्षणस्य सास्नादिमत्त्वस्य लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वं लक्षणं भवति, इति विज्ञेयम् । ( त० दी० ) ( ल० व० )

---

* अत्रायं विशेषो ज्ञेयः—लक्षणस्य व्यावृत्तिप्रयोजनकत्वे,—सप्तपदार्थेतरत्वाप्रसिद्ध्या पदार्थसामान्यलक्षणस्य ( अभिधेयत्वस्य ) प्रयोजनं शब्दप्रयोग एव; व्यावृत्तेरत्रासंभवात्; अन्येषां लक्षणानां तूभयं ( व्यावृत्तिर्व्यवहारश्च ) प्रयोजनम्, इत्यवधेयम् । ( ल० व० )

व्यवहारो ( शब्दव्यवहारः, शब्दशक्तिग्रहः ) लक्षणज्ञानस्य प्रयोजनं यथा—'सास्नादिमान् गौः' इति लक्षणज्ञाने सति, यं यं सास्नादिमन्तं पिण्डं पश्यति, तं तं गोशब्दवाच्यं प्रत्येति, इति । ( प्र० प० पृ० २ )

† अत्रेदं बोध्यम्—सर्वं लक्षणं ( अभिधेयत्वादिवर्जम् ) व्यतिरेकिहेतुर्भवति । यथा—पृथिवीलक्षणं गन्धवत्त्वम् । तथा च—'विवादपदं पृथिवी गन्धवत्त्वात्, यन्न पृथिवी तन्न गन्धवत् यथा आपः' इत्यादि । ( त० भा० अनु० पृ० १३ )

लक्षणस्य केवलव्यतिरेकिहेतुत्वे प्रयोगः—'लक्षणं केवलव्यतिरेकिहेतुः, विशेषधर्मत्वात्, यत् केवलव्यतिरेकिहेतुर्न भवति तन्न विशेषधर्मो भवति यथाऽभिधेयत्वम्, न चेदं तथा, तस्मान्न तथा' इति

‡ अन्यदप्युदाह्रियते—गोः सास्नादिमत्त्वं लक्षणमित्युक्तया,—गोः पक्षः, महिष्यादात्मकेतरभेदः

स्या० १। १ । २ ) यथा—"इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानं प्रत्यक्षम्" इति प्रत्यक्षलक्षणम् । ( वात्स्या० १ । १ । ४ )

[ ख ] दूषणत्रय[1]रहितो धर्मः[2] । ( त० भा० ) ( त० प्र० ) ( त० दी० ) यथा—गोर्लक्षणं सास्नादिमत्त्वम् । यथा वा—विशुद्ध[3]मातापितृजन्यत्वं ब्राह्मणस्य लक्षणम् । ( त० कौ० पृ० २१ )

[ ग ] वेदान्तिनस्तु,—यो धर्मो लक्ष्ये व्याप्त्या वर्तते, न वर्तते चान्यत्र, स धर्मः । यथा—गोः सास्नादिमत्त्वम् । तद्धि गोषु सर्वत्रास्ति, नास्ति चागोषु, इत्याहुः । ( प्र० प० पृ० १ ) [ २ ] व्यावर्तक[4]म्[5] । तच्च द्विविधम्,—विशेषणम्, उपलक्षणं च । तत्रोपलक्षणं यथा—जटाभिस्तापस इत्यादौ तापसादेः कालान्तरीणजटादिकं लक्षणम् । ( ग० व्यु० का० ३ । पृ० ९१ ) विशेषणं तु,—पताकावद्देवदत्तगृहमित्यादौ पताका ।

---

१ दूषणत्रयं च,—अव्याप्तिः, अतिव्याप्तिः, असंभवश्च, इति । ( त० दी० ) ( त० कौ० ) एते त्रयो दोषा 'लक्षणदोषाः' इत्युच्यन्ते । ( ल० व० ) एतेषां दूषकताबीजं तु,—लक्षणेनेतरभेदसाधने—अतिव्याप्तौ व्यभिचारः, अव्याप्तौ भागासिद्धिः, असंभवे स्वरूपासिद्धिश्चेति । ( नील० १ । पृ० ४ )

२ स एव—'असाधारणधर्मः' इत्युच्यते । ( त० भा० ) ( त० प्र० ) ( त० दी० )

३ अत्र विशुद्धत्वं च षट्कर्माधिकारवत्त्वम् । ( त० कौ० पृ० २१ )

४ अयं च "इत्थंभूतलक्षणे" ( पा० सू० २ । ३ । २१ ) इति पाणिनिसूत्रघटक—'लक्षण' शब्दस्यार्थः ।

५ तथा हि—सजातीयविजातीयव्यावर्तकतया लक्ष्यावधारणं लक्षणस्य प्रयोजनम् । 'अस्मिन् ग्रामे देवदत्तगृहम्' इति वार्ता श्रुतवतः पुरुषस्य तद्ग्रामस्थेषु सर्वेषु गृहेष्वपि देवदत्तगृहबुद्धिप्रसक्तौ,—'ततोऽन्यत्र पताका वर्तते तत् देवदत्तगृहम्' इति लक्षणज्ञाने सति 'इदमेव देवदत्तगृहम्, नान्यत्' इत्यवधारणज्ञानं जायते, इति । ( प्र० प० पृ० २ )

---

साध्यः, सास्नादिमत्त्वं हेतुः, व्यतिरेकदृष्टान्तः । यथा—'गौरितरेभ्यो भिन्ना सास्नादिमत्त्वात्, यन्नैवं तन्नैवं महिष्यादिवत्' इत्यनुमाने गोर्लक्षणं सास्नादिमत्त्वं व्यतिरेकिहेतुरेव भवति, नान्वयिहेतुः; गोरितरत्र सास्नादिमत्त्वाभावेन दृष्टान्ताभावात्, इति ।

अत्रायं विशेषः—लक्षण-लक्ष्यतावच्छेदकयोरैक्ये सिद्धसाधनं दोषः संपद्यते । यथा—'अनुमितेर्लक्षणमनुमितित्वम्' इत्युक्तौ—लक्षणेन लक्ष्ये ( अनुमितौ ) इतरभेदसाधने सिद्धसाधनम् । पक्षतावच्छेदक-साध्य-सामानाधिकरण्यस्यानुमितिविषयस्यानुमितेः पूर्वमेव, हेताववयभिचरितसाध्यसामानाधिकरण्यात्मकव्याप्तिज्ञाने भातत्वात् । ( म० प्र० २। पृ० १५ )

[१] स्वरूप-तटस्थत्व-एतदन्यतरज्ञापकम् । यथा—पृथिव्या गन्धो लक्षणम्। इदं लक्षणं द्विविधम्,—स्वरूपलक्षणम्, तटस्थलक्षणं च, इति । तत्र स्वरूपलक्षणं यथा—A 'आकाशो बिलम्' इति । B यथा वेदान्तिमते—'सच्चिदानन्दो ब्रह्म' इति स्वरूपलक्षणम् । C यथा मीमांसकमते—"चोदनालक्षणोऽर्थो धर्मः" इत्यादौ चोदनावाच्यविधिवाक्यमेव धर्मस्वरूपज्ञापकमस्ति, इति । तटस्थलक्षणं तु—A 'काकेन देवदत्तगृहम्' इति । B मायावादिमते तु—'जगज्जन्मादिकारणं ब्रह्म' इति तटस्थलक्षणम् । २ स्वरूपम् । यथा—"व्याप्तेर्लक्षणमाह—यत्रेति" ( त० दी० २ । पृ० २० ) इत्यादौ; यथा वा—"जीवलक्षणमाह" (त० दी०) इत्यादौ; ( नील० १ । पृ० ११ ) यथा वा—'पटलक्षणं वस्तु, घटलक्षणं द्रव्यम्, परमाणुलक्षणा नित्यपृथिवी' इत्यादौ च लक्षणशब्दस्यार्थः स्वरूपम् । ३ प्रतिपाद्यो विषयः । यथा-"जैमिनिर्द्वादशलक्षणीं प्रणिनाय" इत्यादौ । ४ [ १ ] आलोचनम् । यथा—विलक्षणमित्यादौ लक्षणशब्दस्यार्थः । ( अमर—टी० ३ । २ । २ ) [ २ ] सादृश्यम्; अन्यदीयधर्मराहित्यं वा । यथा—'विलक्षणं वस्त्विदम्' इत्यादौ लक्षणशब्दस्यार्थः । यथा वा—बौद्धमते 'स्वलक्षणं स्वलक्षणम्' इति भावनाविषयो लक्षणपदार्थः । ५ शाब्दिकास्तु,—शब्दसाधुताप्रतिपादकं प्रमाणम् । यथा—व्याकरणादिसूत्रं लक्षणम्, इत्याहुः । ६ व्यवहारज्ञास्तु,—व्यवहारोपयोगि नाम, इत्याहुः। ७ चिह्नम्, इति काव्यज्ञा वदन्ति ।

---

१ अत्रार्थे व्युत्पत्तिः—'लक्ष्यतेऽनेन ( लक्ष,-करणे ल्युट् )' इति ।

२ स हि (तटस्थलक्षणमपि) पृथिवीं परस्माद्भिन्नतयाऽनुमापयति । तथा हि-'पृथिवी जलादिभ्यो भिद्यते, गन्धवत्त्वात्, यन्नैवं तन्नैवम्, यथा जलम्' इति ।

३ तदुक्तम्—"स्वरूपं तटस्थं द्विधा लक्षणं स्यात्, स्वरूपे प्रविष्टं स्वरूपाद्विभिन्नम्" इति।

४ अत्रोच्यते—"ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वतः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः" इति ।

५ तदर्थश्च—हेतुशून्या स्थितिर्विलक्षणम् । ( अमर० टी० ३ । २ । २ )

६ अत्रोच्यते—"लक्षणं त्वनभिज्ञानाम्" इति । ( वाच० )

**लक्षणा**—( वृत्तिः ) [ १ ] न्यायमते—स्वशक्यसंबन्धः । ( भा० प० श्लो० ८३ ) ( त० दी० ख० ४ ) ( न्या० बो० ४ ) ( न्या० म० ४ । पृ० १० ) ( वाक्य० ) यथा— A 'गङ्गायां घोषः प्रतिवसति' इत्यादौ गङ्गापदस्य, प्रवाहसमीपे तीरे लक्षणा । ( मु० ४ ) ( वाक्य० ४ ) B गङ्गापदशक्यप्रवहज्जलौघस्य तीरे संयोगसंबन्धो गङ्गापदलक्षणा । ( त० कौ० ४ ) C अस्ति हि गङ्गापदशक्यः प्रवाहविशेषः, तत्संबन्धस्तीरे, इति । ( न्या० म० ख० ४ । पृ० १० ) [ २ ] एके ( प्राञ्चः ),—शक्यादशक्योपस्थितिर्लक्षणा, इत्याहुः । [ ३ ] अन्ये तु प्राञ्चः,—अशक्ये तात्पर्यविषयत्वं लक्षणा, इत्याहुः । ( न्या० म० ४ । पृ० १० ) ( त० प्र० ४ । पृ० ३९ ) [ ४ ] शाब्दिकास्तु,—शक्यतावच्छेदकारोपो लक्षणा, इत्यङ्गीचक्रुः । [ ५ ] मीमांसकास्तु,—

१ अत्र व्याकरणम्—लक्ष-यूच्, स्त्री, 'लक्षणा' इति रूपं सिद्ध्यति ।

अत्र—अन्वयानुपपत्तिर्लक्षणाबीजम्, इति प्राञ्च आहुः । ( मु० ४ ) तात्पर्यानुपपत्तिरेव ( तात्पर्यनिर्वाहिका ) सर्वत्र लक्षणाबीजम्, इति नव्याः प्राहुः । ( भा० प० श्लो० ८३ ) लक्षणाप्रयोजकं चालंकारिकादय इत्थममन्यन्त—"मुख्यार्थबाधे तद्युक्तो, ययाऽन्योऽर्थः प्रतीयते । रूढेः*प्रयोजनाद्वाऽसौ लक्षणा शक्तिरर्पिता" इति । ( सा० द० परि० २ । श्लो० १३ ) काव्यप्रकाशे तु—"लक्षणाऽऽरोपिता क्रिया" इति चतुर्थचरणम् । ( उल्ला० २ )

२ तदर्थस्तु,—स्वं लाक्षणिकं पदम् ( गङ्गापदम् ), तस्य शक्यः ( प्रवाहः ), तत्संबन्धः ( संयोगः ), इति । ( त० प्र० ४ । पृ० ३५ ) स च संयोगः, समवायादिर्यथायथं प्राह्यः । स च संबन्धः ( १ ) शब्दनिरूपितोऽर्थनिष्ठः शाब्दबोधप्रयोजकः शब्दार्थयोः संबन्धः । ( २ ) मीमांसकादयस्तु,—वाच्यार्थसंबन्धार्थबोधकत्वरूपः शब्दनिष्ठः, इत्याहुः ।

३ आरोपनिमित्तानि च गौतमेनोक्तानि यथा—"सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्यानि" इति । ( गौ० २ । २ । ६४ ) इति † वैयाकरणसिद्धान्तः ।

* अत्रोच्यते—लक्षणा पुनर्द्विविधा,—प्रयोजननिरपेक्षा, प्रयोजनसापेक्षा चेति । तत्राद्या यथा—मार्गाः स्खलन्ति, इति । इयं प्रयोजनाभावेऽपि प्रवर्तमानत्वात् 'रूढलक्षणा' इत्युच्यते । द्वितीया यथा—गङ्गायां घोषः, इति । इयं च पावित्र्यादिप्रयोजनापेक्षया प्रवर्तमानत्वात् 'केवलं लक्षणा' इत्युच्यते । मुख्यार्थानुपपत्तिर्लक्षणाबीजम्, इति । ( प्र० च० ४ । पृ० ४० )

† वस्तुतस्तु,—'सहचरणादीनि शक्यसंबन्धग्राहकाण्येव, नारोपनिमित्तानि' इति तु वयं प्रतीमः ।

[ क ] प्रतिपाद्यसंबन्धो लक्षणा । यथा—छत्रिणो यान्तीत्यादावजहल्लक्षणा । ( नील० ४ । पृ० ३० )
[ ख ] स्वबोध्यसंबन्धो लक्षणा । यथा—चित्रगुरिति बहुव्रीहौ लक्षणा, इत्याहुः । ( न्या० म० ४ । पृ० १२ ) [ ६ ] आलंकारिकाश्च,—
[ क ] शक्यसंबन्धज्ञानं लक्षणा । ( काव्यप्रदीप० )
[ ख ] शक्यतावच्छेदकारोपविषयनिष्ठसंसर्गः, इत्याहुः । ( वै० सा० द० ) प्रथमतो लक्षणा द्विविधा,—निरूढलक्षणा, स्वारसिकलक्षणा च, इति । ( स्व० ) प्राचां मते लक्षणा चतुर्विधा,—जहत्स्वार्था, अजहत्स्वार्था, जहदजहत्स्वार्था, लक्षितलक्षणा चेति । ( मु० ४ ) नव्यनैयायिकानां मते तु लक्षणा त्रिविधा,—जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा च । ( त० दी० ४ ) शाब्दिकानामालंकारिकाणां च मते लक्षणा द्विधा,—

---

'समासस्थशब्दसमुदाये ( राजपुरुष इत्यादिवाक्यस्थे ) तु, विशिष्टार्थे समासरूपविलक्षणशक्त्यैवोपपत्तौ लक्षणारूपातिरिक्तवृत्तिकल्पनमनुचितम्' इति शाब्दिका वदन्ति । ( न्या० म० ४ । पृ० ११ ) ( त० प्र० ख० ४ । पृ० ४३ )

१ अत्र—छत्रिन्नित्यस्य मतुबर्थकेन्प्रत्ययान्ततया पदसमूहरूपत्वेन तच्छक्त्याप्रसिद्ध्या शक्यसंबन्धरूपा लक्षणा न*संभवति; अतः 'प्रतिपाद्यसंबन्धो हि लक्षणा' इत्येतत्पर्यन्तानुधावनम् । ( नील० ४ । पृ० ३० )

२ मीमांसकमते,—'चित्रगुः' इति बहुव्रीहौ वाक्यस्यापि विशिष्टं बोध्यमस्ति । ( न्या० म० ४ । पृ० १२ ) तथा हि—'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन चित्रगुरित्यत्र 'चित्रा गौः' इति वाक्यस्य सत्त्वात्, तस्य च बोध्यम् ( चित्रा गौः ), तत्संबन्धश्चित्रगोः स्वामिन्यस्ति, इति । ( त० प्र० ख० ४ । पृ० ४५—४६ ) एतन्मते वाक्ये लक्षणाया आवश्यकत्वं तु 'लक्षक' शब्दव्याख्याने टिप्पण्यामवलोकनीयम् ।

३ एतन्मते—गङ्गायां घोष इत्यादौ गङ्गात्वेनैव लक्ष्यार्थप्रतीतिः । अत एव—ततो वैयञ्जनकी शैत्यपावनत्वादिप्रतीतिः ( वै० सा० द० )

४ यच्चोक्तं ग्रन्थान्तरे,—"शक्येन सह संबन्धात्, सादृश्यात्, समवायतः । वैपरीत्यात्, क्रियायोगाल्लक्षणा पञ्चधा मता" इति; तस्य, गौणी—शुद्धा चेति भेदद्वय एव तात्पर्यम् । ( म० प्र० ख० ४ । पृ० ४१ )

---

* अत्र केचिदाहुः—छत्रपदस्यैकसार्थे लक्षणा, तद्धितार्थः संबन्धी । तथा च—'एकसार्थसंबन्धिनो गच्छन्ति' इत्यन्वयबोधः । ( नील० ४ । पृ० ३० ) एवं च—शक्यसंबन्धरूपलक्षणयैवोपपत्तौ प्रतिपाद्यसंबन्धरूपलक्षणा नाङ्गीकर्तव्या, इति । ( स्व० )

गौणी, शुद्धा च । तत्र शुद्धा द्विविधा,—जहल्लक्षणा, अजहल्लक्षणा चेति । (न्या० म० ४ । पृ० १०) (न्या० बो०) जगदीशमते तु प्रकारान्तरेण जहत्स्वार्था, अजहत्स्वार्था, निरूढा, आधुनिकी, गौणी, चेति लक्षणा पञ्चविधा । (श० प्र० श्लो० २४ । पृ० ३९) व्यञ्जना तु शक्ति-लक्षणा-न्तर्भूता शब्दशक्तिमूला; अर्थशक्तिमूला त्वनुमानादिनाऽन्यथासिद्धा । (त० दी० ४ । पृ० ३०) अत्राधिकं तु 'व्यञ्जना' शब्दव्याख्याने दृश्यम् ।

**लक्षणाभासः**—दोषयुक्तं लक्षणम् । तच्च त्रिविधम्,—असंभवि, अव्यापकम्, अतिव्यापकं चेति । तत्राद्यं यथा—गोरेकशफत्वं लक्षणम्, इति । द्वितीयं यथा—गोःशबलत्वं लक्षणम्, इति । तृतीयं यथा—गोर्विषाणित्वं लक्षणम्, इति । (प्र० प० पृ० २)

**लक्षितः**—१ [१] लक्षणया बोधितोऽर्थः । यथा—'गङ्गायां घोषः' इत्यत्र तीरं लक्षितोऽर्थः । [२] ज्ञातः । [३] अनुमितः । २ लक्षकः शब्दः । (वाच०)

**लक्षितलक्षणा**—(लक्षणा) [१] प्राचां मते—[क] स्वलक्षितपदशक्यसंबन्धः[3] । यथा—द्विरेफपदे[4] लक्षितलक्षणा । (स्व०)

---

१ अत्र—सादृश्यात्मकः शक्यसंबन्धः । यथा—गौर्वाहीकः*, इति । (न्या० म० ४ । पृ० १०) (न्या० बो०) अत्र भट्टवार्तिकम्—"अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता" इति । (काव्यप्र० उ० २)

२ अत्र—(१) वैयाकरणा आहुः—लक्षणा द्विविधा,—गौणी, शुद्धा च । तत्र—स्वनिरूपितसादृश्याधिकरणत्वसंबन्धेन शक्यसंबन्ध्यर्थप्रतिपादिका गौणी; तदतिरिक्तसंबन्धेन तत्प्रतिपादिका शुद्धा । साऽपि (शुद्धा) द्विविधा,—अजहत्स्वार्था, जहत्स्वार्था च, इति । (ल० म० आकाङ्क्षावि० पृ० १३) । (२) आलंकारिकास्तु,—गौण्याः शुद्धायाश्च प्रत्येकं सारोपा साध्यवसाना चेति द्वौ भेदौ । तत्र गौण्या भेदद्वयस्योदाहरणे 'गौर्वाहीकः,' 'गौरयम्' इति। शुद्धायां भेदद्वयस्योदाहरणे तु—'आयुर्घृतम्', 'आयुरेवेदम्' इत्याहुः । (काव्यप्र० उ० २)

३ अत्रार्थे—'लक्षितस्य (पदस्य), लक्षणा' इति विग्रहो द्रष्टव्यः । (त० प्र० ख० ४ । पृ० ३९)

४ अत्र—द्विरेफपदेन 'द्वौ रेफौ यत्र' इति बहुव्रीहिलक्षणया भ्रमरपदं लक्ष्यते, भ्रमरपदेन

---

* तदर्थश्च—वाहीको वाहीकदेशोद्भवः; गौर्बलीवर्दः । वाहीके गवाभेदस्य बाधात् 'गो' पदेन गोसदृशो लक्ष्यते । सादृश्यं च गोगतजाड्यमान्द्यादिकमेव । तथा च—'जडो मन्दश्च वाहीकः' इति शाब्दबोधः । (त० प्र० ख० ४ । पृ० ३५—३६)

[ ख ] यत्र लक्षितपदेन लक्ष्यार्थोऽ(न तु शक्यार्थः, दि०) वगम्यते, तत्र लक्षितलक्षणा। यथा—द्विरेफोऽस्तीत्यत्र द्विरेफपदे । ( म० प्र० ४ । पृ० ४१ ) [ २ ] नव्यनैयायिकानां मते तु—यत्र तु शक्यार्थस्य परंपरासंबन्धरूपा लक्षणा, सा । यथा—द्विरेफमानयेत्यादौ द्विरेफादिपदे लक्षितलक्षणा। ( मु० ४ । पृ० १८१ )

**लक्ष्मीः**—१ [१] श्रीविष्णोः पत्नी । [२] तां 'आदिमाया, शक्तिश्च' इति

च स्वशक्यसंबन्धी भ्रमररूपोऽर्थो लक्ष्यते, इति द्विरेफपदस्य भ्रमरे लक्षितलक्षणोपपद्यते, इति लक्षितलक्षणाऽपि वृत्त्यन्तरम्, इति प्राञ्च आहुः । ( त० प्र० ख० ४ । पृ० ३८ )

१ द्विरेफमानयेत्यादौ परंपरासंबन्धस्तु*स्ववाच्यरेफद्वयघटितपदवाच्यत्वादिरूपः। ( दि० ४ । पृ० १८१ )

२ ( १ ) अत्र—द्विरेफादिपदे रेफद्वयसंबन्धो भ्रमरपदे ज्ञायते; भ्रमरपदस्य च संबन्धो भ्रमरे ज्ञायते, इति तत्र लक्षितलक्षणा जहल्लक्षणैव, इति नव्यनैयायिकाः प्राहुः। ( मु० ४ । पृ० १८१ ) ( २ ) लक्षितलक्षणाऽपि गौण्यामेवान्तर्भवति; यथा—द्विरेफोऽस्तीत्यत्र—द्विरेफपदवाच्यरेफद्वयसंबन्धिभ्रमरपदेन भ्रमरस्योपस्थापनात्, द्विरेफपदशक्यरेफद्वयसंबन्धिभ्रमरपदवाच्यत्वरूपपरंपरासंबन्धस्यैव शक्यसंबन्धत्वात्, इति बोध्यम् । ( म० प्र० ४ । पृ० ४१ )

३ अत्रेत्थं विप्रतिपत्तिः—[ १ ] 'लक्षितलक्षणाऽपि वृत्त्यन्तरम्' इति प्राञ्चो मन्यन्ते । तन्न—परंपरासंबन्धस्यापि ( न तु साक्षाच्छक्यसंबन्धस्यैव ) शक्यसंबन्धात्मकलक्षणात्वेन, द्विरेफपदस्य स्वलक्ष्यभ्रमरपदघटितपरंपरासंबन्धेन भ्रमररूपार्थोपस्थापकत्वसंभवात्, द्विरेफपदलक्षणयैवोपपत्तेर्नातिरिक्तवृत्तिकल्पनम्, इति नव्यनैयायिका आहुः । ( त० प्र० ख० ४ । पृ० ३९ ) [ २ ] अन्ये तु ( आलंकारिकाः )—यत्र लक्षिताच्छब्दादर्थाभिधानम्, तत्रैव लक्षितलक्षणा परिभाषिता । यथा—द्विरेफपदे रूढिप्रयोजनाभावेऽपि लक्षितलक्षणा, इत्याहुः । ( सा० द० टी० ) [ ३ ] अत्र वैयाकरणास्तु,—द्विरेफपदं तु रूढिशक्त्या भ्रमरबोधकम् । अवयवार्थप्रतीतिस्तु नास्त्येव रथन्तरादिवत् । यद्वा—पदनिष्ठरेफद्वयस्यार्थे आरोपात्संबन्धित्वेनैव भ्रमरबोधः । अतएव—भ्रमरपर्यायेषु द्विरेफपदस्य कोशेषु पाठः । बाधप्रतिसंधानं विनैव द्विरेफपदाद्भ्रमरबोधेन 'लक्षणा' इत्ययुक्तम्, इत्याहुः । ( ल० म० अकाङ्क्षावि० पृ० १७ )

४ अत्र प्रसक्ततो विषयान्तरमुच्यते—[ १ ] "पौषे चैत्रे तथा भाद्रे पूजयेयुः स्त्रियः श्रियम्"

अत्र—स्वं ( द्विरेफपदम् ), तस्य वाच्यं ( रेफद्वयम् ), तद्घटितं पदं ( 'भ्रमर' इति पदम् ), तस्य वाच्यो ( भ्रमरः ), तस्य भावस्तत्त्वं भ्रमररूपार्थेऽस्ति, इति द्विरेफपदशक्यार्थस्य रेफद्वयस्य परंपरासंबन्धरूपा लक्षणा भ्रमरे संगच्छते ।

वाममार्गीयाः शाक्ता आहुः । [३] 'भगवदिच्छा' इत्यन्ये संगिरन्ते । [४] 'चित्प्रकृतिरपि' इति माध्वाः संवदन्ते । [५] 'भगवदंशविशेषः' इति वल्लभीया मन्यन्ते । २ शोभा; ३ कान्तिः; ४ संपत्तिः; ५ स्थलपद्मम्; ६ हरिद्रा; ७ शमी; ८ वारयोषित्; इति काव्यज्ञा आहुः । ९ पीडा; १० औषधम्, इति भिषजो वदन्ति ।

**लक्ष्यम्**—१ लक्षणया बोध्योऽर्थः । यथा—गङ्गायां घोष इत्यादौ—गङ्गापदस्य लक्षणया बोध्यस्तीररूपोऽर्थो लक्ष्यो भवति । (स्व०) २ [क] यदुद्दिश्य लक्षणमुच्यते, तत् । यथा—'गन्धवत्त्वं पृथिव्या लक्षणम्' इत्युक्ते पृथिवी लक्ष्या । यथा वा—"लक्ष्यतावच्छेदकमात्रेण लक्ष्यसंकीर्तनमुद्देशः" (त० कौ०) इत्यादौ च लक्ष्यशब्दार्थः । [ख] वेदान्तिनस्तु,—यावदन्यतो व्यावर्तनीयम्; यावति चैकः शब्दो व्युत्पादनीयः, तत् लक्ष्यम्, इत्याहुः । (प्र० प० पृ० २) ३ ज्ञेयम् । ४ अनुमेयम् । (त्रि०) ५ वेधार्थमुद्दिश्यमानं शरव्यम्, इति काव्यज्ञा आहुः ।

**लग्नः**—१ संबन्धविशेषानुयोगी (संबद्धः) । यथा—कार्यविशेषलग्नः, इत्यादौ । २ मेषादिराशीनामुदयः, इति ज्योतिषज्ञा आहुः । ३ प्रतिभूः (जामीन), इति व्यवहारशास्त्रज्ञा वदन्ति । (अमर—का० २ । व० शूद्र० श्लो० ४४) ४ लज्जितः । ५ स्तुतिपाठकश्च, इति काव्यज्ञा आहुः ।

**लघुत्वम्**—१ [१] गुरुत्वाभावः । (सि० च० १ । पृ० ३) (प० च० पृ०

---

इति । (स्कन्दपु०) [२] दीपान्वितामावास्यायां लक्ष्मीपूजा सर्वैस्तत्कामिभिः कार्या । [३] कोजागरलक्ष्मीपूजाऽपि तत्काले कार्या, इत्यलमतिप्रसक्त्या ।

१ एतन्मते—लक्ष्मीरीशकोटिप्रविष्टा (न तु जीवकोटिप्रविष्टा), भगवदधीना च । तथा च श्रुतौ लक्ष्म्या,—"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्" इत्युक्त्वा,—"मम योनिरप्स्वन्तः समुद्रे" इत्युक्तम् । (ऋग्वे० वागाम्भृणीयसूक्तम्)

२ तल्लक्षणं च,—लक्षणानिर्वाहकतात्पर्यविषयत्वम् । (कृष्ण०)

३ विवाहेऽपि लग्नशब्दं प्रयुञ्जन्ति प्राकृतजनाः ।

४ अत्रोदाह्रियते प्रसङ्गतः—'लादको वित्तहीनः स्याल्लग्नको वित्तवान् यदि" इति । (स्मृति०) (वाच०)

१९) (त० दी० १ । पृ० ६ ) यथा–'मृदु लघु चेदं द्रव्यम्' इत्यादौ लघुत्वम् । [ २ ] स्पर्शविशेषः, इति केचिदाहुः । (सि०च०) २ शीघ्रास्पोपस्थितिकत्वम् । ( स्व० ) यथा–"[1]लघुनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धम्" इत्यादौ लघुत्वम् । ३ दोषविशेषः । ( प० च०) ४ तर्कविशेषः । यथा—"लघुत्वकल्पनं तर्कविशेषः" इत्यादौ, इति प्राञ्चो नैयायिका आहुः । ( सर्व० अक्ष० पृ० ११३) ( गौ०वृ० १ । १ । ३९) ५ शाब्दिकास्तु,–ह्रस्वसंज्ञकवर्णवृत्तिर्धर्मविशेषः, इत्याहुः।६ पुष्याश्विहस्तसंज्ञकेषु नक्षत्रेषु वर्तमानो धर्मविशेषः, इति मौहूर्तिका आहुः ।

लङ्—( तिङ्[1] ) '[2]स्म'शब्दस्य योगं विना, शपन्तस्य धातोरर्थे[3]ऽतीतत्वस्यान्वयधीहेतुर्यादृशी तिङ्, तादृशी तिङ् लङुच्यते। यथा–अपचदित्यादौ लङ्[4] ।

---

१ इदं लघुत्वं त्रिविधम्, शरीरकृतम्, उपस्थितिकृतम्, संबन्धकृतं चेति । ( दि० १ ) ( सि० च० ) तत्र प्रथमम्,—द्रव्यप्रत्यक्षोत्पत्तिं प्रति, महत्त्वस्य कारणत्वे अनेकद्रव्यत्वापेक्षया महत्त्वस्य लघुत्वम् । द्वितीयम्,—गन्धोत्पत्तिं प्रति, गन्धप्रागभावस्य कारणत्वे रूपप्रागभावापेक्षया गन्धप्रागभावस्य लघुत्वम्; गन्धात्मकप्रतियोगिज्ञानस्य सत्त्वेन शीघ्रं तदुपस्थितेः । तृतीयम्,—घटं प्रति, दण्डस्य कारणत्वे दण्ड*त्व-दण्डरूपाद्यपेक्षया दण्डस्य लघुत्वम्, इति । ( दि० १ । पृ० ५४ ) ( नील० १ । पृ० १८ )

२ तिबादिश्च, स्मशब्दोपसंधानं विना धातोरर्थे नातीतत्वं बोधयति; पपाचेत्यादौ लिडादिर्बोधयन्नपि, न शपन्तस्य; इति तद्व्युदासः ( तिबादेर्लिडादेश्च व्युदासः ) । अपचदित्यादौ तु विनापि स्मशब्दयोगं लङस्तथात्वम्, इति लक्षणसमन्वयः । ( श० प्र० श्लो० १०१ । टी० पृ० १८० )

३ प्रकृत्यर्थे 'अनुमतत्व-अद्यतनत्वा-ऽनाकाङ्क्षितत्वम्' इति विशेषणाच्च, 'पचतां पचेतां पचन्ताम्' इत्यादौ,'अपाक्ताम्, अपक्षाताम्,'इत्यादौ,'अपक्ष्यतां,अपक्ष्येताम्' इत्यादौ च लोटो लुङो लृङस्तामातामूप्रभृतौ नातिप्रसङ्गः । ( श० प्र० श्लो० १०१ । टी० पृ० १८१ )

४ अत्र—[ क ] [ १ ] लङोऽतीतः काल इव, तन्निष्ठं † ह्यस्तनत्वमप्यर्थः; तच्च पूर्वदिनवृ-

---

* दण्डत्वादेः कारणत्वे तु, स्वाश्रयदण्डसंयोगादिरूपपरंपराया गुरुत्वम्, इति भावः । ( दि० १ । पृ० ५४ ) ( नील० १ । पृ० १७ )

† "अनद्यतने ( भूते ) लङ्" ( पा० सू० ३ । २ । १११ ) इति सूत्रेऽनद्यतनशब्दमहिम्ना ह्यस्तनत्वं बोध्यते, इति भावः ।

(श० प्र० श्लो० १०१। पृ० १८०) यथा वा—अस्य पुत्रोऽभवदित्यादौ लङ् । ( वै० सा० ल० पृ० १३०)

लट्—( तिङ् ) यादृशतिङः स्मशब्दोपसंधानाभावप्रयुक्तः स्वार्थातीतत्वबोधकत्वाभावः, तादृशी तिङ् लडुच्यते । यथा—'जानाति, जानीते; पचति, पचते चैत्रः' इत्यादौ तिबाख्यातम् । लट् द्विविधा,—परस्मैपदम्, आत्मनेपदं चेति । एवम्—अन्या लोडाद्या अपि तिङः, परस्मैपदात्मनेपदभेदेन द्विविधा भवन्ति, इति विज्ञेयम् ।

लटो वर्तमानकालः, वर्तमानसामीप्यं चेति द्विविधोऽर्थः । ( श० प्र० श्लो० ९७ । पृ० १६०–१६२ ) तत्र—वर्तमानकालस्तु, [ क ]

त्तित्वम् , इति कौमारा वदन्ति । [ २ ] ह्यस्तनत्वं लङो नार्थः, किंतु—अद्यतनभिन्नत्वम् *, इत्यपरे ( दर्पणकृदादयः ) वदन्ति । ( श० प्र० श्लो० १०१ । पृ० १८१ ) ( वै० सा० द० पृ० १२९—१३० )

तथा च—अपचदित्यादौ 'वर्तमानध्वंसप्रतियोगिपूर्वदिनवृत्तिपाककृतिमान्' इति; 'तादृशप्रतियोग्यनद्यतनकालवृत्तिपाककृतिमान्' इति वा ( मतद्वये यथाक्रमम् ) बोधः । ( श० प्र० श्लो० १०१ । टी० पृ० १८१ ) [ ख ] अनद्यतनातीतत्वं विशिष्टमेव लङर्थः; तच्च शब्दप्रयोगाधिकरणदिनाव्यक्षणवृत्तिध्वंसप्रतियोगित्वम् । ( ग० व्यु० लका० पृ० १३८ ) [ ग ] अनद्यतनत्वम्, अतीतत्वं च ( पृथगेव ) लङर्थः । ( तर्का० ४ । पृ० ११ ) ( सि० च० ) [ घ ] शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनध्वंसप्रतियोगित्वम्, इति कश्चिदूक्ति ।

१ अत्र—शाब्दिकमते शाब्दबोधस्तु 'वर्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिरेतत्संबन्धिपुत्रकर्तृकोत्पत्त्यनुकूलो व्यापारः' इति । ( वै० सा० द० ल० पृ० १३० )

२ अत्र,—द्विरुक्तधात्वनाकाङ्क्षत्वेन, प्रकृत्यर्थपरोक्षत्वनिराकाङ्क्षत्वेन वा विशेषणीयम्; नातो, 'बुभुजे, बुभुजाते' इत्यादिस्थलीयलिट्यतिप्रसङ्गः ( श० प्र० श्लो० ९७ । टी० पृ० १६१ )

३ 'जानाति, जानीते; पचति, पचते' इत्यादौ–तिबादीनामष्टादशानामपि स्मशब्दोपसंधानाभावप्रयुक्तो ज्ञानादिधर्मिकातीतत्वबोधस्योपधायकत्वाभावः; स्मशब्दोपसंधाने तु—'जानाति स्म' इत्यादितोऽतीतत्वबोधनानुभवात्, इति लक्षणसमन्वयः । ( श० प्र० श्लो० ९७ । टी० पृ०.१६१ )

४ अत्र सूत्रम्—" वर्तमाने लट् " इति । ( पा० सू० ३ । २ । १२३ ) तदर्थस्तु,—वर्तमानार्थवृत्तेर्धातोर्लट्प्रत्ययो भवति । ( काशिका० )

* "अनद्यतने लङ्" ( पा० सू० ३।२ । १११) इति पाणिनिनाऽनुशिष्टत्वात्, इति भावः । ( श० प्र श्लो० १०१ । टी० पृ० १८१ )

तत्तच्छब्दप्रयोगाधिकरणकालः । यथा—पचतीत्यादौ लडर्थः । ( ग० व्यु० ल० )

[ ख ] शाब्दिकास्तु,—प्रारब्धापरिसमाप्तो; भूतभविष्यद्भिन्नो वा कालो वर्तमानकालः, इति वदन्ति । (वै० सा० ल० पृ० १२०) (काशिका० ३ । २ । १२३ ) वर्तमानसामीप्यं तु द्विविधम्,—वर्तमानक्षणोत्तरकालावच्छेद्यत्वम्, वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यत्वं चेति । ( श० प्र० श्लो० ९७ । टी० पृ० १६२ ) । अधिकं तु 'वर्तमान' शब्दे दृश्यम् ।

लयः—१[ १ ] विनाशः । [ २ ] कार्यस्य कारणे सूक्ष्मीभावेनावस्थानम्, इति सांख्या आहुः । ( सांख्य० भाष्य० १ । ६१ ) २ प्रलयकालः, इति पौराणिका आहुः । ३ गायकास्तु,—नृत्यगीतवाद्यानामेकतानतारूपं साम्यं लयः, इत्याहुः । ४ संश्लेषः, इति काव्यज्ञा वदन्ति । ५ ईश्वरः, इति वेदान्तिनः संगिरन्ते ।

---

१ अत्र—लडर्थवर्तमानत्वं च आख्यातार्थकृत्याद्यन्वयि तत्तत्कालवृत्तित्वमेव । ( श० प्र० श्लो० ९७ । टी० पृ० १६१ )

२ तदर्थश्च, [ क ] विनष्टावयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वम् । [ ख ] शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्नत्वम् । ( वै० सा० द० ल० पृ० १२० )

३ तेन, 'चैत्रः कदा गमिष्यति ?' इति जिज्ञासायाम्,—'एष गच्छति' इत्युत्तरस्य 'वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्रः' इत्यर्थः, इति न प्रश्नोत्तरभावासङ्गतिः । ( श० प्र० श्लो० ९७ । टी० पृ० १६२ )

४ तेन, 'चैत्रः कदा समागतः ?' इति जिज्ञासायाम्,—'एष आगच्छति' इत्युत्तरस्य 'वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान्' इत्यर्थः, इति न प्रश्नोत्तरभावासङ्गतिः । ( श० प्र० श्लो० ९७ । टी० पृ० १६२ )

५ तदुदाहृतम्—"आसीज्ज्ञानमथोऽप्यर्थ एकमेवाविकल्पितम्" इति । ( सांख्य० भाष्य० अ० १ । सू० ६१ )

६ ते लयभेदाश्च, द्विपदी-वलसिका-झुल्लिका-छिन्नखण्डिका-इत्यादयश्चत्वारिंशत्संख्याकाः संगीतदामोदरादौ द्रष्टव्याः । ( वाच० )

**लवणः**—१ ( गुणः ) रसविशेषः । २ सिन्धुदेशः । ३ समुद्रः । ४ लावण्ययुतः ।

**लाक्षणिकः**—१लक्षणयाऽर्थबोधकः शब्दः । यथा—गङ्गायां घोषः प्रवसतीत्यादौ गङ्गाशब्दः । २ लक्षणयुक्तः ।

**लाघवज्ञानसहकृताऽनुमितिः**—( अनुमितिः ) सामान्यधर्मावच्छिन्नस्य साध्यत्वे सामान्यधर्मावच्छिन्नव्याप्यवत्तापरामर्शाद्विशेषधर्मे लाघवज्ञानसहकृताज्जायमाना विशेषधर्मावच्छिन्नविधेयकानुमितिः । यथा—पर्वते धूमेन शुद्धवह्निसाधनेऽपि 'पर्वतो महानसीयवह्निमान्' इत्यनुमितिः । ( स्व० )

**लाघवम्**—१ 'लघुत्व' शब्दवदस्यार्थोऽनुसंधेयः । २ तर्कविशेषविषयः, इति प्राञ्च आहुः । (सर्व०) ३ आरोग्यम्, इति भिषज आहुः । ( राजनि० )

**लाभः**—स्वत्वावच्छिन्नो व्यापारः । यथा—धनं लभते, प्राप्नोति, इत्यादौ धात्वर्थः । ( श० प्र० श्लो० ७२ । टी० पृ० ११० )

**लिङ्**—( तिङ् ) विध्याद्यन्यतमस्यान्वयबोधं प्रति समर्था, लटो लोटश्च भिन्ना, तिङ् लिङुच्यते । लिङ् द्विविधा,—विधिलिङ्, आशीर्लिङ् चेति । ( तर्का० ) ( सि० च० ) तत्र विध्याद्यर्थबोधिका लिङ् विधिलिङ् ।

---

१ अत्रोच्यते—"लवणः शोधनो रुच्यः पाचनः कफपित्तदः । पुंस्त्ववातहरः कायशैथिल्यमृदुताकरः" इति । ( भावप्र० )

२ अत्राधिकं तु 'लक्षक'शब्दव्याख्याने द्रष्टव्यम् ।

३ अत्रेदं बोध्यम्—[ क ] 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शादपि 'महानसीयवह्नौ लाघवम्' इति लाघवज्ञानबलात् महानसीयवह्नित्वादिना वह्न्यनुमितिः 'पर्वतो महानसीयवह्निमान् इति' जायते, इति । (त० प्र० ख० ४ । पृ० १३० ) [ ख ] अस्मद्गुरुचरणास्तु,—'वह्नेर्महानसीयत्वे लाघवम्' इति लाघवज्ञानसत्त्वे, 'वह्निव्याप्यधूमवान्पर्वतः' इति परामर्शात् 'पर्वतो महानसीयवह्निमान्' इत्यनुमितिर्जायते, इति प्राहुः। एवम्—इतरबाधग्रहसहकारसत्त्वेऽप्यनुमितिर्भवति; सा च 'इतरबाधग्रहसहकृतानुमिति'शब्दे द्रष्टव्या ।

४ अत्र—धात्वर्थनिविष्टे स्वत्वे धनादेराधेयत्वेनान्वयः। (श० प्र० श्लो० ७२ । टी० पृ० ११०)

५ 'घटमानय' इत्यादौ, 'सप्तमं पदं गृह्णाति' इत्यादौ च विधिं बोधयन्त्यावपि लोट्लटौ, न ताभ्यां भिन्ने, इति; 'यष्टव्यम्, देयम्' इत्यादौ तु—तव्यादिकं कार्यत्वादिकं बोधयदपि, न तिङ्, इति; न लोट्लटोस्तव्यादौ चातिप्रसङ्गः । भाविस्वाद्यप्रत्यायकत्वेन विशेषणाच्च 'पच्यात्' इत्यादावाशीर्लिङि न प्रसङ्गः । ( श० प्र० श्लो० १०० । टी० पृ० १६६ )

आशीर्मात्रबोधिका लिङ् आशीर्लिङ् । विध्यादयो लिङर्थास्तु,—विधिः, निमन्त्रितत्वम्, आमन्त्रितत्वम्, प्रार्थना, आश्रयत्वम्, जन्यत्वम्, अधीष्टः, संप्रश्नः, इत्यादयो ज्ञेयाः ।

अत्र यथाक्रममुदाहरणानि प्रदर्श्यन्ते—तत्र (१) विधावर्थे लिङ् यथा—'यजेत, पचेत,' 'भवान् ग्रामं गच्छेत्' इत्यादि । (२) निमन्त्रितत्वे लिङ् यथा—'श्राद्धे भुञ्जीत भवान्, इह भुञ्जीथास्त्वम्' इत्यादि । (३) आमन्त्रितत्वे (कामचारकरणे) लिङ् यथा—'भवानिहासीत,' 'पुत्रोत्सवे भवान् भुञ्जीत' इत्यादि । (४) प्रार्थनायां लिङ् यथा—'भोजनं लभेय', 'धेनुं दद्यास्त्वमस्मभ्यम्,' 'भवति मे प्रार्थना व्याकरणमधीयीय' इत्यादि । (५) आश्रयत्वे लिङ् यथा—'ह्रदो यदि धूमवान् स्यात्' इत्यादि । (६) जन्यत्वेऽर्थे लिङ् यथा—'यो ब्राह्मणाया-

---

१ अत्र सूत्राणि,—"विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" (पा० सू० ३ । ३ । १६१) "हेतुहेतुमतोर्लिङ्" (पा० सू० ३ । ३ । १५६), "आशिषि लिङ्लोटौ" (पा० सू० ३ । ३ । १७३) इत्यादीनि विध्याद्यर्थपरत्वेन योज्यानि ।

२ अत्र वैयाकरणा आहुः—विध्यादीनां (विधिनिमन्त्रणामन्त्रणाधीष्टानाम्) चतुर्णामनुगतप्रवर्तनात्वेन* वाच्यता । उक्तं च भर्तृहरिणा—"अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया" इति । (वै० सा० ल० पृ० १३२)

३ अत्र, [क] नव्यनैयायिकमते—इष्टसाधनत्वादिकं † विध्यर्थः, इति । (श० प्र० श्लो० १००) [ख] द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्यवच्छिन्नसाधनतात्वावच्छिन्नप्रतियोगिताकाभावो विध्यर्थः, इति प्राचीननैयायिका आहुः । [ग] आचार्यास्तु,—आत्माभिप्रायो विध्यर्थः; 'पाकं कुर्याः, पाकं कुर्याम्' इति मध्यमोत्तमपुरुषयोर्लिङ इच्छाविशेषात्मकाज्ञाऽध्येषणानुज्ञाप्रश्नप्रार्थनार्थकतया, प्रथमपुरुषेऽपीच्छायामेकशक्तेरुचितत्वात्, इत्याहुः । (वै० सा० द० ल० पृ० १४५)

४ अत्राधिकं तु 'निमन्त्रितत्व'शब्दव्याख्यानावसरे संपादितम्, इति तत्तत्र द्रष्टव्यम् ।

५ अत्राधिकं च 'आमन्त्रितत्व' शब्दव्याख्याने संपादितम्, तत्तत्र द्रष्टव्यम् ।

६ अत्राधिकं च 'प्रार्थना' शब्दव्याख्याने संपादितम्, तत्तत्र द्रष्टव्यम् ।

७ [१] अत्र—धातोः ('यदि' इत्यस्य वा) निरूढलक्षणया भेदोऽर्थः । तेन, 'धूमवद्भेदाश्रयतावान् ह्रदः' इत्यर्थः । (श० प्र० श्लो० १०० । टी० पृ० १७७) [२] ए-

---

* अत्र प्रवर्तनात्वं च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः, इति । (वै० सा० पृ० १३३)

† अत्रेष्टत्वं च समभिव्याहृतपदोपस्थापितकामनाविषयत्वम् । (ग० व्यु० ल०) (वै० सा० द० ल० पृ० १३३) अत्राधिकं तु 'विधि'शब्दव्याख्यानावसरे संपादयिष्यते, तत्तत्र द्रष्टव्यम् ।

वगुरेत्तं शतेन यातयात्' इत्यादि । (श० प्र० श्लो० १००) (७) अधी-ष्टार्थे लिङ् यथा—'माणवकमध्यापयेद्भवान्' इत्यादि । ( वै० सा० द० ल० पृ० १३२ ) (८) संप्रश्ने (संप्रधारणे) लिङ् यथा—'किं भो वेदमधीयीय, उत तर्कमधीयीय' इत्यादि । ( काशिका० पा० सू० ३ । ३ । १६१ । पृ० १८१ )

आशिषि लिङ् यथा—चिरंजीव्याद्भवान् । यथा वा —"अव्यादजोऽङ्घ्रिमणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः" ( भाग० स्क० १० अ० ६ । श्लो० २२ ) इत्यादि ।

**लिङ्गपरामर्शः**—'परामर्श'शब्दवदस्यार्थोऽनुसंधेयः ।

---

वम्—'गुणत्वं यदि घटे स्यात् द्रव्ये स्यात्' इत्यादौ तु—धातोरत्यन्ताभाव एवार्थः-तदुत्तरलिङस्तु पूर्ववत् 'आश्रयत्वम्' अर्थः । तथा च—'घटवृत्तित्वाभाववद्गुणत्वं घटवृत्तित्वव्यापकीभूतस्य द्रव्यवृत्तित्वस्याभाववत्' इत्येवं तत्र बोधः । (श० प्र० श्लो० १०० । टी० पृ० १७७ )

१ [ १ ] अत्र—"हेतुहेतुमतोर्लिङ्" (पा० सू० ३ । ३ । १५६ ) इत्यनुशासनात् 'यः शतयातनाहेतुब्राह्मणावगोरणवान्, तदीयशतयातनं ब्राह्मणावगोरणजन्यम्' इत्याकारको* बोधः । अवगोरणं हन्तुमुद्यमः । [ २ ] प्राभाकरास्तु,—अत्र जन्यजनकभावो न लिङर्थः, अपि तु—पौर्वापर्यमात्रं लिङर्थः; पश्चात्तस्य कल्पनात् । अन्यथा, दुरितापूर्वस्य वाच्यत्वापत्तेः, इत्याहुः । ( श० प्र० श्लो० १०० । टी० पृ० १७८ )

२ अधीष्टश्च सत्कारपूर्वको व्यापारः । तथा च—माणवकमध्यापयेद्भवानित्यादौ 'अध्यापनादिव्यापारे संमानपूर्वकप्रवृत्त्यनुकूलो व्यापारः' इत्यर्थः । अयमेव ' अभ्यर्थना ' इत्युच्यते । ( वै० सा० द० ल० पृ० १३१ )

३ अत्र—'संमानपूर्वमध्यापनादिव्यापार इष्टसाधनम्' इति बोधः । (वै०सा०द०पृ० १३२)

४ अत्राधिकं तु 'आशीर्लिङ्' शब्दव्याख्याने द्रष्टव्यम् ।

५ अत्रेदं बोध्यम्—'लिङ्गपरामर्शोऽनुमानम्' इति वार्तिककारसिद्धान्तः । एके तावद्वर्णयन्ति,—लिङ्गलिङ्गिसंबन्धस्मृतिरनुमानम्, इति । ( न्या० वा० १ । १ । ५ । पृ० ४७ )

६ इदमेव तृतीयं लिङ्गज्ञानम् । तथा हि—[ क ] लिङ्गज्ञानं त्रिविधम्,—तद्यथा—पर्वते धूमेन वह्निसाधने,—धूमाग्न्योर्व्याप्तौ गृह्यमाणायां महानसादौ यद्धूमज्ञानं तदादिमम् । पर्वते धूमज्ञानं तद्द्वितीयम् । ततः—पूर्वगृहीतां धूमाग्न्योर्व्याप्तिं स्मृत्वा तत्रैव पर्वते वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम्; इदमेव 'लिङ्गपरामर्शः' इत्युच्यते । ( सि० च० ) ( त० भा० )

---

* अत्र—शाब्दिकमते तु शाब्दबोधः 'यत्कर्तृको ब्राह्मणोद्देश्यको वधोद्यमः, तत्कर्मिका तादृशवधोद्यमजन्या शतसंवत्सरयातना' इत्याकारको द्रष्टव्यः । ( वै० सा० द० पृ० १४६ )

**लिङ्गम्**—१ (हेतुः) [क] व्याप्तिबलेन यद्यस्य गमकम्, तत् तस्य लिङ्गम् । यथा—पर्वतो वह्निमान्धूमादित्यादौ धूमो वह्नेर्लिङ्गम् । (प्र० प्र०) (त० भा० पृ० ९) यथा वा—सांख्यमते महत्तत्त्वादिकार्यजातं लिङ्गं भवति ।

---

[ख] महानसादौ दृष्टान्ते वह्निधूमयोर्भूयः सहचारदर्शनात्, व्याप्यत्वेन धूमज्ञानं प्रथमम् । ततः—पर्वतादौ धूमं दृष्ट्वा व्याप्यत्वेन तत्स्मरणं द्वितीयम् । ततः—तत्रैव व्याप्यत्वेन धूमस्य परामर्शो 'वह्निव्याप्यधूमवान्' इत्येवंरूपस्तृतीयः । (त० कौ० २) [ग] प्रथमं, दृष्टान्ते धूमदर्शनम् । ततः—व्याप्तिज्ञानम् । ततः—तद्विशिष्टपक्षधर्मताज्ञानम् । (न्या० म० २ । पृ० १८)

१ इदं लिङ्गं द्विविधम्,—सल्लिङ्गम्, असल्लिङ्गं च । तत्र व्याप्तिपक्षधर्मतावल्लिङ्गं सल्लिङ्गम्, तच्च व्यापकेन (साध्येन) व्याप्यं भवति । असल्लिङ्गं तु व्याप्तिपक्षधर्मतान्यतरशून्यम्, तस्य व्याप्यत्वे न नियमः । अत्र [१] उभयविधमपि लिङ्गं प्रत्येकं त्रिविधम्,—अन्वयव्यतिरेकि,* केवलान्वयि, केवलव्यतिरेकि चेति । (न्या० म० २ । पृ० १८) (गौ० वृ०) (त० सं०) अत्र शिष्टं तु 'अनुमान' शब्दव्याख्याने द्रष्टव्यम् । [२] लिङ्गं (अनुमानम्) द्विविधम्,—दृष्टम्, सामान्यतो दृष्टं च । तत्र—दृष्टं प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम् । यथा—गव्येव सास्नामात्रमुपलभ्य देशान्तरे सास्नामात्रदर्शनात्, गवि प्रतिपत्तिर्भवति । प्रसिद्धसाध्ययोरत्यन्तजातिभेदे, लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानं सामान्यतो दृष्टम् । यथा—कर्षकवणिग्राजपुरुषाणां प्रवृत्तेः फलवत्त्वमुपलभ्य, वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानम्, इति । (प्रशस्त० २ । पृ० ४५)

२ अत्र व्युत्पत्तिः,—[क] व्याप्तिबलेन 'लीनमर्थं गमयति' इति लिङ्गम् । (सि० च० २ । पृ० २५) (गौ० वृ०) [ख] 'लिङ्ग्यते गम्यतेऽनेनार्थः' इति लिङ्गम् । (न्या० बिन्दु० प० २ । पृ० २१)

३ 'यत्र धूमस्तत्राग्निः' इति, 'अग्न्यभावे धूमो न भवति' इत्येवं प्रसिद्धसमयस्यासंदिग्धधूमदर्शनात्; साहचर्यानुस्मरणात्तदनन्तरमग्न्यध्यवसायो भवति, इति । (प्रशस्त० पृ० ४४) तत्र लिङ्गदर्शनं प्रमाणम्, प्रमितिरग्निज्ञानम् । अथ वा—अग्निज्ञानमेव प्रमाणम्, प्रमितिरग्नौ गुणदोषमाध्यस्थ्यप्रदर्शनम् । तत्स्वनिश्चितार्थमनुमानम् । (प्रशस्त० पृ० ४५)

४ अत्र—लिङ्गत्वं च व्याप्तिः । (ग० २ । अवयव० प्रतिज्ञाल०)

५ अत्र—व्युत्पत्तिः,—' लियं (लयं) गच्छति प्रधाने' इति लिङ्गम्, पृषोदरादित्वात्साधु, इति विज्ञेयम् ।

---

* अत्रापि विभागः संपद्यते—अन्वयव्यतिरेकि द्विविधम्,—सपक्षवृत्ति, तदेकदेशवृत्ति चेति । तत्राद्यम्,—'शब्दोऽनित्यः कृतकत्वात् घटवत्' इति सपक्षव्यापकम्; सर्वस्मिन्ननित्ये कृतकत्वस्य वृत्तेः । द्वितीयं यथा—'पर्वतोऽग्निमान् धूमवत्त्वात्' इति सपक्षैकदेशवृत्तिः; अग्निमत्यपि क्वचिदवृत्तेः, इति । (प्र० प० पृ० १८)

[ ख ] यत् अनुमेयेन सहचरितं, तत्समानजातीये च सर्वत्रासर्वत्र वा सामान्येन प्रसिद्धम्, तद्विपरीते च सर्वस्मिन्नसदेव, तत् ( लिङ्गम् ) । ( प्रशस्त० २ । पृ० ४६ ) । २ लक्षणम् । यथा—"युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" ( गौ० १ । १ । १६ ) इत्यादौ—ज्ञानकारणाणुत्वं मनसो लिङ्गम् । ( गौ० वृ० १ । १ । १६ ) ( १ । १ । १० ) । ३ वैयाकरणास्तु,—शब्दसाधुताप्रयोजको धर्मः । स च प्राकृतगुणगतावैस्थात्मको धर्मः; तद्विशेषैश्च पुंनपुंसकत्वादिः, इत्याहुः । ( शब्दार्थर० ) ।

---

अत्र सूत्रम्—"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" इति । ( सांख्य० सू० अ० १ । सू० १२४ )

१ अत्रोक्तम्—"अनुमेयेन * संबद्धं प्रसिद्धं च तदन्विते । तदभावे च नास्त्येव तल्लिङ्गमनुमापकम् ॥ विपरीतमतो यत्स्यादेकेन द्वितयेन वा । विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपो ( कणादः )ऽब्रवीत्" इति । ( प्रशस्त० २ । पृ० २७ )

२ तथा हि—सर्वेषां त्रिगुणप्रकृतिकार्यतया, शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेषः, इति कल्प्यते । स च विशेषः शास्त्रे इत्थमभ्यधायि—[ क ] "विकृतसत्त्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वम्, सत्त्वस्याधिक्ये पुंस्त्वम्, रजस आधिक्ये स्त्रीत्वम्" इति । एवं च—लिङ्गस्य शब्दधर्मत्वेऽपि शब्देन सहार्थाभेदारोपात्, असति बाधके—अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्वत्र तस्य विशेषणत्वम् । ( वाच० ) [ ख ] सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्, आधिक्यं पुंस्त्वम्, अपचयः स्त्रीत्वम्, तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यं च । तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते, इति ( वै० सा० नामार्थ० पृ० २२४ )

३ अत्रोच्यते—"स्त्रीलिङ्गमपि पुंलिङ्गं क्लीबलिङ्गमिति त्रिधा । शब्दसंस्कारसिद्ध्यर्थं भा-

---

* तदर्थश्च—यदनुमेयेनार्थेन देशविशेषे कालविशेषे च सहचरितम्, अनुमेयधर्मान्विते चाऽन्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धम्, अनुमेयविपरीते च सर्वस्मिन् प्रमाणतोऽसदेव, तत् अप्रसिद्धस्यार्थस्यानुमापकं लिङ्गं भवति, इति; यत्तु यथोक्तात्त्रिरूपाल्लिङ्गादेकेन धर्मेण द्वाभ्यां वा विपरीतम्, तत् अनुमेयस्याधिगमे लिङ्गं न भवति, इति; आह सूत्रकारः ( काश्यपः ),—"अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः," ( वै० ३ । १ । १५ ) इति । ( प्रशस्त० २ । पृ० ४४ )

† [ १ ] युक्तं चैतत्; 'पुंलिङ्गः शब्दः' इति व्यवहारात्, "स्वमोर्नपुंसकात्" ( पा० सू० ७ । १ । २३ ) इत्यत्र शब्दस्यैव नपुंसकत्वव्यपदेशात्; 'दारान्' इत्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वम्, इति । तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्वी-

४ मीमांसकाश्च,—अर्थप्रकाशनसामर्थ्यं लिङ्गम्, इत्याहुः । ५ सांख्यास्तु,—

षया नाम भिद्यते " इति । ( श्र० प्र० श्लो० ५३ ) अधिकं तु ' स्त्रीलिङ्गम् ' इत्या-
दितत्तच्छब्दे द्रष्टव्यम् ।

१ सामर्थ्यं द्विविधम्,—शब्दगतं* सामर्थ्यम्, अर्थगतं सामर्थ्यं च । तत्राद्यम्,—"बर्हिर्देवस-
दनं † दामि" इति । द्वितीयं तु,—" स्रुवेणावद्यति ‡ " इति । एवम्—" ऐन्द्र्या §
गार्हपत्यमुपतिष्ठते," " स्योनं ते सदनं कृणोमि " इत्यादिकानि लिङ्गस्योदाहरणानि ज्ञे-
यानि । ( लौ० भा० विधिनि० पृ० २०–२२ )

२ इदं च लिङ्गं, विनियोगविधेः सहकारि भवति, इति विज्ञेयम् । ( लौ० भा० पृ० १६ )

---

कत्वेनैव; शब्दानामभेदाऽऽरोपात् । वस्तुतः—तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति । अत्र महाभाष्यम्—" एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वम् " इति दिक् । ( वाच० ) इदं शाब्दिकमतम् । ( स्व० ) [ २ ] पुंस्त्वादयस्तिस्रो जातयः, इति वैशेषिका आहुः । पुंस्त्वादि शब्दनिष्ठम्, इति प्राञ्च आहुः । पुंस्त्वादिलिङ्गमर्थनिष्ठमेवेति नव्यवैयाकरणा आहुः । पुंस्त्वादिलिङ्गस्यार्थनिष्ठत्वे प्रमाणं च,—'इयं व्यक्तिः, इदं वस्तु, अयं पदार्थः'• इति व्यवहारा अप्रतिबद्धप्रसराः, इति । अत्रेदमाकूतम्,—'पुष्यः, तारका, नक्षत्रम्' इति शब्दनानात्वदर्शनात्तत्तनकेशाद्यतिरिक्तमेव लिङ्गमर्थनिष्ठम्, इति । ( ल० म० ) ( वै० सा० द० नामार्थ० पृ० २२५ )

* अत्र वृद्धसंमतिमाह—[ १ ] " सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते " इति । ( लौ० भा० पृ० २१ ) [ २ ] " क्षमता च लिङ्गम् " इति । ( वाच० )

† अत्र—[ क ] 'पुरोडाशसदनभूतं बर्हिः खण्डयामि' इति श्रुतपदसामर्थ्यात्, 'बर्हिर्देवसदनं दामि' इति मन्त्रस्य, कुशकाशादिरूपाणां मुख्यबर्हिषां लवनाङ्गत्वम्; न तु, समाख्यातो दर्भसदृशानामुलपादिरूपतृणविशेषाणां गौणबर्हिषां लवनाङ्गत्वम्, इत्यर्थः । ( लौ० भा० टी० पृ० २१ ) [ ख ] ' दामि ' इति पदस्य, ' दा लवने ' इत्यस्माद्धातोः सिद्धस्य छेदनप्रकाशनसामर्थ्यात्, ' बर्हिः ' इत्यस्य चास्तृतदर्भप्रकाशनसामर्थ्यात्, दर्भच्छेदने समुदायमन्त्रस्य विनियोगोऽवगम्यते । ( तत्त्वबोध० ) ( वाच० )

‡ अत्र—अवदानसामान्यशेषत्वावगमेऽपि स्रुवस्य लिङ्गात्सामर्थ्यरूपात्, आज्यसान्नाय्यादिद्रवद्रव्यावदानविशेषाङ्गत्वम्; स्रुवेण मांसादिद्रव्यावदानस्य कर्तुमशक्यत्वात्, इति । ( लौ० भा० टी० पृ० २१ )

§ अत्र—मन्त्रस्य प्राप्तार्थत्वेनानुवादकत्वसंभवात्, मन्त्रस्थेन्द्रपदस्यैव 'इदि–परमैश्वर्ये' इति धात्वनुसारात् ऐश्वर्यगुणयोगादग्नौ लक्षणा; इति गार्हपत्यप्रकाशने समर्थमेव मन्त्रं "ऐन्द्र्या" इति तृतीया श्रुतिर्गार्हपत्योपस्थाने विनियुङ्क्ते, इति । ( लौ० भा० टी० पृ० २१ )

स्वरूपम् । यथा—'सप्तदशावयवो लिङ्गदेहः' इत्यादौ—सप्तदश सूक्ष्मदेहस्य लिङ्गम्, इत्याहुः । ६ धर्मशास्त्रज्ञादयस्तु,—पुंसोऽसाधारणमिन्द्रियम् (उपस्थः), इत्याहुः । ७ चिह्नम्, शिवलिङ्गं चेति काव्यज्ञाः पौराणिकाश्चाहुः ।

**लिङ्गाभासत्वम्**—[ १ ] अङ्गवैकल्यम् । [ २ ] दुष्टलिङ्गत्वम ।

**लिङ्गि**—१ साध्यम् । ( दीधि० २ ) यथा—"लिङ्गाविषयक—लिङ्गिविषयक—ज्ञानजनकन्यायावयवत्वम् ( प्रतिज्ञालक्षणम् )" ( चि० २ । अव० पृ० ७७ ) इत्यादौ लिङ्गिशब्दार्थः साध्यम् । यथा वा—"तल्लिङ्गलिङ्गिपूर्वकम्" ( सांख्य—का० ५ ) इत्यादौ । २ पक्षः । (स्व०) ३ पक्षधर्मताज्ञानम् । ( सांख्य० कौ० श्लो० ५ । पृ० १० )

**लिङ्गोपधानम्**—लिङ्गोपहिते ( पक्षे ), लैङ्गिकस्य ( साध्यस्य ), भानम् । यथा—शुद्धपर्वतपक्षकेऽपि वह्निसाध्यके धूमहेतुके स्थले ( पर्वतो वह्नि-

---

१ अत्र सूत्रम्—[ १ ] "सप्तदशैकं लिङ्गम्" इति । ( सांख्य—सू० अ० ३ । सू० ९ ) तदर्थश्च—"सूक्ष्मशरीरमप्याधाराधेयभावेन द्विविधं भवति । तत्र सप्तदश मिलित्वा लिङ्गशरीरम् । तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः । एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, बुद्धिश्च, इति सप्तदश । अहंकारस्य बुद्धावेवान्तर्भावः, इति ( सांख्य० भा० ३ । ९ ) [ २ ] "वासना भूतसूक्ष्मं ( तन्मात्रा ) च कर्मविद्ये तथैव च । दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः" इति । ( वाशिष्ठे० ) [ ३ ] "कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते । स सप्तदशकेनापि राशिना युज्यते च सः" इति । ( भार० मोक्षधर्मे ) ( सांख्य० भा० ३ । ९ )

अत्रेदं बोध्यम्—सांख्यमते,—लिङ्गशरीरस्यैव सुखदुःखकार्यकत्वम्; कुतः?;—एकस्य लिङ्गदेहस्यैव सुखदुःखाख्यभोगात्; न तु, स्थूलशरीरस्य; मृतशरीरे सुखदुःखाद्यभावस्य सर्वसंमतत्वात्, इति । ( सांख्य० भा० अ० ३ । सू० ८ )

२ अत्र—'लिङ्गि' इत्यस्य 'लिङ्गज्ञानज्ञेयम्' इत्यर्थो ज्ञेयः ।

३ अत्रार्थे,—'लिङ्गमस्यास्ति' इति विग्रहोऽपि ज्ञेयः । ( सांख्य० कौ० श्लो० ५ । पृ० १० ।

४ अत्र विग्रहः—'लिङ्गस्य ( हेतोः ), उपधानम् ( पक्षे वैशिष्ट्यम् )' इति ।

५ 'लिङ्गेन ( व्याप्तिपक्षधर्मताविशिष्टेन हेतुना ) उपाहितः ( विशिष्टः ), तस्मिन्' इति विग्रहः । तथा च—साध्यानुमानाङ्गहेतुयुक्ते पक्ष इत्यर्थः ।

६ तथा हि—वह्निव्याप्यो हि धूमो वह्नेर्लिङ्गम्, तद्वति पक्षे वह्नेर्भानम्; 'वह्निव्याप्यधूमवान्पर्वतः' इति परामर्शोत्तरं जायमानानुमितौ ज्ञानलक्षणया तादृशपक्षभानस्यावश्यकत्वात् । तथा च—'वह्निव्याप्यधूमवान् पर्वतो वह्निमान्' इत्येव तत्रानुमितेराकारः, इति विज्ञेयम् ।

मान् धूमादित्यादौ )–वह्निव्याप्यधूमविशिष्टे पर्वते वह्नेर्भानम् 'वह्नि-व्याप्यधूमवान्पर्वतो वह्निमान्' इति । ( स्व० )

**लिङ्गोपधानमतम्**[1]—'लिङ्गोपहितलैङ्गिकभानम्'[2] इत्यभिमतम्[3] । ( स्व० ) यथा–शुद्धपर्वतत्वावच्छिन्नपक्षकवह्निसाध्यकस्थलेऽपि ( पर्वतो वह्निमान्धूमादित्यादावपि )—'वह्निव्याप्यधूमवान्पर्वतो वह्निमान्'[4] इत्यनुमितिर्भवति, ( न तु 'केवलः पर्वतो वह्निमान्' इति) । ( ग० २ । सामान्यनि० पृ० ४ )

**लिट्**—( तिङ् ) [ क ] द्विरुक्तभिन्नधात्वर्थे स्वार्थस्यान्वयबोधने । या न[5] योग्या, तादृशी तिङ्[6] लिट्-पदेनाभिधीयते ॥ यथा–[7]जघान जघ्नतुरित्यादौ लिट् ।

[ ख ] द्विरुक्तस्य यजेरर्थे[8], चकास्तेराम्युतस्य वा । या स्वार्थस्यान्वये

---

१ अत्र व्युत्पत्तिः—' लिङ्गस्य ( व्याप्तिपक्षधर्मताविशिष्टहेतोः ), उपधानम् ( भानम्, वैशिष्ट्यं वा, अर्थात् पक्षे ) भवति ' इति मतम् । ( स्व० )

२ तदर्थश्च—लिङ्गोपहिते ( लिङ्गविशिष्टे पक्षे ), लैङ्गिकस्य ( साध्यस्य ), भानं भवति, इति ।

३ इदं चाचार्याणां ( उदयनाचार्याणाम् ) मतम् । तन्मते सर्वत्र—' तादृशहेतुविशिष्टः पक्षः साध्यवान् ' इत्याकारैवानुमितिर्भवति, इति विज्ञेयम् । (ग०हेत्वा० सामा०लक्ष० १।पृ० ४)

४ अयं भावः–आचार्याणां मते, हेतोः सर्वत्रैव धर्मितावच्छेदकतया भानात्, पर्वतत्वाद्यवच्छेदेन हेतुमत्ताज्ञानस्थलेऽपि ( ' वह्निव्याप्यधूमवान्पर्वतः' इति परामर्शेऽपि ) 'वह्निव्याप्यधूमविशिष्टपर्वतो वह्निमान्' इत्याकारिकैवानुमितिर्भवति, इति । (ग० २ । सामान्यनि० पृ० ४)

५ अत्र—प्रकृत्यर्थे 'वर्तमानत्वाद्यनाकाङ्क्षत्वं' इति विशेषणं देयम् । तेन,–'पचे, पचावहे, पचावः' इत्यादौ न लडाद्यतिप्रसङ्गः । ( श० प्र० श्लो० १०४ । टी० पृ० १८२ )

६ 'अशिश्रियत्, अदुद्रुवत्' इत्यादौ द्विरुक्तस्यैव, 'अपाक्षीत्' इत्यादौ द्विरुक्तान्यस्यापि धातोरर्थे स्वार्थान्वयं लुङादयो बोधयन्ति ( अतो न लुङादावतिप्रसङ्गः ) । ( श० प्र० श्लो० १०४ । पृ० १८२ )

७ 'पिपक्षति, पापच्यते' इत्यादौ च सनादयस्तादृशा अपि ( द्विरुक्तस्यैव धातोरर्थे स्वार्थान्वयबोधका अपि ), न तिङः; इति न तत्रातिप्रसङ्गः । ( श० प्र० श्लो० १०४ पृ० १८२ )

८ अत्र,—द्विरुक्तस्यैव धातोरर्थे स्वार्थान्वयं लिटो बोधयन्ति, इति तत्र लक्षणसमन्वयो बोध्यः । ( श० प्र० श्लो० १०४ । टी० पृ० १८२ )

९ जुहोतीत्यादौ—द्विरुक्तस्य धातोरर्थे स्वार्थबोधकोऽपि लडादिः, न यजेरर्थे; इति ( न तत्र लडादावतिप्रसङ्गः ) । ( श० प्र० श्लो० १०४ । टी० पृ० १८२–१८४ )

हेतुः सा वा लिट् कथ्यते बुधैः॥ यथा—काशांचक्रे, लोलूयामास, ईक्षांबभूवेत्यादौ; मनश्चचाल[1], सुरभिभाग आजगाम, इत्यादौ च लिट् । ( श० प्र० श्लो० १०४–१०९ । पृ० १८२ )

अतीतत्वमनद्यतनत्वं परोक्षत्वं च लिडर्थः । ( ग० व्यु० ल० पृ० १३८ ) (तर्का० ४ । पृ० ११) यथा—"जुगोपै गोरूपधरामिवोर्वीम्" ( रघु० २ । ३ ) इत्यादौ लिडर्थः ( स्व० )

**लिपिः**—शब्दस्मारकः, शब्दानुमापको वा रेखाविशेषः । ( म० प्र० ४ । पृ० ६६ ) यथा—'क' इति रेखा 'प्रजापति' इति शब्दस्य स्मारिका । केचित्तु,—लिपिं प्रमाणान्तरं मन्यन्ते । लिपिभेदास्तु, तत्तद्देशभेदेन देवनगरी-ग्रन्थाक्षर-लिप्यादयो बहवः ।

---

१ अत्र—अतीतः काल इव, धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः । तच्च (परोक्षत्वम् ) अतीन्द्रियत्वम्* । तेन, 'अतीतकालवृत्त्यतीन्द्रियचलनवन्मनः' इत्याकारकस्तत्र बोधः । ( श० प्र० श्लो० १०५ । टी० पृ० १८३ )

२ अत्र सूत्रम्—"परोक्षे लिट्" इति। (पा० सू० ३ । २ । ११५ ) तदर्थस्तु,—अनद्यतने भूते परोक्षेऽर्थे† लिट् भवति, इति । तेन,—अद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे, च न लिट्प्रयोगः स्यात् । ( वै० सा० ल० पृ० १२३ )

३ अत्र—परोक्षत्वातीतत्वयोर्लिडर्थयोरन्वयस्तु लुङर्थवत् उत्पत्तौ ज्ञेयः । (तर्का० ४ । पृ०११)

४ अत्र सिद्धान्तविदस्तु,—लिपिस्तु शब्दस्मारकतया शब्दानुमापकतया ‡ वा प्रमायामुपयोगिनी, न तु प्रमाणान्तरम्, इत्याहुः । ( म० प्र० ४। पृ० ६६ )

---

* अत्र—'चैत्रश्चारु पपाच', "व्यातेने किरणावलीमुदयनः" इत्यादौ लिटि लक्षणसमन्वयश्चिन्त्यः । ( स्व० ) चिन्तामणौ तु,—'कलिङ्गे दृष्टोऽसि, नाहं कलिङ्गान् जगाम' इत्यत्रेव, पूर्वोक्तस्थलयोरपि लिट्साधुत्वोपपादकं सूत्रान्तरमेव, इति । ( ग० व्यु० ल० पृ० १३९ )

† अत्र परोक्षत्वं च 'साक्षात्करोमि' इत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वम् । तेन, उपनीतक्रियायां यथाश्रुतप्रत्यक्षाविषयत्वरूपस्य परोक्षत्वस्याभावेऽपि, न 'पपाच' इत्यादिप्रयोगानुपपत्तिः । ( वै० सा० द० ल० पृ० १२४ )

‡ अनुमानं च,—'अयं ( पुरुषः ), 'घटमानय' इति शब्दविषयकाभिप्रायवान्, 'घटमानय' इति शब्दव्यञ्जकलिपिकर्तृत्वात्, यथा अहम्' इति ।
अस्मादनुमानात्,—'घटमानय' इति शब्दस्यानुमितिर्भवति; ततोऽर्थप्रत्ययः, इति ज्ञेयम् । ( म० प्र० ४। पृ० ६६ )

**लुङ्**—(तिङ्) कृतवधादेशस्य हन्तेरर्थे, किंवा—सिजन्तस्य धातोरर्थे याऽतीतत्वस्य बोधिका, तादृशी तिङ् 'लुङ्'शब्देनोच्यते। यथा—अवधीत्, अवधिष्टाम्, अवधिषुरित्यादौ; अपाक्षीदित्यादौ च लुङ् । (श० प्र० श्लो० १०३। पृ० १८१)। यथा वा—घटोऽभूदित्यादौ। (वै० सा० ल० पृ० १४७)

**लुट्**—(तिङ्) धात्वर्थे श्वस्तनत्वस्य (भावित्वस्य च) बोधिका तिङ् लु-

---

१ 'जघान, हन्ति स्म' इत्यादौ लिड्—लडादिको हन्तेरर्थेऽतीतत्वस्य बोधकोऽपि, न कृतवधादेशस्य, न वा सिजन्तस्य; इति न तत्रातिप्रसङ्गः। (श० प्र० श्लो० १०३। टी० पृ० १८१)

२ 'वध्यात्, वध्यास्ताम्, वध्यासुः' इत्यादौ—कृतवधादेशस्य तस्यार्थे स्वार्थानुभाविकाऽपि आशीः, नातीतत्वस्य बोधिका; इति न तत्रातिप्रसङ्गः। (श० प्र० श्लो० १०३। टी० पृ० १८२)

३ अत्र—'अनुमतत्व—श्वस्तनत्वा—द्यनाकाङ्क्षितत्वम्' इति विशेषणं देयम्। तेन,—'पच्यताम्, अपचत्, अपचताम्' इत्यादौ लोडादौ नातिप्रसङ्गः। (श० प्र० श्लो० १०३। पृ०१८२)

४ अत्र,—[१] अतीतः* काल इव, तन्निष्ठमद्यतनत्वमपि लुङोऽर्थः। तेन, 'वर्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमान्' इत्येवं बोधः। (श० प्र० श्लो० १०३। टी० पृ० १८२) (ग० व्यु० ल० पृ० १३८) [२] उत्पत्तिः, भूतत्वं † च लुङर्थः। (तर्का० ४। पृ० ११) [३] अतीतत्वं लुङर्थः; तस्याश्रयतासंबन्धेनाख्यातार्थकृत्यादावन्वयः। [४] वस्तुतः—वर्तमानध्वंस एव लुङर्थः; तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः। (ग० व्यु० लका० पृ० १३८)

५ लडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति, न श्वस्तनत्वमपि, इति तत्र नातिप्रसङ्गः। (श० प्र० श्लो० १०५ टी० पृ० १८३)

६ '(श्वः) पक्ष्यति' इत्यादौ—धात्वर्थे श्वस्तनत्वस्य बोधकमपि 'श्वः' इति पदं न तिङ्, इति न 'श्वः' इति पदेऽतिप्रसङ्गः। (श० प्र० श्लो० १०५। पृ० १८३)

---

* अत्र सूत्रम्—"लुङ्" इति। (पा० सू० ३। २। ११०) तदर्थस्तु,—भूतसामान्ये लुङ् इति। (वै० सा० ल० पृ० १४६) (काशिका)

† अत्र [क] भूतत्वं चातीतत्वम्; तच्चोत्पत्तावन्वेति। तथा च—विद्यमानध्वंसप्रतियोग्युत्पत्तिकत्वं लब्धम्। (तर्का० ४। पृ० ११) [ख] वैयाकरणास्तु,—अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्; तच्च, 'घटोऽभूत्' इत्यत्र क्रियायां निर्बाधम्, इति, विद्यमानेऽपि घटे 'घटोऽभूत्' इति प्रयोगः। 'विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापारः' इति बोधः, इत्याहुः। (वै० सा० ल० पृ० १४७)

डुच्यते । ( श० प्र० श्लो० १०५ ) यथा–‘( श्वः ) भविता[1], भवितारौ, भवितारः’ इत्यादौ; ‘( श्वः ) पक्ता[2], पक्तारौ, पक्तारः’ इत्यादौ च । ( तर्का० ४ ) ( ग० व्यु० ल० पृ० १३६ )

ऌङ्—( तिङ् ) या तिङ् क्रियायाः ( धात्वर्थस्य ) अतिपाते (विगमे ) अतीतकालावच्छेद्यत्वस्य बोधिका, तादृशी तिङ् ऌङुच्यते । यथा–‘एधश्चेदप्राप्स्यत्[3], ओदनमप्यपक्ष्यत्’ इत्यादौ ऌङ् । ( श० प्र० श्लो० १०६ । पृ० १८५ )

ऌङर्थस्तु, [ क ] व्याप्यक्रियया व्यापकक्रियाया आपादनम् । ( तर्का० ४ । पृ० ११ ) यथा–‘भूतले घटश्चेदभविष्यद्भूतलमिवाद्रक्ष्यत्[4]’ इत्यादौ ऌङर्थः । ( स्व० )

( ख ) शाब्दिकाश्च,—क्रियाया अनिष्पत्तौ गम्यमानायां, भूते भाविनि[5]

---

१ अत्र—लुडर्थोऽ*नद्यतनभविष्यत्त्वम्; तच्च, [ क ] शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् । [ ख ] शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा । [ ग ] केचित्तु–भविष्यत्वमेव लुडर्थः, इत्याहुः । ( ग० व्यु० ल० पृ० १३६ )

२ तण्डुलं चेत्पचेदोदनमपि भुञ्जीतेत्यादौ तु क्रियातिपतनस्य वर्तमानत्वमेव लिङा प्रत्याय्यते, नत्वतीतत्वम्, इति तद्व्युदासः । ( श० प्र० श्लो० १०६ पृ० १८५ )

३ अत्र स्यतिप्रभृतयश्चैत्रादेरतीतकालावच्छेद्यमिन्धनप्राप्त्यभाववत्त्वमनुभावयन्ति । तथा च—अतीतकाल इव क्रियाप्रतियोगिकोऽभावोऽपि ऌकोऽर्थः । वस्तुतः–अतीतकालावच्छेदेनेन्धनप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एवोक्तस्थले ऌङा चैत्रादावनुभाव्यः; क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव ‘क्रियातिपात’ शब्दार्थत्वात् । ( श० प्र० श्लो० १०६ टी० पृ० १८५ )

४ अत्रोदाहरणान्तरं यथा—“परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् । अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत्” इति । ( रघु० स० ७ । श्लो० १४ )

५ अत्र जगदीश आह—क्वचित्–भूतत्वम्; क्वचित्तु–भविष्यत्वं ऌङर्थः, इति । ( तर्का० ४ । पृ० ११ ) ( सि० च० ४ । पृ० ३२ )

---

* अत्र सूत्रम्—“अनद्यतने लुट्” इति । ( पा० सू० ३ । ३ । १५ ) तदर्थस्तु,–अनद्यतने भाविनि लुट्, इति । ( वै० सा० ल० पृ० १२७ ) अत्र–अनद्यतन इति बहुव्रीहिः । ते न, व्यामिश्रे न भवति,–‘अद्य श्वो वा भविष्यति’ इति । ( काशिका० )

वा हेतुहेतुमद्भावे सति लङ्[1] । तत्र भाविनि हेतुहेतुमद्भावे लङ् यथा—'सुवृष्टिश्चेदभविष्यत् तदा सुभिक्षमभविष्यत्,' 'वह्निश्चेत्प्राज्वलिष्यत्[2] ओदनमपक्ष्यत्' इत्यादौ, इत्याहुः । ( वै० सा० ल० पृ० १४८ ) (काशिका)

**लृट्**—( तिङ् ) या तिङ्, क्रियायाः ( धात्वर्थस्य ) अतिपाते ( विगमे ) भाविकालावच्छेद्यत्वस्य बोधिका, तादृशी तिङ् लृडुच्यते । यथा—तण्डुलं चेत्[3]प्राप्स्यत्योदनमपि पक्ष्यति चैत्र इत्यादौ लृट् । ( श० प्र० श्लो० १०६ । टी० पृ० १८५ )

भविष्यत्वं[4] लृडर्थः । यथा—पक्ष्यतीत्यादौ । ( ग० व्यु० ल० ) यथा वा—घटो भविष्यतीत्यादौ । ( वै० सा० ल० पृ० १२८ )[5]

**लेट्**—( तिङ् ) लिङर्थ[6]वदस्यार्थोऽनुसंधेयः । ( वै०सा० ल० पृ० १२९ )

---

१ अत्र सूत्रम्—"लिङ्निमित्ते लङ् क्रियातिपत्तौ" इति । ( पा० सू० ३ । ३ । १३९ ) तदर्थस्तु–[ क ] लिङो निमित्तं हेतुहेतुमद्भावादि । ( वै० सा० ल० पृ० १४८ ) [ ख ] भविष्यतीत्यनुवर्तते; 'हेतुहेतुमतोर्लिङ्' इत्येवमादिकं लिङो निमित्तम्, तत्र ( लिङ्निमित्ते ) भविष्यति काले लङ्प्रत्ययो भवति, क्रियातिपत्तौ सत्याम्, इति । ( काशिका. )

२ अत्र—[ १ ] 'वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयोज्य ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभावः' इति ( वैयाकरणमते ) शाब्दबोधः । ( वै० सा०ल० ) [ २ ] 'वह्न्यभिन्नाश्रयकभाविप्रज्वलनजन्यौदनाश्रयकविक्लित्त्यनुकूलव्यापारः' इति शाब्दबोधस्तूचितः । ( वै० सा० द० पृ० १४८ )

३ अत्र स्यतिश्चैत्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्यभाववत्त्वमनुभावयति । तथा च—भाविकाल इव, क्रियाप्रतियोगिकोऽभावोऽपि लृडर्थः । वस्तुतः,–भाविकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एवोक्तस्थले लृटा चैत्रादावनुभाव्यः; क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव 'क्रियातिपात'शब्दार्थत्वात् । (श० प्र० श्लो० १०६ । टी० पृ०१८५)

४ [ क ] अत्र—भविष्यत्वं च विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वम् । तेन, आगमिष्यतीत्यादौ 'विद्यमानप्रागभावप्रतियोग्युत्पत्तिकागमनानुकूलकृतिमान्' इत्यर्थः । ( तर्क० ४ । पृ० ११ ) [ ख ] वैयाकरणाश्च,–भविष्यत्वं च वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम्, इत्याहुः । ( वै० सा० ल० पृ० १२८ )

५ अत्र सूत्रम्—"लृट् शेषे च" इति । ( पा० सू० ३ । ३ । १३ ) तदर्थस्तु–शेषे शुद्धे भविष्यति काले, चकारात् क्रियायां चोपपदे क्रियार्थायां, धातोर्लृट्प्रत्ययो भवति, इति । ( काशिका० )

६ अत्र सूत्रम्—"लिङर्थे लेट्" इति । ( पा० सू० ३ । ४ । ७ ) तदर्थस्तु,–लिङो येऽर्थास्तेष्वर्थेषु वेदे लेड्वा स्यात्, इति । ( काशिका० )

यथा–'जोषिषत्, तारिषत्, मन्दिषत्, नेता नेषत्, कवयस्तक्षिषत्' इत्यादौ । ( काशिका )

**लैङ्गिकम्**—१ लिङ्गदर्शनाज्जायमानं ज्ञानम् (अनुमितिः) । (प्रशस्त० गु० पृ० २६) यथा–पर्वते धूमेन वह्निसाधने 'वह्निव्याप्यधूमवान् पर्वतः' इति लिङ्गदर्शनात् 'पर्वतो वह्निमान्' इत्यनुमितिः । २ [क] लिङ्गादिना-ऽनुमितं साध्यम् । यथा–"आचार्यमते, लिङ्गोपहितलैङ्गिकभानम्" इत्यादौ लैङ्गिकं साध्यम् ।

[ख] लिङ्गादिभिः कल्पितम् । यथा मीमांसकमते,–अर्थप्रकाशनसामर्थ्यरूपलिङ्गेन मन्त्रादीनां तत्तत्कर्मादौ विनियोगः कल्प्यते, इति ।

**लोकः**—१ वेद-तदुपजीवि-प्रमाणातिरिक्तप्रमाणम् । यथा–'अलौकिकत्वम्' इत्यादौ लोकः । ( मू० म० १ । पृ० १६ ) २ स्वर्गादिर्लोकः, इति पौराणिका आहुः । ३ मनुष्यश्च लोकः, इति काव्यज्ञाश्च वदन्ति ।

**लोट्**—( तिङ् ) "स्ववक्त्रनुमतत्वस्य धात्वर्थेऽन्वयबोधने । अनुकूला यादृशी तिङ्, सैव लोट् परिभाष्यते" ।

लोडर्थास्त्वनुमतत्वादयो बहवः सन्ति । तत्र १ अनुमतत्वम् । यथा–'करोतु[3], कुरुताम्, कुर्वन्तु' इत्यादौ लोटोऽर्थः । २ अनुज्ञा[4] । यथा–'पत्नी पचेतु'[5] इत्यादौ लोटोऽर्थः । ३ [6]आज्ञा । यथा–'शूलं विश[7], विषं भुङ्क्ष्व'

१ अत्रोदाह्रियते—"पक्षीकृत्य गिरीशं सिद्धा रहिताश्च मानहीनाश्च । इच्छन्त्यधिगन्तुमिमे धनंजयं ( अर्थान्तरे धनं जयं च ) लिङ्गदर्शनेनैव" इति । ( विश्वगुणादर्शे )

२ अत्रार्थेषु सूत्रम्—"लोट् च," इति । ( पा० सू० ३ । ३ । १६२ ) तदर्थस्तु–लोट्-प्रत्ययो भवति, धातोर्विध्यादिष्वर्थेषु, इति । ( काशिका० )

३ अत्र, तुप्-ताम्–प्रभृतयश्चैत्राद्युक्तत्वधीसहकृताः कृत्यादौ प्रकृत्यर्थे चैत्राद्यनुमतत्वं बोधयन्ति, न तु तिबाद्याः; इति लक्षणसमन्वयः, तिबादौ नातिप्रसङ्गश्च, इति । ( श० प्र० श्लो० ९९ । टी० पृ० १६४ )

४ सा च, कर्तुरिष्टत्वे सति वक्त्रनुमतत्वम् । ( श० प्र० श्लो० ९९ । टी० पृ० १६४ )

५ चैत्रवक्तृकतादृशवाक्यात् 'चैत्रानुमतस्वेष्टस्य पाकस्य कर्त्री पत्नी' इत्येवं बोधः । ( श० प्र० श्लो० ९९ । टी० पृ० १६४ )

६ सा च, वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम् । ( श० प्र० श्लो० ९९ । टी० पृ० १६४ )

७ अत्र—'राजानुमतस्वानिष्टहेतुशूलप्रवेशकर्तृतावांस्त्वम्' इत्याकारो बोधः । ( श० प्र० श्लो० ९९ । टी० पृ० १६४ )

इत्यादिराजवाक्यस्थलीयलोडर्थः । ४ समर्थना । यथा—'पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणि' इत्यादौ लोडर्थः । ५ विधिः[3] । यथा—'पटमानय' इत्यादौ लोडर्थः । ( श० प्र० श्लो० ९९–१०० । टी० पृ० १६४-१६६ ) यथा वा—कटं तावद्भवान् करोतु, ग्रामं भवानागच्छतु, इत्यादौ । ( काशिका० ) ६ निमन्त्रणम् । यथा—अमुत्र भवानास्ताम्, अमुत्र भवान् भुङ्क्ताम्, इत्यादौ । ७ आमन्त्रणम् । यथा—इह भवान् भुङ्क्ताम्, इत्यादौ । ८ अधीष्टः । यथा—अधीच्छामो भवन्तम् माणवकं भवानध्यापयतु, इत्यादौ । ९ संप्रश्नः । यथा—किं नु खलु भो व्याकरणमध्ययै, इत्यादौ । ( काशिका० ३।३।१६२ ) १० प्रार्थना । यथा—'भिक्षां देहि त्वमर्थिभ्यः' इत्यादौ लोडर्थः । ( श० प्र० ) ( ग० व्यु० ल० पृ० १३९ ) यथा वा—भवति मे प्रार्थना व्याकरणमध्ययै, छन्दोऽध्ययै, इत्यादौ । ( काशिका० ) ११ आशंसनम् । यथा—चिरं जीवतु भवानित्यादौ लोडर्थः । यथा वा—'भवतु ते शिवप्रसादः' इत्यादौ लोडर्थः ।

---

१ सा च, पराशक्यधर्मिक-स्वशक्यत्वाध्यवसायः । ( श० प्र० श्लो० ९९ । टी० पृ० १६५ )

२ अत्र,—'स्वेतराशक्यं यत् पर्वतोत्पाटनम्, तद्धर्मिक-स्वशक्यत्वाध्यवसायवान्' इत्यन्वयबोधः । ( श० प्र० श्लो० ९९ । टी० पृ० १६५ )

३ विधिश्चात्र वक्त्रिच्छाविषयत्वम् । ( तर्का० ४ । पृ० ११ ) ( सि० च० ४ । पृ० ३२ )

४ अत्र 'पटकर्मक-मदिच्छाविषया-नयनानुकूलकृतिमांस्त्वम्' इत्यन्वयः । ( तर्का० ४ । पृ० ११ ) ( सि० च० ४ । पृ० ३२ )

५ तदर्थश्च,—[ क ] वक्त्राशंसनम् । ( श० प्र० श्लो० ९९ । टी० पृ० १६५ ) [ ख ] अप्राप्तस्येष्टस्यार्थस्य प्राप्तुमिच्छा । ( काशिका )। अत्रार्थे सूत्रम्—"आशिषि लिङ्लोटौ" इति । ( पा० सू० ३ । ३ । १७३ ) तदर्थस्तु—आशीर्विशिष्टेऽर्थे वर्तमानाद्धातोर्लिङ्लोटौ प्रत्ययौ भवतः, इति । ( काशिका० ) अत्राधिकं तु 'आशीः' इति शब्दव्याख्याने द्रष्टव्यम् ।

६ चैत्रोक्तात् 'जीवतु भवान्' इति वाक्यात् 'चैत्राशंसाविषयवर्तमानजीवनवांस्त्वम्' इत्येवं बोधः । 'घटो नीलो भवतु, भवान् सुखी भवतु' इत्यादौ तु—धातुनैव लक्षणयोपस्थापितायां नीलाद्युत्पत्तौ तिङा आशंसनीयत्वं प्रतीयते । एवं च—'आशंसाविषयवर्तमाननीलोत्पत्तिमान्नीलो घटः' इत्यादिकस्तत्र बोधः । ( श० प्र० श्लो० ९९ । टी० पृ० १६५ )

**लोभः**—( दोषः ) धर्मविरोधेन परद्रव्येच्छा[1] । ( गौ० वृ० ४ । १ । पृ० १६८ ) यथा,—"लोभश्चेदगुणेन किम्?" इत्यादौ । ( स्व० )

**लौकिकः**[2]—( पुरुषः ) [ क ] लोकसाम्यमनतीतो, नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्तः । ( वात्स्या० १ । १ । २९ ) यथा—"लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं, स दृष्टान्तः" ( गौ० १।१।२९ ) इत्यादौ कश्चन ग्राम्यो जनो लौकिकः । ( स्व० )

**लौकिकप्रत्यक्षम्**[3]—(प्रत्यक्षम्) [ क ] लौकिकसंनिकर्षजन्यं ज्ञानं प्रत्यक्षम्। ( ल० व० ) यथा—घटचक्षुःसंयोगे सति, भूतले घटवत्ताज्ञानम्[4] । ( मु० २ । पृ० १६० )

[ ख ] षड्विधसंनिकर्षजन्यं प्रत्यक्षम् । ( त० कौ० १ । पृ० ८ )

**लौकिकवाक्यम्**[5]—मानुषादिप्रणीतवाक्यम् । यथा—'घटमानय' इत्यादि वाक्यम् ।

**लौकिकसंनिकर्षः**[6]—प्रत्यक्षविशेषजनकः संयोगाद्यन्यतमः[7] । ( स्व० )

---

१ तदुक्तम्—"परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते । अभिलाषो द्विजश्रेष्ठ! स लोभः परिकीर्तितः" इति । ( पद्मपु० ) ( वाच० )

२ अत्र—लौकिकत्वं च, अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षत्वम् (प्रतिपाद्यत्वम्) । ( गौ० वृ० १ । २५ )

३ ( १ ) अत्र—प्रत्यक्षे लौकिकत्वं च साक्षात्कारत्वव्यञ्जकविषयताविशेषः । एवम्—दोषविशेषजन्यज्ञानेऽपि लौकिकत्वं विज्ञेयम् । ( ग० सप्र० पृ० १६–१७ ) (२) गन्धादेर्विषयस्य लौकिकत्वं च मानसेतरलौकिकसाक्षात्कारविषयत्वम्; विषयताविशेषो । ( ३ ) चक्षुरादीनां षण्णामिन्द्रियाणां लौकिकत्वं तु लौकिकप्रत्यक्षजनकत्वमेव, इति चिन्त्यम् ।

४ अत्रेदं बोध्यम्—'घटाभावव्याप्यवद्भूतलम्' इति विशेषदर्शनदशायामपि ( घटचक्षुःसंयोगे सति ) लौकिकसंनिकर्षजन्यस्य 'भूतलं घटवत्' इत्यादिप्रत्यक्षस्योदयात्, तदुपनीतभान—शाब्दबोधादेश्चानुदयाच्च, लौकिकसंनिकर्षाजन्य-दोषविशेषाजन्य-तद्विशिष्टबुद्धित्वावच्छिन्नं प्रति, तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकत्वकल्पनमुचितम्, इति । ( दीधि० सप्र० पृ० १४ ) ( ग० सप्र० पृ० १६–१७ )

५ अत्र लौकिकत्वं च वैदिकभिन्नत्वम् । ( वाक्य० ४ । पृ० २२ )

६ अत्र—संनिकर्षे लौकिकत्वं च अलौकिकसंनिकर्षभिन्नत्वम्, संयोगाद्यन्यतमत्वं वा ।

७ ते च षट्,—संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः,

**लौकिकाचारः**—लोकमात्रप्रसिद्धाचारः । यथा—"अलौकिका[1]विगीतशिष्टाचारविषयत्वम्" इत्यादौ भोजनाद्याचारः ।

---

## व.

**वचनम्**—१ [ १ ] [ क ] ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः । यथा—'शिष्यं धर्मं ब्रूते' इत्यादौ ब्रूञोऽर्थः[2] । ( ग० व्यु० का० २ । पृ० ४६ ) [ ख ] शाब्दिकास्तु,—विषयतया ज्ञानानुकूलशब्दप्रयोगरूपो व्यापारः । यथा—'माणवकं धर्मं ब्रूते' इत्यादौ ब्रूञोऽर्थः, इत्याहुः । ( ल० म० कार० २। पृ० ९२ ) [ २ ] 'उपदेश'शब्दवदस्यार्थोऽनुसंधेयः । एवम्—'वद' धात्वर्थोऽपि ज्ञेयः । ( श० प्र० श्लो० ७३ । टी० पृ० ११२ ) [ ३ ] वाक्यम्, इति काव्यज्ञा आहुः । २ व्याकरणशास्त्रप्रसिद्धः संख्यार्थकः सुप्तिङ्स्वरूपः प्रत्ययः । यथा—"बहुषु बहुवचनम्" "द्व्येकयोर्द्विवचनैकवचने" ( पा०सू० १ । ४ । २१–२२ ) इत्यादौ । ३ शुण्ठी, इति भिषज आहुः ।

**व(ब)धः**—प्राणवियोगफलकव्यापारः । यथा—"नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात्, स्नातः प्रायश्चित्तं कुर्यात्" ( वीरमित्रो० सुमन्तुस्मृतिः, पृ० २२–२८ ) इत्यादौ । वधनिष्पादकत्वं[3] च साक्षात्परम्पर-

---

विशेषणविशेष्यभावश्च, इति । प्रयोजनादिकं च सविस्तरं 'इन्द्रियार्थसंनिकर्ष'शब्दव्याख्यानावसरे उक्तमेवेत्यत्रैव विरम्यते ।

१ अत्र लौकिकत्वं च विधिमन्तरा रागादिप्राप्तत्वम् । ( नील० नक्षु० पृ० २ )

२ अत्र—धात्वर्थघटके ज्ञाने शिष्यवृत्तित्वस्य, शब्दे च धर्मविषयकत्वस्यान्वयः । ( ग० व्यु० का० २ । ख० १ । पृ० ४६ ) अयमन्वयप्रकारो 'ब्रुवण' शब्दव्याख्याने प्रदर्शितोऽप्यध्येतृसौकर्यार्थमिह पुनः प्रदर्शितः, इति विज्ञेयम् ।

३ वधनिष्पादकः पञ्चविधः,—कर्ता, प्रयोजकः, अनुमन्ता, अनुग्राहकः, निमित्ती चेति । यथाऽऽहापस्तम्बः—"प्रयोजयिता मन्ता कर्तेति स्वर्गनरकफलेषु कर्मसु भागिनः" "यो भूय आरभते तस्मिन्फलविशेषः" इति । ( आपस्त० धर्मसू० २ । ११ । २९ । १–२ ) शिष्टं च 'प्रयोजकत्व'शब्दव्याख्याने द्रष्टव्यम् ।

या वा, (न) उदासीनादिसाधारणं बोध्यम् । अतो न, इषुकारादिष्वतिव्याप्तिः। वधविषयेऽधिकप्रपञ्चस्तु 'हिंसा' शब्दव्याख्यानावसरे प्रदर्शयिष्यते, इति तत्र द्रष्टव्यः ।

**वनम्**—१ वृक्षसमुदायः । यथा—"सुवनी संप्रवदत्पिकाऽपि का" (नैष०) इत्यादौ । यथा वा—"श्यामायमानानि वनानि पश्यन्" (रघु० स० २ । श्लो० १७) इत्यादौ । २ जलम् । ३ निवासः । ४ प्रस्तरणं चेति काव्यज्ञा आहुः । (हेमच.)

**वर्णः**—१ (गुणः) शुक्लादिरूपम् । यथा—"वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ" (भा० प० श्लो० ४०) इत्यादौ । २ ब्राह्मणादिजातिः। यथा—"चातुर्वर्ण्यं मया सृष्टम्" (गीता० अ० ४ । श्लो० १३) इत्यादौ—ब्राह्मण-क्षत्रिय-वैश्य-शूद्रभेदेन चतुर्विधा, इति पौराणिका

---

१ तदुक्तम्—"बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वे ते घातकाः स्मृताः" इति । अन्यच्च—"अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः" इति । (मनु० अ० ५ । श्लो० ५१)

२ अत्र वनत्वं च तत्तद्वृक्षादिविषयकज्ञानविषयत्वम् । (त० प्र० ख० ४ । पृ० ५०)

३ अत्र श्रुतिः—"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः; पद्भ्यां शूद्रो अजायत" इति । (यजुः—३१ । ११)

तेषां मध्ये ब्राह्मणस्य* श्रैष्ठ्ये कारणमुक्तं मनुना यथा—"ऊर्ध्वं नाभेर्मेध्यतरः पुरुषः परिकीर्तितः । तस्मान्मेध्यतमं त्वस्य मुखमुक्तं स्वयंभुवा ॥ उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् । सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः" इति । (मनु० अ० १ । श्लो० ९२–९३) (१० । ३) वर्णधर्मेश्च,—"नित्यं मद्यं ब्राह्मणो वर्जयेत्" इत्यादिः । (मिता० १ । १ । पृ० १) ब्राह्मणादिवर्णानां कर्माणि तु—[क] शमदमतपोज्ञानादि ब्राह्मणस्य; शौर्यं प्रजापालनज्ञानादि क्षत्रियस्य; कृषिगोरक्षवाणिज्यं वैश्यस्य; परिचर्या शूद्रस्य, इति । (गीता. अ० १८ । श्लो० ४२–४४) [ख] गौतमेनाप्युक्तम्—"ब्राह्मणस्याधिकं लब्धम्, क्षत्रियस्य विजितम्, निर्विष्टं वैश्य-शूद्रयोः" इति । (मिता. २ । पृ० ६१) (मनु० १ । ८८–९१)

---

* अत्र सूत्रमपि—"तेषां पूर्वः पूर्वो जन्मतः श्रेयान्" इति । (आपस्तम्ब-धर्मसू० १ । १ । १ । ४)

आहुः । ३ वैयाकरणास्तु—अकाराद्यक्षरम्, इत्याहुः । गायकास्तु,—४ गीतक्रमः; ५ तालविशेषश्च, इत्याहुः । काव्यज्ञास्तुः—६ कुङ्कुमम्; ७ स्वर्णम्; ८ यशः; ९ गुणः; १० स्तुतिश्च, इत्याहुः । ११ कार्तान्तिकाश्च,—विवाहप्रयोजकनक्षत्रविशेषकृतं वर्णकूटम्, इत्याहुः । (वाच० )

**वर्ण्यसमः**—( जातिः ) [ क ] स्थापनीयो वर्ण्यो विपर्ययादवर्ण्यस्तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः । ( वात्स्या० ५ । १ । ४ )

[ ख ] दृष्टान्ते वर्ण्यत्वस्यापादनम् । ( गौ० वृ० ५ । ४ )

[ ग ] वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनम् । यथा—आत्मा

---

१ एतेषां वर्णानामुत्पत्तिक्रमः शिक्षायां कथितः पाणिनिना—“आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णान् जनयते तेषां विभागः पञ्चधा मतः ॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः” इति । तथा—“प्राणापानान्तरे देवी वाग्वै नित्यं हि तिष्ठति । स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा ॥ वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी । केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ॥ प्राणवृत्तिमनुक्रम्य मध्यमा वाक्प्रवर्तते । अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ॥ स्वरूपज्योतिरेवातः परा वागनपायिनी” इति । ( महाभार० ) ( वाच० )

वर्णाश्च मतभेदेन त्रिषष्टिश्चतुःषष्टिर्वा शिक्षायामभिहिता वेदितव्याः ।

२ अत्र—वर्ण्यत्वं वर्णनीयत्वम्; तच्च संदिग्धसाध्यकत्वादि । ( गौ० वृ० ५ । ४ ) अयं वर्ण्यसमस्तु, असाधारणदेशनाभासः; साधनविकलदृष्टान्तदेशनाभासो वा, इति ज्ञेयम् । ( गौ० वृ० ५ । १ । ४ । पृ० २२४ )

३ अत्रायं भावः—[ क ] ‘साध्यदृष्टान्तयोर्धर्मविकल्पात्’’ इति—साध्यः साध्यसिद्ध्यभाववान्, संदिग्धसाध्यकादिर्वा; तस्य धर्मः संदिग्धसाध्यकादिवृत्तिर्हेतुः, तस्य विकल्पात्सत्त्वात् दृष्टान्ते वर्ण्यत्वस्य संदिग्धसाध्यकत्वस्यापादनम् वर्ण्यसमा । तदयमर्थः—पक्षवृत्तिहेतुर्हि गमकः; पक्षश्च संदिग्धसाध्यकः । तथा च—संदिग्धसाध्यकवृत्तिर्हेतुस्त्वया दृष्टान्तेऽपि स्वीकार्यः । तथा च—दृष्टान्तस्यापि संदिग्धसाध्यकत्वात्सपक्षवृत्तित्वानिश्चयादसाधारणो हेतुः । हेतुः संदिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते, तदा गमकहेत्वभावात्साधनविकलो दृष्टान्तः स्यात्, इति । ( गौ० वृ० ५ । १ । ४ । पृ० २२४ ) [ ख ] ‘‘सपक्षवर्तिनो हेतोर्यादृग्रूपं विवक्षितम् । पक्षोऽपि तादृग्वेतुः स्यादन्यथासिद्धिहेतुता । सपक्षत्वात्तदा साध्य इति वर्ण्यसमा क्षतिः’’ इति । ( ता० र० २ । श्लो० १०६–१०७ )

सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवदित्यादौ क्रियाजनकनोदनाख्यसंयोगवत्त्वाल्लोष्टादेर्भवतु क्रियावत्त्वम् ; आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यादिति । ( नील० पृ० ४३ )

**वर्तमानः**—१ ( कालः ) [ क ] येन हि वस्तुना यः कालोऽवच्छिद्यते, स तस्य[1] वर्तमानः । ( वै० उ० २।२।८ ) यथा—'इदानीं घटोऽस्ति'[2] इत्यादौ घटावच्छेदकः, धात्वर्थसत्तावच्छेदको वा, इदम्शब्दवाच्यः कालो वर्तमानः । ( स्व० )

[ ख ] प्राञ्चस्तु,—वर्तमानध्वंस[3]प्रागभावाप्रतियोग्यवच्छिन्न[4]: कालः, इत्याहुः । ( प० मा० कालनि० पृ० ९२ )

[ ग ] नव्यास्तु,—तत्तच्छब्दप्रयोगाधिकरण[5]कालः । यथा—पचतीत्यत्र लडर्थः, इत्याहुः । (ग० व्यु० ल० पृ० १३४ ) ( वाक्य० काल० नि० ) ( वै० सा० द० पृ० १२० ) लडर्थवर्तमानकालश्चतुर्विधः,—"प्रवृत्तोपरत( १ )श्चैव वृत्ताविरत( २ ) एव च । नित्यप्रवृत्तः ( ३ ) सामीप्यो ( ४ ) वर्तमानश्चतुर्विधः" इति । तत्राद्यो ( प्रवृत्तोपरतः ) यथा—मांसं न खादती[6]त्यादौ । द्वितीयो ( वृत्ताविरतः ) यथा—इह कुमाराः क्रीडन्ती[7]त्यादौ । तृतीयो ( नित्यप्रवृत्तः ) यथा—प-

---

१ वर्तमानत्वं च स्थितिः, तच्च प्राक्संबन्धस्वभावरहितस्वरूपत्वम्; स्वकार्यप्रागभावसंबद्धं वा ।

२ अत्र—तद्व्यक्तिध्वंसप्रागभावानवच्छिन्नः कालस्तद्व्यक्तेर्वर्तमानकालः, इति ज्ञेयम् । ( त० कौ० कालनि. पृ० ३ )

३ ध्वंसे वर्तमानत्वं तु 'तत्तच्छब्दप्रयोगाधिकरणकालवृत्तित्वमेव' इति निर्वाच्यम् ; अतो नात्माश्रयः, इति बोध्यम् । ( नील १ । कालनि० पृ० १० )

४ अत्रेदं बोध्यम्—कालस्य संबन्धमात्रत्वमते,—'अवच्छिन्न' इति विशेषणं न देयम्, इति । ( प० मा० कालनि० पृ० ९२ )

५ अत्र—विस्तरस्तु ( ग० व्यु० ल० पृ० १३४ ) तत्र द्रष्टव्यः ।

६ अत्र—आदौ प्रवृत्तं मांसभोजनं निवर्तयति, इत्यर्थः । ( वाच० )

७ अत्र—तदानींतनक्रीडनाभावेऽपि पूर्वक्रीडानां बुद्धौ वर्तमानत्वात् तथा प्रयोगः, इति भावः ।

र्वतास्तिष्ठन्तीत्यादौ । चतुर्थो ( सामीप्यः ) द्विविधः,—भूतसामीप्यः, भविष्यत्सामीप्यश्चेति । तत्राद्यो ( भूतसामीप्यः ) यथा—एषोऽहमागच्छामीत्यादौ । द्वितीयो ( भविष्यत्सामीप्यः ) यथा—एषोऽहं गच्छामीत्यादौ । ( दुर्गादासः ) । २ शब्दप्रयोगाधिकरणकालवृत्तिः । यथा—"वर्तमानध्वंसप्रतियोगित्वमतीतत्वम्" इत्यादौ । ( नील० १ । कालनि० पृ० १० )

**वषट्**—( अव्ययम् ) १ 'स्वाहा' शब्दवदस्यार्थोऽनुसंधेयः । यथा—वषडिन्द्रायेत्यादौ । ( श० प्र० श्लो० ९३ । पृ० १४३ ) २ 'वषट्' इति करणे । यथा —"वषट्कारं गृणन् द्विजः" ( भाग० स्क० ९ ) इत्यादौ । एवम्—'वषट्कार' 'वौषट्' इति शब्दौ व्याख्येयौ ।

**वस्तु**—संकेतविषयः । यथा—घट-गगनादि । वस्तु द्विविधम्,—बा-

---

१ अत्र—पर्वतानां स्थितिर्नित्यप्रवृत्ता, इति तथा प्रयोगः । एवम्—पर्वतानां स्थितत्वेन वर्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां संबन्धविवक्षया 'पर्वतास्तस्थुः, स्थास्यन्ति' इत्यपि प्रयोगः स्यात्, इत्यवधेयम् । ( वाच० )

२ एवं जगदीशोऽप्याह—लडर्थवर्तमानसामीप्यमपि द्विविधम्,—वर्तमानक्षणोत्तरकालावच्छेद्यत्वम्; वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यत्वं चेति । तेन, 'चैत्रः कदा गमिष्यति' इति जिज्ञासायां 'एष गच्छति' इत्युत्तरस्य 'वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्रः' इत्यर्थः; 'चैत्रः कदा समागतः' इति जिज्ञासायां 'एष आगच्छति' इत्युत्तरस्य तु 'वर्तमानक्षणाव्यवहितप्राक्कालावच्छेद्यागमनवान्' इत्यर्थः; इति न प्रश्नोत्तरभावासङ्गतिः, इति । ( श० प्र० श्लो० ९७ । टी० पृ० १६२ )

३ अत्र—'कदाऽऽगतोऽसि ?' इति प्रश्ने,—अध्वस्वेदादेर्वर्तमानत्वात् 'एषोऽहमागच्छामि' इति ( आगतोऽपि ) वदति, इति ज्ञेयम् ।

४ अत्र—'कदा गमिष्यसि?' इति प्रश्ने,—'एषोऽहं गच्छामि' इति ( गमने क्रियमाणोद्यमोऽपि ) वदति, इति विज्ञेयम् । ( दुर्गादासः ) ( वाच० )

५ अत्र प्राञ्चो वैयाकरणा आहुः—वर्तमानत्वं च प्रारब्धापरिसमाप्तत्वम्, भूतभविष्यद्भिन्नत्वं वा । यथा—पचतीत्यादौ—अधिश्रयणाद्यधःश्रयणान्ते मध्ये ( पूर्वापरीभूतक्रियासमुदाये ) वर्तमानत्वमस्ति, इति भवति लट्प्रयोगः, इति । (वै० सा० ल० पृ० १२०) ( ल० म० ) शिष्टं च 'लट्' शब्दव्याख्याने द्रष्टव्यम् ।

६ वस्तुत्वं च—प्रमेयत्वम्, स्वरूपसंबन्धविशेषो वा । ( मं० प्र० ख० २ । पृ० २३ ) ( त० प्र० २ । पृ० ३९ )

ह्यम्, अबाह्यं च । तत्र—आत्मा तद्योग्यगुणास्तद्वृत्तिजातिः स्वर्गापूर्वादि चैतान्यबाह्यवस्तूनि, मनसा श्रुत्यनुमानादिना च वेद्यानि च । एतदन्यानि तु बाह्यवस्तूनि । ( स्व० )

**वह**
**वहनम्** —( धातुः ) 'नयन'शब्दवदस्यार्थोऽनुसंधेयः । ( ग० व्यु० का० २ । पृ० ४६ ) यथा—वहति, अवाक्षीत्, इत्यादौ ।[1]

**वह्निः**—१ ( तेजः ) अग्निः । यथा—पर्वतो वह्निमान् धूमादित्यादौ साध्यीभूतो वह्निः । २ तान्त्रिकास्तु,–रकारः । यथा–"वर्गाद्यं वह्निसंस्थम्" ( श्यामास्तोत्रम् ) इत्यादौ, इत्याहुः । ३ भल्लातकः; ४ निम्बूकश्च, इति भिषज आहुः । ( राजनि० ) ५ वह्निदेवताकं कृत्तिकानक्षत्रम्, इति ज्योतिषज्ञा आहुः । ६ आधिदैविकः शाण्डिल्यगोत्रो मेषवाहनो हुताशनः, इति कर्मवादिमीमांसका आहुः । ७ वैश्वानराद्यपरनामा परमात्मा, इति वेदान्तिन आहुः ।

**वा**—( अव्ययम् ) १ विकल्पः । यथा–"यवैर्वा व्रीहिभिर्वा यजेत" इत्यादौ । २ सादृश्यम् । यथा–"सिन्धौ वाऽधोमण्डलं गोर्वा रसः" इत्यादौ; यथा वा–"मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम" इत्यादौ ।

---

१ अस्य प्रधानकर्मण्येव लकारादयो भवन्ति; "गौणे कर्मणि दुह्यादेः, प्रधाने नीहृकृष्वहाम् । बुद्धिभक्ष्यार्थयोः शब्दकर्मणां च निजेच्छया" इत्यनुशासनात् । अत्राधिकं च 'नयन, दोहन' शब्दव्याख्याने द्रष्टव्यम् ।

२ अग्निभेदादिकमुक्तं यथा—"जृम्भको दीपकश्चैव विभ्रमभ्रमशोभनाः । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च ॥ अन्वाहार्यो गार्हपत्य इत्येते दश वह्नयः" इति । अन्यच्च—"भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः ॥ व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः" इति ।

श्रौते कर्मणि मुख्याग्नयो यथा—"गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" इति । ( वह्नि–पु० )

शरीरस्थवह्नेर्नामानि यथा—"वह्नयो दोषदूष्येषु संलीना दश देहिनः" इति ।

दोषदूष्याश्च यथा—"वातपित्तकफा दोषा दूष्याः स्युः सप्त धातवः" इति । ( शा० ति० )

३ अयं वह्निस्तु भौतिकः, पार्थिवमात्रेन्धनं भौमं तेजः, इति विज्ञेयम् ।

४ अत्रेदं ज्ञेयम्—वह्नित्वेन धूमत्वेन च सर्वेषां वह्निधूमानां साध्यसाधनभावः, न तु, तत्तद्धूमतत्तद्वह्न्यादिव्यक्तीनाम्, इति । सामान्यप्रत्यासत्त्या तु सकलवह्निधूमानां ज्ञेयता चेति ।

( सि० कौ० ) यथा वा—आशीविषो वा संक्रुद्धः, इत्यादौ । ३ अवधारणम् । यथा—"सा वा शम्भोस्तदीया वा मूर्तिर्जलमयी मम" इत्यादौ । ४ समुच्चयः । यथा—"वायुर्वा दहनो वा" इत्यादौ । ( गणरत्न० ) । ५ वितर्कः । यथा—"ज्वरितेन भवता पीतं वा दुग्धम्, कृतं वाऽपथ्यं भवेत्" इत्यादौ । ६ प्रश्नः । यथा—तत्र भवता गम्यते वा ?, इत्यादौ । ७ क्वचित्—वाक्यालंकारार्थः । ( स्व० ) ८ 'चेत्' इत्यर्थः । यथा—सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" ( अमरः ) इत्यादौ, इति नागेशभट्ट आह ।

**वाक्छलम्**—( छलम् ) [ क ] अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलम् । ( गौ० १ । २ । ५३ ) नवकम्बलोऽयं माणवक इति प्रयोगः । अत्र नवः कम्बलोऽस्य इति वक्तुरभिप्रायः । विग्रहे तु विशेषो न समासे । तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थम् 'नव कम्बला अस्येति तावदभिहितं भवता' इति कल्पयति, कल्पयित्वा चासंभवेन प्रतिषेधति,—'एकोऽस्य कम्बलः, कुतो नव कम्बलाः' इति । तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति । ( वात्स्या० १ । २ । ५३ )

[ ख ] शक्त्यैकार्थशाब्दबोधतात्पर्यकशब्दस्य शक्त्याऽर्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम् । यथा—नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते—कुतोऽस्य नवसंख्याकाः कम्बलाः ! इति । एवम्—गौर्विषाणीत्युक्ते—कुतो गजस्य शृङ्गम् ?; 'श्वेतो धावति' इति श्वेतरूपवदभिप्रायेणोक्ते—'श्वेतो न धावति' इत्यभिधानम्, इत्यादिकमूह्यम् । ( गौ० वृ० १ । ५२ )

**वाक्यम्**—[ क ] पदसमूहः । वाक्यं द्विविधम्,—प्रमाणवाक्यम्, अप्रमा-

---

१ न तृतीया, इत्यर्थः ।

२ यत्र शक्यार्थद्वये संभवति,—एकार्थनिर्णयैकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन दूषणाभिधानम्, तत् वाक्छलम्, इति । ( गौ० वृ० १ । १ । ५२ )

३ अत्रोच्यते—"अभिधावैपरीत्येन कल्पितार्थस्य बाधनम्" इति । (ता०र० १ । श्लो० ९.५)

४ तल्लक्षणं च वाक्यत्वमेव । तच्च विशिष्टार्थपरशब्दत्वम् । ( चि० ४ )

णवाक्यं चेति । तत्र प्रमाणवाक्यम्, [ क ] आकाङ्क्षायोग्यतासंनिधिमतां पदानां समूहः । यथा—'गामानय' इत्यादि । ( त० भा० ४ ) ( त० सं० ) ( सा० द० )

[ ख ] यादृशशब्दानां यादृशार्थविषयिताकबोधं प्रति, अनुकूला परस्पराकाङ्क्षा, तादृशशब्दस्तोम एव तथाविधार्थे वाक्यम् ( श० प्र० श्लो० १२ । टी० पृ० १६ )

[ ग ] वैयाकरणास्तु,—ऐकतिङ्, इत्याहुः । ( महाभा० )

[ घ ] सुतिङन्तचयो वाक्यम्, इत्यमरसिंह आह ।

[ ङ ] केचित्तु—स्वार्थबोधसमाप्तः पदसमुदायः, इत्याहुः ।

[ च ] समभिव्याहारो वाक्यम्, इति मीमांसका आहुः ।

अप्रमाणवाक्यं तु आकाङ्क्षादिरहितं वाक्यम् । यथा—'वह्निना सिञ्चति' 'ह्रदो वह्निमान्' इत्यादि वाक्यम् ।

नैयायिकमते वाक्यं त्रिविधम्,—सुबन्तसमूहः, तिङन्तसमूहः, सुतिङन्तसमूहश्चेति । तत्राद्यः,—त्रयः काला इति । द्वितीयः,—पचतिभवति, इति । तृतीयस्तु,—चैत्रः पचतीत्यादि ।

---

१ एकतिङन्तार्थमुख्यविशेष्यकबोधजनकपदसमूहः, इत्यर्थः; तेन, पचतिभवति, पश्य मृगो धावति, ब्रूहिब्रूहि देवदत्त! इत्यादौ च क्रियापादस्यानेकत्वेऽपि नैकवाक्यताव्याघातः, इति ।

२ तदर्थश्च,—साध्यत्वादिवाचकद्वितीयाद्यभावेऽपि, वस्तुतः—शेषशेषिवाचकपदयोः सहोच्चारणम् । यथा—"यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति" इति । ( यजुःसंहिता० ३ । ५ । ६ )

मीमांसकमतेऽपि वाक्यं ( लिङादिपदघटितम् ) द्विविधम्,—विधिः, निषेधश्च । तत्र विधिः "स्वर्गकामो यजेत" इत्यादि वाक्यम् । निषेधस्तु "न कलञ्जं भक्षयेत्", "न सुरां पिबेत्" इत्यादिवाक्यम् । ( लौ० भा० )

३ अत्र—वाक्यदोषाश्चत्वारः,—भ्रमः, प्रमादः, विप्रलिप्सा, करणापाटवं चेति । तत्र—एकपदार्थेऽपरपदार्थसंसर्गारोपो भ्रमः । अवाच्ये वाच्यत्वारोपः प्रमादः । अन्यथा ज्ञातस्यार्थस्यान्यथा बोधयितुमिच्छा विप्रलिप्सा । शब्दोच्चारणानुकूलताल्वादिव्यापारशून्यत्वं करणापाटवम्, इति । आकाङ्क्षा-योग्यता-ऽऽसत्ति-सत्त्वे भ्रमादिदोषाणामसंभवः, इति च बोध्यम् । ( म० प्र० )

४ अत्र—वर्तमानत्वासंभवेन, 'सन्ति'; दुर्ज्ञानत्वेन च, 'ज्ञायन्ते' इत्येतयोर्नाध्याहारसंभवः ।

शब्दशक्तिप्रकाशिकाकर्ता मते तु—वाक्यं चतुर्विधम् । प्रकारान्तरेण वाक्यं द्विविधम्,—वैदिकम्, लौकिकं च । तत्र—वैदिकमीश्वरोक्तत्वात्सर्वमेव प्रमाणम् । लौकिकं त्वाप्तोक्तं प्रमाणम्; अन्यत् ( अनाप्तोक्तम् ) अप्रमाणम् ( त० सं० ) । प्रकारान्तरेणापि वाक्यं द्विविधम्,—महावाक्यम्, अवान्तरवाक्यं ( खण्डवाक्यम् ) चेति । तत्र महावाक्यं च स्वघटकानेकनामलभ्यतादृशार्थबोधकं वाक्यम् । ( श० प्र० श्लो० ३० । टी० पृ० ४४ )

**वाक्यार्थः**—[ क ] एकपदार्थवदपरपदार्थः । ( श० प्र० श्लो० ४ । टी० पृ० ६ )

[ ख ] पदोपस्थितानां ( अर्थानाम् ) मिथः संसर्गः । ( त० कौ० ख० ४ । पृ० १६ )

---

१ वेदघटकं वाक्यमित्यर्थः । ( वाक्य० ४ । पृ० २० )

२ तस्येश्वरोक्तत्वे प्रमाणमनुमानम् । तच्च 'वेदः पौरुषेयो वाक्यत्वाद्भारतादिवत्' इति । ( त० दी० ४ । पृ० ३२ ) ( सि० च० ४ । पृ० ३२ ) अत्राधिकं तु 'वेद' शब्दव्याख्याने दृश्यम् ।

३ अबाध्यं वाक्यं सर्वमेवेत्यर्थः । तेन, "आत्मा वै जायते पुत्रः" इति वेदस्याप्रामाण्येऽपि न क्षतिः । स्मृतिपुराणेतिहाससदाचाराणां वेदमूलकत्वेन प्रामाण्यम्, तन्मूलवेदानामिदानीमनुपलभ्यत्वेन, 'शाखाः काश्चिदुच्छिन्ना एव' इति कल्प्यते । ( सि० च० ४ । पृ० ३२ ) ( त० दी० ४ । पृ० ३३ )

४ यत् धर्मतत्त्वज्ञाऽऽप्तेनोक्तम्, तदेव प्रमाणमित्यर्थः । तेन, बृहस्पतिप्रणीतनास्तिकसूत्रव्युदासः । ( सि० च० ४ । पृ० ३२ )

५ अत्र—'तादृशार्थबोधस्तु, तत्तदर्थावच्छिन्नविषयताशाली बोधः । ( श० प्र० श्लो० ३० । पृ० ४४ )

६ अत्रेदमवधेयम्—'वाक्यार्थरूपान्वयविशिष्टे पदानां शक्तिः,* इति भट्टा आहुः । तन्न सहन्ते नैयायिकाः; तथा हि—'अनन्यलभ्यः शब्दार्थः' इति नियमेन अन्वयविषयकशाब्दबोधे तत्तदानुपूर्वीज्ञानत्वेन हेतुतया तद्बलादेवान्वयभानोपपत्तावन्वयविशिष्टे शक्तिकल्पनं व्यर्थमेव । 'शक्यस्यैव शाब्दविषयत्वम्' इति नियमस्वीकारे लक्षणोच्छेदापत्तिः, इति । ( त० प्र० ख० ४ । पृ० २७ )

---

* अत्राधिकं च 'शक्ति' शब्दव्याख्याने दृश्यम् ।

[ ग ] वाक्यघटकप्रत्येकपदोपस्थितानां पदार्थानामाकाङ्क्षादिज्ञानवशात्परस्परान्वयिभावापन्नोऽर्थः । यथा—'गामानय' इत्यत्र—गो-कर्मत्वा-नयन-कृतीनां प्रत्येकं तत्तत्पदोपस्थापितानामाकाङ्क्षाबलात्परस्परमन्वयी 'गोनिष्ठकर्मत्वनिरूपकानयनानुकूलकृतिमान्' इति वाक्यार्थः । ( स्व० )

[ घ ] शाब्दिकास्तु,—पदार्थानां मिथोऽन्वयरूप उद्देश्यविधेयभावसंबन्धः, इत्याहुः ।

**वाक्यार्थज्ञानम्**—शाब्दबोधः; स च, एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानम् । ( वाक्य० ४ । पृ० २० ) यथा—'घटमानय' इत्यादौ—धात्वर्थानयनरूपक्रियायां 'घटम्' इति द्वितीयान्तार्थघटकर्मत्वनिरूपकत्वरूपसंसर्गविषयकं ज्ञानम् । ( स्व० ) ( त० सं० )

**वाचकम्**—[ १ ] ( पदम् ) [ क ] ईश्वरसंकेतेन ( शक्त्या ) अर्थबोधकं पदम् । यथा—गोत्वादिविशिष्टबोधकं गवादिपदम् । ( ग० शक्ति० पृ० ३ ) इदं 'मुख्यं पदम्' इत्युच्यते ।

[ ख ] शक्त्याऽर्थबोधकं पदम् । यथा—प्रवाहवाचकं गङ्गापदम् । यथा वा—गो-घटादिव्यक्त्युपस्थापकं गो-घटादिपदम् । ( त० कौ० ४ । पृ० १६ ) । [ २ ] कथकः । यथा—पुराणादिपाठको वाचको भवति ।

---

१ अत्राधिकं च 'शाब्दबोध' शब्दव्याख्यानावसरे संपादयिष्यते, इति तत्तत्र द्रष्टव्यम् ।

२ इदं च प्राचीनमताभिप्रायेण । तथा हि—प्राचीनमते संकेतो द्विविधः,— शक्तिः, परिभाषा च । तत्रेश्वरसंकेत एव 'शक्तिः' इत्युच्यते; तेनैवार्थबोधकं पदं 'वाचकम्' इत्युच्यते । परिभाषयाऽर्थबोधकं तु पदं 'पारिभाषिकम्' इत्युच्यते ।

नव्यमते तु,—इच्छामात्रस्य संकेतरूपत्वेन शक्तिपरिभाषयोरैक्यात् परिभाषयाऽप्यर्थबोधकं पदं 'वाचकम्' इति व्यवह्रियते, इति विशेषो ज्ञेयः ।

३ तदुक्तम्—"साक्षात्संकेतितं योऽर्थमभिधत्ते, स वाचकः" इति । ( काव्य— प्र० उल्ला० २ । श्लो० ७ )

४ इदं 'मुख्यं पदम्' इत्युच्यते । गौणं तु लाक्षणिकं पदम् । ( त० कौ० ४ । पृ० १६ )

५ अत्रोच्यते—"वाचकः पूजितो येन प्रसन्नास्तस्य देवताः" इति ( पुरा० ) । अन्यत्र—"ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात् । श्रुत्वाऽन्यवर्णजाद्राजन् ! वाचकान्नरकं व्रजेत्" इति ( ति० त० ) ( वाच० )

**वाचनिकः** }—१ ( नमस्कारः ) उत्कृष्टत्वादिबुद्ध्या प्रयुक्तो नमःप-
**वाचिकः** }

दादिघटितः शब्दः । ( स्व० ) यथा—"वन्दे गोविन्दमानन्दज्ञानदेहं पतिं श्रियः" इति । ( मणिमञ्ज० ) यथा वा—हरये नम इत्यादौ—नोत्तरमकारविशेषादिर्वाचनिकः । ( मू० म० मङ्ग० १ । पृ० १०५ ) । २ धर्मज्ञास्तु,—वचननिष्पादितं पापादि, इत्याहुः । ३ वाक्यारम्भः, इति काव्यज्ञा आहुः । ( वाच० )

**वाच्यः**—१ [ क ] वाचकबोध्योऽर्थः । यथा—गवादिर्गोपदवाच्यः । ( ग० श० पृ० ३ )

[ ख ] मीमांसकास्तु,—यत् यस्माच्छाब्दान्नियमतः प्रतीयते, तत्तस्य वाच्यम् । यथा—'गामानय' इत्यस्मिन्वाक्ये गोशब्दस्य गोत्वं वाच्यम्, इत्याहुः । ( लौ० भा० पृ० ६ ) २ धर्मज्ञास्तु,—दूष्यः । यथा—"वाच्यमलं ममार्ज" ( माघ० स० ३ । श्लो० ५८ ) इत्यादौ, इत्याहुः ।

**वात्स्यायनः**—१ न्यायसूत्रभाष्यकारः पक्षिलाख्यो मुनिविशेषः । २ कामशास्त्रप्रतिपादकसूत्रकर्ता । ३ वत्सगोत्रापत्यं युवा, इति वैयाकरणा वदन्ति ।

**वादः**—१ [ १ ] ( कथा ) [ क ] प्रमाणतर्कसाधनोपालम्भः सि-

---

१ लक्षणं च वाचनिकनमस्कारत्वम् ; तच्च [ १ ] नत्वमत्वादिव्याप्या नाना जातयः । [ २ ] नव्यास्तु,—शाब्दबोधवृत्तिशाब्दत्वव्याप्यजातिविशेषः; इत्याहुः । (मू० म० १।पृ०१०५)

२ शक्त्या बोध्यः, इत्यर्थः । ( स्व० ) स एव 'मुख्यार्थः' इत्युच्यते । ( ग० शक्ति० पृ० ३)

३ अत्रोच्यते—" न चाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते । वाच्यवाचकभावोऽयमक्षपादादिशब्दवत् ॥ विभीतकेप्यक्षशब्दो यद्यप्यल्पैः प्रयुज्यते । तथाऽपि वाचकस्तस्य ज्ञायते शकटाङ्गवत्" इति । ( म० त० भट्टवा० ) ( वाच० )

४ समुदायश्लोकस्तु,—"परस्परस्पर्धिपरार्ध्यरूपाः पौरस्त्रियो यत्र विधाय वेधाः । श्रीनिर्मितिप्राप्तघुणक्षतैकवर्णोपमावाच्यमलं ममार्ज" इति । ( माघ० स० ३ । श्लो० ५८ )

५ स चाष्टनिग्रहाणामधिकरणम् । ते च, न्यून-अधिक-अपसिद्धान्ताः, हेत्वाभासपञ्चकं चेत्यष्टौ निग्रहाः । ( त० भा० पृ० ४४ )

६ तदर्थश्च,—प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यः, इति । तेन, जल्पविशेषे नातिव्याप्तिः । ( गौ० वृ० १ । २ । १ )

द्रान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । ( गौ० १ । २ । १ ) एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावाद-स्त्यात्मा नास्त्यात्मेति । नानाधिकरणौ विरुद्धौ न पक्षप्रतिपक्षौ । यथा नित्य आत्माऽनित्या बुद्धिरिति । परिग्रहोऽभ्युपगमव्यवस्था । सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः । तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः । प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन्क्रियत इति । साधनं स्थापना । उपालम्भः प्रतिषेधः । ( वात्स्या० १ । २ । १ )

[ ख ] प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सति पक्षप्रतिपक्षसाधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः । ( गौ० वृ० १ । ४१ )

[ ग ] नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः । ( वात्स्या० १ । १ । १ पृ० ६ ) । [ २ ] [ क ] तत्त्वनिर्णयफलः कथाविशेषः । ( सर्व० अक्ष० ) यथा—"वादः प्रवदतामहम्" ( गीता० १० । ३२ ) इत्यादौ ।

[ ख ] तत्त्वबुभुत्सोः कथा । ( त० भा० पृ० ४४ ) । २ स्वाभिमतार्थकथनम् । ( स्व० )

---

१ निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादि विशेषणद्वयम् । ( गौ० वृ० १ । २ । १ )

२ सूत्रतात्पर्यमाह—"तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता । वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः" इति । ( ता० र० श्लो० ७७ )

३ अयं वादो द्विविधः,—( १ ) सत्कार्यवादः, ( २ ) असत्कार्यवादश्च । तत्र सत्कार्यवादोऽपि द्विविधः,—परिणामवादः, विवर्तवादश्च । तत्र १ ( १ ) परिणामवादः सांख्यानाम्, रामानुजीयानां च । तन्मते कारणमेव कार्यरूपेण परिणमते, इति कार्यकारणयोरनन्यत्वम्, सत्यत्वं च । यथा—दुग्धं सदेव दधिरूपेण परिणमते, इति दधि कार्यान्तरं दुग्धाद्भिन्नं च न भवति, इति । ( २ ) विवर्तवादो मायावादिवेदान्तिनाम्; तन्मते कारणमेव कार्यस्वरूपेण भासते, इति कारणस्यैव सत्यत्वम्, न तु कार्यस्य सत्यत्वम् । यथा—शंकरभारतीमते,—शुक्तौ 'इदं रजतम्' इति ज्ञानानन्तरमधिष्ठानभूतशुक्तिज्ञाने जाते बाधज्ञानेन पूर्वं ज्ञातं रजतं यथा निवर्तते; तद्वत्,—ब्रह्मज्ञाने जाते सति जगदादिभेदप्रपञ्चो निवर्तते, इति । २ असत्कार्यवादस्तु 'आरम्भवादः' इत्युच्यते; स च नैयायिकानाम्, माध्ववेदान्तिनां च; तन्मते—असदेव*कार्यमुत्पद्यते । यथा—पूर्वमसदेव तत्तद्घटादिकार्यं दण्डचक्रचीवरादिसामग्रीसमवाहितान्मृदादिकारणाद्भिन्नं सदुत्पद्यते, इति ।

---

* अत्रायं भावः—स्वोत्पत्तेः पूर्वं तत् कार्यं नासीदेव; पश्चात्कारणसामग्रीवशादुत्पद्यते, इति कार्यकारणयोरन्यत्वम्, परमार्थतः सत्यत्वं च, इति ।

**वादनम्**—अभिघाताख्यसंयोगावच्छिन्नक्रिया । यथा—भेरी-मृदङ्गं वादयेत्यादौ णिजन्तवद्धात्वर्थः । ( दि० ४ । पृ० १८३ )

**वादी**—१ [ क ] प्रकृतसाध्यसाधनाय न्यायप्रयोगकर्ता । यथा—पर्वते वह्निसाधने विपरीतोद्भावकस्य प्रतिवादिनो निवृत्त्यर्थं वादी प्रतिज्ञादिघटितपञ्चावयवोपेतं न्यायवाक्यं प्रयुङ्क्ते, इति । ( स्व० )

[ ख ] प्रथमपक्षप्रतिपादकोऽर्थी, इति व्यवहारशास्त्रज्ञा आहुः । २ [ १ ] वादकथाकर्ता । [ २ ] विचारस्थलम् । ( वाच० )

**वायवी**—( दिक् ) सुमेरुसंनिहिता, उदयगिरिव्यवहिता, च ( उत्तरपश्चिमा ) दिक् । ( वै० वि० २ । २ । १० । पृ० ११६ ) यथा—'झळकी' ग्रामतो वायव्यां मुम्बापुरी । ( स्व० )

**वायुः**—१ ( द्रव्यम् ) [ क ] वायुत्वसामान्यवान् । ( त० कौ० ) ( प्रशस्त० )

[ ख ] रूपरहितः स्पर्शवान् । स चायं द्विविधः,—नित्यः, अनित्यश्च ।

---

एवम्—विज्ञानवादो योगाचारबौद्धानाम्, शून्यवादो माध्यमिकबौद्धानाम्, स्याद्वाद आर्हतानाम्, इत्यादिकं च तत्तच्छास्त्राज्ज्ञेयमित्यत्रैव विरम्यते ।

१ वाद्यभेदा उच्यन्ते—"तालेन राजते गीतं तालो वादित्रसंभवः । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते । ततं ( १ ) सुषिर( २ )मानद्धं ( ३ ) घन( ४ )मित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं, वंशाद्यं सुषिरं तथा ॥ चर्मावनद्धमानद्धं, घनं तालादिकं मतम्" इति । तत्र,—अलावनीप्रभृति 'ततम्' इत्युच्यते । वंश-पारि-मधुरी-तित्तिरी-प्रभृति 'सुषिरम्' इत्युच्यते । मर्दल-मुरज-पटह-ढक्का-पणव-करट-कमठ-भेरी-प्रभृति 'आनद्धम्' इत्युच्यते । घनं तु अनुरक्त-विरक्त-भेदेन द्विविधम्, करताल-कांस्यताल-भेदेन द्वादशविधं चेति ।

अत्राधिकं लक्षणविभागादिकं तु संगीतदामोदरादौ द्रष्टव्यम् । ( वाच० )

२ स च भूतान्तर्गतः । तल्लक्षणं च [ क ] * स्पर्शेतरविशेषगुणासमानाधिकरण-विशेषगुणसमानाधिकरण-जातिमत्त्वम् । ( वै० उ० २ । १ । ४ ) [ ख ] रूपाभावे सति † स्पर्शवत्त्वम् । ( वाक्य० १ । ४ ) [ ग ] ‡ पाकजस्पर्शवदवृत्ति-अनुष्णाशीतस्पर्शव-

---

* अत्र सूत्रम्—"स्पर्शवान् वायुः" इति । ( वै० २ । १ । ४ )

† समवायेन रूपवदवृत्तिस्पर्शवत्त्वमित्यर्थः । ( ल० व० )

‡ अत्र—पृथिवीत्ववारणायावृत्त्यन्तम् । जलत्ववारणाय वृत्त्यन्तम् । ( राम० १ । वायुनि० पृ० ८३ )

नित्यः परमाणुलक्षणः । अनित्यः कार्यलक्षणः, नाना च । अनित्यस्त्रिविधः,—शरीरम्, इन्द्रियम्, विषयश्च । तत्र शरीरम् वायुलोके प्रसिद्धम् । इन्द्रियम् स्पर्शग्राहकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं त्वक्, सर्वशरीरवृत्ति । विषयो वृक्षादिकम्पनहेतुः, उपलभ्यमानस्पर्शाश्रयो महावाय्वादिः । ( भा० प० श्लो० ४१ ) ( त० सं० ) । प्राणोऽपि विषयो वायुः; सोऽन्तः शरीरे रसमलधातुपित्तकफादीनां प्रेरणाधारणादिहेतुः; स चै-

---

द्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्य-जातिमत्त्वम् । ( दि० १ । पृ० ८३ ) [ घ ] त्वगिन्द्रियसमवेत-द्रव्यत्वसाक्षाद्व्याप्य-जाति-( वायुत्व )मत्त्वम् । ( सर्व० औलू० पृ० १०६ )

वायोरस्तित्वे प्रमाणमाह—[ क ] यद्यपि वायुरतीन्द्रियस्तथापि विलक्षणशब्दात्मककार्यान्यथानुपपत्त्या स स्वीकरणीयः, इति । ( प्र० प्र० ) [ ख ] वायोरप्रत्यक्षत्ववादिमते वायुसिद्धिर्यथा—"प्राह्यजातीयविशेषगुणवत्त्वेन स्पर्शवत्त्वात् द्रव्यान्तरप्रसक्तित्वेन वायुसिद्धिः" इति । ( न्या० लो० पृ० ९ ) [ ग ] योऽयं ( वायौ वाति सति ) अनुष्णाशीतः स्पर्शः प्रतीयते;—'स स्पर्शः क्वचिदाश्रितः, गुणत्वात् रूपवत्' इत्यनुमानेन किंचिदाश्रितत्वे साधनीये 'किंचित्' पदग्राह्यं तदेव 'वायुः' इत्युच्यते । ( त० दी० ) ( सि० च० वायुनि० पृ० ८ )

१ तस्य ( वायोः ) अप्रत्यक्षस्यापि नानात्वं संमूर्छनेनानुमीयते* । संमूर्छनं पुनः, समानजवयोर्वाय्वोर्विरुद्धदिक्क्रिययोः संनिपातः । सोऽपि ( संनिपातः ) सावयविनोर्वाय्वोरूर्ध्वगमनेनानुमीयते । तच्च ( वाय्वोरूर्ध्वगमनम् ) तृणादिगमनेन ( प्रत्यक्षेण ), अनुमीयते, इति । ( प्रशस्त० वायुनि० पृ० ५ ) ( वै० उ० २ । १ । १४ )

२ अत्र भाष्यकारा आहुः—कार्यलक्षणः ( अनित्यो वायुः ) चतुर्विधः,—शरीरम्, इन्द्रियम्, विषयः, प्राणः, इति । तत्र—( १ ) अयोनिजमेव शरीरं मरुतां लोके, पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम् । ( २ ) इन्द्रियं सर्वप्राणिनां स्पर्शोपलम्भकं पृथिव्याद्यनभिभूतैर्वाय्ववयवैरारब्धं सर्वशरीरव्यापि त्वक् । ( ३ ) विषयस्तु उपलभ्यमानस्पर्शाधिष्ठानभूतः, स्पर्श-शब्द-धृति-कम्प-लिङ्गः, तिर्यग्गमनस्वभावकः, मेघादिप्रेरणधारणादिसमर्थः । ( ४ ) प्राणः अन्तःशरीरे रसमलधातूनां प्रेरणादिहेतुः, एकः सन् क्रियाभेदादिभिरपानादिसंज्ञां लभते, इति । ( प्रशस्त० पृ० ५ ) ( प० मा० )

३ तच्च शरीरं † पिशाचादीनां, अयोनिजं च । ( मु० १ । वायुनि० पृ० ८४ ) ( त० कौ० )

---

* अत्र सूत्रम्—"वायोर्वायुसंमूर्छनं नानात्वलिङ्गम्" इति । ( वै० २ । १ । १४ )

† अत्रेदमवधेयम्—एतच्छरीरस्य पार्थिवभागोपष्टम्भादुपभोगक्षमत्वम्; तेन,—'वायोस्तात्वादिव्यापाराभावात्, करचरणाद्यभावेन चाहरणविहरणाद्यभावात् कथं तादृशशरीरस्य भोगायतनत्वम् ?' इत्याशङ्कानवकाशः, इति । ( दि० १ । पृ० ८४ ) ( प० मा० )

कोऽपि हृदादि[1]स्थानरूपोपाधिभेदात्, मुखनिर्गमादि[2]क्रियाभेदाच्च पञ्च पञ्च संज्ञा लभते । तत्र स्थानभेदाद्यथा—प्राणोऽपानो व्यान उदानः समानः, इति । ( दि० १ । २ । पृ० ८९ ) क्रियाभेदाच्चान्या अपि पञ्च संज्ञा यथा—नागः, कूर्मः, कृकलः, देवदत्तः, धनंजयः[3], चेति । ( सि० च० ) ( मु० १ । पृ० ८९ ) । वायौ नव गुणास्तिष्ठन्ति,—स्पर्शः[4], संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, संस्कारश्चेति । ( प्रशस्त० ) ( भा० प० ) ( त० भा० ) वायुर्न प्रत्यक्षः[5], किंतु—स्पर्शादि[6]नाऽनुमेयः, इति प्राञ्च[7] आहुः । नव्यास्तु[8],—

१ तदुक्तम्—“हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः” इति । ( दि० १ । वायुनि० पृ० ८५ ) ( अमर० का० १ )

२ तथा हि—मुखनासिकाभ्यां निष्क्रमणप्रवेशनात्प्राणः । मलादीनामधो नयनादपानः । आहारेषु पाकार्थं वह्नेः समुन्नयनात्समानः । ऊर्ध्वं नयनादुदानः । नाडीमुखेषु वितननाद्व्यानः, इति । ( प० मा० ) ( दि० १ वायुनि० पृ० ८५ )

३ तदुक्तम्—“उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं चापि सर्वव्यापी धनंजयः *” इति ।

४ स्पर्शस्त्वत्रापाकजोऽनुष्णाशीतस्पर्शोऽभिप्रेतः । ( मु० ) ( प्रशस्त० पृ० ५ ) । परिमाणं परममहत्त्वातिरिक्तम् । संस्कारस्तु वेगः; स्थितिस्थापकोऽपि, इति केचिदाहुः । (त०कौ०)

५ तत्र युक्तिः—‘वायुर्यदि प्रत्यक्षः स्यात्तदा घटादिवत् तदीयसंख्यादिसामान्यगुणोपलम्भेऽपि तन्त्रं स्यात्; न चैवम्; तस्मान्न प्रत्यक्षः’ इति । ( त० व० १ । ३ । ४५ ) । फूत्कारादिरूपे वायौ संख्याद्युपलभ्यत इत्यप्यत्र बोध्यम् । ( वै० उ० २ । १ । ९ । पृ० ८३ ) ( त० व० ३ । ४६ )

६ तथा च सूत्रम्—“स्पर्शश्च वायोः” इति । ( वै० २ । १ । ९ ) तदर्थश्च—‘लिङ्गम्’ इति शेषः । चकाराच्छब्द-धृति-कम्पाः समुच्चीयन्ते । तथा च—योऽयं स्पर्शोऽनुभूयते; ‘स क्वचिदाश्रितः, स्पर्शत्वात्, पृथिव्यादिस्पर्शवत्’ इति सामान्यतो दृष्टेन स्पर्शाश्रयसिद्धौ—‘स्पर्शाश्रयो न पृथिव्यादित्रयात्मकः; नीरूपत्वात्; नाकाशादिपञ्चात्मकः; स्पर्शवत्त्वात्’ इति इतरबाधग्रहसहकृतेन ( अनुमानेन ) अष्टद्रव्यातिरिक्तद्रव्यसिद्धिः । एवम्—शब्द-धृति-कम्पा अपि वायौ लिङ्गानि ज्ञेयानि । ( वै० उ० २ । १ । ९—१० । पृ० ८१—८४ ) ( त० दी० ) ( मु० १ )

७ तन्मते च,—‘विषयतासंबन्धेन बहिर्द्रव्यप्रत्यक्षं प्रति, समवायेन महत्त्वविशिष्टोद्भूतरूपमुद्भूतस्पर्शश्च कारणम्’ इति कार्यकारणभावो ज्ञेयः । ( सि० च० १ । पृ० ८ ) ( त० प्र० ) । एवं च,—कारणाभावान्न प्रत्यक्षम्, इति बोध्यम् । ( मु० १ । पृ० ११३ )

८ एतन्मते तु,—[ क ] बहिर्द्रव्यप्रत्यक्षं प्रति, महत्त्वविशिष्ट-विभुव्यावृत्त-विशेषगुणः,

* अत्र पुस्तकान्तरे ‘पोषणस्य हेतुर्धनंजयः’ इति पाठोऽस्ति । ( सि० च० ) ‘कृकरः’ इत्यत्र च ‘कृकलः’ इत्यपि पाठान्तरम् ।

वायुः प्रत्यक्षः, इत्यङ्गीचक्रुः । ( सि० च० १ । पृ० ८ ) ( त० प्र० ) ¹ ( मु० १ । वायुनि० पृ० ११३ ) । मीमांसका अपि वायुर्बाह्येन्द्रियप्रत्यक्षः, इत्यङ्गीचक्रुः । ( प० मा० ) २ वायुस्तु उत्तरपश्चिमविदिशाधिपतिर्देवताविशेषः, इति पौराणिका आहुः । ३ देहस्थधातुविशेषः, इति भिषज आहुः । ४ परमात्मैव, इति वेदान्तिनः प्राहुः ।

**वारणम्**—[ १ ] [ क ] क्रियाधर्मिकनिवृत्त्यनुकूलव्यापारः । यथा—कूपादन्धं वारयति, विषाद्बालं निवारयतीत्यादौ, धात्वर्थो वारणम् । ( श० प्र० श्लो० ६८ । पृ० ९९ )

---

महत्त्वविशिष्टोद्भूतरूपोद्भूतस्पर्शान्यतरद्वा कारणम्' इति कार्यकारणभावो ज्ञेयः । ( सि० च० पृ० ८ ) [ ख ] 'बहिर्द्रव्यप्रत्यक्षं प्रति, आत्मावृत्ति-शब्दभिन्न-विशेषगुणवत्त्वं प्रयोजकम्' इति वा कार्यकारणभावः । तेन, वायोः प्रत्यक्षत्वमुपपद्यते; 'वायुं स्पृशामि' इत्यनुभवाच्च । ( मु० १ । पृ० ११३ )

१ अत्रेदमधिकं ज्ञेयम् [ १ ] यथा प्रभागतमेकत्वं गृह्यते, तथा वायुगतमेकत्वमपि गृह्यत एव । क्वचित् ( सजातीयसंवलनाभावे ) द्वित्व-परिमाणादीनि * गृह्यन्ते । क्वचित् † संख्यापरिमाणाद्यग्रहः; सजातीयसंवलनादिरूपदोषात्, इति । ( मु० १ । वायु० पृ० ११३—११४ ) [ २ ] पाश्चात्यास्तु,—प्राणाख्यं वायुं जलस्य समवायिकारणमङ्गीचक्रुः ।

२ तन्मते—'महदुद्भूतस्पर्शवद्द्रव्यमेव त्वचो योग्यम्, न तु केवलमुद्भूतरूपवद्द्रव्यम्' इति कार्यकारणभावे निवेश्यमिति भावः । ( म० प्र० १० ) एतन्मते,—प्रभाया अप्रत्यक्षत्वे इष्टापत्तिरेव शरणम्, इति ‡ मन्तव्यम् ।

३ क्रिया च पतनभोजनादिर्विशेषतो ग्राह्या । ( श० प्र० श्लो० ६८ । पृ० ९५ )

४ अत्र—[ क ] धात्वर्थघटकनिवृत्तौ पञ्चम्या कूपादिप्रकारकत्वम्, द्वितीयया चान्धादिनिष्ठत्वं प्रत्याय्यते । तथा च—'अन्धनिष्ठायाः पतनधर्मिक-कूपप्रकारक-निवृत्तेः, बालनिष्ठायाश्च भोजनधर्मिक-विषयप्रकारक-निवृत्तेः, अनुकूलऽव्यापारवान्' इत्याकारक-

---

* तद्ग्रहश्च, भूयोऽवयवावच्छेदेन त्वगिन्द्रियसंनिकर्षस्थले बोध्यः ( दि० १ । पृ० ११३ )

† 'सजातीयसंवलनदशायाम्, भूयोऽवयवावच्छेदेन त्वगिन्द्रियसंनिकर्षाभावे च' इत्यर्थः । ( दि० १ । वायुनि० पृ० ११४ )

‡ तन्न योग्यम्; 'इह पक्षी, नेह पक्षी' इति प्रतीतेः प्रभामण्डलरूपदेशविषयिण्याः सर्वानुभवसिद्धायाः संभवात्, इति ( म० प्र० १ । पृ० ११ )

§ अत्र—तथाविधनिवृत्त्यनुकूलव्यापारश्च स्वार्थधीद्वारा 'कूपे मा पत, विषं मा भुङ्क्ष्व' इत्याद्यभिलापरूपः स्फुट एव । ( श० प्र० श्लो० ६८ । टी० पृ० ९५ )

[ख] क्रियाप्रतिषेधः। यथा—यवेभ्यो गां वारयति, कूपादन्धं वारयतीत्यादौ धात्वर्थो वारणम्। (ग० व्यु० का० ५। पृ० १०७) [ग] शाब्दिकास्तु,—प्रवृत्तिविघातः। स च संयोगाद्यनुकूलव्यापाराभावानुकूलो व्यापारः। यथा—यवेभ्यो गां वारयति, अग्नेर्माणवकं वारयति, कूपादन्धं वारयति, इत्यादौ भक्षण-संयोगादि-जनकव्यापाराभावानुकूलो व्यापारो वारयत्यर्थः, इत्याहुः। (ल० म० सुबर्थ० पृ० १०९)। [२] क्वचित्—आनयनधार्मिकानिवृत्त्यनुकूलव्यापारः। यथा—परस्वेभ्यः पाणिं निवारयतीत्यत्र निवारणम्। [३] संयोगाभावनि-

---

स्तत्र बोधः। (श० प्र० श्लो० ६८। पृ० ९५) [ख] अभावानुकूलव्यापारो धात्वर्थः। पञ्चम्या वृत्तित्वमर्थः; तस्यान्धेऽन्वयः। द्वितीयाया अनुयोगित्वं प्रतियोगित्वं वाऽर्थः; तस्य च धात्वर्थतावच्छेदकीभूताभावेऽन्वयः। अभावश्च (कूपादिसमभिव्याहारात्) पतनादिजन्याधःसंयोगादिसंबन्धेन। तथा च,—'कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवान्' इति वाक्यार्थः। एवम्—'एतस्माद्विषान्नादमुं मित्रं वारयति' इत्यादावप्यूह्यः। (का० व्या० पृ० १०)

१ अत्र—क्रिया च भक्षणगमनादिरूपा; तस्याः प्रतिषेधस्तु कर्तृत्वाभावानुकूलव्यापारः। कर्तृत्वाभावरूपधात्वर्थतावच्छेदकफलशालितया गवान्धादेः कर्मता संपद्यते।

२ अत्र—[क] "वारणार्थानामीप्सितः" (पा० सू० १।४।२७) इत्यनेनापादानत्वम्। तदर्थश्च,—'वारणं क्रियाप्रतिषेधः। तदर्थकधातुयोगे ईप्सितः (तत्तक्रियाजन्यफलभागितया तत्तक्रियाकर्तुरभिप्रेतः), अपादानम्' इति। (ग० व्यु० कार० ५। पृ० १०७) [ख] अभावप्रतियोगिव्यापारजन्यफलाश्रयोऽत्रापादानम्; "वारणार्थानाम्" इति सूत्रात्। वारणार्थधात्वर्थफलाश्रयत्वमत्रेप्सितत्वम्। तेन, भक्षण-संयोगा-द्याश्रयत्वाद्यवादीनामपादानत्वम्। (ल० म० सुबर्थ० कार० ५। पृ० १०९)

३ यवादिपदोत्तरपञ्चम्यर्थः यवादिगतत्वेनेच्छाविषयफलकत्वम्; तस्य भक्षणादावन्वयः। इच्छा च क्रियाकर्तृनिष्ठा। एवं च—'यव-कूपादिनिष्ठत्वेन गवान्धादीच्छाविषयो यो गलाधःसंयोग-उत्तरदेशसंयोगादिः, गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाभावानुकूलव्यापारानुकूलकृतिमान्' इत्याकारको बोधः। (ग० व्यु० का० ५। पृ० १०७)

४ अत्र—धात्वर्थघटकनिवृत्तौ पाण्यादेरवच्छेदकत्वेन, परस्वादेश्च प्रकारत्वेनान्वयः। तादृशव्यापारः कराकुञ्चनादिरेव। (श० प्र० श्लो० ६८। पृ० ९५)

ष्ठस्य प्रयोजकव्यापारः । यथा—स्वाङ्गाद्बाणं वारयतीत्यादौ वारयत्यर्थो[1] वारणम् । ( श० प्र० श्लो० ६८ । पृ० ९९ )

**वासना**—१ ( गुणः ) स्मृतिहेतुः संस्कारविशेषः । ( जटा० ) २ शक्तिविशिष्टचित्तोत्पादः । ( न्या० वा० १ । १ । १० । पृ० ६९ ) ३ मिथ्याज्ञानजन्यो 'गौरोऽहम्' इत्यादिमानसज्ञानजनको दोषविशेषः । यथा—'आत्मा देहाद्यभिन्नः' इति । ( ग० २ । हेत्वाभा० सामान्य० ) ४ एकसंतानवर्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः, इति विज्ञानवादिनो बौद्धा आहुः । ( सर्व० बौद्ध० पृ० १९ ) ५ ग्रहस्पष्टीकरणाद्युपयोगी संस्कारविशेषः, इति ज्योतिःशास्त्रज्ञा गणका आहुः । ६ ज्ञानम् । ७ प्रत्याशा, इति पौराणिका आहुः । ८ सुरभीकरणम्, इत्यालंकारिका आहुः ।

**वि**[2]—( अव्ययम् ) १ विरोधः । ( गौ० वृ० १ । १ । २३ ) यथा—"विमर्शः संशयः" ( गौ० १ । १ । २३ ) इत्यादौ । यथा वा—वैधर्म्यमित्यादौ विरुद्धो धर्मः, इति । ( मु० १ ) २ नाना । यथा—विचित्रमित्यादौ । ३ वियोगः । यथा—वियुक्तमित्यादौ । ४ अतिशयः । यथा—विकीर्ण इत्यादौ । ५ भृशम् । यथा—वितटा नदीत्यादौ । ६ मोहः । यथा—विमनस्क इत्यादौ । ७ ईशः । यथा—विभुरित्यादौ । ८ वाक्स्पृधम् । यथा—विवदतीत्यादौ । ९ पैशून्यम् । यथा—विगायतीत्यादौ । १० अस्मरणम् । यथा—विस्मृत इत्यादौ । ११ भूषा । यथा—विभूषित

---

१ अत्र धात्वर्थघटके संयोगे द्वितीयान्तलभ्यस्य बाणप्रतियोगिकत्वस्य, संयोगाभावनिष्ठे च पञ्चम्यन्तलभ्यस्य स्वाङ्गवृत्तित्वस्यान्वयः *; कार्यभाव इव तन्निष्ठेऽधिकरणविशेषवृत्तित्वेऽपि प्रतिबन्धकस्य प्रयोजकत्वात् । अत एव—'मणिः काष्ठे दाहाभावस्य प्रयोजकः, न तु पाथसि' इत्यादिकः सार्वलौकिकव्यवहारः, इति । ( श० प्र० श्लो० ६८ । पृ० । ९६ )

२ अत्र—उपसर्गाणां ( अव्ययानामपि ) अर्थविशेषेषु द्योतकत्वमेव, न तु वाचकत्वम् , इत्यवधेयम् ।

---

* तथा च—'बाणसंयोगाभावनिष्ठायाः स्वाङ्गवृत्तितायाः प्रयोजक(बाणापसरणादिरूप)-व्यापारानुकूलकृतिमान्' इत्याकारकस्तत्र बोधः । ( श० प्र० श्लो० ६८ । टी० पृ० ९५ )

इत्यादौ । १२ ईषदर्थः । यथा—विलोपित इत्यादौ । १३ अनाभिमुख्यम् । यथा—विमुख इत्यादौ । १४ अनवस्था । यथा—विभ्रान्त इत्यादौ । १५ आमुख्यम् (?) । यथा—विवृष्ट इत्यादौ । १६ स्थैर्यम् । यथा—विश्रान्त इत्यादौ । १७ दर्शनम् । यथा—विलोकयतीत्यादौ । ( गणरत्न० ) १८ नियोगः । १९ विशेषः । २० निश्चयः । २१ असहनम् । २२ निग्रहः । २३ हेतुः । २४ अव्याप्तिः । २५ परिभवः । २६ आलम्बनम् । २७ ज्ञानम् । २८ आलस्यम् । २९ पालनम् । ( शब्दच० ) ( मेदि० ) ३० पक्षी । ३१ परमात्मा चेति । ( अमरः )

**विकल्पः**—१ प्रकारता । यथा—"सविकल्पकं ज्ञानम्" इत्यादौ । ( स्व० ) २ वैचित्र्यम् । तच्च, कचित्सत्त्वम्; कचिदसत्त्वम् । ( गौ० वृ० ५।४ ) यथा—"साध्यदृष्टान्तयोर्धर्मविकल्पात्" ( गौ० ५ । १ । ४ ) इत्यादौ । ३ [ १ ] द्वैविध्यम् । यथा—"विकल्पसमा जातिः" इत्यादौ । ( गौ० वृ० ५ । ४ ) [ २ ] विभिन्नः कल्पः । [ ३ ] विविधः कल्पः । ४ पक्षान्तरबोधकः शब्दः । यथा—"व्रीहिभिर्वा, यवैर्वा यजेत" इत्यादिः । ५ योगशास्त्रज्ञास्तु,—चित्तवृत्तिविशेषः । यथा—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( पात० सू० पा० १ । सू० ९ ) इत्यादौ, इत्याहुः । ६ भ्रान्तिः । ७ पक्षतः प्राप्तिश्च । ८ कल्पनम् । ( मेदि० ) (वाच०)

**विकल्पसमः**—(जातिः) [ क ] साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पा-

---

१ विकल्पो द्विविधः,—व्यवस्थितः, ऐच्छिकश्च । सोऽप्याकाङ्क्षाविरहे युक्तः । तथा च भविष्ये—"स्मृतिशास्त्रे विकल्पस्तु आकाङ्क्षापूरणे सति" इति । इच्छाविकल्पेऽष्टौ दोषा यथा—"प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पना । प्रत्युज्जीवनहानिभ्यां प्रत्येकमष्टदोषता" इति । "व्रीहिभिर्यजेत, यवैर्यजेत" इति ( श्रुतिः ) श्रूयते । तत्र व्रीहिप्रयोगे—प्रतीतयवप्रामाण्यपरित्यागः, अप्रतीतयवाप्रामाण्यपरिकल्पनम् । प्रयोगान्तरे—यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवनम्, स्वीकृतयवाप्रामाण्यहानिरिति चत्वारो दोषाः । एवं व्रीहावपि चत्वारः; इत्यष्टौ दोषा इच्छाविकल्पे । व्यवस्थितविकल्पस्तु,—"उपोष्य द्वे तिथी" इति । अत्र—अष्टदोषभिया नेच्छाविकल्पः; किंतु—व्यवस्थितविकल्प एव, इति विज्ञेयम् । ( वाच० )

२ अनैकान्तिकदेशनाभासोऽयम् । ( गौ० वृ० ५ । १ । ४ । पृ० २२५ )

त्साध्यधर्मविकल्पं प्रसजतो विकल्पसमः । यथा—( 'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वाल्लोष्टवत्' इत्यादौ ),—क्रियाहेतुगुणयुक्तं[2] किंचिद्गुरु, यथा लोष्टः; किंचिल्लघु, यथा वायुः । एवं क्रियाहेतुगुणयुक्तं किंचित्क्रियावत्स्याद्यथा लोष्टः । किंचिदक्रियं यथाऽऽत्मा । विशेषो[3] वा वाच्य इति । ( वात्स्या० ५ । १ । ४ । पृ० २६८ )

[ ख ] कस्यचिद्धर्मस्य क्वाचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात्प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचारापादनम्[4] । यथा—शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनात्, गुरुत्वस्यानित्यत्वव्यभिचारदर्शनात्, नित्यत्वस्य मूर्तत्वव्यभिचारदर्शनात्, धर्मत्वाविशेषात्कृतकत्वमप्यनित्यत्वं व्यभिचरेदिति । ( गौ० वृ० ५ । ४ )

[ ग ] दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनम्* । ( नील० पृ० ४३ )

**विकारः**—१ [ क ] स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वम् । यथा—दुग्धादेर्दध्यारम्भकत्वम्, बीजादेर्वृक्षाद्यारम्भकत्वं च; सुवर्णादेरपि लौहाघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव कुण्डलारम्भः; कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वम् । (गौ० वृ० २।१०६)

---

१ अत्र सूत्रभागः—"साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्च विकल्पसमः" इति । ( गौ० ५ । १ । ४ ) तदर्थस्तु,—पक्षे दृष्टान्ते च यो धर्मस्तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम् । उपलक्षणं चैतत्,—अन्यवृत्तिधर्मस्यापि बोध्यम् । व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति, धर्मान्तरस्य साध्यं प्रति, धर्मान्तरस्य धर्मान्तरं प्रति वा; ( गौ० वृ० ५ । १ । ४ । पृ० २२५ )

२ क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेव । ( नील० पृ० ४३ )

३ तस्यायमर्थः,—'पूर्वविकल्पो भवति, अयं तु न भवति' इत्यत्र किं नियामकं स्यात्? इति । ( नील० पृ० ४३ )

४ तथा चोक्तम्—"धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः । हेतोः साध्याभिचारोक्तौ विकल्पसमजातिता" इति । ( ता० र० परि० २ । श्लो० १०९ )

* अत्र शिष्टमुदाहरणादिकं तु भाष्यतुल्यमेव नीलकण्ठ्यां प्रतिपादितम्, इति तन्नात्र संगृहीतम्० इति विज्ञेयम् ।

[ ख ] प्रकृतेरन्यरूपः परिणामः । ( वाच० ) । अयं विकारधर्मो द्रव्यसामान्ये । यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते, व्यूहान्तरं चोपजायते तं विकारमाचक्ष्महे । ( वात्स्या० २ । २ । ४६ ) अत्राधिकं च 'कर्म' शब्दव्याख्याने ( टिप्प० ३ । पृ० १८३–१८५ ) दृश्यम् ।

[ ग ] अन्ये तु,—स्वरूपपरित्यागेन रूपान्तरापत्तिः, इत्याहुः । ( गौ० वृ० २ । ११८ ) २ वर्णविकारस्तु, गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यो व्यवह्रियते । (गौ० २ । २ । ५९) ३ यास्कोक्ता भावविकाराः षट्,–'जायते, अस्ति, विपरिणमते, वर्धते, अपक्षीयते, विनश्यति' इति षड्भावविकारा भवन्तीति वार्ष्यायणिः" ।

**विकार्यम्**—( विकृतिरूपं कर्म ) [ क ] क्रियानिष्पाद्यं यत्, तत् । यथा—तण्डुलैरोदनं पचति, कुसुमानि स्रजं करोति, काशान्कटं करोतीत्यादौ ( प्रकृतिभूततण्डुल-कुसुम-काशादि-पदसमभिव्याहारे ) ओदन-स्रगादि विकार्यरूपं कर्म भवति ।

[ ख ] यल्लक्ष्यं तन्नाशकमेवावस्थान्तरमापद्यते, तत् । यथा—काष्ठं भस्म

---

१ अत्र केचिदाहुः—"इको यणचि" ( पाणि० अ० ६ । पा० १ । सू० ७७ ) इत्यादिना इकारादेर्विकारो यकारादिः, इति । परे तु,—इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्यः, इत्यादेशमादिशन्ति । ( गौ० वृ० २ । १०६ )

२ अत्र—'विकार्य' पदेन, एकव्युत्पत्त्या प्रकृति-विकृत्यु-भयाबोधनेऽपि उभयसाधारणरूपावच्छिन्ने पारिभाषिकमेव 'विकार्य' पदम् । ( ग० व्यु० का० २ । पृ० ६५ )

३ अत्रेदं बोध्यम्—ओदन-स्रगादेर्यदा कर्मत्वम्, तदा तत्प्रकृतिभूततण्डुल-कुसुमादीनामपि कर्मत्वं बोध्यते । प्रकृतिविकृतिभावस्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते । अतः—काष्ठानि भस्मराशिः* क्रियन्ते, इति प्रयोग उपपद्यते ।

४ अत्र—काष्ठादिपदलक्ष्यस्य काष्ठावयवादेः स्वनाशकभस्मादिरूपावस्थान्तरप्राप्तेर्लक्षणसमन्वयः । ओदनं पचतीत्यादौ,—ओदनपदलक्ष्य ओदनावयवः, पच्यर्थो रूपादिपरावृत्त्यवच्छिन्न-

---

* अत्र—भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेऽपि तत्कर्मताया धात्वर्थे संसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता; प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयादिविभक्तिसाधुत्वात्, इति । ( ग० व्यु० का० २ । पृ० ६७)

करोति, स्वर्णं कुण्डलं करोतीत्यादौ काष्ठादि । ( का० व्या० पृ० ६ ) [ ग ] शाब्दिकास्तु,—प्रकृतिविवक्षायां निष्पाद्यम् । काष्ठं भस्म करोतीत्यादौ,—असत्या एव काष्ठादिरूपप्रकृतेः परिणामित्वेन विवक्षाऽस्ति, इत्याहुः । ( वै० सा० द० सुब० कार० २ ) विकार्यस्य द्वैविध्यम्, तदुदाहरणादिकं च 'कर्म'शब्दव्याख्याने संपादितम् ।

**विकृतिः**—१ 'विकार'शब्दवदस्यार्थोऽनुसंधेयः । २ 'विकार्य'शब्दव-

---

स्तेजःसंयोगः । तथा च—धात्वर्थजन्यफलशालित्वात्, सतोऽवस्थान्तरप्राप्तेश्चोभयविधकर्मत्वमोदनावयवस्येष्टम् । ( का० व्या० पृ० ६ )

१ तल्लक्षणं तु—प्रतीयमानप्रकृतिविकृतिभावकत्वे सति * क्रियानिर्वाह्यविशिष्टासत्त्व-उत्पत्ति-एतदन्यतरफलवत्त्वम् । घटं करोतीत्यादिनिर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्त्वेऽपि प्रकृतिविकृतिभावाभानान्नातिप्रसङ्गः । किं च—[ क ] प्रकृतिकर्मणः † ( काष्ठादेः ) तादृशविशिष्टासत्त्ववत्त्वात्, विकृतिकर्मणश्च ( भस्मादेः ) तादृशोत्पत्त्याश्रयत्वाल्लक्षणसंगतिः । ( वै० सा० द० पृ० १६४ ) [ ख ] 'सुवर्णं कुण्डलं करोतीत्यादौ' सुवर्णस्य पूर्वरूपविशिष्टासत्त्वफलवत्त्वात्, कुण्डलस्य चोत्पत्तिमत्त्वादुभयोरपि विकार्यत्वम् । ( वाच० )

२ अत्र—करोतेर्नाश उत्पत्तिश्च फलद्वयम्, तदनुकूलव्यापारश्चार्थः । नाशे प्रतियोगितया काष्ठस्य, उत्पत्तौ भस्मन आधेयतयाऽन्वयः । 'काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्तमानो व्यापारः' इति वैयाकरणमते बोधः । नैयायिकमते—तण्डुलानोदनं पचतीत्यादौ,—प्रकृतिकर्मोत्तर-( तण्डुलपदोत्तर )-द्वितीयाया नाशकत्वमर्थः । विकृतिकर्मोत्तर-( ओदनपदोत्तर )-द्वितीयायाश्चोत्पादकत्वमर्थः । तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति । ओदनाद्यन्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेऽन्वयः । तथा च—'तण्डुलनाशक ओदनोत्पादको यो व्यापारः, तदनुकूलकृतिमान्' इति बोधः । एवम्—काष्ठं भस्म करोतीत्यादावप्यूह्यम् । ( वै० सा० द० पृ० १६६ )

३ अत्रेदं बोध्यम्—भस्म करोतीत्यादौ यदा भस्मप्रकृतिभूतकाष्ठादिपदसमवधानं नास्ति, तदा

---

* तदुक्तं भर्तृहरिणा—"यदसज्जायते सद्वा ( पूर्वे ? ) जन्मना यत्प्रकाश्यते । प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा" इति । ( ग० व्यु० का० २ । पृ० ६५ )

† प्रकृतिकर्मत्वं च धात्वर्थव्यापारनिर्वाह्याभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । काशान् कटं करोति, कुसुमानि स्रजं करोति, सुवर्णं कुण्डलं करोति, मृदं घटं करोति, काष्ठं भस्म करोति, तण्डुलानोदनं पचतीत्यादौ,—धात्वर्थव्यापारनिर्वाह्यो यः पूर्वभावविशिष्टकाष्ठकाशादिप्रतियोगिकोऽभावो विशिष्टासत्त्वरूपः, तत्प्रतियोगितावच्छेदकवैशिष्ट्यवत्त्वं काश-काष्ठादेः, इति तत्प्रकृतौ लक्षणसंगतिः । ( वै० सा द० पृ० १६५ )

दस्यार्थोऽनुसंधेयः । ३ मीमांसकास्तु,—यत्र न सर्वाङ्गोऽपदेशः, सा विकृतिः । यथा—सौर्यादिः ( इष्टिः ); तत्र कतिपयाङ्गानामतिदेशेन[1] प्राप्तत्वात्, इत्याहुः । ( लौ० भा० पृ० २३ ) ४ स्वरविशेषः । यथा—श्रीरागे गान्धारो विकृतिस्वरः, इति गायका आहुः ।

**विक्रयः**[2]—[ क ] मूल्यग्रहणपूर्वकं दानम् । यथा—तुरगमस्मै[3] विक्रीणीत इत्यादौ धात्वर्थः । ( श० प्र० श्लो० ६९ । टी० पृ० ९८ )

[ ख ] मूल्यग्रहणजन्यस्य परस्वत्वस्यानुकूलत्यागः[4]; ।

[ ग ] परस्वत्वजनकमूल्यग्रहणं[5] वा । यथा—ग्रामं विक्रीणातीत्यत्र धात्वर्थो विक्रयः । ( श० प्र० श्लो० ७२ । टी० पृ० ११० )

---

भस्मादिरूपं विकृतिकर्म 'निर्वर्त्यम्' इत्युच्यते । यदा तत्समवधानमस्ति, तदा तदेव ( विकृतिरूपं ) कर्म 'विकार्यम्' इत्युच्यते, इति ।

१ तदर्थस्तु "प्रकृतिवद्विकृतिः कर्तव्या" इति चोदकशब्दितातिदेशवाक्येन, इति । ( लौ० भा० पृ० २३ ) शिष्टं तु 'प्रकृति' शब्दव्याख्याने द्रष्टव्यम् ।

२ अथ क्रयविक्रयविचारे विवादचिन्तामणौ कात्यायनः—"पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात्" इति । मनुः—"विक्रयाद्यो धनं किंचिद्गृह्णीयात्कुलसंनिधौ । क्रयेण स विशुद्धं हि न्यायतो लभते धनम्" ( मनु० अ० ८ । श्लो० २०१ ) "क्रीत्वा विक्रीय वा किंचित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत च" इति । (मनु० अ० ८ । श्लो० २२२) । याज्ञवल्क्यनारदौ—"राजदैवोपघातेन पण्ये दोषमुपागते । हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः" इति । ( याज्ञ० अ० २ । श्लो० २६१ ) "स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते । हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः" इति ( याज्ञ० अ० २ । श्लो० १७३ ) । विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति । हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्" इति । (याज्ञ०२।२६०)

३ अत्र तुरगश्च न मूल्यम्; पणपुराणादेरेव शास्त्रे तथात्वोपदेशात् । ( श० प्र० श्लो० ६९। टी० पृ० ९८ )

४ ग्रामं विक्रीणातीत्यादौ,—'ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्यानुकूलो यो ग्रामस्य त्यागः, तद्वान्' इति बोधः । ( श० प्र० श्लो० ७२ । पृ० ११० )

५ ग्रामं विक्रीणातीत्यादौ,—'ग्रामनिष्ठं यत्परस्वत्वम्, तदनुकूलमूल्यग्रहणवान्' इति बोधः । मूल्यं च पणपुराणादिकमेव राजनिर्दिष्टम्, न तु द्रव्यमात्रम् । तेन,—तिलादीन् दत्वा माषादीनां विनिमये विप्राणां तिलविक्रयादिदोषस्यानवकाशः । ( श० प्र० श्लो० ७२ । टी० पृ० ११० )

[ घ ] मूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंस-परस्वत्व-जनकत्यागः । यथा—गां[1] विक्रीणातीत्यादौ, इति प्राञ्च आहुः । ( का० व्या० का० ४ । पृ० ९ )

**विक्लित्तिः**—[ क ] तेजःसंयोगादिना जायमानोऽवयवविभागविशेषः। (स्व०) यथा—तण्डुलं पचतीत्यादौ फलीभूतो धात्वर्थस्तण्डुलाद्यवयवविभागप्रभेदः। ( श० प्र० श्लो० ७१ । टी० पृ० १०२ )

[ ख ] केचित्तु ( शाब्दिकाः ),—जलतेजःसंयोगाभ्यां जायमानमवयवशैथिल्यम्; तच्च पूर्वारम्भकसंयोगनाशानन्तरशिथिलसंयोगापत्तिः, इत्याहुः ( वाच० )

**विक्षेपः**—१ ( निग्रहस्थानम् ) [ क ] कार्यव्यासङ्गात्[2] कथाविच्छेदो विक्षेपः । ( गौ० ५ । २ । २० ) यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति 'इदं मे करणीयं विद्यते, तस्मिन्नवसिते कथयिष्यामि' इति विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति । ( वात्स्या० ५ । २ । २० )

[ ख ] असंभवत्कालान्तरकत्वेनारोपितं कार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः । ( गौ० वृ० ५ । ६२ ) ( नील० पृ० ४६ ) ( दि० १ )

[ ग ] "कथामभ्युपगम्यैव तद्विच्छेदाय कस्यचित् । व्याजस्य वचने[3]

---

१ अत्र—'गोवृत्तिमूल्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागव्यापारानुकूलकृतिमान्' इत्येवं बोधः । ( का० व्या० का० ४ । पृ० ५ )

२ एतत्सूत्रं विवर्तयामास—"कार्यव्यासङ्गात् कार्यव्यासङ्गमुद्भाव्येत्यर्थः । ल्यब्लोपे पञ्चमी । कार्यव्यासंगश्चासंभवत्कालान्तरकत्वेनारोपितः । तेन तादृशकथाविच्छेदो विक्षेपः । तेन,—राजपुरुषादिभिराकारणे, गृहजनादिभिर्वाऽऽवश्यककार्यार्थमाकारणे, स्वगृहदाहादिकं पश्यतो गमने वा, शिरोरोगादिना प्रतिबन्धे वा, न विक्षेपः" । कार्यव्यासङ्गोद्भावनं च उत्तरावसराभावात्; वस्तुतस्तु—उत्तरस्फूर्तावपि तद्दूषणसंभावनया विक्षेपसंभवात् । यथा—'क्षितिः सकर्तृका कार्यत्वात्' इत्युक्तम्; अत्राङ्कुरे व्यभिचारस्तावन्मयोद्भाव्यः । तत्र चेदयं पक्षसमत्वं ब्रूयात्, तदा मे किमुत्तरम् ?; अतोऽत्र 'महार्णवलिखितं मया च विचारितं किंचित्कार्यमुद्भाव्य गृहे गत्वा दृश्यते' इत्येवं विक्षेपसंभवात् । ( गौ० वृ० ५ । ६२ )

३ तदर्थश्च—कथामुपक्रम्य परिषदि श्रोतुमेकाग्रमनसि, प्रतियोगिनि च दत्तावधाने, 'संप्रति

प्राहुर्विक्षेपं निग्रहग्रहम्" । ( ता० र० परि० ३ । श्लो० १४७ ) । २ चित्तस्य नवविधो[1] भ्रंशो विक्षेपः, इति पातञ्जलयोगशास्त्रज्ञा आहुः । ३ मायावादिनस्तु,–अविद्याशक्तिविशेषः । यथा–'रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयति' इत्यादौ, इत्याहुः । ( वेदा० सा० ) ४ 'विमण्डले यत् ग्रहस्थानम्, तस्य क्रान्तिवृत्तात् यत् तिर्यगन्तरम्, स विक्षेपः ( शरः ),' इति ज्योतिर्विद आहुः ( सि० शि० ) । ५[2] स्त्रीणां सत्त्वजोऽलंकारो[3]विशेषः, इत्यालंकारिका आहुः ।

**विगीतत्वम्**—१ वेदनिषिद्ध[4]त्वम् । ( चि० १ ) यथा–सुरापानादे[5]र्विगीतत्वम् । ( स्व० ) २ A लौकिकविषयकत्वम् ! B वेदनिषिद्धविषयकत्वम् । यथा–"मङ्गलं कर्तव्यम्, अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत्" इत्यादौ विगीतत्वम् । ३ A पापजनकत्वम् । B बलवदनिष्टानुबन्धित्वम् । ( मू० म० १ ) ( दि० १ ) ( म० वा० १ )

**विग्रहः**—१ [ क ] निर्देशे यथावचनम् । ( वात्स्या० १ । १ । १ ) ( न्या० वा० १ । पृ० ११ ) यथा–"प्रमाणप्रमेयसंशयप्रयोजन–" इत्यादिसूत्रे,—'प्रमाणानि च, प्रमेयं च, संशयश्च, प्रयोजनं च' इत्यादिविग्रहं[6] वर्णयन्ति । ( गौ० वृ० १ । १ । १ )

---

मे महत्प्रयोजनमस्ति, श्वः परश्वो वा कथयिष्यामि' इति कस्यचिद्व्याजस्य वचने तस्य विक्षेपलक्षणं नाम निग्रहस्थानमाहुराचार्याः । ( सा० सं० पृ० ११५ )

१ अत्र सूत्रम्—"व्याधि-स्त्यान-संशय-प्रमादा-लस्या-विरति-भ्रान्तिदर्शना-लब्धभूमिकत्वा-नवस्थितत्वानि चित्तविक्षेपाः, तेऽन्तरायाः" इति । ( पात० सू० पाद १ । सू० ३० )

२ तदुक्तम्—"भूषाणामर्धरचना वृथा विश्वगवेक्षणम् । रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके" इति । ( सा० द० परि० ३ । श्लो० १४९ । पृ० ४० )

३ अयं च स्त्रीणां सत्त्वजानामष्टाविंशतिसंख्यकानामलंकाराणामन्यतमः स्वभावजो विक्षेपो नाम विच्छित्तिविशेषं पुष्णाति । सा० द० परि० ३ । श्लो० १२५ । पृ० ३६ )

४ अत्र वेदपदं स्मृत्याद्युपलक्षणम्; " न कुर्यान्निष्फलं कर्म " इत्यादिना निष्फलजलताडनादेरपि निषिद्धत्वात् ।

५ अत्र निषेधकश्रुतिः—"न सुरां पिबेत्" इत्यादिः । " सर्वं मद्यमपेयम् " (आप० स्मृ०)

६ अत्रेदमधिकं ज्ञेयम्— विग्रहे एव समासलभ्यार्थस्य बोधकत्वं तन्त्रम्, न तु समासे विग्रहार्थस्य; विग्रहलभ्ययोर्लिङ्गसंख्ययोर्व्यञ्जकवैधुर्येण प्रायशः समासाबोधकत्वात्, इति । ( श० प्र० श्लो० ३२ । पृ० ४६ )

[ ख ] केचिच्छाब्दिकाः,— वृत्त्यर्थावबोधकं वाक्यं विग्रहः, इति वदन्ति । ( म० प्र० ४ । पृ० ४३ )

[ ग ] अन्ये वैयाकरणास्तु,—समासादिवृत्तिसमानार्थकवाक्यविशेषः, इत्याहुः । २ विशेषज्ञानम् । यथा—"अविग्रहागतादिस्था यथा ग्रामादिकर्मभिः" ( हरिवं० ) इत्यादौ, इति पौराणिका आहुः । ३ विस्तारः, इत्यमरसिंह आह । ४ युद्धम्, इति नीतिशास्त्रज्ञा आहुः । ५ देहः, इति काव्यज्ञा वदन्ति ।

**विघातः**—१ ध्वंसः । ( दि० १ ) यथा—"विघ्नविघाताय मङ्गलम्" इत्यादौ । ( मु० १ ) २ आघातः ।

**विघ्नः**[1]—समीहितक्रियास्वरूपप्रतिबन्धकम् । तच्च, क्वचित् दुरितम् । ( कि० व० ४ ) यथा—"सर्वे विघ्नाः शमं यान्ति विघ्नेशस्तवपाठतः" इत्यादौ ।

**विचारः**—१ विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगः, इत्यस्मद्गुरुचरणाः प्राहुः । यथा—परार्थानुमानस्थले—'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादि[2] । ( स्व० ) २ अन्ये तु,—तत्त्वनिर्णयः । ३ संदिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां तदनुगुणो वाक्यसमूहो विचारः, इत्याहुः ।

**विचिकित्सा**—( दोषः ) 'संशय'शब्दवदस्यार्थोऽनुसंधेयः । ( गौ० वृ० ४ । ३ ) ( अमरः १ )

**विजातीयम्**— [ १ ] लक्ष्यतावच्छेदकसाक्षाद्व्यापकजात्यनवच्छिन्नम् । यथा—गोविजातीयो[3] घटः । ( प्र० च० पृ० ३ ) [ २ ] तद्वृत्त्यसाधारण-विशेष-धर्मशून्यस्तद्विजातीयः, इति तु वयं ब्रूमः ।

---

१ लक्षणं तु विघ्नत्वम् । तच्च, मङ्गलनाश्यतावच्छेदकोऽदृष्टनिष्ठो जातिविशेषः । विघ्नकारणं च मङ्गलाभावेतरविघ्नप्रागभावनाशककारणकलापः । ( मू० म० १ )

२ अत्र च—पर्वते वह्नौ साधनीये,—प्रतिवादिना 'पर्वतो न वह्निमान्' इत्यादिविपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते; तन्निवृत्तिद्वारा प्रतिवादिपराभवार्थे वादिना 'पर्वतो वह्निमान्' इत्यादिप्रतिज्ञाघटितवाक्यप्रयोगरूपविचारः क्रियते, इति विज्ञेयम् ।

३ तथा हि—गोर्लक्षणस्य सास्नादिमत्त्वस्य विजातीयव्यावृत्तिप्रयोजनकत्वे—गोत्वं लक्षणलक्ष्यतावच्छेदकम्, तस्य साक्षाद्व्यापकं पशुत्वम्, तदनवच्छिन्नो घटो भवति, इति विज्ञेयम् । ( प्र० च० पृ० ३ )

**विज्ञानम्**—[ १ ] 'बुद्धि'शब्दवदस्यार्थोऽनुसंधेयः । ( स्व० ) [ २ ] पौराणिकाश्च,—चतुर्दशविद्याधारणम्[1], इत्याहुः । [ ३ ] मायावादिनस्तु,—१ अविद्यावृत्तिविशेषः; २ आत्मैक्यज्ञानं च, इत्यङ्गीचक्रुः । [ ४ ] काव्यज्ञास्तु,—शिल्पादिज्ञानम्, इत्याहुः । [ ५ ] विज्ञानवादिनो बौद्धास्तु,—विज्ञानं द्विविधम्,—प्रवृत्तिविज्ञानम्, आलयविज्ञानं च । तत्राद्यम्,—'अयं घटः' इत्याद्याकारकम् । द्वितीयं च,–'अहं जानामि' इत्याकारकम्; तदेव 'आत्मा' इत्युच्यते, इति वदन्ति ।

**वितण्डा**[2]—( कथा ) [ क ] स प्रतिपक्ष[3]स्थापनाहीनो वितण्डा । ( गौ० १ । २ । ३ ) स जल्पो वितण्डा भवति । किंविशेषणः ? । प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको[4] स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्तत इति । अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा यद्वै खलु तत्परप्रतिषेधवाक्यं, स वैतण्डिकस्य पक्षः, नत्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति; तस्माद्यथान्यासमेवास्त्विति । ( वात्स्या० १ । २ । ३ )

[ ख ] प्रतिपक्षस्थापनाहीना विजिगीषुकथा । ( गौ० वृ० १ । ४३ )

[ ग ] स्वपक्षस्थापनाहीना कथा परपक्षदूषणमात्रावसाना[5] । ( वात्स्या० १ । १ । १ ) ( त० भा० ) ( त० दी० ) ( सर्व० अक्ष० )

[ घ ] प्रतिपक्षस्थापनाहीनं च वाक्यम् । ( न्या० वा० १ । पृ० १६ )

**वितर्कः**—[ १ ] प्रयोक्तुः संभावनात्मकं ज्ञानम् । यथा,–"किमिन्दुः[6] किं

---

१ तदुक्तम्—"चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमितरत् विद्यात् येन धर्मो विवर्धते" इति । ( कूर्मपु० अ० १४ ) ( वाच० )

२ 'इयं कथा, परपक्षखण्डनेन जयमुद्दिश्यैव प्रवर्तते' इति न काचिदनुपपत्तिः, इति ज्ञेयम् ।

३ तदर्थश्च—प्रतिपक्षो द्वितीयः पक्षः । ( गौ० वृ० १ । ४३ )

४ अभ्युपेत्य पक्षं यो न स्थापयति स 'वैतण्डिकः' इत्युच्यते । ( न्या० वा० १ । पृ० १६ )

५ तदेवोच्यते—"जल्प एव वितण्डा स्यात् प्रतिपक्षत्वसाधनैः" इति ( ता० र० श्लो० ७९ )

६ अत्र–अव्ययकिमर्थस्य ( संभावनात्मकज्ञानस्य ) विशेष्यतासंबन्धेन प्रथमान्तपदोपस्थाप्यविशेष्येऽन्वयः, प्रकारितासंबन्धेन तत्र च विशेषणस्य चन्द्रादेरन्वयः । ( ग० शक्ति० पृ० १०८ ) अत्र शिष्टं तु 'किम्'शब्दव्याख्याने द्रष्टव्यम् ।

पद्मं किमु मुकुरबिम्बं किमु मुखम्'' इत्यादौ 'किं' पदार्थः। (ग० शक्ति० पृ० १०८) [२] आलंकारिकास्तु,—अर्थालंकारविशेषः, इत्याहुः।

**विद्या**—(बुद्धिः) १ ज्ञानम्। तच्च कणादनये यथा—विशेषणवद्विशेष्यसंनिकर्ष-लिङ्गपरामर्शादिरूप-गुणजन्यो बुद्धिविशेषः। (त० व० २१३) २ विजातीयज्ञानहेतुः शास्त्रम्। यथा—आन्वीक्षिकी न्यायविद्या। (स्व०) न्यायनये विद्याश्चतस्रः,—आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति-रूपाश्चतस्रो विद्या विद्याप्रस्थाने कथिताः। (गौ० वृ० १।१।१) तथा हि—चतस्र इमा विद्या भवन्ति; ताश्च पृथक्प्रस्थानाः,—अग्निहोत्रहवनादिप्रस्थाना त्रयी, हलशकटादिप्रस्थाना वार्ता, स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः, संशयादिभेदानुविधायिन्यान्वीक्षिकी। (न्या० वा० पृ० १३)। पौराणिकनये विद्याश्चतुर्दश, अष्टादश चापि।

---

१ यथार्थज्ञानमिति भावः। विद्याया विभागादिकं तु 'बुद्धि'शब्दव्याख्याने (पृ० ५५८) द्रष्टव्यम्।

२ सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्। आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता" इति। (वात्स्या० १।१।१। पृ० ६)

३ तदर्थश्च,—आन्वीक्षिकी न्यायविद्या; त्रयी वेदविद्या; वार्ता नीतिशास्त्रम्; दण्डनीतिरर्थशास्त्रम्; इति विज्ञेयः।

४ तदुक्तम्—"त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्। आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः" इति। (मनु० अ० ७। श्लो० ४३)

५ ता उच्यन्ते—(१) "विद्याश्चतुर्दश प्रोक्ताः क्रमेण तु यथास्थिति। षडङ्गमिश्रिता वेदा धर्मशास्त्रं पुराणकम्। मीमांसा तर्कमपि च एता विद्याश्चतुर्दश" इति (नन्दिपु०)। (२) "पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्ग-मिश्रिताः।-वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति च। (याज्ञ० १।३)

६ ता उच्यन्ते—"अङ्गानि, *वेदाश्चत्वारो, मीमांसा, न्यायविस्तरः। धर्मशास्त्रं, पुराणं च

---

* श्रुतौ तु विद्या द्विविधा,—परा, अपरा च। तत्र परा—यया ब्रह्मावगमः सा परा; "यया-ऽक्षरमधिगम्यते सा परा" इति श्रुतेः। ऋग्वेदादिलक्षणा अपरा; सा चाध्ययनाध्यापनरूपा। (वाच०)। विद्याभेदेन देवताभेदाः (हेमा० व्र०) विष्णुधर्मोत्तरे उक्ताः, तास्तत्रैव द्रष्टव्याः।

**विधवा**—मृतभर्तृका स्त्री । विधवाधर्माश्च ( शु० त० ) विष्णुना उक्ता यथा—"मृते भर्तरि ब्रह्मचर्यम्, तदन्वारोहणं वा" तत्र—ब्रह्मचर्यं मैथुनवर्जनं ताम्बूलादिविवर्जनं च । अन्वारोहणं सह गमनम् ।

**विधा**—१ 'त्व'प्रत्ययवदस्यार्थोऽनुसंधेयः; स च प्रकारीभूतो धर्मः । यथा—"धूमवान्पर्वतो वह्निमानित्यनुमितौ पक्षतावच्छेदकविधया धूमस्य

---

विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ताः" इति । ( प्रा० त० विष्णुपु० ) ( वाच० )

१ यथाऽऽह प्रचेताः—"ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् । यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" इति । "अनुयाति न भर्तारं यदि दैवात्कदाचन । तथाऽपि शीलं संरक्ष्यं शीलभङ्गात्पतत्यधः ॥ विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात् कार्यं विधवया सदा ॥ एकाहारः सदा कार्यो न द्वितीयः कदाचन । त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा ॥ मासोपवासं कुर्याद्वा चान्द्रायणमथापि वा । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥ कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत्" इति च । ( काशीख० अ० ४ )

( शूद्रादिविषये तु—) "न कुर्यात्केशसंस्कारं गात्रसंस्कारमेव च । केशावली जटारूपा न क्षौरं तीर्थकं विना ॥ तैलाभ्यङ्गं न कुर्वीत न हि पश्यति दर्पणम्" । इत्यादि । ( ब्रह्मवै० पु० ज० ख० अ० ८३ )

मनुरप्याह—"कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः । न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥ मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥ न* द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यते" इति ( मनु० अ० ५ । श्लो० १५७–१६२ ) शिष्टं तु 'नियोग'शब्दव्याख्याने द्रष्टव्यम् ।

२ अत्रोक्तमङ्गिरसा हारीतेन च—" साध्वीनामेव † नारीणामग्निप्रपतनादृते । नान्यो धर्मो हि विज्ञेयो मृते भर्तरि कर्हिचित् " इत्यादि । बृहन्नारदीये तु—" बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा । रजस्वला राजसुते ! नारोहन्ति चितां शुभे !" इति । ( वाच० )

३ अत्र—'धूमस्य पक्षतावच्छेदकत्वेन भानमस्ति' इत्यर्थो बोद्धव्यः ।

---

* अत्र—धर्मप्रवृत्ति–निबन्धशिरोमणि–शास्त्रप्रदीपादौ बाभ्रव्य आह–"अज्ञानात्तु द्विजो यस्तु विधवामुद्वहेद्यदि । परित्यज्य विदित्वैनां प्रायश्चित्तं समाचरेत् ॥ अब्दमेकं विधायादावधकीर्णिव्रतं चरेत् । पुत्रश्चेज्जायते तस्यां रण्डगोलक उच्यते" इति । "कृते सप्तपदे भर्तुर्वियोगो यदि जायते । न देया पुनरन्यस्मै कलौ कन्या मनीषिभिः" इति च ।

† साध्वीलक्षणं तु—"आर्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" इति ।

भानमिति" इत्यादौ 'विधा'शब्दार्थः । ( दि० १ । काल० पृ० ८९) २ 'प्रभेद'शब्दवदस्यार्थोऽनुसंधेयः । यथा—'द्विविधः, त्रिविधः' इत्यादौ । ३ प्रकारः । यथा—"धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा" ( मनु० ) इत्यादौ । ४ काव्यशास्तु,—सादृश्यम् । यथा—"तथाविधः स्वार्थः" (श० प्र० श्लो० ७ । टी० पृ० ९) इत्यादौ । यथा वा—"मद्विधानां पिण्डेषु" ( रघु० २ । ५७ ) इत्यादौ, इत्याहुः ।

**विधिः**[2]:—१( प्रमाणशब्दः ) [ क ] विधिर्विधायकः[3] । ( गौ० २ । १ । ६२ ) यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा । यथा—"अग्निहोत्रं जुहुयात्स्वर्गकामः" ( शतपथ० २ ) इत्यादि । ( वात्स्या० २ । १ । ६२ )

[ ख ] इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यम् । ( गौ० वृ० २ । ६३ )

[ ग ] विध्यभिधायकप्रत्ययः[4]; तद्घटितवाक्यं[5] वा । ( न्या० म० ४ )

[ घ ] प्रवृत्तिपरं वाक्यम् । यथा—"ज्योतिष्टोमेन स्वर्गकामो यजेत[6]" ( शतपथ० ), "ओदनकामस्तण्डुलं पचेत[6]" इत्यादि । ( त० कौ० )

---

१ समुदायश्लोकस्तु,—"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः । एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु" इति । ( रघु० स० २ । श्लो० ५७ )

२ ( १ ) अयं विधिर्ब्राह्मणभागः ( वात्स्या० २ । १ । ६१ ) । ( २ ) अत्राभिधैव लिङ्थः; सैव च प्रवृत्तिहेतुः, इति द्वितीय'विधि' शब्दार्थतो भेदः, इति विज्ञेयम् । ( त० प्र० ख० ४ । पृ० ९४ )

३ अत्र—[ १ ] 'विधि'शब्दस्य विधिरूपशब्दे, इष्टसाधनत्वादिरूपे विध्यर्थे च प्रयोगो दृश्यते । तत्राद्यमर्थमाह—विधायक इति ।

४ तदर्थश्च,—[ क ] विधीयते विधिरूपशब्देन प्रतिपाद्यतेऽप्यसौ विधिरिष्टसाधनत्वादिः, तस्याभिधायको वाचकः, इति । [ ख ] अर्थविशेषाभिधायकः प्रत्ययः । स च प्रत्ययो लिङ्लोट्लेट्तव्यकृत्यप्रत्ययरूपः, इति । ( सि० च० ) ( म० प्र० ४ । पृ० ५८ ) ( त० प्र० ख० ४ । पृ० ९३ )

५ तान्त्रिकमते, 'यजेत' इत्यादिवाक्यमेव विधिः (न तु केवलप्रत्ययः), इत्यभिप्रायेणेदं लक्षणम् ।

६ अत्र—'ज्योतिष्टोमनामको यागः स्वर्गरूपेष्टसाधनम्,' 'तण्डुलकर्मकः पाक ओदनरूपेष्टसाधनम्' इत्युभयवाक्यार्थः; यजेत—पचेतेत्यादिविधिप्रत्ययेनेष्टसाधनत्वोपस्थापनात् । (त० कौ०)

[ ङ ] मीमांसकास्तु,—अज्ञातार्थज्ञापको[1] वेदभागः ( अपूर्वविधिः ) । यथा—"अग्निहोत्रं जुहुयात्[2] स्वर्गकामः" इत्यादि, इत्याहुः । ( लौ० भा०पृ० १२) सामान्यतोऽयं विधिर्द्विविधः,— लौकिकः, वैदिकश्च । तत्र लौकिकः—'ओदनकामस्तण्डुलं पचेत' इत्यादिः। वैदिकविधिस्तु,—'स्वर्गकामो यजेत' इत्यादिः। ( शतपथ० )। विधिः प्रकारान्तरेण त्रिविधः[3],—अपूर्वविधिः, नियमविधिः, परिसंख्याविधिश्च । (न्या०म०४) (सि०च०) तत्रापूर्वविधिश्चतुर्विधः,—उत्पत्तिविधिः[4], विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेति[5] । ( लौ० भा० पृ० १६ )। २ प्रयोगः; ३ निद-

---

१ स च, तादृशप्रयोजनवदर्थविधानेनार्थवान्; तादृशं चार्थं प्रमाणान्तरेणाप्राप्तं विधत्ते । यत्र कर्म मानान्तरेण प्राप्तम्, तत्र तदुद्देशेन गुणमात्रं विधत्ते । यथा—"दध्ना जुहोति" ( तै० ब्रा० २ । १ । ५ ) ( शतप० ) इत्यत्र होमस्य "अग्निहोत्रं जुहुयात्" इत्यनेन प्राप्तत्वात् होमोद्देशेन दधिमात्रविधानम् ; 'दध्ना होमं भावयेत्' इति वाक्यार्थः। यत्र तूभयमप्राप्तम्; तत्र विशिष्टं विधत्ते । यथा—"सोमेन यजेत" ( शतपथ० ) इत्यत्र सोम-यागयोरप्राप्तत्वात् सोमविशिष्टयागविधानम्; सोमपदे मत्वर्थलक्षणया 'सोमवता यागेनेष्टं भावयेत्' इति वाक्यार्थबोधः । ( लौ० भा० पृ० १३ )

२ अयं विधिर्मानान्तरेणाप्राप्तं स्वर्गप्रयोजनवद्धोमं विधत्ते;'अग्निहोत्रहोमेन स्वर्गं भावयेत्' इति वाक्यार्थबोधः । ( लौ० भा० पृ० १३ )

३ तदुक्तं भट्टपादैः—"विधिरत्यन्तमप्राप्तौ, नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते" इति । ( न्या० म० ४)

४ प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनेष्टसाधनताबोधकं कर्मस्वरूपज्ञापकं विधिवाक्यम् । यथा—"स्वर्गकामोऽश्वमेधेन यजेत" ( शतपथ० ) इत्यादिवाक्यम् । ( वाच० ) अत्र शिष्टं तु 'उत्पत्तिविधि'शब्दव्याख्याने दृश्यम् ।

५ तदर्थश्च,—[ क ] कर्मणः फलसंबन्धबोधको विधिः। यथा—"ज्योतिष्टोमेन यजेत स्वर्गकामः" इत्यादिः । ( म० प्र० पृ० ६३ ) [ ख ] कर्मजन्यफलस्वाम्यबोधको*विधिः । यथा—"यजेत † स्वर्गकामः" इत्यादिरूपोऽधिकारविधिः । यथा वा—"यस्याहिताग्नेरग्निर्गृहान् दहेत्, सोऽग्नये क्षामवतेऽष्टाकपालं‡ निर्वपेत्" इति ( शतपथ०) ( तै० सं० २ ।

---

* कर्मजन्यफलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् ।

† अत्र—स्वर्गमुद्दिश्य यागं विदधताऽनेन, स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । ( लौ० भा० पृ० ३८ )

‡ अत्र—अग्निदाहादौ निमित्ते कर्म विदधता ( अनेन वाक्येन), निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते । ( लौ० भा० पृ० ३८ )

र्शनं वा विधिः । यथा—'यत्र धूमस्तत्राग्निः' इति, 'अग्न्यभावे धूमो न भवति' इति । ( प्रशस्त० पृ० ४४ )। ४ दैवम् । ५ ब्रह्मा, इति च पौराणिका आहुः । ६ अर्थालंकारविशेषः, इत्यालंकारिका आहुः ।

**विधि**[1]:—( विधिप्रत्ययार्थः ) [ क ] प्रवर्तकज्ञानविषयो धर्मः । स च धर्मो जरन्नैयायिकानां नये,—कृतिसाध्यत्वे सति बलवदनिष्टाजनकत्वसहितमिष्टसाधनत्वम्[2] । यथा—ओदनकामः पचेत, स्वर्गकामो[3] यजेतेत्यादौ,—ओदन-स्वर्गादि-रूपं यत् फलम्, तत्साधनत्वं पाक-यागादि-क्रियार्थां

---

२ । २ ) । एवम्—"अहरहः *संध्यामुपासीत" ( बौधायन० सू० ) इत्यादीन्यधिकारविधेरुदाहरणानि विज्ञेयानि । ( लौ० भा० पृ० ३८ )

१ अत्र व्युत्पत्तिः—'विधीयते विधिरूपशब्देन प्रतिपाद्यतेऽसौ, विधिरिष्टसाधनत्वादिः' इति । ( म० प्र० ४ । पृ० ५८ )

२ अत्र—कृतिसाध्ये तृप्तिरूपसुखात्मकेष्टसाधने च मधुविषसंपृक्तान्नभोजने† प्रवृत्तिवारणाय 'बलवदनिष्टाजनकत्वं' विशेषणमावश्यकम् ।

तथा सति—'न कलञ्जं भक्षयेत्' इत्यादौ नञा बोध्यमानो विशिष्टाभावो ( कृतिसाध्यत्वविशिष्टस्य बलवदनिष्टाजनकत्वविशिष्टस्येष्टसाधनत्वस्याभावः ) विशेष्यवति विशेषणाभावे‡ विश्राम्यतीति (मु० गु०पृ०२२८) एतन्मते—श्येनस्य हिंसारूपत्वं नास्ति, इति "श्येनेनाभिचरन् यजेत" (अथर्वब्राह्म०) इत्यादौ बलवदनिष्टाननुबन्धित्वरूपो विध्यर्थो बोध्यते, इति हृदयम् ।

३ तदर्थश्च,—'कृतिसाध्य-बलवदनिष्टाजनके-ष्टसाधन-यागकस्वर्गकामः' इति । (तर्का० ४ । पृ० ११ )

४ अत्र गदाधर आह—लिङोऽर्थः कार्यत्वम् पाकादिक्रियायामेव प्रथमतोऽन्वेति; न तु, 'स्वर्गकामो यजेत' इत्यादितो यागादौ प्रथमतस्तदन्वयः; किं तु—कार्यत्वेनैव वैदिकलिङ्त्वा-

---

* अत्र—शुचिविहितकालजीविनः संध्योपासनजन्यप्रत्यवायपरिहाररूपफलस्वाम्यं चोद्यते । ( लौ० भा० पृ० ३८ )

† अत्र बलवदनिष्टं तु मरणम् । यदा च तादृशभोजनं बलवदनिष्टाननुबन्धित्वेन ज्ञायते, तदा स पुरुषः प्रवर्तेत एव, इति विज्ञेयम् । ( न्या० म० ख० ४ । पृ० २६—२७ )

‡ अत्रायं भावः—जरन्नैयायिकमते,—कृतिसाध्यत्वसहितं बलवदनिष्टाजनकत्वसहितं चेष्टसाधनत्वरूपं विशिष्टं लिङर्थः, इति तदभावस्य कलञ्जभक्षणरूपक्रियायामसंभवेन ( तादृशक्रियायामिष्टसाधनत्वस्य सत्त्वात् ), नञर्थान्वयानुपपत्त्या तादृशविशिष्टाभावस्य विशेषणाभावस्वरूपत्वं (बलवदनिष्टाजनकत्वाभावस्वरूपत्वम्), वायौ विद्यमानस्य रूपविशिष्टस्पर्शा-भावस्य रूपाभावस्वरूपत्ववत् स्वीकार्यम्, इति ।

प्रतीयते। ( कु० टी० ९ ) (त० प्र० ४ । पृ० १०९ ) (तर्का०) ( ग० व्यु० ल० पृ०१३८) (त० दी०) (मु०गु०) (दि०पृ०२२६) [ ख ] नव्यनैयायिकमते तु,-प्रवर्तकचिकीर्षायां यत्प्रकारकज्ञानस्य[1] हेतुत्वम्, सः। तादृशं च कृतिसाध्यत्वम्[2], इष्टसाधनत्वम्[3], बलवदनिष्टाननुबन्धित्वं[4] च प्रत्येकमेव। यथा-यजेत[5], पचेतेत्यादौ लिङर्थः। ( श०

च्येऽपूर्वे प्रथमतो विषयतया यागाद्यन्वयः प्रतीयते। विषयत्वं तु जन्यत्वम्। तत्र च शक्यतावच्छेदककार्यत्वैकदेशे कृतौ स्वर्गकामान्वयः। एवं च—'यागविषयकं स्वर्गकामकार्यम्' इति प्राथमिको बोधः। तदनन्तरम्—अपूर्वस्य कृतिसाध्यता यागद्वारैव; यागमकृत्वाऽपूर्वस्य साधयितुमशक्यत्वात्। अतो 'यागकार्यतां विनाऽपूर्वत्वमनुपपन्नम्' इत्यनुपपत्तिप्रतिसंधाने तत्सहकृतलोकस्थलक्लृप्तक्रियाकार्यतान्वयगोचरशाब्दसामग्रीतो यागे औपादानिको बोधः, इति। ( ग० नियोज्यान्वयग्रन्थे० )

१ 'कृतिसाध्यत्वादिज्ञानेन चिकीर्षा, तया च प्रवृत्तिरुत्पद्यते' इति समुदितार्थः। ( न्या० म० ४। पृ० २७ )

२ प्रयोजनं कथ्यते—'पङ्गुः समुद्रं न तरेत्' इत्यादौ,-नञादिना समुद्रतरणादेः पङ्गुप्रभृतिकृतिसाध्यत्वनिषेधबोधानुरोधादवश्यं कृतिसाध्यत्वं लिङर्थः स्वीकार्यः। (श० प्र० श्लो० १००। टी० पृ० १६६ )

३ [क] 'तृप्तिकामो जलं न ताडयेत्' इत्यादौ,—जलताडनादेस्तृप्तिकामेष्टसाधनत्वस्य निषेधान्वयानुपपत्त्या इष्टसाधनत्वं लिङर्थोऽवश्यं स्वीकर्तव्यः ( श० प्र० श्लो० १००। टी० पृ० १६६ ) [ ख ] अपरे तु,—'चैत्यं न वन्देत' इति वाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम्, इति वदन्ति। ( ग० व्यु० ल० )

४ 'न कलञ्जं * भुञ्जीत' इत्यादौ,-कलञ्जभक्षणादेर्बलवदनिष्टजनकत्वस्य निषेधानुपपत्त्या बलवदनिष्टाननुबन्धित्वं लिङर्थोऽवश्यं स्वीकर्तव्यः। (श० प्र० श्लो०१००।टी० पृ० १६६)
बलवदनिष्टाननुबन्धित्वं चात्र नरकाजनकत्वम्, पापाजनकत्वं वा। (श० प्र० १७१)। एतन्मते ( बलवदनिष्टाननुबन्धित्वादिषु त्रिषु पृथगेव लिङः शक्तित्रयं वदतां नव्यनैयायिकानां मते )—श्येनः स्वरूपत एव निषिद्धः, इति "श्येनेनाभिचरन् यजेत" इत्यादौ विधिप्रत्ययेन बलवदनिष्टाननुबन्धित्वं न बोध्यते। अधिकं तु 'अभिचार'शब्दव्याख्याने द्रष्टव्यम्। तथा च-"न कलञ्जं भक्षयेत्" इत्यादौ तु,-बलवदनिष्टाजनकत्वं विध्यर्थः; तदभावो नञात्र बोध्यते, इति विज्ञेयम्। ( मु० ) ( दि० गु० पृ० २२५—२२९)
अत्र वदन्ति—द्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनानुगते एकैव विधिप्रत्ययस्य शक्तिः, इति (ग०व्यु०ल०पृ० १४८)

५ अत्र,—यागादिधर्मिकादिष्टसाधनत्वादिनिश्चयादेव यागादिधर्मिकचिकीर्षोत्पत्त्या तत्र प्रवृ-

* अत्र—( १ ) कलञ्जो मांसविशेषः। तथा चोक्तं माधवाचार्यैर्न्यायमालायाम्—"विषाक्तश-

प्र० श्लो० १०० । पृ० १६६ ) ( त० प्र० ४ । पृ० १०२ )

[ ग ] उदयनाचार्यास्तु, आप्ताभिप्रायो विध्यर्थः, इत्याहुः । ( कु० ५ ) ( न्या० सि० दी० पृ० ६० ) ( म० प्र० ४ । पृ० ५९ )

[ घ ] भट्टमीमांसकास्तु,—विधि-प्रेरणा-प्रवर्तना-दिशब्दाभिधेयः प्रवृत्त्यनुकूलव्यापारः, इत्याहुः । ( म० प्र० ४ । पृ० ५८ )

---

त्तिः । एवं च—'यागादिः कृतिसाध्यः, इष्टसाधनम्, बलवदनिष्टाननुबन्धी च' इत्याकारको बोधः । ( श० प्र० श्लो० १०० । टी० पृ० १६६ )

१ तदर्थः—( १ ) आप्तस्य परमेश्वरस्य* अभिप्राय इच्छा लिङादिना बोध्यते । ( स्व० ) ( २ ) वक्त्रिच्छाविषयत्वम् । यथा—घटमानय † इत्यादौ लोडर्थो विधिः । ( तर्को० ४ । पृ० ११ ) ( श० प्र० श्लो० १०१ । टी० पृ० १६६ )

अत्रेदं बोध्यम्—"यजेत स्वर्गकामः," "न कलञ्जं भक्षयेत्" इत्यादौ,—'यागः स्वर्गकामकर्तव्यत्वेनाप्ताऽभिप्रायविषयः,' 'कलञ्जभक्षणं कर्तव्यत्वेनाऽऽप्ताभिप्रायविषयो न' इति वाक्यद्वयार्थबोधः । यागादौ चाप्ताभिप्रायविषयत्वेनेष्टसाधनत्वादिकमनुमाय प्रवृत्तिः । कलञ्जभक्षणादौ तद्विषयत्वाभावेनानिष्टसाधनत्वमनुमाय निवृत्तिः, इति । ( म० प्र० ४ । पृ० ५९ )

२ तन्मते त्वित्थम्—'गामानय' इत्याचार्यवाक्यश्रवणानन्तरं शिष्यप्रवृत्तिदर्शनात्, शब्दप्रवृत्तौ प्रवर्तनाज्ञानं हेतुः । सा च ( प्रवर्तना ) 'पचेत' इत्यादिलौकिकवाक्ये पुरुषनिष्ठोऽभिप्रायविशेषः । "यजेत स्वर्गकामः" इत्यादिवैदिकवाक्ये तु पुरुषाभावाच्छब्दनिष्ठैव । ( न चेश्वरकर्तृकत्वं वेदस्य; ईश्वरस्यैवानभ्युपगमात् ), शब्दनिष्ठत्वादेव च 'शब्दभावना' इत्युच्यते; सैव विध्यर्थः, स च लिङ्त्वेनाभिधीयते । अर्थभावना तु प्रवृत्त्यादिव्यापाररूपा; सा च आख्यातत्वेनोपस्थाप्यते‡ इति । ( म० प्र० ४ । पृ० ५८ )

अयमाशयः—'स्वर्गकामो यजेत' इत्यादौ—लिङादिप्रत्ययेंऽशद्वयमस्ति,—लिङ्त्वम्, आख्यातत्वं च । तत्र लिङ्त्वांशेन प्रवर्तनाख्यः शब्दनिष्ठो ( ईश्वरानभ्युपगमात् ) व्यापारो बोध्यते; अयं 'शब्दभावना' इत्युच्यते । तेन व्यापारेण च प्रवृत्त्याख्यो यागकर्तृपुरुषनिष्ठो व्यापार आख्यातत्वांशेन बोध्यमान उपस्थाप्यते; अयमेव 'अर्थभावना' इत्युच्यते । एवं च—पुरुष-

---

राग्रेण विद्धा ये पशुपक्ष्यादयः, तेषां यन्मांसं तदेव कलञ्जम्" इति । ( २ ) 'रक्तलशुनं कलञ्जम्, इति हरदत्त आह' इति स्मर्यते ।

* अत्रोक्तमुदयनाचार्यैः—यस्तु वेदे पौरुषेयत्वं ( ईश्वरप्रणीतत्वम् ) नाभ्युपैति, तं प्रति 'विधिरेव तावद्गर्भः श्रुतिकुमार्याः पुंयोगे' मानम्, इति (कि०व०)(मु०) (म०प्र०४ ) (त०कौ०)

† अत्र 'घटकर्मक-मदिच्छाविषया-नयनानुकूलकृतिमांस्त्वम्' इत्यन्वयबोधः। (तर्को०४।पृ०११)

‡ तत्रोक्तम्—"अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः" इति । ( म० प्र० ४ । पृ० ५८ )

[ ङ ] प्राभाकरास्तु,—[ A ] विध्यर्थः कार्यत्व[1]मात्रम् । तच्च कृतिसाध्यत्वम् । तथा हि—यद्विषयिणी बुद्धिः प्रवृत्तिजननीमिच्छां प्रसूते, स विधि[2]प्रत्ययप्रतिपाद्यः । प्रवृत्तिजननी च कृतिसाध्यत्वप्रकारकेच्छा; तज्जननी च कृतिसाध्यत्वप्रकारिका बुद्धिः, इति यावत् । ( न्या० म० ४ । पृ० २९ ) ( त० प्र० ख० ४ । पृ० ९९ ) [ B ] कार्यत्व[3]मेव विध्यर्थः, तच्च कृतिसाध्यत्वम् । तज्ज्ञान[4]मेव प्रवर्तकम् ।

---

निष्ठाया: प्रवृत्तेरनुकूलः प्रवर्तनाख्यः शब्दनिष्ठो व्यापारो विध्यर्थः, इति । ( लौ० भा० पृ० ५—१० )

१ अत्रेदमवधेयम्—प्राभाकरमते इष्टसाधनत्वमपि विध्यर्थो भवत्येव । अत एव—तैः, नित्यापूर्वं निषेधापूर्वरूपं पण्डापूर्वमपि "संध्यामुपासीत," "न कलञ्जं भक्षयेत्" ( स्मृतिः) इत्यादिविधि-निषेधयोः कल्प्यते । ( त० प्र० ४ पृ० ८९ )

अत्रेदमधिकं बोध्यम्—'प्रभाकरमतेऽन्यथाख्यातिर्नास्ति' इति ।

२ प्रवृत्तिजनकेच्छाजनकज्ञानप्रकारः, इत्यर्थः । ( त० प्र० ख० ४ । पृ० ९५ )

३ अयमाशयः—प्राभाकरमते,—कार्यत्वविशिष्टापूर्वस्य* विध्यर्थत्वाद्विशेषणांशः कार्यत्वमपि तदर्थः, इति । (म० प्र० ४ । पृ० ५९) । चिकीर्षाजन्यकृतिसाध्यत्वं कार्यत्वम् । (न्या० सि० दी० पृ० ६५ )

४ तच्च ( ज्ञानम् ) कृतिसाध्यत्वप्रकारकमित्यर्थः । तेन ज्ञानेन कृतिसाध्यत्वप्रकारिकेच्छा † जन्यते; तथा च प्रवृत्तिर्जन्यते । ( न्या० म० ४ )

तत्र प्राभाकरमतान्तर्वर्तिन एवमाहुः—कृतिसाध्यत्वप्रकारकज्ञानं च इष्टसाधनतालिङ्गककृतिसाध्यतानुमितिः, इष्टसाधनताज्ञानकालीनकृतिसाध्यताज्ञानं वा काम्यस्थले प्रवर्तकम् । नित्यस्थले च ("अहरहः संध्यामुपासीत" इत्यादौ),—'अहम्, इदानींतनकृतिसाध्यसंध्यावन्दकः, ब्राह्मणत्वे सति विहितसंध्याकालीनशौचादिमत्त्वात्' इति शौचादिमत्त्वप्रतिसंधानजन्यं कृतिसाध्यताज्ञानं प्रवर्तकम् , इति । ( म० प्र० ख० ४ । पृ० ५९ ) ( सि० च० )

---

* अत्रेदं बोध्यम्—(१)प्राभाकरमते,—यागस्याशुविनाशित्वेन स्वर्गोत्पत्तिकाले तस्याभावात्तदुत्पत्त्यर्थं यागजन्यमपूर्वं कल्प्यते । तथा च—वेदे कार्यत्वविशिष्टापूर्वसंभवेन तत्र शक्तिरेव । परं तु—लोके 'पचेत' इत्यादावपूर्वे तात्पर्यासंभवात् कार्यत्वे लक्षणैव । अथ वा—लौकिकलिङः कार्यत्वे शक्तिः; वेदे तु स्वर्गकामान्वयानुपपत्त्या क्रियातिरिक्तकार्ये शक्तिः । ( त० प्र० ख० ४ । पृ० ११९) । [ २ ] भट्टास्तु,—स्थाय्यपूर्वकल्पनापेक्षया यागस्यैव स्थायित्वं कल्पनीयम्, इत्याहुः ।

† सा च 'पाकं यागं वा कुर्याम्' इत्याकारिका चिकीर्षेत्यर्थः । ( न्या० म० ) ( म० प्र० पृ० ५९ )

'अहरहः संध्यामुपासीत' इत्यादौ,—नित्यतया निष्फले संध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्टसाधनत्वमपि लिङर्थोऽपूर्वविधिः, इत्याहुः । नैयायिकास्तु,—नित्यकर्मस्थलेऽपि अर्थवादाद्युपस्थापितब्रह्मलोकावाप्तेर्नरकात्यन्ताभावस्यैव वा प्रायश्चित्त-संध्यावन्दनादि-फलत्वसंभवादिष्टसाधनत्वमेव लिङर्थः, इति प्राहुः ।

**विधिशेषः**—( अर्थवादः ) 'स्तुतिः'शब्दवदस्यार्थोऽनुसंधेयः । ( लौ० भा० पृ० १४ )

**विधेयः**—१ उद्देश्ये प्रकारतया ज्ञायमानो विलक्षणविषयतावान् पदार्थः । यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ–पर्वते वह्निर्विधेयः । यथा वा–'पचति' इत्यादौ,–पुरुषे पाककृतिर्विधेया । २ मीमांसकास्तु,–विधिबोध्यार्थः । यथा–"दध्ना जुहोति" इति गुणविधौ,–होममनूद्य दधिरूपो गुणो विधेयः । ३ अधीनः, इति काव्यज्ञा आहुः ।

**विनश्यदवस्थत्वम्**—स्वप्रतियोगित्व-स्वाव्यवहितपूर्ववृत्तित्व-एतदुभयसंबन्धेन नाशविशिष्टत्वम् । यथा–भावकार्यस्य विनश्यदवस्थत्वम् ।( स्व० )

---

१ तत्र स्मर्यते—"संध्यामुपासते ये तु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्" इत्यादि ( त० प्र० ४ । पृ० १०२ )। तथोक्तं याज्ञवल्क्येनापि—"निशायां वा दिवा वाऽपि यदज्ञानकृतं भवेत् । त्रैकाल्यसंध्याकरणात्तत्सर्वं विप्रणश्यति" इति ( याज्ञ० अ०३ । श्लो० ३०८ )। मिताक्षरायां यमेनापि—" यदह्नात्कुरुते पापं कर्मणा मनसा गिरा । आसीनः पश्चिमां संध्यां प्राणायामैर्निहन्ति तत्" इति । शातातपेनाप्युक्तम्—"अनृतं मद्यगन्धं च दिवा मैथुनमेव च । पुनाति वृषलान्नं च संध्या बहिरुपासिता" इति । ( मिताक्ष० अ० ३ । श्लो० ३०८ । टी० पृ० १४४ )

२ सा च विधेयतारूपा । विधेयता च, यथा–[क] 'वह्निमनुमिनोमि' इत्याद्यनुव्यवसायनियामकः पक्षतावच्छेदकव्यावृत्तो विषयताविशेषः । (ग० पक्ष० पृ० १९) [ ख ] केचित्तु,–प्रत्यक्षादिसाधारणी विशेष्यतावच्छेदकताभिन्ना मुख्यविशेष्यतानिरूपितप्रकारतैव विधेयता, इत्याहुः । ( ग० पक्ष० पृ० २४ ) ( श० प्र० ) [ ग ] शाब्दिकास्तु,—( १ ) तदादिशब्दप्रतिपाद्यत्वे सत्युद्देश्यसंबन्धित्वेनापूर्वबोधविषयत्वम् । ( २ ). अनुवाद्यभिन्ननिष्ठा* विलक्षणविषयता विधेयता, इत्याहुः ।

३ अत्र—विधेयत्वं च, अज्ञातस्यानुष्ठेयत्वेन प्रतिपाद्यमानत्वम् । ( लौ० भा० टी० पृ० १५ )

---

* अत्रोक्तम्—"अनुवाद(द्य)मनुक्त्वा च न विधेयमुदीरयेत्" इति ।

**विनष्टः**—१ भूतकालोत्पत्तिकनाशप्रतियोगी । यथा–'विनष्टो घटः' इत्यादौ । २ पतितः । ३ स्वदेशादन्यत्र गतः, इति च धर्मशास्त्रज्ञा आहुः । ( दायभागे )

**विना**—[ १ ] अभावः । यथा–'दण्डं विना न घटः' इत्यादौ । (ग० व्यु० का० २ । ख० २ । पृ० ७३ ) [ २ ] वर्जनम्, इति काव्यज्ञा आहुः ।

**विनाशित्वम्**—ध्वंसप्रतियोगित्वम् । यथा–घटस्य विनाशित्वम् । (स्व०)

**विनिगमना**—अन्यतरपक्षपातिनी युक्तिः । ( सि० च० ) ( भवा० ) (त० प्र० ख० ४ । पृ० ४७–४८) यथा–'अयमेव पक्षो ग्राह्यः, पक्षान्तरं तु न ग्राह्यम्' इत्यत्र विनिगमना । यथा वा–"उदिते जुहोति, अनुदिते जुहोति" इत्यादिविकल्पस्थले–'उदित एव हवनं कार्यम्, अनुदिते तु हवनं न कार्यम्' इत्यत्र विनिगमनाभावः, इत्याद्यूह्यम् ।

**विनिमयः**—१ [ १ ] [ क ] तुल्यद्रव्यदानेन द्रव्यान्तरग्रहणम् । ( शब्दच० ) यथा–कांस्यपात्रद्वयं दत्वा तस्मात्ताम्रपात्रग्रहणं विनिमयः । [ ख ] मूल्यातिरिक्तद्रव्यग्रहणप्रयुक्तस्वस्वत्वध्वंसपरस्वत्वानुकूलस्त्यागः, इत्यन्य आहुः । ( का० व्या० का० ४ । पृ० ६ )

---

१ तदुक्तं नारदेन—"विनष्टे वाऽप्यशरणे पितर्युपरतस्पृहे" इति ।

२ एवम्—"ऋते" "अन्तरेण" इति निपातयोरप्यर्थ ऊह्यः । ( ग० व्यु० का० २ । ख० २ । पृ० ७३ )

३ अत्र–प्रतियोगित्वमनुयोगित्वं वा द्वितीयार्थः; तस्य च विनार्थेऽभावेऽन्वयः; विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासंबन्धेनैवान्वयः । अत एव—'रासभं विना न घटः' इत्यादयो न प्रयोगाः । ( ग० व्यु० का० २ । ख० २ । पृ० ७३ )

४ अत्रेदमवधेयम्—[ १ ] आशुविनाशित्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । यथा–यागस्याशुविनाशित्वम् । ( त० प्र० ख० ४ । पृ० १०९ ) [ २ ] बौद्धास्तु,—पदार्थमात्रस्य स्वोत्पत्तिद्वितीयक्षण एव नाशाभ्युपगमात्, द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वमेव सर्वत्र विनाशित्वम्, इत्याहुः ।

५ यथा हि—'स्मृतिं प्रत्यनुभवस्यानुभवत्वेन कारणत्वं ज्ञानत्वेन वा ?' इति विप्रतिपत्तौ—ज्ञानत्वेन कारणत्वाङ्गीकारे तस्य 'सामान्यधर्मत्वेनान्यथासिद्धत्वं स्यात्,' इति विनिगमनया लाघवेन च ज्ञानत्वेनैव कारणत्वं नव्यैः साधितम् । ( मु० स्मृतिनि० पृ० १९० )

[ २ ] बन्धकम्[1], इतिव्यवहारशास्त्रज्ञा आहुः । २ [ १ ] मध्वमतानुयायिवेदान्तिनः,—कार्यम् । यथा—"तेजोवारिमृदां यथा विनिमयः" ( भाग० १ । १ । १ ) इत्यादौ, इत्याहुः ।

[ २ ] अन्यास्मिन्नन्यावभासो विनिमयः, इति मायावादिवेदान्तिन आहुः ।

**विनियोगः**—१ क्रियासु प्रवर्तनम्[2] । यथा—" इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके " (ऋ० १।२।१९) इति मन्त्रस्य संस्काराङ्गहोमे विनियोगः । यथा वा—"अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः" इत्यस्य समस्तभूतोच्चाटने विनियोगः । २ अनुष्ठानक्रमविधानम् । यथा—"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च" ( योगयाज्ञ० ) इत्यादौ ।

**विनियोगविधिः**[3]—( विधिः ) [ क ] प्रधानेऽङ्गसंबन्धबोधको विधिः । यथा—"दध्ना जुहोति"[4] इति । ( शतपथ० )

[ ख ] अङ्गानां प्रधानैः सह संबन्धस्य बोधको विधिः । यथा—"दध्नौ[5] जुहोति" इति । ( लौ० भा० पृ० १६ )

**विपक्षः**[6]—१ [ क ] निश्चितसाध्याभाववान् । यथा—पर्वते वह्निसाधने ह्रदो विपक्षः । ( त० सं० २ )

---

१ तत्र, ऋणशोधनार्थं विश्वासहेतुतयाऽऽधीकृतः पदार्थः ।

२ तदुक्तम्—"अनेनेदं तु कर्तव्यं विनियोगः प्रकीर्तितः" इति । ( वाच० )

३ विनियोगविधेः सहकारिभूतानि षट् प्रमाणानि सन्ति—श्रुतिः, लिङ्गम्, वाक्यम्, प्रकरणम्, स्थानम्, समाख्या, इति । ( लौ० भा० पृ० १६–२९ ) एतत्सहकृतेनानेन विधिनाऽङ्गत्वं परोद्देश्यप्रवृत्तकृतिसाध्यत्वरूपपाराध्यापरपर्यायं ज्ञाप्यते ।

४ अत्र—अग्निहोत्रहोमे दधिसंबन्धोऽनेन बोध्यते । ( म० प्र० ४ । पृ० ६२ )

५ स हि, तृतीयया प्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते,—'दध्ना होमं भावयेत्' इति । गुणविधौ च धात्वर्थस्य साध्यत्वेनैवान्वयः*। क्वचिदाश्रयत्वेनापि । यथा—"दध्नेन्द्रियकामस्य जुहुयात्" इति । अत्र—'होमाश्रयदधिकरणत्वेनेन्द्रियं भावयेत्' इति वाक्यार्थः । 'तत्र ( दधिकरणत्वम् ) किंनिष्ठम्?' इत्याकाङ्क्षायां संनिधिप्राप्तहोम आश्रयत्वेनान्वेति । ( लौ० भा० पृ० १६ )

६ निष्कृष्टलक्षणं च विपक्षत्वम् । तत्र, [ क ] साध्याभावप्रकारकनिश्चयविशेष्यत्वम् । ( न्या० बो० २ ) [ ख ] विशेष्यतासंबन्धेन साध्याभावप्रकारकनिश्चयवत्त्वम् । ( वाक्य० २ )

---

* तथा च—धात्वर्थस्य साध्यत्वेनान्वयविवक्षायामयं गुणविधिरपि भवति, इति ज्ञेयम् ।

[ ख ] वेदान्तिनस्तु,—साध्य-तत्समानधर्म-रहितो धर्मी, इत्याहुः । ( प्र० च० पृ० २४ ) । २ प्रतिकूलपक्षः, इतिव्यवहारज्ञा आहुः । ३ शत्रुः, इति काव्यज्ञा आहुः । ( अमरः )

**विपरीतज्ञानम्**—१ 'संशय'शब्दवदस्यार्थोऽनुसंधेयः । ( नील० ) । २ 'भ्रम'शब्दवदस्यार्थोऽनुसंधेयः ।

**विपर्ययः**—१( अप्रमा ) [ १ ] [ क ] 'भ्रम'शब्दवदस्यार्थोऽनुसंधेयः । ( गौ० वृ० ४ । ३ )

[ ख ] वेदान्तिनस्तु,—विपरीतनिश्चयः ( प्र० प० पृ० ४ ) । स च प्रत्यक्षानुमानागमाभासेभ्यो जायते । तत्र प्रत्यक्षाभासजो यथा—शुक्तिकायां 'इदं रजतम्' इत्यादि । अनुमानाभासजो यथा—धूलीपटले धूमभ्रमात् वह्न्यभाववति वह्न्यनुमितिः । आगमाभासजो यथा—'नदीतीरे पञ्च फलानि सन्ति' इति प्रतारकवाक्यजन्यज्ञानम्, इत्याहुः । ( प्र० च० पृ० ८–९ )

[ ग ] पातञ्जलास्तु,—पञ्चविधवृत्त्यन्तर्गतो वृत्तिविशेषः, इत्याहुः । ( पात० सू० पा० १ । सू० ६–८ ) [ २ ] संशयः । २ विपरीतम् । यथा—"विपर्ययोऽभूत्सकलं जलौकसः" ( भाग० स्क० ८ । अ० २ । श्लो० २९ ) इत्यादौ ।

**विपाकः**—अन्यथाभूतस्यान्यरूपेण परिणामः । ( वाच० )

**विप्रः**—१ विद्वान् ब्राह्मणः । यथा—"विप्राय वेदविदुषे श्रोत्रियाय

---

१ अत्र—'अयथार्थज्ञानमेव नास्ति' इति प्राभाकरादय आहुः । ( प्र० प० पृ० ४ )

२ अत्र विपरीतत्वं च, पुरोवर्तिन्यविद्यमानप्रकारकत्वम् ।( प्र० प० टी० वेदेशतीर्थी० पृ० १० )

३ अत्र विप्रतिपत्तिः—( १ ) 'प्रतीतं रजतं देशान्तरे सदेव' इति वैशेषिकादय आहुः । ( २ ) 'ज्ञानस्वरूपमेव' इति विज्ञानवादिन आहुः । ( ३ ) 'तत्रैव तात्कालिकमुत्पन्नं सत्' इति भास्कर आह । ( ४ ) 'न सत्, नासत्, न सदसत्, किं तु—अनिर्वचनीयमेव' इति मायावादिनो मन्यन्ते । ( ५ ) आचार्यास्तु ( श्रीमदानन्दतीर्थाचार्याः ),—'असदेव रजतं प्रत्यभात्' इत्युत्तरकालीनानुभवात्, 'शुक्तिरेवात्यन्तासद्रजतात्मना ( द्रष्टुर्दोषवशात् ) प्रतिभाति' इति प्राहुः । ( प्र० प० पृ० ४ )

४ अत्रोक्तम्—"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते" इति । ( प्रा० वि० ) ( वाच० )

कुटुम्बिने । नरकोत्तारणार्थाय अच्युतः प्रीयतामिति" ( वायनमन्त्रः ) इत्यादौ, विप्रः । २ अश्वत्थवृक्षः । ( राजनि० )

**विप्रकर्षः**—१ [ क ] संयुक्तसंयोगभूयस्त्वम् ( दूरत्वम् ) । ( वै० उ० ७ । २ । २१ )

[ ख ] बहुतरसंयोगान्तरितत्वम् । ( दि० गु० पृ० २०८ )। यथा— मुम्बापुर्याः पुण्यग्राममपेक्ष्य झळकीग्रामस्य विप्रकर्षः । ( स्व० ) । २ तदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्मत्वम् । ( वै० उ० ७ । २ । २१ ) यथा—गोतमर्षेरुदयनाचार्यमपेक्ष्य गङ्गेशोपाध्याय-गदाधर-भट्टाचार्ययोर्विप्रकर्षः । शिष्टं च 'परत्व'शब्दव्याख्याने दृश्यम् ।

**विप्रकृष्टत्वम्**—[ क ] 'विप्रकर्ष'शब्दवदस्यार्थोऽनुसंधेयः ।

[ ख ] दूरस्थत्वम्, इत्येकदेशिन आहुः ।

**विप्रतिपत्तिः**—१ [ १ ] [ क ] व्याहतमेकार्थदर्शनं विप्रतिपत्तिः । ( वात्स्या० १ । १ । २३ )

[ ख ] वेदान्तिनस्तु,—विरुद्धार्थकवाक्यद्वयजन्यप्रतीतिद्वयम्, इत्याहुः । (प्र० प० टी० वेदेशतीर्थी० पृ० ८ )। [ २ ] [ क ] विरुद्धकोटिद्वयोपस्थापकः शब्दः । ( गौ० वृ० १ । २३ ) ( दि० गु० )

[ ख ] विरुद्धार्थप्रतिपादकवाक्यद्वयम् । ( नील० ४ । पृ० ३४ ) यथा—'पर्वतो वह्निमान्, न वा' इति वाक्यद्वयम् । (स्व०) । २ [ क ]

---

१ विप्रकर्षो द्विविधः,—दिक्कृतः, कालकृतश्च । विप्रकर्षज्ञानं परत्वे निमित्तकारणं भवति ।

२ अयं दिक्कृतो विप्रकर्षः, इति विज्ञेयम् ।

३ तदर्थश्च, तज्जन्मक्षणवृत्तिध्वंसप्रतियोगिस्पन्दवृत्तित्वे सति जन्मवत्त्वम्, इति । ( प० मा० ) अयं च कालकृतो विप्रकर्षः, इति बोध्यम् ।

४ इदं च संशयप्रयोजकम् । तथा हि—अत्र—"व्याघातो विरोधोऽसहभाव इति । 'अस्त्यात्मा' इत्येकं दर्शनम्, 'नास्त्यात्मा' इत्यपरम् । न च, सद्भावासद्भावौ सहैकत्र संभवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशयः, इति" । ( वात्स्या० १ । १ । २३ )

५ स च विरुद्धार्थप्रतिपादकवाक्यद्वयात्मकः 'पर्वतो वह्निमान्, न वा' इति संशयापादकः ।

६ तथा हि—वादिना 'पर्वतो वह्निमान्' इति, प्रतिवादिना च 'पर्वतो वह्न्यभाववान्' इति

विपरीता वा कुत्सिता वा प्रतिपत्तिः विप्रतिपत्तिः[1]। विप्रतिपद्यमानः पराजयं प्राप्नोति। निग्रहस्थानं खलु पराजयप्राप्तिः। ( वात्स्या० १। २। १९ )

[ ख ] विरुद्धा प्रतिपत्तिः। गौ० वृ० १। १९ ) (दि० गु० ) २ विरोधः। ४ ऊहः, इति याज्ञिका आहुः। ( कात्या० श्रौ० )

**विप्रतिषेधः**—१ तुल्यबलविरोधः। यथा—"प्रतिषेधविप्रतिषेधे[3] प्रतिषेधवद्दोषः" ( गौ० ५। ४१ ) इत्यादौ। तथा हि—'शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्' इति स्थापनावादिनः प्रथमः पक्षः। 'प्रयत्नकार्यानेकत्वात्कार्यसमः' इति प्रतिवादिनो द्वितीयः पक्षः। 'प्रतिषेधप्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यम्' इति वादिनस्तृतीयः पक्षो विप्रतिषेधः। तत्रापि 'तथैवानैकान्तिकत्वम्, तत्समानदोषोद्भावनं वा' चतुर्थः पक्षः, इति। ( गौ० वृ० ५। ४१ )। २ शाब्दिकास्तु—द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र प्रयोगे युगपदसंभविस्वकार्यसमर्पणम्। यथा—"विप्रतिषेधे[4] परं कार्यम्" ( पा० सू० १। ४। २ ) इत्यादौ, इति वदन्ति।

---

प्रतिज्ञाते मध्यस्थस्य 'पर्वतो वह्निमान् न वा' इति संशय उत्पद्यते। अतस्तस्य संशयाधायकत्वात्तथात्वम्।

१ इयं तु निग्रहस्थानोन्नेया, इति विज्ञेयम्। ( गौ० वृ० १। ५९ )

२ अत्रोदाह्रियते—"परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिषु" इति। ( स्मृतिः )

३ अत्र भाष्यम्—"योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापद्यते, सोऽयं प्रतिषेधस्य प्रतिषेधेऽपि समानः। तत्र 'अनित्यः शब्दः प्रयत्नान्तरीयकत्वात्' इति साधनवादिनः स्थापना प्रथमः पक्षः। 'प्रयत्नकार्यानेकत्वात् कार्यसमः' इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः, स च 'प्रतिषेध' इत्युच्यते। 'तस्यास्य प्रतिषेधेऽपि समानो दोषः' इति तृतीयः पक्षः 'विप्रतिषेध' उच्यते। 'तस्मिन् प्रतिषेधविप्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वम्' चतुर्थः पक्षः। ( वात्स्या० ५। १। ४१ )

४ तथा हि—वृक्षेभ्य इत्यत्र "सुपि च" इत्यनेन दीर्घः प्राप्तः; "बहुवचने झल्येत्" इत्यनेन च एत्वमपि प्राप्तम्। उभयप्राप्तौ परत्वात् विप्रतिषेधेनैत्वमेव भवति, इति। ( काशिका, १। ४। २ )

**विभक्तिः**—१ 'विभाग'शब्दस्य तृतीयोऽर्थोऽनुसंधेयः । २ पदवृत्तिः । ( गौ० वृ० २ । १ । २३ ) यथा—"ते विभक्त्यन्ताः पदम्" ( गौ० २ । २ । ६० ) इत्यादौ 'विभक्ति' शब्दार्थः । ३ ( प्रत्ययः ) [ क ] संख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान् यः प्रत्ययः, सा विभक्तिः । यथा—घटोऽस्तीत्यत्र घटपदोत्तरवर्तिनी 'सु' इति विभक्तिः ।

[ ख ] यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थविधेयकान्वयबोधं प्रति समर्थः, स वै विभक्तिरित्युच्यते । यथा—घटम्, घटे इत्यादौ । ( १ )—इयं विभक्तिर्द्विविधा,—सुप्, तिङ् चेति । ( श० प्र० श्लो० ६०—६१ । पृ० ८३ ) । ( २ )—विभक्तिर्द्वयी,—नामिकी ( सुप् ), आख्यातिकी ( तिङ् ) च । ब्राह्मणः, पचतीत्युदाहरणम् । उपसर्गनिपातास्तर्हि न पदसंज्ञाः । लक्षणान्तरं वाच्यमिति । शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः, तयोः पदसंज्ञार्थमिति । ( वात्स्या० २ । २ । ६० )

**विभजनम्**—[ क ] सामान्यधर्मावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनम् । ( ग० २ । सव्य० )

[ ख ] सामान्यधर्मस्य साक्षान्न्यूनवृत्तियावद्धर्मप्रकारकज्ञानानुकूलो व्यापारः ।

---

१ अत्रोदाह्रियते—"अविभक्तं स्थावरं यत् सर्वेषामेव तद्भवेत् । विभक्तं स्थावरं प्राप्य नान्योदर्यैः कथंचन" इति । ( यम० )

२ एकत्वत्वाद्यवच्छिन्नशक्तिमानपि तदादिर्न प्रत्ययः; इति; प्रत्ययश्च तृजादिर्न संख्याशक्तः; इति; च तयोः ( तदादेः, तृजादेश्च ) व्युदासः । ( श० प्र० श्लो० ६० । टी० पृ० ८३ )

३ लक्षणान्तरग्रहणे आवश्यकत्वमाह—यद्याख्यातमात्रस्य तदेकवचनस्य वा न संख्याशक्तत्वे प्रमाणम्, तदेदं लक्षणान्तरम्, इत्यवधेयम् । ( श० प्र० श्लो० ६१ । पृ० ८३ )

४ अत्र—सुपा (अमा) 'कर्मत्वं घटीयम्' इत्यादिरिव, पचतीत्यादौ तिङापि 'कृतिः पाकीया' इत्यादिरुद्देश्यविधेयभावेन स्वार्थे प्रकृत्यर्थस्य धीरुत्पाद्यते, इति लक्षणसमन्वयो बोध्यः । ( श० प्र० श्लो० ६१ । पृ० ८३ )

५ अत्र,—प्रथमाऽप्यभेदादौ स्वार्थे प्रकृत्यर्थस्य विधेयभावेन धियं जनयत्येव, इति लक्षणसमन्वयो बोध्यः । ( श० प्र० श्लो० ६१ । पृ० ८४ )

६ स्वसमभिव्याहृतपदार्थतावच्छेदकसाक्षाद्व्याप्य-परस्परविरुद्धधर्म-प्रकारकज्ञानानुकूलशब्दप्रयोगः, इत्यर्थः ।

( वाक्य० १ । पृ० २ ) यथा—'द्रव्यं विभजते' इति प्रतिज्ञाय कृतं 'पृथिव्यापस्तेजो वायुराकाशम्' इत्यादिविभजनम् । ( स्व० )

[ ग ] सामान्यधर्मयुतानां बहूनां परस्परविरुद्ध-तद्व्याप्य-धर्मप्रकारेण प्रतिपादनम् । ( श्रीकृष्णः ) ( वाच० )

विभवः—१ 'विभुत्व' शब्दवदस्यार्थोऽनुसंधेयः । ( वै० उ० ७ । १ । २२ ) यथा—"विभवान्महानाकाशस्तथा चात्मा" ( वै० ७ । १ । २२ ) इत्यादौ । २ रामाद्यवतारो विभवः, इति रामानुजीया वदन्ति । ( सर्व० रामा० पृ० ९४ )। ३ संवत्सरविशेषः, इति मौहूर्तिका वदन्ति। ४ मोक्षः, इति वेदान्तिन आहुः । ५ ऐश्वर्यम्, इति काव्यज्ञा आहुः ।

विभागः—१ ( गुणः ) [ क ] संयोगनाशको[1] गुणः । स च सर्वद्रव्यवृत्तिः, अव्याप्यवृत्तिश्च । ( नील० ) ( त० सं० )

[ ख ] विभक्तव्यवहारासाधारणकारणम् । ( मु० गु० पृ० २०७) (प्र० प्र० )

[ ग ] विभक्तप्रत्ययनिमित्तम् । स च प्राप्तिपूर्विकाऽप्राप्तिः । ( प्रशस्त० गु० पृ० ३२ )

[ घ ] विभागत्वसामान्यवान्[2] । ( त० कौ० ) स द्विविधः,—कर्मजः, वि[3]भागजश्च । ( त० दी० ) तत्र कर्मजो द्विविधः,—अन्यतरकर्मजः,

---

१ 'प्रतियोगितासंबन्धानवच्छिन्न*-नाशनिष्ठजन्यता-निरूपितजनकतावान्' इत्यर्थः, इति केचिदाहुः । परे तु,—'संयोगनाशत्वावच्छिन्ननिरूपितसमवायावच्छिन्न*-कारणतावान्' इत्यर्थः, इत्याहुः । ( नील० १ । पृ० १४ )

२ 'अयमस्माद्विभजते' इति प्रत्यक्षसिद्धोऽयं विभागगुणः, संयोगनाशेन नान्यथासिद्धः, इति ज्ञेयम् । ( वै० वि० ७ । २ । १० । पृ० ३३२ ) अत्राधिकं च "एतेन विभागो व्याख्यातः" ( वै० ७ । २ । १० ) इति सूत्रोपस्कारे दृश्यम् ।

३ अत्र भाष्यम्—"विभागः शब्द-†विभाग-हेतुर्भवति" इति । ( प्रशस्त० गु० पृ० ३२ )

---

* तेन, संयोगस्यापि स्वनाशं प्रति प्रतियोगिविधया कारणत्वेऽपि संयोगे नातिव्याप्तिः, इति विज्ञेयम् । ( नील० १ । पृ० १३—१४ )

† विभागः शब्दस्यापि हेतुर्यथा—वंशे उत्पाट्यमाने यः 'चटचट'शब्दः, स विभागजन्यः ।

द्विकर्मजश्च । तत्राद्यः श्येनशैलयोर्विभागः । द्वितीयो मेषयोर्विभागः । विभागजोऽपि द्विधा,—कारणमात्रविभागजन्यः, कारणाकारणविभागजन्यश्च । तत्रादिमो यथा—कपालद्वयविभागात्कपालपूर्वदेशविभागः । द्वितीयस्तु यथा—हस्तपुस्तकविभागात्कायपुस्तकविभागः, इति । ( भा० प० गु० श्लो० १२०–१२१ )

अत्र,—[ A ] विनाशस्तु सर्वस्य विभागस्य क्षणिकत्वात्, उत्तरसं-

१ अत्र चैवं विज्ञेयम्—कार्याविष्टे ( कार्यव्याप्ते ) कारणे कर्मोत्पन्नं यदा तस्यावयवान्तराद्विभागं करोति, न तदाऽऽकाशादिदेशात् । यदा त्वाकाशादिदेशाद्विभागं करोति, न तदाऽवयवान्तरात्, इति स्थितिः । ( सर्व० औलू० ) ( त० व० पृ० २२४ ) ( प्रशस्त० गु० पृ० ३२ ) तथा च—प्रथमं यत्रैककपाले कर्म, ततः कपालद्वयविभागः, ततो घटारम्भकसंयोगनाशः, ततो घटनाशः, ततस्तेनैव कपालद्वयविभागेन सकर्मणः कपालस्याकाशादिना विभागो जायते, ततः कपालाकाशादिसंयोगनाशः, तत उत्तरदेशसंयोगः, ततः कर्मनाशः, इति । ( मु० गु० पृ० २०७ ) ( वै० वि० ७ । २ । १० )

२ तत्र कायकारणस्य हस्तस्य, तदकारणस्य पुस्तकस्य च विभागेन, हस्तकार्यस्य कायस्य तदकार्यस्य पुस्तकस्य च विभागः, इति ज्ञेयम् । ( त० व० )

अत्रेदमाकूतम्—[ क ] यदा हस्ते कर्मोत्पन्नमवयवान्तराद्विभागमकुर्वदाकाशादिदेशेभ्यो विभागानारभ्य प्रदेशान्तरे संयोगानारभते, तदा ते कारणाकारणविभागाः कर्म यां दिशं प्रति कार्यारम्भाभिमुखं तामपेक्ष्य कार्याकार्यविभागानारभन्ते । तदनन्तरं कारणाकारणसंयोगाच्च कार्याकार्यसंयोगान्, इति; यदि कारणविभागानन्तरं कार्यविभागोत्पत्तिः; कारणसंयोगानन्तरं कार्यसंयोगोत्पत्तिः । ( सर्व० औलू० पृ० १०९–११० ) ( प्रशस्त० गु० पृ० ३३ ) [ ख ] यत्र हस्तक्रियया हस्ततरुविभागः, तेन शरीरतरुविभागो जायते; तत्र च ( शरीरतरुविभागे ) हस्तक्रिया न कारणम्; व्यधिकरणत्वात्; शरीरे तु तदा क्रिया नास्ति; अवयवक्रियाया यावदवयवक्रियानियतत्वात् । अतस्तत्र कारणाकारणविभागेन कार्याकार्यविभागो जन्यते, इति । अत एव—विभागो गुणान्तरम्; अन्यथा, शरीरे विभक्तप्रत्ययो न स्यात्, इति ( वै० वि० ७ । २ । १० ) ( मु० गु० पृ० २०८ ) विस्तरश्च, ( प्रशस्त० गु० पृ० ३२–३५ ) ( वै० उ० ७ । २ । १० ) ( सर्व० औलू० ) ( त० व० २२४ ) तत्रानुसंधेयः ।

तत्र वंशदलद्वया-ऽऽकाश-विभागोऽसमवायिकारणम्, वंशदलद्वयविभागो निमित्तकारणम्, इति विज्ञेयम् । ( त० कौ० गु० पृ० १९ )

विभागस्य विभागहेतुत्वं तु समनन्तरमेव वक्ष्यते, इति ।

योगावधिसद्भावात् । क्वचित्,—आश्रयविनाशादेव[1] विनश्यति, इति । ( प्रशस्त० गु० पृ० ३४ )

[ B ] विभागश्च क्षणत्रयावस्थायी भवति । स च, क्वचित्—उत्तरदेशसंयोगात्, क्वचिदाश्रयनाशात्, क्वचिदुभाभ्यां च नश्यति चेति । ( त० व० २०७ ) ( त० दी० ) ( सि० च० ) ( प्रशस्त० पृ० १८ )

२ 'विभजन'शब्दवदस्यार्थोऽनुसंधेयः । ( वाक्य० पृ० २ )

३ [ क ] व्यवहारशास्त्रज्ञास्तु,—द्रव्यसमुदायविषयाणामनेकस्वाम्यानां तत्तदेकदेशे व्यवस्थापनम् । ( मिताक्षरा–अ० २ । श्लो० ११६ । टी० पृ० ६१ ) यथा–"विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् । ज्येष्ठं वा श्रेष्ठभागेन[2] सर्वे वा स्युः समांशिनः" ( याज्ञ० अ० २ । श्लो० ११७ ) इत्यादौ, इत्याहुः । ( वीरमित्रो० अ० २ । पृ० ५२२ )

[ ख ] अन्ये व्यवहारशास्त्रज्ञास्तु,—पूर्वस्वामिस्वत्वनाशोत्तरं तत्संबन्धाधीनत्वेन जातस्वत्वस्य व्यञ्जको व्यापारविशेषः, इत्याहुः । ( वाच० )

**विभाजकोपाधिः**—सामान्यधर्मसाक्षाद्व्याप्यो[3] धर्मः । ( मू० म० ) यथा–ज्ञानविभाजकोपाधिर्भ्रमत्वं प्रमात्वं च । यथा वा–द्रव्यविभाजकोपाधिः पृथिवीत्व-जलत्व-तेजस्त्वादिः । ( स्व० )

**विभुत्वम्**—१ [ क ] सर्वगतत्वम्[4] । ( गौ० वृ० ४ । ८७ )

---

१ तथा हि—यदा द्वितन्तुककारणावयवेंऽशौ कर्मोत्पन्नमंश्वन्तराद्विभागमारभते, तदैव तन्त्वन्तरेऽपि कर्मोत्पद्यते; विभागाच्च तन्त्वारम्भकसंयोगविनाशः, तन्तुकर्मणा तन्त्वन्तराद्विभागः क्रियते, इत्येकः कालः । ततो यस्मिन्नेव काले विभागात्तन्तुसंयोगविनाशः, तस्मिन्नेव काले संयोगविनाशात्तन्तुविनाशः । तस्मिन्विनष्टे तदाश्रितस्य तन्त्वन्तरविभागस्य विनाशः, इति । ( प्रशस्त० गु० पृ० १९ )

२ श्रेष्ठादिविभागश्च मनुनोक्तः—"ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् । ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः" इति ( मनु० अ० ९ । श्लो० ११२ ) ( आपस्त-सू० २ । ६ । १४ । ७ )

३ अत्र—साक्षाद्व्याप्यत्वं च तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम् ।

४ अत्रायं नियमः—'विभुकार्यं स्वासमवायिकारणावच्छिन्नदेशे उत्पद्यते' इति । ( वै० उ० ३ । २ । १ ) । विभुद्वयसंयोगश्च सिद्धान्ते नाङ्गीक्रियते; अन्यथा,—सुषुप्तिर्न प्राप्नुयात् ।

[ ख ] परममहत्परिमाणवत्त्वम् । ( मु० १ )

[ ग ] मूर्तेतरद्रव्यत्वम् । ( त० प्र० १ )

[ घ ] सर्वमूर्तद्रव्यसंयोगित्वम् । यथा—आकाशस्य विभुत्वम् । ( त० दी० १ । पृ० १० ) ( वाक्य० १ । पृ० ९) ( न्या० बो० १ । पृ० ३ )। २ ईशत्वादिगुणविशिष्टत्वम्, इति वेदान्तिप्रभृतय आहुः ।

**विभुविशेषगुणत्वम्**—'अकारणगुणोत्पन्नगुणत्व' शब्दवदस्यार्थोऽनुसंधेयः। ( भा० प० गु० श्लो० ९९ ) ( प० मा० )

**विमतम्**—१ [ १ ] वादिप्रतिवादिनोर्विवादविषयीभूतम् । यथा—'विमतम् ( जगत् ) मिथ्या, दृश्यत्वात्, जडत्वात्, परिच्छिन्नत्वाद्वा, शुक्तिरजतवत्' इत्यादौ । [ २ ] विरुद्धमतियुक्तम् । यथा—'विमतम् ( मायावादिमतम् ) अनारम्भणीयम्, अन्यथाप्रतिपादकत्वात्, बौद्धादिशास्त्रवत्' इत्यादौ ( मायावादख० ) । २ संदिग्धम् ।

**विमर्शः**—१ विरोधविषयकं ज्ञानम् । यथा—"विमर्शः संशयः" ( गौ० १ । १ । २३ ) इत्यादौ । २ विचारः, इति काव्यज्ञा वदन्ति । ३ नाटकाङ्गसंधिविशेषः, इति नाटकलक्षणज्ञा आहुः । ४ वितर्कः । ( हेमच० )

**विमोक्षः**—[ १ ] 'निःश्रेयस'शब्दवदस्यार्थोऽनुसंधेयः । यथा—"निखिललोकविमोक्षमुख्योपायम्" ( न्या०म० १) इत्यादौ । (त० प्र०१ )। [ २ ] मोचनम् ।

**विरहः**—१ अत्यन्ताभावः । यथा—"अथ वा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते" (भा० प० २। श्लो०७०) इत्यादौ । यथा वा—"अभावविरहात्मत्वं वस्तुनः प्रतियोगिता"

---

१ विभवश्चत्वारः—आकाशः, कालः, दिक्, आत्मा चेति । ( भा० प० श्लो० २६ )

२ अत्र मायावादिमतसिद्धानुमाने,—जगतः सत्यत्वमिथ्यात्वाभ्यां विवादः ( विप्रतिपत्तिः ) ।

३ तदुक्तम्—"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः । शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः" इति । ( सा० द० परि० ६ । श्लो० ३३६ )

( कु० ३ । १ ) इत्यादौ । ( ख० ) २ शृङ्गाररसस्य विप्रलम्भाख्यो-ऽवस्थाविशेषः, इति रसिकजना वदन्ति ।

**विरामः**—१ [ क ] प्रागभावसाधारणकृत्यभावस्यानुकूलो व्यापारः । यथा—धर्माद्विरमतीत्यादौ विरमतेरर्थः ।

[ ख ] जीवनकालावच्छिन्नः कृत्यसमानाधिकरणकृतिध्वंसः, इति केचिदाहुः ( ल० म० सुबर्थ० कार० ५ । पृ० १०८ ) । २ वर्णाभावः, इति शाब्दिका आहुः । ३ विरतिः । ४ निवृत्तिश्च, इति काव्यज्ञा आहुः ।

**विरुद्धः**—( हेत्वाभासः ) [ १ ] सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः । ( गौ० १ । २ । ६ ) तं विरुणद्धीति तद्विरोधी । अभ्युपेतं सिद्धान्तं व्याहन्तीति । यथा—सोऽयं विकारो व्यक्तेरपैति, नित्यत्वविरोधादपेतोऽप्यस्ति, विनाशप्रतिषेधान्न नित्यो विकार उपपद्यते । इत्येवं हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । कथम्? व्यक्तिरात्मलाभः, अपायः प्रच्युतिः । यद्यात्मलाभात्प्रच्युतो विकारोऽस्ति,

---

१ स च व्यापारो 'धर्माद्विरमतीत्यादौ' धर्मविषयोपेक्षाविशेष एव । ( ल० म० सुबर्थ० कार० ५ । पृ० १०८ )

२ अत्र सूत्रम्—"विरामोऽवसानम्" इति । ( पाणि० १ । ४ । ११० )

३ [ क ] यत्र वक्ष्यमाणो विरोधः, वक्ष्यमाणं विरुद्धत्वं चास्ति, स विरुद्धः, इति परमार्थः । ( त० भा० ) ( वाक्य० ) [ ख ] तार्किकरक्षायां तु—"विरुद्धः स्याद्वर्तमानो हेतुः पक्षविपक्षयोः" इति । ( ता० र० श्लो० ८२ )

४ वृत्तिकार इदं सूत्रमित्थं व्यवृत—"अत्र च सिद्धान्तं साध्यम्; प्रतिज्ञायां हि पक्षस्य सिद्धस्यान्ते साध्यमभिधीयते । तथा च—साध्यमभ्युपेत्य उद्दिश्य प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः । यथा—वह्निमान् ह्रदत्वादिति । एतस्य, साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो दूषकताबीजम् । न च सत्प्रतिपक्षाविशेषः; यतः—तत्र हेत्वन्तरं साध्याभावसाधकम् ; इह तु,—हेतुरेक एव, इति विशेषः। 'साध्याभावसाधक एव हेतुः साध्यसाधकत्वेन त्वयोपन्यस्तः*' इत्यशक्तिविशेषोन्नायकत्वेन विशेषश्च" इति । ( गौ० वृ० १ । ४६ ) ( मु० २ । हेत्वा० पृ० १६० )

---

* अत्रायमाशयः—वस्तुगत्या 'साध्याभावसाधके हेतावेव तव साध्यसाधकत्वभ्रमः' इति स्थापनावादिनं प्रति भ्रमरूपाशक्तिसूचकत्वं विरुद्धस्य; नत्वेवं सत्प्रतिपक्षस्य, इति विरुद्धसत्प्रतिपक्षयोर्भेदः, इति । ( दि० २ । पृ० १६० )

नित्यत्वप्रतिषेधो नोपपद्यते । व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेरुपपत्तिः । यदात्मलाभात्प्रच्यवते तदनित्यं दृष्टम्; यदस्ति, न तदात्मलाभात्प्रच्यवते । अस्तित्वं चात्मलाभात्प्रच्युतिरिति विरुद्धावेतौ न सह संभवत इति । सोऽयं हेतुर्यत्सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति । ( वात्स्या० १ । २ । ६ )

[ २ ] [ क ] यो ह्यनुमेये विद्यमानेऽपि तत्सजातीये सर्वस्मिन्नास्ति तद्विपरीते चास्ति, स विपरीतसाधनाद्विरुद्धः । यथा—यस्माद्विषाणी तस्मादश्वः, इति । ( प्रशस्त० २ । पृ० २९ )

[ ख ] विपरीतव्याप्तिकश्च विरुद्धः । ( वै० उ० ३ । १ । १९ )

[ ग ] साध्याभावव्याप्तो हेतुः । यथा—अयं गौर[१]श्वत्वात्, इति । ( त० कौ० ) ( त० सं० )

[ घ ] साध्यासमानाधिकरण-[२]साध्याभावव्या[३]प्यः । साध्यवदन्योन्या-

---

१ अत्र च—'यत्र यत्राश्वत्वं तत्र तत्र गोत्वाभावः' इति साध्याभावव्याप्तेः सत्त्वादश्वत्वं हेतुर्विरुद्धः ।

विरुद्धत्वज्ञानं च साक्षादनुमितिप्रतिबन्धकम्; गोत्वाभावव्याप्ताश्वत्ववत्ताज्ञाने सति गोत्वनिश्चयासंभवात्, ( त० कौ० २ ) तेन हेत्वाभासलक्षणं संपद्यते ।

२ अत्र साध्याभावत्वं साध्यविरोधित्वमात्रं भावाभावसाधारणम् । तेन, अभावे साध्ये,—अभावाभावस्य भावत्वेऽपि नाव्याप्तिः । ( चि० २ । हेत्वा० पृ० ९० )

३ अत्र साध्याभावव्याप्तिश्च,—[ क ] साध्याभावस्य पूर्वपक्षीयाऽन्वयव्याप्तिः; सा तु साध्यवदवृत्तिमत्त्वम्, इति* प्राञ्चः ( मणिकारादयः ) आहुः । [ ख ] नव्यास्तु ( दीधितिकारादयः ),—साध्याभावस्य व्यतिरेकव्याप्तिः; सा तु, प्रकृतहेतुनिष्ठं साध्यव्यापकाभावप्रतियोगित्वम् †, इति वदन्ति ‡ । ( नील० ) । सत्प्रतिपक्षस्तु साध्याभावव्याप्यं हेत्वन्तरमेव, इति तु सर्वेषां नैयायिकानां सिद्धान्तः, इति सूक्ष्मतरमेतत् ।

---

* इदमेव साध्यासमानाधिकरण्यरूपं विरुद्धत्वम् ।

† इदं च प्राचीनमतेऽसाधारण्यमेव, इति ज्ञेयम् ।

‡ तथा च—प्राचीनमते ( मणिकृन्मते ) साध्यवदवृत्तित्वस्य विरुद्धत्वरूपत्वेऽपि, असाधारण्यस्य निश्चितसाध्यवदवृत्तित्वरूपतया तयोर्नाभेदः । नवीनमते ( दीधितिकारमते ) तु—साध्याभावनिरूपिताया व्यतिरेकव्याप्तेः ( साध्यव्यापकीभूताभावप्रतियोगित्वस्य ) विरुद्धत्वरूपत्वेऽपि साध्यवदवृत्तित्वस्यासाधारण्यतया नासाधारण्यविरुद्धत्वयोरभेदः, इति विवेको द्रष्टव्यः । ( नील० २ । पृ० २५ )

भावव्याप्तो वा । ( चि० २ । हेत्वाभा० पृ० ९० ) ( न्या० म० २ । पृ० २०–२१ ) यथा–शब्दो नित्यः कार्यत्वादित्यादौ कार्यत्वादिर्हेतुर्विरुद्धः । ( त० भा० ) ( गौ० वृ० १ । ४१ ) ( भा०प० ) ( मु० ) ( वै० वि० ३ । १ । १९ ) ( त० सं० ) ( वाक्य० ) यथा वा—गौरश्वत्वादित्यादावश्वत्वं विरुद्धम् । (न्या० म० २ । पृ० २१) स चायं ( विरुद्धः ) विधिसाधने त्रिविधः,—( १ ) साक्षात्साध्याभावव्याप्यत्वात्, ( २ ) साध्यव्यापकाभावव्याप्यत्वात्, ( ३ ) साध्यव्यापकविरुद्धोपलम्भाच्च । यथा—( १ ) अधूमवानयं योग्यधूमवत्तयाऽनुपलभ्यमानत्वात्; ( २ ) निरग्निकत्वात्; ( ३ ) जलाशयत्वात्, इति । निषेधसाधनेऽपि त्रिविधः,—( १ ) प्रतियोग्युपलम्भात्, ( २ ) साध्यव्यापकाभावोपलम्भात्, ( ३ ) साध्यव्यापकविरुद्धोपलम्भाच्च । यथा–( १ ) निरग्निकोऽयमग्निमत्त्वात्; ( २ ) धूमाभावशून्यत्वात्; ( ३ ) धूमवत्त्वात्, इति । ( चि० २ । पृ० ९४ )

**विरुद्धत्वम्**—१ ( हेतुदोषः )A ( पक्ष- ? )-विपक्षमात्रस्पर्शित्वम् । B साध्यासामानाधिकरण्यादि । ( दीधि० २ । पृ० १९७ ) (न्या०

---

१ साध्याभावव्याप्तिर्विरुद्धत्वम्, इति परमार्थः । ( त० भा० ) ( वाक्य० ) व्याप्तिश्चात्र, अन्वयव्याप्तिः पूर्वपक्षीया साध्यवदवृत्तित्वरूपा (साध्यासामानाधिकरण्यम् ), इति प्राञ्चो मणिकारादय आहुः । नव्या दीधितिकारादयस्तु,—साध्याभावस्य व्याप्तिस्तु व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपा, * इत्याहुः । ( नील० २ । पृ० २५ ) ( दीधि० २ । हेत्वाभा० पृ० १९७ )

२ अत्रायमर्थः,—साध्यासमानाधिकरणत्वं च, साध्यानधिकरणे हेतोर्वर्तमानत्वम्, न तु साध्याधिकरणे हेतोरवर्तमानत्वम्; अतः—न,वह्निमानाकाशादित्यत्र,—स्वरूपासिद्धेऽतिव्याप्तिः, इति । ( म० प्र० २ । पृ० २६ )

३ इदं विरुद्धत्वं च मणिकृन्मताभिप्रायेणास्ति, अन्वयव्याप्तिग्रहविरोधि च भवति, इति विशेयम् । ( दीधि० हेत्वा० पृ० १९७ ) ( पृ० २०४ )

---

* अयं विषयस्तु, 'विरुद्ध'शब्दव्याख्यानावसरे निरूपितोऽपि शिष्यबुद्धिस्फुरणाय पुनरुक्तः, इति ज्ञेयम् ।

म० २ । पृ०२० ) C साध्यव्यापकाभावप्रतियोगित्वम् । D वृत्तिमतः साध्यवदवृत्तित्वम् । E साध्यवद्वृत्तित्वानधिकरणत्वम् । F साध्यासमानाधिकरणधर्मत्वम् । G साध्यवद्वृत्तित्वानधिकरणधर्मत्वं वा । ( चि० पृ० ९२–९३ ) यथा—गौरश्वत्वादित्यादौ । ( न्या० म० ) यथा वा—ह्रदो वह्निमाञ्जलादित्यत्र जलस्य विरुद्धत्वम् । ( स्व० ) । २ 'विरोधित्व'शब्दवदस्यार्थोऽनुसंधेयः । ( न्या० सि० दी० पृ० ५६ )

**विरोधः**—१ इष्टार्थभङ्गः ( निग्रहस्थानम् ) । ( त० भा० पृ० ५१ ) २ क्वचित्—तद्वत्ताग्रहप्रतिबन्धकज्ञानविषयत्वम् । ( ग० सत्प्र० ) यथा—ह्रदे वह्निमत्ताग्रहप्रतिबन्धकनिश्चयविषयस्य वह्न्यभाववद्ह्रदस्य 'ह्रदो वह्निमान्' इत्यनेन सह विरोधः । ( स्व० ) । ३ 'विरुद्धत्व'शब्दवदस्यार्थोऽनुसंधेयः । ( त० भा० ) ( वाक्य० ) । ४ 'विरोधित्व'शब्दवदस्यार्थोऽनुसंधेयः । ( दीधि० २ ) ( ग० बाध० ) । ५ परस्पराभावव्याप्यत्वाविशेषितयोः परस्परज्ञानप्रतिबन्धकीभूतज्ञानविषयत्वम् । ( ग० सव्य० ) यथा—घटघटाभावयोर्विरोधः । ( स्व० ) । ६ विपरीतार्थकत्वम् । यथा—"विरोधे त्वनपेक्षं स्यात्, असति ह्यनुमानम्" ( जैमि० १ । ३ । ३ ) इत्यादौ—औदुम्बर्याः सर्ववेष्टनं "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या विरुद्धम् । (शाब० भा० ) । ७ अर्थालंकारविशेषः, इत्यालंकारिका आहुः । ८ संवत्सरविशेषः, इति ज्योतिषज्ञा वदन्ति । ९ वैरम्, इति काव्यज्ञा आहुः ।

**विरोधित्वम्**—[ १ ] [ क ] सहानवस्थायित्वम् । ( दीधि० २ ) [ ख ] एकसमयावच्छेदेनैकत्रावर्तमानत्वम् । ( ग० बाध० ) यथा—घटघटाभावयोर्विरोधित्वम् । ( स्व० ) [ २ ] [ क ] सहासंभवः ।

---

१ इदं च दीधितिकारमताभिप्रायेणास्ति । अत्राधिकं तु 'असाधारणत्व'शब्दव्याख्यानावसरे संपादितम्, इति विरम्यते ।

२ अयं च, 'स्वरूपतो विरोधः' इत्युच्यते । ( ग० सव्य० )

३ यत् येन सह न प्रतीयते तत् तेन सह विरुद्धं यत्, तत्त्वम् । (न्या० सि० दी० पृ०५६)

यथा—तत्त्वज्ञान-मिथ्याज्ञानयोर्विरोधः । ( न्या० वा० १ । पृ० २७ )
[ ३ ] सहानवस्थाननियमः । ( त० व० पृ० १०० )

**विरोधिपरामर्शः**—( परामर्शः ) तद्विपरीतव्याप्यवत्तानिर्णयः । ( ग० सत्प्र० ) यथा—ह्रदो वह्निमान्धूमादित्यादौ 'वह्न्यभावव्याप्यजलवान् ह्रदः' इति परामर्शो विरोधिपरामर्शो भवति । ( स्व० )

**विरोधिविषयता**—[ क ] पक्षे साध्यवैशिष्ट्यावगाहित्व-साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वो-भयाभावप्रतियोगितावच्छेदककोटौ,—यद्रूपावच्छिन्नांशे यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविष्टम्, तद्रूपावच्छिन्नविषयतानिरूपितं-तद्रूपावच्छिन्नाभावतद्व्याप्यान्यतरविषयता।

[ ख ] साध्यवत्पक्षविषयताबहिर्भूतविषयता । यथा—ह्रदो वह्निमानित्यादौ,—वह्न्यभाववद्ध्रदविषयता भवति विरोधिविषयता; साध्यवत्पक्षविषयताया निरासश्च भवति । ( ग० २ । हेत्वाभाससामा०नि० पृ० २४ )

**विलक्षणम्**—१ [ १ ] विजातीयम् । [ २ ] विभिन्नम् । २ स्वच्छन्दताया निष्प्रयोजनस्थितिः ( अमरः ३ । २ । २ ) । ३ दानार्थं कल्पितकाञ्चनपुरुषमूर्तियुतशय्याविशेषः । ( शु० त० ) ( मत्स्यपु० )

**विवरणम्**—१ [ क ] तत्समानार्थबोधकपदान्तरेण तदर्थकथनम् । यथा—'पचति' इत्यस्य 'पाकं करोति' इति विवरणम् । ( मु० ४ )

[ ख ] पूर्वोच्चरितवाक्यस्योत्तरवाक्येनार्थकथनम् । ( त० प्र० ख० ४ पृ० ७३ ) । २ ग्रन्थविशेषः । यथा—नागेशकृतं कैयटोपरि विवरणम् ।

**विवर्तः**—१ [ क ] अतात्त्विकोऽन्यथाभावः । स च, अपरित्यक्तपूर्वरूपस्य

---

१ इयं विषयता च, गादाधरीय—'अत्र वदन्ति'—कल्पोक्तहेत्वाभासलक्षणघटिका, इति विज्ञेयम् ।

२ तदुक्तं भागुरिणा—"विलक्षणं मतं स्थानं यद्भवेन्निष्प्रयोजनम्" इति । अमर० टी० ३ । २ । २ )

३ विवरणस्य शक्तिग्राहकत्वे प्रमाणमनुमानम्, तच्च यथा—'आख्यातपदं यत्नत्वावच्छिन्ने शक्तम्, यत्नत्वावच्छिन्नशक्त-'करोति'धातुप्रतिपादितार्थकत्वात्, यत् यद्धर्मावच्छिन्नशक्तप्रतिपादितार्थकं भवति तत् तद्धर्मावच्छिन्ने शक्तं भवति, पाकत्वविशिष्टशक्त—'पाक'पदप्रतिपादितार्थक'पच'धातुवत्' इति सामान्यतो दृष्टानुमानम् । ( त० प्र० ख० ४ । पृ० ७३ )

रूपान्तरप्रकारकप्रतीतिविषयत्वम् । ( वै० सा० द० पृ० २ ) यथा—मायावादिमते,—परब्रह्मणि सर्वस्य जगतो विवर्तः । ( स्व० )

[ ख ] पूर्वरूपापरित्यागेन असत्यनानाकारप्रतिभासः । यथा—शुक्तिकायां रजतस्य, रज्ज्वां वा सर्पस्य, प्रतीतिः ( आथर्वभाष्ये सायणः ) । शिष्टं तु 'वाद'शब्दव्याख्याने दृश्यम् । ( स्व० ) । २ [illegible] , इति नर्तका आहुः । ३ समुदायः, इति काव्यज्ञा आहुः । ( वा०

**विवसनः**—( दिगम्बरः, नास्तिकः ) अर्हन्नाख्यो जिनः । अत्र शिष्टं तु 'नास्तिक' इत्यादितत्तच्छब्दव्याख्याने दृश्यम् ।

**विवादः**—१ विरुद्धो वादः । २ कलहः । ३ विप्रतिपत्तिः ।

**विवाहः**—[ क ] भार्यात्वसंपादकं ज्ञानम् ( उद्या० रघु० ) । यथा—"अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्" ( याज्ञ० १ । ५२ ) इत्यादौ 'वह'धात्वर्थः ।

---

१ तन्मते सप्त पदार्थाः,— जीवः, अजीवः, आस्रवः, संवरः, निर्जरः, बन्धः, मोक्षश्च, इति । संक्षेपतस्तु,—जीवाजीवाख्यौ द्वावेव पदार्थौ । तयोरिममपरप्रपञ्चमाचक्षते—पञ्चास्तिकाया* नाम,—जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायश्चेति । सर्वेषामप्येतेषामवान्तरभेदा बहुविधाः सन्ति, विस्तरभयान्नोक्ताः, इति । एतन्मते,—जीवः शरीरपरिमाणः; मोक्षस्तु जीवस्योर्ध्वगमनमेव ( शारीरकभाष्ये अ० २ । पा० २ । सू० ३३—३४ ) । सप्तभङ्गीनयस्तु 'स्याद्वाद'शब्दव्याख्यानावसरे संपादयिष्यते ।

२ अत्रोदाह्रियते—"ऋणादिदायकलहे द्वयोर्बहुतरस्य वा । विवादो व्यवहारश्च" इति (स्मृतिः) ।

३ तदर्थश्च,—येन ज्ञानेन 'ममेयं भार्या, ममायं पतिः' इति व्यवहारो भवति तादृशं † ज्ञानम्, इति । तादृशं ज्ञानं तु संस्कारादिनोत्पद्यते । ( स्व० )

४ समुदायश्लोकस्तु,—"अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् । अनन्यपूर्विकां ‡ कान्तामसपिण्डां यवीयसीम् । अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्" इति ( याज्ञ० अ० १ । श्लो० ५२—५३ )

---

* अत्र—'अस्तिकाय'शब्दः सांकेतिकः पदार्थवाची । ( शारी० भा० टी० २ । २ । ३३ )

† तच्च संबन्धविशेषेणोभयनिष्ठम् ।

अत्रेदं विचार्यम्—'भार्यात्वसंपादकं ज्ञानम्' इत्यत्र भार्यात्वस्योपलक्षणतया निवेशः । तेन, नान्योन्याश्रयः, इति ।

‡ अनेन स्त्रीपुनर्विवाहो निषिद्धः, इति गम्यते । तथा च श्रुतिरपि—"तस्मान्नैका द्वौ पती विन्दते" इति । "तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः" इति च । शिष्टं तु 'नियोग,' 'विधवा'शब्दव्याख्याने संपादितम्, तत्र दृश्यम् ।

[ ख ] चरमसंस्कारः[1]; विजातीयसंस्कारो वा विवाहः, इत्यन्ये ( नव्य-नैयायिकाः ) आहुः । ( उद्वाह० रघु० ) । अष्टौ[2] विवाहाः,—ब्राह्मः, दैवः, आर्षः, प्राजापत्यः, आसुरः, गान्धर्वः, राक्षसः, पैशाचश्चेति । ( याज्ञ० अ० १ । श्लो० ५८–६१ )

**विवृतिः**—१ 'विवरण'शब्दवदस्यार्थोऽनुसंधेयः । २ विस्तारः।( मेदिनी० )

**विवेकः**—१[ १ ] [ क ] पृथक्त्वेन ज्ञानम् । यथा—नीरक्षीरविवेकः । [ ख ] विशेषरूपेण ज्ञानम्, इति केचिदाहुः। [ २ ] अन्योन्यधर्मव्यावर्तनेन याथार्थ्येन वस्तुस्वरूपावधारणम् । यथा—सांख्यमते प्रकृतिपुरुषयोर्भेदज्ञानम् । २ विचारः ।

**विशिष्टद्वयाघटितत्वम्**[3]—याद्दशविशिष्टविषयकनिश्चयविशिष्ट-याद्दशविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति भवति, ताद्दशविशिष्टद्वयाघटितत्वम्[4]। यथा—ह्रदो वह्निमान्धूमादित्यादौ—वह्न्यभाववद्ध्रदात्मकबाधस्य,जलावच्छिन्नवह्न्यभाव-जलवद्ध्रद-एतद्विशिष्टद्वयाघटितत्वम्। ( ग० २ । हेत्वा० सामा० पृ० ११ )

---

१ अत्र चरमत्वं च, [ क ] शास्त्रविहितसंस्कारान्तिमत्वम् । [ ख ] संस्कारप्रागभावासहचरितत्वम्* इति केचिदाहुः ।(वाच०) [ग] सप्तपदीसमापनमेव, इति तु वयं ब्रूमः। (स्व०)

२ तथा चोक्तं मनुना—"ब्राह्मो, दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः । गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" इति ( मनु० ३ । २१) । अत्राधिकं तु ( विवाहप्राशस्त्यं तत्तद्विवाहफलादिकं च ) मनु-याज्ञवल्क्य-स्मृत्यादौ द्रष्टव्यम् ।

३ एतस्य विशेषणस्य प्रयोजनं च, ( गादाधरीयद्वितीय-हेत्वाभाससामान्यलक्षणे ) ह्रदो वह्निमानित्यादौ—'वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदरूपविशिष्टेऽलक्ष्येऽतिव्याप्तिवारणम्' इति विज्ञेयम् । ( ग० हेत्वा० सामा०)

४ यद्रूपावच्छिन्नविषयकनिश्चयविशिष्ट-यद्रूपावच्छिन्नविषयकयद्रूपावच्छिन्नविषयकनिश्चयत्वं, स्वव्यापकत्व-स्वाभाववद्वृत्तित्व-एतदुभयसंबन्धेन स्वावच्छिन्नविषयताव्यापकप्रतिबन्धकताविशिष्टान्य-ज्ञानवैशिष्ट्यावच्छिन्न-प्रतिबन्धकतानतिरिक्तवृत्ति भवति,तत्तद्रूपावच्छिन्नविषयकप्रतीतिविषयत्वं फलितोऽर्थः । तेन, नातिव्याप्त्यव्याप्त्यादयो दोषाः, इत्यस्मद्गुरुचरणाः प्राहुः ।

---

* द्वितीयविवाहस्य संस्कारत्वाभावात् तत्प्रागभावसत्त्वेऽप्याद्यविवाहे चरमत्वाक्षतिः । (वाच०)

**विशिष्टम्**—१ विशेषणवद्विशेष्यम् । ( चि० १ ) यथा—द्रव्यं गुणादिमत्त्वाद्—द्रव्यं गुणविशिष्टम् । २ विशेषयुक्तः । यथा—"संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्" ( वै० २।१।१८ ) इत्यादावस्मद्विशिष्टा ईश्वरमहर्षयः ।

**विशिष्टविशेषणकज्ञानम्**—( १ ) विशेषणवद्विशेष्यस्य धर्मिणि वैशिष्ट्यविषयकं ज्ञानम् । यथा—'दण्डवान् पुरुषः' इति ज्ञानम् । ( स्व० ) तद्विविधम्,—विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहि, विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि चेति । तत्राद्ये विशेषणज्ञाना-संसर्गाग्रहयोरेवापेक्षा, न तु विशेषणतावच्छेदकप्रकारकधियोऽप्यपेक्षा । ( ग० बाध० ) । द्वितीये तु विशेषणतावच्छेदकप्रकारकधियोऽपेक्षा । ( २ ) क्वचित्—'विशेष्ये यत् विशेषणम्, तत्रापि विशेषणान्तरम्' इति रीत्या जायमानं ज्ञानं भवति । यथा—'दण्डवान्, पुरुषः' इति ज्ञानम्[2] । ( ३ ) क्वचित्—'एकत्र द्वयम्' इति रीत्या जायमानं ज्ञानं भवति । यथा—'दण्डवान् पुरुषः' इति ज्ञानम्[3] । ( ४ ) क्वचित्—विशिष्टवैशिष्ट्यावगाहि

---

१ अत्रेदमधिकं ज्ञेयम्—विशिष्टाभावस्त्रिविधः,—विशेषणाभावप्रयुक्तः, विशेष्याभावप्रयुक्तः, उभयाभावप्रयुक्तश्चेति । तत्राद्यो यथा—वायौ* रूपविशिष्टस्पर्शस्याभावः । द्वितीयो यथा—वायौ † स्पर्शविशिष्टरूपस्याभावः । तृतीयो यथा—वायौ ‡ रूपविशिष्टघटत्वस्याभावः, इति । अत्र वैशिष्ट्यं च साहित्यं सामानाधिकरण्यं वा ज्ञेयम् ।

२ अत्रायं विशेषः,—'विशिष्टज्ञानं प्रति, विशेषणज्ञानं कारणम्' इति कार्यकारणभावो नैयायिकसिद्धान्तसिद्धो ज्ञातव्यः ।

३ अत्र ज्ञाने,—पुरुषांशे दण्डः, दण्डे च दण्डत्वम्, विशेषणतया भासते, न तु दण्डत्वं पुरुषांशे विशेषणतावच्छेदकतया भासते । विशृङ्खलोपस्थितिः प्रयोजिका च, इति विज्ञेयम् ।

४ अत्र ज्ञाने च,—एकस्यां व्यक्तौ ( पुरुषे ) 'पुरुषत्वं दण्डश्च' एतदुभयं विशेषणतयैव भासते, न तु विशेषण-विशेष्यतावच्छेदक-भावेन, इति; विशेषणत्वेनोभयोपस्थितिः प्रयोजिका चेति च बोध्यम् ।

---

* अत्र—स्पर्शे रूपं विशेषणम्; तस्य वायावभावात् ( स्पर्शसत्त्वेऽपि ) रूपविशिष्टस्पर्शस्याप्यभावो मन्तव्यः ।

† अत्र—रूपे स्पर्शो विशेषणम्; तथा च—स्पर्शात्मकविशेषणस्य वायौ सत्त्वेऽपि विशेष्यभूतस्य रूपस्याभावात् स्पर्शविशिष्टरूपस्याप्यभावो मन्तव्यः ।

‡ अत्र—घटत्वे रूपं विशेषणम्; तथा च—विशेषणस्य रूपस्य, विशेष्यस्य घटत्वस्य च वायावभावेन रूपविशिष्टघटत्वस्याप्यभावो मन्तव्यः ।

ज्ञानं भवति । यथा—'दण्डवान् पुरुषः' इति ज्ञानम् । ( ५ ) क्वचित्—विशिष्टज्ञानम् । यथा—'अयं दण्डी' इति ज्ञानम् । ( स्व० )

**विशिष्टाद्वैतम्**—[ क ] सूक्ष्मचिदचिदात्मकशरीरविशिष्टस्य ( कारणस्य ) परमात्मनः, स्थूलचिदचिदात्मकशरीरविशिष्टस्य ( कार्यस्य ) परमात्मनश्चैक्यम् । यथा—रामानुजमते विशिष्टाद्वैतम् ।

---

१ अत्र ज्ञाने च, विशेषणतावच्छेदकप्रकारकं ज्ञानं कारणं भवति, इति ध्येयम् ।

२ अत्र च—दण्डत्वात्मकविशेषणावच्छिन्नप्रतियोगिकवैशिष्ट्याख्यः संबन्धः संसर्गतया पुरुषांशे भासते । इदमेव ज्ञानं विशिष्टविशेषणकज्ञानप्रभेदः, विशेषणविशिष्टप्रतियोगिकवैशिष्ट्यावगाहि भवति, विशेषणोपलक्षितप्रतियोगिकवैशिष्ट्यावगाहिज्ञानाद्भिद्यते च, इति बोध्यम् ।

अत्रेदं बोध्यम्—विशिष्टवैशिष्ट्यावगाहिशाब्दबोधे त्वयं भेदः,—व्युत्पत्तिवैचित्र्येण, उद्देश्यतावच्छेदकविधेययोर्धर्मिपारतन्त्र्येण परस्परं प्रयोज्यप्रयोजकभावेनान्वयः । यथा—'धनवान् सुखी' इत्यत्र धनप्रयोज्यत्वस्य सुखेऽन्वयः, 'सुरापः पतति' इत्यत्र च सुरापानस्य पतने प्रयोज्यत्वेनान्वयः, इति । ( ग० सव्य० )

३ विशेषणवद्विशेष्यविषयकं ज्ञानम्, इत्यर्थः । ( चि० १ । पृ० ८२१ )

४ अत्र ज्ञाने च, इदंपदार्थविशेष्यांशे दण्डात्मकविशेषणप्रतियोगिकसंबन्धः संसर्गतया भासते, विशेषणज्ञानं कारणं च भवति, इति विज्ञेयम् ।

५ अत्र—'विशिष्टयोरद्वैतम्' इति षष्ठीतत्पुरुषो ज्ञेयः । 'द्वैतविशिष्टमद्वैतम्' इत्यन्य आहुः ।

६ अत्र नियम्यनियामकभावेन शरीर-शरीरिभावो विज्ञेयः । तत्र—चिदचिदात्मकं शरीरं नियम्यम्, तद्विशिष्टो* नियामकः ।

७ अत्र श्रूयते—शापवशाच्छूद्रजन्म प्राप्तेन शठकोपनाम्ना ( नम्मालवार ) द्रविडेन द्रविडभाषया वेदान्तप्रबन्धा विरचिताः । ततस्तान् प्रबन्धाननुरुध्य, बोधायनाख्यद्रविडब्राह्मणकृतां ब्रह्मसूत्रवृत्तिं च सङ्कल्प्य गीर्वाणभाषया ब्रह्मसूत्रस्य श्रीभाष्यमकारि † रामानुजाचार्येण । रामानुजमते,—चित् ( जीवः ), अचित् (जडः), ईश्वरः ( नियन्ता परमात्मा ); इति त्रयः पदार्थाः; ईश्वरो जगत उपादानं निमित्तं च; सत्कार्यवादः ( परिणामवादः ),

---

* अत्र श्रुतिः—"यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इत्यादि । (शतप० बृह० १४ । ६ । ७ । ७ । पृ० १०७३ )

† अत्रेदं विज्ञेयम्—रामानुजाचार्यस्य जन्म, द्रविडदेशे भूतपुरीत्यपरनाम्न्यां प्रेमभुताख्यायां ( पेरंबुदूर ) पुरि एकोनपञ्चाशदधिके सहस्रे ( शाके १०४९ ) वर्षे समजनि । तस्य पिता केशवभट्टः, माता कान्तिमती, मातुलो यादवप्रकाशः, स एव विद्यागुरुश्च, इति ।

[ ख ] केचित्तु,—(१) प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वम्; (२) शरीरशरीरिणोर्भेदविशिष्टाभेदश्च; इति मन्यन्ते ।

**विशिष्टान्तराघटितत्वम्**[1]—[ क ] अनुमितिप्रतिबन्धकतायां यादृशरूपावच्छिन्नविषयकत्वमवच्छेदकम् (अनतिरिक्तवृत्ति), तादृशं यत्[2] स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम्, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वम्, तदवच्छिन्नत्वम् । यथा—ह्रदो धूमवान्वह्नेरित्यादौ—व्यभिचारस्य बाधादिरूप-विशिष्टान्तरा-घटितत्वम्[3] । ( ग० २ । हेत्वा० सामा० पृ० १३ )

[ ख ] केचित्तु,—[4]स्वसमानाधिकारण-हेत्वाभासविभाजकरूप-समानाधि-

मोक्षदशायामपि जीवब्रह्मणोर्भेदः पारमार्थिकः; तथाऽपि—परम-भगवत्साम्यरूप *मोक्षदशायां जीवब्रह्मणोरानन्दतारतम्यं ( यथा मध्वमतेऽस्ति† तथा ) नास्ति, इति । तथाऽपि तदा जीवस्य जगत्कर्तृत्वं नास्ति, इत्यादि ज्ञेयम् ।

१ एतद्विशेषणप्रयोजनं च, गादाधरीयद्वितीय-हेत्वाभाससामान्यलक्षणस्य, 'धूमवान्वह्नेः' इत्यादिस्थले,—प्रमेयत्वविशिष्टव्यभिचारादौ (प्रमेयत्वविशिष्ट-धूमाभाववद्वृत्तिवह्नौ) अतिव्याप्तिवारणरूपं बोध्यम् । ( ग० हेत्वा० सामा० पृ० १२ )

२ यद्रूपावच्छिन्ने लक्षणं संगमनीयम्, तदेव स्वपदार्थः । (ग० २ । हेत्वा० सामा० पृ० १३)

३ तथा हि—ह्रदो धूमवान्वह्नेरित्यादौ,—धूमाभाववद्वृत्तिवह्नित्वं व्यभिचारः, बाधस्तु धूमाभाववद्ध्रदः । तथा चात्र,—व्यभिचारत्वावच्छिन्नाविषयकत्वं बाधविषयकप्रतीतौ, बाधत्वावच्छिन्नाविषयकत्वं च व्यभिचारविषयकप्रतीतावस्ति; इति बाधत्वं व्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम्, 'ह्रदो धूमवान्' इत्यनुमितिनिरूपितप्रतिबन्धकतायामनतिरिक्तवृत्तित्वरूपावच्छेदकतावच्च भवति; तादृशबाधत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं स्वं ( व्यभिचारत्वम् ) भवति, व्यभिचारत्वावच्छिन्नत्वं तु व्यभिचारे वर्तत इति लक्षणसमन्वयो बोध्यः । प्रमेयत्वविशिष्टव्यभिचारादौ तु शुद्धव्यभिचाररूपविशिष्टान्तरघटितत्वेन तादृशलक्षणाभावान्नातिव्याप्तिश्च । ( ग० २ । हेत्वा० सामा० पृ० १३ )

४ अत्रैवं श्रूयतेऽस्मद्गुरुमुखात्—अयं कल्पस्तु समासतो गदाधरेण विरचितः, व्यासतः परिष्कृतवद्भ्यो 'गाडगीळ' इत्युपाह्वेभ्यो वाराणसीग्रामनिवासिजगन्नाथशास्त्रिभ्यः संगृह्य पुण्यग्रामनिवासिभिः 'गोडबोले' इत्युपनामकमहशास्त्रिभिः सम्यक् विरचय्य प्रकटीकृतः, इति ।

* अत्र श्रुतिः—"निरञ्जनः परमं साम्यमुपैति" इति ।

† तथा चात्र श्रुतिः—"अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः । आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे" इति । (ऋग्० संहि० मण्ड० १० । ७१ । ७)

करणं यत् स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशं रूपम्[1], तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत् स्वम्, तदवच्छिन्नत्वम्, इत्याहुः । ( न्या० र० सामा० )

[ ग ] विशिष्टान्तरविषयित्वाप्रयोज्य-स्वविषयिताप्रयोज्य-तादृशोभयाभावप्रयोजकाभावाधिकरणता-कत्वम्[2][3][4] । यथा—धूमव्यभिचारिवह्निमान्धूमवान्वह्नेरित्यादावपि,—व्यभिचारघटितबाधस्य व्यभिचाररूपविशिष्टान्तराघटितत्वम्[5] । ( ग० २ । हेत्वा० सामा० पृ० २४–२५ )

**विशुद्धिः**—१ [ १ ] उद्दिष्टपदार्थसंबन्धराहित्यम् । यथा मायावादि-वल्लभ-मते,—परब्रह्मणो विशुद्धिर्मायासंबन्धराहित्यम्। [ २ ] धर्मशास्तु,—दोषराहित्यम् । २ शोधनम् (प्रायश्चित्तम्)। (कुल्लु०)। यथा—"इयं विशुद्धिरुदिता" (मनु० अ० ११ । श्लो० ८९) इत्यादौ, इत्याहुः । अधिकं तु 'शुद्धि'शब्दे दृश्यम् ।

**विशृङ्खलत्वम्**—पार्थक्यम् । यथा—घटवद्भूतलमित्यादौ,—'घटः' इति,

---

१ अत्र,—तादृशं रूपं च विपरीतव्यभिचारत्वादिकमेव, इति बोध्यम् । तथा हि—स्वं धूमाभाववद्वृत्तिवह्नित्वत्वम्, तत्समानाधिकरणं हेत्वाभासविभजकं रूपं तु व्यभिचारत्वं भवति, तत्समानाधिकरणं यत् धूमाभाववद्वृत्तिवह्नित्वत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं तादृशं रूपं तु वह्निनिष्ठधूमाभाववद्वृत्तित्वत्वमेव भवति, तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वं तु धूमाभाववद्वृत्तित्वविशिष्टवह्नित्वत्वं भवति, तदवच्छिन्नत्वं धूमाभाववद्वृत्तिवह्नित्वेऽस्ति, इति लक्षणसमन्वयो बोध्यः ।

२ इदं च, गदाधर्या 'स्वसजातीयविशिष्टान्तराघटितत्वम्' इत्युच्यते, 'अयोगोलकं धूमवद्वह्नेः' इत्यादौ,—बाधविशिष्टव्यभिचारादावतिव्याप्तिसंपादकं च भवति, इति ज्ञेयम् । (ग० हेत्वा० सामा० पृ० १५–१६ )

३ तादृशोभयाभावश्च, प्रकृतपक्षे प्रकृतसाध्यवैशिष्ट्यावगाहित्व-साध्यव्याप्यहेतुवैशिष्ट्यावगाहित्वै-तदुभयाभावः । ( ग० हेत्वा० सामा० पृ० २० )

४ इदं च, सिद्धान्तसिद्धम् 'विशिष्टान्तराघटितत्वम्' इत्युच्यते ।

५ तथा हि—विशिष्टान्तर-( केवलव्यभिचार )-विषयित्वाप्रयोज्या स्व-( व्यभिचारघटित-बाध )-विषयिताप्रयोज्या या तादृशोभयाभावप्रयोजिकाऽभावाधिकरणता ( पक्षे साध्यवैशिष्ट्यावगाहित्वाभावाधिकरणता ), तत्कत्वं धूमाभाववद्धूमव्यभिचारिवह्निमति व्यभिचारघटिते बाधे वर्तते, इति तत्र लक्षणसमन्वयो बोध्यः । ( ग० हेत्वा० सामा० पृ० २५ )

'भूतलम्' इति चोपस्थित्योः परस्परं निरूप्यनिरूपकभावानापन्नविषयतावत्त्वेन तत्तदर्थविषयकत्वात् विशृङ्खलत्वम् । ( स्व० )

**विशेषः**[1]—( पदार्थः ) [ क ] अन्योन्याभावविरोधिसामान्यरहितः समवेतः पदार्थविशेषः । ( सर्व० औलू० पृ० १०९ )

[ ख ] जातिरहितत्वे सति नित्यद्रव्यमात्रवृत्तिः । स च[2] अन्त्यो[3] नित्यद्र-

१ 'विशेष'पदार्थस्वीकारस्यावश्यकत्वमिदानीं प्रदर्श्यते—[ क ] घटादीनां सावयवपदार्थानां कपालसमवेतत्वादिकं पटादिभेदकमस्ति; परमाणूनां तु निरवयवत्वात् परस्परभेदकं न किंचिदस्ति; अतोऽनायत्या विशेष आश्रयितव्यः । [ ख ] विशेषानभ्युपगमे,—समानजातिगुणकर्मवतां परमाणूनां मिथो व्यावृत्तिबुद्धिः * न स्यात्; तत्रेष्टापत्तौ,—योगिनोऽपि तादृशपरमाणूनां ज्ञानसंकरः स्यात्; इत्यतस्तद्व्यावृत्तिबुद्ध्यर्थं विशेषोऽङ्गीकर्तव्यः, इति । ( त० कौ० पृ० २८ ) ( प्र० प्र० ) । स च विशेषः शब्दसमवायिकारणतावच्छेदकतयाऽपि † सिध्यति, इति । ( सि० च० )

नव्यनैयायिकाः, भट्टकुमारिलः, प्राभाकराः, मध्वमतानुयायिवेदान्तिनश्च,—एतादृशं 'विशेष'पदार्थं नाङ्गीचक्रुः; यथैव विशेषाणां स्ववृत्तिधर्मं विना व्यावृत्तत्वं तथैव नित्यद्रव्याणामपि, इति । ( दि० १ । पृ० ३७ ) ( प्र० प० पृ० ११ ) ( ता० र० श्लो० ५५ )

विशेषलक्षणं तु,—[ क ] सामान्यशून्यत्वे सति सामान्यभिन्नत्वे च सति समवेतत्वम् । [ख] नित्यसमवेतवृत्ति-जन्यसमवेतावृत्ति-पदार्थविभाजकोपाधिमत्त्वम् । ( त० व० ) [ ग ] एकमात्रसमवेतत्वे सति सामान्यशून्यत्वम् । ( प० मा० ) [ घ ] स्वतो व्यावृत्तत्वम् । ( वाक्य० ) ( त० प्र० १ ) [ ङ ] स्वतो ‡ व्यावर्तकत्वम् । अत्र व्यावर्तकत्वं नाम व्यावृत्तिजनकत्वम् । व्यावृत्तिश्चेतरभेदः, तज्ज्ञानं वा । ( सि० च० १ । पृ० ३ )

२ तथा चोक्तम्—[ क ] "अजातिरेकवृत्तिश्च विशेष इति शिष्यते" इति ( ता० र० श्लो० ५३ ) [ ख ] "एकद्रव्यः स्वभावसन्" इति ( न्या० ली० पृ० ५ )

३ अन्तेऽवसाने वर्तत इत्यन्त्यः, तदपेक्षया विशेषो नास्तीत्यर्थः; एकमात्रवृत्तिरिति फलितोऽर्थः ( मु० १ । १ । पृ० ३७ )

* तादृशी बुद्धिस्तु,'समानजातिगुणकर्मकाः परमाणवः, अन्योन्यव्यावर्तकधर्मसंबन्धिनः, व्यावृत्तज्ञानविषयत्वात्, द्रव्यत्वाद्वा गवादिवत्' इत्यानुमानिकी ज्ञेया । (न्या० ली० पृ०५३)

† तथा ह्यनुमानम्—'शब्दसमवायिकारणता किंचिद्धर्मावच्छिन्ना, कारणतात्वात्, दण्डनिष्ठघटकारणतावत्' इति । स च धर्मो विशेष एव । ( स्व० )

‡ अत्र,—स्वतो व्यावर्तकत्वं च [ क ] स्वभिन्नलिङ्गजन्य-स्वविशेष्यक-स्वसमानजातीयेतरभेदानुमितिविषयत्वम् । (दि० १ । १ । पृ० ३७) [ ख ] स्वेन रूपेण भेदानुमापकत्वम् । यथा—एकपरमाणौ परमाण्वन्तरभेदसाधने विशेषस्य तत्तद्व्यक्तित्वेनैव हेतुत्वेन स्वतो व्यावर्तकत्वम् । ( स्व० ) अत्र तु —तत्तद्व्यक्तित्वं च तादात्म्यसंबन्धेन सैव व्यक्तिः । (राम० )

व्यसमवेतोऽत्यन्तव्यावृत्तिहेतुः ( भा० प० ) ( त० सं० ) B अत्यन्तव्यावृत्तिहेतुः। यथा—वैशेषिक इति। ( गण० )

**विशेषः**—१ [ १ ] 'विशेषक'शब्दस्य ( १ ) अर्थवदस्यार्थोऽनुसंधेयः। यथा—'पुरुषत्वव्याप्यकरादिमान्' इत्यादौ पुरुषत्वादेर्विशेषः करादिधर्मः। (गौ० वृ० [२]।६)। [२] 'प्रभेद'शब्दवदस्यार्थोऽनुसंधेयः। (स्व०) [३] व्याप्यधर्मः। ( वै० १। २। ५ ) यथा—सत्तामपेक्ष्य द्रव्यत्वम्। द्रव्यत्वमपेक्ष्य च पृथिवीत्वं विशेषः ( व्याप्यधर्मः )। [४] तद्वृत्तिधर्मः। ( स्व० ) यथा—पदार्थविशेषः[3] ( मू० म० १ ) इत्यादौ। [५] निश्चा-

१ तथा हि—[ क ] घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः सिद्ध्यति। परमाणूनां परस्परभेदको विशेष एव; स तु स्वत एव* व्यावृत्तः। तेन, तत्र विशेषान्तरापेक्षा नास्ति, इति भावः। (मु० १) [ ख ] "अन्यत्रान्त्येभ्यो विशेषेभ्यः" (वै० १। २।६) अन्ते भवा अन्त्याः, स्वाश्रयविशेषत्वाद्विशेषाः। विनाशारम्भरहितेषु नित्येष्वण्वाकाशकालदिगात्ममनस्सु प्रतिद्रव्यमेकैकशो वर्तमाना अत्यन्तव्यावृत्तबुद्धिहेतवः। यथाऽस्मदादीनां गवादिष्वश्वादिभ्यस्तुल्याकृतिगुणक्रियावयवसंयोगनिमित्ता प्रत्ययव्यावृत्तिर्दृष्टा। यथा—गौः शुक्लः शीघ्रगतिः ककुद्मान् महाघट इति, तथाऽस्मद्विशिष्टानां योगिनां नित्येषु तुल्याकृतिगुणक्रियेषु परमाणुषु, मुक्तात्ममनस्सु चान्यनिमित्तासंभवात्, येभ्यो निमित्तेभ्यः प्रत्याधारं 'अयमस्माद्विलक्षणः' इति प्रत्ययव्यावृत्तिः, देशकालविशिष्टे च परमाणौ 'स एवायम्' इति प्रत्यभिज्ञानं च भवति यतः, तेऽन्त्या विशेषा इति। ... ... ...... 'अथान्त्यविशेषेष्विव परमाणुषु कस्मान्न स्वतः प्रत्ययव्यावृत्तिः प्रत्यभिज्ञानं वा कल्प्यते?' इति चेत्; न,—तादात्म्यात्। इह तादात्म्यकल्पनानिमित्तप्रत्ययो भवति, यथा घटादिषु प्रदीपात्; न तु प्रदीपे प्रदीपात्। यथा च श्वमांसादीनां स्वत एवाशुचित्वम्, तद्योगादन्येषाम्; तथेहापि तादात्म्यादन्त्यविशेषेषु स्वत एव प्रत्ययव्यावृत्तिः, तद्योगात् परमाण्वादिष्विति। ( प्रशस्त० पृ० ६४–६५ )

२ [ क ] 'अयमस्माद्व्यावृत्तः' इति व्यावृत्तिबुद्धिमात्रहेतुरित्यर्थः। ( त० कौ० ) [ ख ] ते खल्वत्यन्तव्यावृत्तिहेतुत्वाद्विशेषा † एव। (प्रशस्त० पृ० २ )

३ अत्र—'पदार्थविशेषः' इत्यस्य 'पदार्थवृत्तिधर्मः' इत्यर्थो ज्ञेयः। स च पदार्थत्वव्याप्यः।

* अत्र प्रयोगः—'एतद्विशेषस्तद्विशेषाद्भिद्यते, तादात्म्येनैतद्विशेषात्' इति। ( स्व० ) एवम्—स्वतो व्यावर्तकत्वानुमानप्रयोगोऽपि विज्ञेयः। ( सि० च० पृ० ३ )

† अत्र कन्दलीकार आह—"खलुशब्दो निश्चये। नित्यद्रव्यवृत्तयो ये विशेषास्ते विशेषा एव निश्चिताः; न तु सामान्यान्यपि भवन्तीत्यर्थः। अत्यन्तं सर्वदा, व्यावृत्तेरेव स्वाश्रयस्येतरस्माद्व्यवच्छेदस्यैव हेतुत्वात् कारणत्वादिति" ( न्या० क० पृ० १४ )

यकोऽसाधारणधर्मः । ( स्व० ) यथा—"विशेषादर्शनं कोटिद्वयस्मरणं च संशयमात्रहेतुः" इत्यादौ—स्थाणुत्वनिश्चायकं वक्रकोटरादिमत्त्वम्, पुरुषत्वनिश्चायकं करादिमत्त्वं च विशेषः । ( सि० च० पृ० ३४ ) । २ आधेयोऽनिर्वचनीयश्च कश्चिद्धर्मविशेषः (अतिशयः) । यथा—अङ्कुरजननयोग्यबीजादौ विशेषः, इति केचित्तत्त्वव्यवस्थापका आहुः ।

**विशेषकः**—१ इतरव्यावर्तकधर्मः । ( गौ० वृ० ३ । १०९ ) यथा—गवादेः सास्नादिमत्त्वं विशेषकः । ( स्व० ) । २ एकवाक्यतापन्नं श्लोकत्रयं विशेषकम्, इति कवय आहुः । ३ ललाटेऽलंकारभूतस्तिलकः, भूषणं च, इति काव्यज्ञा वदन्ति । ( माघ० ३ । ६३ )

**विशेषगुणत्वम्**—[ क ] द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्ति-गुणवृत्ति-जातिमत्त्वम् । ( त० दी० ४ । पृ० ३९ )

[ ख ] भावनान्यो यो वायुवृत्तिवृत्ति-स्पर्शावृत्ति-धर्मसमवायी तदन्यत्वे सति, गुरुत्वाजलद्रवत्वान्यगुणत्वम् । ( दि० गु० पृ० १९३ )

---

१ अत्रेदं विज्ञेयम्—कुसूलस्थबीजादिभिर्नाङ्कुरोत्पत्तिः; अतः,—कृष्टसुक्षेत्रादावुप्तसुबीजादौ सलिलपवनादियोगेन कश्चिद्विशेषोऽवश्यमाधेयः, इति ।

२ अत्रोक्तम्—"त्रिभिर्श्लोकैर्विशेषकम्" इति ।

३ विशेषगुणाश्च षोडश,—रूपम्, रसः, गन्धः, स्पर्शः, सांसिद्धिकद्रवत्वम्, स्नेहः, शब्दः, बुद्धिः, सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः, भावना, चेति । (भा० प० गु० श्लो० ९१–९२ )

४ तदर्थश्च,—[ पृथिवीत्व-जलत्वाद्यात्मकं यत् द्रव्यविभाजकोपाधिद्वयम्, प्रत्येकं तत्समानाधिकरणाः ( द्वित्व-द्विपृथक्त्व-संयोगादयः ), तदवृत्तिजातिमद्गुणत्वम्, इति । तथा च विशेषगुणेषु लक्षणसमन्वयः क्रियते—रूपादिषु चतुर्षु तादृशं ( लक्षणघटकजातिम् ) रूपत्वादिकम्, सांसिद्धिकद्रवत्वे च द्रवत्वत्वावान्तरजातिम्, स्नेहादिषु दशसु स्नेहत्वादिकम्, भावनायां संस्कारत्वावान्तरजातिं चादाय लक्षणसमन्वयः । ( नील० गु० पृ० ३९ )

५ अत्र प्रवदन्त्यभिज्ञा निष्कृष्टार्थम्—यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयम्, तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिः, तद्वत्त्वे सति गुणत्वम्, इति । तेन, एकत्वादिसंख्यायाम्, परिमाणादौ च नातिव्याप्तिः, इति । ( नील० गु० पृ० ३९ )

६ अग्रत्यपदानां प्रयोजनानि कथ्यन्ते—भावनादावतिव्याप्तिवारणाय 'गुरुत्वाजलद्रवत्व' विशेष्यदलम् । गुरुत्व-नैमित्तिकद्रवत्वयोर्वारणाय 'गुरुत्व' इत्यादि । सांसिद्धिकद्रवत्व-

**विशेषणम्**—१ विशेषणतावत्[1] । यथा—घटाभाववद्भूतलमित्यत्र घटाभावो विशेषणम् । २ [ १ ] [ क ] विशेषणतावत्[2] । यथा—नीलो घट इत्यादौ नीलत्वं विशेषणम्[3] ।

[ ख ] ( व्यावर्तकम्, प्रकारो वा ) (A) प्रत्याय्य[4]व्यावृत्त्यधिकरणतावच्छेदकत्वे[5] सति [6]व्यावर्तकम् । (B) विवक्षितान्वयप्रतियोगिता-

संग्रहाय 'अजल' इति । संयोगादिवारणाय सत्यन्तं दलम् । भावनायामव्याप्तिवारणाय आद्यं अन्यान्तं सत्यन्तघटकसमवायिविशेषणम् । सत्तादिकमादायासंभववारणाय, स्पर्शसंग्रहाय च 'स्पर्शावृत्ति' इति । ( दि० गु० पृ० १९३ )

१ अत्र—इयं विशेषणता* च,–[ क ] स्वरूपसंबन्धरूपः संनिकर्षविशेषः । ( नील० १ । पृ० १९ ) ( मू० म० १ ) यथा–'घटाभाववद्भूतलम्' इति चाक्षुषप्रत्यक्षे हेतुभूतो, भूतलांशे घटाभावस्य विशेषणतारूपः† संनिकर्षः । ( स्व० ) । सा द्विविधा,–इन्द्रियविशेषणता, इन्द्रियसंनिकृष्टविशेषणता च । आद्यया शब्दाभावो गृह्यते । द्वितीयया भूतलादौ घटाभावो गृह्यते । ( न्या० म० १ ) । [ ख ] स्वरूपसंबन्धावच्छिन्नाऽऽधेयता । ( नील० १ । पृ० १८ ) यथा–नैयायिकमते ( न तु वैशेषिकमते ),—"विशेषणतया समवायस्य प्रत्यक्षम्" इत्यादौ विशेषणता ।

२ अत्र—इयं विशेषणता तु,–[ क ] प्रकारताख्यो‡ विषयताविशेषः । [ ख ] तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वम् । ( दि० ४ ) यथा–दण्डवान् पुरुषोऽस्तीत्यादौ दण्डस्य विशेषणता । ( स्व० )

३ अत्र व्युत्पत्तिः—'विशिष्यते ( भिद्यते ) अनेन' ( ल्युट् ) इति विशेषणम् ( भेदकम् )।

४ 'दण्डी पुरुषः' इति ज्ञानानन्तरं दण्डवत्त्वदण्डव्यावृत्तिरवगम्यते, इति प्रत्याय्यव्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते, इति(दण्डो विशेषणम्)।(चि०१। निर्विक०पृ०८३३)

५ तदाहुराचार्याः—सदसद्वा समानाधिकरणं व्यवच्छेदकं विशेषणम्, इति । ( चि० १ । पृ० ८३४ )

६ समुदायार्थस्तु, यद्व्यावृत्त्यधिकरणतावच्छेदकं तदेव तत्र विशेषणम् , इति । व्यावृत्तिरन्योन्याभावः । ( मू० म० १ । पृ० ८३२ )

* इयमभावप्रत्यक्षे हेतुर्भवति, इति ध्येयम् । अत्राधिकं तु 'इन्द्रियार्थसंनिकर्ष'शब्दव्याख्याने ( पृ० १२६ ) द्रष्टव्यम् ।

† अत्र—अभावस्य स्वोपरक्तबुद्धिजनकत्वं यत्स्वरूपम्, तदेव विशेषणत्वम्, इति ज्ञेयम् । ( त० भा० पृ० २० )

‡ अत्रेदमधिकं विज्ञेयम्—विशेषणतावच्छेदकं तु 'विशेषणे यत् विशेषणम्' तत् । ( मु० ) यथा–दण्डवान्पुरुष इत्यत्र दण्डत्वं विशेषणतावच्छेदकम्, इति । ( स्व० )

वच्छेदकम् । यथा—दण्डिनमानयेत्यादौ दण्डो विशेषणम् । ( C ) य-दन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयेतरान्वयधीः, तद्व्यवच्छेद-कम् । ( D ) विशेष्यान्वयिना यस्यावश्यमन्वयः, तदवच्छेदकम् । (E) यद्व्यावर्तकं विशेष्यान्वयिनाऽन्वीयते, तत् । ( F ) तात्पर्यविषयान्व-यप्रतियोगी धर्मः । ( G ) उद्देश्यान्वयप्रतियोगी धर्मः । ( चि० १ । पृ० ८३४–८३८ ) [ २ ] [ क ] विद्यमानं सद्व्यावर्तकम् । यथा—पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिर्विशेषणम् । ( ग० व्यु० का० ३ । पृ० ९२ ) यथा वा—यदा देवदत्तगृहे काकवत्ता, तदा काको विशेषणम् । ( वै० उ० ७ । २ । ८ )

[ ख ] यत्राश्रये यत्कालीना वृत्तिः प्रत्याय्या तत्कालीनतदधिकरण-वृत्तिर्विशेषणम्, ( अन्यदुपलक्षणम् ) । एवं च काककालीनगृहव्यावृत्तिपरे प्रयोगे काको विशेषणमेव । सामान्यतो गृहविशेषव्यावृत्तिपरे प्रयोगे तु उपलक्षणमेव सः, इति निष्कर्षः । ( प० च० पृ० ९० )

विशेषणं त्रिविधम्,—व्यावर्तकम्, विधेयम्, हेतुगर्भं चेति । तत्रा-द्यम्, नीलो घट इत्यादौ नीलः । द्वितीयं यथा—'पर्वतो वह्निमानस्ति' इत्यादौ वह्निर्विधेयः । यथा वा—"न्यक्कारो ह्ययमेव मे यदरयः" इत्यादौ न्यक्कारो विधेयः । तृतीयं च, "स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापा-दितवंशकृत्यम्" ( रघु० २ । १२ ) इत्यादौ,—मारुतपूर्णरन्ध्रत्वं हेतुगर्भं विशेषणम् । यथा वा—'सुरापः पतति' इत्यादौ,—सुरापानं हेतुगर्भं विशेषणम्, इत्यप्युदाजह्रुः ।

**विशेषणविशेष्यभावः**—१ ( इन्द्रियार्थसंनिकर्षः ) स्वरूपसंबन्धावच्छि-न्नाधाराधेयभावः । ( नील० १ । पृ० १८ ) यथा—'घटाभाववद्भूत-लम्' इत्याद्यभावप्रत्यक्षे कारणभूतो विशेषणविशेष्यभावः संनिकर्षः । अ-त्राधिकं तु 'इन्द्रियार्थसंनिकर्ष'शब्दव्याख्यानावसरे संपादितम्, तत्र दृश्यम् । २ विषयताविशेषः । यथा—'दण्डी पुरुषः' इति शाब्दबोधे दण्डपुरुषयोर्विशेषणविशेष्यभावः ।

---

१ अत्र विग्रहः—'विशेषणं च विशेष्यं च विशेषणविशेष्ये, तयोर्भावः' इति; निरूप्यनिरूपकभावापन्नं विशेषणत्वं विशेष्यत्वं चेत्यर्थः ।

**विशेषणासिद्धः**—(हेत्वाभासः) यो हेतुः, स्वघटकविशेषणविशिष्टः सन्पक्षे न तिष्ठति, न सिध्यति च, सः । ( स्व० ) यथा—'शब्दो नित्यः, द्रव्यत्वे सत्यस्पर्शत्वात्' इत्यत्र हेतुर्विशेषणासिद्धः । ( त० भा० पृ० ४६)

**विशेषविधिः**—सामान्यविशेषयोर्मध्ये विशेषे विधानम् । यथा—'ब्राह्मणेभ्यो दधि दीयताम्, कौण्डिन्यायै तक्रम्' इत्यत्र कौण्डिन्यस्य ब्राह्मणविशेषत्वेन, तद्विषये दधिदानापवादेन तक्रदानविधिर्विशेषविधिर्भवति ।

**विशेषसमः**—( जातिः ) "धर्मेणैकेन केषांचिदविशेषप्रसञ्जनम् । साधनप्रतिबन्धाय स विशेषसमो मतः" । ( ता० र० परि० २ । श्लो० १२१ ) । अत्रापेक्षणीयोदाहरणादिकं तु, 'अविशेषसमः' इति शब्दव्याख्याने यत् प्रदर्शितम्, तदेवात्र ग्राह्यम् ।

**विशेषितम्**—१ 'विशिष्ट'शब्दवदस्यार्थोऽनुसंधेयः । यथा—"याप्यते ग्राममजा' इत्यादौ—स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशेषितधात्वर्थः कर्तृत्वेऽन्वेति" ( ग० व्यु० का० २ । पृ० ४८ ) इत्यादौ 'विशेषित'शब्दस्यार्थो विशिष्टं भवति । २ भेदितम् । ३ विशेषयुक्तम् ।

**विशेष्यम्**—१ विशेष्यतावान् । यथा—'भूतले घटो नास्ति' इति प्रत्यक्षे घटाभावो विशेष्यः । २ विशेष्यतावान् । यथा—'नीलो घटः' इत्याकारकशाब्दबोधे घटो विशेष्यः ।

---

१ अत्र—'विशेषणेनासिद्धः' इति विग्रहः । स च ( विशेषणासिद्धः ) स्वरूपासिद्धप्रभेदः, इति ध्येयम् । ( त० भा० पृ० ४६ )

२ अत्र,—द्रव्यत्वविशिष्टास्पर्शत्वं हेतुः, स च शब्दे नास्त्येव; अस्पर्शत्वरूपविशेष्यस्य शब्दे सत्त्वेऽपि द्रव्यत्वरूपविशेषणस्य बाधात्, इति बोध्यम् ।

३ अत्रोच्यते—"अल्पः स्याद्विषयो यस्य स विशेषविधिर्मतः" इति । ( न्या० का० )

४ अत्र—'अविशेषसमः' इति पाठः सूत्रकारस्याभिमतः, इति विज्ञेयम् ।

५ अत्र—विशेष्यता च (१) स्वरूपसंबन्धावच्छिन्नाधाराधेयभावः, संनिकर्षविशेषः, (नील० १। पृ० १८) (२) स्वरूपसंबन्धावच्छिन्नाधेयतासंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यता, इति तु वयं ब्रूमः ।

६ अत्रायं सिद्धान्तः—'इयं विशेष्यता केनचिदपि संबन्धेनावच्छिन्ना न भवति' इति ।

**विशेष्यासिद्धः**—( हेत्वाभासः ) यो हेतुः, स्वघटकविशेष्यविशिष्टः सन्पक्षे न तिष्ठति, न सिध्यति च, सः । ( स्व० ) यथा—शब्दो नित्योऽस्पर्शत्वे सति द्रव्यत्वादित्यादौ—हेतुर्विशेष्यासिद्धः । ( त० भा० पृ० ४६ )

**विश्वासः**—१ वञ्चकत्वाभावसंभावना । यथा—"न विश्वसेदविश्वस्तम्" इत्यादौ । ( पञ्चत० ) । २ 'इदमित्थम्' इत्याकारश्चित्तवृत्तिविशेषः, इत्येके वदन्ति ।

**विषयः**—१ विषयतावान् । यथा—'अयं घटः' इति ज्ञाने घटत्वम्, 'ज-

---

ं—विशेष्यता चात्र [क] तत्तज्ज्ञानीयो यत्किंचित्प्रकारतानिरूपितः संसर्गताभिन्नो विषयताविशेषः । [ ख ] भासमानवैशिष्ट्यानुयोगित्वम्,* इति संप्रदायः । ( कु० ४ ) अत्रेदमवधेयम्—'मध्यवर्तिविषयतयोरैक्यमेव' इति जगदीशचक्रवर्तिनः पक्षः; 'मध्यवर्तिविषयतयोः परस्परं भेद एव' इति पक्षो गदाधरचक्रवर्तिनः । यथा हि—'दण्डवान्पुरुषः' इत्यत्र,—'पुरुषे दण्डः प्रकारः ( विशेषणम् ), दण्डे च दण्डत्वं प्रकारः' इति स्थितिः; एवं च—दण्डत्वनिष्ठप्रकारतानिरूपिता विशेष्यता, पुरुषनिष्ठविशेष्यतानिरूपिता प्रकारता च, एतद्द्वयं दण्डे तिष्ठति; तथा च—'मध्यवर्तिन्योस्तयोर्द्वयोर्विषयतयोरैक्यम्' इति जगदीश आह । गदाधरमते तु, 'तयोर्भेदः' इत्यवच्छेद्यावच्छेदकभावः† स्वीकृतः, इति ।

१ अत्र विग्रहः—'विशेष्येणासिद्धः' इति । स च ( विशेष्यासिद्धः ) स्वरूपासिद्धप्रभेदः, इति विज्ञेयम् । ( त० भा० पृ० ४६ )

२ अत्,—अस्पर्शत्वविशिष्टं द्रव्यत्वं हेतुः, स च शब्दे नास्त्येव; शब्देऽस्पर्शत्वरूपविशेषणस्य सत्त्वेऽपि द्रव्यत्वात्मकस्य विशेष्यस्याभावात्, इति ।

३ विषयता चात्र [ १ ] [ क ] 'विषयः‡' इत्याकारकप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेषः ।

---

* अत्र—वैशिष्ट्यं च संबन्धविशेषः ।

† तन्मते मध्यवृत्तिविषयतयोरित्थमवच्छेद्यावच्छेदकभावः—दण्डत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या पुरुषनिष्ठविशेष्यतानिरूपिता प्रकारता ( दण्डनिष्ठा प्रकारता ), तद्वान्दण्डो भवति, इति; एवं वैपरीत्येऽपि—पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठप्रकारत्वावच्छिन्ना या दण्डत्वनिष्ठप्रकारतानिरूपिता दण्डनिष्ठविशेष्यता, तद्वान् दण्डो भवति, इति च विज्ञेयम् ।

‡ 'घटो ज्ञानविषयः,' 'पटो ज्ञानविषयः' इत्यनुगतप्रतीतिसाक्षिको ज्ञान-विषय-स्वरूपसंबन्धविशेषः, इत्यर्थः । ( त० प्र० )

अत्र ज्ञानविषयत्वं च ज्ञानसंबन्ध एव, इति ।

गत्प्रमेयम्' इति ज्ञाने च प्रमेयत्वेन जगत्, विषयः। २ प्रतीयमान-भोगसाधनम्। यथा—अनित्य-पृथिवीजलतेजोवायुभागो द्व्यणुकादिर्विषयः। ३ प्रतिपाद्योऽर्थो (ग्रन्थस्य) विषयः। (म० प्र० ४) ४ पौराणिकास्तु,—इन्द्रियजन्यज्ञानविषयः। यथा—शब्द-स्पर्श-रूप-रस-गन्धा विषयाः, इत्याहुः। ५ नियामकः, इति भट्ट आह। ६ आलंकारिका-

---

(न्या० म० ख० १। पृ० ४) [ख] क्वचित्,—कोटित्वपर्याप्त्यधिकरणत्वम्। (मू० म० प्रामा०)

इयं विषयता त्रिविधा,—विशेष्यता, प्रकारता, संसर्गता चेति। यथा—'अयं घटः' इति प्रत्यक्षे,—घटत्वे प्रकारता, इदमर्थे विशेष्यता, संबन्धे (समवायादौ) च संसर्गता, इति। (कु० ४) (त० प्र०)। [२] विषयता च पदार्थान्तरमेव, इत्येकदेशिन * आहुः। [३] भट्टास्तु,—'ज्ञातो घटः' इति प्रतीतिसिद्धा ज्ञानजन्या विषयनिष्ठा प्राकट्यापरनाम्नी पदार्थे ज्ञातता, सैव च विषयता ज्ञानविषययोः संबन्धरूपा, इत्याहुः। (प० मा०) (न्या० म० १। ४)। [४] विषयता ज्ञानादिवत् सविषयका, प्रसिद्धविषयतातोऽन्या, इत्यतिरिक्तविषयतावाद्याह। (दीधि० हेत्वाभा० बाध० पृ० २१८)

१ अत्र केचिदाहुः—विषयो हि द्विविधः,—अपरोक्षः,परोक्षश्चेति। तत्राद्यः, प्रत्यक्षस्य विषयः। द्वितीयस्त्वनुमानस्य विषयः, शब्दस्य विषयश्च, इति। (प्र० च० पृ० ४१)

२ विषयता चात्र [क] लौकिकसाक्षात्कारविषयकार्यद्रव्यत्वम् †। (वै० उ० ४। २। १) [ख] साक्षात्परम्परया वोपभोगसाधनत्वे ‡ सति जन्यद्रव्यत्वम्। (वै० वि० ४। २। १) [ग] शरीरेन्द्रियभिन्नत्वे सति भोगसाधनत्वम्। (वाक्य० १। पृ० ३) [घ] ज्ञायमानत्वे सति, आत्मनो भोगसाधनत्वम्। (त० कौ०)

३ अत्रार्थे विग्रहः—'विषण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति संबध्नन्ति वा' विषयाः, इति।

४ अत्रोच्यते—"विषयाशामहापाशात् यो विमुक्तः सुदुस्त्यजात्। स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि" इति। (विवेकचूडामणौ)

५ अत्रार्थे व्युत्पत्तिं प्रदर्शयति—"विशब्दो हि विशेषार्थः सिनोतिर्बन्धनार्थकः। विशेषेण सिनोतीति विषयोऽतो नियामकः" इति (भट्टका०)

---

* तथा चाऽयं भावः—नव्यास्तु,—विषयता विषयिता च न स्वरूपसंबन्धविशेषः, किंतु—सप्तपदार्थातिरिक्तैव, इत्याहुः, इति।

† वस्तुतस्तु—लौकिकसाक्षात्कारविषयत्वमेव द्रव्य-गुण-कर्म-सामान्या-ऽभाव-साधारणं विषयत्वम्, इति। (वै० उ० ४। २। १। पृ० २०९)

‡ अत्रायं नियमः,—'यत्र कार्यं यददृष्टाधीनम्, तत् तदुपभोगं साक्षात्परंपरया वा जनयति' इति। (मु० १)

स्तु—आरोपाश्रयः, यथा—गौर्वाहीक इत्यादौ—वाहीको विषयः, इत्याहुः । (काव्यप्र० उ० २) । ७ मीमांसकाश्च,—अधिकरणावयवविशेषो विचारार्हवाक्यम्, इत्याहुः । ८ देशः, इति काव्यज्ञा आहुः ।

**विषयि**—१ विषयितावत् । यथा—"विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः" (भा० प० श्लो० ६६) इत्यादौ ज्ञानं विषयि भवति । २ इन्द्रियम् । ३ विषयासक्तः, इत्यालंकारिका आहुः । ४ राजा विषयी, इति काव्यज्ञा वदन्ति ।

---

१ अत्रोच्यते—"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति (सिद्धान्तः) शास्त्रेऽस्मिन् पञ्चाधिकरणं स्मृतम्" इति । (मीमांसा०)

२ अत्र व्युत्पत्तिः—'विषयोऽस्त्यस्य' इति विषयि ।

३ इयं*विषयिताऽपि ज्ञानेच्छाकृतिभावना-न्यतमनिष्ठा, विषयतावत् स्वरूपसंबन्धविशेषः । अत्रेदं विज्ञेयम्—'विषयिता च, नियमेन विषयतानिरूपिता भवति' इति वस्तुस्थितिः ।

४ अत्रार्थे व्युत्पत्तिः—'विषयोऽस्त्यस्य स्वनिष्ठविषयतानिरूपितविषयितावत्वसंबन्धेन' इति विषयि ।

५ अत्रार्थे—'स्वविषयकज्ञानजनकत्वसंबन्धेन विषयोऽस्त्यस्य' इति विषयि, इत्यनुसंधेयम् ।

---

* विषयिताऽपि त्रिविधा,—विशेषणतानिरूपिता प्रकारिता, संसर्गतानिरूपिता संसर्गिता, विशेष्यतानिरूपिता विशेष्यिता, चेति । यथा—'घटवद्भूतलम्' इति ज्ञाने, घटनिष्ठप्रकारतानिरूपिता प्रकारिता, संयोगनिष्ठसंसर्गतानिरूपिता संसर्गिता, भूतलनिष्ठविशेष्यतानिरूपिता विशेष्यिता, एताः (प्रकारिता—संसर्गिता—विशेष्यिताः) सन्ति, इति सर्वत्रैवमेवोह्यम् । अत्रेदमधिकं विज्ञेयम्—(१) गदाधरादीनां मते विषयितात्रैविध्याङ्गीकारेण विषयितैव अनुमित्यादिप्रतिबन्धकतावच्छेदिका (हेत्वाभासलक्षणादौ) भवति; जगदीशचक्रवर्तिमते तु, त्रिविधविषयतानिरूपिताया अप्येकस्या एव विषयिताया अभ्युपगमेन, विषयतैव (निरूपकतासंबन्धेन) तादृशप्रतिबन्धकतावच्छेदिका भवति, इति मतभेदो द्रष्टव्यः । (२) 'ययोर्विषयतयोर्निरूप्यनिरूपकभावः, तन्निरूपितविषयितयोरेवावच्छेद्यावच्छेदकभावः' इति सिद्धान्तोऽप्यङ्गीकर्तव्यः; तेन,—तद्वद्विशेष्यकतत्प्रकारकत्वरूपस्य तद्वद्विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्वपर्यवसन्नस्य यथार्थज्ञानलक्षणस्य, रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि 'इमे रङ्ग-रजते' इत्याकारकसमूहालम्बनभ्रमे यथाश्रुतस्य तद्वद्विशेष्यकतत्प्रकारकत्वस्य (रङ्गविशेष्यकत्व-रङ्गत्वप्रकारकत्वयोः, रजतविशेष्यकत्व-रजतत्वप्रकारकत्वयोश्च) सत्त्वेऽपि, रङ्गत्वप्रकारतायां रङ्गविशेष्यतानिरूपितत्वस्य रजतत्वप्रकारतायां च रजतविशेष्यतानिरूपितत्वस्य चासत्त्वेन रङ्गविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्व-रजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोरभावात् तादृशभ्रमे नातिव्याप्तिः । (नील० १।६।१५)

**विषादः**—[ क ] इष्टनाशकृतो मनोभङ्गः। ( रघु० टी० मल्लि० ) यथा–"विषादलुप्तप्रतिपत्तिविस्मितम्" ( रघु० ३। ४० ) इत्यादौ।
[ ख ] वेदान्तिनस्तु,—मोहनिमित्ताच्छोकाद्यन्मनोदौर्बल्यम्; यस्मिन् सति सर्वव्यापारोपरमो भवति, स विषादः, इत्याहुः। ( गीता, अ० १। श्लो० २८। भाष्ये, राघवेन्द्र० )

**विष्टम्भः**—१ [ क ] प्रतिबन्धः।
[ ख ] क्वचित्—उत्तरदेशगतिप्रतिबन्धः। ( गौ० वृ० ४।८७ ) यथा–"अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः" ( गौ० ४।२।२२ ) इत्यादौ विष्टम्भः। २ रोगविशेषः, इति भिषज आहुः।

**विसंवादः**—[ १ ] समयविरुद्धवादः। ( स्व० )। [ २ ] अन्यथास्थितस्य वस्तुनोऽन्यथाकथनम्। [ ३ ] प्रमाणानुसरणाभावः, इति केचिदाहुः। ( वाच० ) [ ४ ] विप्रलम्भः ( वञ्चनम् ), इति काव्यज्ञा वदन्ति।

**विसर्गः**—१ त्यागः। २ शाब्दिकास्तु,—विसर्जनीयाख्यो वर्णविशेषः, इत्याहुः। ३ सूर्यस्यायनविशेषः, इति ज्योतिर्विद आहुः। ४ प्रलयः; ५ विशेषसृष्टिश्चेति, पौराणिका आहुः।

**विहितत्वम्**—[ १ ] इष्टसाधनत्वेन वेदबोधितत्वम्। ( वाक्य० गु० पृ० २१ ) यथा–"स्वर्गकामो यजेत" इत्यादौ यज्ञादिकर्मणो विहितत्वम्। यथा वा–नैयायिकानां मते, "अहरहः संध्यामुपासीत" इत्यादौ संध्योपासनाया विहितत्वम्।
[ २ ] बालवदनिष्टाननुबन्धित्वेन वेदबोधितत्वम्, इति मीमांसका आहुः। ( मू० म० १ )

---

१ तदुक्तम्—"विषादश्चेतसो भङ्ग उपायाभाव-नाशयोः" इति। ( रघु० स० ३। श्लो० ४०। टी० )

२ अत्र 'वेद' इत्युपलक्षणम्; वेदमूलकस्मृत्याद्यपि संगृह्यते।

३ एतन्मते—संध्योपासनाया दुरितनिवृत्त्यादि फलमङ्गीकृतम्, इति विहितत्वं संगच्छते।

४ एतन्मते, नित्यकर्मणां फलाभावेनेष्टासंभवेऽपि बलवदनिष्टाजनकत्वमुपलक्षणादस्य समन्वयो भवति। विशेषं तु 'विधि'शब्दव्याख्याने द्रष्टव्यम्।

[ ३ ] धर्मापादकत्वम्, इति केचिदाहुः ।

**वीतम्**—१ अनुमान[1]विशेषः । २ युद्धासमर्थं सैन्यम्, इति नीतिशास्त्रज्ञा आहुः । ३ शान्तम्; । ४ गतं चेति काव्यज्ञा आहुः ।

**वीप्सा**—[ १ ] सकलधर्मिप्रत्यायनेच्छा । ( ग० २ । अवय० हेतु० ) यथा—"यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे" इत्यादौ,—यत्पदे[2] वीप्सा । ( ग० २ । अवय० हेतु० पृ० ७४ ) ( चि० २ । अव० पृ० ८१ ) यथा वा—"यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव" (माघ० स० ३ । श्लो० १६) इत्यादौ,—यत्तत्पदयो-र्वीप्सा । (स्व० ) [ २ ] व्याप्ते[3]र्व्यापकत्वस्य वा बोधनेच्छा । यथा—'यो[4] यो धूमवान्स[5] वह्निमान्' इत्यत्र,—यत्पदे वीप्सा । ३ अनवयवेन द्रव्या-णामभिधानमेव वीप्सार्थः, इति महाभाष्यकारः पतञ्जलिराह ।

---

१ अन्वयमुखेन प्रवर्तमानमनुमानम्, इत्यर्थः । ( सांख्य० कौ० कारि० ५ । पृ० १० )

२ समुदायश्लोकस्तु,—"कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते ! धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव ! प्रसीद । यद्यत्पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय" इति । ( मालतीमाध० १ । ३)

३ अत्र—वीप्साप्रयोजनं च क्वचिद्व्यभिचारधीवारणम्* इति प्राञ्च आहुः । ( चि० २ । अवयवप्र० हेतु० पृ० ८० )

४ अत्रेदं बोध्यम्—"नित्यवीप्सयोः" ( पाणि० ८ । १ । ४ ) इत्यनेन द्विरुक्तिविधानस्य नित्यतया 'यत्' पदे द्विरुक्तिसत्त्वेऽपि, तथा—'तत्' पदे द्विरुक्तेः साधुत्वेऽपि च, न्याये प्रयुज्यमानेऽधिकस्यानपेक्षितत्वेन 'तत्' पदे द्विरुक्तेर्नावश्यकत्वम्, इति । ( ग० २ । हेतु० पृ० ७४ )

५ अत्र च—वीप्सया 'महानसं धूमवद्वह्निमच्च, महानसान्यद्धूमवद्वह्निमच्च' इति वाक्यार्थ-चतुष्टयविषयकबोधः, 'धूमवान्धूमव्यापकवह्निमान्' इति विशिष्टैकार्थबोधो वा जायते, इति बोध्यम् । ( ग० २ । अव० न्यायलक्ष० पृ० ६ )

---

* उद्देश्य-मानसव्याप्तिज्ञान-विरोधिव्यभिचारधीवारणम्, इत्यर्थः । तथा चायं भावः—साध-नत्वधिकरणे साध्यवत्त्वनिश्चये, तेन विपरीतनिश्चयात्मकेन (व्यभिचारशङ्काविवर्तकेन) सा-धनाधिकरणे साध्याभाववत्त्वरूपव्यभिचारग्रहस्य प्रतिबन्धः, इति । ( ग० २ । हेत्वाभा० पृ० ७३ )

**वृत्तिः**—[ क ] शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलः पदपदार्थयोः संबन्धः। ( चि० ४ ) ( मु० ४ । पृ० १७४ )

[ ख ] शक्ति-लक्षणा-ऽन्यतरात्मकः संबन्धः। ( मु० ४) ( दि० ४। पृ० १७४ ) ( न्या० बो० ) यथा—'घट'पदस्य कम्बुग्रीवादिमत्यर्थे वृत्तिः ( शक्तिः ) । ( स्व० )

[ ग ] शाब्दिकास्तु,—शाब्दबोधप्रयोजकस्तत्तदर्थनिरूपितः शब्दधर्मः, इत्याहुः । ( ल० म० स्फोट० पृ० २ ) । न्यायमते वृत्तिर्द्विविधा,—संकेतः, लक्षणा चेति । (ग० शक्ति०) ( तर्का० ४ । पृ० १०)। प्रकारान्तरेण वृत्तिर्द्विविधा,—मुख्या, गौणी च । तत्राद्या,—शब्दशक्तिः; सैव 'संकेत' इत्युच्यते । द्वितीया तु,—लक्षणा, इति । प्राचीनशाब्दिकमते षड्विधा शब्दवृत्तिः । लक्षितलक्षणाऽपि वृत्त्यन्तरम्, इति प्राञ्चो नैयायिका आहुः । सा (लक्षितलक्षणा) जहल्लक्षणैव, नातिरिक्ता वृत्तिः,

---

१ सा च 'पदवृत्तिः' इत्युच्यते, इति विज्ञेयम् । ( ग० शक्ति० पृ० २ ) अत्र वृत्तित्वं च ( १ ) शक्ति-लक्षणा-ऽन्यतरत्वम् ।(त० प्र० ख० ४ । पृ० ३४)।(२) परे तु,—शाब्दबोधजनकपद-पदार्थ-संबन्धत्वम्, इत्याहुः । (ल० म० स्फोट० पृ० १३)

अत्रेदं बोध्यम्—( १ ) वृत्तिस्तात्पर्यनिर्वाहिका भवति । तात्पर्यं चात्र त्रिविधम्,—औत्सर्गिकम्, आपवादिकम्, नियतं चेति । तत्राद्यम्, शक्तिं कल्पयति,—यथा—घटादिपदप्रयोक्तुरुत्सर्गतो घटादावेव तात्पर्यमस्ति, इति तस्य तत्र शक्तिः। द्वितीयम्, लक्षणां कल्पयति,—यथा—गङ्गापदस्य मुख्यार्थान्वयबाधे तीरादौ तात्पर्यग्रहो भवति, इति तस्य तत्र लक्षणा । तृतीयम्, निरूढिलक्षणां कल्पयति,—निरूढिलाक्षणिकस्यानुपपत्तिज्ञानमन्तराऽपि लक्ष्ये तात्पर्यग्रहनियमात्तत्र निरूढिलक्षणा । यथा(A)—कटं करोतीत्यादौ,—कटशब्दस्य कटावयवे; 'कटस्य सिद्धत्वे करणं न संभवति, असिद्धे च कर्मत्वं न' इति, अनुपपत्तिज्ञानविरहेऽपि 'कटावयववान् कटवत्तया करोति' इति ततो बोधात् । (B) अथ वा—वह्निमान्धूमादित्यादौ,—हेतुपदे तज्ज्ञाने निरूढिलक्षणा । ( म० प्र० ख० ४ । पृ० ४०—४१ )

(२) शाब्दिकमते,—वृत्त्या संस्कारो जन्यते; संस्कारकल्पिका च वृत्तिस्मृतिः, शाब्दबुद्धिरेव वा, इति ज्ञेयम् । ( ल० म० स्फोट० पृ० २ )

२ शाब्दिकमते योगादिभेदात् षड्विधा शब्दवृत्तिः; वृत्तिभेदाच्च शब्दभेदः । तदुक्तम्—"यौगिको, योगरूढश्च, शब्दः स्यादौपचारिकः, । मुख्यो, लाक्षणिको, गौणः, शब्दः षोढा निगद्यते" इति । ( म० प्र० ४ । पृ० ४१—४२ )

इति नव्या आहुः । व्यञ्जनाख्यं तृतीयमपि वृत्त्यन्तरमैच्छन्नालंकारिकाः शाब्दिकाश्च । गौणीं वृत्त्यन्तरमैच्छन्मीमांसकाः । ( म० प्र० पृ० ४१ ) ( सि० च० ) । वाक्यार्थबोधने तु,—तात्पर्याख्यं वृत्त्यन्तरमङ्गीचक्रुस्तार्किकाः ।

---

१ तदुक्तम्—'वाच्योऽर्थोऽभिधया बोध्यो, लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया, ताः स्युस्तिस्रः शब्दस्य वृत्तयः" इति । ( सा० द० परि० २ । श्लो० ११ )

२ तद्यथा तन्मते,—"गच्छ गच्छसि चेत्कान्त । पन्थानः सन्तु ते शुभाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" इत्यादौ,—व्यञ्जनया वृत्त्या प्रियाया मरणम्, 'हे प्रिय ! तव गमनोत्तरं मे प्राणवियोगो भविष्यति', अतो 'न गन्तव्यम्' इत्यर्थो व्यज्यते, इति ।

नैयायिकास्तु,—'गच्छसि' इत्यत्र,—'मा गाः, इति' अस्यास्तात्पर्यमुन्नीयते संभाव्यते वा, न तु 'मा गाः, इति' निर्णीयते, इति कृतं वृत्त्यन्तरेण, इत्याहुः । ( न्या० म० ४ । पृ० १७ )अत्र,—अधिकं तु 'व्यञ्जना'शब्दव्याख्याने द्रष्टव्यम् ।

३ यथा हि तन्मते,—[ क ] 'अग्निर्माणवकः' इत्यादौ,—माणवकेऽग्निसादृश्यबोधाय गौणी वृत्त्यन्तरमेव, इति । ( सि० च० ४ । पृ० ३१ ) [ ख ] यथा—'यजमानः प्रस्तरः' इत्यादौ,—यजमानशब्दः स्वार्थनिष्ठयागसाधकत्वरूपगुणयोगात् प्रस्तरे प्रयुक्तो यजमानकार्यकारणत्वेन प्रस्तरमुपस्थापयति । यथा वा—'सिंहो माणवकः' इत्यादौ,—सिंहशब्दः स्वार्थनिष्ठचापल्यादिगुणयोगात् माणवकं तेन रूपेणोपस्थापयति, इति शक्तिलक्षणाभ्यामतिरिक्तैव गौणी वृत्तिः, इति । ( म० प्र० ४ । पृ० ४१ ) [ ग ] 'शक्यस्य साक्षात्संबन्ध एव लक्षणा, न तु परंपरासंबन्धरूपा । तेन, 'गङ्गायां घोषः' इत्यत्र—तीरे शक्यस्य प्रवाहस्येव, 'अग्निर्माणवकः,' इत्यादौ,—माणवके शक्यस्याग्नेः साक्षात्संबन्धो न संभवति, इति सादृश्यात्मकस्य परंपरासंबन्धस्यातिरिक्तवृत्तित्वमङ्गीकर्तव्यम्' इति मीमांसकानामभिप्रायः । नैयायिकास्तु तन्न सहन्ते—'शक्यस्य साक्षात्संबन्धस्येव परंपरासंबन्धस्यापि लक्षणात्वस्वीकारे क्षतिविरहात् गौण्या न वृत्त्यन्तरत्वम् । तथा च—'अग्निर्माणवकः' इत्यादौ,—लक्ष्यमाणगुणसंबन्धरूपा* लक्षणैव, इति । ( नील० ४ । पृ० ३० ) ( वैदा० प० )

४ वाक्यार्थबोधने तात्पर्यां वृत्तिमङ्गीचक्रुरभिहितान्वयवादिनः ( तार्किकाः ) । तेषामयमाशयः—अभिधाया एकैकपदार्थबोधेन विरमात् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्या नाम वृत्तिरङ्गीकर्तव्या, इति । ( सा० द० उ० २ । श्लो० ३१ । पृ० १५ )

---

* तदर्थश्च,—लक्ष्यमाणो यो गुणः ( शुचित्वादिः ), तत्संबन्धरूपा, इति । तथा च—'अग्निर्माणवकः' इत्यादौ—शक्यस्याग्नेः स्वनिष्ठशुचित्वपरसंबन्ध एव लक्षणा । नील० ४ । पृ० ३० )

वृत्तिः—१ संनिकर्षः । २ ज्ञानम् ( वात्स्या० १ । १ । ३ ) ३ आधेयत्वम् । यथा—'भूतलवृत्तिर्घटः' इत्यादौ—घटे भूतलाधेयत्वम् । यथा वा—सिद्धान्तसिद्ध-व्याप्तिस्वरूपे निरूपणीये "हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः" इत्यादौ 'वृत्ति'श[ब्द]स्यार्थ आधेयत्वम् । ( मु० २ । पृ० १४० ) । ४ आधेयतावान् । यथा—"तत्र वृत्तिर्योऽभावः" इत्यादौ ( स्व० ) । यथा वा—"सपक्षे[ऽ]त्र वृत्तित्वज्ञानादनुमितिर्भवेत्" ( भा० प० २ । श्लो० ७१ ) इत्यादौ 'वृत्ति' शब्दस्यार्थ आधेयतावान् । ५ वैयाकरणास्तु,—Aविग्रहवाक्यार्थाभिधानम्, Bपरार्थाभिधानं वा वृत्तिः । ( महाभा० ) यथा—राज्ञः पुरुष इत्यत्र 'राजपुरुषः' इति समासो वृत्तिः । ताश्च (वृत्तयः) कृत्तद्धित-समास-एकशेष-सनाद्यन्तधातवः पञ्च, इत्याहुः । ६ सांख्यास्तु,—महदादीनामिन्द्रियाणां च व्यापारो ( फलम् ) वृत्तिः । यथा—"अध्यवसायो ( बुद्धेर्वृत्तिः ) बुद्धिः" ( सां० सू० २ । १३ ) इत्यादौ, इत्याहुः । ७ अन्तःकरणपरिणामो वृत्तिः, इति मायावादिनो वेदान्तिन आहुः । ८ साहित्य-

---

१ तदर्थस्तु, [ क ] परस्य शब्दस्योपसर्जनार्थकस्य, यत्र शब्दान्तरेण प्रधानार्थकपदेनार्थाभिधानं विशेषणत्वेन ग्रहणम्, सा वृत्तिः । [ ख ] परार्थस्य प्रधानार्थस्याप्रधानपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणम्, सा वृत्तिः । राजपुरुष इत्यत्र पुरुषपदेन वाक्यावस्थायामनास्कन्नो राजार्थो राजपदेन वा पुरुषार्थ आस्कन्द्यते तत्संवलितः स्वार्थ उपस्थाप्यते, इति यावत् । ( ल० म० वृत्तिनि० पृ० ८ )

अत्रेदं विज्ञेयम्— वृत्तिविषयं "समर्थः पदविधिः" इति सूत्रम् (पाणि० २ । १ । १) । सामर्थ्यं चात्रैकार्थीभावः; "पृथगर्थानामेकार्थीभावः सामर्थ्यम् । 'राज्ञः पुरुषः' इति वाक्ये पृथगर्थानि । 'राजपुरुषः' इति समासे एकार्थानि" इति भाष्यात् । एवं च—यत्किंचित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोकदृष्टानां विशिष्टविषयैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभावः, इति फलितम् । ( ल० म० वृत्तिविचा० पृ० १ ) ( काशिका— २।१।१। )

२ तथोक्तम्—"रूपादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्" इत्यादि । ( सांख्य० का० श्लो० २८ )

३ अत्र योगशास्त्रप्रवर्तकः पतञ्जलिः सूत्रयामास—"वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः," "प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः" इति । ( योगसू० १ । ६—७ )

४ अन्तःकरणवृत्तेः स्वरूपप्रयोजनादिकं यथा—"यथा,—तडागोदकं छिद्रान्निर्गत्य कुल्या-

शास्त्रज्ञास्तु,—नाटकरचनाविशेषो वृत्तिः । सा च कैशिकी-सात्त्वती-भारती-आरभटी-भेदेन चतुर्विधा, इत्याहुः । ९ व्यवहारशास्त्रज्ञास्तु,—जीविका वृत्तिः, इत्याहुः । १० स्थितिः । ११ विवरणं चेति काव्यज्ञा आहुः ।

**वृत्तिनियामकसंबन्धः**[3]—( संबन्धः ) अविशिष्टव्यावृत्तविशिष्टधीनिया-

---

त्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणत्वाद्याकारं भवति, तथा,—तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते, स एव परिणामो 'वृत्तिः' इत्युच्यते । अनुमित्यादिस्थले तु,—नान्तःकरणस्य वह्न्यादिदेशगमनम्; वह्न्यादेश्चक्षुराद्यसंनिकर्षात्" इति । ( वे० परि० १ । पृ० ७ ) । इन्द्रियजन्यवृत्तिश्च आवरणभङ्गार्था, संबन्धार्था, इति मतद्वैधम् । ( वेदा० प० परि० ७ )

१ तदुक्तम्—"शृङ्गारे कैशिकी, वीरे सात्त्वत्यारभटी पुनः । रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती । चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः" इति ( सा० द० परि० ६ । श्लो० ४१० । पृ० १२० ) ( प्रतापरुद्रे० प्रक० २ । पृ० ८–९ )

२ वृत्तिहरणे निन्दति—"स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । स कृतघ्न इति ज्ञेयः फलं तच्छृणु भूमिप! । यावन्तो रेणवः सिक्ता विप्राणां नेत्रबिन्दुभिः । तावद्वर्षसहस्रं च घृतपाके स तिष्ठति" इत्यादि । ( ब्रह्मवै० प्र० अ० ४९ )

३ वृत्तिनियामकसंबन्धाश्च संयोग-समवाय-स्वरूप-कालिक-दैशिकविशेषणतादयः । एतद्व्यतिरिक्तास्तु*वृत्त्यनियामका बोध्याः । ते च, गगनादिसंयोगा-कुलिद्वयसंयोग-कुण्डबदरसंयोग-विषयत्व-विषयित्वा-नुयोगित्व-प्रतियोगित्व-निरूपकत्व-निरूप्यत्व-तादात्म्यादयोऽनन्ता एव ।

---

* अत्रेदं बोध्यम्—प्राचीनाः, वृत्त्यनियामकसंबन्धस्याप्यभावप्रतियोगितावच्छेदकत्वं स्वीकुर्वन्ति । तथा हि—धनेन कुलमित्यादौ,—'कुले धनस्य हेतुत्वम्', विप्राय गां ददातीत्यादौ,—'गवि द्विजस्य संप्रदानत्वम्', वृक्षात्पर्णं पततीत्यादौ,—'पतने वृक्षस्यापादानत्वम्', वह्निमान् धूमादित्यादौ,—धूमेन वह्निरित्यादौ वा,—'वह्नौ धूमस्य ज्ञापकत्वम्,' चैत्रस्य धनमित्यादौ,—'धने चैत्रस्य स्वामित्वम्,' भूतले घट इत्यादौ,—'घटे भूतलस्याधिकरणत्वम्' इत्यादिप्रतीत्या निरूपकत्वस्यापि संबन्धस्य क्वचिद्वृत्तिनियामकत्वमावश्यकम् । न हि, कुलादिनिरूपितं हेतुत्वादिकमेव धनादिनिष्ठत्वेन तासु भासते; धनादिनिष्ठहेतुत्वादेः संबन्धविशेषेण ( निरूपकत्वादिना ) कुलादिवृत्तिताया अप्यनुभावकत्वात् । ( श० प्र० श्लो० ९३ । पृ०१३८) तथा च सति—नञ् समभिव्याहारस्थले (न धनेन कुलमित्यादौ),—'प्रतियोग्यभावान्वयौ तुल्ययोगक्षमौ' इति न्यायेन, निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताक-धननिष्ठहेतुत्वाद्यभावः कुलादौ प्रतीयते; 'विप्राय गां न ददाति' इत्यादौ,—निरूपकत्वसंबन्धावच्छिन्नप्रतियोगिताक-द्विजनिष्ठसंप्रदानत्वाभावो गवि प्रतीयते; इति । एवमन्येऽप्यूह्यम् । ( स्व० ) । नव्यास्तु तन्न स्वीकुर्वन्ति;—पूर्वोक्तस्थलेषु अन्यत्र-संप्रदेयत्वादिकमेव

मकः संबन्धः । ( चि० खण्ड १ । समवायवादः, पृ० ६५२ ) यथा–'घटवद्भूतलम्' इत्यादौ,–घटभूतलयोः संयोगो वृत्तिनियामकः । ( स्व० ) यथा वा–गुण-क्रिया-जाति-विशिष्टबुद्धौ विषयीभूतः समवायो वृत्तिनियामकः ( चि० १ । पृ० ६५१ )

**वृथाचेष्टा**—स्वकर्तव्यताप्रयोजकेच्छाविषये स्वरूपायोग्यकर्म । ( मू० म० १ ) यथा–"वृथाचेष्टां न कुर्वीत" इत्यादौ–स्वर्गोद्देशेन कृतं चैत्यवन्दनं वृथाचेष्टा । ( स्व० )

**वृद्धिः**—१[ क ] कारणवतो द्रव्यस्यावयवोपचयः । अवर्धत गौरिति । ( वात्स्या० २ । २ । ६२ )

[ ख ] अवयवोपचयः । ( दि० १ ) । २ आकार–ऐकार–औकार-त्रयो वर्णा वृद्धिः, इति शाब्दिका वदन्ति । ३ व्यवहारज्ञास्तु,–उत्तमर्णस्य स्वदत्तद्रव्यमपेक्ष्याधमर्णाकारितोऽधिकेलाभो ( व्याज, बड्डि, सुद ) वृद्धिः, इत्याहुः ( स्व० ) । ४ भिषजस्तु,–औषधिविशेषः । ५ रोग-विशेषश्च, इत्याहुः । ( भावप्र० )

**वेगः**—१ [ १ ] ( गुणः, संस्कारः ) [ क ] वेगत्वजातिमान् । ( त० दी० गु० ) ( त० कौ० )

---

१ आधारत्वाऽऽ-धेयत्वा-न्यतरावच्छेदकः, इति यावत् ।

२ अत्रोक्तं नारदेन—"वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता । षड्विधाऽन्यैः समाख्याता तत्त्वतस्तां निबोधत । कायिका, कालिका, चैव चक्रवृद्धिरतोऽपरा । कारिता, शिखा, वृद्धिर्भोगलाभ, स्तथैव च" इति । (वीरमित्रो० अ० २ । ऋणादान० पृ० २९४)

३ लक्षणं च, [ क ] क्रियाजन्यत्वे सति* क्रियाजनकत्वम् । [ ख ] मूर्तमात्रवृत्तितावच्छेदक-संस्कारविभाजकोपाधि-मत्त्वम् । ( वाक्य० गु० पृ० २१–२२ ) ( भा० प० ) ( त० भा० ) [ ग ] तीक्ष्णगतिजनकगुणत्वम्, इति कश्चिदाह । ( ल० व० )

---

तृतीयार्थः । तथा च—'स्वरूपसंबन्धावच्छिन्नप्रतियोगिको धनजन्यत्वाद्यभाव एव तत्र प्रतीयते, इति । ( श० प्र० श्लो० ९३ । पृ० १३८ ) ( ग० व्यु० का० १ ) ( ग० २ । हेतु० )

* अत्र—गुरुत्वादिवारणाय सत्यन्तं दलं दत्तम् । विभागादिवारणाय विशेष्यदलं दत्तम्, इति ज्ञेयम् । ( वाक्य० गु० पृ० २१ )

[ ख ] द्वितीयपतनासमवायिकारणम् । ( सि० च० गु० पृ० ३९ )
[ ग ] द्वितीयादिक्रियाहेतुः । ( प्र० प्र० ) ( त० दी० )
[ घ ] कर्मजः संस्कारः । यथा—"यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात्" ( विक्रमोर्व० १ । ४ ) इत्यादौ वेगः । स च वेगो मूर्तमात्रवृत्तिः । ( प्र० प्र० ) ( भा० प० ) ( त० सं० ) ( त० कौ० ) । वेगो द्विविधः,—कर्मजः, वेगजश्च । तत्राद्यः शरादौ हि नोदनजनितेन कर्मणा वेगो जन्यः प्रसिद्धः । द्वितीयो वेगवत्कपालजन्यघटे प्रसिद्धः । ( भा० पा० श्लो० १९९ ) ( मु० ) ( सि० च० गु० पृ० ३९ ) ( त० व० पृ० २३० ) [ २ ] मीमांसकास्तु,—निरन्तरो गतिसन्तान एव वेगः, इत्याहुः । ( प० मा० ) २ शारीरकशास्त्रज्ञा भिषजस्तु,—मूत्रविष्ठादिनिःसारणयत्नः, इत्याहुः । ३ समूहः, इति काव्यज्ञा आहुः ।

वेदः—१ ( शब्दः ) [ क ] लौकिकवाक्यभिन्नवाक्यम् । ( कु० टी० ९ )

---

१ प्रथमपतनस्यासमवायिकारणं तु गुरुत्वमेव, इति तद्व्युदासाय 'द्वितीय' पदम् ।

२ अत्र भाष्यम्—"वेगो मूर्तिमत्सु पञ्चसु द्रव्येषु निमित्तविशेषापेक्षात्कर्मणो जायते; नियतदिक्क्रियाप्रबन्धहेतुः, स्पर्शवद्द्रव्यसंयोगविरोधी, क्वचित्—कारणगुणपूर्वप्रक्रमेणोत्पद्यते" इति । ( प्रशस्त० २ । गुण० पृ० ५३ )

३ तेन च पूर्वकर्मनाशः; तत उत्तरकर्म । एवमग्रेऽपि । वेगं विना, कर्मणः प्रतिबन्धकत्वात्, पूर्वकर्मनाश उत्तरकर्मोत्पत्तिश्च न स्यात्, इति ( मु० गु० पृ० २२२ )

४ तन्न सहन्ते नैयायिकाः—"वेगोऽपि गुणान्तरम्, न क्रियासन्ततिमात्रम्; मन्दगतौ वेगप्रतीत्यभावात् । क्रियाक्षणानामाशूत्पादनिमित्तो वेगव्यवहार इति चेन्न;—अलातचक्रादिषु क्रियाक्षणानां निरन्तरोत्पादव्यवधतां प्रत्येकमन्तराग्रहणेनाशूत्पादस्य प्रत्यक्षेणाप्रतीतेः; वेगप्रत्ययस्य च भावात् । व्यक्ता च लोके क्रियावेगयोर्भेदावगतिः; 'वेगेन गच्छति' इति प्रतीतेः" ( न्या० क० साधर्म्य० पृ० २२ ) ( दि०—गु० पृ० २३३ )

५ अत्र प्रसक्तत उदाह्रियते—"स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगं धारयेद्धीरः कामादीनां च धारयेत्" इति । ( राजनि० )

६ तच्च ज्ञानसाधनं धर्मब्रह्मप्रतिपादकं शास्त्रम्; मन्त्र-ब्राह्मण-भेदेन द्विविधं च; तच्च स्वतः*प्रमाणम्; अनेकविद्याधर्मस्थानम्, देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतुश्च ।

---

* अत्र सूत्रम् ( १ ) "त्रैविद्यवृद्धानां तु वेदाः प्रमाणमिति निष्ठा" इति ( आपस्त० सू० २ । ९ । ३ । ९ ) । ( २ ) "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति ( गौ० २ । १ । ६७ ) । स्वतःप्रामाण्यं च प्रमाणान्तरानधीनप्रमितिजनकत्वम् । वेदस्य स्वतःप्रामाण्यव्यवस्थापनं तु धर्मब्रह्ममीमांसादौ तत्र तत्राचार्यैः कृतम् । विस्तरभयात्तन्नात्र संगृहीतम् ।

यथा—"अग्निमीळे पुरोहितम्" "इषे त्वोर्जे त्वा" "अग्न आयाहि वीतये" "शं नो देवीरभिष्टय आपो भवन्तु पीतये" इत्यादिवाक्यम्। [ ख ] अपौरुषेयवाक्यं वेदः, इति मीमांसका: प्रतिपेदिरे। ( लौ० भा० पृ० १३ ) ( सर्व० जैमि० पृ० १२७ )

---

वेदलक्षणं च वेदत्वम्। तच्च, [ क ] विजातीयधर्मजनकाध्ययनप्रतियोगित्वम्। ( कु० टी० ५ ) [ ख ] शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे* सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्। ( कु० टी० ५ ) ( चि० ४ ) ( व० उ० ६। १। १ ) (वै० वि० ६। १। १ ) [ ग ] ऋग्यजुःसामाथर्वान्यतमत्वं वा। ( वै० वि० ६। १। १ ) [ घ ] अपूर्वार्थप्रतिपादकत्वे सति नित्यसर्वज्ञप्रणीतवाक्यत्वम्। [ ङ ] अखण्डोपाधिः, इति प्राञ्च आहुः। ( म० प्र० ४। पृ० ६६ )

१ वेदस्य नित्यत्वेनापौरुषेयत्वम्। तत्र प्रमाणं तु—( १ ) "वाचा † विरूपनित्यया" इति श्रुतिः। "यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदाꣳश्च प्रहिणोति तस्मै" इति च श्रुतिः। ( २ ) "नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳसनातनम्"। "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा" इति स्मृतिः। ( प्र० च० परि० १। पृ० ४१ ) ( माध० भाष्य० ) ( शाब० भा० १। १। २३ )

अपौरुषेयत्वं तु, प्रमाणान्तरेणार्थमुपलभ्य विरचितं यत् तद्भिन्नत्वम्, इति चिन्त्यम्।

२ नैयायिकास्तु,—वेदस्येश्वरकर्तृकत्वं मन्यन्ते—[ क ] तत्कर्तृत्वे प्रमाणमनुमानम्; तच्च,

---

* अत्र लक्षणदोषं वारयति—ईश्वरप्रमाया अजन्यत्वात्; वेदार्थस्यानुमानविषयत्वेऽप्यनुमानादेर्वेदोपजीवकतया; स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात्; वेदादर्थं प्रतीत्यैव तत्प्रणयनात्। ( चि० ४ )

† अत्र शङ्कते जैमिनिराचार्यः—[ १ ] "वेदांश्चैके संनिकर्षं पुरुषाख्याः" इति। ( जैमि० अ० १। पा० १। सू० २७)। तदर्थस्तु,—( क ) पुरुषेण हि समाख्यायन्ते वेदाः,—'काठकं कालापकम्, पैप्पलादकं मौद्गलकम्,' इति ( शाब० भा० १। १। २७ ) [ ख ] तत्तच्छाखाकर्तृत्वेन पुरुषा आख्यायन्ते,–'काठकम्, कौथुमम्, तैत्तिरीयम्' इति।

अत्र समाधत्ते—"उक्तं तु शब्दपूर्वत्वम् (अध्येतॄणाम्)" इति। "आख्या प्रवचनात्" इति च। ( जैमि० १। १। २९–३० ) तदर्थस्तु,—वेदानां प्राचीनत्वम्, उपाध्यायप्रवचनरूपसंप्रदायप्रवर्तकत्वेन समाख्या, इति।

पुनः शङ्कते—"अनित्यदर्शनाच्च" इति ( जैमि० १। १। २८ )। तदर्थस्तु—जननमरणवन्तश्च वेदार्थाः श्रूयन्ते–"बबरः प्रावाहणिरकामयत," "कुसुरुविन्द औद्दालकिरकामयत" इत्येवमादयः। उद्दालकस्यापत्यं गम्यते औद्दालकिः, इति ( शाब० भा० १। १। २८)

अत्र समाधत्ते—"परं तु श्रुतिसामान्यमात्रम्" इति। ( जैमि० १। १। ३१ )। तदर्थस्तु,—बबरध्वनिमनुकुर्वन्प्रवहणस्वभावो वायुरेव; न तु, प्रवहणनामकः पुरुषः, अनित्यः, इति ( शाब० भा० १। १। ३१ )

[ ग ] केचिद्वेदान्तिनस्तु,—अपौरुषेयत्वे सति, समयबलेन परोक्षानुभवसाधनं वेदः, इत्याहुः ( माध० भाष्य० ) । प्रत्येकं मन्त्रब्राह्मणवन्तो वेदाश्चत्वारः,—ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदश्चेति । तत्र—ऋ-

'वेदः* पौरुषेयो वाक्यत्वाद्भारतादिवत्' † इति । ( चि० ४ ) ( सर्व० जैमि० ) [ ख ] वेदस्येश्वरकर्तृकत्वे मानं च, 'विधिरेव तावद्गर्भे इव श्रुतिकुमार्याः पुंयोगे मानम्' इत्याचार्याः प्राहुः । ( कि० व० १ । १ । पृ० ३९ ) ( मु० गु० ) ( त० कौ० ४ ) [ ग ] वेदवाक्यानां‡ बुद्धिमत्कर्तृकत्वे,—इतरबाधात्§ ईश्वरकर्तृकत्वं सेत्स्यति, इति ( त० व० )

१ अत्र—पौरुषेयत्वं च सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् ; तादृशोच्चारणजातीयत्वं वा । तथा च—सर्गाद्यकाले ¶परमेश्वरः ( प्राणिनां भोगभूतये लीलाविग्रहं परिगृह्य ) पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं** विरचितवान्, न तु तद्विजातीयं वेदम् ; इति न पौरुषेयत्वं वेदस्य । भारतादीनां तु, सजातीयोच्चारणमनपेक्ष्यैवोच्चारणम्, इति तेषां पौरुषेयत्वम्, इति । ( वेदान्तप० आगमपरि० पृ० ५५ ) ( मथुरानाथ० )

* अत्र पौरुषेयत्वं च पुरुषाधीनोत्पत्तिकत्वम् । ( वेदान्त-प० आगमपरि० पृ० ५४ ) वर्णानामनित्यत्वादेव वेदस्याप्यनित्यत्वम् । ( गौ० वृ० २ । ८१ )

† अस्मिन्ननुमाने, श्रूयमाणकर्तृकत्वं स्मर्यमाणकर्तृकत्वं चोपाधिमुद्भावयन्ति मीमांसकादयः; तन्न सहन्ते नैयायिकाः । अत्रत्यविषयतर्कश्चाकरादौ द्रष्टव्यः, इत्यलमतिप्रसङ्गेन ।

‡ अत्र सूत्राणि—"बुद्धिपूर्वा वाक्यकृतिर्वेदे" "बुद्धिपूर्वो ददातिः" इत्यादीनि । ( वै० ६ । १ । १-४ )

§ अत्रायं भावः—'वेदवाक्यरचना वक्तृयथार्थ-वाक्यार्थज्ञानपूर्वा, वाक्यरचनात्वात्, 'नदीतीरे पञ्च फलानि सन्ति' इत्यस्मदादिवाक्यरचनावत्' इत्यनुमानम् । न च,—अस्मदादिबुद्धिपूर्वकत्वेनान्यथासिद्धिः; "स्वर्गकामो यजेत" इत्यादाविष्टसाधनतायाः कार्यताया वाऽस्मदादिबुद्ध्यगोचरत्वात् । तेन, स्वतन्त्रपुरुषपूर्वकत्वं वेदे सिद्ध्यति, इति । ( वै० उ० ६ । १ । १ ) ( वात्स्या० २ । १ । ५० )

किं च—वेदस्याप्रामाण्यशङ्कानिवारणमपि कृतम्—"न कर्मकर्तृसाधनवैगुण्यात्" इति ( गौ० २ । १ । ५७ ) । एवं च—परमाप्त-सर्वज्ञेश्वरप्रणीतत्वेन वेदस्य प्रामाण्यं सिद्ध्यति, इति ।

¶ अत्र—"प्रतिमन्वन्तरं चैषा श्रुतिरन्याऽभिधीयते" इत्यागमोऽपि द्रष्टव्यः । ( चि० ४ )

**अत्र प्रमाणम्—"अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्यादिः ( श्रुतिः ) "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" इति च । "इदं सर्वमसृजत ऋचो यजूंषि सामानि" "तेपानात्त्रयो वेदा अजायन्त" इति च । परंतु,—"ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" इत्यादिश्रुतेस्तु, ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वपरत्वं गम्यते ।

ग्वेदस्य शाकलादयो दश भेदाः ( शाखाः ) भवन्ति । यजुर्वेदस्य चरकादयः षडशीतिर्भेदा भवन्ति; तत्र—वाजसनेयानां जाबालादयः सप्तदश भेदा भवन्ति, तैत्तिरीयाणां द्विभेदा भवन्ति,—औक्ष्याः; खाण्डिकेयाश्चेति । तत्र—खाण्डिकेयानां पञ्च भेदा भवन्ति,—आपस्तम्बी, बौधायनी, सत्याषाढी ( हिरण्यकेशी ) भारद्वाजी, वाधूली चेति । सामवेदस्य किल सहस्रं भेदा आसन्,—राणायनीयाः, कौथुमाः, इत्यादयः ( १००० )। अथर्ववेदस्य पैप्पलादयो नव भेदा भवन्ति, इति ।

वेदाङ्गानि षट्;—शिक्षा, कल्पः, व्याकरणम्, निरुक्तम्, छन्दः, ज्योतिषं चेति । ( आपस्त० सू० २ । ४ । ८ । ११ )

उपाङ्गानि तु चत्वारि,—पुराण-न्याय-मीमांसा-धर्म-शास्त्राणि, इति । यूपलक्षणछागलक्षणादिभेदेनाष्टादश परिशिष्टानि यजुषः । सर्वेषां वेदानामुपवेदा भवन्ति,—तत्र ऋग्वेदस्यायुर्वेद उपवेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य शस्त्रशास्त्राणि भवन्ति, इति । "ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपं च यजुर्वेदं रुद्रदेवं तु तं विदुः । सामवेदोऽपि गोत्रेण भारद्वाजः पुरंदरम् । अधिदेवं विजानीयात्, वैतानं तु अथर्वणः" इति । शिष्टं तु (विष्णुपु० अंशु० ३ । अ० ५–६ ) तत्र द्रष्टव्यम् । A चत्वारोऽपि वेदाः प्रत्येकं द्विधा,—मन्त्रः, ब्राह्मणं चेति । तत्र—

---

१ अत्रोक्तम्—अनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रनष्टाः, इति । ( वाच० )

२ 'अथर्ववेदस्य स्थापत्यम् (अर्थशास्त्रम्) उपवेदः' इत्यपि पाठो ग्रन्थान्तरे दृश्यते ।

३ अत्रेदं विज्ञेयम्—वेदस्य छिन्नमूलग्रन्थतया उच्छिन्नत्वेऽपि, अविगीतशिष्टाचारादेव तदनुमानम् । ............... प्रलये पूर्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः ( चि० ४ )। अत्र पुनरपि श्रुतीनां नित्यत्व-स्वतः प्रामाण्ये-अपौरुषेयत्वादौ प्रमाणयन्ति—"स पर्यगाच्छुक्रमकायमव्रणम्" । "यथेमां वाचं कल्याणीम्" (यजुः) । "यो ब्रह्माणं विदधाति पूर्वम्, यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" ( यजुः ) । "अत एव च नित्यत्वम्" (ब्र० सू० १ । ३ । २९) । "उक्तं तु शब्दपूर्वत्वम्" ( वै० सू० १ । २९ ) । "निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम्" ( सांख्यसू० ५ । ५१ ) । "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान्महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा" ( स्मृतिः ) "तद्वचनादाम्नायस्य प्रामाण्यम्" ( वै० १ । १ । ३ ) ( १० । २ । ९ ) इत्यादीभि ।

४ तत्र प्रमाणम्—"मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति । ( बौधा० सू० ) ( आपस्तम्ब०

ऋग्वेदस्यैतरेयब्राह्मणम्, यजुर्वेदस्य तैत्तिरीय-शतपथ-ब्राह्मणे । सामवेदस्य गोपथब्राह्मणम् । अथर्ववेदस्य ताण्ड्यब्राह्मणम्, इति । ब्राह्मणं त्रिधा,—विधिवचनम्, अर्थवादवचनम्, अनुवादवचनं चेति । ( गौ० ) ( वात्स्या० २ । १ । ६१ ) ( गौ० वृ० २ । ६२ ) । B मीमांसकास्तु,— विधि-मन्त्र-नामधेय-निषेधा-र्थवाद-भेदात्पञ्चविधो वेदः, इत्याहुः । ( लौ० भा० पृ० १२ ) । २ विष्णुः । ( विष्णुसं० ) । ३ [ १ ] ज्ञानम्; । [ २ ] शास्त्रज्ञानं च । ४ शास्त्रोक्तं चरित्रम् । ( मेदि० ) । ५ दर्भमुष्टिकृतः पदार्थविशेषः । यथा—"वेदं कृत्वा वेदिं कुर्यात्" ( श्रुतिः ) इत्यादौ । ६ [ १ ] ज्ञापकम्; । [ २ ] ज्ञाता च । यथा—"वेदोऽसि येन त्वं देव! वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः" इत्यादौ । ( यजुः० २ । २१ )

**वेदान्तः**—वेदशिरोभागो ब्रह्मप्रतिपादक उपनिषद्रूपो ग्रन्थविशेषः । यथा— ऐतरेय-ब्रह्मवल्ली-नारायण-ईश-बृहदारण्यक-छान्दोग्य-प्रश्न-माण्डूकाऽऽदय उपनिषदः । वेदान्तो 'उत्तरमीमांसा' इति व्यवह्रियते; कर्मकाण्डानन्तरविचार्यत्वात्, इति ज्ञेयम् ।

---

१ अत्रायं विशेषो ज्ञेयः—"आर्षं छन्दो दैवतं च विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः । अविदित्वा तु यः कुर्याद्याजनाध्ययनं जपम् । होममन्तर्जले दानं तस्य चाल्पफलं भवेत्" इत्यादिः । ( याज्ञव० ) ( वाच० )

२ अत्रार्थे व्याकरणम्—वेदयति ( विद, अच्, णिच् ) वेदः, इति ।

३ अत्र कर्कभाष्यम्—"पत्नी वेदं प्रमुञ्चति-'वेदोऽसि' इति । हे कुशमुष्टिनिर्मितपदार्थ! त्वं वेदोऽसि ऋगाद्यात्मकोऽसि । यद्वा—वेत्तीति वेदः; ज्ञाताऽसि, देवेभ्यो देवानां वेदोऽभवो ज्ञापकोऽभूः" इति । ( वाच० )

४ अत्र व्युत्पत्तिः—'वेदानां ( ऋगादीनाम् ), अन्तश्चरमभागः' इति; 'वेदानामन्तो निर्णयो यत्र सः' इति वा; वेदान्तः ।

५ अत्र—उपनिषदर्थनिर्णायकत्वेन ब्रह्मसूत्राणामपि* वेदान्तत्वमुपचर्यते, इति विवेयम् ।

---

* अत्रेदं बोध्यम्—श्रीपूर्णप्रज्ञाचार्यैः ( मध्वाचार्यैः ) विरचिताद्भाष्यात्प्राक् ब्रह्मसूत्राणां व्याख्यातार एकविंशतिसंख्यका आसन्,—ते च,:—भारतीविजयः १, सच्चिदानन्दः २, ब्रह्मघोषः ३, शतानन्दः ४, उद्वतः ५, विजयः ६, रुद्रभट्टः ७, वामनः ८, यादवप्रकाशः ९, रामानुजः १०, भर्तृप्रपञ्चः ११, द्रविडः ( शठकोपः ) १२, ब्रह्मदत्तः १३,

**वैतण्डिकः**—'वितण्डा'शब्दव्याख्याने द्रष्टव्योऽस्यार्थः ।

**वैद्यः**—१ पण्डितः । यथा—"नाविद्यानां तु वैद्येन देयं विद्याधनात्कचित्" इत्यादौ । ( दायभाग० ) । २ भिषग्विशेषः ।

**वैद्यकम्**—आयुर्वेदः । यथा—सुश्रुत-चरकादि वैद्यकम् ।

---

१ वैद्योत्पत्तिश्च—"वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति । वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः ॥ ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः । तेभ्यश्च जातः शूद्रायां ते व्यालग्राहिणो भुवि" इति । ( ब्रह्मवै० पु० अ० १० )

२ तदुत्पत्त्यादिकं यथा—"ऋग्यजुःसामाथर्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः । विचिन्त्य तेषामर्थं चैवायुर्वेदं चकार सः ॥ कृत्वा तु पञ्चमं वेदं भास्कराय ददौ विभुः । स्वतन्त्रां संहितां तस्मात् भास्करश्च चकार सः ॥ भास्करश्च स्वशिष्येभ्य आयुर्वेदं स्वसंहिताम् । प्रददौ पाठयामास, ते चक्रुः संहितास्ततः ॥ तेषां नामानि विदुषां तन्त्राणि तत्कृतानि च । व्याधिप्रणाशबीजानि साध्वि ! मत्तो निशामय ॥ धन्वन्तरिर्दिवोदासः काशीराजस्तथाऽश्विनौ । नकुलः सहदेवार्की च्यवनो जनको बुधः ॥ जाबालो जाजलिः पैलः करथोऽगस्त्य एव च । एते वेदाङ्गवेदज्ञाः षोडश व्याधिनाशकाः" इत्यादि । (ब्रह्मवै० पु० अ० १६) (वाच०)

---

भास्करः १४, पिशाचः १५, वृत्तिकारः ( बौधायनः ) १६, विजयभट्टः १७, विष्णुक्रान्तः १८, वादीन्द्रः १९, माधवदासः २०, शङ्करभारती २१, इति (मध्वविज०) । ततः—पूर्णप्रज्ञाचार्यः २२, राघवेन्द्रस्वामी २३, वल्लभाचार्य २४ श्चेति ।

तत्र—शंकरभारत्या ( रुद्रस्य मणिमतो वाऽवतारस्य ) जन्म, विक्रमशाके ८४५ वर्षे, केरलदेशे, कालपी-( कालडी- )ग्रामे मातापितृभ्यामार्याम्बा-शिवभट्टाख्याभ्यां ( 'विधवायाः सकाशात्' इत्यपि मणिमञ्जर्याम् ) अभूत् । तस्य दैशिकाचार्यो गोविन्दभट्टः; परमगुरुर्गौडपादः, गौडपादस्य तु शुकनामा बौद्धो गुरुः । शंकरभारत्या अध्यापको ब्रह्मदत्तः, मतं तु मायावादः, इति ।

रामानुजस्य च शेषावतारत्वाभिमतस्य जन्म, शाके १०४९ वर्षे, चोलदेशे, भूतपुर्या प्रेमभुजाख्यायां ( 'पेरंबुदूर' इति ग्रामे ), मातापितृभ्यां कान्तिमती-केशवाख्याभ्यां समजनि । एतस्याध्यापकस्तु मातुलो यादवप्रकाश एव; मतं विशिष्टाद्वैतम्; विशिष्टाद्वैतमतप्रवर्तकः कूटस्थस्तु शठकोपाचार्यः, इति ।

वायोरवतारस्य मध्वाख्यपूर्णप्रज्ञाचार्यस्य च जन्म, शाके ११०० वर्षे, कर्णाटदेशे, रजतपीठाख्ये ( उडपी ) ग्रामे, मातापितृभ्यां वेदवेदी-मध्यगेहाख्याभ्यामाविरभूत् । एतस्याध्यापकोऽच्युतप्रेक्ष्याचार्यः, मतं तु द्वैतवादः, इति ।

वल्लभाचार्यस्य कृष्णस्वरूपत्वाभिमतस्य तु जन्म, संवत् १५३५ वर्षे, आन्ध्रदेशे, काङ्कुरवाख्ये ग्रामे, मातापितृभ्यां यल्लम्मा-लक्ष्मणाभ्यां समभवत् । एतस्याध्यापको नारायणभट्टः; मतं तु शुद्धाद्वैतम्, इति ।

अत्र—ग्रन्थविस्तारभयादाधिकं नपश्चितम्, तत्तदाचार्यमतग्रन्थेषु द्रष्टव्यम्, इति विरम्यते ।

**वैधम्**—विधिबोधितम् । यथा—"अहरहः संध्यामुपासीत" इत्यनेन बोधितं संध्योपासनं वैधं भवति ।

**वैधर्म्यदृष्टान्तः**—( दृष्टान्तः ) व्यतिरेकव्याप्तिग्रहणस्थलम् । यथा—पर्वते धूमेन वह्न्यनुमाने महाह्रदः ( यत्र वह्निर्नास्ति, तत्र धूमोऽपि नास्ति यथा महाह्रदः ) इति । ( प्र० च० परि० १ । पृ० २८ )

**वैधर्म्यनिदर्शनम्**—[ क ] 'व्यतिरेक्युदाहरण'शब्दवदस्यार्थोऽनुसंधेयः । ( स्व० )

[ ख ] अनुमेयविपर्यये लिङ्गस्याभावदर्शनम् । तद्यथा—'यत् अद्रव्यम्, तत् क्रियावन्न भवति, यथा सत्ता' इति । ( प्रशस्त० २ । पृ० ३० )

**वैधर्म्यम्**—१ [ १ ] व्यावृत्तो धर्मः । ( वै० उ० १ । १ । ४ । पृ० १६ ) यथा—"यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत्", ( प्रशस्त० १ । १ । पृ० ३९ ) ( भा० प० श्लो० २९ ) इत्यादौ,—अभावस्य समवायिकारणत्वं वैधर्म्यम् । ( स्व० ) [ २ ] तद्विरोधिधर्मवत्त्वम् । यथा—पाकस्थले, श्यामघटवैधर्म्यं रक्तघटे । ( वै० उ० ७ । २ । २ । पृ० ३१२ ) । २ व्यतिरेकः । ( गौ० वृ० १ । ३४ ) यथा—"तथा वैधर्म्यात्" ( गौ० १ । ३४ ) इत्यादौ ।

**वैधर्म्यसमः**—( जातिः ) [ क ] वैधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेर्वैधर्म्यसमः । ( गौ० ५ । १ । २ )

---

१ [ क ] विरुद्धो धर्मः, इति फलितोऽर्थः । ( मु० १ ) [ ख ] अवर्तमानो धर्मः । (स्व०)

२ तदर्थश्च—ज्ञेयत्वादिकं विहाय* यत् यस्य पदार्थस्य साधर्म्यमुक्तम्, तदितरस्य तद्वैधर्म्यम्, इति । ( मु० १ )

३ अत्र—( १ ) 'वैधर्म्यत्वमात्रं गमकतौपयिकम्' इत्यभिमानात् सत्प्रतिपक्षदेशनाभासोऽयम् (गौ० वृ० ५ । १ । २ । पृ० २२२ ) । (२) अनैकान्तिकदेशनाभासो वाऽयम्, इति विज्ञेयम् । ( न्या० वा० )

४ तदर्थश्च,—उपसंहारे साध्यस्योपसंहरणे वादिना कृते, तद्धर्मस्य साध्यरूपधर्मस्य यो वि-

---

* ज्ञेयत्वादिकं तु न कस्यापि वैधर्म्यम्; केवलान्वयित्वात्, इति भावः । ( मु० १ ) । अत्र—साधर्म्यनिरूपणं तु 'साधर्म्य'शब्दव्याख्यानावसरे संपादयिष्यते ।

[ ख ] वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते, प्रतिवादिनो वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम् । यथा–'शब्दोऽनित्यः कृतकत्वाद्धटवत्, व्यतिरेकेणाकाशवद्वा' इति स्थापनायाम्–अनित्यघटवैधर्म्यादमूर्तत्वान्नित्यः स्यात्, विशेषो वा वक्तव्यः, इति । ( गौ० वृ० ५ । २ ) । यथा वा–क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टो, न च तथाऽऽत्मा; तस्मान्न लोष्टवत्क्रियावानिति । न चास्ति विशेषहेतुः,–क्रियावत्साधर्म्यात्क्रियावता भवितव्यम्, न पुनः 'क्रियावद्वैधर्म्यादक्रियेण' इति । विशेषहेत्वभावाद्वैधर्म्यसमः । ( वात्स्या० ५ । १ । २ ) (नील०) [ ग ] वैधर्म्येण स्थापनाहेतुदूषकमुत्तरम् । यथा–'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत्'; क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायाम् उत्तरम्—क्रियावतो लोष्टस्य साधर्म्याद्यदि क्रियावानात्मा तदा विभुत्वरूपतद्वैधर्म्यान्निष्क्रिय एव किं न स्यात्? । न हि 'तत्साधर्म्यात्क्रियावता भवितव्यम्, तद्वैधर्म्यान्निष्क्रियेण न भवितव्यम्' इत्यत्र किंचिन्नियामकमस्ति, इति । ( नील० पृ० ४३ )

**वैधर्म्योदाहरणम्**—'व्यतिरेक्युदाहरण'शब्दवदस्यार्थोऽनुसंधेयः ।

**वैधर्म्योपनयः**—'व्यतिरेक्युपनय'शब्दवदस्यार्थोऽनुसंधेयः ।

**वैनाशिकः**—१ ( क्षणिकः ) [ १ ] सर्वस्य क्षणभङ्गुरत्वप्रतिपादको बौद्धागमः [ २ ] बौद्धागमाभिज्ञः । [ ३ ] केचित्तु मायावादिनः,—तार्किकस्य अर्धवैनाशिकत्वं मेनिरे । २ ज्योतिषज्ञास्तु,—षड्नाडीचक्रस्थं जन्मनक्षत्रावधित्रयोविंशं नक्षत्रम्, इत्याहुः । ३ परतन्त्रः । ४ ऊर्णनाभिः । ( मेदि० ) ( वाच० )

**वैभाषिकः**—१ बौद्धविशेषः । अत्राधिकं च 'बौद्धः' इति शब्दव्याख्याने दृश्यम् । २ शाब्दिकास्तु,–विभाषा निषेधविकल्पौ, तया प्रवृत्तो वैभाषिकः[1] ।

---

पर्ययो व्यतिरेकस्तस्य वैधर्म्येण केवलेन व्याप्त्यनपेक्षेण यदुपपादनम्, ततो हेतोर्वैधर्म्यसम उच्यते, इति । (गौ० वृ० ५ । १ । २ । पृ० २२१ )

1 अस्मार्थे प्रमाणं सूत्रम्—"न वेति विभाषा" इति । ( पाणि० १ । १ । ४४ )

यथा–'गिरति, गिलति' इत्यादौ–लत्वं वैभाषिकम् । ( स्व० ) यथा वा–'शुशाव, शिश्वाय; शुशुवतुः, शिश्वियतुः' इत्यादौ, इत्याहुः । ( काशिका )

**वैयधिकरण्यम्**—'व्यधिकरणत्व'शब्दवदस्यार्थोऽनुसंधेयः ।

**वैयर्थ्यम्**—'व्यर्थत्व'शब्दवदस्यार्थोऽनुसंधेयः ।

**वैरम्**—१ 'विरोध'[1]शब्दवदस्यार्थोऽनुसंधेयः । २ 'द्वेष'शब्दवदस्यार्थोऽनुसंधेयः, इति केचिदाहुः ।

**वैराग्यम्**[2]—[ १ ] दोषदर्शनाद्विषयत्यागेच्छा । ( प्रशस्त० २ । पृ० ३३ ) । [ २ ] भोगानभिषङ्गः । ( न्या० वा० १ । पृ० २७ ) । [ ३ ] योगशास्त्रज्ञास्तु,–ऐहिक-पारत्रिक-विषयादौ दोषदर्शनान्निरभिलाषस्य 'ममैते विषया वश्याः, नाहमेतेषां वश्यः' इति विमर्शः, इत्याहुः । ( सर्व० पात० )

**वैलक्षण्यम्**—भेदकधर्मः । शिष्टं तु 'विलक्षण'शब्दे द्रष्टव्यम् ।

**वैशिष्ट्यम्**—१[क] संबन्धः । यथा–'भूतलं घटविशिष्टम्' इत्यादौ,–घटभूतलयोः संयोगनामा संबन्धो वैशिष्ट्यम् । ( स्व० )
[ ख ] यस्य यत्र यः संबन्धः, स एव तत्र तस्य वैशिष्ट्यम् । यथा–'दण्डी पुरुषः' इति ज्ञाने दण्डसंबन्धः पुरुषेऽवगच्छते । ( चि० १ । निर्विक० पृ० ८१२ ) । २ वैलक्षण्यम्; ३ भेदो वा । ४ आधेयोऽतिशयविशेषः, इति केचिद्वादिनः स्वीकुर्वन्ति ।

---

१ अत्रायं विशेषः—"वैरं पञ्चसमुत्थानं मुनिभिः परिकीर्तितम् । स्त्रीकृतं वास्तुजं वाग्जं ससापत्नापराधजम्" इति । तत्र—स्त्रीकृतं कृष्ण-चेदिपयोः; वास्तुजं कुरु-पाण्डवयोः; वाग्जं द्रोण-द्रुपदयोः; सापत्नं नैसर्गिकमहि-नकुलयोः; अपराधजं पूजनी-ब्रह्मदत्तयोः, इति । ( भार० ) ( वाच० )

२ वैराग्यं च, तत्त्वज्ञानाद्विषयदोषदर्शनाद्भवति । ( न्या० वा० १ । पृ० २७ ) तच्च ( वैराग्यम् ) शमदमानन्तरं ज्ञानद्वारा मोक्षहेतुश्च भवति । ( विवेकचूडामणौ )

**वैशेषिकम्**—१ कणादप्रणीतं शास्त्रम् । २ तच्छास्त्राभिज्ञः । यथा—प्रशस्तपाद-उद्योतकराचार्यादिर्वैशेषिकः । ३ (१) विशेषसंज्ञकः (गुणः) । यथा—"आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः" ( भा० प० १ । श्लो० ४९ ) इत्यत्र शब्दो वैशेषिकोऽस्ति । (२) व्यवच्छेदकः । (स्व०) यथा—"भूतात्मनां वैशेषिकगुणवत्त्वं साधर्म्यम्" ( प्रशस्त० ) इत्यादौ ।

**वैष्णवः**—विष्णूपासकत्वाद्विष्णुसेवकः सात्त्विकचेतनः । यथा—"वैष्णवानां यथा शंभुः" ( भाग० ) इत्यादौ । यथा वा—श्रीमध्वाचार्यो वैष्णवः । वैष्णवमार्गप्रवर्तका विष्णुस्वामि-निम्बार्क-रामानुज-मध्वाख्याश्चत्वार आचार्याः, इति वल्लभीयाः मन्यन्ते ।

---

१ अत्रेदं विज्ञेयम्—कश्यपगोत्रोत्पन्नः * कणादमुनिः, 'अथातो धर्मं व्याख्यास्यामः' इत्यारभ्य 'तद्वचनादाम्नायस्य प्रामाण्यमिति' इत्येतत्पर्यन्तं दशाध्यायात्मकं सूत्रोपनिबद्धं वैशेषिकदर्शनाख्यं तर्कशास्त्रं प्रणिनाय, इति ।

२ अत्रार्थे 'वैशेषिक'शब्दस्य व्युत्पत्तिः—'विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः' ( ठञ् ) वैशेषिकम्, इति ।

३ अत्रोक्तम्—"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे । यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः" इति । ( सर्व० औलू० )

४ अत्र व्युत्पत्तिः—'विशेषो व्यवच्छेदः, विशेषाय स्वाश्रयस्येतरेभ्यो व्यवच्छेदाय, प्रभवति, इति वैशेषिकः । ( न्या० क० पृ० २४ )

५ अत्र व्युत्पत्तिः—'विष्णुर्देवताऽस्य' ( तस्येदं वाऽण् ) इति वैष्णवः ।

६ अत्र—विष्णुस्तु परब्रह्मैव । तत्र प्रमाणानि—"यमन्तः समुद्रे कवयोवयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूतीतो येन, जीवान्व्यससर्ज भूम्याम्" "तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्" "तन्नो विष्णुः प्रचोदयात्" "अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वा भुवनानि तस्थुः" इति । ( मध्व० भाष्योदाहृतश्रुतयः ) "विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि रजांसि विममे" इत्यादिना तस्य महिमा ।

७ समुदायश्लोकस्तु,—"निम्नगानां यथा गङ्गा देवानामच्युतो यथा । वैष्णवानां यथा शंभुः पुराणानामिदं तथा" इति ( भाग० स्क० १२ । अ० १३ । श्लो० १६ )

---

* अत्र कणादशब्दस्य व्युत्पत्तिः—तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता 'कणाद' संज्ञा । अत एव—निरवकाशः 'कणान्वा भक्षयतु' इत्युपालम्भस्तत्रभवताम् । ( न्या० क० पृ० २ )

**वौषट्**—देवोद्देश्यकहविस्त्यागः । अत्र शिष्टं तु 'वषट्'शब्दे दृश्यम् ।

**व्यक्तिः**—१पदार्थमात्रम् । ( स्व० ) यथा—जात्यादिरपि व्यक्तिः । (गौ० वृ० २ । १३२ ) । २ [ क ] व्यक्तिर्गुणविशेषाश्रयो, मूर्तिः । ( गौ० २ । २ । ६९ ) व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति, न सर्वं द्रव्यं व्यक्तिः । यो विशेषगुणानां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासंभवं तद्द्रव्यम् । मूर्तिः; मूर्छितावयवत्वादिति । ( वात्स्या० २ । २ । ६९ )

[ ख ] जात्याकृतिसमानाधिकरणः संख्यादिभिन्नो यो गुणस्तदाश्रयः । यथा—गवादिर्व्यक्तिः । परे तु,—जात्याश्रयो ( द्रव्यम् ) व्यक्तिः, इत्याहुः । अन्ये तु,—परिच्छिन्नपरिमाणस्याश्रयो मूर्तिः, सैव व्यक्तेर्लक्षणम्, इत्याहुः । ( गौ० वृ० २ । १३२ ) । संख्यादिविशिष्टा व्यक्तिः, इति मञ्जूषाकृद्वक्ति । ३ पृथगात्मतारूप एकैकविशेषः इत्यमरसिंह आह । ४ प्रकाशः ( प्रकटीभावः ) । ५ जनश्च, इति काव्यज्ञा आहुः ।

**व्यक्त्यभेदः**[3]—[ क ] स्वाश्रयव्यक्तेरैक्यम् । ( नील० १ । पृ० ६ ) [ ख ] एकव्यक्तिकत्वम्[4] । ( दि० १ ) यथा—आकाशत्वस्य व्यक्त्यभेदः, इति आकाशत्वं न जातिः[5] । ( स्व० )

**व्यङ्ग्यः**—१ बोध्यः । २ प्रकाश्यः । ३ आलंकारिकास्तु,—व्यञ्जनाख्यया

---

१ तल्लक्षणं च व्यक्तित्वम् । तच्च, प्रमेयत्वमेव । ( गौ० वृ० २ । १३२ ) एवं च सिद्धान्ते,—सर्वेषां पदार्थानां 'व्यक्तिः' इति संज्ञा, इत्याशयः ।

२ इदं लक्षणं च जात्याकृतिशक्तिविषयव्यक्तेरेव, इति विज्ञेयम् । ( गौ० वृ० २ । १३२ )

३ स चाकाशत्वादेर्जातित्वे बाधकः, इति बोध्यम् । ( नील० १ । पृ० ६ ) ( दि० १ ) तदुक्तमुदयनाचार्यैः—"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसंबन्धो जातिबाधकसंग्रहः" इति ( कि० व० द्रव्यनि० )

४ एकाश्रयकत्वमित्यर्थः; स्वाश्रयनिष्ठभेदाप्रतियोग्याश्रयकत्वम्, इति फलितोऽर्थः । ( राम० १ । सामान्यनि० पृ० ३५ ) । अनुगमस्तु—स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्य-एतदुभयसंबन्धेन भेदाविशिष्टान्यत्वम्, इति ।

५ अयं भावः—बहुवृत्त्येकधर्मस्य सामान्यतया सर्वसिद्धत्वात्, एकव्यक्तौ जातिरनभ्युपेय, इति । ( दि० १ । सामान्यनि० पृ० ३४)

वृत्त्या बोध्योऽर्थः । यथा—'गङ्गायां घोषः' इत्यादौ,—शैत्यपावनत्वादिरूपोऽर्थो गङ्गापदव्यङ्ग्यः, इत्याहुः । अत्र—शिष्टं च 'व्यञ्जन'शब्दे द्रष्टव्यम् ।

**व्यञ्जकम्**—१ ज्ञानजनकम् । ( स्व० ) यथा—"चक्षुस्तैजसम्, परकीयस्पर्शाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वात्, प्रदीपवत्" ( मु० १ । तेजोनि० पृ० ७९ ) इत्यादौ चक्षू रूपव्यञ्जकम् । २ नर्तकास्तु,—प्रकाशकम् । यथा—हृद्गतभावादेर्व्यञ्जकः ( प्रकाशकः ) हस्तचेष्टादिरूपोऽभिनयः, इत्याहुः । ३ आलंकारिकाश्च,—व्यञ्जनया वृत्त्याऽर्थबोधकः शब्दः । यथा—'गङ्गायां घोषः' इत्यादौ,—'गङ्गा'शब्दः शैत्यपावनत्वादेरर्थस्य व्यञ्जकः, इत्याहुः । शिष्टं तु 'व्यञ्जन'शब्दव्याख्याने द्रष्टव्यम् ।

**व्यञ्जनम्**—१ ज्ञानम् । यथा—'चक्षू रूपव्यञ्जकम्' इत्यादौ । २ पाकशास्त्रज्ञास्तु,—ओदनभोजनोपकरणम् । यथा—सूपशाकादि व्यञ्जनम्, इत्याहुः । ३ वैयाकरणाश्च,—अर्धमात्राकालेनोच्चार्यो हल्वर्णः । यथा—"व्यञ्जनं चार्धमात्रकम्" ( शिक्षा० ) इत्यादौ—क्, ख्, इत्यादिः, इत्याहुः । ४ काव्यज्ञास्तु,—चिह्नम् । ५ अवयवश्च, इत्याहुः । ६ [ क ] आलंका-

---

१ अत्रार्थे 'विशेषेणाज्यते' ( वि-अनूज-ल्युट् ) इति 'व्यञ्जन'शब्दस्य व्युत्पत्तिर्द्रष्टव्या ।

२ तन्मते,—अभिधा-लक्षणयोरिव व्यञ्जनाया अपि वृत्त्यन्तरत्वमगत्या स्वीक्रियते । तथा हि—'तीरे घोषः' इति प्रयोगे स्वायत्ते सत्यपि 'गङ्गायां घोषः' इत्यनन्विताभिधानं शैत्यपावनत्वादिप्रतिपत्त्यर्थम्, इत्यङ्गीकर्तव्यम् । न च, सा प्रतीतिर्लक्षणयाप्युपपद्यते; केवलतीरलक्षणयैवानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् ( मुख्यार्थबाधादित्रयाभावात् ) । तस्मात्,—शैत्यपावनत्वादिप्रतिपत्त्यर्थं व्यञ्जनाऽऽवश्यकी । एवम्—'गच्छ गच्छसि' इत्यत्रापि तव गमने मम मरणं भविता, इत्यतः 'त्वं मागाः' इति व्यज्यते, इति व्यञ्जनाख्या अतिरिक्ता वृत्तिरवश्यमङ्गीकर्तव्या, इति । ( काव्यप्रकाश-उल्ला० २ । श्लो० १४—२० ) ( त० प्र० ४ । पृ० ६९ ) ( नील० ख० ४ । पृ० ३० ) नैयायिकास्तु तन्न सहन्ते । तथा हि—व्यञ्जना च शक्तौ लक्षणायां चान्तर्भवति । अत्रायं भावः—सा च ( व्यञ्जना ) शब्दशक्तिमूला, अर्थशक्तिमूला चेति द्विविधा । तत्र शब्दशक्तिमूला यथा—[ १ ] नानार्थकस्थले "दूरस्था भूधरा रम्या" इत्यादौ,—भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः संभवति, इत्यनया व्यञ्जना ( आलंकारिकमतप्रसिद्धा अभिधामूला शाब्दी व्यञ्जना ) शक्तावन्तर्भवति । एवम्—"भद्रा-

९४

रिकास्तु,–शब्दस्य वृत्तिविशेषो व्यञ्जना । यथा–"भद्रात्मनः" इत्यादौ, इत्यङ्गीचक्रुः ।

[ ख ] वैयाकरणास्तु,–मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबद्धासंबद्धसाधारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रति-

---

त्मनः" इत्यादावपि ज्ञेयम् । [ २ ] 'गङ्गायां घोषः' इत्यादौ तु—शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव संभवति; तत्र लक्षणाकाल्पनिकायास्तात्पर्यानुपपत्तेरेव सद्भावात्; किमतिरिक्तव्यञ्जनया, इत्यत्रत्या व्यञ्जना (आलंकारिकमतप्रसिद्धा लक्षणामूला शाब्दी लाक्षणिकपर्यायपरिवृत्त्यसहत्वलक्षणा व्यञ्जना) लक्षणायामन्तर्भवति ।

अर्थशक्तिमूला लक्षणा यथा—"गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" इत्यादौ,–'हे प्रिय! तव गमनोत्तरं मे प्राणवियोगो भविष्यति, अतस्त्वया न गन्तव्यम्' इत्याद्यर्थोऽनुमानादिना* गम्यते †; इत्यत्रत्या व्यञ्जना ( आलंकारिकमतप्रसिद्धा आर्थी व्यञ्जना ) अनुमानेऽन्तर्भवति, इति । ( नील० ख० ४ । पृ० ३० ) । एवम्—"वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम्" ( काव्यप्रका० उ० २ । श्लो० ४ । टी० ) इत्यादावप्यूह्यम् ।

१ तदुक्तम्—"विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः । सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च" इति । ( सा० द० परि० २ । श्लोक० २३ )

२ आलंकारिकाणां मते—व्यञ्जना च व्यञ्जन-ध्वनन-द्योतन-गमन-प्रत्यायनाऽऽदिशब्दैर्व्यपदिश्यते । ( काव्यप्रका० उ० २–५ । श्लो० १८ । वृ० ) ( सा० द० २ । २३ ) । व्यञ्जना द्वेधा,–शब्दनिष्ठा, अर्थनिष्ठा च । आद्या तु द्वेधा,–अभिधामूला, लक्षणामूला च । अभिधामूला यथा—"भद्रात्मनः" इत्यादौ । लक्षणामूला यथा—'गङ्गायां घोषः' इत्यादौ । ( काव्यप्र० उ० २ । श्लो० १८ । वृ० ) अर्थनिष्ठा व्यञ्जना तु 'गतोऽस्तमर्कः' इत्यादौ; 'माए घरोवअरणम्' ( का० प्र० २ । ६ ) इत्यादौ च विज्ञेया ।

३ समुदायश्लोकस्तु—"भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत्" इति । ( काव्यप्रका० उ० २ । श्लो० १९ तत्रत्यवृत्तावुदाहृतः )

---

* तत्रानुमानप्रकारस्तु,—'इयं मदीयगमनोत्तरकालिकप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्' इत्यादिरूपः । ( नील० ४ । पृ० ३० )

† तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । तथा च—"गच्छ गच्छसि" इत्यत्रापि 'मा गाः' इत्यर्थे गमनाभावप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यमात्रमुन्नीयते, संभाव्यते वा । तेन, लक्षणया तत्र शाब्दबोधोपपत्तौ व्यञ्जनाया वृत्त्यन्तरत्वं नास्त्येव, इति । (त० प्र० ख० ४ । पृ० ६९)

भाद्युद्बुद्धः संस्कारविशेषः, इत्याहुः । ( ल० म० आकाङ्क्षादिवि० पृ० १७—१८ )

**व्यतिरेकः**—१ अभावः ( A क्वचित्—अत्यन्ताभावः ) । ( न्या० बो० २ । पृ० १९) (वाक्य० २ । पृ० १९) यथा—"पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा" इत्यादौ; यथा वा—"अन्वयेन व्यतिरेकेण च व्याप्तिमत्" ( त० सं० ) इत्यादौ व्यतिरेकोऽभावः; यथा वा—"स्वव्यतिरेकेण धूमव्यतिरेकानुमानात्" इत्यादौ व्यतिरेकोऽभावः ( म० प्र० २ । पृ० ३०—३१ ) ( वै० ५ । १ । ३ ) । B भिन्नत्वम् । यथा—"यतस्तद्व्यतिरेकेण नान्यत्किंचिदिहाप्यते" इत्यादौ । २ साध्याभाव-हेत्वभावयोः साहचर्यम् । यथा—'व्यतिरेकव्याप्तिः' इत्यादौ व्यतिरेकः ।(सि० च० २ । पृ० २६) । ३ क्वचित्—व्यतिरेकव्याप्तिः । यथा—'अन्वयव्यतिरेकि लिङ्गम्' इत्यादौ व्यतिरेकः । ( वाक्य० २ । पृ०१९ ) । ४ [क] कारणाभाव-कार्याभावयोः साहचर्यम् । (स्व०) [ख] कारणाभावाधिकरणे कार्यासत्त्वम् ( राम० १ । पृ० ९२ ) । यथा—'यदभावे यदभावः' इति । ( त० प्र० मङ्गल० पृ० १ ) । ५ अत्यन्ताभावप्रतियोगित्वम् । यथा—'व्यतिरेकिसाध्यकस्थले ( वह्निमानित्यादौ )' इत्यत्र वह्नेर्व्यतिरेकः । ( स्व० ) । ६ क्वचित्—निश्चितकोटिद्वयवद्व्यावृत्तत्वज्ञानम् । ( ग० सत्प्र० पृ० २१ ) यथा—"अनैकान्तिकेऽन्वयाद्व्यतिरेकाद्वा कोट्युपस्थापकतया संशयः फलम्" ( चि० २ । सत्प्र० ) इत्यादिग्रन्थे,—'धूमवान्वह्नेः' इत्यादौ 'धूम-धूमाभाव-वद्व्यावृत्तवह्निमान्' इति ज्ञानं व्यतिरेकः । ( स्व० ) । ७ सजातीयाधिक्यम् ।

१ अयं व्यतिरेकः कारणत्वग्रहजनकः, इति ज्ञेयम् । ( त० प्र० मङ्ग० पृ० १ )

२ स यथा—'चक्रचीवरादिघटितस्य दण्डस्यासत्त्वे घटस्यासत्त्वम्, इति व्यतिरेकः ।

३ तदर्थस्तु,—'यस्यात्यन्ताभावः प्रसिद्ध्यति, तत्त्वम्' इति ।

४ तच्च ज्ञानम्, प्राचीनमते,—असाधारणधर्मवत्ताज्ञानविधया कोटिद्वयोपस्थापकतया फलीभूतसंशयं प्रति प्रयोजकम्, इति विज्ञेयम् ।

यथा—“वैश्येभ्यः क्षत्रियाः शूराः शूद्रेभ्यो धनिनो विशः” इत्यत्र पञ्चम्यर्थो व्यतिरेकः । (श० प्र० श्लो० ९३ । पृ० १४१) । ८ ‘विना’ इत्यस्यार्थः । ९ अर्थालंकारविशेषः, इत्यालंकारिका आहुः । १० विशेषेणातिक्रमः, इति काव्यज्ञा आहुः ।

**व्यतिरेकदृष्टान्तः**—‘वैधर्म्यदृष्टान्त’शब्दवदस्यार्थोऽनुसंधेयः ।

**व्यतिरेकव्यभिचारः**—( कार्यकारणभावभङ्गलक्षणो व्यभिचारः ) कार्यसत्त्वे कारणाभावः । ( ग० ) यथा तर्कदीपिकायाम्,—समाप्तिं प्रति मङ्गलस्य कारणत्वे उक्ते—किरणावल्यादावाशङ्कितो व्यभिचारो व्यतिरेकव्यभिचारो भवति । ( ख० )

**व्यतिरेकव्याप्तिः**—( व्याप्तिः ) [ क ] साध्याभावव्यापकीभूताभावप्रतियोगित्वम् । (कु० ३) (ग० २ । हेत्वा० सामा०) (मु० २) (नील०

१ अत्र—‘वैश्यशौर्यादधिकशौर्यवन्तः* क्षत्रियाः’, ‘शूद्रधनादधिकधनवन्तो वैश्याः’ इत्यर्थो बोध्यते । ( श० प्र० श्लो० ९३ । टी० पृ० १४५ )

२ समुदितार्थश्च—[ क ] कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्यतावच्छेदकावच्छिन्नयत्किंचिद्व्यक्त्यधिकरणयावद्व्यक्तिषु कारणाभाववत्त्वम् ( दि० गु० ) । [ ख ] कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणे ( प्रदेशे ) कारणाभावः, इति ( त० प्र० ख० ४ । पृ० १२ । )

३ तथा हि—किरणावल्याख्यनास्तिकग्रन्थविशेषे, समाप्तिरूपकार्यसत्त्वेऽपि मङ्गलस्याभावः, ते।

४ अत्र,—‘व्यतिरेकेण व्याप्तिः’ इति विग्रहः । व्यतिरेकनिरूपिता व्याप्तिरित्यर्थः । ( कु० ) अत्रेदं विज्ञेयम् [ १ ] आचार्यास्तु,—व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते; न च [illegible]तिरेकव्याप्तिज्ञानमपि ( अनुमितौ ) कारणम्, इति वदन्ति । [ २ ] मध्वाचार्यानु[illegible]नोऽप्याहुः—व्यतिरेकव्याप्तिः प्रकृतसाध्यसिद्धावनुपयोगान्न स्वीकर्तव्या । ‘जीवच्छ[illegible]रं सात्मकं प्राणादिमत्त्वादित्यादौ केवलव्यतिरेकित्वेन प्रसिद्धे हेतावप्यन्वयव्याप्तिरेव । यद्य[illegible]न्वयव्याप्तिर्दृष्टान्तानुपलम्भान्न युक्ता; तथाप्यनुमानेन तां साधयितुं व्यतिरेकव्याप्तिरुपन्यस्यते । तथा हि—‘प्राणादिमत्त्वं सात्मकत्वेन व्याप्तम्, तदभावव्यापकाभावप्रतियोगित्वात्, यत् यदभावव्यापकाभावप्रतियोगि तत् तेन व्याप्तम्, यथा धूमवत्त्वमग्निमत्त्वेन’ इति । ( प्र० प० पृ० १८ ) ( ग० सामा० ) ( कु० ३ )

५ अत्रार्थे,—‘व्यतिरेकः साध्याभावहेत्वभावयोः साहचर्यम्; तत्प्रयोज्या व्याप्तिर्व्यतिरेकव्याप्तिः’ इति ‘व्यतिरेकव्याप्ति’ शब्दः संगमनीयः ( सि० च० २ । पृ० २६ )

* अत्र—शौर्यादेर्वैश्यशौर्याद्यधिकत्वं च वैश्यशौर्यादिमात्रवृत्तिसंख्यासामान्यनिष्ठभेदप्रतियोगितावच्छेदकीभूतजातिमत्संख्यापर्याप्ताधिकरणत्वम् । (श० प्र० श्लो० ९३ । टी०पृ०१४५)

२ । पृ० २३ ) ( न्या० बो० २ । पृ० १९ ) ( सि० च० २ । पृ० २६ ) यथा—पर्वतो वह्निमान् धूमादित्यादौ,—वह्न्यभावव्यापकीभूताभावप्रतियोगित्वरूपा 'यत्र वह्निर्नास्ति तत्र धूमो नास्ति यथा महाह्रदः' इति धूमे वह्नेर्व्यतिरेकव्याप्तिः । यथा वा—पृथिवी इतरेभ्यो (जलादिभ्यः) भि[1]द्यते गन्धवत्त्वादित्यादौ केवलव्यतिरेकिणि [2]इतरत्वव्यापकीभूताभावप्रतियोगित्वरूपा 'यत् इतरभिन्नं न भवति, न तत् गन्धवत्, यथा जलादि' इति व्यतिरेकव्याप्तिः । ( त० सं० ) । यथा वा—'जीवच्छरीरं सात्मकम् , प्राणादिमत्त्वात्' इत्यादावप्रसिद्धसाध्यककेवलव्यतिरेकिणि हेतौ,—सात्मकत्वाभावव्यापकाभावप्रतियोगित्वरूपा 'यत्र यत्र सात्मकत्वाभावस्तत्र तत्र प्राणादिमत्त्वाभावः, यथा घटादौ' इति व्यतिरेकव्याप्तिरेवास्ति। ( त० कौ० २ । पृ० १२ )

[ ख ] केचित्तु,—हेत्वभाव-साध्याभावयो[3][4]र्व्याप्तिर्व्यतिरेकव्याप्तिः; सा च, साध्याभावनिरूपिता हेत्वभावनिष्ठा [5]व्यापकत्वरूपा ( व्यापकत्ववत्त्वं च हेतोः, स्वाश्रयप्रतियोगित्वसंबन्धेन ) । यथा—पर्वतो वह्निमान्धूमादि-

१ अत्र—जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां कूटं पृथिव्यां साध्यते । तत्र त्रयोदशत्वावच्छिन्न*भेदस्यैकाधिकरणवृत्तित्वाभावात् नान्वयित्वा-साधारण्ये। प्रत्येकाधिकरणे प्रसिद्ध्या † साध्यविशिष्टानुमितिः, व्यतिरेकव्याप्तिनिरूपणं च, इति सर्वं सुस्थम् । ( त० दी० ख० २ । पृ० २४ )

२ अत्र—इतरभेदाभावात्मकस्य साध्याभावस्य 'अन्योन्याभावाभावस्य स्वप्रतियोगिभेदप्रतियोगितावच्छेदकस्वरूपत्वम्' इति नियमात् इतरत्वस्वरूपत्वम्, इति बोध्यम् ।

३ अत्रार्थं,—व्यतिरेकोऽभावः; अर्थात्साध्यस्य । तथा च—साध्याभावनिरूपिता व्याप्तिर्व्यतिरेकव्याप्तिः, इति 'व्यतिरेकव्याप्ति'शब्दः संगमनीयः । ( वाक्य० २ । पृ० १५ )

४ ननु,—अन्यनिष्ठव्याप्त्या कथं साधनादनुमितिः ? इति चेदत्राहुः,—साध्याभावव्यापकीभूताभावप्रतियोगित्वेन साधनस्य पक्षवृत्तित्वज्ञानं सहकारि, इति । ( सि० च० २ । पृ० २६ )

५ तेन, व्याप्तेर्हेतुनिष्ठत्वमुपपद्यते, इति भावः ।

* अयं भावः—अनुमितेः पूर्वं निश्चितसाध्यतावच्छेदकावच्छिन्नवतो धर्मिण एवाप्रसिद्धाः, न तत्र हेतोः सत्त्वासत्त्वनिबन्धने अन्वयित्वासाधारण्ये, इति । (नील० २ । पृ० २३–२४)

† अत्रायं भावः—प्रत्येकं प्रसिद्धौ,—अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वविशिष्टज्ञानं संभवति। तथा च—विशेषणतावच्छेदकप्रकारकनिर्णयस्य सद्भावात्, साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाह्यनुमितिः, व्यतिरेकव्याप्तिज्ञानं च संभवति, इति । ( नील० २ । पृ० २४ )

त्यादौ 'यो यो वह्न्यभाववान्, स धूमाभाववान्' इति, इत्याहुः । ( वाक्य० २ । पृ० १९ )

**व्यतिरेकि**—१ अत्यन्ताभावप्रतियोगि । यथा—'व्यतिरेकिसाध्यकस्थले, व्यतिरेकिहेतुकस्थले च' इत्युक्ते—पर्वतो वह्निमान्धूमादित्यादौ वह्नेर्धूमस्य च व्यतिरेकित्वम् । २ पूर्वोक्तेन व्यतिरेकेण विशिष्टम् ।

**व्यतिरेकि**—( अनुमानम् ) व्यतिरेकव्याप्तिविशिष्टहेतुकमनुमानम् । यथा—'पृथिवी, इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्याद्यनुमानम् । अत्राधिकं तु 'केवलव्यतिरेकि'शब्दे द्रश्यम् ।

**व्यतिरेकिहेतुः**—( अवयवः ) [ क ] "तथा वैधर्म्यात्" । ( गौ० १ । १ । ३९ ) । उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् ?,—अनित्यः शब्द उत्पत्तिधर्मकत्वात्—'अनुत्पत्तिधर्मकं नित्यम्, यथाऽऽत्मादि द्रष्टव्यम्' इति । ( वात्स्या० १ । १ । ३९ )

[ ख ] ज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवः ।

[ ग ] अप्रतीतान्वयव्याप्तिकहेतुबोधको हेत्ववयवः ( गौ० वृ० १ । ३४) । यथा—पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ—'गन्धवत्त्वात्' इति शब्दो व्यतिरेकिहेतुः । ( स्व० )

**व्यतिरेक्युदाहरणम्**—( अवयवः ) [ क ] "तद्विपर्ययाद्वा विपरीतम्"

---

१ अत्रोक्तम्—"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद्विपरीतः प्रतीयते । अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः" इति । ( सि० च० २ । पृ० २६ ) ( प्र० प्र० ) । "व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः" इति । ( त० कौ० २ )

२ लक्षणं च व्यतिरेकिहेतुत्वम् । तत्र, [ क ] व्यतिरेकव्याप्त्यभिधायकावयवाभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् । [ ख ] अनुमितिचरमकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारण-साध्याविषयकशाब्दधीजनका-प्रतीतान्वयसाध्यसाधनवाचक-हेतुविभक्तिमच्छब्दत्वम् । ( चि० २ । अवय० पृ० ७९ )

३ लक्षणं च व्यतिरेक्युदाहरणत्वम् । तत्र, [ क ] साध्यसाधनाभावसंबन्धबोधकत्वम् । ( चि० अव० २ । पृ० ८० ) । [ ख ] व्यतिरेकव्याप्तिबोधकत्वम् । ( दीधि० २ । पृ० १७७ )

४ तदर्थश्च—साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात्, इति । ( गौ० वृ० १ । ३७ )

(गौ० १ । १ । ३७ ) । साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति । अनित्यः शब्द उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यमात्मा[1]दि । ( वात्स्या० १ । १ । ३७ )

[ ख ] साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणम् । यथा—'जीववच्छरीरं सात्मकं प्राणादिमत्त्वात्, येन्नैवं तन्नैवं[2] यथा घटः' इति । ( गौ० वृ० १ । ३६ )

**व्यतिरेक्युपनयः**[3]—( अवयवः ) [ क ] "उदाहरणापेक्षो[4] न तथेति साध्यस्योपसंहारः[5]" । ( गौ० १ । १ । ३८ ) । साध्यवैधर्म्ययुक्ते पुनरुदाहरणे,—आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम्; न च तथा शब्दः, इत्यनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते । ( वात्स्या० १ । १ । ३८ ) । यथा वा—पर्वतो वह्निमान्धूमादित्यादौ,—'वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायम्' इति, 'न तथाऽयम्' इति वा वाक्यमुपनयः । ( गौ० वृ० १ । ३८ )

**व्यतिहारः**—१ [ क ] परस्परकरणम् । ( ल० म० )

[ ख ] परस्परैकजातीयक्रियाकरणम् । यथा—'केशाकेशि[6], दण्डादण्डि' इत्यादौ । यथा वा—अन्योऽन्यं ताडयत इत्यादौ च व्यतिहारः । २ परिवर्तम् ( विनिमयः ) ( हेमच० )

---

१ सोऽयमात्मादिर्दृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी; योऽसौ साध्यस्य धर्मोऽनित्यत्वम्, स तस्मिन्न भवतीति । अत्रात्मादौ दृष्टान्ते 'उत्पत्तिधर्मकत्वस्याभावादनित्यत्वं न भवति' इत्युपलभमानः शब्दे विपर्ययमनुमिनोति 'उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्दः' इति । ( वात्स्या० १ । १ । ३७ )

२ तदर्थस्तु,—यत् सात्मकं न, तत् प्राणादिमन्न, इति ।

३ लक्षणं च व्यतिरेक्युपनयत्वम् । तच्च, साध्याभावव्यापकीभूताभावप्रतियोगिमत्पक्षबोधकावयवत्वम् । ( चि० अवय० २ । पृ० ८१ )

४ तदर्थश्च—साध्यस्य पक्षस्य, उदाहरणापेक्ष उदाहरणानुसारी, य उपसंहारः उपन्यासः । प्रकृतोदाहरणोपदर्शितव्याप्ति-( व्यतिरेकव्याप्ति )विशिष्टहेतुविशिष्टपक्षबोधजनको न्यायावयवः, इति । ( गौ० वृ० १ । ३८ )

५ उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्यः, इति । ( वात्स्या० १ । १ । ३८ )

६ अत्र,—'परस्परं केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्तते' इति, 'दण्डैश्च दण्डैश्च गृहीत्वेदं युद्धं, प्रवर्तते इति चार्थो बोध्यते ।

**व्यधिकरणत्वम्**—१ [१] तदनधिकरणवृत्तित्वम् । (त० प्र० २) (मु० २ ) ( ग० २ । चतु० चक्र० ) यथा—कपिसंयोगाभावस्य स्वप्रतियोगिकपिसंयोगव्यधिकरणत्वम् । [२] तदधिकरणावृत्तित्वम् । (मू० म० १ ) यथा—घटत्वाभावस्य स्वप्रतियोगिघटत्वव्यधिकरणत्वम् । ( स्व० ) । २ क्वचित्—साध्यतावच्छेदकसंबन्धसामान्ये स्वप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्य-एतदुभयाभावः, तत्कत्वम् । ( दीधि० २ । व्याप्ति० सिद्धा० )

**व्यधिकरणधर्मावच्छिन्नाभाववादी**—प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववादी । यथा—सौन्दडोपाध्यायः । ( ग० २ । व्याप्ति० चतु० अवतरणे० )

**व्यपदेशः**—१ [ क ] शब्दप्रयोगः ( दि० १ । ३ । पृ० १०८ ) । यथा—"अव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" ( गौ० १ । १ । ४ ) इत्यादौ व्यपदेशः ।

[ ख ] शाब्दिकास्तु,—मुख्यव्यवहारः । यथा—"व्यपदेशिवदेकस्मिन्" ( व्या० परि० ) इत्यादौ, इति वदन्ति । २ संज्ञा । ( त्रिका० ) । ३ कापट्यम् । ( हेमच० ) ( वाच० )

---

१ अत्र—स्वपदेनाभावो ग्राह्यः ।

२ इदं व्यधिकरणत्वं तु, सिद्धान्तसिद्धव्याप्तिघटकाभावनिष्ठम् 'प्रतियोगिवैयधिकरण्य'शब्देन व्यवह्रियते, इति विज्ञेयम् ।

३ स च, घटत्वेन पटाभावम्, घटत्वेन वाच्यत्वाभावम्, घटत्व-पटत्वो-भयाभ्यां प्रमेयसामान्याभावं च, एवमादीन् व्यधिकरणधर्मावच्छिन्नाभावानङ्गीकरोति । गङ्गेशोपाध्यायादयस्तु,—तादृशाभावान्नाङ्गीचक्रुः,* इति विज्ञेयम् ।

४ अत्र—'व्यपदेशिना तुल्यं वर्तते' (वतिः) इति विग्रहः । समुदितार्थस्तु,—एकस्मिन् (कार्ये प्रससहायेऽपि ), व्यपदेशिवत् (मुख्यवत्), कार्यं कर्तव्यम्, इति । यथा—'अस्यापत्यं इः' इत्यत्र—"अत इञ्" ( पाणि० ४ । १ । ९५ ) इति सूत्रेण विधीयमानोऽदन्तप्रकृतिकोऽपि इञ्, केवलात् 'अ' शब्दादपि भवति ।

---

* व्यधिकरणधर्मावच्छिन्नाभावनिराकर्तुः प्रतिज्ञावाक्यं च 'प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदको भवति' ( चि० २ । व्याप्तिनि० ) इति विज्ञेयम् । ( ग० चतु० खण्ड० पृ० ६७ )

**व्यपेक्षा**—१ अपेक्षा। २ वैयाकरणास्तु,—सामर्थ्यविशेषः; स च [ क ] स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशाद्यः परस्परं संबन्धः, सा व्यपेक्षा, इत्याहुः।

[ ख ] अन्ये तु,—अवयवार्थापेक्षणम्, इत्याहुः।

**व्यभिचरितत्वम्**—'व्यभिचार'शब्दवदस्यार्थोऽनुसंधेयः।

**व्यभिचारः**—( अनैकान्तिकत्वरूपो हेतुदोषः ) ऐकत्राव्यवस्था। यथा—नित्यः शब्दोऽस्पर्शत्वात्, इति। ( वात्स्या० १। २। ५ )। यथा वा—धूमवान्वह्नेरित्यादौ,—वह्नेर्धूमव्यभिचारः। ( स्व० ) शिष्टं च 'सव्यभिचारत्व'शब्दव्याख्याने दृश्यम्।

**व्यभिचारः**—१ कार्यकारणभावभङ्गः। अयं व्यभिचारो द्विविधः,—अन्वयव्यभिचारः, व्यतिरेकव्यभिचारश्च। तत्राद्यः,—कारणसत्त्वे कार्याभावात्। द्वितीयः,—कार्यसत्त्वे कारणाभावात्। ( ग० )। २ धर्मज्ञास्तु,—नि-

---

१ अत्रेदं विज्ञेयम्—व्यपेक्षायां समासो न भवति; किंतु—एकार्थीभावे एव समासो भवति, इति। तत्प्रपञ्चस्तु 'समास'शब्दव्याख्याने दृश्यः।

२ तल्लक्षणं च,—साध्यसाधनग्रहाविरोधिनो ज्ञानस्य * विषयतया व्याप्तिग्रहप्रतिबन्धकतानतिरिक्तवृत्तित्वम्। ( दीधि० २। पृ० २०३ ) ( ग० २। हेत्वाभा० सामा० )

३ अत्रेदं बोध्यम्—व्यभिचारत्वस्य, साधारणत्वासाधारणत्वाऽनुपसंहारित्वात्मकेषु त्रिषु हेतुदोषेषु वर्तमानत्वेऽपि साधारणत्वे एवार्थे 'व्यभिचार'शब्दं प्रायशः प्रयुञ्जते इदानींतना नैयायिकाः, इति

४ अत्रेदं प्रसंगतोऽधिकं बोध्यम्—व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं व्याप्तिग्राहकम्। तत्र—व्यभिचारज्ञानं द्विविधम्,—यथार्थम्, अयथार्थं च। तदपि द्विविधम्,—निश्चयः, शङ्का च। व्यभिचारशङ्काविरहः क्वचित्,—† तर्कात्, क्वचित् ‡ स्वतःसिद्ध एव, इति। ( सि० च० २। पृ० २४ ) ( त० दी० २। पृ० २१ )

---

* समुदितार्थश्च,—'साध्यसाधनग्रहाविरोधित्वे सति, व्याप्तित्वावच्छिन्नप्रकारतानिरूपित-हेतुतावच्छेदकावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम्' इति। ( ल० व० )

† तर्काभावेतरनिखिलकारणसमवधानस्थले, इत्यर्थः। ( नील० २। पृ० २१ )

‡ इतरकारणविरहस्थले तादृशकारणविरहप्रयुक्त एवेत्यर्थः। ( नील० २। पृ० २१ )

न्दिताचारः । यथा—"पत्नी पत्युर्धनहारी या स्यादव्यभिचारिणी" इत्यादौ,—जारकर्म व्यभिचारः, इत्याहुः । ( मिताक्ष० कात्याय० । पृ० ७९ )

**व्यभिचारित्वम्**—१ 'व्यभिचार'शब्दवदस्यार्थोऽनुसंधेयः । २ आलंकारिकास्तु,—रसप्रादुर्भावाङ्गभूतनिर्वेदादिनिष्ठः संचारिभावः, इत्याहुः ।

**व्यर्थत्वम्**—१ स्वसमानाधिकरणावश्यक्लृप्तधर्मान्तरघटितत्वम् । यथा—प्रमेयत्वविशिष्टसास्नादिमत्त्वस्य गोर्लक्षणत्वे वाच्ये व्यर्थत्वम् । ( स्व० ) २ निष्फलत्वम्, इति काव्यज्ञा आहुः ।

**व्यर्थविशेषणत्वम्**—विशेषणं विनाऽपि यत्र व्याप्तिग्रहः, तत्र व्यर्थविशेषणत्वम् । यथा—नीलधूमत्व-शरीराजन्यत्वादौ व्यर्थविशेषणत्वम् । (चि० १ । निर्वि० पृ० ८२१ )

**व्यवधानम्**—[ १ ] यत्किंचिद्वस्तूत्तरत्वविशिष्टं वस्त्वन्तरपूर्वत्वम् । तच्च द्विविधम्,—दैशिकम्, कालिकं चेति । ( स्व० ) । [ २ ] अन्ये तु,—द्रव्यान्तरेण द्रव्यान्तरस्याच्छादनम्, इत्याहुः । ( हेमच० )

---

१ अत्र विशेष उच्यते—"हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम्" इति ( याज्ञ० अ० १ । श्लो० ७० )

२ तदुक्तम्—"*विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः । स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च † तद्विदाः" इति ( सा० द० परि० ३ । श्लो० १६८ )

३ अत्र—केवलसास्नादिमत्त्वेनैव गोर्लक्षणत्वनिर्वाहे, अप्रयोजनक-'प्रमेयत्व' पदार्थघटितस्य प्रमेयत्वविशिष्टसास्नादिमत्त्वस्य वैयर्थ्यम्, इति विज्ञेयम् ।

४ इदं च व्याप्यत्वासिद्धिरूपे ( हेत्वसिद्धौ वा ) हेत्वाभासेऽन्तर्भवति, इति विज्ञेयम् ।

---

* तदर्थश्च—स्थिरतया वर्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भाव-तिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते, इति (सा० द० परि० ३। श्लो० १६८। टी० पृ० ४५)

† ते के इत्याह—"निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसंत्रासलज्जा हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः" इति । ( सा० द० प० ३ । श्लो० १६९ । पृ० ४५ ) एवम्—रत्यादयोऽप्युपलक्षणतया ग्राह्याः । ( सा० द० प० ३ । श्लो० २०३ । पृ० ५१ )

**व्यवसायः**—१ ज्ञानविषयीभूतं ज्ञानम् । ( पूर्वज्ञानम् ) । ( स्व० ) यथा—"व्यवसायात्मकं प्रत्यक्षम्" ( गौ० १ । १ । ४ ) इत्यादौ—घटचाक्षुषप्रत्यक्षानन्तरं जायमानेन 'घटं साक्षात्करोमि' इत्यनुव्यवसायेन गम्यो घटसाक्षात्कारो ( सविकल्पकम् ) व्यवसायः । ( गौ० वृ० १ । १ । ४ ) । २ काव्यज्ञास्तु,—उद्यमः ( रघु० ८ । ६९ ) । यथा—"किं दूरं व्यवसायिनाम्" इत्यादौ, इत्याहुः ।

**व्यवस्था**—मर्यादा । सा च, ( १ ) क्वचित्—शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापनम् । ( २ ) वैयाकरणास्तु,—स्वाभिधेयापेक्षावधिनियमः, इत्याहुः । ( सि० कौ० )

**व्यवस्थितत्वम्**—[ क ] अयोगान्ययोगाभ्यां परिच्छेदः । यथा—"व्यवस्थितः पृथिव्यां गन्धः" ( वै० २।२।२ ) इत्यादौ—पृथिव्यां गन्धस्य व्यवस्थितत्वम्; 'भवति हि पृथिवी गन्धवत्येव' 'पृथिव्येव गन्धवती' इति । (वै० उ० २।२।२) यथा वा— 'व्यवस्थितविकल्पः' इत्यादौ । (स्व०) [ ख ] बाधकाभावादवधारणम् । ( वै० वि० २।२।२ ) । शिष्टं तु 'व्यवस्था'शब्दव्याख्याने दृश्यम् ।

**व्यवहारः**—१ [ १ ] [ क ] शब्दप्रयोगः । (न्या० बो० १ । पृ० ६ ) । यथा—व्यवहरन्ति जना इत्यादौ । ( स्व० )
[ ख ] बुबोधयिषापूर्वकवाक्यप्रयोगः । यथा—"सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः" इत्यादौ व्यवहारः । ( वाक्य० १ । पृ० ९ ) ( त० प्र० ४ । पृ० १३३ ) । [ २ ] तद्रूपावच्छिन्नबोधकैशब्दः । ( नील० १ ।

---

१ अत्र भाष्यम्—"सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः, पश्चात् मनसाऽनुव्यवसायः; उपहतेन्द्रियाणामनुव्यवसायाभावात्" इति ( वात्स्या० १ । १ । ४ ) । एवमनुमानादिविषयेऽपि स्वयमूह्यम् ।

२ इदमेव,—दिग्देशकालैरवधिनियमभेदरूपा, इति । व्यवस्थायां च सर्वनामता भवति ।

३ अत्रायं कार्यकारणभावो बोध्यः—'व्यवहारे व्यवहर्तव्यज्ञानं हेतुः' इति । ( नील० १ । पृ० ५ ) ( त० प्र० )

पृ० ९ ) यथा—'अयं गौः' इति शब्दः । ( स्व० ) २ [ क ] प्राञ्चो व्यवहारशास्त्रज्ञाः,—अन्यविरोधेन स्वसंबन्धितया कथनं व्यवहारः । यथा—कश्चित् 'इदं क्षेत्रादि मदीयम्' इति कथयति, अन्योऽपि तद्विरोधेन 'मदीयम्,' इति, इत्याहुः । ( मिताक्ष० अ० २ । श्लो० १ ) [ ख ] नव्यास्तु,—ऋणादानादिलौकिकार्थविषया कथा व्यवहारः, इत्याहुः । ( वीरमित्रो० अ० २ । पृ० ३ ) अयं व्यवहारश्चतुष्पादः,—भाषापादः, उत्तरपादः, क्रियापादः, साध्यसिद्धिपादश्चेति । ( मिता० ) ३ धर्मज्ञास्तु,—सहासनभोजनादिर्व्यवहारः । यथा—"न पतितैः संव्यवहारो विद्यते" ( आपस्त० धर्म-सू० ७।२१।९ ) इत्यादौ, इत्याहुः । ४ लोकयात्रा, इति लौकिकजना आहुः ।

**व्यवहारपदम्**—व्यवहारविषयः । यथा—व्यवहारशास्त्रे ऋणादानादीन्यष्टादश व्यवहारपदानि ।

---

प्राभाकरास्तु,—व्यवहारे व्यवहर्तव्यतावच्छेदकासंसर्गग्रह* एव कारणम्, न तु व्यवहर्तव्यतावच्छेदकप्रकारकं ज्ञानं कारणम्, इत्याहुः । ( त० प्र० ख० ४ । पृ० १३३ )

१ वादिप्रतिवादिनोर्विवादः, इत्यर्थः । ( वीर० २ । पृ० ४ )

२ कात्यायन-हारीताभ्यां व्यवहारस्वरूपमुक्तम्—"प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे । साध्यमूलस्तु यो वादो व्यवहारः स उच्यते" इति । ( वीर० अ० २ । पृ० ५ )

३ अत्र निरुक्तिः कात्यायनेन कृता—"विना नार्थेन संदेहो हरणं हार उच्यते । नानासंदेहहरणाद्व्यवहार इति स्मृतः" इति । ( वीर० २ । पृ० ६ )

४ तल्लक्षणमुक्तं याज्ञवल्क्येन—"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्" इति । ( याज्ञ० स्मृ० अ० २ । श्लो० ५ )

५ तथा च—प्रतिज्ञोत्तरसंशयहेतुपरामर्शप्रमाणनिर्णयप्रयोजनात्मको व्यवहारः, तस्य पदं विषयः, इति तदर्थः । स च द्विविधः,—शङ्काभियोगः, तत्त्वाभियोगश्चेति । ( मिता० अ० २ । श्लो० ५ । पृ० ३ )

६ तानि चाष्टादश मनुनोक्तानि—"तेषामाद्यमृणादानं ( १ ), निक्षेपो—( २ ), ऽस्वामिविक्रयः ( ३ ), । संभूय च समुत्थानं ( ४ ), दत्तस्यानपकर्म च ( ५ ), ॥ वेतनस्यैव चादानं ( ६ ), संविदश्च व्यतिक्रमः ( ७ ) । क्रयविक्रयानुशयो ( ८ ), विवादः स्वामिपालयोः ( ९ ) ॥ सीमाविवादधर्मश्च ( १० ), पारुष्ये दण्ड-वाचिके ( ११ ) । स्तेयं च ( १२ ), साहसं ( १३ ), चैव स्त्रीसंग्रहण ( १४ )मेव च ॥ स्त्री-पुंधर्मो ( १५ ), विभागश्च ( १६ ), द्यूत-( १७ )माह्वय ( १८ ) एव च । पदान्यष्टादशैतानि व्यवहारस्थिताविह" इति । ( मनु० अ० ८ । श्लो० ४–७ )

---

* तेन, शुक्तौ 'इदं रजतम्' इति व्यवहार उपपद्यते, इति ज्ञेयम् ।

**व्याकरणम्**—१ [ क ] पूर्वपूर्वव्याकरणतः शब्दगुणदोषविद्भिरभियुक्तैः प्रकृतिप्रत्ययादिपरिकल्पनया कृतं शब्दसाधुत्वाख्यायकम् ( शास्त्रम् ) । ( चि० ४ ) यथा—"अग्नेर्ढक्" ( पाणि० ४ । २ । ३३ ) इत्यादि । [ ख ] शाब्दिकास्तु,—निःश्रेयसमुख्यफलकं शब्दानुशासनम् । यथा—पाणिनिशाकटायनादिप्रणीतं व्याकरणम्, इत्याहुः । २ मायावादिनस्तु,—स्थूला सृष्टिः । ( रत्नप्रभा० ) यथा—"नाम-रूपे व्याकरवाणि" ( श्रुतिः ) इत्यादौ व्याकरणम्, इत्याहुः ।

**व्याख्यानम्**—[ क ] 'विवरण'शब्दवदस्यार्थोऽनुसंधेयः । ( हलायुधे ) [ ख ] अप्रतिपत्त्यादिनिवारणप्रयोजनकः तत्समानार्थकपदान्तरेण विस्तरेण तदर्थकथनम् । यथा—न्याये,—तत्त्वचिन्तामणेर्दीधितिर्मथुरानाथी च व्याख्यानम्; वेदान्ते तु,—ब्रह्मसूत्रार्थप्रतिपादकानुव्याख्यानस्य न्यायसुधा व्याख्यानम् ।

**व्याघातः**—१ [ १ ] असंबद्धार्थकं वाक्यम् । तद्यथा—'यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता । माता तु मम वन्ध्याऽऽसीदपुत्रश्च पितामहः' इति वाक्यम् । [ २ ] प्रतिबन्धः । यथा—"व्याघातावधिराशङ्का" ( कुसु०, ) इत्यादौ । [ ३ ] तर्कविशेषः, इति प्राञ्चो नैयायिका आहुः । २ आलंकारिकास्तु,—अर्थालंकारविशेषः, इत्याहुः ।

---

१ अत्रार्थे व्युत्पत्तिः—'व्याक्रियन्ते व्युत्पाद्यन्ते ( अर्थवत्तया प्रतिपाद्यन्ते ) शब्दा येन' ( करणे ल्युट् ) इति व्याकरणम् ।

२ अनेन शास्त्रेण, 'अग्निर्देवताऽस्य ( हविषः )' इत्यर्थे 'अग्नि' शब्दाड्ढक्प्रत्ययकल्पनया 'आग्नेयम्' इति शब्दस्य साधुत्वमाख्यायते ।

३ मुख्यफलं च "एकः शब्दः सुष्ठु प्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति" इति । अत्रावान्तरफलं तु,—"रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" इति महाभाष्योक्तं ज्ञेयम् ।

४ अत्रोक्तम् "अथ व्याकरणं वक्ष्ये कात्यायन ! समासतः । सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे" इत्यादि । अधिकं तु गारुडे ( अ० २०९ ) द्रष्टव्यम् ।

५ अत्रोक्तम्—"पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपेषु समाधानं व्याख्यानं पञ्चलक्षणम्" इति । (पराशरपु० अ० १८ )

६ अत्र—'अप्रतिपत्तिः, विप्रतिपत्तिः, अन्यथाप्रतिपत्तिश्च, व्याख्याया बीजम्' इत्यनुसंधेयम् ।

३ मौहूर्तिकाश्च,—विष्कम्भादिसप्तविंशतियोगमध्ये त्रयोदशो ( १३ ) योगविशेषः, इत्याहुः । ४ अन्तरायः; ५ प्रहारश्च, इति काव्यज्ञा आहुः ।

**व्यानः**—( प्राणवायुः ) [ क ] नाडीमुखेषु वितननाद्व्यानः । ( दि० १ । २ ) ( सि० च० )

[ ख ] सर्वशरीरव्यापकः[1] प्राणान्तर्गतो वायुविशेषः । यथा—"व्यानः सर्वशरीरगः"[2] इत्यादौ ।

**व्यापकत्वम्**[3]—१ [ १ ] [ क ] A. तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । ( न्या० बो० ) B. तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम्[4] । यथा—वह्नेर्धूमव्यापकत्वम्[5] । ( ग० )

[ ख ] तत्समानाधिकरणा यावन्तो धर्मा यत्समानाधिकरणाः, तत्त्वम् । ( न्या० म० २। पृ० १६ ) ( ख० ) यथा—मनुष्यत्वसमानाधिकरणयावद्धर्माणां प्राणित्वसामानाधिकरण्यात्, प्राणित्वस्य मनुष्यत्वव्यापकत्वम् । ( ख० )

[ ग ] स्वप्रतिबद्धबुद्धिजनकत्वं यत्स्वरूपम्, तदेव व्यापकत्वम्, इति प्राञ्च आहुः । ( त० भा० )

---

१ अत्रोक्तम्—"व्यानो हि व्यानयत्यन्नं सर्वव्याधिप्रकोपनः । महारजतसुप्रख्यो हानोपादानकारणम् ॥ स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि । घ्राणे गले स्फिग्देशे तिष्ठत्यत्र निरन्तरम् ॥ स्कन्दयत्यधरं वक्त्रं गात्रनेत्रे प्रकोपनः" इति । (पदार्थादर्शे) ( वाच० )

२ तदुक्तम्—"विष्वगननवान् वायुर्व्यान इत्यभिधीयते" इति ।

३ अत्र व्युत्पत्तिः—'विशेषेणाप्नोति'* ( वि, आप–ण्वुल् ) इति व्यापकः; तस्य भावो व्यापकत्वम् ।

४ तदर्थः—यत् यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं न भवति, तत् तद्व्यापकम्, इति । ( न्या० सि० दी० पृ० ५६ )

५ तथा हि—धूमसमानाधिकरणो योऽन्योन्याभावः (न हि वह्निमद्भेदः; अपि तु जलवद्भेद एव), तत्प्रतियोगितानवच्छेदको वह्निर्भवति, इति वह्निर्धूमव्यापको भवति । ( ख० )

---

* अनया व्युत्पत्त्या व्याप्तिकर्तृत्वं लभ्यते; तच्च व्याप्तिनिरूपकत्वम् । यथा—पर्वते धूमेन वह्निसाधने,—वह्नेर्धूमनिष्ठव्याप्तिनिरूपकत्वरूपं व्यापकत्वम् । ( प्र० च० २ । पृ० १६ )

[ २ ] निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्व-एतदुभयाभावः, तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वम् । ( दीधि० २। व्याप्तिनि०) ( मु० २ । व्याप्तिनि० ) यथा—पर्वतः संयोगेन वह्निमान् धूमादित्यादौ वह्नेर्धूमव्यापकत्वम् । (स्व०) [ ३ ] यन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धसामान्ये प्रतियोगित्वाधिकरणयत्किंचिद्यत्त्यनुयोगिकत्वाभावः, तदन्यत्वम् । (ग०व्याप्तिनि० कूट०) [ ४ ] अधिकदेशवृत्तित्वम् । यथा—द्रव्यत्वस्य पृथिवीत्वाद्यपेक्षया व्यापकत्वम् (परत्वम् ) । ( मु० १ । पृ० ३७ ) । २ स्वरूपतः सर्वदेशसंबद्धत्वम् । यथा—सामान्यस्य व्यापकत्वम् । ( वै० उ० १।२।३। पृ० ९३ )। ३ क्वचित्—परममहत्परिमाणयोगः । यथा—आकाशादेर्व्यापकत्वम् । ( वै० उ० ७।१।२२ ) । ४ आधेयत्वम् ( वृत्तित्वम्) । यथा—"शरीरव्यापकं स्पर्शग्राहकं त्वगिन्द्रियम्" इत्यादौ । ( स्व० ) । ५ तान्त्रिकास्तु,—सर्वाङ्गसंबन्धित्वम् । यथा—"अङ्गुलिव्यापकन्यासौ" ( तन्त्रसा० ) इत्यादौ,—न्यासविशेषे व्यापकत्वम्, इत्याहुः । ( वाच० ) । ६ आच्छादकत्वम्, इति काव्यज्ञा आहुः ।

---

१ प्रतियोगितावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताको यादृशोऽभावो लक्षणघटकत्वेनाभिमतः, तस्य प्रतियोगीत्यर्थः ।

२ इदं च, साध्यस्य हेतुव्यापकत्वम्, इति बोध्यम् ।

३ अत्रायं नियमः—"व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥ अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥ व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् । एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः" इति ( त० भा० २ ) ( त० कौ० २ )

४ अत्र यत्पदं साध्यतावच्छेदकपरम् ।

५ इदं व्यापकत्वं तु, 'प्रतियोगिताव्यापकत्वम्' इति व्यवह्रियते ।

अत्र च—वह्निधूमोभयवान्धूमादित्यादौ, यदा पर्याप्तिसंबन्धेनोभयत्वस्य साध्यतावच्छेदकता विवक्षिता, तदाऽप्यनेन परिष्कारेण व्यापकत्वं निर्वहति, इति विज्ञेयम् ।

**व्यापारः**—१ यं[1] जनयित्वैव यस्य यज्जनकत्वम्, स तद्व्यापारः[2] । ( त० प्र० २ ) यथा—लौकिकप्रत्यक्षे चेन्द्रियस्येन्द्रियार्थसंनिकर्षषट्कं[3] व्यापारः; अनुमित्यादौ तु व्याप्तिज्ञानस्य परामर्शादिर्व्यापारः । यथा वा—'कुठारेण दारु छिनत्ति' इत्यादौ,—छिदाकरणपरशोर्दारुसंयोगो[4] व्यापारः । ( प्र० प्र० ) । २ [ क ] प्रवृत्तिविषयः । यथा—देवदत्तो ग्रामं गच्छतीत्यादौ,—'गम' धातुना उत्तरदेशसंयोगानुकूला या क्रिया[6] बोध्यते, स व्यापारः । [ ख ] शाब्दिकास्तु,—पदान्तरसमभिव्याहाराप्रयोज्यसाध्यत्वप्रकारकाभिधानविषयो[5] व्यापारः, इति वदन्ति । ३ आधुनिकवैश्यास्तु,—अर्थजनक उद्यमो व्यापारः, इत्याहुः ।

**व्यापारित्वम्**—व्यापारविशिष्टत्वम्; तच्च, क्वचित्—जनकतासंबन्धेन व्यापारविशिष्टत्वम् । यथा—"न हि व्यापारेण व्यापारिणोऽन्यथासिद्धिः" ( त० प्र० १ ) इत्यादौ—इन्द्रियाद्यात्मकस्य करणस्य व्यापारित्वम् ।

**व्यापित्वम्**—'व्यापकत्व'शब्दवदस्यार्थोऽनुसंधेयः ।

**व्याप्तत्वम्**—१ व्याप्तिविशिष्टत्वम् । यथा—'धूमो वह्निना व्याप्तः' इत्यादौ ।

---

१ तथा हि—संनिकर्षं जनयित्वैवेन्द्रियस्य प्रत्यक्षजनकत्वम्, इति प्रत्यक्षे संनिकर्षं इन्द्रियस्य व्यापारः ।

२ तल्लक्षणं च व्यापारत्वम्; तच्चात्र, [ क ] द्रव्यान्यत्वे सति, भावत्वे सति, तज्जन्यत्वे च सति, तज्जन्यजनकत्वम्* । (न्या० म० १ । पृ० २) (त० दी०) (सि० च० ) (त० कौ०)। [ ख ] शिवादित्यमिश्रास्तु,—व्यापारत्वमखण्डोपाधिः, इत्याहुः । (न्या० म० १ । पृ०२)

३ तथा हि—तच्च ( संनिकर्षषट्कम् ) इन्द्रियेण जन्यते, इन्द्रियजन्यं प्रत्यक्षं जनयति च, इति व्यापारलक्षणाक्रान्तं भवति, इति विज्ञेयम् ।

४ तथा हि—परश्वात्मकेन छिदाकरणेन जन्यः, तेनैव जन्यायाः फलीभूतायाश्छिदात्मकक्रियाया जनकश्च भवति, इति परशु-दारु-संयोगो व्यापारो भवति, इति । एवम्—यागादेर्व्यापारोऽदृष्टमप्यूह्यम् । शिष्टं तु 'करण' शब्दे द्रष्टव्यम् ।

५ एवम्—सर्वत्र शाब्दबोधे धात्वर्थव्यापार ऊह्यः ।

६ स च व्यापारः, भावयितुरुत्पादनक्रिया । तदुक्तं भर्तृहरिणा—"व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति । ( वाक्यपदीये )

---

* करणजन्यत्वे सति करणजन्यफलजनकत्वम्, इत्यर्थः । ( म० प्र० १ । पृ० ५ )

यथा वा—"साध्याभावव्याप्तो हेतुर्विरुद्धः" "समेन यदि नो व्याप्तः" ( उदयनः )* इत्यादौ व्याप्तत्वम् । २ पूर्णत्वम्; । ३ समाक्रान्तत्वं चेति वेदान्तिन आहुः । ४ ख्यातत्वम्; ५ स्थापितत्वं चेति काव्यज्ञा आहुः ।

**व्याप्तिः**—संबन्धविशेषः । स च साध्यसाधनस्थले,—[ क ] अनौपाधिकः संबन्धः[1] । ( वै० उ० ३।१।१४ )

[ ख ] स्वाभाविकः ( साध्यहेत्वोः ) संबन्धः । ( त० भा० )

[ ग ] उपाधिविधुरः संबन्धः । (सर्व० चार्वा०) (ता० र० श्लो० १४)

[ घ ] यद्विशिष्टसमानाधिकरणा यावन्तः साध्यसमानाधिकरणाः, तद्वत्त्वम् । ( न्या० म० २। पृ० १६ ) यथा—'इदं वाच्यं ज्ञेयत्वात्, पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्, पर्वतो वह्निमान् धूमात्,' इत्यादिषु केवलान्वयि-केवलव्यतिरेक्य-न्वयव्यतिरेकिषु त्रिष्वपि हेतुषु तादृशाः संबन्धाः सन्ति, इति व्याप्तिसामान्यस्वरूपाणि संगच्छन्ते ।

---

१ अत्र केचिदाहुः—केवलान्वयिनि केवलान्वयिधर्मसंबन्धः, व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः; एतयोरनुमितिविशेषजनकत्वम् । अनुमितिमात्रे तु पक्षधर्मतैव प्रयोजिका । न चातिप्रसङ्गः; 'विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्यजनकत्वम्' इति नियमात्, इति । ( चि० २ । पृ० ५ )

२ अत्र—अनौपाधिकत्वं तु, [क] यावत् स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम् । [ ख ] यावत्स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभा-*वासमानाधिकरणसाध्यसामानाधिकरण्यम् । (चि० २ । पृ० ८) (वै० उ० ३ । १ । १४ । पृ० १५२ )

३ स चानुमित्यौपयिकः साधननिष्ठः साध्यस्य संबन्धः, इति विज्ञेयम् ।

४ भवति च, धूमत्वविशिष्टसमानाधिकरणा यावन्तो ( धर्माः ). वह्निसमानाधिकरणाः, इति धूमे वह्निव्याप्तिः; न तु वह्नौ धूमस्य । न हि, वह्नित्वविशिष्टसमानाधिकरणा यावन्तो धूमसमानाधिकरणा भवन्ति; अयःपिण्डत्वस्य वह्नित्वविशिष्टसमानाधिकरणस्य धूमासमानाधिकरणत्वात् । अस्ति चेदं केवलान्वयिनि; अभिधेयत्वविशिष्टसमानाधिकरणानां यावतां ज्ञेयत्वसमानाधिकरणत्वात् । ( न्या० म० २। पृ० १६ )

५ अन्वय-व्यतिरेक-व्याप्तिसाधारणं व्याप्तित्वं तु, हेतुतावच्छेदकनिष्ठप्रकारताभिन्ना या अनुमितिजनकतावच्छेदकतावच्छेदकीभूता प्रकारता तद्वत्त्वम्, इति ।

---

* अत्र महोपाध्याया आहुः—एतादृशात्यन्ताभावासामानाधिकरण्यं यस्य, तस्य तदेवानौपाधिकत्वम्, इति ( चि० २ । पृ० ८ )

सा ( व्याप्तिः ) द्विविधा,—अन्वयव्याप्तिः, व्यतिरेकव्याप्तिश्च । तत्रान्वयव्याप्तिरपि द्विविधा,—पूर्वपक्षव्याप्तिः, सिद्धान्तसिद्धव्याप्तिश्चेति । उभयविधान्वयव्याप्तिज्ञाने व्यभिचारज्ञानाभावः, सहचारज्ञानं च कारणम् । व्यतिरेकव्याप्तिज्ञाने तु, साध्याभावे हेत्वभावस्य साहचर्यज्ञानं व्यभिचारज्ञानाभावश्च कारणम्, इति विवेकः । ( भा० प० श्लो० १३८ ) । व्याप्तिग्रहस्तु, नानाव्यक्तिसाध्य-हेतुकस्थले ( वह्निमान्धूमादित्यादौ ) सामान्यलक्षणाप्रत्यासत्त्या सकलवह्निधूमादिविषयको जन्यते, इति ( चि० २ । पृ० १७ ) ।

—तथा हि ( १ ) केवलान्वयिस्थले ( इदं वाच्यं ज्ञेयत्वादित्यादौ ),—उक्तलक्षणघटकतादृशप्रकारता च हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठा निरूप्यनिरूपकभावापन्ना प्रकारता भवति; । ( २ ) अन्वयव्यतिरेकिस्थले ( वह्निमान्धूमादित्यादौ ),—तादृशी प्रकारता तु, हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठप्रकारता, साध्याभावव्यापकीभूताभावप्रतियोगित्वनिष्ठप्रकारता च भवति; । ( ३ ) केवलव्यतिरेकिस्थले ( पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ, जीवच्छरीरं सात्मकं* प्राणादिमत्त्वादित्यादौ चाप्रसिद्धसाध्यकस्थलेऽपि ),—तादृशी प्रकारता च, हेतुव्यापकसाध्यसामानाधिकरण्यनिष्ठप्रकारता भवति, इति सर्वत्र व्याप्तौ लक्षणसमन्वयो बोध्यः ।

१ अत्राहुः—व्याप्तिग्राहकं तु, [ १ ] उपाध्यभावग्रहणजनितसंस्कारसहकृतेन, भूयोदर्शनजनितसंस्कारसहकृतेन साहचर्यग्राहिणा प्रत्यक्षेणैव व्याप्तिरवधार्यते । ( त० भा० पृ० १० ) [ २ ] व्यभिचारज्ञानविरहसहकृतं हेतुसाध्यसहचारदर्शनं व्याप्तिग्राहकं भवति । व्यभिचारज्ञानं च निश्चयः शङ्का वा । सा च क्वचिदुपाधिसंदेहात्, क्वचिद्विशेषादर्शनसहितसाधारणधर्मदर्शनादुत्पद्यते । तद्विरहश्च क्वचिद्विपक्षबाधकतर्कात्, क्वचित्—स्वतःसिद्ध एव । ( चि० २ । पृ० १३–१४ ) ( त० कौ० २ ) ( त० दी० २ ) [ ३ ] व्यभिचाराग्रहः, सहचारग्रहश्च व्याप्तिग्रहे कारणम् ; व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणम् । एवम्—अन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता । भूयोदर्शनं तु न कारणम्; व्यभिचारास्फूर्तौ सकृद्दर्शनेऽपि क्वचिद्व्याप्तिग्रहात् । क्वचित्, व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते । यत्र तु भूयोदर्शनादपि शङ्का नापैति, तत्र विपक्षबाधकतर्कोऽपेक्षितः । तथा हि—'वह्निविरहिण्यपि धूमः स्यात्' इति यद्याशङ्का भवति, तदा सा वह्निधूमयोः कार्यकारणभावस्य प्रतिसंधानान्निवर्तते 'यद्ययं वह्निमान्न

* अत्र हृदयम्—साध्याप्रसिद्धावपि ( अनुमितेः पूर्वं पक्षातिरिक्ते यत्किंचिदधिकरणे साध्यनिश्चयाभावेऽपि ), सात्मकत्वादिरूपसाध्यस्य खपुष्पशशशृङ्गादिवत्तुच्छत्वाभावेन हेतुव्यापकसाध्यसामानाधिकरण्यग्रहोत्पत्तौ बाधकाभावः, इति ।

तत्र—( १ ) पूर्वपक्षीयान्वयव्याप्तिश्च, [ क ] A साध्याभाववदवृत्तित्वम्। B साध्यवद्भिन्नसाध्याभाववदवृत्तित्वम् । C साध्यवत्प्रतियोगिकान्योऽन्याभावासामानाधिकरण्यम् । D सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वम् । E साध्यवदन्यावृत्तित्वं वा । ( चि० २ । पृ० २) यथा—पर्वतो वह्निमान् धूमादित्यादौ,—वह्नेरत्यन्ताभाववति, वह्निमद्भिन्ने वा ( जलादौ ) धूमो नास्ति, इति धूमादौ वह्नेर्व्याप्तिः । ( स्व० )

---

स्यात्तदा धूमवान्न स्यात्' कारणं विना कार्यानुत्पत्तेः, इति । ( मु० ) । शिष्टं तु 'व्यभिचार'शब्दव्याख्याने दृश्यम् । [ ४ ] वेदान्तिनस्त्वत्राहुः—प्रत्यक्षं व्याप्तिग्राहकम् । तथा च,—साहचर्यग्राहिणः प्रत्यक्षस्य भूयोदर्शन-व्यभिचारादर्शन-उपाध्यभावनिश्चयाः सहकारिणः । एवमनुमानागमावपि व्याप्तिग्राहकौ । तत्रागमेन व्याप्तिग्रहस्तु,—"ब्राह्मणो न हन्तव्यः" "गौर्न पदा स्प्रष्टव्या" इति । अत्र दृष्टान्तापेक्षा नास्ति ।

अत्रेदं बोध्यम्—कार्यं कारणमात्रमनुमापयति; कारणं तु समग्रमेव कार्यम्, इति । ( प्र० प० पृ० १४—१६ )

१ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताक-प्रतियोगिव्यधिकरण*—साध्याभावाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, इति समुदितार्थः । ( न्या० बो० २। पृ० १४ ) एतदारभ्य पञ्च 'अव्यभिचरितत्व'पदप्रतिपाद्यानि, व्याप्यलक्षणानि व्याप्तिस्वरूपाणि च 'पञ्चलक्षणी' इति नैयायिकैर्व्यवह्रियन्ते ।

२ अत्र—'साध्यवद्भिन्ने ( वर्तमानः ) यः साध्याभावः, तद्वदवृत्तित्वम्' इति विग्रहो ज्ञेयः । ( दीधि० २। पृ० ११ )

३ कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावात् ( अव्याप्तिः; अतो द्वितीयलक्षणेऽस्वारस्यमास्थाय तृतीयलक्षणम् ) आह—'साध्यवत्' इति । ( दीधि० २ । पृ० ११ )

४ हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह—'सकलेति' । साकल्यं साध्याभाववति साध्ये च विशेषणं बोध्यम्; साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन,—विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः; न वा, नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः । ( दीधि० २ । पृ० ११ )

५ चतुर्थलक्षणानास्थायां कारणमाह—'यत्रैकव्यक्तिकं साध्यं विपक्षो वा तत्र, निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिः; तत्र,—हेत्वभावस्य ( ह्रदादेः ) प्रत्येकं यावद्विपक्षावृत्तित्वात्, अत आह—'साध्यवत्' इति । ( दीधि० २ । पृ० ११—१२ )

६ साध्यतावच्छेदकसंबन्धावच्छिन्नं यत्साध्यवत्त्वं तदवच्छिन्नप्रतियोगिताकस्यान्योऽन्याभा-

---

* अत्र प्रतियोगिवैयधिकरण्यं च प्रतियोगितावच्छेदकसंबन्धावच्छिन्न-प्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यं विज्ञेयम् । ( न्या० बो० २ । पृ० १४ )

[ ख ] A साध्यासामानाधिकरण्यानधिकरणत्वम् । B साध्यवैयधिकरण्यानधिकरणत्वम् । ( चि० २ । पृ० २ )

[ ग ] A यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणाः, तत्त्वम् । B यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यम्, तत्त्वं वा ।

---

वस्य स्वप्रतियोगितावच्छेदकवत्त्वबुद्धिविरोधिताघटकसंबन्धेन यदधिकरणम्, तन्निरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तितानवच्छेदक-हेतुतावच्छेदक-धर्मवत्त्वम्, इति समुदितार्थः। ( वै० वि० ३ । १ । १४ ) ( मु० २ )

१ तस्य निष्कृष्टार्थस्तु,—साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वम्, इति । तेन,—सत्तावान् द्रव्यत्वादित्यादौ न दोषः । ( दीधि० २। पृ० १३ )

२ इदं लक्षणं 'सिंहलक्षणम्' इत्युच्यते ।

३ इदं लक्षणं 'व्याघ्रलक्षणम्' इत्युच्यते ।

४ एतावन्ति सप्त लक्षणान्यन्वयव्यतिरेकि-केवलव्यतिरेकिणोर्हेत्वोर्लक्षणानि, न तु केवलान्वयिनो हेतोः; तत्र साध्याभावाद्यप्रसिद्धेः। अग्रिमलक्षणानि तु केवलान्वयिसाधारणान्यपि, इति बोध्यम् ।

५ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता, तत्तदाश्रयसमानाधिकरण्यं यत्र कचिद्यावदधिकरणान्तर्भावेन, तत्त्वम्, इति समुदितार्थः । ( ग० चतु० )

६ अत्र—'यावन्तोऽभावाः' इत्यनेन, केवलान्वयिनि वाच्यत्वादौ साध्ये,—समवायितया वाच्यत्वाभावम्; वह्निमान् धूमादित्यादौ तु,—घटत्वेन वह्न्यभावादिकं व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणसमन्वयः कर्तव्यः, इति विज्ञेयम् ।

७ इदं लक्षणं च दीधितिकृता स्वयं कृतम्, इति प्रथमं 'स्वलक्षणम्' इत्युच्यते । एतल्लक्षणमारभ्य चतुर्दश ( १४ ) लक्षणानि सोन्दडोपाध्यायाभिमत-व्यधिकरणधर्मावच्छिन्नाभावा-निमायकाणि, 'चतुर्दशलक्षणी' संज्ञकानि च भवन्ति, इति बोध्यम् ।

८ अत्र—केवलान्वयिसाध्यकस्थले, ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभः । ( दीधि० २ ) । वह्निमान् धूमादित्यादौ तु—वह्नित्वेन घटाभावः सुलभः, इति विज्ञेयम् ।

९ इदमपि च लक्षणं दीधितिकृता स्वयं कृतम्, इति द्वितीयं 'स्वलक्षणम्' इत्युच्यते, इति बोध्यम् ।

[ घ ] केचित्तु ( चक्रवर्तिनः ),— A 'व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य साध्याभावस्य प्रतियोगितायाः अनवच्छेदकं यत् साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यम् । B हेतुसमानाधिकरणस्य व्याप्यवृत्तेरभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यम् । C हेतुसमानाधिकरणस्य प्रतियोगिव्यधिकरणस्याभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत् साध्यतावच्छेदकम्, तदवच्छिन्नसामानाधिकरण्यं वा, इत्याहुः ।

[ ङ ] A साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभाववत्त्व-कत्वम्, । B यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति, तत्त्वम् ।

[ च ] साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति, तत्त्वम् ।

[ छ ] केचित्तु ( मिश्राः ),—A यावन्तः साध्याभावाः, प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणनिरूपितवृत्तित्वाभावाः, तद्वत्त्वम्; । B या-

---

१ यादृशप्रतियोगितासंबन्धावच्छिन्नप्रकारतावच्छेदकयत्किंचिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः, तदनवच्छेदकावच्छिन्नसामानाधिकरण्यम्, इति पर्यवसितोऽर्थः। (ग० चतु० चक्र०)

२ एतानि त्रीणि लक्षणानि 'चक्रवर्तिलक्षणानि' इत्युच्यन्ते । ( ग० चतु० )

३ साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यानतिरिक्तवृत्ति यद्धर्मविशिष्टसमानाधिकरणसाध्याभावत्वम्, तद्धर्मवत्त्वम्, इति समुदितोऽर्थः । (ग० चतु० पृ० ३०)

४ एते च द्वे 'प्रगल्भलक्षणे' इत्युच्येते । ( ग० चतु० )

५ यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावः, तत्त्वम्, इति समुदितार्थः । ( ग० चतु० पृ० ३१ )

६ इदं च 'विशारदलक्षणम्' इत्युच्यते ।

७ स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्ना यावत्यः प्रतियोगिताः, प्रत्येकं तत्तदवच्छेदकावच्छिन्नतदाश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताक-तत्प्रतियोगितानिरूपकाभावसजातीयाभाववत्त्वम्, इति समुदितार्थः । ( ग० चतु० पृ० ४२ )

८ अत्र—साजात्यं च समासमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण ग्राह्यम् । ( दीधि० २ । पृ० १७ )

९ एतल्लक्षणमारभ्य त्रीणि लक्षणानि 'मिश्रलक्षणानि' इत्युच्यन्ते । ( ग० चतु० पृ० ३५ )

वन्तस्तादृशाः साध्याभावाः, प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते, तद्रूपवत्त्वम्;। C यावन्तस्तादृशाः साध्याभावाः, प्रत्येकं तत्प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते, तद्रूपवत्त्वं वा, इत्याहुः।

[ज] परे तु,—वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाभावाः, तद्वत्त्वम्[1], इत्याहुः।

[झ] अन्येतु,—वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावाः, तद्वत्त्वम्[2], इत्याहुः।

[ञ] साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक-व्याप्यवृत्ति-स्वसमानाधिकरण-यावदभावाधिकरणवृत्तित्वाभावा वृत्तिमद्वृत्तयो यावन्तः, तद्वत्त्वम्[3]। ( दीधि० २। चतुर्दशल० पृ० १४–२१)। यथा—अन्वयव्यतिरेकिणि ( पर्वतो वह्निमान्[4] धूमादित्यादौ ), केवलान्वयिसाध्यकस्थले ( इदं वाच्यं ज्ञेयत्वादित्यादौ[5] ), केवलव्यतिरेकिणि ( पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादौ ), च सद्धेतौ धूमादिहेतुनिष्ठा वह्न्यादिसाध्यनिरूपिता व्याप्तिः। ( स्व० )

( २ ) सिद्धान्त[6]सिद्धाऽन्वयव्याप्तिस्तु, —[क] व्यापकस्य व्याप्याधिकरण उपाध्यभावविशिष्टः संबन्धः।

---

१ इदं लक्षणं च 'कूटाघटितलक्षणम्' इत्युच्यते। ( ग० चतु० पृ० ४७ )

२ इदं लक्षणं तु 'कूटघटितलक्षणम्' इत्युच्यते। ( ग० चतु० पृ० ५२ )

३ इदं लक्षणं तु 'पुच्छलक्षणम्' इत्युच्यते, इति विज्ञेयम्।

४ अत्र—घटत्वावच्छिन्नप्रतियोगिताकवह्न्यभाव-वह्नित्वावच्छिन्नप्रतियोगिताकघटाभाव-घटत्वाद्यवच्छिन्नप्रतियोगिताकवृत्तित्वाभावाद्यात्मकान् व्यधिकरणधर्मावच्छिन्नाभावान् यथायथमादाय पूर्वोक्तानां सर्वेषां ( १४ ) लक्षणानां समन्वयः कर्तव्यः।

५ अत्र च—समवायित्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभाव-ज्ञेयत्वत्वावच्छिन्नप्रतियोगिताकवाच्यत्वाभाव-घटत्वाद्यवच्छिन्नप्रतियोगिताकवृत्तित्वाभावाद्यात्मकान् व्यधिकरणधर्मावच्छिन्नाभावान् यथायथमादाय पूर्वोक्तानां सर्वेषां ( १४ ) लक्षणानां समन्वयः कर्तव्यः अत्राधिकं तु गदाधर्यादौ चतुर्दशलक्षण्यां द्रष्टव्यम्; विस्तरभयान्नात्र दर्शितम्, इति विरम्यते।

६ इयं सिद्धान्तसिद्धा व्याप्तिश्च हेतुनिष्ठा साध्यनिरूपिता च 'अन्वयव्याप्तिः' इत्युच्यते, इति विज्ञेयम् ( न्या० बो० २। पृ० १४ )

[ ख ] अव्यभिचरितसाध्यसामानाधिकरण्यम् । (त० कौ० २ । पृ० ११)
[ ग ] साधनत्वाभिमतसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकसाध्यकत्वम्² । ( न्या० सि० दी० पृ० ९९ ) । यथा—वह्निमान् धूमात्, इदं वाच्यं ज्ञेयत्वादित्यादौ सद्धेतौ व्याप्तिः ।
[ घ ] A प्रतियोग्यसमानाधिकरण-यत्समानाधिकरणात्यन्ताभाव-प्रति-

१ अस्ति चेदं 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादिसद्धेतौ; 'यत्र यत्र धूमस्तत्र वह्निः' इति नियमस्य सत्त्वात् । नास्ति चेदं 'पर्वतो धूमवान् वह्निमत्त्वात्' इत्याद्यसद्धेतौ; 'यत्र यत्र वह्निस्तत्र तत्र धूमः' इति नियमस्यासत्त्वात्; तप्तायःपिण्डे वह्निसत्त्वेऽपि धूमासत्त्वात् । ( त० कौ० २ । पृ० ११ )

२ अस्य समन्वयः क्रियते—वह्निमान्धूमादित्यादौ-साधनत्वाभिमतः ( धूमः ), तस्य समानाधिकरणः ( तस्याधिकरणे पर्वते वर्तमानः ), अन्योन्याभावः ( न हि वह्निमद्भेदो भवति, किं तु—घटादिमद्भेद एव ), तस्य प्रतियोगिताया अवच्छेदको घटादिरेव, अनवच्छेदकस्तु साध्यात्मको वह्निः, तत्कत्वं ( तत्सामानाधिकरण्यम् ) धूमेऽस्ति, इति । 'इदं वाच्यं ज्ञेयत्वात्' इत्यादि-केवलान्वयिसद्धेतुस्थले तु,—ज्ञेयत्वाधिकरणं ( घटः ), तत्र वर्तमानोऽन्योऽन्याभावः ( न हि वाच्यत्ववद्भेदः, किं तु—पटत्ववद्भेदः ), तस्य प्रतियोगिताया अवच्छेदकं ( पटत्वम् ), अनवच्छेदकं तु साध्यात्मकं वाच्यत्वम्, तत्कत्वं ज्ञेयत्वेऽस्ति, इति ।

३ पर्यवसितार्थश्च [ क ] A प्रतियोग्यसमानाधिकरण-यद्रूपविशिष्टसमानाधिकरणात्यन्ताभाव-प्रतियोगितानवच्छेदको * यो धर्मः, तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं †; तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिः । B विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति, साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिः । ( दीधि० २ । पृ० ३२—४३ ) । [ ख ] यादृशप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकताकाधिकरणतावदन्यत्वं हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावतः, तन्निरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताशून्यं यत् साध्यतावच्छेदकम्, तदवच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तिवृत्ति यत् हेतुतावच्छेदकं तद्वत्त्वम् । (वै० वि० ३।१।१४ ।

* दण्ड्यादौ साध्ये परंपरासंबन्धं दण्डत्वादिकमेव साध्यतावच्छेदकम्, अतः, ( तत्तद्दण्ड्यभावमादाय ) नाव्याप्तिः । ( दीधि० २ । पृ० ३२ )

† स्वावच्छिन्नत्व-साध्यतावच्छेदकसंबन्धावच्छिन्नत्व-एतदुभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मः, तदवच्छिन्नसामानाधिकरण्यम्, इति फलितोऽर्थः । (ग० सिद्धा०)

योगितावच्छेदकावच्छिन्नं यन्न भवति, तेन समं तस्य सामानाधिकरण्यम् । यद्वा—B प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावा-प्रतियोगि-ना सामानाधिकरण्यम् । C यत्समानाधिकरणान्योऽन्याभावप्रतियोगि यद्भिन्न भवति, तेन समं तस्य सामानाधिकरण्यं वा । D स्वसमानाधिकरणान्योन्याभावाप्रतियोगि यद्वत्, तत्कत्वं वा । E यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत्, तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत्, तेन समं सामानाधिकरण्यम् । F यद्वा—याव-द्यत्समानाधिकरणात्यन्ताभावाप्रतियोगिप्रतियोगिकात्यन्ताभावा-सामानाधि-

---

पृ० १५२) ( मु० २ ) । [ग] यद्धर्मविशिष्टानधिकरणत्वं हेत्वधिकरणस्य, तद्धर्मभिन्न-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यम् । (दि० २ । व्याप्तिनि० )

४ अभावत्वं च, 'इदमिह नास्ति, इदमिदं न भवति' इति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेषः । अतः—न, अभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः । ( दीधि० २ । पृ० ४१ )

१ अवच्छेदकत्वमिह पारिभाषिकमेव प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपं माधम् । तच्च, [ क ] तदवच्छिन्नप्रतियोगिताकाभाववदसंबद्धस्वविशिष्टसामान्यकत्वम् । [ ख ] स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदक-तत्कत्वम् । [ ग ] स्वविशिष्टसंबन्धि-निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वम् । (दीधि० २ । अवच्छेदकनिरु० पृ० ४२) अत्र विस्तरस्तु गदाधर्यादौ द्रष्टव्यः ।

२ अत्र—'यन्न भवति' इत्येतत्पर्यन्तेन ग्रन्थेन यत्पदार्थस्य व्यापकत्वं प्रोच्यते; तेन, व्यापक-सामानाधिकरण्यं व्याप्तिः, इति फलितम् । एवम्—उत्तरत्रापि ज्ञेयम् ।

३ इयमेव "*सर्वोपसंहारप्रवृत्तव्याप्तिः' इत्युच्यते ।

४ अन्यवृत्तिवह्नितद्धेतोरन्यवृत्तिधूमवन्निष्ठात्यन्ताभावा-न्योन्याभाव-प्रतियोगित्वात् व्यधिकरण-वह्निधूमयोर्न व्याप्तिः, किं तु—तत्तद्धूमस्य समानाधिकरणतत्तद्वह्निना । ( चि० २ । पृ० ६—७ )

५ समुदायार्थस्तु,—साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकाः, तद्धर्मावच्छिन्नसामानाधिकरण्यम्, इति । एतदेव, यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यम् 'अनौपाधिकत्वम्' गीयते । ( चि० २ । पृ० ८ )

---

* तदर्थस्तु, सकलहेत्वधिकरणान्तर्भावेन साध्यसामानाधिकरण्यव्याप्तिः, इति । ( ग० व्या० )

करण्यं यस्य, तस्य तदेवानौपाधिकत्वरूपा व्याप्तिः। (चिं० २। पृ० ६—८)।[G] यद्वा—यत्संबन्धितावच्छेदकरूपवत्त्वं यस्य, तस्य सा व्याप्तिः। (चिं० २। पृ० ८),। यथा—वह्निसाध्यकधूमहेतुकस्थले वह्निमान् धूमादित्यादौ—'यत्र धूमस्तत्राग्निः' इति साहचर्यनियमो व्याप्तिः। (त० भा०) (मू० म० १) (भा० प०) (गौ० वृ० १। ४८) (मु० २) (त० सं०), इत्यलं विस्तरेण।

---

१ समुदितार्थश्च,—साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापक-स्व-सामानाधिकरण्यसामान्याभाव-कत्वम्, इति। (दीधि० २। पृ० ५७)

२ तथा हि—धूमस्य वह्निसंबन्धित्वे धूमत्वमवच्छेदकम्; धूममात्रस्य वह्निसंबन्धित्वात् (लक्षणसमन्वयः)। वह्नेस्तु धूमसंबन्धे न वह्नित्वमवच्छेदकम्; वह्नेर्धूमासंबन्धिनि (तप्तायःपिण्डे) गतत्वात् (नातिव्याप्तिः)। (चिं० २। पृ० ८)

३ अत्र—'यदन्यूनवृत्ति साध्यम्, तत्त्वम्; स्वव्यापकसाध्यसंबन्धित्वपर्यवसन्नम्' इति लघुभूतः परिष्कारो विज्ञेयः। (दीधि० २। पृ० ६१)। विशेषस्तु जागदीशी-भवानन्दी-गदाधर्यादौ विज्ञेयः, इत्यलं विस्तरेण।

४ अत्र नियमः—"व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम्। एवं परीक्षिता व्याप्तिः स्फुटीभवति तत्त्वतः" इति।

समुदितवाक्ययोजनामाह—'यत्र धूमस्तत्राग्निः' इत्यत्र—'इति' पदं तादृशवाक्यपरम्; तत्तात्पर्यग्राहकं यत्रेत्यादि (वाक्यम्)। 'इति' पदार्थस्य च बोध्यतासंबन्धेन साहचर्यनियमेऽन्वयः, इति। (वाक्य० २। पृ० १३)

५ तदर्थश्च, [क] साहचर्यं (सामानाधिकरण्यम्), तस्य नियमः *; हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम्, इत्यर्थः †। (त० दी० २। पृ० २०) [ख] नियतसाहचर्यं व्याप्तिः। नियतत्वं व्यापकत्वम्; साहचर्यं सामाना-

---

* तथा च—हेतौ नियतसामानाधिकरण्यम्; तच्च साधनव्यापकसामानाधिकरण्यम्। (दीधि० २) (प्र० प्र०)। एवं च—हेतोर्व्यापकं यत्साध्यं तत्सामानाधिकरण्यं हेतौ व्याप्तिः, इति सुगमः पर्यवसितोऽर्थः। यथा—पर्वतो वह्निमान् धूमादित्यादौ,—धूमस्य व्यापको वह्निः, तत्सामानाधिकरण्यं धूमे वर्तते, इति लक्षणसमन्वयो बोध्यः। (स्व०)

† वह्निमान्धूमादित्यादौ (सद्धेतौ),—धूमसामानाधिकरणो योऽत्यन्ताभावः (घटात्यन्ताभावः), तदप्रतियोगी (वह्निः), तत्सामानाधिकरण्यं धूमेऽस्ति, इति कृत्वा लक्षणसमन्वयः। धूमवान्वह्नेरित्यादौ (असद्धेतौ) तु,—धूमसामान्याभावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोग्येव धूमः, इति नातिव्याप्तिः। (नील० २। पृ० २०)

व्याप्यव्यापकयोर्वैयधिकरण्येऽपि क्वचिद्व्याप्तिः, यथा—उपरि सविता भूमेरालोकवत्त्वादित्यादावनुपपत्त्या स्वीक्रियते । ( म० प्र० ४ । पृ० ६९)

**व्याप्यत्वम्**—१[ क ] व्याप्त्याश्रयत्वम् । ( मु० २ ) यथा—"वह्निव्याप्यो धूमः" इत्यादौ धूमस्य व्याप्यत्वम् । ( स्व० )

---

धिकरण्यम्; तथा च—धूमनियतवह्निसामानाधिकरण्यम्, इति । ( न्या० बो० २ । पृ० १४ ) [ ग ] साहचर्यं साध्यनिष्ठहेतुसामानाधिकरण्यम्; तन्नियमस्तन्मात्रसत्त्वम्; तद्विरोध्यसत्त्वम्, इति यावत् । ...........तथा च—साध्यनिष्ठहेतुव्यापकत्वं स्वाश्रयसामानाधिकरण्यसंबन्धेन हेतुसंबद्धम्; व्यापकताश्रयसामानाधिकरण्यम्, इति पर्यवसितोऽर्थः । ( वाक्य० २ । पृ० १३ ) [ घ ] वेदान्तिनस्तु,—साहचर्यं हेतोः साध्येन संबन्धमात्रम्, तस्य नियमो नियतत्वम्, अव्यभिचरितसंबन्ध इत्यर्थः, इत्याहुः । ( प्र० च० पृ० २९ ) [ ङ ] टीकाकृतो वेदेशतीर्थचरणास्तु,—साहचर्यं स्वदेशकालविशेषगतस्य हेतोः स्वदेशकालविशेषगतेन साध्येन संबन्ध-*मात्रम्, नियमोऽव्यभिचारः । तथा च—अव्यभिचरितसाध्यसंबन्धो व्याप्तिः, इत्युक्तं भवति, इत्याहुः । ( प्र० प० टी० वेदेश० पृ० ३० )

१ अत्रेदं बोध्यम्—( १ ) कयोश्चित् ( हेतुसाध्ययोः ) समानदेशकालयोर्व्याप्तिः । यथा—रसस्य रूपेण । ( २ ) कयोश्चित्समानदेशत्वेपि भिन्नकालयोः । यथा—धूमस्याग्निना । ( ३ ) कयोश्चित्समानकालत्वेऽपि भिन्नदेशयोः । यथा—कृत्तिकोदयस्य रोहिण्युदयआसत्त्या (?) । ( ४ ) कयोश्चिद्भिन्नदेशकालयोः । यथा—अधोदेशे नदीपूरस्य, ऊर्ध्वदेशे वृष्ट्या । (५) कस्यचित्कादाचित्कस्य समानदेशत्वेऽपि सार्वकालीनेन । यथा—पतनस्य गुरुत्वेन । ( ६ ) कस्यचित्समानदेशत्वेऽपि सार्वकालिकस्य कादाचित्केन । यथा—शरीरत्वस्य विनाशित्वेन । ( ७ ) कस्यचित्प्रदेशवर्तिनो व्याप्यवर्तिना । यथा—संयोगस्य द्रव्यत्वेन । ( ८ ) कस्यचिद्व्याप्यवर्तिनः प्रदेशवर्तिना । यथा—रूपस्य संयोगेन । ( ९ )—कयोश्चिदेकावर्तिनोर्व्याप्यवर्तिनोरप्यवयवभेदेन । यथा—तुलोन्नमनावनमनयोः, इत्यादि । ( प्र० प० पृ० १३—१४ ) -

तथा—व्याप्तिस्मरणसहकृतलिङ्गस्य सम्यग्ज्ञानम्, सम्यग्ज्ञातं वा लिङ्गम्, व्याप्तिप्रकारानुसारेण समुचितदेशादौ लिङ्गिप्रमां जनयत् 'अनुमानम्' इत्युक्तं भवति ।

अनुमानस्य द्वयं सामर्थ्यम्,—व्याप्तिः, समुचितदेशादौ सिद्धिश्च; न तु पक्षधर्मतानियमः । ( प्र० प० पृ० १४ )

व्याप्यस्य पक्षधर्मत्वं नाम समुचितदेशादिवृत्तित्वम् । ( प्र० च० पृ० १९ )

२ अत्रार्थे विग्रहः—'व्याप्यते' इति व्याप्यम् । ( वि, आप-ण्यत् ), तस्य भावो व्याप्यत्वम् ( व्याप्तिकर्मत्वम् ), इति ।

---

* न तु सामानाधिकरण्यम्; अधोदेशनदीपूरादावव्याप्तेः । ( प्र० प० टी० वेदेश० पृ० ३० )

[ ख ] यत्सामानाधिकरण्यावच्छेदकावच्छिन्नं यस्य स्वरूपं, तत्तस्य व्याप्यम्। यथा—वह्निसामानाधिकरण्यं हि धूमे धूमत्वेनावच्छिद्यते, सोपाधौ तूपाधिर्नो। ( चि० २ । पृ० ८ )

[ ग ] यत्समानाधिकरणान्योन्याभावप्रतियोगिता येनावच्छिद्यते, तत् तस्य व्याप्यम्। ( न्या० सि० दी० पृ० ९६ ) यथा—अयोगोलकाद्यन्तर्भावेन वह्निसमानाधिकरणान्योऽन्याभावप्रतियोगिता धूमेनावच्छिद्यते, इति धूमो वह्नेर्व्याप्यः। ( स्व० )

[ घ ] व्यभिचारित्वाभावः। यथा—"सोपाधिको व्याप्यत्वासिद्धः" इत्यादौ 'व्याप्यत्व'शब्दस्यार्थः। ( न्या०बो० ) । २ [१] न्यूनवृत्तित्वम्। यथा—"द्रव्यत्वव्याप्या जातिः" इत्यादौ 'व्याप्यत्व'शब्दस्यार्थः। [ २ ] अल्पदेशवृत्तित्वम्। यथा—द्रव्यत्वस्य सत्तापेक्षया व्याप्यत्वम् (अपरत्वम्)। ( मु० १ । पृ० ३७ )

**व्याप्यत्वासिद्धः**—( हेत्वाभासः ) [ क ] यत्र व्याप्तिर्नावगम्यते, सः। ( त० भा० पृ० ४७ )

[ ख ] साध्यव्याप्यतावच्छेदकरहितो हेतुः। यथा—पर्वतो वह्निमान्

१ उपपत्तिः, युक्तिः, लिङ्गम्, व्याप्यम्, ( व्याप्तम् ), इति पर्यायः। ( प्र० प० पृ० ११ ) ( टी० पृ० २९ ) ( प्र० च० पृ० १९ )

२ अत एव,—साधनतावच्छेदकभिन्नेन येन साधनताभिमते साध्यसंबन्धोऽवच्छिद्यते, स एव तत्र साधने विशेषणमुपाधिः, इति वदन्ति। अत एव च—साधनाव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वं लक्षणं ध्रुवम्। ( चि० २ । पृ० ८ )

३ स चासिद्धप्रभेदः, इति बोध्यम्। लक्षणं तु वक्ष्यमाणा व्याप्यत्वासिद्धिरेव।

४ व्याप्तेरग्रहो द्विधा संभवति; तदुच्यते—"सत्या एव क्वचिद्व्याप्तेरग्रहात्कुत्रचित्पुनः। व्याप्तेरभावादित्यस्य द्वैविध्यं तद्विदो विदुः" इति। ( त० व० २।३।४४ )

५ अत्र प्रसक्तत इदं विज्ञेयम्—'स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटित-*धर्मस्यैव व्याप्यतावच्छेदकत्वम्' इति नियमः। अत एव, केषांचिन्मते—वह्निमान्नीलधूमादित्यादौ धूमत्वस्य व्याप्यतावच्छेदकत्वसंभवेन तद्घटितनीलधूमत्वं ( गुरुतया ) न व्याप्यतावच्छेदकम्। ( दीधि० २ । पृ० ५९ ) ( मु० २ । पृ० १६२ ) शिष्टं तु 'व्याप्यत्वासिद्धि' शब्दव्याख्याने द्रष्टव्यम्।

* अत्र—धर्मे तदघटितत्वं च तदविषयकप्रतीतिविषयत्वम्। ( दीधि० २ । पृ० ५९ )

काञ्चनमयधूमादित्यादौ,—हेतुर्व्याप्यत्वासिद्धः[1] । ( प्र० प्र० ) ( त० कौ० २ । पृ० १९ )

व्याप्यत्वासिद्धं विभजते—[2]व्याप्यत्वासिद्धो द्विविधः[3],—साध्येनासहचरितः, सोपाधिकसाध्यसंबन्धश्च । प्रथमो यथा—'यत्सत्तत्क्षणिकं यथा घनः; संश्च विवादास्पदीभूतः शब्दादिः' इति[4] । द्वितीयो यथा—'स श्यामो मैत्रीतनयत्वात्, परिदृश्यमानमैत्रीतनयस्तोमवत्' इत्यत्र 'मैत्रीतनयत्वात्' इति हेतुर्व्याप्यत्वासिद्धः[5] । यथा वा—पर्वतो धूमवान् वह्निमत्त्वादित्यत्र वह्निमत्त्वं

१ अत्र च—व्याप्यतावच्छेदकत्वेनाभिमतं काञ्चनमयत्वम्, तत् धूमे नास्ति, इति धूमो हेतुर्व्याप्यत्वासिद्धः ।
एतज्ज्ञानं च परामर्शप्रतिबन्धकम् *; 'धूमे काञ्चनमयत्वं नास्ति' इति ज्ञाने सति 'वह्निव्याप्यकाञ्चनमयधूमवान् पर्वतः' इति परामर्शासंभवात्; एतस्य ( परामर्शस्य ) धूमे काञ्चनमयत्वसंबन्धावगाहित्वात्, इति । ( त० कौ० २ । पृ० १५ )

२ द्वैविध्यमेव प्रकारान्तरेणोदाहरति—व्याप्यत्वासिद्धस्तु द्विधा,—एको व्याप्तिग्राहकप्रमाणाभावमात्रात्, अपरस्तूपाधिसद्भावात् । तत्र प्रथमो यथा—यत्सत्तत्क्षणिकं यथा प्रदीपादि । द्वितीयो यथा—'क्रत्वन्तर्वर्तिनी हिंसा † अधर्मः, हिंसात्वात्क्रतुबाह्यहिंसावत्' इति ( त० भा० ) ( प्र० प० ) ( प्र० च० पृ० १९ )

३ [ १ ] अत्रार्थे 'व्याप्यत्वासिद्ध'शब्दस्य समन्वयः क्रियते—'व्याप्यत्वस्यासिद्धिर्यस्मात्' इति व्युत्पत्त्योपाधिरेव व्याप्यत्वासिद्धिस्तद्वान्, इति [ २ ] 'अयं ( सोपाधिकसाध्यसंबन्धो हेतुः ) हि अनैकान्तिकोऽपि' इति मतान्तरम् । ( प्र० प्र० )

४ अत्र हि—शब्दादिः पक्षः, तत्र क्षणिकत्वं साध्यम्, सत्त्वं हेतुः । न च, अस्य हेतोः क्षणिकत्वेन सह व्याप्तौ प्रमाणमस्ति, इति विज्ञेयम् । ( त० भा० हेत्वा० पृ० ४७ )

५ अत्र—मैत्रीतनयत्वेन श्यामत्वं साध्यम् । तेन,—मैत्रीतनयत्वं श्यामत्वे न प्रयोजकम्; किंतु—शाकाद्याहारपरिणाम एव, प्रयोजकश्च 'उपाधिः' इत्युच्यते । अतः—मैत्रीतनयत्वस्य श्यामत्वेन संबन्धे शाकाद्याहारपरिणाम उपाधिः; यथा—अग्नेर्धूमसंबन्धे आर्द्रेन्धनसंयोगः । अतः सोपाधिसंबन्धात् व्याप्तिर्नास्ति, इति । ( त०भा०हेत्वा०पृ० ४७ )

६ अत्रार्द्रेन्धनसंयोग ‡ उपाधिः, व्यभिचारितासंबन्धेन तद्विशिष्टं वह्निमत्त्वं व्याप्यत्वासि-

* तथा च—अनुमितिप्रतिबन्धकताघटितं हेत्वाभाससामान्यलक्षणमसिद्धहेतौ संपद्यते, इति भावः ।

† अत्र निषिद्धत्वमुपाधिः । ( त० भा० )

‡ भवति चार्द्रेन्धनं साध्यस्य ( धूमस्य ) व्यापकम्, साधनस्य ( वह्नेः ) अव्यापकं च, इति । ( प्र० प्र० ) ( त० सं० )

व्याप्यत्वासिद्धम् । ( त० सं० ) ( त० भा० २ । पृ० ४७ ) B वेदान्तिनस्तूदाजह्रुः—व्याप्यत्वासिद्धो द्विविधः,—साध्यसंबन्धरहितः, सोपाधिकसंबन्धश्च । तत्राद्यो यथा—'[1]सर्वं क्षणिकं सत्त्वात्' इति । द्वितीयो यथा—'[2]वैधी हिंसा पापसाधनं हिंसात्वात् ब्राह्मणहिंसावत्' इति । ( प्र० च० पृ० ३१ )

**व्याप्यत्वासिद्धिः**—( हेत्वाभासः; हेतुदोषः ) [ १ ] [ क ] आश्रयासिद्धि-स्वरूपासिद्धि-एतदुभयभेदद्वयविशिष्टाऽसिद्धिः । ( म० प्र० २ । पृ० २७ ) यथा—वह्निसाध्यकधूलिपटले धूमनिष्ठव्याप्यभावो व्याप्यत्वासिद्धिः। ( न्या० म० २ । पृ० २१ )

[ ख ] सविषयवृत्ति-प्रकृतसाध्यसाधनग्रहविरोधितानवच्छेदक-प्रकृतपक्षप्रकृतसाधनवैशिष्ट्यग्रहविरोधितावच्छेदकरूपशून्यस्य ज्ञानस्य विषयो-

---

त्वम्, इति भावः । उपाधिस्वज्ञानेन * व्यभिचारानुमित्या व्याप्तिग्रहप्रतिबन्धः फलम् । ( वाक्य० २ । पृ० १८ )
अत्रानुमानप्रकारश्च,—'वह्निर्धूमव्यभिचारी, धूमव्यापकार्द्रेन्धनसंयोगव्यभिचारित्वाद्घटत्वादिवत्, यो यद्व्यापकव्यभिचारी सोऽपि तद्व्यभिचारी' इति बोध्यः । ( न्या० बो० २ । १८ ) ततश्च—'पक्षस्यैव विपक्षत्वप्राप्त्या तत्र विद्यमानो हेतुरनैकान्तिकोऽपि भवति' इति मतान्तरम् । ( प्र० च० पृ० ३२ ) ( म० प्र० )

१ अत्र—सर्वस्य पक्षत्वेन पक्षातिरिक्तसपक्षाभावात् साध्यसंबन्धाभावो ज्ञेयः । ( प्र० च० पृ० ३१ )

२ अत्र—हिंसात्व-पापसाधनत्वयोः संबन्धे निषिद्धत्वमुपाधिः । ( प्र० च० पृ० ३१ )

---

* अत्रायमर्थः—धूमव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत्,—धूमे आर्द्रेन्धनसंयोगव्याप्यत्वं ( तुल्यवित्तिवेद्यतया ) गृह्यते । एवम्—वह्नेरव्यापकत्वमार्द्रेन्धनसंयोगे गृहीतं चेत्,—वह्नौ तदव्याप्यत्वं गृह्यते, तदेव व्यभिचरितत्वम् । अर्थात्—उपाधिव्यभिचरितत्वं साधने गृहीतं चेत्,—उपाधिभूतार्द्रेन्धनसंयोगव्याप्यधूमव्यभिचरितत्वं गृह्यत एव, इति । एवं च प्रकृतानुमानहेतुभूतपक्षे ( वह्नौ ) साध्यव्यभिचारोऽव्यापकतया दूषकत्वमुपाधेः फलम् । तथा च—धूमाभाववद्वृत्तित्वाभावरूपे धूमव्यभिचारे गृहीते, वह्नौ धूमाभाववद्वृत्तित्वरूपव्याप्तिज्ञानप्रतिबन्धः फलम् । न च, व्याप्यत्वासिद्धेर्व्यभिचाराभेद इति वाच्यम्; धूमाभाववद्वृत्तित्वाभावाभावत्वेन व्याप्यत्वासिद्धित्वम्; धूमाभाववद्वृत्तित्वत्वेन व्यभिचारत्वम्, इति भेदात् । ( न्या० बो० २ । पृ० १८—१९ ) । शिष्टं तु 'उपाधि' शब्दव्याख्याने द्रष्टव्यम् ।

ऽसिद्धिः । ( दीधि० २ । पृ० २१७ ) । यथा—'पर्वतो वह्निमान् काञ्चनमयधूमात्' इत्यादौ,—धूमनिष्ठः काञ्चनमयत्वाभावो व्याप्यत्वासिद्धिः । [ २ ] प्राचीनास्तु,—[ क ] व्यर्थविशेषणघटितं हेतुतावच्छेदकम् । (वै० वि० ३।१।१५।पृ० १९७ ) यथा—पर्वतो वह्निमान् प्रमेयधूमादित्यादौ,—प्रमेयधूमत्वादिकं प्रमेयत्वरूपव्यर्थविशेषणघटिततया व्याप्यत्वासिद्धिः । ( स्व० )

[ ख ] हेतुतावच्छेदके व्याप्यतानवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिः । यथा—पर्वतो वह्निमान्नीलधूमात्, इत्यादौ,—नीलधूमत्वस्य गुरुतया व्याप्यतानवच्छेदकत्वं व्याप्यत्वासिद्धिः, इति वदन्ति । व्याप्यत्वासिद्धिश्च साध्याप्रसिद्धि-साधनाप्रसिद्धि (हेत्वप्रसिद्धि)-अव्यभिचरितसामानाधिकर-

---

१ स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितमित्यर्थः । ( दीधि० २ । पृ० ५९ )

२ इदं च 'हेत्वसिद्धिः' इत्युच्यते । हेत्वसिद्धिस्तु साधनाप्रसिद्धिरेव, इति विज्ञेयम् ।

३ तल्लक्षणं तु,—साध्यसंबन्धितावच्छेदकत्वप्रकारक-हेतुतावच्छेदकविशेष्यक-महत्त्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम् । ( ल० व० )

४ अयमत्र प्राचामभिप्रायः—[ क ] 'नीलधूमत्वं हि समानाधिकरण-लघुधूमत्वघटितम्' इति धूमत्वमेव व्याप्यतावच्छेदकम्, न तु नीलधूमत्वम् । अतस्तदवच्छिन्नव्याप्तेरसिद्धेः इति । ( म० प्र० २ । पृ० २७–२८ ) [ ख ] नीलधूमत्वादेश्च व्याप्यतानवच्छेदकत्वम्; समानाधिकरणं संभवदवच्छेदकान्तरमपेक्ष्य गुरुत्वात्, इति । ( दीधि० २ । पृ० २१८ ) [ ग ] व्याप्तिर्हि साध्यसंबन्धितावच्छेदकरूपा; गुरुधर्मश्च साध्यसंबन्धितानवच्छेदकः । अतो नीलधूमत्वादेः साध्यसंबन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वम्, इति ' ( गौ० वृ० १।४८ )

५ अत्रायमभिप्रायः—गुरुधर्मस्य हेतुतावच्छेदकत्वस्थले सर्वत्र 'पशुमान् सास्नादिमतः' इत्यादावपि प्राचीनैर्व्याप्यत्वासिद्धिर्नाङ्गीक्रियते, अपितु—स्वसमानाधिकरण-व्याप्यतावच्छेदक-धर्मान्तरघटितस्थल एव, इति । ( राम० २ । पृ० १६२ )

६ अत्र—नव्यास्त्वेतन्नाङ्गीकुर्वन्ति । तथा हि—व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः; पुरुषस्त्वधिकेन* निगृह्यते, इति । ( दीधि० ) ( दि० २ । पृ० १६२ )

---

* अत्रायं भावः—हेतुतावच्छेदकांशेऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वग्राह्यव्याप्तिज्ञानस्यानुमितिकारणत्वे,—तत्र स्वरूपसंबन्धरूपावच्छेदकत्वाभावग्रहस्य ग्राह्याभावानवगाहितया तादृशव्याप्तिज्ञानाविरोधित्वादत्रत्यव्याप्यत्वासिद्धेर्न हेत्वाभासलक्षणाक्रान्तत्वम्, इति 'अधिक' नामकनिग्रहस्थानत्वमवश्याभ्युपेयम्, इति । ( दि० २ । पृ० १६२ )

ण्याभाव-इत्यादिभेदेनानेकविधा । ( दीधि० २ । पृ० २१८ ) ( गौ० वृ० १।४८ ) ( मु० ) ( दि० २ । पृ० ११२ ) ( वै० वि० ३।१।१९ ) । तथाच—साध्याप्रसिद्धि-हेत्वप्रसिद्धि-साधनाप्रसिद्धि-व्याप्तिविशिष्टपक्षधर्मतादिविरहादयश्च व्याप्यत्वासिद्धिप्रभेदा एव, नातिरिक्ताः । ( दीधि० २ । पृ० २१७–२१८ ) ( न्या० म० २ । पृ० २१ ) । व्याप्यत्वासिद्धिव्याप्योऽपि व्याप्यत्वासिद्धिरेव ( न पृथग्भूतः ), इति । शिष्टं तु 'हेत्वाभास'शब्दव्याख्याने दृश्यम् ।

**व्याप्यवृत्तित्वम्**—[ क ] प्राचीनमते,—स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । ( दीधि० ) यथा—घटत्व-द्रव्यत्वादीनां व्याप्यवृत्तित्वम् । ( स्व० ) [ ख ] नवीनमते तु,—A अनवच्छिन्नाधारतावत्त्वम् । ( ग० पक्ष० ) [ ग ] B निरवच्छिन्नवृत्तिकत्वम् । ( ग० २ । चक्र० ) यथा—रूपस्य व्याप्यवृत्तित्वम् ।

**व्यावर्तकम्**—१ आश्रयाणां परस्परभेदानुमितिजनकम् । यथा—विशेषस्तत्परमाणूनां [1]व्यावर्तकः । ( वाक्य० पृ० २२ ) यथा वा—सास्नादिमत्त्वं महिष्यादेर्व्यावर्तकम् । ( स्व० ) । २ क्वचित्—विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगि; । एतच्च व्यावर्तकं द्विविधम्,—विशेषणम्, उपलक्षणं चेति । तत्राद्यं यथा—पुरुषादौ वर्तमानकालावच्छेदेन विद्यमानो दण्डादिः । द्वितीयं यथा—जटाभिस्तापस इत्यादौ,—तापसादेः कालान्तरीणजटादिकं व्यावर्तकम् । ( ग० व्यु० का० ३ । पृ० ९१ ) शिष्टं तु, 'तृतीया' 'विशेषण' 'उपलक्षण' शब्दव्याख्यानेषु दृश्यम् ।

**व्यावृत्तत्वम्**—१ [ १ ] अवृत्तित्वम् । यथा—"यस्तूभयस्माद्व्यावृत्तः स त्वसाधारणो मतः" ( भा० प० श्लो० ७४ ) इत्यादौ,—'सपक्षविपक्ष-

---

१ तथा हि—'अयं पृथिवीपरमाणुरितरपरमाणुभ्यो भिद्यते, एतद्विशेषात्' इत्यनुमाने विशेषस्य हेतुत्वं बोध्यम् । ( वाक्य० पृ० २२ )

२ इतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताविशेषाश्रयः, इति तदर्थः । ( नील० १ । पृ० ४ )

व्यावृत्तो हेतुरसाधारणः,' इत्यादौ च व्यावृत्तत्वमवृत्तित्वम् । [ २ ] विरोधः । यथा—"अनुवृत्तत्व-व्यावृत्तत्वाभ्यां वह्नितदभावोपस्थापकस्य धूमस्य" ( दीधि० ) इत्यादौ—'व्यावृत्तत्व' शब्दस्यार्थो विरोधः । ( ग० सव्य० पृ० ९ ) । २ क्वचित्,–[ १ ] अन्योन्याभावप्रतियोगित्वम् । यथा– 'नराणां क्षत्रियः शूरः, नरेषु वा' इत्यत्र निर्धारणविभक्त्यर्थो व्यावृत्तत्वम् । [२] अत्यन्ताभावप्रतियोगित्वम् । यथा–'नराणां क्षत्रिये शौर्यम्, नरेषु वा' इत्यत्र निर्धारणविभक्त्यर्थो व्यावृत्तत्वम् । ( ग० व्यु० का० ६ । पृ० ११४ ) । ३ इतरभेदानुमितिविशेष्यत्वम् । यथा–'गौरितरेभ्यो व्यावृत्ता' इत्यादौ,–गोर्व्यावृत्तत्वम् । ( स्व० ) यथा वा–"स तु ( विशेषः ) स्वत एव व्यावृत्तः" ( मु० १ । पृ० ३६—३७ ) इत्यादौ,–विशेषपदार्थस्य व्यावृत्तत्वम् । ४ काव्यज्ञास्तु,–निवृत्तत्वम् । ( कुमा० टी० ) यथा–"व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्" ( कुमार० स० २ । श्लो० ३५ ) इत्यादौ, इत्याहुः । ५ कृतवरणत्वम्, इति याज्ञिका आहुः । ( अमरः, ३।१।९२ )

**व्यावृत्तिः**—१ [ १ ] तत्तद्धर्मावच्छिन्नेतरभेदः । ( नील० पृ० ९ ) यथा–"व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिः" ( त० दी० ) इत्यादौ 'व्यावृत्ति'शब्दस्यार्थः । [ २ ] इतरभेदानुमितिः । ( वाक्य० पृ० २ ) यथा–'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इत्यत्र,–'व्यावृत्ति'शब्दस्यार्थः 'पृथिवीतरेभ्यो भिद्यते' इत्यनुमितिः । २ अत्यन्ताभावः । यथा–"यद्व्यावृत्त्या यस्य साधनस्य साध्यं निवर्तते, स धर्मस्तत्र हेतावुपाधिः" ( चि० २ । पृ०२८ ) इत्यादौ,–

---

१ इदं च, अभेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् । ( ग० व्यु० का० ६ । पृ० ११४ ) अत्र विशेषस्तु 'निर्धारण'शब्दव्याख्याने द्रष्टव्यः ।

२ इदं तु भेदान्वयिविधेयसमभिव्याहारस्थले विज्ञेयम् । ( ग० व्यु० का० ६ । पृ० ११४ )

३ तथा हि—'गन्धाभावे इतरव्यापकत्व'ग्रहे सति, 'गन्धवती पृथिवी' इति पक्षधर्मताग्रहे, 'पृथिवी इतरेभ्यो भिद्यते' इत्यनुमितिरुत्पद्यते, सैव व्यावृत्तिः । ( वाक्य० पृ० २ )

'व्यावृत्ति'शब्दस्यार्थोऽत्यन्ताभावः । ३ प्रयोजनम् । यथा—"एतद्विशेषणदानस्य व्यावृत्तिः कथ्यते" इत्यादौ—'व्यावृत्ति'शब्दस्यार्थः प्रयोजनम् । ( स्व० )

**व्यासः**—१ विस्तारः । ( अमरः, ३।२।२२ ) यथा—"समासव्यासयोगतः" इत्यादौ । ( प्र० च० परि० २ । पृ० ९४ ) । २ वैयाकरणास्तु,—[ क. ] समासादिसमानार्थकं विग्रहवाक्यम् । यथा—"राजपुरुष इत्यत्र 'राज्ञः पुरुषः' इति व्यासवाक्यम्" इत्यादौ व्यासशब्दस्यार्थः ।

[ ख ] पदानां समासाभावः, इत्यप्याहुः । ३ सत्यवत्यां पराशराज्जातः, श्रीनारायणस्य सप्तदशोऽवतारविशेषः । ( ब्रह्मवै० पु० अ० ४ ) यथा—"व्यासो नारायणः साक्षात्" इत्यादौ व्यासशब्दस्यार्थः । ४ ततोऽन्यो भागवतो मुनिविशेषः । ५ मानविशेषः ( परिमाणम् ) । ( शब्द० र० ) । ६ लीलावतीकारस्तु,—वृत्तक्षेत्रस्य मध्यस्थरेखा । यथा—"व्यासे भनन्दाग्निहते" इत्यादौ, इत्याह । ७ पौराणिकास्तु,—पुराणपाठको विप्रः, इत्याहुः ।

**व्यासङ्गः**—[ १ ] कार्यान्तरत्यागेनैकपरत्वम् । [२] [ क ] मनसो विषयान्तरानासक्तिः । ( स्व० )

[ ख ] इन्द्रियाणां स्वस्वविषयसंबन्धे सति यत्किंचिदिन्द्रियजन्यज्ञाने सत्यपीन्द्रियान्तरजन्यज्ञानाभावः, इति केचिद्वदन्ति ।

---

१ तदुक्तम्—"ततः सप्तदशे जातः सत्यवत्यां पराशरात् । चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः" इति ( भाग० १।३।२१ )

२ स च, उत्सन्नशाखं प्रनष्टं च वेदं संकलितवान्; अष्टादशपुराणानां* ब्रह्मसूत्राणां च कर्ता, इति विज्ञेयम् ।

३ तथोक्तम्—"प्रह्लादनारदपराशरपुण्डरीकव्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् । रुक्माङ्गदार्जुनवसिष्ठविभीषणादीन् पुण्यानिमान्परमभागवतान् स्मरामि" इति ।

४ तदुक्तम्—"य एवं वाचयेद्विप्रो स ब्रह्मन् ! व्यास उच्यते" इति ।

---

* तदुक्तम्—"अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इति ।

**व्यासज्यवृत्तित्वम्**—[ १ ] स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् । ( ग० २ । चतु० मिश्र० ) यथा—उभयत्वस्य व्यासज्यवृत्तित्वम् । [ २ ] अपेक्षाबुद्धिविशेषविषयत्वम्, अपेक्षाबुद्धिजन्यत्वं वा (स्व०) । यथा—द्वित्व-त्रित्वादीनां व्यासज्यवृत्तित्वम् । (ग० व्यु० का० १)

**व्युत्पत्तिः**—१ विशेषेणोत्पत्तिः । २ शास्त्रजन्यः शब्दार्थज्ञानादिसंपाद्यः संस्कारविशेषः । ३ शब्दानामर्थबोधकशक्तिः । ४ .[ क ] यां बुद्धिमासाद्य पदार्थविशेषबोधः, सा । ( चि० २ । पृ० ११ ) [ ख ] शब्दशक्तिग्रहः । ( नील० ४ । पृ० २९ ) यथा—"व्युत्पित्सुर्बालो 'गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्याश्वत्वविशिष्टे शक्तिः,' इति व्युत्पद्यते" (त० दी० ४) इत्यादौ व्युत्पत्तिः । ५ विग्रहवाक्यम् । यथा—"पदस्यार्थः पदार्थः, इति व्युत्पत्तिः" ( त० दी० १ ) इत्यादौ 'व्युत्पत्ति'शब्दस्यार्थः । ६ व्यवहारः । यथा—लोकव्युत्पत्तिरित्यत्र 'व्युत्पत्ति'शब्दस्यार्थः । ( नील० ) ७ नियमः । यथा—"पदार्थः पदार्थेनैवान्वेति, न तु पदार्थतावच्छेदकेन' इति व्युत्पत्तिः" इत्यादौ 'व्युत्पत्ति'शब्दस्यार्थः । यथा वा—"नव्यमते—'यत्र समभिव्याहृतपदार्थतावच्छेदकफलाश्रयत्वबोधः, तत्र द्वितीया' इति व्युत्पत्तिः" इत्यादौ 'व्युत्पत्ति'शब्दस्यार्थः । ( त० प्र० ४ । पृ० ८४ )

**व्यूहः**—१ निःश्वासादिः । (गौ० वृ० ३।३१) यथा—मतान्तरे, मानुषादिशरीरपरीक्षणे—"गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्" ( गौ० ३।३१ ) इत्यत्र 'व्यूह'शब्दस्यार्थः । २ प्रतिहतस्य परावर्तनम् । (गौ० वृ० ४ । ८७ ) यथा—"अव्यूहाविष्टम्भविभुत्वान्याकाशधर्माः" ( गौ० ४ । ८७ ) इत्यत्र 'व्यूह'शब्दस्यार्थः । ३ वासुदेव-संकर्षण-प्रद्युम्ना-निरुद्ध-संज्ञकश्चतुर्विधो व्यूहः, इति रामानुजीया वदन्ति । ( सर्व० रामा० पृ० १४ ) । ४ समूहः, इति काव्यज्ञा आहुः । ५

---

१ समानाधिकरणभेदप्रतियोगितावच्छेदकत्व-तादात्म्यै-तदुभयसंबन्धेन यत्किंचित्पदार्थविशिष्टत्वम्, इत्यर्थः ।

निर्माणम् । ६ सम्यक् तर्कः । ७ देहः । ८ सैन्यम् । ९ नीतिशास्त्रज्ञास्तु,—युद्धार्थं सैन्यनिवेशविशेषः, इत्याहुः ।

**व्रतम्**—१ भक्षणविशेषनियमः । २ पुण्यसाधनं उपवासादिनियमविशेषः ।

---

## श.

**शक्तम्**—शक्तिमत्; तच्च क्वचित्—१ निरूपकतासंबन्धेन शक्तिमत् । यथा—'घट-पटादि'पदं कम्बुग्रीवादिमदर्थविशेषे शक्तम् । ( न्या० बो० ४ । पृ० १९ ) । २ समर्थः, इति काव्यज्ञा आहुः

**शक्तिः**—१ [ क ] कारणनिष्ठः कार्योत्पादनयोग्यो धर्मविशेषः; स च धर्मः प्रतिबन्धकाभावादिरूपकारणत्वात्मकः । (त० दी० ४ । पृ० ४६) यथा—वह्नौ दाहानुकूला शक्तिः ।

[ ख ] कारणत्वम्; तच्च, स्वस्वव्याप्येतरसकलसंपत्तौ कार्याभावव्यापकाभावप्रतियोगित्वम् । ( चि० २ )

---

१ अत्रोक्तम्—"व्यूहभेदाश्च चत्वारो दण्डो भोगस्तु मण्डलम् । असंहतश्च निर्णीता नीतिसारादिसंमताः ॥ अन्येऽपि प्रकृतिव्यूहाः क्रौञ्चचक्रादयः क्वचित् । तिर्यग्वृत्तिश्च दण्डः स्यात् भोगोऽन्यावृत्तिरेव च ॥ मण्डलं सर्वतो वृत्तिः पृथग्वृत्तिरसंहतः" इति । (शब्दर०) तद्भेदादिकं तु शुक्रनीतिसारादौ ज्ञेयम् ।

२ तथा हि—व्रतं च, सम्यक्संकल्पजनितानुष्ठेयक्रियाविशेषरूपम् । तच्च* प्रवृत्तिनिवृत्त्युभयरूपम् । तत्र—द्रव्यविशेषभोजन-पूजादिकं प्रवृत्तिरूपम् । उपवासादिकं च निवृत्तिरूपम् । तच्च ( निवृत्तिरूपम् ) नित्यम्, नैमित्तिकम्, काम्यं चेति त्रिविधम् । तत्र—नित्यमेकादश्यादिव्रतम् । नैमित्तिकं चान्द्रायणादि व्रतम् । काम्यं तत्तत्तिथ्युपवासादिरूपम् । विविधपुराणोक्ता व्रतभेदास्तु हेमाद्रौ व्रतखण्डे, व्रतार्कादौ च द्रष्टव्याः ।

३ शक्तिश्चात्र वक्ष्यमाणा पदशक्तिर्ग्राह्या ।

४ अयं भावः—प्रतिबन्धकाभावस्य कार्यमात्रं प्रति कारणत्वेन, 'दाहं प्रति तदुत्तेजकाभावविशिष्टमणिः प्रतिबन्धकः, तदभावः कारणम्' इति कार्यकारणभावोऽवश्यं स्वीकार्यः । तथा च—तादृशकारणत्वरूपैव शक्तिः, इति । ( चि० २ । परिशिष्ट० पृ० १४ ) ( नील० पृ० ४६ )

---

* तदुक्तं भविष्यत्पुराणे—"सम्यक्संसाधनं कर्म कर्तव्यमधिकारिणा । निष्कामेण महावीर । काम्यं कामान्वितेन च" इति ।

[ ग ] मीमांसकास्तु ( प्राभाकराः ),—शक्तिः पदार्थान्तरमेव, न तु

---

१ अत्रैवं शक्तिं साधयन्ति प्राभाकराः—[ क ] ईश्वरवत् कार्येणैव* शक्तिरप्यनुमीयते । तथा हि—यादृशादेव करानलसंयोगाद्दाहो जायते, तादृशादेव सति प्रतिबन्धके न जायते; अतः—यदभावात्कार्याभावः, तत् वह्न्यादावभ्युपेयम्; तेन विना तदभावात्, यत्तद्भावानुपपत्तेर्व्यतिरेकमुखेन शक्तिसिद्धिः, इति । ( चि० २ । परिशि० पृ० २४ ) [ ख ] 'इयं शक्तिर्न† द्रव्यात्मिका, गुणादिवृत्तित्वात्;' अत एव—न गुणात्मिका, कर्मात्मिका वा । न च सामान्याद्यन्यतमरूपा; उत्पत्तिमत्त्वे सति विनाशित्वात्' इति शक्तिपक्षः । ( दि० ११ । पृ० २३ ) । एवम्—ज्ञातता, वैशिष्ट्यं सादृश्यं च पदार्थान्तरमूह्यम् । ( न्यां० ली० पृ० २) । नैयायिकास्तन्न सहन्ते; तथा हि—तृणारणिमणिफूत्कारादिव्यक्तीनामानन्त्येन प्रतिव्यक्ति भावहेतुजानन्तशक्तिस्वीकारे गौरवम्; तावदनन्तव्यक्तिजन्यावान्तरवह्निव्यक्तिषु जातित्रयकल्पने लाघवम्, इति तदेव कल्प्यते।(चि० २ । परिशिष्ट—ईश्वरवादः। पृ० ३३–३४ ) ( नी० ल० पृ० ४६ ) इति सहजशक्तिनिरासः ।

एवम्—मीमांसकाभिमता व्रीह्यादिषु प्रोक्षणादिसंस्कारजन्या आधेयशक्तिरपि निरस्ता वेदितव्या ।

कामिनीचरणाभिघातदोहदादिभिः‡ अशोकपुष्पोत्कर्षदर्शनादपि नाधेयशक्तिः; समयविशेषावच्छिन्नचरणदोहदादिसंयोगध्वंसस्यैव कारणत्वात् । अथवा—चरणाभिघाताकृष्टभागान्तजनितवृक्षादेव तदुपपत्तिः; कालान्तरे पुष्पाद्युत्कर्षात्; दुःखावयवोपचयावश्यंभावेन वृक्षभेदावश्यकत्वात् ।

नापि, ताम्रकांस्यादावम्लभस्मसंयोगादिजन्यशुद्धिरूपाऽऽधेयशक्तिः; तत्संयोगध्वंसस्य संयोगसमानकालीनास्पृश्यस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसहितस्य शुद्धिपदार्थत्वात् ।

अभिमन्त्रितपयःपञ्चादावपि समयविशेषावच्छिन्नाभिमन्त्रणध्वंस एव व्यथाद्यपनायकः; तत्तन्मन्त्रदेवतासंनिधिरेव वा ।

कलमबीजादीनामा परमाण्वन्तभङ्गे तत्र चावान्तरजात्यभावे,—नियतकलमजातीयादिसिद्धिरपि परमाणुपाकजविशेषादेव कार्यवृत्तिरूपादिसजातीयस्य पूर्वरूपादिविजातीयस्य परमाणौ पाकजरूपादेरुभयसिद्धत्वात् । यथा हि, कलमबीजं यवादिजात्या व्यावर्त्यते, तथा तत्परमाणवोऽपि पाकजैरेव, इत्याद्यूहनीयमित्यलं विस्तरेण । ( चि० २ । परिशि० शक्ति० पृ० ३८ ) ।

---

* तथा चानुमानम्,—तत्र 'वह्निर्दाहानुकूलादृष्टातीन्द्रियधर्मसमवायी कार्य(दाह)-जनकत्वादात्मवत्' इति । ( प० मा० )

† अत्र संग्रहश्लोकः—"न द्रव्यं गुणवृत्तित्वात् गुणकर्मबहिःकृता । सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा" इति । ( न्या० ली० पृ० २ )

‡ तदुक्तम्—"पादाहतो युवतिभिर्विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलिङ्गितः कुरबको विकसत्यलमालोकितस्तिलक उत्कलिको विभाति" इति ।

कारणस्वरूपा, इत्याहुः । ( नील० पृ० ४६ ) ( दि० १ पृ० २२ )
२ पौराणिकास्तु,—स्त्रीदेवता शक्तिः । यथा—वैष्णवी, ब्राह्मी गौरी च, इत्याहुः । ३ तान्त्रिकास्तु,—पीठाधिष्ठातृदेवताविशेषः, इत्याहुः । ४ नीतिशास्त्रज्ञास्तु,—राज्ञः प्रभावो-त्साह-मन्त्र-जातं सामर्थ्यरूपं शक्तित्रयम्, इत्याहुः ।

शक्तिः—(संकेतः, पदवृत्तिश्च) [क] अर्थस्मृत्यनुकूलः पदपदार्थसंबन्धः । स च [ क ] 'इदं पदममुमर्थं बोधयतु, अस्मात्पदादयमर्थो बोद्धव्यः'

१ अत्रोक्तम्—"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी । त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति" इति । ( गोरक्षसं० ) ( वराहपु० )

२ सा च, पदशक्तिः, समय-संगति-संकेत-वाचकत्वादिभिर्व्यवह्रियते । ( प्र० प० पृ० ३९ )
अत्र वैयाकरणा आलंकारिकाश्चाहुः—सैषा शक्तिः संयोगादिभिर्नानार्थकशब्देषु* नियम्यते, इति । (ल० म० पृ० १२) । नैयायिकास्तु,—प्रकरणादीनामिव संयोगादीनामपि तात्पर्यग्राहकत्वमेव । यथा—'सशंखचक्रो हरिः' इत्यादौ,—शंखशब्दादिविशेषणम्, इत्याहुः ।

३ अत्रेदं विज्ञेयम्—[क] शक्तिग्रहः† शाब्दबोधे जननीये पदजन्यपदार्थोपस्थितौ † (स्मृतौ) उपयुज्यते । [ ख ] शक्तिग्रहस्तु शाब्दबोधजनिकायां पदजन्यपदार्थोपस्थितौ सहकारी भवति, इति । ( न्या० म० ४ )

४ तदर्थश्च,—[क] 'एतत्पदजन्यबोधविषयोऽयमर्थः' इत्याकारकेश्वरेच्छा शक्तिः, इति (नील०) [ ख ] एतत्पदजन्यत्वप्रकारतानिरूपितै-तदर्थबोधविशेष्यताशालीच्छा, इति । ( त० प्र० ख० ४ । पृ० १४ ) ( ग० शक्ति० )

* तदुक्तं हरिणा—"संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति ॥ तदर्थश्च,—एते संयोगादयः शब्दार्थस्यानवच्छेदे संदेहे तदपाकरणद्वारेण विशेषस्मृतिहेतवो निर्णयहेतवः, इति । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनकाः, इति भावः । ( ल० म० पृ० १२)

† अयं भावः—शक्तिर्हि 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इति रीत्या पदार्थस्मारिका । तथा चायमर्थः—येन रूपेण चोपस्थितयोः पदार्थयोः (पद-पदार्थयोः) संबन्धज्ञानम्, तद्रूपावच्छिन्नज्ञानात् संबन्धांशे उद्बुद्धसंस्कारसहकृतात् तद्रूपावच्छिन्नस्मरणम् । यथा—हस्ति-हस्तिपकयोः पाल्यपालकभावसंबन्धज्ञानेन हस्तिज्ञानाद्धस्तिपकस्मरणम् । ( त० प्र० ख० ४ । पृ० ३३ )

इतीश्वरसंकेतः । ( ग० शक्ति० पृ० १ ) ( मु० ४ ) ( न्या० म० ४ । पृ० ३ ) ( त० सं० ) ( त० दी० ४ )

[ ख ] 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्यनादिसंकेतः । ( त० कौ० ) यथा—घटाद्यर्थविशेष्यक-घटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसंकेतः । ( न्या० बो० ४ । पृ० १९ )

[ ग ] 'इच्छामात्रं शक्तिः,' इति नव्या आहुः । ( मु० ४ ) ( वात्स्या० २।१।५४ )

[ घ ] मीमांसकास्तु,—अभिधानाम पदार्थान्तरं संकेतग्राह्यम्, शक्तिः, इत्याहुः । ( न्या० म० ३ ) ( त० दी० ) ( ग० शक्ति० )

[ ङ ] 'पदपदार्थयोर्वाच्यवाचकभावनियामकं संबन्धान्तरं शक्तिः,' इति शाब्दिका वदन्ति । ( वै० सा० द० ) ( ल० म० )

[ च ] 'अविनाभाव एव शक्तिः,' इति प्राञ्च अङ्गीचक्रुः । ( त० प्र० ख० ४ । पृ० ३७ )

न्यायमते,—शक्तिस्त्रिविधा,—योगः, रूढिः, योगरूढिश्चेति । तत्राद्या पाचकादिपदेषु । द्वितीया घटादिपदेषु । तृतीया पङ्कजादिपदेषु । ( त० दी० ) । प्राभाकरास्त्वेवं पदशक्तिं विभजन्ते,—पदशक्तिर्द्विविधा,—

---

१ अत्र—ईश्वरसंकेतो नामेश्वरेच्छा । ( न्या० बो० ४ । पृ० १९ ) । 'ईश्वरसंकेत' इत्यस्यायं भावः—"द्वादशेऽहनि पिता नाम कुर्यात्" इति श्रुतिः । तथा च,—'द्वादशाहःकालीनपित्राद्युच्चरितनामत्वादिना नामवाच्यः शिशुः' इत्याकारकेच्छयेश्वरेण तादृशश्रुतिप्रणयनात् आधुनिकेऽपि नाम्नि ( आधुनिकसंकेतितचैत्रादिशब्देषु ) ईश्वरसंकेतोऽस्त्येव, इति । ( त० प्र० ४ । पृ० १५ )

२ तथा च— [क] ईश्वरसंकेत एव न शक्तिः; किंत्वभियुक्तसंकेतमात्रं शक्तिः, इति । ( म० प्र० ४ । पृ० ३८ ) [ ख ] 'आधुनिके तु संकेतिते न शक्तिः,' इति संप्रदायः । नव्यास्तु,—'ईश्वरेच्छैव न शक्तिः, किं तु—इच्छैव; तेन, आधुनिकसंकेतितेऽपि शक्तिरस्ति,' इति वदन्ति । ( मु० ४ )

३ संकेतग्रहजन्यग्रहविषयः, इत्यर्थः । ( त० प्र० ४ । पृ० १४ )

४ मीमांसकमते,—इयं शब्दसहकारिग्रहविषयः, इति ज्ञेयम् । ( त० प्र० ४ । पृ० १४ )

५ अत्र,—'यौगिकरूढिस्तुरीयाऽपि शक्तिरस्ति' इति केचिद्वदन्ति ।

६ माध्ववेदान्तिनस्तु,—महायोगाख्यामपि वृत्तिमङ्गीचक्रुः । ( प्र० च० पृ० ३१ )

आनुभाविका[1], स्मारिका च । तत्राद्या कार्यान्विते[2] । द्वितीया तु जातौ[3], इति । (न्या० म० ४ । पृ० ७—८) (दि० ४) (प्र० च० १९)

तत्तन्मते तत्तदर्थेषु पदानां शक्तेर्दिगिदानीं प्रदर्श्यते—'गवादिपदानां, जात्याकृतिविशिष्टव्यक्तौ शक्तिः, इति संप्रदायविदो नैयायिकाः प्राहुः । 'व्यक्तावेव शक्तिः, न तु गोत्वादिजातावपि' इति नव्या आहुः । 'जातिविशिष्टव्यक्तौ शक्तिः,'[4] इत्यपरेऽङ्गीचक्रुः । एके तु,—'गवादिशब्देषु जातिः, देवदत्तादिसंज्ञाशब्देषु व्यक्तिः, सास्नादिमच्छब्देषु आकृतिः, गवादिशब्देषु त्रितयमपि ( वाच्यम् ),' इत्याहुः । ( प्र० च० ४ । पृ० ३८ ) । 'जात्याकृतिव्यक्तिषु तिसृषु शक्तिः ( शक्तित्रयम् )' इति शाब्दिका मन्यन्ते । 'आकृतावेव शक्तिः' इति पातञ्जलिप्रभृतय आहुः । A 'जातावेव शक्तिर्व्यक्तिलाभस्त्वाक्षेपात्[6], इति तौतातिता (तुतातभट्टानुया-

१ आनुभाविका शाब्दानुभवजनिकेत्यर्थः । ( त० प्र० ४ )
स्मारिका पदार्थस्मृतिजनिकेत्यर्थः । ( त० प्र० ४ । पृ० २८ )

२ तन्मते,—पदात्कार्यान्वितस्यैवानुभवात्, इति भावः । ( म० प्र० ४ । पृ० ४० ) ।

३ तन्मते,—पदाज्जात्युपस्थितेरेवानुभूयमानत्वात्, इति भावः । (म० प्र० ४ । पृ०४०)

४ 'जातौ, व्यक्तौ, वैशिष्ट्ये च ( एका ) शक्तिः' इत्यर्थः । (त० प्र० ख० ४ । पृ० २५)
आकाशपदे तु निरवच्छिन्नैव शक्तिः; व्यक्तीनामानन्त्याभावेनानुगमकधर्मानपेक्षणात्, इति ।
* ( त० प्र० ४ । पृ० ३२ )

५ अत्र—'जातिशब्दः शब्दप्रवृत्तिनिमित्तपरः । तथा च—आकाशादयः सर्वेऽपि शब्दाः प्रवृत्तिनिमित्तविशिष्टवस्तुवाचिनो भवन्ति,' इत्याशयः । ( प्र० च० परि० १ । पृ०३८)
घटशब्दो घटघटत्वयोः शक्तः । शुक्लशब्दो गुण-गुणिनोः शक्तः । गतशब्दः क्रिया-तदाश्रययोः शक्तः। दण्डिशब्दो दण्डदेवदत्तयोः शक्तः, इत्यन्ये आहुः । वेदान्तिनस्तु,—गवादिपदानां विशेष्यतया व्यक्तय एव वाच्याः; आनयनादिकं तु विशेषणत्वादिना वाच्यम्, इत्याहुः । ( प्र० च० परि १ । पृ० ३८ )

६ अयं भावः—गोत्वं हि स्वाश्रयं विनाऽनुपपन्नम्, इति तं ( स्वाश्रयम् )* आक्षिपति, इति । अत्र—व्यक्तेः प्राधान्यानुभवात् लक्षणा व्यक्तौ, आक्षेपे तूपसर्जनता स्यात्, इति भट्टैकदेशिन आहुः ।

* अत्र—( १ ) 'अर्थापत्तिराक्षेपः' इति भट्टमतम् । (२ ) 'समानवित्तिवेद्यत्वमाक्षेपः' इति प्राभाकरमतम्, इति विज्ञेयम् । ( न्या० म० ४ । पृ० ६ )

यिनः ), प्राभाकराः कुमारिलभट्टादयश्चाहुः; B 'पदानामन्वयविशिष्टे शक्तिः,' इत्यप्याहुः । तत्र प्राभाकरास्तु,—'सिद्धार्थस्यानुभावकत्वं नास्ति, इति कार्यत्वान्वितव्यक्तौ ( इतरान्विते ) शक्तिः,' इत्याहुः । ( त० दी० पृ० ३२ ) । 'जातौ व्यक्तौ चोभयत्र शक्तिः; किंतु—जात्यंशे ज्ञाता, व्यक्त्यंशे स्वरूपसती प्रत्यायिका' इत्यन्ये मीमांसका आहुः । 'समासस्य विशिष्टार्थे शक्तिः,' इति शाब्दिका आहुः । 'तन्न,—तत्राव-यवलक्षणयैवोपपत्तौ समुदायशक्तौ मानाभावः,' इति नैयायिकाः प्राहुः । मीमांसकास्तु,—'समुदाये ( वाक्ये ) लक्षणा; स्वबोध्यसंबन्धस्यैव 'लक्षणा' पदार्थत्वात्,' इत्याहुः । ( न्या० म० ख० ४ । पृ० ११—१२ ) 'गोपदस्य गोत्वे शक्तिः, व्यक्तौ लक्षणा' इति मण्डनमिश्राः स्वीचक्रुः । धातोश्च, 'फलावच्छिन्नव्यापारे शक्तिः,' इति नव्यनैयायिकाः प्राहुः । 'फले व्यापारे च पृथक् शक्तिः,' इति शाब्दिका आहुः । 'फल एव शक्तिः,'

---

१ अयं भावः—जातौ, अन्विते ( अन्वयविशिष्टे वाक्यार्थे ) चाभिधारूपा शक्तिः, इति ।

२ अत्रोपहसितं श्रीहर्षमिश्रैः— [ १ ] "गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् । प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः" इति । [ २ ] न्यायसिद्धान्तमञ्जरीकारः स्वयमप्युपजहास—"प्रतारको * वर्णव्यत्यास-लिपिसादृश्याभ्यां 'प्रभाकरः' इति गृहीतो लोकैः, इति युक्तमुत्पश्यामः" इति । ( न्या० म० ४ । पृ० ९ )

३ ( १ ) अर्थवादवाक्यानां कार्यतावाचकलिङाद्यघटितत्वेन कार्यत्वाद्यबोधकत्वाच्छाब्दानुभव-जनकत्वाभावेनाप्रामाण्यमेव, इति तन्मतम् । (न्या० म० ४) ( त० प्र० ४ । पृ० २९) ( चि० ४ ) । (२) 'विध्येकवाक्यातयाऽर्थवत्त्वात् प्रामाण्यम्' इति मीमांसकसिद्धान्तः ।

४ अत्राहुः—'विशिष्टगोचरा एकैव शक्तिः; किं तु जातिनिष्ठतया सा ( शक्तिः ) ज्ञातोप-युज्यते, व्यक्तौ सा स्वरूपसती; समानवित्तिवेद्यतया च व्यक्तेरपि भानम्,' इति गुरुमत-तत्त्ववेदिनः । ( न्या० सि० दी० पृ० १२) । अत्र—'व्यक्तेरन्वयप्रकारतया भानम्', इति गुरुमतैकदेशिन आहुः ।

५ तदुक्तम् —"व्यापारो भावना सैवोत्पादना सैव च क्रिया । कृञोऽकर्मतापत्तेर्न हि यत्नोऽर्थ इष्यते" इति । ( वै० सा० कारि० ५ । पृ० २५ )

---

* अत्रायमर्थः—'प्रतारकः' इत्यत्र रकार-ककारयोर्व्यत्यासः, तकारलिप्यां भकारसादृश्यम्; तेन, 'प्रभाकरः' इति लोके प्रसिद्धः, इति । ( म० प्र० ४ । पृ० ४० )

इति मीमांसकाः ( मण्डनादयः ) आहुः । 'व्यापारे शक्तिः,' इति रत्नकोशकृतः (प्राचीनतार्किकाः) आहुः, इति ।

आख्यातस्य तु, 'कृतौ शक्तिः,' इति नैयायिकाः प्राहुः । 'कर्तरि कर्मणि च शक्तिः,' इति शाब्दिका आहुः । 'व्यापारमात्रे शक्तिः,' इति मीमांसका आहुः । 'उत्पादकतायां शक्तिः,' इति रत्नकोशकृत आहुः, इति ।

आलंकारिकास्तु,—'जाति-गुण-क्रिया-संज्ञार्थेषु चतुर्विधा शक्तिः,' इत्याहुः । 'अपोहार्थे शक्तिः,' इति बौद्धा मन्यन्ते ।

अत्रेदं बोध्यम्—प्रथमतः शक्तिग्रहो व्यवहारात् ( घटानयनादिरूपात् ) भवति । तथा हि—'घटमानय' इति केनचित् ( प्रयोजकवृद्धेन ) नियुक्तः कश्चन ( प्रयोज्यवृद्धः ) तद्वाक्यतोऽर्थं प्रतीत्य घटमानयति; तच्चोपलभमानो बालस्तया क्रियया तस्य ( प्रयोज्यस्य ) प्रयत्नमनुमिनोति; तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानं ( घटानयनगोचरम् ) अनुमिनोति; स्वप्रयत्ने तेन तथा निश्चयात् । ततस्तद्धेत्वाकाङ्क्षायाम्,—उपस्थितत्वाच्छब्दमेव कल्पयति । तदनन्तरम्—घटादिपदानां प्रत्येकमावापोद्वापाभ्यां 'घटपदं घटधीजनकम्' इति कल्पयति । क्लृप्ते च तस्मिन् अतिप्रसङ्गभङ्गाय तज्जननानुकूलसंकेतरूपं संबन्धं कल्पयति, इति ।

---

१ तथा च—क्रियामात्रं ( नतु फलावच्छिन्नम् ) धात्वर्थः, इति प्राञ्चां नैयायिकानामाशयः । ( श० प्र० श्लो० ७३ । टी० पृ० १०६ ) ( ग० व्यु० का० २ )

२ आलंकारिकमते दर्शितं यथा—"जातिद्रव्यगुणस्पन्दैर्धर्मैः संकेतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे जगुः" इति । ( श० प्र० श्लो० १८ ) तदर्थश्च—गो-गवयादीनां गोत्वादिजात्या, पश्वा-व्यादीनां लाङ्गूल-धनादिद्रव्येण, धन्य-पिशुनादीनां पुण्य-द्वेषादिगुणेन, चल-चपलादीनां च शब्दानां कर्मणा, अवच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव रूढानाम्, इति ।

यदुक्तं दण्ड्याचार्यैः—"शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः" इति ।

तदेतन्निरसितं तत्रैव—"तदेतत्, अजमूकमूर्खादीनामन्यशून्यादीनां च शब्दानामपरिग्रहापत्त्या परित्यक्तमस्माभिः" इति । ( श० प्र० श्लो० १८ । टी० पृ० १९ )

३ अन्यथातिप्रसङ्गस्तु,—'घटपदं घटधीजनकमिव पटधीजनकमपि स्यात्' इति; 'अगृहीतसंकेतानामपि घटबोधः स्यात्' इति च ।

तदनन्तरं ( आद्यशक्तिग्रहान्तरम्), क्वचिदुपमानाच्छक्तिग्रहो भवति । (न्या० म० ४ । पृ० ९ ) ( २ ) उपमानात् शक्तिग्रहो यथा—A गवादिपदशक्तिधीसाचिव्येन गोसादृश्यातिदेशवाक्यात् गवयपदवाच्यत्वबोधोत्तरं गवयत्वजात्यवच्छिन्ने गोसादृश्यग्रहात् 'गवयो गवयपदवाच्यः' इत्याकारः । B 'गोसदृशो गवयपदवाच्यः' इति सादृश्यज्ञानात् गवयपदस्य गवये शक्तिग्रहो भवति, इति । ( ३ ) क्वचिच्च व्याकरणाच्छक्तिग्रहो यथा—A 'कर्मणि द्वितीया, कर्तरि परस्मैपदम्' इत्यनुशासनात् कर्मत्वादौ द्वितीयादेः शक्तिग्रहः । B धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति, इति । ( ४ ) क्वचित्तु कोशादपि शक्तिग्रहो यथा—A "स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालयाः" इत्यादिना 'नाकादि'पदस्य स्वर्गे शक्तिग्रहः । B "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति," "सुषीमः शिशिरो जडः, चूर्णे क्षोदः" इत्यादितश्च कोशात् शक्तिग्रहः, इति । ( ५ ) आप्तवाक्यादपि शक्तिग्रहो यथा—'कोकिलः पिकपदवाच्यः' इत्याद्याप्तवाक्यात् 'पिका'दिपदानां कोकिले शक्तिग्रहः, इति । ( ६ ) पुनरपि—व्यवहारादपि शक्तिग्रहो यथा—'घटं नय,' 'गामानय' इत्याद्यावापोद्वापाभ्यां पार्श्वस्थबालस्य 'घटा'दिपदस्य घटमात्रे शक्तिग्रहो भवति, इति । ( ७ ) वाक्यशेषादपि शक्तिग्रहो यथा—"यवमयश्चरुर्भवति" इत्यत्र 'यव'पदस्य दीर्घशूकविशेषे कङ्गौ वा शक्तिः' इति संदेहे,—वाक्यशेषाद्दीर्घशूकविशेषे शक्तिर्निर्णीयते । यथा वा—"स्वाराज्यकामोऽग्निष्टोमेन यजेत" इत्यादिविधिशेषीभूतेभ्यः "यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं 'स्वः'पदास्पदम्" इत्यादिवाक्येभ्यः स्वरादिपदस्य स्वर्गसुखादौ शक्तिग्रहः, इति । ( म०

१ अत्रोक्तमभियुक्तैः—"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः" इति । ( मु० ४ । ) ( त० प्र० ४ । पृ० ७३ )

२ वाक्यशेषस्तु,— ( १ ) "यत्रान्या ओषधयो म्लायन्ते, अथैते मोदमाना इवोत्तिष्ठन्ति" इति । ( २ ) "वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति च । ( मु० ४ पृ० १७७ )

प्र० ) । ( ८ ) क्वचित्–विवरणादपि शक्तिग्रहो यथा–'घटोऽस्ति' इत्यस्य 'कलशोऽस्ति' इत्यनेन विवरणात् घटपदस्य कलशे शक्तिग्रहः । यथा वा–'पचति' इत्यस्य 'पाकं करोति' इत्यनेन विवरणात् आख्यातस्य यत्नार्थकत्वं कल्प्यते, इति । ( ९ ) प्रसिद्धपदस्य सांनिध्यादपि शक्तिग्रहो यथा–'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ 'पिक' पदस्य 'मधुरा'दिप्रसिद्धपदसांनिध्यात् कोकिले शक्तिग्रहः, इति । यथा वा–"नीरूपस्पर्शवान् वायुः, निस्पर्शमूर्तिमन्मनः" इत्यादौ,—रूपशून्यस्पर्शवदादिषु 'वाय्वा'दिपदस्य शक्तिग्रहः । यथा वा—"सत्कृत्यालंकृतां कन्यां ददानः ककुदः स्मृतः" इत्यादावुक्तरीत्या कन्यादात्रादिषु 'ककुदा'दिपदस्य शक्तिग्रहः, इति । ( मु० ४ । पृ० १७७ ) ( श० प्र० श्लो० २१ । टी० पृ० २६—२७ ) । ( १० ) । वेदान्तिनस्तु,—अङ्गुलीप्रसारणादिपूर्वकं निर्देशेनैव शक्तिग्रहो भवति । यथा–बाल ! 'तवेयं माता, तवायं पिता, अयं ते भ्राता, कन्दलीफलमभ्यवहरन्ति' इति निर्देशेन बालस्य मात्रादौ शक्तिग्रहः, इत्याहुः । ( प्र० च० परि० १ । पृ० ३८ ) शिष्टं च 'समय'शब्दव्याख्यानावसरे संपादनीयमित्यत्रैव विरम्यते ।

**शक्यत्वम्**—१ विषयतासंबन्धेन शक्त्याश्रयत्वम् । ( न्या० बो० ४ । पृ० १९ ) यथा–गवादेरर्थस्य गोपदशक्यत्वम् । ( स्व० ) २ समर्थनीयत्वम्, इति काव्यज्ञा आहुः ।

**शक्यप्राप्तिः**—पद-वाक्य-प्रमाणानां ज्ञानजननप्रयोजकत्वम् । इयं ( शक्यप्राप्तिः ) च, अतिप्राचीननैयायिकानां मते दशानां न्यायावयवानामन्तर्गता । ( वात्स्या० १ । १ । ३२ ) ( गौ० वृ० १ । ३२ ) ( म० प्र० २ । पृ० ३३ )

**शतृ**—( प्रत्ययः ) प्रकृतधात्वर्थकर्ता । ( तर्का० ४ । पृ० १२ ) यथा–'पचन्' इत्यादौ 'शतृ'प्रत्ययार्थः । ( स्व० )

१ कल्पने तु,—'आख्यातं यत्नत्वविशिष्टे शक्तम्, यत्नत्वविशिष्टशक्त-'करोति'प्रतिपादितार्थप्रतिपादकत्वात्' इति । ( दि० ४ । पृ० १७७ )



**शपथः**—[ क ] स्वाभिप्रायबोधानुकूलशपथकरणम् । यथा—'गोपी कृष्णाय शपते' इत्यादौ शपेरर्थः । ( ल० म० )

[ ख ] सत्यताकरणाय दिव्यविशेषकरणम् । यथा—'एतद्यदि मिथ्या स्यात्तदा मे एतदनिष्टं स्यात्' इत्यादि ।

**शब्दः**—( गुणः ) [ क ] श्रोत्रग्रहणो योऽर्थः, स शब्दः । ( वै० २।२।२१ )

[ ख ] श्रोत्रग्राह्यो गुणः । शब्दं विभजते,—[ १ ] स च शब्दो द्विविधः,—बुद्धिहेतुकः, अबुद्धिहेतुकश्च । तत्र—अबुद्धिहेतुको मेघादिशब्दः । बुद्धिहेतुकश्च द्विविधः,—स्वाभाविकः, काल्पनिकश्च । उभयत्रापि ध्वनेरुपकारकत्वात् ध्वन्यात्मकता । तत्र स्वाभाविको, वर्णविशेषानभिव्यञ्जको हसितरुदितादिरूपः प्राणिमात्रसाधारणः । काल्पनिकोऽपि त्रिविधः,—वाद्यादिशब्दः, गीतिरूपः, वर्णात्मकश्च । तत्र—भेरीशब्दादिर्वाद्य-

---

१ अत्र—'कृष्णसंप्रदानकबोधानुकूलं शपथकरणम्' इति बोधः ( ल० म० )

२ तल्लक्षणं च [ क ] श्रोत्रग्राह्यगुणविभाजकधर्मवत्त्वम् । ( वाक्य० ४ ) [ ख ] श्रवणेन्द्रियजन्यलौकिकप्रत्यक्षविषयवृत्तिगुणत्वव्याप्य*जाति ( शब्दत्वम् )—मत्त्वम् । ( वै० वि० २ । २ । २१ ) •

शब्दस्त्वाकाशमात्रवृत्तिः†, बाह्यैकेन्द्रियग्राह्यः, द्विक्षणावस्थायी, तृतीयक्षणे नश्यति च; अत एवानित्यः, इति नैयायिकराद्धान्तः । 'पृथिव्यादिषु पञ्चसु शब्दस्तिष्ठति', इति सांख्या वेदान्तिनश्चाहुः । स्वातन्त्र्यास्तु,—'भेर्यां शब्दः, मृदङ्गे शब्दः' इति व्यवहारात्पृथिव्यामेव शब्दमिच्छन्ति । ( सि० च० १ । पृ० १८ )

३ अत्र भाष्यम्—"शब्दोऽम्बरगुणः, श्रोत्रग्राह्यः, क्षणिकः, कार्यकारणोभय‡विरोधी, संयोग-विभाग-शब्द-जः, प्रदेशवृत्तिः, समानासमानजातीयकारणकः" इति ( प्रशस्त० गुणनि० पृ० ५५ )

---

* तेन ( गुणत्वव्याप्यजातिघटितलक्षणकरणेन ), अश्रुतशब्दे नाव्याप्तिः; न वा सत्त्व-गुणत्वा-दिकमादाय गुणान्तरेष्वतिव्याप्तिश्च । ( वै० वि० २ । २ । २१ )

† अत्र भाष्यम्—"शब्दो न स्पर्शवद्विशेषगुणः; प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्, आश्रयादन्यत्र ( श्रोत्रदेशे ) उपलब्धेश्च । शब्दो गुणो भूत्वाऽऽकाशस्याधिगमे लिङ्गम्" इति । ( प्रशस्त० पृ० ७ ) ( मु० ख० १ )

‡ तदर्थश्च—कार्यमुत्तरशब्दः, कारणं संयोग-विभाग-शब्दाः, एतदुभयेनाप्ययं विरुध्यते, इति ।

रूपः। माधवादिरागाभिव्यञ्जकनिषादादिस्वरशब्दो गीतिरूपः। ध्वनिविशेषसहकृतकण्ठताल्वाद्यभिघातजन्यश्च वर्णात्मकः, इति। (शब्दार्थरत्ने०) (वाच०) [२] शब्दो द्विविधः,–ध्वन्यात्मकः, वर्णात्मकश्च। तत्राद्यो भेरीमृदङ्गादौ प्रसिद्धः। द्वितीयः संस्कृतभाषादिरूपः शब्दः। ध्वन्यात्मक-वर्णात्मकावपि प्रत्येकं त्रिविधौ,–संयोगजौ, विभागजौ, शब्दजौ चेति। तत्राद्यौ,–भेर्यामभिहन्यमानायां भेरीदण्डसंयो-

---

१ अत्र भाष्यम्—स च द्विविधः,—वर्णलक्षणः, अवर्णलक्षणश्च (ध्वनिलक्षणः)। तत्र,—अकारादिर्वर्णलक्षणः। शब्दादिनिमित्तो* ध्वनिलक्षणश्च।

तत्र वर्णलक्षणस्योत्पत्तिः—आत्ममनसोः संयोगात्स्मृत्यपेक्षाद्वर्णोच्चारणेच्छा; तदनन्तरम्—प्रयत्नः, तमपेक्षमाणादात्मवायुसंयोगाद्वायौ कर्म जायते; स च वायुरूर्ध्वं गच्छन् कण्ठादीनभिहन्ति; ततः—स्थानवायुसंयोगापेक्षात्स्थानाकाशसंयोगाद्वर्णोत्पत्तिः।

अथ ध्वनिलक्षणोऽपि (१)—भेरीदण्डसंयोगाद्वेगापेक्षाद्भेर्याकाशसंयोगादुत्पद्यते; (२)—वेणुपर्वविभागापेक्षाद्वेण्वाकाशविभागाच्च; (३)—शब्दाच्छब्दनिष्पत्तिः—शब्दात्संयोगविभागनिष्पन्नात् वीचीसंतानवत् शब्दसंतानः, इत्येवं संतानेन श्रोत्रप्रदेशमागतस्यान्त्यशब्दस्य ग्रहणम्; श्रोत्रशब्दयोर्गमनागमनाभावात् (संयोगगमनाभावात्) अप्राप्तस्य चानुपलब्धेः परिशेषात्संतानसिद्धिः" इति। (प्रशस्त० गुणनि० पृ० ५५–५६) (वै० २।२।३१)

२ अत्र शाब्दिका आहुः,—'स च शब्दो वस्तुत एकोऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपोऽनन्तपदरूपतामिवापन्न इति सर्वपदरूपः, सर्वार्थाभिधानशक्तिः। सा शक्तिर्योगिप्रत्यक्षगम्या, नास्मज्ज्ञानगम्या। यत्रैवं व्यवहारादिना तज्ज्ञानं तस्यैवास्माकं बोधः' इति मर्यादा। (ल० म० आका० पृ० ४९)

व्युत्पत्तिः,—'शब्द्यतेऽनेनार्थ इत्यभिधीयते ज्ञाप्यते' इति। (वात्स्या० १।१।३)

वैयाकरणा आहुः—'परा, पश्यन्ती, मध्यमा, वैखरी,' इति † चत्वारि वाचः [illegible]नि। एकैव नादात्मिका वाक् मूलाधारादुदिता सती 'परा' इत्युच्यते। सैव हृदयाभि[illegible]नी 'पश्यन्ती' इत्युच्यते। सैव बुद्धिं गता विवक्षां प्राप्ता 'मध्यमा' इत्युच्यते। अथ [illegible] सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा 'वैखरी' इत्युच्यते।

---

[illegible]त्र पाठान्तरम्—"संख्यादिनिमित्तोऽवर्णलक्षणः" इति (प्रशस्त० गुण० पृ० ५५)

[illegible] श्रुतिः—"गुहा त्रीणि निहिता नेङ्गयन्ति" "तुरीयं वाचो मनुष्या वदन्ति" इति। (ऋ० १।१६४।४५)

गाद्ध्वन्यात्मकः; वायुकण्ठताल्वादिसंयोगाद्वर्णात्मकश्च । द्वितीयौ,–वंशे पाठ्यमाने दलद्वयविभागात् 'चटचटा'त्मको ध्वन्यात्मकः, ओष्ठद्वय-विभागाद्वर्णात्मकश्च । तृतीयौ च,–द्वितीयशब्दादि-चरमशब्दान्तौ चेति ( वै० २।२।३१ ) । वर्णात्मकः पुनर्द्विविधः,—सार्थकः, निरर्थकश्च । तत्र सार्थकः शब्दस्त्रिविधः,–प्रकृतिः, प्रत्ययः, निपातश्चेति । ( श० प्र० ) निरर्थकस्तु 'कचटतप' इत्यादिः । पुनरपि वर्णात्मको द्विविधः,–प्रमाणशब्दः, अप्रमाणशब्दश्च । तत्राद्य आप्तोपदेशः । सोऽपि द्वि-विधः,–लौकिकः, वैदिकश्च । तत्राद्यो ( लौकिकः ) विधि-निषेधा-र्थ-

१ तत्र, भेर्याकाशसंयोगोऽसमवायिकारणम्; भेरीदण्डसंयोगो निमित्तकारणम्; आकाशं तु समवायिकारणम्, इति ज्ञेयम् । ( त० कौ० )

२ तत्र, वंशदलद्वया-काश-विभागोऽसमवायिकारणम्; वंशदलद्वयविभागो निमित्तकारणम् । ( त० कौ० ) ( वै० उ० २ । २ । ३१ )

३ अत्रेदं बोध्यम्—'वीचीतरङ्ग' न्यायेन, 'कदम्बमुकुल' न्यायेन वा ये द्वितीयादयः शब्दाः, ते शब्दजाः । तत्रोत्तरोत्तरशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्; अनुकूलवातादिकं नि-मित्तकारणम्, इति । ( त० कौ० )

४ 'वर्णात्मकः शब्दो द्रव्यम्' इति मध्वमतानुयायिनोऽप्याहुः । ( प्र० प्र० पृ० ११ )

५ तदर्थश्च,—[ क ] शाब्दप्रमितिकरणज्ञानविषयः* शब्दः, इति ( त० प्र० प० ४ । पृ० ६ ) (त० कौ०) । ( प्र० प्र० ) । [ ख ] मणिकृतस्तु,—प्रयोगहेतुभूतार्थतत्त्वज्ञा-नजन्यः शब्दः, इत्याहुः । ( त० प्र० प० ४ । पृ० ५ ) [ ग ] यथाश्रुतार्थस्य शाब्द-प्रमितिकरणरूपस्याङ्गीकारे,—सचार्थः, 'शाब्दबोधं प्रति ज्ञायमानं पदं करणम्' इति मते संगच्छते, इति विज्ञेयम् ।

तल्लक्षणं तु प्रमाणशब्दत्वमेव । तच्च, [ क ] शाब्दप्रमितिकरणत्वम् † । (न्या० म० ४) [ ख ] प्रकृतवाक्यार्थविषयकयथार्थशाब्दबोधविषयकतात्पर्यजन्यवाक्यत्वम् । ( वाक्य० ४) [ ग ] परेतु,—प्रमोपधायकशब्दत्वम्, इति वदन्ति । मू० म० १ )

६ तदर्थश्च [क] आप्तस्य यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः शब्दः । (वात्स्या० १।१।७) [ ख ] प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः । (चि० ४) (गौ० वृ० १ । १ । ७ )

७ द्विविधोऽपि प्रत्येकं‡ त्रिविधः,—विधिः, निषेधः, अर्थवादश्चेति । सचायं शब्दो लोके वेदे च समानः । इयांस्तु विशेषः—किंचिदेव लौकिकं वाक्यं प्रमाणम्, यदाप्तोक्तम् । वेदवाक्यं तु सर्वमपि प्रमाणम्; परमाप्तेन भगवता कृतत्वात्, इति । ( त० कौ० ४ )

* अयमर्थश्च, शाब्दबोधं प्रति पदज्ञानस्य करणतामते संगच्छते ।

† इदं लक्षणं च, 'ज्ञायमानं पदं करणम्' इति मताभिप्रायेणास्ति । ( म० प्र० ४ )

‡ अत्र—'विधिः, अर्थवादः, इति भेदेन प्रमाणशब्दो द्विविधः' इत्यपि केचिदाहुः । (न्या० म० ४ । पृ० २४ )

वाद-भेदेन त्रिविधः । तत्र—विधिर्यथा—'पाकं कुर्यात्' इत्यादि । निषेधश्च 'इदमनिष्टं न कुर्यात्' इत्यादि । अर्थवादस्तु 'अयं ब्राह्मणः स्वमहिम्ना सर्वं जगत्पवित्रं करोति' इत्यादिः स्वयमूह्यः (स्व०); 'नद्यास्तीरे पञ्च फलानि सन्ति' इत्यादिरूपो वा (प्र० प्र०) । द्वितीयस्तु (वैदिकः) पञ्चविधः,—विधिः, मन्त्रः, नामधेयम्, निषेधः, अर्थवादश्चेति । प्रकारान्तरेणापि प्रमाणशब्दो द्विविधः,—दृष्टार्थः, अदृष्टार्थश्च । तत्राद्यो 'घटोऽस्ति' इत्यादिरूपः । द्वितीयः'स्वर्गनरकापूर्वादि'शब्दः, इति । अप्रमाणशब्दस्तु 'वह्निना सिञ्चेत्, गौरश्वः पुरुषो हस्ती' इत्यादिरूपः, इति । 'शब्दो[3] द्रव्यम्' इति भट्टमीमांसका आहुः । 'शब्दो नित्यः' इति प्राभाकरा[4]

---

१ अत्र—'शब्दो न प्रमाणम्; शाब्दज्ञानं तु लैङ्गिकमेव । तथा च—शब्दोऽनुमान एवान्तर्भवति' इति वैशेषिकमतम्* । (वै० ९ । २ । ३) । नैयायिकास्तु,—'पृथगेव †शब्दो मानम्, नत्वनुमानविधया मानम्; शब्दस्यार्थाव्याप्यत्वात्; न हि 'यत्र शब्दस्तत्र घटानयनादिरूपार्थः' इति व्याप्तिः; शब्दस्याकाशवृत्तित्वात्, घटादेश्च तदवृत्तित्वात् । (न्या० म० ४) तथा च—शब्दो व्यतिरिक्तं प्रमाणम्, 'शब्दात्प्रत्येमि' इत्यनुव्यवसायगम्या ज्ञानस्य प्रत्यक्षानुमित्यादिप्रतीतितो विलक्षणत्वेन तादृशज्ञानकरणत्वेन सिद्ध्यति,' इत्याहुः । ( श० प्र० ) ( त० दी० )

२ अत्र—'शब्दस्य साधुत्वं च शक्तत्वमेव । अपभ्रंशादितः ( गाव्य-गगर्यादिशब्दतः ) शक्तिभ्रमाच्छाब्दबोधः,' इति नैयायिक-मीमांसकादय आहुः । वैयाकरणास्तु,—यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः, स तत्र साधुः‡ । अपभ्रंशानामपि शक्तत्वमस्त्येव, इत्याहुः । ( वै० सा० शक्तिविचा० पृ० १५१ )

३ [ क ] अत्रानुमानं प्रमाणम्—'शब्दो द्रव्यम्, साक्षादिन्द्रियसंबन्धवेद्यत्वात्, घटवत्,' इति; 'श्रोत्रं द्रव्यग्राहकम्, निरवयवेन्द्रियत्वात्, मनोवत्' इति च । गुणवत्त्वाच्च शब्दो द्रव्यम्; संख्यादयोऽपि हि शब्दधर्मा अनुभूयन्ते, इति । ( न्या० ली० गु० पृ० ४९ ) । शाब्दिकास्तु शब्दमुभयस्वरूपमिच्छन्ति—तारत्वादयो गुणाः शब्दनिष्ठाः-सदाश्रयत्वाच्छब्दस्य द्रव्यत्वम्, आकाशरूपद्रव्याश्रयत्वाद्गुणत्वं च, इति । ( ल० म० )

तन्न सहन्ते वैशेषिकाः—"एकद्रव्यत्वान्न द्रव्यम्" इति ( वै० २ । २ । २३ ) । तदर्थस्तु,—'शब्दो न द्रव्यम्, एकद्रव्यत्वात् एकमात्राश्रितत्वात् । न ह्येकमात्राश्रितं किमपि द्रव्यं प्रसिद्धम्;' इति । ( वै० वि० २ । २ । २३ )

४ एतन्मते शब्दस्य नित्यत्वे प्रमाणमनुमानम् । तत्र [ क ] 'शब्दो नित्यो व्योममात्रगुण-

---

* वैशेषिकादीनामाशयस्तु 'प्रमाण'शब्दव्याख्यानावसरे ( पृ० ५१२ ) प्रकटीकृतः, इति पुनरत्र तदुल्लेखनमुपेक्षितम् ।

† तत्र प्रमाणं सूत्रम्—"आप्तोपदेशसामर्थ्याच्छब्दादर्थे संप्रत्ययः" इति । ( गौ० २।५२ )

‡ अत्र—शब्दस्य अर्थविशेषान्वयबोधने साधुत्वं च, व्याकरणैकव्यञ्जिका पुण्यजनकतावच्छेदकजातिः । ( वै० सा० द० पृ० १०३ )

भट्टाश्चाहुः । नैयायिकास्तु 'शब्दोऽनित्यः' इत्याहुः। (वै० २।२।२८)।

---

त्वात् व्योमपरिमाणवत्' इति । [ ख ] 'शब्दो नित्यः; अद्रव्यद्रव्यत्वात्, प्रत्यभिज्ञानाच्च' इति च ( न्या० म० ४ । पृ० ३१ ) (त० प्र० ४ । पृ० १२४ ) ( न्या० ली० गु० पृ० ४९ )

अत्रायमाशयः—'सोऽयं गकारः' इति प्रत्यभिज्ञाबलात्* शब्दस्य नित्यत्वम् । 'गकार उत्पन्नः, विनष्टश्च' इति प्रत्ययस्तु शब्दव्यञ्जकवायूत्पत्तिविषयक † एव, इति । ( न्या० म० ४ । पृ० ३१ )( वै० २ । २ । ३४—३५)

१ एतन्मते शब्दस्य नित्यत्वे प्रमाणमनुमानम् । तच्च 'शब्दो नित्यः, निःस्पर्शद्रव्यत्वात्, आत्मवत्' इति । ( न्या० म० ४ । पृ० ३१ )

२ अयमाशयः—'सोऽयं गकारः' इति प्रत्यभिज्ञायां पूर्वकालीनगकारसादृश्यमेवैतद्गकारे भासते । यदि प्राभाकरमतानुरोधी अभेदो भासेत तदा 'सोऽयं घटः' इति प्रत्यभिज्ञायामप्यभेदस्यैव तुल्यन्यायेन भासनस्य आवश्यकतया घटस्यापि नित्यत्वापत्तिः । अतः शब्दस्यानित्यत्वमेव । शब्दस्यानित्यत्वे प्रमाणमनुमानम् । तच्च, 'शब्दोऽनित्यः सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वाल्लौकिकप्रत्यक्षविशेष्यत्वाद्वा, घटवत्' इति । ( गौ० वृ० २ । ८१ )। तथा च सूत्रम्—"आदिमत्त्वादैन्द्रियकत्वात्कृतकत्वादुपचाराच्च" इति । ( गौ० २ । २ । १४ )

शब्दोत्पत्तिर्द्विविधा,—केषांचिन्नैयायिकानां मते 'वीचीतरङ्ग'न्यायेन तदुत्पत्तिः, केषांचिन्मते तु 'कदम्बकोरक'न्यायेन ‡ तदुत्पत्तिः । ( भा० प० श्लो० १६७ ) तत्राद्या तदुत्पत्तिर्यथा—आद्यया वीच्याऽन्यो महानेकस्तरङ्गो जन्यते, तेन तरङ्गेण च महत्तरं तरङ्गान्तरम्, तद्वत् ;—[ क ] आद्यशब्देन बहिर्देशादिगवच्छिन्नोऽन्यशब्दस्तेनैव शब्देन जन्यते; तेन चापरस्तद्व्यापकः शब्दः, इत्येवंक्रमेण श्रोत्रोत्पन्नः शब्दो गृह्यते । [ ख ] भेरीदण्डाद्यभिघातात् तद्देशावच्छेदेनाद्यशब्दस्योत्पत्तिः; अनन्तरम्—तद्बहिर्देशादिगवच्छेदेन प्रथमशब्दात्तद्व्यापको द्वितीयः शब्दः; ततस्तद्बहिर्देशादिगवच्छिन्नस्तृतीयः शब्दो द्वितीयशब्दाद्भवति, इत्येवंक्रमेण चतुर्थादिशब्दानामप्युत्पत्तिर्बोध्या । द्वितीया तदुत्पत्तिर्यथा—

---

* अस्यां प्रत्यभिज्ञायाम्, एतत्कालीनगकारे पूर्वकालीनगकाराभेदो भासते; अतो नित्य इति भावः । ( त० प्र० ख० ४ । पृ० । १२४ )

† अत्र— [ क ] शब्दव्यञ्जकवायुरेवोत्पद्यते, न तु शब्द उत्पद्यते, इति भावः । ( त० प्र० ख० ४ । पृ० १२४ ) [ ख ] 'प्रयत्नेन शब्दमुच्चारयतः पुंसो वायुर्नाभेरुत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितो मूर्धानमाहत्य परावृत्तो वक्त्रे विचरन्नानाविधान् शब्दानभिव्यनक्ति' इति मीमांसकसिद्धान्तः । 'नानाविधान् शब्दान् निष्पादयति' इति तार्किकपाठः । ( म० प्र० ४ । पृ० ६४ )

‡ अत्र—क्वचित्, ( वै० वि० २ । २ । ३७) 'कदम्बगोलकन्यायः' इति; क्वचिच्च, ( सि० च० १ । पृ० १८ ) 'कदम्बमुकुलन्यायः' इत्यपि पाठान्तरम् ।

अन्ये तु ( वैयाकरणाः ),–'वर्णः ( अकारादिः ) नित्यः' इत्याहुः । ( न्या० म० ४ । पृ० ३१ ) ( गौ० १।१।८ ) ( २।८१ ) ( वात्स्या० ) ( सर्व० ) ( चि० ४ ) ( त० सं० ) ( सि० च० ) ( त० दी० ) (नील०) । 'शब्दो न प्रमाणम्' इति सौगता आहुः । ( प्र० प्र० ४ ) । मीमांसकास्तु,—'वैदिकशब्दः प्रमाणम्, लौकिकस्त्वनुवादकः' इत्याहुः । ( म० प्र० ४ ) । [ ३ ] अत्र—मध्वमतानुयायिवेदान्तिनस्तु वेदान्तोपयोगित्वेनैवं शब्दं विभजन्ते—'शब्दो द्विविधः,–प्रमाणशब्दः, अप्रमाणशब्दश्च । तत्र प्रमाणशब्दो निर्दोषशब्दत्वात् 'आगमः' इत्युच्यते । आगमो द्विविधः,–अपौरुषेयः, पौरुषेयश्चेति । तत्रापौरुषेय ऋगादिः सदागमः । पौरुषेयो महाभारतादिः सदागमः, इति । अप्रमाणशब्दस्तु, दोषवत्त्वात् 'आगमाभासः' इत्युच्यते । शब्ददोषास्तु,–A. अबोधकत्वम्, B. विपरीतबोधकत्वम्, C. ज्ञातज्ञापकत्वम्, D. अप्रयोजनवत्त्वम्, E. अनभिमतप्रयोजनवत्त्वम्, F. अशक्यसाधनप्रतिपादनम्, G. लघूपाये सति गुरूपायोपदेश-

---

कदम्बपुष्पस्य सर्वावयवेषु युगपत्कोरकाणामुत्पत्तिः; तद्वत्,—[ क ] आद्यशब्दाद्दशसु दिक्षु दश शब्दा उत्पद्यन्ते, तैश्चान्ये दश शब्दा उत्पद्यन्ते, इत्येवं सर्वासु दिक्षूपर्युपरि शब्दानामुत्पत्तिः, इति । ( मु० गु० पृ० २३६ ) [ ख ] द्वितीयादिशब्दो नैकः, न वा दशदिगवच्छिन्नः; किं तु—'दशसु दिक्षु द्वितीयाद्याः शब्दा दश उत्पद्यन्ते' इत्येतन्मते विशेषः । ( वै० वि० २ । २ । ३७ )

१ तन्मते वर्णानां नित्यत्वे प्रमाणमनुमानम् । तच्च 'वर्णो नित्यो ऽवर्ण्यन्यशब्दत्वात्* स्फोटवत्' इति । ( न्या० म० ४ । पृ० ३१ ) तथा च—'पञ्चाशद्वर्णाः, अष्टाक्षरो मन्त्रः, त्र्यक्षरो मन्त्रः, अष्टाक्षराऽनुष्टुप्' इत्यादिसंख्याप्युपपद्यते, इति । तन्न सहन्ते वैशेषिकाः—पञ्चाशदादिसंख्यायाः सद्भावः कत्वगत्वादिजातित एवोपपद्यते, इति न वर्णानां नित्यत्वम्, इति । ( वै० २ । २ । ३७ )

२ अत्र—अपौरुषेयत्वादिविचारणं तु 'वेद'शब्दव्याख्यानावसरे कृतम्, इति तत्तत्र द्रष्टव्यम् ।

३ तदुक्तम्—"आगमो द्विविधो ज्ञेयो नित्योऽनित्यस्तथैव च । ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् ॥ मूलरामायणं चैव पुराणं चैतदात्मकम् । ये चानुयायिनस्तेषां सर्वे ते च सदागमाः ॥ दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः" इति । (प्र० च० परि० १ । पृ० ४१)

---

* तत्र,—अर्थबोधकशब्दं स्फोटात्मकमिच्छन्ति वैयाकरणाः ।

नम्, इत्याद्याः । तत्र A—अबोधकत्वं च द्वेधा,—निरभिधेयत्वेन, अन्वयाभावेन चेति । तत्राद्यस्योदाहरणम्—‘कचटतपानां जबगडदत्वात्,’ इति । द्वितीयस्योदाहरणम्—‘गौरश्वः पुरुषो हस्ती; कुण्डमजाजिनं दश दाडिमानि षडपूपाद्याः,’ इत्यादि । B—विपरीतबोधकत्वस्योदाहरणम्—‘विमतं मिथ्या; शूद्राणां वेदविद्याधिकारोऽस्ति, ब्राह्मणानां नास्ति,’ इत्यादि । C—ज्ञातज्ञापकत्वस्योदाहरणम्—‘पुरस्तादादित्य उदेति, पश्चादस्तमेति; मधुरो गुडः; तिक्तं निम्बफलम्,’ इत्यादि । D—अप्रयोजनवत्त्वस्योदाहरणम्—“काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् । कम्बले कति रोमाणि का वार्ता चोलमण्डले” इत्यादि । E—अनभिमतप्रयोजनवत्त्वस्योदाहरणम्—विरक्तं प्रति वाणिज्योपदेशः, इत्यादि । F—अशक्यसाधनप्रतिपादनस्योदाहरणम्—मृतमुद्दिश्य, मृतिहरहिममहीधरोत्तरसानुसिद्धमृतसंजीविनीकथनादि । G—लघूपाये सति गुरूपायोपदेशनस्योदाहरणम्—नखेन जायमानं कार्यं ‘कुठारेण कुरु’ इति; तृषितं प्रति गीर्वाणतरंगिणीतीरे कूपखननोपदेशः, इत्यादि । ( प्र० च० परि १ । पृ० ३६ )

**शब्दपुनरुक्तम्**—( पुनरुक्तम्, निग्रहस्थानम् ) [ क ] शब्दस्य पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् । ( गौ० ५।२।१४ )

[ ख ] समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः । यथा—‘घटो घटः’ इति । ( गौ० वृ० ५।१७ ) यथा वा—‘नित्यः शब्दो, नित्यः शब्दः’ इति ( वात्स्या० ५।२।१४ )। अन्ये तु,—शब्दपुनरुक्तं द्विविधम्,—तस्यैव शब्दस्य पुनरभिधानम्, तस्यैव शब्दस्य पर्यायेणाभिधानं च, इत्याहुः । ( गौ० वृ० ५।१८ )

**शब्दाध्याहारः**—( अध्याहारः ) आकाङ्क्षितशब्दानुसंधानम् । ( नील० ४ । पृ० ३१ ) यथा—‘पिधेहि’ इत्युक्ते ‘द्वारम्’ इति द्वितीयान्तपदाध्याहारः । ( स्व० )

---

१ ‘अत्राप्यर्थाध्याहार एव, न तु पदाध्याहारः कर्तव्यः’ इति प्राभाकरा आहुः । नैयायिकास्तन्न सहन्ते—‘घटमानय’ इति वाक्यादिव ‘घटः, कर्मत्वम्, आनयनम्, कृतिः’ इति वाक्यादपि ‘घटनिष्ठकर्मतानिरूपकानयनानुकूलकृतिमान्’ इति विशिष्टार्थविषयकशाब्दबोधोत्पत्त्यापत्तिवारणाय, वृत्त्या पदजन्याया एव पदार्थोपस्थितेः शाब्दबोधं प्रति हेतुत्वस्य कल्पनीयतया शब्दाध्याहार एवावश्यकः, नार्थाध्याहारः, इति । (त० दी० ४ । पृ० ३१)

**शब्दार्थः**—'अर्थ'शब्दव्याख्यानावसरे ( २ [ क ], [ ख ] इत्यत्र ) अस्य प्रपञ्चः संपादितः। ( चि० ) ( ग० शक्ति० पृ० ३ )

**शब्दोपजीवि**—( प्रमाणम् ) शब्दसहकृतेन येन प्रमितिर्जन्यते, तत्। ( कु० १ ) यथा—स्मृति-पुराणादि। ( ख० )

**शरीरम्**[2]—[ क ] चेष्टेन्द्रियार्थाश्रयः[3] शरीरम्। ( गौ० १।१।११ ) ( त० भा० प्रमेय० पृ० २९ )

[ ख ] आत्मनो भोगायतनम्[4]। ( वात्स्या० १।१।९ ) ( त० भा० पृ० २९ ) ( त० दी० ) ( वाक्य० )

[ ग ] भोगायतनमन्त्यावयवि[5]। ( त० कौ० ) यथा—अस्मदादीनां

---

१ तच्च वेदोपजीवि प्रमाणं भवति, इति बोध्यम्।

२ अत्र व्युत्पत्तिः—'शीर्यते' इति ( शृ-ईरन् ) प्रतिक्षणं क्षीयमाणं देहं शरीरम्।

तल्लक्षणं च शरीरत्वम्;*तच्च, [ क ] प्रयत्नवदात्मसंयोगासमवायिकारणवत्क्रियावदन्त्यावयवित्वम्। ( वै० उ० ४।२।१ ) [ ख ] अन्त्यावयविमात्रवृत्ति-चेष्टावद्वृत्ति-जातिमत्त्वम्†। ( वै० वि० ४।२।१ ) ( गौ० वृ० १।११ ) ( प० मा० ) [ ग ] अवच्छेदकतासंबन्धेन भोगाश्रयत्वम्। (वाक्य०) [ घ ] चेष्टावदन्त्यावयवीतरावृत्तिजातिमत्त्वम्। ( ल० व० ) [ ङ ] भोगायतनवृत्त्यन्त्यावयविमात्रवृत्तिजातिमत्त्वम्। ( प० मा० )

जीवच्छरीरमात्रलक्षणं तु, आत्मविशेषगुणजनकमनःसंयोगावच्छेदकत्वम्। ( त० भा० )

३ तदर्थश्च—[ क ] अत्र,—आश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाश्रयत्वादि लक्षणत्रयम्। इन्द्रियाश्रयत्वं चावच्छेदकताख्यस्वरूपसंबन्धविशेषेण; 'चक्षुष्मान् देवदत्तोऽयम्' इत्यादिप्रतीतेः। 'अर्थाश्रयत्वम्' इत्यत्रार्थशब्दः सुख-दुःखा-न्यतरपरः। ( गौ० वृ० १।११ ) [ ख ] शरीरानुविधानमिन्द्रियाश्रयत्वम्। शरीरस्योपघातानुविधानमित्यर्थः। (न्या० वा० १।१।११। पृ० ७१ )

४ यदवच्छिन्नात्मनि भोगो जायते, तद्भोगायतनमित्यर्थः। ( त० दी० )

५ हस्ताद्यवयवानां शरीरत्वानङ्गीकारे त्वन्त्यावयवित्वं देयम्। तथा चोक्तं तार्किकरक्षायाम्—"शरीरमन्त्यावयवि चेष्टाभोगेन्द्रियाश्रयः" इति। ( ता० र० परि० १। श्लो० २८ )

---

* शरीरत्वं तु न जातिः; पृथिवीत्वादिना संकरात्। ( वै० वि० ४।२।१ ) ( मु० १। परि० २ ) ( गौ० वृ० १।११ )

† अत्रत्यपदप्रयोजनमुच्यते—हस्तत्व-पृथिवीत्व-द्रव्यत्व-सत्त्वादिवारणाय प्रथमवृत्त्यन्तं दत्तम्। घटत्वादिवारणाय 'चेष्टावद्वृत्ति' इति पदम्। घटशरीरसंयोगादिवारणाय 'जाति' इति पदम्। एवं च—मनुष्यत्व-चैत्रत्वा-दिजातिमादाय मानुषादिशरीरे लक्षणसमन्वयः। कल्पभेदेन नृसिंहशरीरस्य नानात्वात् नृसिंहत्वजातिमादाय तत्र लक्षणसमन्वयः।

पार्थिवशरीरम् । ( त० सं० ) । शरीरं द्विविधम्,—योनिजम्, अयोनिजं च । ( वै० ४।२।५ ) योनिजमयोनिजं च पार्थिवशरीरम् । आप्यं तैजसं वायवीयं चायोनिजमेव; वरुणा-दित्य-वायु-लोकेषु प्रसिद्धं च ( वै० उ० ४।२।११ ) । तत्र योनिजं ( पार्थिवशरीरम् ) द्विविधम्,—जरायुजम्, अण्डजं च । जरायुजं मानुष-पशु-मृगाणाम् । अण्डजं पक्षिसरीसृपाणाम् । ( प्रशस्त० पृ० ४ ) । अयोनिजं पार्थिवशरीरं च त्रिविधम्,—स्वेदजम्, उद्भिज्जम्, अदृष्टविशेषजन्यं च । तत्र,—स्वेदजं शरीरं यूकालिक्षादीनाम् । उद्भिज्जं वृक्ष-तृण-गुल्मादीनाम् । अदृष्ट-

१ तच्च शरीरं न पाञ्चभौतिकम् ( जलादिपरमाणुद्वयसंयोगाद्यसमवायिकारणकम् ); पृथिवीत्वजलत्वादिजातीनां परस्परसांकर्यप्रसङ्गात्; किंतु—पार्थिवमेव; स्वाभाविक*गन्धवत्त्वात् । मानुषादिशरीरेषु क्लेदपाकादीनां जलादिविकाराणामुपलब्धिस्तु, पञ्चानां भूतानां परस्परमुपष्टम्भकसंयोगादेव, इति । ( वै० ४ । २ । २–४ ) ( वात्स्या० ३ । १ । २८ ) एवं जलीय-तैजस-वायवीय-शरीरेष्वपि विज्ञेयम् ।

२ अयोनिजत्वं च शुक्रशोणितसंनिपातानपेक्षत्वम् । ( वै० उ० ४ । २ । ५ ) ( प्रशस्त० पृ० ४ )

३ तदुक्तं योगार्णवे—"देहश्चतुर्विधो जन्तोर्ज्ञेय उत्पत्तिभेदतः । उद्भिज्जः स्वेदजोऽण्डोत्थश्चतुर्थश्च जरायुजः ॥ उद्भिद्य भूमिं निर्गच्छन्नुद्भिज्जः स्थावरश्च यः । ............उद्भिज्जाः स्थावरा ज्ञेयास्तृणगुल्मादिरूपिणः" इति । ( वाच० )

४ तत्र प्रमाणमनुमानम् । तच्च,—'जलत्वाद्यपि सामान्यं शरीरसमवायिगम् । द्रव्यारम्भकनिष्ठस्थजातित्वात्पृथिवीत्ववत्' इति । ( त० व० प्रमाणपरि० पृ० ११६ ) ।

५ शुक्रशोणितसंनिपातजन्यं योनिजम् । ( प्रशस्त० पृ० ४ )

६ सर्प-कीट-मत्स्यादयोऽपि सरीसृपा एव । ( वै० उ० ४ । २ । ५ )

७ अत्रेदं बोध्यम्—अयोनिजपार्थिवशरीराणामुत्पत्तिर्धर्मविशेषसहितेभ्योऽणुभ्य एव स्वीक्रियते; ( दि० १ ) ( त० कौ० ) । "अहंकारेभ्यः समभवदङ्गिराः" इत्यन्वर्थसंज्ञाया आगमेऽपि दर्शनात्, इति । ( त० व० पृ० ११७ )

८ यद्यपि वृक्षादीनां † शरीरत्वमस्त्येव । तथापि, चेष्टावत्त्वमिन्द्रियवत्त्वं च नोद्भिदां स्फुटतरम्, अतो न शरीरव्यवहारः । ( वै० उ० ४ । २ । ५ ) । केचित्तु,—वृक्षादीनां शरीरत्वं नेच्छन्ति । ( त० व० पृ० ११६ )

* अत्र सूत्रम्—"पार्थिवं गुणान्तरोपलब्धेः" इति । ( गौ० ३ । १ । २८ ) श्रुतिरपि—"सूर्यं ते चक्षुर्गच्छतात्" इत्यत्र मन्त्रे "पृथिवीं ते शरीरम्" इति श्रूयते । ( वात्स्या० ३ । १ । २९ )

† वृक्षादीनां शरीरत्वे प्रमाणमनुमानं प्रदर्श्यते—[ क ] वृक्षादावपि चेष्टाऽस्त्येव; [illegible]

विशेषजन्यं मन्वादीनां देवर्षिनारदादीनां च। ( त० कौ० )। क्षुद्रजन्तूनां ऊष्मजानां मशकादीनां तु यातनाशरीरमप्ययोनिजमेव। ( वै० उ० ४।२।९ ) ( मु० १ ) ( सि० च० )

सुश्रुते विशेष उक्तः—"द्रव्याणि पुनरोषधयस्ता द्विविधाः,—स्थावराः, जङ्गमाश्च। तासां स्थावराश्चतुर्विधाः,—वनस्पतयः, वृक्षाः, वीरुधः, ओषधयश्च, इति। जङ्गमा अपि चतुर्विधाः,—जरायुजाण्डजस्वेदजोद्भिज्जाः। तत्र—पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। क्रिमिकीटपिपीलिकाप्रभृतयः स्वेदजाः। इन्द्रगोप-मण्डूकप्रभृतय उद्भिज्जाः" इति।

---

१ श्रूयते च 'ब्रह्मणो मानसा मन्वादयः पुत्राः' इति। अत्र ब्राह्मणमपि—"प्रजापतिः प्रजा अनेका असृजत्। स तपोऽतप्यत। प्रजाः सृजेयमिति। स मुखतो ब्राह्मणमसृजत्। बाहुभ्यां राजन्यम्। ऊरुभ्यां वैश्यम्। पद्भ्यां शूद्रम्" इति। ( वै० उ० ४।२।११ )।

२ 'दुर्वासःप्रभृतयो मानसाः, अहंकारेभ्यः समभवदङ्गिराः' इति समाख्या। ( वै० ४। २। ८ ) ( प० मा० )। केचित्तु,—देवादीनां शरीरं तैजसमाहुः। ( त० व० )

३ एतच्छरीरं स्वधर्मविशेषसहितेभ्योऽणुभ्य एव जायते, इति ज्ञेयम्। ( वै० ४। २। ७ ) ( प० मा० )

---

कवायुसंबन्धात्। अन्यथा ( तादृशवायुसंबन्धानङ्गीकारे ),—भग्नक्षतसंरोहणादिकं न स्यात्। [ ख ] वृक्षादयोऽपि शरीरभेदा एव; भोगाधिष्ठानत्वात्; न खलु भोगाधिष्ठानत्वमन्तरेण जीवन-स्मरण-स्वप्न-जागरण-भेषजप्रयोग-बीजसजातीयानुबन्धानुकूलोपगम-प्रतिकूलापगमादयः संभवन्ति; भोगोपपादकः प्राणवायुः; तदुपपादकं तु वृद्धिक्षतभग्नसंरोहणादिकम्, इति।

आगमोऽप्यस्ति प्रमाणम्,—( १ ) "नर्मदातीरसंभूताः सरलार्जुनपादपाः। नर्मदातोयसंस्पर्शात्ते यान्ति परमां गतिम्॥ गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः। श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः" इत्यादि। ( वै० उ० ४।२।५ ) ( दि० १। २ )। ( २ ) शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादि। (याज्ञ०) (स० प० पु० ११६)

**शरीरी**—जीवात्मा । यथा–"अथाकाशशरीरिणाम्" ( भा० प० श्लो० २७ ) इत्यादौ, 'शरीरि'शब्दस्यार्थः ।

**शाक्यः**—बुद्धः । 'शाक्य' शब्दनिरुक्तिरन्यथोक्ता यथा–"शाकवृक्षप्रतिच्छन्नं वासं यस्मात्प्रचक्रिरे । तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति श्रुताः" इति ( भरतधृतवचनम् ) । ( वाच० ) शिष्टं तु 'बुद्ध'शब्दे दृश्यम् ।

**शाठीसमः**—( जातिः ) 'त्वत्पक्षे किंचिद्दूषणं भविष्यति' इति शङ्का । ( गौ० वृ० ५।३७ )

**शानच्**—( प्रत्ययः ) १ प्रकृतधात्वर्थकर्ता कर्तृशानचोऽर्थः । ( तर्का० ४ । पृ० १२ ) यथा–'पचमानः' इत्यादौ । ( स्व० ) । २ धात्वर्थजन्यफलवान् कर्मशानचोऽर्थः । यथा–'पच्यमान इत्यादौ । एवं कृतामप्यर्था ऊह्याः । भावकृतां ( ल्युट्-घ-जातीनाम्) तु प्रयोगसाधुत्वमात्रं प्रयोजनम्, इति विज्ञेयम् ।

**शान्तिः**—१ [ १ ] उपद्रवनिवारणम् । यथा–'शान्ता पृथिवी,' 'शान्तं पापम्' इत्यादौ । [ २ ] वेदान्तिनस्तु;—कामक्रोधादिजयः; विषयेभ्यो मनसो निवारणं च, इत्याहुः । २ दुर्गादेवी, इति शाक्ता आहुः । ३ दैवज्ञास्तु,–पूजा-होम-जप-दानादिद्वारा गोचरविलग्नादिस्थग्रहदौःस्थ्यदुःस्वप्नादिसूचितैहिकानिष्टहेतुपापनिर्वृत्तिः । यथा–उदकशान्तिः, वास्तुशा-

---

१ तत्स्वरूपं भावप्रकाशे सुश्रुतादौ चोक्तं यथा—"गर्भाशयगतं शुक्रमार्तवं जीवसंज्ञकः । प्रकृतिः सविकारा च तत्सर्वं गर्भसंज्ञकम् ॥ कालेन वर्धितो गर्भो यदाङ्गोपाङ्गसंयुतः । भवेत्तदा स मुनिभिः शरीरीति निगद्यते" इति । तल्लक्षणादिकं तु 'जीव'शब्दव्याख्याने दृश्यम् ।

२ इयमत्राख्यायिका—'पितृशप्ताः केचिदिक्ष्वाकुवंश्या गोतमवंशजकपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षे कृतवासाः 'शाक्य' इति ख्यातिमापन्नाः' इति । ( वाच० )

३ अयं शाठीसमश्च सूत्रानुक्तोऽपि 'कार्यसम'प्रभेदः, इति वृत्तिकृता प्रतिपाद्यते, इति विज्ञेयम् ।

४ तदुक्तम्–"यथा शस्त्रप्रहाराणां कवचं विनिवारकम् । तथा दैवोपघातानां शान्तिर्भवति कारणम्" इति । ( मलमासधृतवाक्यम् )

न्तिः, भुवनेश्वरीशान्तिः, इत्याहुः। आलंकारिकास्तु,—शमस्थायि[1]भावक-निर्वेदव्यभिचारिभावक-शान्ताख्यरसविशेषनिष्ठो धर्मविशेषः, इत्याहुः।

**शाब्दज्ञानम्**—'शाब्दबोध'शब्दवदस्यार्थोऽनुसंधेयः।

**शाब्दबोधः**[2]—( अनुभवः ) पदज्ञान[3]करणकं ज्ञानम्। ( मु० १ ) तच्च वाक्यार्थ[4]ज्ञानम्। ( त० सं० ४ ) यथा—'गामानय' इति वाक्यजन्य[5]:

---

१ तदुक्तम्—"शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः। कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः" इत्यादि ( सा० द० परि० ३। श्लो० २३८। पृ० ६४ )

२ अत्र व्युत्पत्तिः—'शब्दाज्जायमानो बोधः शाब्दबोधः' इति। तत्र ( बोधे ) शाब्दत्वं च [ क ] 'शब्दात्प्रत्येमि' इत्यनुभवसिद्धो जातिविशेषः। [ ख ] *अन्यपदधीजन्यत्वव्यभिचार्य-नुभवत्वाव्यापक-जातिशून्यत्वे सति, पदविषयकत्वाव्यभिचारिजातिशून्यधीत्वम्। ( न्या० म० परि० ४। पृ० १ )

शाब्दबोधलक्षणं तु, शक्ति-लक्षणा-ऽन्यतरसंबन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणता-निरूपितकार्यत्वम्। ( वाक्य० ४ )

३ 'अत्र पदज्ञानं करणम्; पदार्थोपस्थिति †-र्व्यापारः; शाब्दबोधः फलम्। पदज्ञानस्य च, शक्तिज्ञानम् †, आकाङ्क्षा-योग्यता-संनिधीनां ज्ञानं च सहकारि' इति नव्यनैयायिकानां मतम्। प्राञ्चां मतं तु,—'तत्र ( शाब्दबोधे ) ज्ञायमानं पदमेव करणम्; न तु ‡ पदज्ञानं करणम्,' इति। ( त० प्र० ख० ४। पृ० १ ) ( मु० ४ पृ० १७४ ) ( मा० प० ) ( त० कौ० )

४ एकपदार्थेऽपरपदार्थसंसर्गविषयकं ज्ञानम्, इत्यर्थः। ( वाक्य० ४ )

५ अत्रेयं शाब्दबोधप्रक्रिया—[ क ] प्रथमं गवादिपदानां गवादौ 'गवादिर्गवादिपदशक्यो लक्ष्यो वा' इति संबन्धज्ञानम्; ततः कालान्तरे, केनचित् 'गामानय त्वम्' इत्युक्ते ग-

---

* विग्रहश्च—अन्यपदधीजन्यत्वव्यभिचारिणी, अनुभवत्वाव्यापिका च या जातिः ( प्रत्यक्षत्वादिः ), तच्छून्यत्वे सति, पदविषयकत्वाव्यभिचारिणी या जातिः ( उपमितित्वम् ), तच्छून्यधीत्वम्, इति। ( त० प्र० परि० ४। पृ० ३ )

अत्र पदप्रयोजनम्—सत्यन्तं प्रत्यक्षा-नुमिति-स्मृतीनां वारणाय। उपमितावतिव्याप्तिवारणाय शून्यान्तम्। ( न्या० म० परि० ४। पृ० २ )

† अत्र विशेयम्—तस्यां ( पदार्थोपस्थितौ ) वृत्तित्वेन वृत्तिज्ञानं ( न तु शक्तित्वेन, लक्षणात्वेन वा प्रातिस्विकरूपेण ज्ञानम् ) सहकारि, इति।

‡ अत्र नव्या आहुः—ज्ञायमानपदस्य करणत्वाङ्गीकारे,—पदाभावेऽपि मौनिश्लोकादिना, हस्तचेष्टादिना च शाब्दबोध उत्पद्यते, स न स्यात्; अतस्तत्र शाब्दबोधोपपत्तये 'पदज्ञानमेव करणम्, न तु ज्ञायमानं पदं करणम्' इत्यवश्यमङ्गीकर्तव्यम्, इति। (मु० ४। पृ० १७४)

'गोकर्मकानयनानुकूलकृतिमांस्त्वम्' इति शाब्दबोधः । ( वाक्य० ४ ) यथा वा—'चैत्रस्तण्डुलं पचति' 'देवदत्तो ग्रामं गच्छति' इत्यादितश्च शाब्दबोधः । शाब्दबोधो द्विविधः,—यथार्थः, अयथार्थश्च । तत्राद्यः शाब्दप्रमा; साच यथा—'नद्यास्तीरे पञ्च फलानि सन्ति' इत्यादिवाक्यार्थगोचरयथार्थज्ञानम् । द्वितीयः 'अग्निना सिञ्चति' इत्याद्ययोग्यवाक्यजन्यः शाब्दबोधः । द्विविधोऽपि शाब्दबोधः प्रत्येकं द्विविधः,—भेदान्वयविषयकः, अभेदान्वयविषयकश्च । तत्राद्यो 'राज्ञः पुरुषः' इत्यादिवाक्यजन्यः । द्वितीयो 'नीलो घटः' इत्यादिवाक्यजन्यः ।

---

वादिपदेभ्यो*गवादीनर्थान्स्मरति । आकाङ्क्षादीञ्जानतस्तदनन्तरं 'गोकर्मकानयनानुकूलकृतिमांस्त्वम्' इति शाब्दबुद्धिर्जायते, इति । ( वाक्य० ४ )

१ नैयायिकमते—कर्त्राख्यातस्थले ( चैत्रः पचतीत्यादौ ),—'पाकानुकूलकृतिमांश्चैत्रः' इति शाब्दबोधः । कर्माख्यातस्थले तु ( चैत्रेण पच्यते तण्डुल इत्यादौ ),—तृतीयाया आधेयत्वमर्थः, फलावच्छिन्नव्यापारो धात्वर्थः, आख्यातबलाच्च कृतेर्लाभः । तथा च—'चैत्रनिष्ठकृतिजन्यपाकजन्यफलशाली तण्डुलः' इत्यन्वयबोधः । ( त० प्र० ख० ४ । पृ० ५ )

२ देवदत्तो ग्रामं गच्छतीत्यत्र,—द्वितीयाया अर्थः कर्मत्वम्, धातोरर्थो गमनम्, जन्यत्वं संसर्गमर्यादया लभ्यम्, लटो वर्तमानत्वम्, आख्यातस्य कृतिः, तत्संबन्धः संसर्गमर्यादालभ्यः, एकवचनाद्युपस्थापितमेकत्वादि सर्वत्र प्रथमान्तपदोपस्थापितेऽन्वेति । एवं च—'ग्रामकर्मकगमनजनकवर्तमानकृतिमान्, एकत्वविशिष्टो देवदत्तः' इत्यन्वयबोधः ।

यत्र कर्तरि कृतेर्बाधस्तत्राख्यातस्य व्यापारादौ लक्षणा । यथा—रथो गच्छतीत्यत्र 'गमनजनकवर्तमानव्यापारवान्' इत्यर्थः । 'देवदत्तेन गम्यते ग्रामः' इत्यस्य 'देवदत्तवृत्तिकृतिजन्यगमनजन्यफलशाली ग्रामः' इत्यर्थः । तथा हि—वृत्तित्वं संसर्गफललभ्यम्, तृतीयायाश्च कृतिरर्थः, जन्यत्वं संसर्गः, गमनं धात्वर्थः, जन्यत्वं संसर्गः । फलं कर्माख्यनेपदार्थः, शालित्वं संसर्गः, इति ।

भावप्रत्यये तु,—'देवदत्तेन सुप्यते' इत्यस्य 'देवदत्तवृत्तिकृतिजन्यः स्वापः' इत्यर्थः; भावप्रत्ययस्थले फलाभावात् आत्मनेपदार्थो न भासते । ( तर्का० ४ । पृ० ११ )

३ अत्र—फलवत्प्रवृत्तिजननयोग्यत्वं यथार्थत्वम्, इति विज्ञेयम् । ( त० कौ० १ । पृ० ७ )

४ अत्र 'अभेदान्वयबोधं प्रति, समानविभक्ति-लिङ्ग-वचन-कत्वं प्रयोजकम्' इति सामान्यनियमो विज्ञेयः ।

---

* अत्र—पदस्य पदार्थस्मारकत्वं च, 'एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्' इति न्यायेन बोध्यम् । ( त० प्र० ४ । पृ० ९२ )

अत्र विप्रतिपत्तिः—सामान्यतः शाब्दबोधश्च 'धात्वर्थमुख्यविशेष्यकः, प्रथमान्तार्थमुख्यविशेष्यको वा' इति । तत्र—'धात्वर्थमुख्यविशेष्यक एव भवति' इति वैयाकरणा आहुः । नैयायिकास्तु,—'स च ( शाब्दबोधः ) प्रथमान्तार्थमुख्यविशेष्यक एव ज्यायान्,' इति प्राहुः ।

तत्र—धात्वर्थमुख्यविशेष्यकशाब्दबोधाङ्गीकर्तृवैयाकरणमते तादृशबोधोपपादकमुख्योदाहरणानि च,—'चैत्रेण सुप्यते, पश्य मृगो धावति, पचति भवति, शृणु मेघो गर्जति,' इत्यादीनि । प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकर्तृनैयायिकमते तादृशबोधोपपादकमुख्योदाहरणानि तु 'घटो न भवति पटः, त्रयः कालाः, पश्य लक्ष्मण! पम्पायां बकः परमधा-

---

तत्र समानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्; विरुद्धविभक्तिराहित्यं वा । ( ग० व्यु० १ ) शिष्टं तु 'समानविभक्तिकत्व'शब्दे द्रष्टव्यम् ।

१ तत्र प्रमाणं तु "भावप्रधानमाख्यातम्" इति यास्कमुनिनिरुक्तम् ।

२ नैयायिकानां मते तु,—"भावप्रधानमाख्यातम्" इति निरुक्तस्य 'भावः ( धात्वर्थः ), प्रधानं ( विशेष्यः ), यस्य ( आख्यातार्थस्य )' इति शाब्दिकादिसंमतं बहुव्रीहिमनादृत्य 'भावस्य प्रधानम्' इति षष्ठीतत्पुरुष आश्रीयते; लाघवात् ।

३ अत्र—'चैत्रेण सुप्यते' इत्यादौ 'चैत्रकर्तृकः स्वापः' इति क्रियामुख्यविशेष्यकः सर्वतन्त्रसिद्धो बोधः । 'पश्य मृगो धावति*' इत्यादौ 'मृगाभिन्नकर्तृकं धावनं पश्य' इति क्रियामुख्यविशेष्यको बोधः । 'पचति भवति' इत्यादौ 'पाकाभिन्नकर्तृकं भवनम्' इति क्रियामुख्यविशेष्यको बोधः 'शृणु मेघो † गर्जति' इत्यादौ तु 'मेघाभिन्नकर्तृकं गर्जनं शृणु' इति गर्जनरूपधात्वर्थमुख्यविशेष्यकः शाब्दबोधो वैयाकरणानां संमतः ।

४ 'घटो न भवति पटः' इति वाक्यात् 'घटभेदवान् पटः' इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । 'त्रयः‡ कालाः' इत्यत्र 'त्रित्वविशिष्टाः कालाः' इति कालमुख्यविशेष्यक एव बोधः ।

---

* अत्र वैयाकरणानामयमाशयः—धावनक्रियायाः दृशिक्रियायां कर्मतयाऽन्वयेऽपि, तस्याः प्रातिपदिकार्थत्वाभावान्न 'धावति' पदोत्तरं द्वितीयापत्तिः । नैयायिकमते तु,—मृगपदार्थस्य दृशिक्रियायामन्वयेन तस्य प्रातिपदिकार्थत्वेन च मृगपदोत्तरं द्वितीयापत्तिश्च, इति ।

† अत्रायं भावः—'श्रु'धात्वर्थ-श्रवणक्रियायां शब्दरूपस्य गर्जनस्यैव योग्यतयाऽन्वयः; न तु, नैयायिकमते इव गर्जनकर्तृमेघस्य कर्मतासंबन्धेनान्वयः; अयोग्यत्वात्, इति ।

‡ अत्र नैयायिकानामयमाशयः—'त्रयः कालाः' इत्यत्र क्रियासमभिव्याहाराभावान्न क्रियामुख्यविशेष्यको बोधः । कालत्रयस्य जीवेन ज्ञातुमशक्यत्वेन 'जीवेन ज्ञायन्ते' इत्य-

र्मिकः, अश्वो गच्छत्यानय-,' इत्यादीनि द्रष्टव्यानि । मीमांसकास्तु,—सर्वत्र, आख्यातार्थव्यापारमुख्यविशेष्यक एव शाब्दबोधो भवति, इत्याहुः ।

**शाब्दिकः**—व्याकरणशास्त्राभिज्ञः । यथा—पाणिनिः शाब्दिकः । अष्टौ शाब्दिकाः,—"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः । पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः" इति । ( कविकल्पद्रुमे )

**शालग्रामः**—१ पर्वतविशेषः । २ तत्रत्यो विष्णुमूर्तिविशेषः । ३ गण्ड-

---

१ 'परमधार्मिको बकः पश्य' इत्यादौ 'परमधार्मिकत्वविशिष्टबकं पश्य*' इति बोधः । अश्वो गच्छत्यानय† इत्यादौ च 'गमनकर्त्रश्वमानय' इति प्रथमान्तार्थमुख्यविशेष्यक एव शाब्दबोधो नैयायिकानामभिमतः ।

२ अत्र व्युत्पत्तिः—'शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा' ( ठक् ) इति ।

---

स्याध्याहारासंभवेऽपि 'ईश्वरेण ज्ञायन्ते' इत्यस्याध्याहारे क्रियमाणे तु मानाभावः; 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यनियमस्य बोधपरत्वेन तत्रालाभाच्च; । 'सन्ति' इत्यस्य तु नाध्याहारः संभवति; इदानीं त्रयाणां कालानामविद्यमानत्वात्, इति ।

* अत्रायं भावः—परमधार्मिकत्वविशिष्टबकस्य वाक्यार्थत्वेन पदार्थत्वाभावात्प्रातिपदिकार्थत्वमेव नास्ति, इति न बकपदोत्तरं द्वितीयापत्तिः । एवमेव—'पश्य मृगो धावति' इत्यादावप्युपपत्तिर्द्रष्टव्या । 'पचति भवति' इत्यादौ तु,—तथा भाष्यप्रयोगादेव तथा बोधः ( क्रियामुख्यविशेष्यकबोधः ) स्वीक्रियते; न तु, आधुनिकप्रयोगात्तथाबोधोऽस्माभिः स्वीक्रियते, इति ।

† अत्रायं भावः—'शृणु मेघो गर्जति' इत्यादौ,—वैयाकरणमते, मेघकर्तृकगर्जनस्य श्रवणक्रियायामन्वयोपपत्तावपि, 'अश्वो गच्छत्यानय' इत्यादौ,—तन्मते, अश्वकर्तृकगमनस्यानयनक्रियायामन्वयायोग्यतया बाधादन्वयानुपपत्तिः । अतः,—गमनकर्त्रश्वस्यैवानयनक्रियायामन्वयः स्वीकार्यः, इति लब्धोऽयं प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधो नैयायिकानाम् । किं च—'शृणु मेघो गर्जति, नटो गायति शृणु, घटो नश्यति पश्य,' इत्यादौ,—श्रवणादिक्रियायां मेघाद्यन्वयासंभवेऽपि, 'सविशेषणे हि विधि-निषेधौ सति विशेष्ये बाधे विशेषणमनुभवतः' इति न्यायेन, विशेषणेषु गर्जन-गान-अभावेषु श्रवण-दर्शनान्वयसंभवात्, इति । अत एव—'शङ्खाः श्रूयन्ते,' भेर्यः श्रूयन्ते,' इति महाभाष्यम्; "अश्रूयत पाञ्चजन्यः" इति माघप्रयोगश्च ( स० ३ । श्लो० २१ ) संगच्छते, इति । वैयाकरणास्त्वेवमत्रोपपत्तिं चक्रुः—'अश्रूयत पाञ्चजन्यः, वीणा श्रूयते, पुष्पाण्याघ्रायन्ते' इत्यादौ,—धर्मधर्मिणोरभेदोपचाराच्छ्रवणाद्यन्वय उपपद्यते, इति ( माघ० टी० ३ । २१ ) इत्यलं विस्तरेण ।

कथा तथा एकदेशस्थलविशेषजातो विष्ण्वादिदेवचक्रयुतशिलाविशेषः । यथा—ब्राह्मणगृहे नित्यं पूजनीयाः श्रीवासुदेव-हयग्रीव-श्रीलक्ष्मीनृसिंह-सीतारामाख्याः शालग्रामाः ।

**शासनम्**—१ [ क ] प्रवर्तकव्यापारः । स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः । यथा—'माणवकं धर्मं शास्ति' इत्यादौ शास्तेरर्थः । ( ल० म० )

[ ख ] निकृष्टस्य हितसाधनं प्रवर्तनम् । २ राजदत्तभूमिः । ३ राजलेख्यविशेषः । ४ शिक्षा ( दण्डः ), इति व्यवहारज्ञा आहुः ।

**शास्त्रम्**—[ १ ] प्रमाणादिवाचकपदसमूहः; व्यूहविशिष्टः । यथा—पञ्चाध्यायी ( न्यायदर्शनम् ) शास्त्रम् । ( न्या० वा० पृ० १–२ )

[ २ ] ज्ञानविशेषाधायकग्रन्थः । यथा—वैशेषिकदर्शनम् । शास्त्रं द्विविधम्,—सच्छास्त्रम्, असच्छास्त्रं च । तत्र सच्छास्त्रं च हितानुशासनग्रन्थः । यथा—ऋगादिशास्त्रम् । असच्छास्त्रं तु बौद्धचार्वाकादिप्रणीतशा-

---

१ शालग्रामोत्पत्तिप्रकारस्तु—"कीटयोनिं प्रपद्येथाः" इति गण्डक्याः सुरान् प्रति शापे,—"तेन कर्मविपाकेन जडा कृष्णा नदी भव" इति देवानां गण्डकीं प्रति शापे च जाते,—विष्णुना तत्समाधानायोक्तं यथा—"शृणु ब्रह्मन्! महादेव! शृणु देव! गजानन! मत्कृते ब्राह्मणी माहमातङ्गौ शापतोऽत्र वै ॥ भविष्यतस्तयोर्मोक्षं भविष्यामि कलेवरम् । जीर्णे भविष्यति यदा तन्मेदोमज्जसंभवाः ॥ पाषाणान्तर्गताः कीटाः वज्राख्याः प्रभविष्यथ" इत्यादि । ( ब्रह्मवै० अ० १९ )। वासुदेवादिनाम-फल-भेदास्तु ( वराहपु० ) तत्र ज्ञेयाः ।

२ अथ प्रशंसा—"शालग्रामशिलास्पर्शं ये कुर्वन्ति दिने दिने । वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः" इति ।

३ अत्र व्युत्पत्तिः—'शिष्यतेऽनेन' ( शास-ष्ट्रन् ) इति शास्त्रम् ।

४ तदुक्तं स्कान्दे—"ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् । मूलरामायणं चैव शास्त्रमित्यभिधीयते । यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् । अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्" इति । ( मध्वभाष्य० १।१।३ । पृ० १५ )

५ तथाचोक्तम्—"अतो वेदविरुद्धार्थशास्त्रोक्तं कर्म संत्यजेत् । स्वबुद्धिरचितैः शास्त्रैः प्रतार्येह च बालिशान् ॥ निरुन्धन्ति श्रेयसो मार्गं लोकनाशाय केवलम् । निन्दन्ति देवता वेदांस्तपो निन्दन्ति सद्द्विजान् ॥ तेन ते निरयं यान्ति ह्यसच्छास्त्रनिषेवणात् । श्रुतिस्मृति-

त्वम् । सांख्य-योगादिकं पाशुपतादिशास्त्रं च स्वबुद्धिरचितत्वेनास-देव । शिष्टं तु 'दर्शन'शब्दे द्रष्टव्यम् ।

**शिक्षा**—१ [ क ] कर्तव्यत्वेन ज्ञानम् । ( राम० ) । यथा—"ग्रन्थारम्भे शिष्या अपि मङ्गलं कुर्युः' इति शिष्यशिक्षायै निबन्धं कुर्वन्" ( दि० १ । पृ० १ ) इत्यादौ 'शिक्षा' शब्दस्यार्थः ।

[ ख ] प्रवृत्तिप्रयोजकेष्टसाधनताज्ञानम् । यथा—"शिष्यशिक्षार्थं मङ्गलं निबध्नाति" इत्यादौ 'शिक्षा' शब्दस्यार्थः । २ [ १ ] स्वस्य विद्याप्राप्त्यनुकूलव्यापारः ( विद्योपादानम् ) । यथा—"अशिक्षतास्त्रं पितुरेव मन्त्रवत्" (रघु० ३।३१) इत्यादौ । [ २ ] अध्यापनम् । यथा—शिक्षक इत्यादौ । ३ वैदिकास्तु,—वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते, सा शिक्षा ( वेदाङ्गम् ) । यथा—"शीक्षां व्याख्यास्यामः । वर्णः स्वरः, मात्रा बलम्, साम संतानः, इत्युक्तः शीक्षाध्यायः" इति । ( तैत्ति० उप० )

---

सदाचारविहितं कर्म शाश्वतम् ॥ स्वं स्वं धर्मं प्रयत्नेन श्रेयोऽर्थीह समाचरेत् । स्वबुद्धिरचितैः शास्त्रैर्मोहयित्वा जनं नराः ॥ तेन ते निरयं यान्ति युगानां सप्तविंशतिम्" इति । ( पद्म पु० अ० १७ ) ( वाच० )

१ तामसशास्त्राणि च पद्मपुराणे पार्वतीं प्रतीश्वरेणोक्तानि यथा—"शृणु देवि ! प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥ प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् । मच्छक्त्याऽऽवेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥ कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् । गोतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥ द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः । निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥ धिषणेन च संप्रोक्तं चार्वाकमतिगर्हितम् । दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥ बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् । मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ॥ मयैव कथितं देवि ! कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् ॥ कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते । सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ॥ परात्मजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते । ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया ॥ सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे । वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि ! जगतां नाशकारणात्" इति ( सांख्यप्रवचनभाष्यप्रस्तावनायां धृतानि पद्मपुराणवचनानि, पृ० ६–७ ) ( वाच० )

२ अस्याः शिक्षायाश्च, पाणिनिशिक्षा-नारदशिक्षा-व्यासशिक्षाऽऽदयो ग्रन्थाः सन्ति ।

**शिथिलः**—( गुणः ) अदृढः संयोगविशेषः । स च तूलकादौ परिमाणं जनयति । ( भा० प० गु० श्लो० ११३ ) । अत्र शिष्टं तु 'प्रचय'शब्दव्याख्याने द्रष्टव्यम् ।

**शिष्टः**—१ [ १ ] A फलसाधनत्वांशे भ्रान्तिरहितः, । ( दि० १ । पृ० ९ ) । B इष्टसाधनत्वांशेऽभ्रान्तः । ( मू० म० १ ) यथा—मन्वादिः शिष्टः । ( म० वा० १ ) । [ २ ] धर्मज्ञास्तु,—A स्वीकृतवेदप्रमाणभावः । B वेदप्रामाण्याभ्युपगन्तृत्वे सति, यो यदा वेदनिषिद्धाकर्ता, सः, इत्याहुः । ( चि० मङ्ग० १ । १०६–१०८ ) यथा—शुको-हालकादिः शिष्टः । ( स्व० ) [ ३ ] कर्मज्ञाश्च,—वेदोक्ततत्त्वज्ञानेन वेदविहितकर्मकारी ( नील० पृ० २ ) ( सि० च० ) । यथा—जनक-श्वेतकेत्वादिः शिष्टः, इत्याहुः । ( स्व० ) । २ कृतशासनः । ३ अवशिष्टः पदार्थः ।

**शिष्टाचारः**—सद्व्यवहारः । यथा—"मङ्गलं वेदबोधितकर्तव्यताकम्,

---

१ अत्र शिष्टत्वं च क्षीणदोषपुरुषत्वम् । यथा—मन्वादीनां शिष्टत्वम्, इति प्राञ्च आहुः । ( न्या० सि० दी० पृ० २ )

२ यावद्वेदविशेष्यक 'सर्वे वेदाः स्वस्वतात्पर्यविषयार्थे प्रमाणम्' इत्याकारकानाहार्यनिश्चयवान्, इत्यर्थः । ( मू० म० १ । पृ० १०८ ) अत्र,—'बालकपतितान्त्यजाद्यतिरिक्तः' इति विशेषणमस्ति । ( मू० म० १ । पृ० १०६ )

३ अत्राभिधीयते—"न पाणिपादचपलो न नेत्रचपलो मुनिः । न च वागङ्गचपल इति शिष्टस्य लक्षणम्" इति (भार० आश्व०) । "धर्मो नातिगतो यैस्तु वेदः सपरिबृंहितः । ते शिष्टा ब्राह्मणाः प्रोक्ता नित्यमात्मगुणान्विताः" इति ( कूर्म० उप० १ । अ० ४ ) । "विशेषशब्दनिष्ठस्तु शेषः शिष्टः प्रकीर्त्यते । मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः ॥ मनुः सप्तर्षयश्चैव लोकसंतानकारणात् । तिष्ठन्तीह च धर्मार्थे ताञ्छिष्टान् परिचक्षते ॥ तैः शिष्टैः स्थापितो धर्मः स्थाप्यते वै युगे युगे" इति ( मत्स्यपु० अ० १२० )

४ अत्रेदं बोध्यम्—"आचारश्चैव साधूनाम्" इति मनुनाऽऽचारस्य धर्मे प्रामाण्यमुक्तम् । स च वेदाविरुद्ध एव प्रमाणम् । श्रुतिस्मृत्योर्भिन्नविषयत्वे सदाचारेण तत्र धर्मो निर्णेयः । श्रुतिविरोधे स्मृतेरप्रामाण्यवत्, स्मृतिविरोधे सदाचारस्य न धर्मनिर्णायकत्वम् । तेन, दाक्षिणात्यानां मातुलकन्यापरिणयस्य शिष्टैराचर्यमाणत्वेऽपि न प्रामाण्यम् । एतेनैव "विरोधे त्वनपेक्ष्यं स्यात्, असति ह्यनुमानम्" ( जैमिनि० अ० १ । पा० ३ । सू० ३ ) इत्यनेन निर्णीतम् ।

अलौकिकाविगीतशिष्टाचार[1]विषयत्वात्, दर्शादिवत्" ( त० दी० १ ) इत्यादौ 'शिष्टाचार'शब्दस्यार्थः ।

**शिष्यः**[2]—शिक्षणीयः[3] ( उपदेश्यश्छात्रः ) । यथा—श्रीसत्यवतीसुत-बादरायण-व्यासस्य शिष्यः[4] श्रीपूर्णप्रज्ञाचार्यः ( मध्वाचार्यः ) ।

**शीतः**—१ [ १ ] ( गुणः ) स्पर्शविशेषः । यथा—"शीतस्पर्शवत्य[5] आपः" इत्यादौ । ( त० सं० ) [ २ ] शीतस्पर्शयुक्तः पदार्थः । यथा—"शीतं शिलातलम्" ( मु० १ ) इत्यादौ, 'शीत'शब्दस्यार्थः । २ वृक्षविशेषः ।

---

वसिष्ठेनाऽपि—"तदभावे शिष्टाचारः प्रमाणम्" इत्युक्तम् । ततश्च,—शिष्टाचारेण मूलस्मृतिरनुमीयते । यथा—होलिकाद्याचारात् । ततः,—स्मृत्या मूलश्रुतिरनुमातव्या, इति । ( अधिकरणमाला० )

अत्राभिधीयते—"ततः स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागशः । एवं वै विविधो धर्मः शिष्टाचारः स उच्यते ॥ त्रयी वार्ता दण्डनीतिः प्रजावर्णाश्रमेज्यया । शिष्टैराचर्यते यस्मात् शिष्टाचारः स शाश्वतः ॥ दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः । अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ॥ शिष्टमस्माचरन्त्येनं मनुः सप्तर्षयश्च ये । मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ॥ श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः । शिष्टाचारविरूढस्तु धर्मः स साधुसंमतः" इति । ( मत्स्यपु० अ० १२५ )

१ अत्राहुः—शिष्टाचारत्वं च,—[ क ] A. शिष्टेन परलोकानुकूलतया क्रियमाणत्वम् । B. प्रतिबन्धकदुरितवारणमुद्दिश्य क्रियमाणत्वं वा । अश्वमेध-कारीर्यादौ व्याप्तिः सुप्रसिद्धा, इति । [ ख ] यत्कार्यं प्रति यस्य कारणत्वमन्वयव्यतिरेकोपजीवनेन न गृह्यते तत्कार्यमुद्दिश्य शिष्टेन तस्य क्रियमाणत्वम्, इति । ( न्या० सि० दी० पृ० २ )

२ तल्लक्षणं च,—"शान्तो विनीतः शुद्धात्मा श्रद्धावान् धारणे क्षमः । समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो धनी ॥ एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा" इति । ( तन्त्रसा० )

३ अत्रोच्यते—"गुरुता शिष्यता वाऽपि तयोर्वत्सरवासतः" इति । तथा चोक्तं सारसंग्रहे—"सद्गुरुः स्वाश्रितं शिष्यं वर्षमात्रं प्रतीक्षयेत् । वर्षेकेन भवेद्योग्यो विप्रो गुणसमन्वितः" इत्यादि ।

४ "आचारं शासयेद्यस्तु स आचार्य उदाहृतः । य आचार्यपराधीनस्तद्वाक्यं धार्यते हृदि ॥ शासने स्थिरबुद्धिश्च शिष्यः सद्भिरुदाहृतः" इति । ( पद्मपु० उ० अ० २५ )

५ अत्र—शीतत्वं च स्पर्शनिष्ठो जातिविशेषः प्रत्यक्षसिद्धः, इति ज्ञेयम् ।

**शुक्रम्**— १ मज्जजातचरमधातुः। २ दैत्यगुरुर्ग्रहविशेषः। ३ अग्निः। ४ ज्येष्ठमासः। ५ विष्कम्भादिषु ( २७ ) योगेषु चतुर्विंशो योगविशेषः।

**शुचिः**—१ शुक्लवर्णः। २ [ १ ] स्नानादिजन्यपुण्यविशेषवान्। [ २ ] शौचापरपर्यायशुद्धिमान्। ३ सूर्यः। ४ अग्निः। ५ अर्कवृक्षः।

**शुद्धत्वम्**—१ तदितरधर्मानाक्रान्तत्वम्। यथा—"शुद्धपर्वतत्वावच्छिन्नो-देश्यतानिरूपितशुद्धसंयोगसंबन्धावच्छिन्नशुद्धवह्नित्वावच्छिन्न-विधेयताका-नुमितिं प्रति" ( ग० २। संश० पक्ष० ) इत्यादौ,—पर्वतत्वादेः शुद्ध-त्वम्। ( स्व० )। २ 'शुद्धि'शब्दवदस्यार्थोऽनुसंधेयः।

---

१ अत्रोक्तम्—"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्जा-च्छुक्रस्य संभवः" इति। ( भावप्र० )

ततः स्थूलो भागो रसो मासेन पुंसां शुक्रम्, स्त्रीणां चार्तवं शुक्रं च भवति। उक्तं च सुश्रुते—"एवं मासेन रसः शुक्रो भवति, स्त्रीणां चेति" इति। एवं च—रस एव'केदार-कुल्या' न्यायेन सर्वान् धातून् पूरयन् मासेन नवदण्डोत्तरेण शुक्रमार्तवं च भवति, इति सिद्धान्तः। ( वाच० )

अथ शुक्रस्य स्थानमाह—[ क ] "यथा पयसि सर्पिस्तु गूढश्चेक्षौ रसो यथा। एवं हि सकले काये शुक्रं तिष्ठति देहिनाम्" इति। [ ख ] कण्डराणां प्ररोहः स्यात् स्थानं तत् वीर्य-मूत्रयोः। स एव गर्भस्याधानं कुर्याद्गर्भाशये स्त्रियाः। ............वृषणौ भवतः सारात् कफासृग्भ्यां च मेदसाम्। वीर्यवाहिसिराधारौ तौ मतौ पौरुषावहौ। ( भावप्र० )

अथ शुक्रस्य क्षरणमार्गमाह—"व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः। मूत्रस्रोतःपथे शुक्रं पुरुषस्य प्रवर्तते" इति। ( भाव-प्र० ) ( वृद्धवाग्भट० )

२ अस्य 'शुक्र' इति नाम्नि कारणमाह—"नन्दिनाऽपहृते शुक्रे गिलिते च विषादिना" इत्युपक्रम्य "तेन शब्देन महता शुक्रः शंभूदरे स्थितः", इत्यभिधाय,—"शाम्भवेनाथ योगेन शुक्ररूपेण भार्गवः। चस्कन्द च स नामापि ततो देवेन भाषितः" इत्याद्युक्तम्। ( काशीखण्ड० )

३ अत्र—"शुचिस्तत्कालजीवी कर्म कुर्यात्" इत्यनया श्रुत्या शौचस्य कर्माङ्गत्वमुक्तम्।

४ अत्रोच्यते—"रूप-गन्ध-रस-स्पर्शैः शास्त्रोक्तैर्युक्तमुत्तमम्। प्रोक्षिताभ्युक्षितं द्रव्यं शुद्धमन्य-दशुचि स्मृतम्॥ स्वतः शुद्धमपि वाग्दुष्टं भावदुष्टमथापि वा। अशुचि स्यात्" इति। ( त० व० पृ० २३२ )। अत्राधिकं च 'शुद्धि'शब्दव्याख्याने द्रष्टव्यम्।

५ अयमाशयः—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—सामानाधिकरण्यसंबन्धेन सौन्दर्य-विशिष्टं पर्वतत्वमपेक्ष्य केवलपर्वतत्वस्य शुद्धत्वम्। सौन्दर्यविशिष्टपर्वतत्वं तु न शुद्धम्; तस्य पर्वतत्वातिरिक्तसौन्दर्यरूपधर्माक्रान्तत्वात्, इति।

शुद्धा—( लक्षणा ) [ क ] स्वशक्येन साक्षात्संबन्धः। यथा—'आयुर्घृतम्' इत्यादौ। ( म० प्र० ४। पृ० ४१ )

[ ख ] सादृश्याद्भिन्नः शक्यसंबन्धः। यथा—'आयुर्घृतम्' इत्यादौ 'आयुः'पदे लक्षणा। ( त० प्र० ख० ४। पृ० ३६ )। यथा वा—'गङ्गायां घोषः' इत्यादौ गङ्गापदे लक्षणा। सा ( शुद्धा ) च द्विविधा,—जहल्लक्षणा, अजहल्लक्षणा चेति। ( न्या० म० ४। पृ० १० ) एते एव लक्षणे 'लक्षणलक्षणा-उपादानलक्षणे' इत्यालंकारिकैर्व्यवह्रियेते। ( काव्यप्र० उ० २। श्लो० १० )

शुद्धाद्वैतम्—वेदान्तमतविशेषः। यथा—वल्लभाचार्यमतं शुद्धाद्वैतम्।

---

१ इयं लक्षणा जहल्लक्षणायामजहल्लक्षणायां चान्तर्भवति, इति नातिरिक्ता, इति ज्ञेयम्। (न्या० म० ४। पृ० १० )

२ अत्रायं भावः—आयुर्घृतयोः सामानाधिकरण्यानुपपत्त्या 'आयुः'पदमायुःसाधनं लक्षयति; तत्र—'आयुः' पदे शक्यजीवनकालसाधनत्वरूपसाक्षात्संबन्धस्य सत्त्वात्, इति। ( म० प्र० ४। पृ० ४१ )

३ अत्र—सादृश्यादन्यः शक्यसंबन्धश्च जन्यजनकभावः। तथा चात्र—'आयुः' पदस्यायुर्जनके लक्षणा। तत्र—आयुःपदशक्यसंबन्धो जनकत्वरूपो बोध्यः। तेन 'आयुर्जनकाभिन्नं घृतम्' इत्यन्वयबोधः। ( त० प्र० ४। पृ० ३६ )

४ अत्र—सादृश्यादन्यः शक्यसंबन्धस्तु संयोग एव; स च, प्रवाहप्रतियोगिकस्तीरानुयोगिकः, इति विज्ञेयम्।

५ अत्र व्युत्पत्तिः—[ क ] 'शुद्धयोः* ( कार्यकारणयोर्जीवब्रह्मणोः ), अद्वैतम् ( ऐक्यम् ), यत्र तत्' इति। [ ख ] केचित्तु,—'शुद्धं च तत्, अद्वैतं च' इति कर्मधारयसमासमङ्गीचक्रुः।

६ एतन्मते—भक्तिमार्गः; जीवब्रह्मणोरंशांशिभावः †; सत्कार्यवादः ( अहिकुण्डलवत्परिणामवादः ); जगतः सत्यत्वम् ‡; आविर्भाव-तिरोभावौ § च; एतानि स्वीक्रियन्ते, इति ज्ञेयम्।

७ अत्र संग्रहः—"शुद्धाद्वैतप्रचारेण मायावादनिवर्तकान्। श्रीमदाचार्यचरणान् प्रणमामि पुनः पुनः" इति। वल्लभाचार्यैः षोडश ग्रन्था: कृताः, इति च ज्ञेयम्

---

* अत्र शुद्धत्वं च मायासंबन्धराहित्यम्; तच्च इतरसंबन्धानवच्छिन्न-कार्यकारणादि-रूपद्वित्वप्रकारकज्ञानप्रतियोगिकाभाववत्त्वम्, इति।

† अत्र श्रुतिः—"स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति" इति। बृह० उप० २।१।२० )

‡ अत्रायमाशयः—प्रपञ्चः संसारश्चेति द्विविधा सृष्टिः। तत्र-प्रपञ्चस्य भगवत्कार्यत्वेन सत्यत्वं नित्यत्वं च। संसारस्य तु मायाकार्यत्वेन मिथ्यात्वमेव, इति।

§ एतन्मते,—अभावमार्गं न स्वीक्रियते, इति हृदयम्।

**शुद्धिः**—१ [ १ ] मार्जनम्; नैर्मल्यसंपादनं वा । तच्च [ क ] भस्मादिसंयोगसमानकालीन[1]ास्पृश्यस्पर्शप्रतियोगिकयावदभावसहित[2]भस्मादिसंयोगध्वंसः[3] । यथा—भस्मना कांस्यादिपात्रादिशुद्धिः[4] । ( त० दी० ) एवम्—शुद्ध्यन्तरमपि स्वयमूह्यम् ।

[ ख ] तत्तत्समयावच्छेदेन भस्मादिसंयोगप्रतियोगिकाऽनादिसंसर्गाभावस्तत्समानकालीनचाण्डालादिस्पर्शादिप्रतियोगिकयावदनादिसंसर्गाभावसमानाधिकरणः । ( न्या० सि० दी० पृ० २० ) । [ २ ] धर्मशास्त्रज्ञास्तु,—वैदिककर्मयोग्यत्वसंपादकसंस्कारविशेषः, इत्याहुः । २ दुर्गा देवी,

---

१ अत्र,—कालीनान्तं यावत्त्वं चाभावविशेषणम्; तादृशाभावसाहित्यं च ध्वंसविशेषणम्, इति बोध्यम् । ( नील० पृ० ४६—४७ )

२ साहित्यं चात्र संबन्धविशेषनियन्त्रितं सामानाधिकरण्यम् । ( नील० पृ० ४६ )

३ अत्रान्ये आहुः—[ क ] भोजनादिरूपकार्योद्देतारूपा कांस्यादावाधेयशक्तिः पदार्थान्तरमेव शुद्धिः । [ ख ] यद्वा—शुद्धिजनकत्वाभिमतेनाम्लादियोगेन ताम्रादौ तत्तद्द्रव्ये देवतासंनिधिरेव शुद्धिः । एवम्—प्रतिमादौ प्रतिष्ठादिना देवतासंनिधिरेव*शुद्धिः । तथा—घटादावपि शुद्धप्रतिष्ठादिकमपेक्ष्य प्रतिष्ठाविधिना † नयप्रयोजकीभूतो धर्मो जन्यते; अशुद्धप्रतिष्ठामपेक्ष्य भङ्गप्रयोजकोऽधर्मो जन्यते, इत्याहूयम्, इति । ( न्या० दी० पृ० १९—२० )

४ अत्र केचिदाहुः—स च संस्कारो भस्मादिप्रयोक्तृनिष्ठ ‡ एव, इति ।

अत्रेदमधिकं बोध्यम्—शुद्ध्यशुद्धी शास्त्रज्ञाप्ये संस्काररूपे; यथोक्तम्,—शुद्ध्यशुद्ध्योः संस्काररूपत्वेन एकपुरुषस्यैकदोभयस्थितिर्घटते । शुद्धेर्भावरूपत्वे अशुद्धेस्तदभावरूपत्वे नैतद् घटते; विरोधात् । अत एव शङ्खः—"ततः श्राद्धमशुद्धो§ तु कुर्यादेकादशे तथा । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः" इति । ( स पुनरशुद्धः कर्मान्तरे, इत्यर्थः ) । एवम्—शुद्धेर्भावरूपत्वे अशौचस्य तदभावरूपत्वे विरोधः । तथात्वे, अशौचसंकरोऽपि न स्यात् । एकस्मिन् शुद्ध्यभावरूपेऽशौचे सत्यपरस्य तद्रूपस्य तदानीं तत्पुरुषीयशुद्धिरूपप्रतियोग्यन्तराभावात् अनुपपत्तेः । तस्मात् शुद्ध्यशुद्ध्योर्भावरूपत्वम् । ( श्रा० वि० ) ( शुद्धितत्त्व० ) ( वाच० ) अत्राधिकं तु, ( पद्मपु० उत्त० ख० अ० १९ ) तत्र दृश्यम् ।

---

* सा च, 'अहंकार-ममकार'लक्षणा, इति विज्ञेयम् ।

† एवम्—परमाणुगतपाकजविशेषगुणात् पार्थिवकार्यविशेषो द्रष्टव्यः । अस्मदादावदृष्टादिनिमित्तभेदात् कार्यवैजात्यमूहनीयम् । ( न्या० सि० दी० पृ० २० ) ( चि० )

‡ तदर्थस्तु—भस्मादिसंयोगजनितः कांस्याद्युपभोक्तृनिष्ठः संस्कारः, इति ।

§ अशुद्धो चतुर्थाह्नादौ, इत्यर्थः । तात्कालिकी, श्राद्धविधानाक्षेपात् तन्मात्रनिमित्ता शुद्धिः कल्प्यते, इत्यर्थः ।

इति शाक्ता आहुः । ( देवीपु० ) । ३ 'विशुद्धि'शब्दवदस्यार्थोऽनु-संधेयः ।

**शून्यम्**—१ अत्यन्ताभाववत् । यथा—'ज्ञानशून्यः पुरुषः' इत्यादौ । २ निर्जनस्थानम् । ३ आकाशः । ( शब्दच० ) । ४ बिन्दुमात्रम् । ( हेमच० ) । ५ असंपूर्णम् । ६ ऊनम् । ७ तुच्छं च । ( त्रि० अमरः )

**शृङ्गारः**—१ रसविशेषः । स च, स्त्रीपुंसयोरन्योन्यसंयोगं प्रति इच्छाविशेषः । २ भूषणम् । ३ लवङ्गम् । ४ सिन्दूरम् । ( वाच० )

**शेषः**—१ [ १ ] अवशेषः । स च, क्वचित्—A कार्यम्, B व्यतिरेकः । यथा—"पूर्ववच्छेषवत्सामान्यतो दृष्टं च" ( गौ० १।१।५ ) इत्यादौ,—शेषशब्दार्थः । [ २ ] परिशेषः । यथा—सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये,—'न द्रव्यमेकद्रव्यत्वात्, न कर्म शब्दान्तरहेतुत्वात्,' यस्तु शिष्यते सोऽयम्, इति शब्दस्य गुणत्वप्रतिपत्तिः । ( वात्स्या० १।१।५ ) । २ शाब्दिकास्तु,—उक्तादन्यः शेषः ( कारकाणामविवक्षा ) । यथा—'प्रमाणादीनां तत्त्वम्, राज्ञः पुरुषः' इत्यादौ,—शैषिकी षष्ठी, इत्याहुः । ३ धर्मशास्त्रज्ञास्तु,—क्वचित्—उप-

---

१ अत्र व्युत्पत्तिः—'शृङ्गमृच्छति' इति शृङ्गारः ।

२ अत्रार्थे—"शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः । उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते" इति ( सा० द० परि० ३ । श्लो० २२० ) । अयं शृङ्गारो द्विविधः,—विप्रलम्भः संभोगश्चेति । (सा० द० परि० ३ श्लो० २११ )

३ अत्रोक्तम्—"पुंसः स्त्रियां स्त्रियः पुंसि संयोगं प्रति या स्पृहा । स शृङ्गार इति ख्यातः रतिक्रीडादिकारणम्" इति ।

४ तदर्थश्च,—उक्तात् ( कर्मत्व-करणत्व-संप्रदानत्वा-पादानत्वा-धिकरणत्वादिभ्यः ) अन्यः ( संबन्धादिः ) शेषः, इति ।

५ यत्र न कारकं कारकार्थो वा विवक्ष्यते, स शेषः । तद्यथा,—ब्राह्मणस्य कमण्डलुः, इति । ( न्या० वा० १ । पृ० ११ )

६ अत्र सूत्रम्—"षष्ठी शेषे" इति ( पाणि० २।३।५० ) । तदर्थश्च,—कर्मादिकारकेभ्योऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः; तत्र षष्ठी स्यात् । यथा—राज्ञः पुरुषः,

युक्तेतरपदार्थः ( अवशिष्टः ) । ( अजपालः ) । यथा—'श्राद्धशेषः, भुक्तशेषः' इत्यादौ, इत्याहुः । ४ व्यवहारशास्त्रज्ञास्तु,—तदितरः । ( मनु० टी० सर्वज्ञनारा० ९।१०५ ) यथा—"शेषास्तमुपजीवेयुः" इत्यादौ, इत्याहुः । ५ मीमांसकास्तु,—परोद्देशेन प्रवर्तमानो गुणीभूतः पदार्थः शेषः ( अङ्गम् ) । यथा—बादरिमते,—द्रव्यगुणसंस्काराः शेषभूताः; जैमिनिमते तु,—कर्माण्यपि शेषभूताः, इत्याहुः । ( शाबरभा० ३ । १। ३–४ ) । ६ पौराणिकास्तु,—भगवतो मूर्तिविशेषः, इत्याहुः। ७ तान्त्रिकास्तु,—"प्रसादाभिजनिर्माल्यदाने शेषेति कीर्तिता" इत्याहुः । ८ काव्यज्ञास्तु,—सर्पराजः, इत्याहुः ।

**शेषवत्**—( अनुमानम् ) १ यत्र कार्येण कारणमनुमीयते, तत् । यथा—पूर्वोदकविपरीतमुदकम्, नद्याः पूर्णत्वं शीघ्रत्वं च दृष्ट्वा स्रोतसोऽनुमी-

---

पश्चोन्मुखम्, पितुः पुत्रः । ( काशिकावृत्ति० ) । यथा वा—चैत्रस्य वासः, इत्यादौ षष्ठी । ( ग० व्यु० का० ६ )

१ अत्र प्रसक्ततः शेषरक्षणनिषेधः संगृह्यते—"ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च । पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत्" इति । ( गरुडपु० )

२ समुदायश्लोकस्तु,—"ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा" इति । ( मनु० अ० ९ । श्लो० १०५ )

३ अत्र शेषत्वं च तदुद्देश्यकेच्छाविषयत्वम् । शेषित्वं तूद्देश्यत्वमेव, इति बोध्यम् । ( वै० सा० कारके ४ । पृ० १९५ )

४ अत्र सूत्रम्—"शेषः परार्थत्वात्" इति ( जैमि० ३ । १ । २ ) । तत्र भाष्यम्—"यः परस्योपकारे वर्तते, स शेषः" इति । शाबरभा० ३ । १ । २ )

५ अत्र सूत्रे—"द्रव्यगुणसंस्कारेषु बादरिः" इति, "कर्माण्यपि जैमिनिः फलार्थत्वात्" इति च । ( जैमि० ३ । १ । ३—४ )

६ तदुक्तम्—"एका भगवतो मूर्तिर्ज्ञानरूपा शिवाऽमला । वासुदेवाभिधाना सा गुणातीता सुनिष्कला । द्वितीया कालसंज्ञा च तामसी शेषसंज्ञिता । निहन्ति सकलांश्चान्ते वैष्णवी परमा तनुः" इति । ( कूर्मपु० अ० ४८ )

७ अत्र वृत्तिकार इत्थं व्याचष्ट—शेषः कार्यम्; तल्लिङ्गकं शेषवत् । यथा—नदीवृद्ध्या वृष्ट्यनुमानम् । अथ वा—शेषो व्यतिरेकः; तद्व्यतिरेकव्यतिरेकीत्यर्थः । यथा—'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यादि । ( गौ० वृ० १।५ )

यते 'भूता वृष्टिः' इति । २ शेषवन्नाम परिशेषः; स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः । यथा—सदनित्यमित्येवमादिना द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो निर्भक्तस्य शब्दस्य तस्मिन्द्रव्यकर्मगुणसंशये,—'न द्रव्यम्, एकद्रव्यत्वात्; न कर्म, शब्दान्तरहेतुत्वात् । 'यस्तु शिष्यते सोऽयम्' इति शब्दस्य गुणत्वप्रतिपत्तिः । ( वात्स्या० १ । १ । ५ )

**शोकः**—( दोषः ) [ क ] इष्टवियोगे तल्लाभानर्हताज्ञानम् । ( गौ० वृ० ४ । ३ ) । यथा—"अशोच्यानन्वशोचस्त्वम्" ( गीता २ । ४९ ) इत्यादौ; यथा वा—"निवसति तरुणी ते कोक ! शोकं विमुञ्च" ( मुकु० भाण० ) इत्यादौ च 'शोक' शब्दस्यार्थः ।

[ ख ] केचित्तु,—इष्टवियोगजातो दुःखानुगुणश्चित्तवृत्तिविशेषः, इत्याहुः । ( वाच० )

**शोषणम्**—१ [ १ ] वातादिना रसाद्यपहारेण काठिन्यापादनम् । यथा—'पृथिवीं शोषयति' इत्यादौ । [ २ ] चोषणेन रसाकर्षणम् । ( हेमच० ) । २ कामस्य बाणविशेषः, इत्यालंकारिका आहुः । ३ शोणाकवृक्षः । ( भावप्र० ) । ४ शुण्ठी, इति भिषज आहुः ।

**शौचम्**—[ १ ] 'शुद्धि'शब्दवदस्यार्थोऽनुसंधेयः । [ २ ] धर्मविशेषः ।

---

१ तदुक्तम्—"उन्मादनः शोषणश्च तापनः स्तम्भनस्तथा । मारणश्चेति विज्ञेयाः कामस्य पञ्च सायकाः" इति, ( जटा० ) ( वाच० )

२ शौचं मानुषं द्विविधमुक्तं व्याघ्रपादेन,—"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम्" इति । ( वाच० ) पञ्चविधं चोक्तं बृहस्पतिना—"मलशौचं मनःशौचं शौचमिन्द्रियनिग्रहः । सर्वभूतदया शौचं जलशौचं तु पञ्चमम्" इति । अन्यच्च—"अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति" इति । ( मनु० अ० ५ । श्लो० १०९ ) । तत्र विधिमाहतुर्मनुदक्षौ—"एका लिङ्गे गुदे तिस्रस्तथैकत्र करे ( वामे ) दश । उभयोः ( करयोः ) सप्त दातव्या मृदः शुद्धिमभीप्सता" इति । ( मनु० अ० ५ । श्लो० १३६ ) ( विष्णुपु० ) ( यम० ) ( पैठीनसि० ) ( हारीत० ) ( शङ्खस्मृ० ) ।

३ तत्रोक्तम्—"अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थानं शौचमित्यभिधीयते" इति । ( वाच० )

**शौर्यम्**—बलवतोऽपि परस्य पराजयाय प्रत्युत्साहः; स च प्रयत्नविशेष एव ( न तु गुणान्तरम् )। ( न्या० कन्द० पृ० १० )

**श्रद्धा**—१ [ क ] फलावश्यंभावनिश्चयः। ( त० प्र० २। पृ० ६ ) ( सि० च० ) यथा—"केशवः श्रद्धया गम्यो ध्येयः पूज्यश्च सर्वदा" ( अग्निपु० ) इत्यादौ 'श्रद्धा'शब्दस्यार्थः।

[ ख ] विश्वास्यत्वेन ज्ञानम्। ( म० प्र० पृ० १६ ) यथा—"कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति" इत्यादौ 'श्रद्धा'शब्दस्यार्थः। [ ग ] वेदादिबोधितफलावश्यंभावनिश्चयः। ( कि० व० पृ० ४ ) इयं श्रद्धा त्रिविधा,—"त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा। सात्त्विकी, राजसी, चैव तामसी चेति तां शृणु" इति। ( गीता, अ० १७। श्लो० २ )

[ घ ] 'आस्तिक्यबुद्धिः श्रद्धा' इति पौराणिका वदन्ति। २ आदरः। ३ शुद्धिः। ४ स्पृहा। ५ चित्तप्रसादः।[1]

**श्रपणम्**—रूपादिपरावृत्त्युपलक्षिताधःसंतापनम्। यथा—'कृष्णलं[2] श्रपयेत्' इत्यादौ श्रपयत्यर्थः। ( म० प्र० ४। पृ० ५६ )

**श्रवणम्**—१ [ १ ] श्रोत्रेन्द्रियजन्यं शब्दविषयकं ज्ञानम्। यथा—"श्रूयते सुपुरुषचरितं किं तद्ये न हरन्ति काव्यालापाः" इत्यादौ। ( प्रता० ) [ २ ][3] श्रुतिवाक्योत्थं ज्ञानम्। यथा—"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो

---

१ अत्रोक्तम्—[ १ ] "प्रत्ययो धर्मकृत्येषु तथा श्रद्धेत्युदाहृता। नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्" इति। ( स्मृतिः ) ( वाच० ) [ २ ] "सत्कृतिश्चानसूया च सदा श्रद्धेति कीर्तिता" इति। ( देवलस्मृ० )
श्रद्धाफलमाह (?) याज्ञवल्क्यः—"श्रद्धाविधिसमायुक्तं कर्म यत् क्रियते नृभिः। सुविशुद्धेन भावेन तदानन्त्याय कल्पते" इति। अश्रद्धाप्रयोजनं च भगवद्गीतायाम्—"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ। न च तत् प्रेत्य नो इह" इति ( गीता, अ० १७। श्लो० २८ )। "अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति" इति च ( गीता, ४।४० )

२ कृष्णलो यवत्रयमितं सुवर्णम्। ( म० प्र० ४। पृ० ५६ )

३ अत्र श्रवणं च, श्रुतिपदपक्षिका संसर्गज्ञानानुमितिः ( प० च० प० २० )

मन्तव्यो निदिध्यासितव्यः" ( श्रुतिः ) इत्यादौ । ( म० प्र० १ ) यथा वा—"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः" इत्यादौ । २ शब्दग्राहकमिन्द्रियम् ( श्रोत्रम् ) । ३ मौहूर्तिकास्तु,—अश्विन्यादिषु द्वाविंशो ( २२ ) नक्षत्रविशेषः, इत्याहुः । ४ मुण्डरिकावृक्षः । (वाच०)

**श्राद्धम्**—[ क ] अदनीयस्य तत्स्थानीयस्य वा द्रव्यस्य प्रेतोद्देशेन श्रद्धया त्यागः । ( मिताक्ष० अ० १ । श्लो० २१६ )

[ ख ] पित्राद्युद्देश्यको[3] यागः[4] । ( का० व्या० पृ० ९ ) यथा—"पितरः

---

१ अत्र व्युत्पत्तिः—"श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" इति ।

२ श्राद्धं द्विविधम्,—पार्वणम्, एकोद्दिष्टं चेति । तत्र त्रिपुरुषोद्देशेन यत्क्रियते तत्पार्वणम् । एकपुरुषोद्देशेन क्रियमाणमेकोद्दिष्टम् । पुनश्च श्राद्धं त्रिविधम्,—नित्यम्, नैमित्तिकम्, काम्यं चेति । तत्र नित्यम्, नियतनिमित्तोपाधौ चोदितम् । यथा—अहरहरमावास्याष्टकादिषु विहितं श्राद्धम् । अनियतनिमित्तोपाधौ चोदितं नैमित्तिकम् । यथा—पुत्रजन्मादिषु विहितं श्राद्धम् । फलकामनोपाधौ विहितं काम्यम् । यथा—स्वर्गादिकामनायां कृत्तिकादिनक्षत्रेषु विहितं श्राद्धम् । पुनश्च पञ्चविधम्,—अहरहः श्राद्धम्, पार्वणम्, वृद्धिश्राद्धम्, एकोद्दिष्टम्, सपिण्डीकरणं चेति । ( मिता० अ० १ । श्लो० २१६ )

३ संबोधनपदोपनीतान्*पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयाऽन्नादेर्दानं श्राद्धम्, इत्यर्थः ।

४ अत एव,—श्राद्धस्य यागत्वं विज्ञाय श्राद्धकाले ब्राह्मणा इमां स्मृतिं पठन्ति—"चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां† स मे विष्णुः प्रसीदतु" इत्यादिम् ।

---

* अत्र विभक्तिनियमश्च—"संकल्पा-ऽऽसनयोः षष्ठी द्वितीयाऽऽवाहने तथा । अन्नदाने चतुर्थी स्याच्छेषाः संबोधने स्मृताः" इति ।

† तदर्थस्तु—चतुर्भिः ( 'आश्रावय' इत्यध्वर्युप्रयोज्यैश्चतुरक्षरैः ), चतुर्भिः ( 'अस्तु श्रौषट्' इत्याग्नीध्रप्रयोज्यैश्चतुरक्षरैः ), द्वाभ्याम् ( 'यज' इत्यध्वर्युप्रयोज्याभ्यां द्वाभ्यामक्षराभ्याम् ), पञ्चभिः ( 'ये यजामहे' इति होतृप्रयोज्यैः पञ्चभिरक्षरैः ), द्वाभ्याम् ( 'वौषट्' इति होतृप्रयोज्याभ्यां द्वाभ्यामक्षराभ्याम् ), एभिः सप्तदशभिरक्षरैर्यो हूयते हवनकर्मीक्रियते, स विष्णुः ( स्वन्या देवता ), मे मम प्रसीदतु प्रसन्नो भवतु, इति । अत्र यजुःश्रुतिः प्रमाणम्—"आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति" इति । ( तैत्तिरीयसंहि० काण्ड० १ । अ० ६ । अनु० ११ )

श्राद्धदे वाः" इत्यादौ 'श्राद्ध'शब्दस्यार्थः । यथा वा—"द्वौ दैवे[1] प्राक् त्रयः पित्र्ये उदगेकैकमेव वा" ( याज्ञ० अ० १ । श्लो० २२७ ) इत्यादिश्राद्धविधौ 'पार्वणश्राद्ध-सपिण्डीकरणश्राद्धम् ।

[ ग ] श्रद्धाहेतुकदानरूपकर्मविशेषः । अस्मिंश्च कर्मणि, यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वम्; तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात् । तथा च—यागादौ मन्त्राहूता इन्द्रादयः शक्तिमात्रेण तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेनैव तृप्यन्तस्तेषामभीष्टफलं यथा साधयन्ति, तथा 'श्राद्धेऽपि मन्त्राहूता पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदाः भवन्ति' इत्येवं कल्पनीयम्, इति ।

---

१ श्राद्धदेवाश्च दशविधा गणदेवताभेदाः । यथोक्तम्—"वसुसत्यौ क्रतुदक्षौ कालकामौ धुरिः कुरुः । पुरूरवा मार्दवाश्च विश्वेदेवाः प्रकीर्तिताः" इति । ( वाच० पृ० ४९२५ ) । अन्यच्च "क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा धुरिः । रोचनो माद्रवाश्चैव तथा चान्यः पुरूरवाः । विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिताः" इति ।

२ तदाहापस्तम्बः—"अथैतन्मनुः श्राद्धशब्दं*कर्म प्रोवाच" ( आपस्त० धर्मसू० २।७। १६।१ । पृ० ७६ ) । पुलस्त्योऽप्याह—संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम् । श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" इति । ( श्राद्धतत्त्व० )

३ अत्र—देवदत्तादिशब्दस्य यथा न केवलं देहमात्रम्, न वा जीवमात्रमर्थः; किंतु—तत्तद्देहाभिमानी जीव एवार्थः; तथा पित्रादिशब्दस्य उत्पादकदेहाभिमानी केवलं जीवोऽपि नार्थः; किंतु—वसुरुद्रादित्यदेवाधिष्ठिततादृशजीव एवार्थः । तथा चोक्तम्—"वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः । प्रपितामहाश्चादित्याः श्रुतिरेषा सनातनी ॥ प्रेतानुद्दिश्य यत्कर्म क्रियते मानुषैरिह । तृप्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः" इति । ( श्राद्धकल्पे देवल० ) । तथाच—यथा, काचित् गर्भिणी सुहृदा दत्तं दोहदं भुञ्जाना स्वयं तृप्यति, स्वाश्रयं गर्भं च तर्पयन्ती, दोहददातारमप्युपकरोति; तथा,—वस्वादयोऽपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादीन् तर्पयन्तः श्राद्धकर्तुरपीष्टदातारो भवन्ति, इति ज्ञेयम् । ( वाच० )

४ अत्र छान्दोग्यश्रुतिः—"तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन, न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति" इति । ( छा० उ० ३ । ६ । १ )

५ ब्राह्मणादिसंप्रदानकक्रियाया इव श्राद्धकर्मण एव स्वजन्यपुण्यद्वारा विशिष्टफलजनकता । तत्र कालान्तरभावितत्फलदानाय तत्कर्मसाक्षिणः परमेश्वरस्यैव तत्साधनत्वम् । तथा च—

---

* तदर्थश्च,—'श्राद्धम्' इति शब्दो वाचको यस्य तत्कर्म, इति ( श्राद्धविवेकः )

श्राद्धभेदाश्च विश्वामित्राद्युक्ताः (प्रा० वि० तत्र) दर्शिता यथा—"नित्यं, नैमित्तिकं, काम्यं, वृद्धिश्राद्धं, सपिण्डनम्, (एकोद्दिष्टम् ?) । पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥ कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् । यात्रास्वेकादशं (घृतश्राद्धं) प्रोक्तं पुष्ट्यर्थं द्वादशं (औपचारिकम्) स्मृतम्" इति । बृहस्पतिना तु—"नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च । पार्वणं चेति मनुना श्राद्धं पञ्चविधं स्मृतम्" इति । एवं कूर्मपुराणेऽपि ।

मत्स्यपुराणे च—"नित्यं नैमित्तिकं काम्यं [2]त्रिविधं श्राद्धमुच्यते" इति ।

श्राद्धप्रशस्तदेशानाह मनुः—"शुचिं देशं विविक्तं च गोमयेनोपलेपयेत् । दक्षिणाप्रवणं चैव प्रयत्नेनोपपादयेत् । अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा" इति । (मनु० अ० ३ । श्लो० २०६–२०७)

श्राद्धनिन्दितदेशानाह विष्णुः—"न म्लेच्छविषये श्राद्धं कुर्यान्न च गच्छेत्तथा । चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते । तं म्लेच्छदेशं जानीयादार्यावर्तमतःपरम्" इति ।

वायुपुराणे च—"त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥ देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि गर्हितः । पा[3]रस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च । प्रनष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः" इत्यादि । एवं ब्रह्मपुराणेऽपि विशेषो ज्ञेयः ।

**श्रावणम्**—१ श्रोत्रेन्द्रियजन्यं प्रत्यक्षम् । यथा—शब्दस्य प्रत्यक्षम् । २ मासविशेषः । ३ बार्हस्पत्यो वर्षविशेषः । ४ वृक्षविशेषः ।

**श्रीः**—१ लक्ष्मीः । २ लवङ्गम् । ३ शोभा । ४ वाणी । ५ वेषरचना

---

"यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्" इत्यादि । (गीता० अ० ७ । श्लो० २१)

१ एतद्विवरणं च भविष्यपुराणे विज्ञेयम् ।

२ अत्र—'द्वादशविधानां पञ्चविधानां च श्राद्धानां त्रिष्वेवान्तर्भावः' इत्यभिप्रायः ।

३ पारस्करा देशविशेषाः । कीकटो मगधः । सिन्धुर्नदीविशेषः । (वाच०)

६ सरलवृक्षः । ७ धर्मार्थकामाः । ८ संपत्तिः । ९ प्रकारः । १० उपकरणम् । ११ बुद्धिः । १२ विभूतिः । १३ अधिकारः । १४ प्रभा । १५ कीर्तिः । १६ वृद्धिः । १७ सिद्धिः । १८ कमलम् । १९ बिल्ववृक्षः । २० औषधिविशेषः । २१ देवादीनां नामोच्चारणाय उपाधिविशेषः । २२ रागविशेषः, इति गायका आहुः ।

**श्रुतिः**—१ 'श्रोत्र'शब्दवदस्यार्थोऽनुसंधेयः । २ श्रोत्रेन्द्रियजन्यं ज्ञानम् । ३ मीमांसकास्तु,—निरपेक्षो रवः ( वेदः ) । सा च त्रिविधा,—विधात्री, अभिधात्री, विनियोक्त्री चेति । तत्र,—विधात्री लिङाद्यात्मिका । अभिधात्री व्रीह्यादिश्रुतिः । यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते, सा विनियोक्त्री, इत्याहुः । ( लौ० भा० पृ० १६ ) । ४ गणकास्तु,—[ १ ] अङ्कशास्त्रोक्तत्रिभुजक्षेत्रादिः; [ २ ] भुजकोट्योः संयुज्यमानो रेखाविशेषश्च, इत्याहुः । ( लीला० ) । ५ मौहूर्तिकास्तु,—श्रवणनक्ष-

---

१ तत्रोक्तम्—"देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्" इति ।

२ अत्रोच्यते—श्रीरागश्च सुन्दरपुरुषाकृतिः, हेमन्तेऽपराह्णे गेयः । तस्य पञ्च रागिण्यः,—मानश्रीः,* भारवी, धनश्रीः, वसन्तरागिणी, आशाचरी चेति । ( संगीतदा० ) ( वाच० )

३ तदुक्तम्—"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ" इति । ( मनु० अ० २ । श्लो० १० ) । वेदस्तु, विधि-मन्त्र-नामधेय-निषेधा-र्थवाद-भेदात्पञ्चविधः । शिष्टं तु 'वेद'शब्दव्याख्याने द्रष्टव्यम् ।

४ स च, विनियोज्यविनियोजकभावः, शेषशेषिणोः संबन्धो वा । ( लौ० भा० टी० पृ० १७ )

५ साऽपि ( विनियोक्त्री ) त्रिविधा,—विभक्तिरूपा, एकाभिधानरूपा, एकपदरूपा चेति । तत्र—विभक्तिश्रुत्या अङ्गत्वं ज्ञाप्यते । यथा—"व्रीहिभिर्यजेत" इति तृतीया श्रुत्या व्रीहीणां यागाङ्गत्वं ज्ञाप्यते । समानाभिधाना यथा—"पशुना यजेत" इति । अत्र—एकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वं ज्ञाप्यते; 'यजेत' इत्याख्याताभिहितसंख्याया आर्थीभावनाङ्गत्वम्; समानाभिधानश्रुतेः । एकपदश्रुत्या च यागाङ्गत्वं ज्ञाप्यते, इति । ( लौ० भा० पृ० १६—१८ )

---

* 'राग'शब्दव्याख्याने याः संगृहीतास्तदन्या एता रागिण्यः, इति विज्ञायते ।

त्रम्, इत्याहुः । ६ संगीतशास्त्रज्ञा गायकास्तु,—षड्जरागाद्यारम्भकावयव-शब्दविशेषः श्रुतिः, इत्याहुः ।

**श्रोत्रम्**—१ [ १ ] ( इन्द्रियम् ) [ क ] शब्दोपलब्धिसाधनमिन्द्रियम् । ( त० भा० पृ० २६ ) ( न्या० म० पृ० १४ ) तच्च विशिष्टादृष्टो-पगृहीतकर्णशष्कुल्यवच्छिन्नो नभोदेशः । ( वै० उ० ८ । २ । ६ ) ( त० भा० प्रमे० पृ० २६ ) ( त० सं० )

[ ख ] 'वने सिंहनादः' इति शब्दप्रत्यक्षासाधारणकारणम् । तच्च कर्णशष्कुल्यवच्छिन्नं नभः । (प्र० प्र०) ( न्या० म० १ । पृ० १४)

---

१ तत्रोक्तम्—"प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः संपरिज्ञेया स्वरावयवल-क्षणा" इति । ( मल्लिना० )

संगीतदामोदरे श्रुतिसंख्यानियमश्च दर्शितो यथा—"चतुश्चतुश्चतुश्चैव षड्जमध्यमपञ्चमाः । द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ" इति ।

२ श्रुतिभेदास्तु ( २२ ),—"नान्दी, चालनिका, रसा, च सुमुखी, चित्रा, विचित्रा, घना, मातङ्गी, सरसा,ऽमृता, मधुकरी, मैत्री, शिवा, माधवी । बाला, शार्ङ्गरवी, कला, कलरवा, माला, विशाला, जया, मात्रे,ति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्तिताः" इति ।

संगीतरत्नाकरे तु—"तीव्रा, कुमुद्वती, मन्दा, छन्दोवत्यस्तु षड्जगाः । दयावती, रञ्जनी, च रतिका, ऋषभे स्थिता ॥ रौद्री, क्रोधा, च गान्धारे वज्रिका, च प्रसारिणी । प्रीतिश्च मार्जनी,त्येताः श्रुतयो मध्यमाश्रिताः ॥ क्षितिरक्ता च संदीपिन्यालापी चैव पञ्चमे । मदन्ती, रोहिणी, रम्ये,-त्येता धैवतसंश्रयाः ॥ उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती" इति ।

३ [ क ] श्रोत्रस्य शब्दवत्त्वं* च शब्दग्राहकत्वात्; 'यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यं गुणं गृह्णाति, तदिन्द्रियं तद्गुणवत्, यथा गन्धग्राहकं घ्राणं गन्धवत्' इति व्याप्तिरत्र द्र-ष्टव्या ( प्र० प्र० ) ( त० भा० प्रमे० पृ० २६ ) । [ ख ] श्रोत्रस्य शब्दवत्त्वं च 'ब-हिरिन्द्रियाणां ग्राह्यजातीयविशेषगुणवत्त्वम्' इति नियमात्सिद्ध्यति । (वै० उ० ८।२।६)

४ अत्रावच्छिन्नत्वं च संयोगविशेषः । ( प० मा० )

५ अत्र भाष्यम्—"श्रोत्रं पुनः, श्रवणविवरसंज्ञको नभोदेशः; शब्दनिमित्तोपभोगप्रापक-

---

* न च 'वायोरेव कारणगुणपूर्वकशब्दवत्त्वमङ्गीकार्यम्' इति वाच्यम्; शब्दस्यायावद्द्रव्यभावि-त्वेन वायविशेषगुणत्वाभावात्, इति । ( मु० १ । आकाशनि० पृ० ८८ )

(त० कौ० ) । [ २ ] नव्यास्तु,—ईश्वर एव श्रोत्रेन्द्रियम् (नेश्वरादतिरिक्तम्), इत्याहुः । (राम०१ । पृ०११८ ) । [ ३ ] सांख्या वेदान्तिनश्च,–सात्त्विकांशसूक्ष्मांशः श्रोत्रम्, इत्याहुः । ( वाच० ) । २ काव्यज्ञास्तु,–श्रोत्रेन्द्रियाधारो गोलकं ( कर्णः ) श्रोत्रम्, इत्याहुः ।

**श्लाघनम्**—बोधविषया स्तुतिः । यथा–'गोपी स्मरात्कृष्णाय श्लाघते' इत्यादौ श्लाघतेरर्थः । ( ल० म० कार० ४ । पृ० १०२ )

**श्वासः**—१ [ १ ] वायुव्यापारविशेषः । यथा–मनुष्यस्य पृथगेकैकस्मिन्दिने एकविंशतिः सहस्राणि, षट् शतानि च ( २१६०० ) श्वासा भवन्ति, इति । [ २ ] रोगविशेषः, इति भिषज आहुः । २ शाब्दिकास्तु,—शिक्षोक्तो वर्णोच्चारणाऽर्थो बाह्यप्रयत्नविशेषः, इत्याहुः ।

---

धर्माधर्मोपनिबद्धः । तस्य च नित्यत्वे सत्युपनिबन्धकवैकल्याद्बाधिर्यम्" इति । ( प्रशस्त० पृ० ७ )

१ तन्मते,—शब्दस्य पञ्चभूतगुणतया शब्दाधारवायुना झटिति कर्णदेशे यथावेगं धावमानेन कर्णप्रापणसंभवः; तेन शब्दोपलम्भः, इति । तन्मते,–'श्रवणेन्द्रियस्य प्राप्यकारित्वम्' इत्युक्तिरप्येतत्परा, इति बोध्यम् । ( वाच० )

२ अत्र—श्लाघ्यर्थघटकबोधाश्रयस्य, "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" ( पाणि० १।४।३४ ) इति सूत्रेण संप्रदानत्वम् । 'ज्ञीप्स्यमान' पदेन प्रधानभूतण्यर्थकर्मणो ग्रहणम् । ( ल० म० का० ४ । पृ० १०२ )

३ अत्र—'श्लाघ'धात्वर्थैकदेशस्य बोधस्य फलतावच्छेदकः संबन्धो वृत्तिता; स्तुतिस्तु गुणवत्त्वप्रतिपादकशब्दप्रयोगादिः; 'स्मरात्' इति हेतौ पञ्चमी । एवं च,—'गोपीकर्तृका स्मरहेतुकृष्णसंप्रदानिका, ( अर्थात्–) कृष्णवृत्तिबोधविषया स्तुतिः' इति बोधः । ( ल० म० कारक० ४ । पृ० १०२ )

४ श्वासहेतुकः—( १ ) "यस्तु यज्ञं समासाद्य पशुश्वासं निरुध्य च । हन्ति खादति वा तं च, महाश्वासेन युज्यते" इति । ( २ ) "पौराणिककथामध्ये यस्तु वाचाऽन्यथा वदेत् । स ऊर्ध्वश्वासमासाद्य दुर्मोक्षमहरहर्निशम्" इति च ( भृगु–भार० ) ( वाच० )

## ष.

**षष्ठी**—१ ( विभक्तिः ) [ क ] यत्किंचिद्धात्वर्थे स्वार्थान्वयाबोधिका सुप् । यथा–'चैत्रस्येदम्' इत्यादौ षष्ठी । ( स्व० )

[ ख ] अन्ये तु ( शाब्दिकादयः प्राञ्चः ),—संबन्धसामान्ये, स्वत्वादौ

---

१ निष्कृष्टलक्षणं चात्र षष्ठीत्वमेव; तच्चात्र [ क ] तिबन्त-'दा'धात्वर्थधार्मिक-स्वार्थान्वयबोधा*-स्वरूपयोग्यत्वे सति प्रथमान्यसुप्त्वम् । यथा–'धनस्य† दाता' इत्यत्रापि,–धनपदोत्तरवर्तिन्या विभक्तेः षष्ठीत्वम् । [ ख ] हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वा-‡नुभावकसुप्सजातीयत्वं वा । यथा–'चौरस्य हिनस्ति' इत्यादौ,–'चौर' पदोत्तरवर्तिविभक्तेः षष्ठीत्वम् । ( श० प्र० श्लो० ६६ । टी० पृ० ८६—८७ )

२ अत्र—संबन्धविवक्षायां कारकविभक्त्यप्रसक्तेः "षष्ठी शेषे" ( पाणि० २ । ३ । ५० ) इत्यनेन सूत्रेण 'चैत्रस्येदम्' इत्यादौ षष्ठी । 'चैत्रस्य द्रव्यम्' इत्यादौ स्वत्वस्य; 'चैत्रस्य स्वम्, घटस्य कारणम्, चैत्रस्य हस्तः' इत्यादौ,–निरूपितत्वावयवत्वादीनां संबन्धत्वेनैव षष्ठ्यर्थता, न तु विशिष्य ( निरूपितत्वस्वा-वयवत्वत्वादिना ); शक्त्यानन्त्यप्रसंगात् । संयोगादिसंबन्धसत्त्वेऽपि 'चैत्रस्य नेदं वासः' इत्यादौ,–स्वत्वादिसंबन्धविशेषबोधतात्पर्येण यत्र नञ् प्रयुज्यते, तत्र विशेषरूपेण षष्ठ्याः लक्षणैव । इत्थमेव च–संबन्धत्वेन कर्मत्वादिविवक्षया, 'मातुः स्मृतम्' इत्यादौ,–"अधीगर्थे दयेशां कर्मणि" ( पाणि० २।३।५२ ) इत्यनुशासनस्य नियमपरतया सार्थक्योपपादनं वृत्तिकृतामुपपद्यते । एवमेव—"नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचनाः" इत्यादौ,–करणत्वादेः संबन्धत्वेन विवक्षायां षष्ठ्युपपत्तिः । अत एव च,–"आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते" इत्यत्र,–'पक्वम्' इत्यत्रानुषज्यमानायाः षष्ठ्याः संबन्धत्वेन कर्तृत्वमर्थः, न तु स्वत्वम्; शूद्रकर्तृकवृषोत्सर्गे चरुहोमानुपपत्तेः, इति नवीनस्मार्तानां मतमप्युपपद्यते । ( ग० व्यु० का० ६ । पृ० ११२ )

३ 'ग्रामं गच्छति, पटं ददाति' इत्यादौ च,—धात्वर्थतावच्छेदकीभूते संयोग-स्वत्वादौ द्वितीययाऽऽधेयत्वमेव बोध्यते ( न तु संबन्धसामान्यं बोध्यते ), इति न तत्रातिप्रसंगः, इति । ( श० प्र० श्लो ६६ । पृ० ८७ । )

---

* अत्र विज्ञेयम्—"धनं करेण विप्राय पात्रात् काश्यां ददात्यसौ" इत्यत्र,—द्वितीयादिर्दात्यर्थे स्वार्थान्वयबोधकतया तत्स्वरूपयोग्य एव ( न तु स्वार्थान्वयबोधास्वरूपयोग्यः ), इति न तत्रातिप्रसङ्गः । प्रथमा तु तदयोग्याऽपि प्रथमैव ( न तु प्रथमान्या ), इति न तत्राप्यतिप्रसङ्गः, इति । ( श० प्र० श्लो० ६६ । पृ० ८७ )

† अत्र—दाने स्वार्थबोधिकाऽपि षष्ठी, न तिबन्तस्य 'दा' धातोरर्थे स्वार्थबोधिका, इति न तत्राव्याप्तिः । ( श० प्र० श्लो० ६६ । टी० पृ० ८७ )

‡ अत्रेदं चिन्त्यम्—'चौरस्य हिनस्ति' इत्यादिवत्, 'चौरं हिनस्ति' इत्यादेरपि प्रयोगस्य दर्शनात् तत्रत्यद्वितीयायामतिव्याप्तिः, इति । ( स्व० )

वा शक्ता सुप् । यथा—'राज्ञः[1] पुरुषः, चैत्रस्य धनम्' इत्यादौ षष्ठी, इति वदन्ति । ( श० प्र० श्लो० ६६ । टी० पृ० ८७ ) । षष्ठी द्विविधा,[2]—[3]कारकषष्ठी, शेष[4]षष्ठी चेति । ( श० प्र० श्लो० ६७ ) । २

१ अत्रेदं शाब्दिकमतं विज्ञेयम्—षष्ठ्यर्थः संबन्धत्वेन तत्तद्रूपेण च स्वस्वामिभावादिः संबन्धः, संबन्धत्वेन क्रियाकारकभावश्च । अत एवानेकसंबन्धसत्त्वेऽपि स्वत्वादिसंबन्धविशेषतात्पर्येण 'चैत्रस्य नेदं वासः' इति प्रयुज्यते । अत एव—'एकशतं षष्ठ्यर्थाः' इति "षष्ठी स्थानेयोगा" ( पाणि० १ । १ । ४९ ) इति सूत्रस्थं भाष्यं संगच्छते । द्वितीयादितश्च क्रियाकारकभावस्य तत्तद्रूपेणैव बोधः; तथैवानुभवात् । 'मातुः स्मरति' इत्यादौ च,—तत्तद्रूपेण बोधे द्वितीयादीनां बाधिकानां सत्त्वात्संबन्धत्वेनैव बोधः 'मातृसंबन्धि स्मरणम्' इति, इति नव्या आहुः । प्राञ्चस्तु,—अत्रापि क्रियाकारकभावमूलकं विशेषणत्वरूपं विषयत्वमेव, निमित्तत्वमेव वा तत्त्वेन संबन्धत्वेन वा विवक्षितम् । ...... क्रियाकारकभावसंबन्धः कारणम्, शेषसंबन्धस्तु फलभूतः । यथा—राज्ञः पुरुष इत्यत्र,—राजपुरुषौ कर्तृसंप्रदानरूपावभूताम् 'राजा पुरुषाय ददाति' इति; तन्मूलकस्वस्वामिभावप्रतीतौ कर्त्रादिविशेषरूपतानवगमः;..............इत्याहुः । ( ल० म० कार० ६ । पृ० ११३ )

२ अत्रायं विवेकः—शब्दशक्तिप्रकाशिकाकृन्मते,—यया धात्वर्थे प्रकारतया कर्तृत्व-कर्मत्वादि बोध्यते, सा कारकषष्ठी । यया तु, धात्वर्थातिरिक्ते स्वार्थशेषो (संबन्धः) बोध्यते, सा शेषषष्ठी, इति । गदाधरादीनां मते तु,—यया धात्वर्थे स्वार्थकर्तृत्व-कर्मत्वादि संबन्धत्वेनैव ( न तु प्रकारतया ) लक्षणया बोध्यते, सा कारकषष्ठी । यया तु धात्वर्थातिरिक्ते स्वार्थः संबन्धत्वेनैव बोध्यते, सा शेषषष्ठी, इति चिन्तनीयः ।

३ क्रियाप्रकारीभूतोऽर्थः कारकम्, तत्रार्थे षष्ठी 'कारकषष्ठी' इत्युच्यते । यथा—"सा लक्ष्मीरुपकुरुते*यया परेषाम्" "पद्मस्यानुकरोत्येष कुमारीमुखमण्डलः" "गुरुविप्रतपस्विदुर्गतानां† प्रतिकुर्वीत भिषक् स्वभेषजैः" इत्यादावपि, 'मातुः स्मरति, चौरस्य हिनस्ति, जलस्योपस्कुरुते' इत्यादाविव क्रियाविशेषयोगे कारकार्थैव षष्ठी । 'तण्डुलस्य‡पाचकः, मैत्रस्य‡भोक्तव्यम्' इत्यादावपि षष्ठी कारकषष्ठ्येव । ( श० प्र० )

* अत्र—प्रयोगदृष्ट्या, 'प्रत्यनूपेभ्यः करोतेः कर्मण्यपि वैकल्पिकः षष्ठीविधिर्वक्तव्यः' इति विज्ञेयम् । ( श० प्र० श्लो० ६७ । टी० पृ० ८९ )

† अत्र शाब्दिकास्तु,—'विपत्तौ' इति अध्याहृतनामार्थे षष्ठ्यर्थान्वयः, इति नेयं कारकषष्ठी, इत्याहुः । ( का० व्या० )

‡ अत्र—( १ ) धात्वर्थे पचनादौ कृद्योगे कर्तृकर्मणोः षष्ठ्यनुशिष्टेः कर्मत्व-कर्तृत्वादिकं कारकमेव, इति कारकार्थैव षष्ठी, इति ज्ञेयम् । ( श० प्र० ७७ ) । ( २ ) अत्र—"कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" (पाणि० २, ३, २ )( २, ३, १८) इत्याभ्यां सूत्राभ्यां विहिताभ्यां द्वितीया-तृतीयाभ्यां शक्तया बोधिते कर्तृत्व-कर्मत्वे "कर्तृ-

मौहूर्तिकास्तु,—चंद्रमसः षष्ठकलाया ह्रासवृद्धिरूपक्रियात्मकस्तिथिविशेषः, इत्याहुः । ३ पौराणिकास्तु,—ब्रह्मकन्या देवसेनाख्यः स्कन्दभार्यात्मको मातृकाविशेषः, इत्याहुः ।

---

## स.

स—१ विष्णुः । २ सर्पः ३ ईश्वरः । ४ विहगः । ५ समासे पूर्वपदस्थः सहार्थः । यथा—'सपितृकः' इत्यादौ । ६ समानार्थः । यथा—

---

अत्रायं विशेषोऽनुसंधेयः—'कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वयः' इति नियमो नास्ति । तथा हि—मणिकारमते, 'तस्माज्जानाति' इत्यादौ,—ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्यान्वयः; 'तस्मात्स्थीयते' इत्यादौ च,—सर्वमत एव धात्वर्थस्थित्यादौ हेतुविभक्त्यर्थस्यान्वयः; 'गुरुविप्रतपस्विदुर्गतानां *प्रतिकुर्वीत भिषक् स्वभेषजैः' इत्यादौ तु,—षष्ठ्यर्थसंबन्धस्यापि धात्वर्थेऽन्वयो दृष्टः, इति तादृशनियमो नास्ति, इति ( ग० व्यु० का० २ । ख० २ । पृ० ५६ )

४ शेषः कारकादवशिष्टः संबन्धः, कारकादन्यो वा, तत्रार्थे षष्ठी 'शेषषष्ठी' इत्युच्यते । यथा,—'राज्ञः †पुरुषः, रजकस्य ‡वस्त्रं ददाति' इत्यादौ,—षष्ठी । ( श० प्र० ७७ )

१ तदुक्तम्—"मातृकासु §पूज्यतमा सा च षष्ठी प्रकीर्तिता । शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी" इत्यादि । ( ब्रह्मवै० प्र० अ० १ ) (स्कन्दपु० ) (वाच० )

---

कर्मणोः कृति" ( पाणि० २ । ३ । ६५ ) इति सूत्रेण विहिता षष्ठी लक्षणया बोधयति, इति ज्ञेयम् ।

लक्षणाबीजं तु, तादृशयोः कर्तृत्व-कर्मत्वयोः संबन्धत्वेन बोधने ( न तु प्रकारतया बोधने ) तात्पर्यानुपपत्तिरेव, इति हृदयम् ।

* अत्र शाब्दिकानुयायिनः,—'रोगे' इति नामाध्याहृत्य तदर्थे षष्ठ्यर्थस्य संबन्धस्यान्वयः कर्तव्यः । तथा च—संबन्धस्य कारकत्वाभावेन क्रियायोगाभावान्नेयं कारकषष्ठी, इत्याहुः । ( का० व्या० पृ० १ )

† अत्र,—षष्ठ्या संबन्धो ( स्वत्वम् ) बोध्यते; स च न कारकम्, न वा तदर्थिका षष्ठ्यादिः कारकविभक्तिः, इति ज्ञेयम् । ( श० प्र० श्लो० ६७ । टी० पृ० ८९ )

‡ अत्र च—परिष्कार्यत्वादिलक्षणः संबन्धो वस्त्रादावेव षष्ठ्याऽनुभाव्यते, इति शेषषष्ठी, इति विज्ञेयम् । ( श० प्र० श्लो० ६७ । टी० पृ० ८९ )

§ ताश्च षोडश मातृकाः—"गौरी, पद्मा, शची, मेधा, सावित्री, विजया, जया । देवसेना, स्वधा, स्वाहा, मातरो, लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुलदेवात्मदेवताः" इति । अन्या अपि सप्त—"ब्राह्मी, माहेश्वरी, चैव कौमारी, वैष्णवी तथा । वाराही च तथेन्द्राणी, चामुण्डा, सप्त मातरः" इति ।

'सरूपः' इत्यादौ । ७ छन्दःशास्त्रज्ञास्तु,—अन्तगुरुक आदिलघुद्वयको वर्णगणः ( 'स' गणः ), इत्याहुः ।

**संकरः**—१ [ क ] परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशः³ । ( दि० १ ) ( वै० वि० १ । २ । ३ )

[ ख ] परस्परात्यन्ताभावसामानाधिकरण्ये सति जात्यन्तरेण सामानाधिकरण्यम् । यथा—भूतत्वस्य मूर्तत्वादिना संकरः । ( दि० १ ) ( वै० उ० १ । २ । ३ ) । २ A धर्मान्तरस्य समावेशः । B विभिन्नधर्मवतोऽपि धर्म्यैक्यं वा । यथा—"उपधेयसंकरेऽप्युपाधेरसंकरः" इत्याद्यभियुक्तोक्तौ ( चि० १ ) ( ग० सामा० ) ( भवा० ),—'काञ्चनमयह्रदो वह्निमान् धूमात्' इत्यादौ,–धूमरूपैकहेतौ बाधातिरिक्तस्याश्रयासिद्ध्यादेरपि समावेशः संकरः । ३ अभेदः । ( मु० म० प्रामाण्य० पृ० ४२० ) यथा—अतिरिक्तविषयतापक्षे, "प्रकारभेदेनैकत्र विषयताभेद इति लक्षणद्वयसमावेशात्प्रमा-भ्रम-संकरः" ( चि० १ । प्रामा० पृ० ४१८)इत्यादिग्रन्थे,—'संकर'शब्दस्यार्थोऽभेदः । ४ स्मृ-

---

१ तदुक्तम्—"आदिमध्यावसानेषु य-र-ता यान्ति लाघवम् । भ-ज-सा गौरवं यान्ति म-नौ तु गुरुलाघवम्" इति । ( श्रुतबो० )

२ स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणाभावप्रतियोगित्वएतत्त्रितय-संबन्धेन यत्किंचिज्जातिविशिष्टत्वं समुदितार्थः, इति गुरुचरणाः (भिकुशास्त्री गोडबोले ) प्राहुः ।

एतत्संकरलक्षणं च परस्परात्यन्ताभावसमानाधिकरणपदार्थद्वयसामानाधिकरण्यत्वम्, इति चिन्त्यम् । ( ल० व० )

३ अयं संकरश्च जातित्वे बाधकः, इति विज्ञेयम् । ( नील० ) । श्रीहर्षकृतखण्डने त्वेवं प्रतिपादितम्—"न सांकर्यस्य सर्वथा जात्यभावकल्पकत्वम्; मानाभावात् । एवं च,—भूतत्व-मूर्तत्वे, पृथिवीत्व-शरीरत्वे च जातिरूपे एव; क्रियासमवायिकारणतावच्छेदकतया मूर्तत्वादेरिव भूतादिपदशक्यतावच्छेदकतया भूतत्वादेरपि जातित्वात्" इति । ( ल० म० )

४ तथा हि–[ क ] मनोऽन्तर्भावेनाकाशान्तर्भावेन च परस्परं स्वस्वात्यन्ताभावसमानाधिकरणयोर्भूतत्वमूर्तत्वयोः पृथिव्यादिचतुष्टये समावेशः, इति भूतत्वं न जातिः, इति विज्ञेयम् । [ ख ] भूतत्वाभाववति मनसि मूर्तत्वं तिष्ठति, तथा–मूर्तत्वाभाववति चाकाशे भूतत्वं तिष्ठति, पृथिव्यादिभूतचतुष्टये तु भूतत्वं मूर्तत्वं चोभे तिष्ठतः, इति संकरो ज्ञेयः ।

तिशास्त्रज्ञास्तु,—एकवर्णपुरुषात् विवाहितवर्णान्तरस्त्रियां जातो जातिविशेषः । यथा—मूर्धावसिक्त-सूतादिः, इत्याहुः । ५ आलंकारिकास्तु,—अलंकारविशेषैः, इत्याहुः । ६ धर्मज्ञास्तु,—अस्पृश्यस्पर्शादिरूपः संसर्गः । यथा—चाण्डालादिसंकरः, इत्याहुः । ७ संमार्जन्यादिभिः क्षिप्तं रजः, इति काव्यज्ञा आहुः ।

**संकल्पः**—१ अनासन्नक्रियेच्छा । यथा—"अनागतेषु सर्पव्याघ्रादिषु संकल्पजं दुःखम्" (प्रशस्त० २ । पृ० ९१) इत्यादौ । २ धर्मज्ञास्तु,—

---

१ अत्रेदमधिकं विज्ञेयम्—अनुलोमजानामुपनयनादिसंस्कारार्हत्वम्, प्रतिलोमजानां तु तदनर्हत्वम्, इति ।

२ वर्णसंकरजातिश्च* ( अनुलोमजा प्रतिलोमजाऽपि ) नानाविधा । यथा—"विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् । जातोऽम्बष्ठस्तु, शूद्रायां निषादः पार्शवोऽपि च" इत्यादि । ( गरुडपु० अ० ९६ ) "ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते । निषादः शूद्रकन्यायां यः पारशव उच्यते" इत्यादि । ( मनु० अ० १० श्लो० ८–४१ ) (याज्ञ० अ० १ । श्लो० ९१—९२ )

३ तदुक्तम्—"अङ्गाङ्गित्वेऽलंकृतीनां तद्वदेकाश्रयस्थिता । संदिग्धत्वे च भवति संकरस्त्रिविधः पुनः" इति ( सा० द० परि० १० । श्लो० ७५७ । पृ० २४६ )

४ अथ चाण्डालसंकरप्रायश्चित्तम्; तत्र च्यवनः—"चाण्डालसंकरेषु भवनदहनं, पूरणं सर्वभाण्डभेदनं, दारवाणां तक्षणं, शङ्खशुक्तिरजतचेलानामद्भिः प्रक्षालनं, कांस्यताम्राणामाकरशुद्धिः/ सौवीरपयोदधितक्राणां परित्यागः, शेषरसयवसद्रव्यरक्षणं, गोमूत्रयावकाहारो मासं क्षपयेत्; बालवृद्धस्त्रीणामर्धं प्रायश्चित्तम्" इति । तथाऽऽपस्तम्बोऽपि—"अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि । स वै ज्ञात्वा तु काले तु कुर्यात्तत्र विशोधनम् ॥ चान्द्रायणं पराकं वा द्विजातीनां विशोधनम् । प्राजापत्यं तु शूद्राणां तथा संसर्गदूषणे" इत्यादि ।

स्वल्पकालविषये सुमन्तुः—" अगम्यागमनस्त्रीवधचाण्डालसंपर्केषु कृच्छ्रत्रयम् " इति । परंपरासंसर्गे तु वृद्धशातातपः—"अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति । तत्स्पृष्टोऽन्यो न दुष्येत सर्वद्रव्येष्वयं विधिः" इति । देवलेऽपि—"संस्पृश्याशुचिसंस्पृष्टं तृतीयं वाऽपि मानवः । हस्तौ पादौ च प्रक्षाल्य तोयेनाचम्य शुद्ध्यति" इत्यादि ।

---

* अत्रेदमधिकं ज्ञेयम्—[ १ ] "व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्मणां च त्यागेन जायन्ते वर्णसंकराः" इति । ( मनु० अ० १० । श्लो० २४ ) । [ २ ] "स्त्रीषु दुष्टासु वार्ष्णेय । जायते वर्णसंकरः" इति । ( गीता, अ० १ । श्लो० ४१ )

कर्मसाधनीयाभिलापवाक्यम् । यथा—"मनसा संकल्पयति वाचाऽभिलपति कर्मणा चोपपादयति" ( ति० त० रघु० ) ( वाच० ) इत्यादौ, इत्याहुः । ३ कर्मज्ञाश्च,—अभीष्टसिद्धये 'इदमित्थमेव कार्यम्' इत्येवंरूपो मानसो व्यापारविशेषः, इत्याहुः ।

**संकीर्णत्वम्**—१ संकरवत्त्वम् । यथा—"संकीर्णजातिः" इत्यादौ । २ एकत्र विजातीयमेलनम् । यथा—"असंकीर्णबाधः" इत्यादौ । ३ अशुद्धत्वप्रयोजको धर्मः, इति धर्मज्ञा वदन्ति ।

**संकेतः**—१ (पदवृत्तिः) [ क ] 'इदं पदममुमर्थं बोधयतु' इति, 'अस्मात्पदादयमर्थो बोद्धव्यः' इति चेच्छा ( चि० ४ ) ( ग० शक्ति० पृ० ३ ) ( त० प्र० ४ ) (न्या० बो० ४) यथा—घटपदस्य कम्बुग्रीवादिमत्यर्थे संकेतः ।

[ ख ] पतञ्जलिस्तु,—पदपदार्थयोरितरेतराध्यासरूपः (स्मृत्यात्मकः) । यथा—'योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः' इति संकेतः, इत्याह । ( ल० म० )

---

१ "संकल्पेन विना राजन् ! यत्किंचित्कुरुते नरः । फलं स्यादल्पकं तस्य धर्मस्यार्धक्षयो भवेत्" इति । ( ब्रह्मपु० )

२ अत्रोक्तम्—"संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः । व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः" इति ( एका० त० )

३ तत्रोक्तम्—"आशास्य च शुभं कार्यमुद्दिश्य च मनोगतम्" इति ।

४ स च द्विविधः,—भावविषयः, अभावविषयश्च । तत्राद्यः, 'मयैतत्कर्तव्यम्' इत्येवंरूपः । यथा—पूजादिसंकल्पः । द्वितीयस्तु, 'मयैतन्न कर्तव्यम्' इत्येवंरूपः । यथा—उपवासादिसंकल्पः, इति ।

५ तदर्थश्च,—'इदमेतदर्थविषयकबोधजनकं भवतु' इति ( ग० शक्ति० टी० पृ० ३ )

६ तदर्थस्तु,—'एतत्पदजन्यबोधविषयतावान् भवतु' इति ( ग० शक्ति० टी० पृ० ३ )

७ संकेतग्रहस्तु व्याकरण-वृद्धव्यवहारा-दितो भवति । ( मु० ख० ४ ) ( श० प्र० श्लो० २० ) ( वै० वि० ७ । २ । २० ) । तत्प्रपञ्चस्तु 'शक्ति'शब्दव्याख्याने द्रष्टव्यः ।

८ ईदृशसंकेतस्य लोके दर्शनेन तादृशेश्वरसंकेतस्याप्यनुमानात् । अत एव न्यायवाचस्पत्ये उक्तम्—"सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः संकेतस्तद्व्यवहाराच्चास्मदादीनामपि सुग्रहस्तत्संकेतः" इति । ( ल० म० )

[ ग ] अन्ये शाब्दिकास्तु,—अर्थबोधजनकः शब्दव्यापारः, इत्याहुः । संकेतो द्विविधः,—आधुनिकसंकेतः, ईश्वरसंकेतश्च । तत्राद्यः 'परिभाषा' इत्युच्यते । द्वितीयः 'शक्तिः' इत्युच्यते । ( ग० शक्ति० पृ० ३ ) ( वै० वि० ७ । २ । २० ) ( श० प्र० श्लो० २३ । टी० पृ० २९–३० ) । २ नर्तकास्तु,–मनोगतभावव्यञ्जनाय कृतो हस्तादिचेष्टाविशेषः, इत्याहुः । ३ साहित्यशास्त्रज्ञाश्च,—प्रियसंगमार्थं व्यवस्थापितं गुप्तस्थानम्, इत्याहुः ।

**संकोचः**—१ अवयवाकर्षणम् । यथा—मतविशेषे, "मनसः संकोच-विकाश-शालित्वम्" इत्यादौ,—'संकोच'शब्दस्यार्थः ( आकुञ्चनम् ) । (मु० मनोनि० पृ० १९०) । २ शाब्दिकास्तु,—बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापनम्, इत्याहुः । ३ मीमांसकाश्च,–सामान्यशब्दस्य विशेषपरत्वं संकोचः । यथा—'न हिंस्यात्' इत्यस्य काम्यहिंसातिरिक्तहिंसापरत्वम्, इत्यङ्गीचक्रुः । काव्यज्ञास्तु,–४ जडीभावः । ५ बोधः । ६ बन्धः । ७ मत्स्यविशेषः । ८ कुङ्कुमम्, इत्याहुः । ( वाच० )

**संक्षेपः**—'लघुत्व'शब्दस्य ( २ ) अर्थवदस्यार्थोऽनुसंधेयः । ( ग० अवय० ) । संक्षेपो द्विविधः,—शब्दसंक्षेपः, अर्थसंक्षेपश्चेति । (राम०)

---

१ मतभेदाः—संकेतश्च जात्यादिचतुष्के,* इति वैयाकरणा आलंकारिकाश्चाहुः । 'जात्याकृतिविशिष्टव्यक्तौ' इति नैयायिका आहुः । अत्राधिकं च 'शक्ति'शब्दव्याख्याने द्रष्टव्यम् ।

२ तदुक्तं भर्तृहरिणा—"आजानिकश्चाधुनिकः संकेतो द्विविधो मतः । नित्य आजानिकस्तत्र या शक्तिरिति गीयते ॥ कादाचित्कस्त्वाधुनिकः शास्त्रकारादिभिः कृतः" इति । ( श० प्र० श्लो० २३ । टी० पृ० ३० )

३ इदं च प्राचीनमताभिप्रायेण । नव्यमते च, परिभाषाऽपि 'शक्तिः' इत्युच्यते, इति बोध्यम् । ( श० प्र० श्लो० २३ टी० । पृ० २९–३० )

४ तच्च, भूयसोऽर्थस्याल्पवाक्यादिना प्रकाशनम् ।

५ सच 'अनुगम'शब्दस्यार्थवदनुसंधेयः ।

---

* तदुक्तम्—( १ ) "संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च" इति । ( भर्तृहरिः ) । ( २ ) "शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः । चातुर्विध्यादमीषां तु शब्द उक्तश्चतुर्विधः" इति । ( काव्यादर्श० ) । "जातिद्रव्यगुणस्पन्दैर्धर्मैः संकेतवत्तया । जातिशब्दादिभेदेन चातुर्विध्यं परे ( शाब्दिकाः ) जगुः" इति । ( श० प्र० श्लो० १८ )

**संख्या**—१ (गुणः) [ क ] एकत्वादिव्यवहारहेतुर्गुणविशेषः ( प्रशस्त० पृ० १३ ) ( त० सं० )

[ ख ] A संख्यात्वसामान्यवती; B गणनाव्यवहारासाधारणकारणम् । सा चैकत्वद्वित्वबहुत्वभेदात्त्रिविधा; एकत्वादिपरार्धपर्यन्ता च। ( त० सं० ) ( प्र० प्र० ) ( त० कौ० ) तत्रापि सा द्विविधा,—एकवृत्तिः, अने-

१ [ १ ] संख्या तु एकत्वादि परार्धपर्यन्ता, नवद्रव्यवृत्तिः, चक्षुरिन्द्रियेण त्वगिन्द्रियेण च * गृह्यते। संख्याप्रपञ्चस्तु ( वै० उ० ७ । २ । ८ ) तत्र द्रष्टव्यः । [ २ ] मीमांसकास्तु,—संख्या गुणादावपि प्रतीतेः पदार्थान्तरमेव, इत्याहुः ।

२ तथा चोक्तम्–"गुणत्वे सति हेतुत्वं तत्तद्धीव्यवहारयोः" इति । ( ता० र० )

३ अत्रेदं बोध्यम्—'यत्रानियतैकत्वज्ञानं तत्र त्रित्वादिभिन्ना बहुत्वसंख्योत्पद्यते । यथा—सेना-वनादौ' इति कन्दलीकार आह । आचार्यास्तु,–त्रित्वादिकमेव बहुत्वं मन्यन्ते । तथा च–त्रित्वत्वादिव्यापिका बहुत्वत्वजातिर्नातिरिच्यते; सेनादौ चोत्पन्नेपि त्रित्वादौ त्रित्वत्वाद्यग्रहो दोषात्, इति । ( मु० गु० ) शिष्टं च 'बहुत्व'शब्दव्याख्याने संपादितम्; तत्तत्र द्रष्टव्यम् ।

४ तदुक्तं ब्रह्माण्डपुराणे—"एकं दश शतं चैव सहस्रमयुतं तथा । लक्षं च नियुतं चैव कोटिरर्बुदमेव च । वृन्दः खर्वो निखर्वश्च शङ्खपद्मौ च सागरः। अन्त्यं मध्यं परार्धं † च दशवृद्ध्या यथोत्तरम्" इति । ( सि० च० )

तेषां विशेषसंज्ञा लीलावत्यामपि दर्शिता यथा–"एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः। अर्बुदमब्जः ( शङ्खः ) खर्वनिखर्वौ महापद्मशङ्कवस्तस्मात् । जलधिश्चान्त्यं मध्यं ‡ परार्धमिति दशगुणोत्तराः संज्ञाः । संख्याव्यवहारार्थं कृताः पूर्वैः" इति । ( वाच० )

५ अत्र भाष्यम्—"सा ( संख्या ) पुनरेकद्रव्या, अनेकद्रव्या च । तत्रैकद्रव्यायाः सलिलादिपरमाणुरूपादीनामिव नित्यानित्यत्वनिष्पत्तयः । अनेकद्रव्या तु § द्वित्वादिका

* अत्रेदमनुसंधेयम्—"संख्या तु व्यञ्जकाभावादव्यक्ता प्रातरादिवत् । यत्र तु व्यञ्जकं किंचित्तत्र संख्या प्रकाशते" इति । ( श० प्र० )

† तत्र—एकादिसंख्यावाचकस्य संख्यासंख्येयोभयपरता; तेन 'घटादीनां पञ्च' इत्यपि प्रयोगः स्यात् । "वार्ताकुरेका गुणसप्रयुक्ता" इति वैद्यके,–संख्यापरतया निर्देशोऽपि साधुः । किं तु—संख्यात्वजातिविशिष्टायामेव शक्तिः; संख्यायुक्ते निरूढलक्षणा, इति विवेकः ।

‡ तत्रैकादिदशान्ताः शब्दास्त्रिलिङ्गाः; विंशत्याद्यास्तु नियतस्त्रीलिङ्गादिकाः । तत्रापि विंशत्यादिशब्दानां बहुत्वसंख्यावाचकत्वेऽपि एकवचनान्ततैव। वृत्तौ तु, बहुवचनान्ता अपि 'पञ्चविंशतयः, षट्शतानि' इत्यादयः प्रयोगाः साधवः ।

§ अत्रेदं विज्ञेयम्—द्वित्वादिर्व्यासज्यवृत्तिसंख्या च पर्याप्तिसंबन्धेनानेकाश्रिता, समवायेन तु प्रत्येकाश्रिता, इति । ( भा० प० श्लो० १०९ ) ( मु० गु० )

कवृत्तिश्च । तत्रैकत्वमेकवृत्ति; तच्च नित्यगतं नित्यम्, अनित्यगतमनित्यमेव । द्वित्वादिकं परार्धान्तमनेकवृत्ति; तच्चापेक्षाबुद्धिर्जन्यं तन्नाशनाश्यं च । परमाणु-द्व्यणुकादावतीन्द्रिये तु द्वित्वादिकं भगवदपेक्षाबुद्धिजन्यम्, अदृष्टनाशनाश्यं चेति । ( प्रशस्त० पृ० १३ ) ( त० कौ० १ )( मु० ) [ ग ] शाब्दिकास्तु,—नियतविषयपरिच्छेदहेतुः संख्या, इति वदन्ति। २ ज्ञानविशेषः ( सम्यग्बुद्धिः ) । यथा—'सांख्यः' इत्यादौ,—'संख्या'-शब्दार्थः । ( स्व० ) । ३ विचारः । ( राजनि० )

संगतिः—१ [ क ] एकवाक्यतापन्नत्वे सति, अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो ह्यर्थः । यथा—प्रत्यक्षनिरूपणकार्यत्वमनुमाननि-

---

परार्धान्ता; तस्याः खल्वेकत्वेभ्योऽनेकविषयबुद्धिसहितेभ्यो निष्पत्तिः; अपेक्षाबुद्धिविनाशाद्विनाशः, इति । .........क्वचिच्चाश्रयविनाशात् द्वित्वविनाशः, इति । ( प्रशस्त० पृ० २५–२६ )

१ तत्प्रपञ्चश्च 'अपेक्षाबुद्धिः' 'द्वित्वम्' इति शब्दयोर्व्याख्याने निरूपितः ।

२ संगतिश्च, कस्यचिद्वस्तुनो निरूपणे*ह्युपयुज्यते । तथा हि–[ क ] असंगतत्वज्ञानेन ग्रन्थादेरुन्मत्तप्रलपितत्वशङ्का†उत्पद्यते; संगतत्वज्ञानेन तु तन्निवृत्तिः । ततः,—एकवाक्यताप्रतिपत्तिः; तदेव संगतेः प्रयोजनम् । ( भवा० ) [ ख ] पूर्वापरग्रन्थैकवाक्यताप्रतिपत्तिः ( एकप्रयोजनवत्ताज्ञानफलिका ) प्रयोजनम् । ( दीधि० २ । पृ० १ ) ( वै० सा० द० ) । संगतिलक्षणं तु प्रसङ्गाद्यन्यतमत्वम् । ( भवा० )

३ जायते च, कार्ये कारणे वा ज्ञाते कारणत्वस्य कार्यत्वस्य वा ज्ञानात् 'किमस्य कारणं कार्यं वा' इति जिज्ञासा । अतस्तयोर्द्वयोरपि संगतित्वम् । ( दीधि० २ । पृ० २ )

तथा हि—प्रत्यक्षाभिधानानन्तरमनुमानाभिधानं निरूपणात्मकम्, तत्प्रयोजकजिज्ञासा‡ 'प्रत्यक्षकार्यज्ञानं भवतु' इत्याकारा, तज्जनकज्ञानं 'प्रत्यक्षकार्यज्ञानमिष्टसाधनम्' इत्याकारकम्, तद्विषयः प्रत्यक्षकार्यत्वम्, इति कार्यत्वे लक्षणसमन्वयः । एवं कारणत्वादावपि संगतित्वमूह्यम् । ( न्या० म० २ । पृ० १५ )

---

* अत्र व्याप्तिरनुसंधेया,—'यद्यदनन्तरं निरूप्यं भवति, तत्तत्संगतं भवति' इति । ( राम० २ । पृ० १३४ )

† अत एव प्रमाणमपि 'नासंगतं प्रयुञ्जीत' इत्यभियुक्तोक्तिः । ( राम० २ । पृ० १३४ )

‡ जिज्ञासायाः प्रयोजकत्वं चेत्थम्—प्रथमं ज्ञानेष्टसाधनताज्ञानाज्जिज्ञासा; ततो ज्ञानसाधनीभूतवाक्येच्छा; ततो वाक्यसाधनीभूतकण्ठाद्यभिघातेच्छा; ततस्तत्र प्रवृत्तिः; ततः कण्ठाद्यभिघातः; ततोऽनन्तराभिधानं निरूपणीयस्य, इति । ( म० प्र० २ । पृ० १५ )

रूपणे संगतिः ( दीधि० २ । पृ० २ ) (म० प्र० पृ० १९ ) ( राम० २ । पृ० १३४ ) यथा वा—सद्धेतुनिरूपणानन्तरमसद्धेतुनिरूपणे व्याप्तिपक्षधर्मत्वविरहरूपः प्रसंगसंगतिः । (ग० २ । हेत्वा० सामा० पृ० १) [ ख ] अनन्तराभिधानप्रयोजकजिज्ञासाजनकं यत्संगतिनिरूपकज्ञानप्रयोज्यं ज्ञानं तद्विषयस्मरणानुकूलसंबन्धः । संगतिः षड्विधा,[1]—प्रसङ्गः, उपोद्धातः, हेतुत्वम्, अवसरः, निर्वाहकैक्यम् ( निर्वाहकत्वं वा ), कार्यैक्यम् (एककार्यत्वं वा ), इति । ( राम० २ । पृ० १३४ )
वेदान्तिनस्तु,—"शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा" इति; अवान्तरसंगतयस्तु,—आक्षेपसंगतिः, दृष्टान्तसंगतिः, प्रासङ्गिकसंगतिः, मीमांसासंगतिः, एवमादिभेदेनानेकविधाः, इत्याहुः ( वाच० ) २ संगमः । ३ संमेलनं च, इति काव्यज्ञा आहुः ।

**संगीतम्**—१ दर्शनार्थं नाट्य-गीत-वाद्य-त्रिकम् । ( हेमच० ) यथा—"संगीतरसमाधुर्यम्[2]" इत्यादौ,—'संगीत'शब्दस्यार्थः । २ तादृशत्रिकप्रतिपादको ग्रन्थः । संगीतशास्त्राणि च नानाविधानि । तत्र मूलग्रन्थकर्तारश्चत्वारः,—भरतः, हनुमान्, सोमेश्वरः, कलानाथश्चेति । तत्र,—हनुमद्ग्रन्थस्यैव लोकेऽधुना बहुलप्रचारः । तद्ग्रन्थस्य च सप्ताध्यायाः,—स्वराध्यायः, रागाध्यायः, तालाध्यायः, नृत्याध्यायः, भावाध्यायः, कोकाध्यायः, हस्ताध्यायश्चेति । अत्रत्यः संगीतसारादौ विस्तारो दृश्यः ।

**संग्रहः**—१ [ क ] स्नेह-द्रवत्व-कारितः संयोगविशेषः[3] ( पिण्डीभावः ) ।

---

१ तदुक्तम्—"सप्रसङ्ग उपोद्धातो हेतुताऽवसरस्तथा । निर्वाहकैक्य-कार्यैक्ये ( निर्वाहकैककार्यत्वे ) षोढा संगतिरिष्यते" इति । ( राम० २ । पृ० १३४ ) ( वै० सा० द० )

२ अत्र प्रशंसा—"पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी । संगीतरसमाधुर्यं शंकरो वेत्ति वा* न वा" इति ।

३ [ १ ] स च, जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रवयति । ( वै० उ० २। १ । २ । पृ० ७२ ) । [ २ ] द्रवत्वसहितः स्नेहस्तु संग्रहे निमित्तं कारणम्, इति बोध्यम् । ( भा० प० गु० श्लो० १५७ )

---

* अत्र धूर्तबकाः प्रलपन्ति—'वानवा' इत्येकं पदम् । तथा च—'वानवा विदुरः प्रोक्तः' इति कल्पितप्रमाणात् 'शंकरो वेत्ति, विदुरोऽपि वेत्ति' इति वाक्यार्थो भवति, इति ।

( वै० उ० २ । १ । २ । पृ० ७२ ) यथा—सक्तुकादिसंयोगविशेषः । ( मु० गु० पृ० २३२ )

[ ख ] द्रवत्वसहितस्नेहकारितः संयोगविशेषः । ( वै० वि० २ । १ । २ । पृ० ७२–७३ ) ( प० मा० ) । २ संक्षेपेण स्वरूपकथनम् । यथा—"तर्कसंग्रहः" इत्यादौ,—'संग्रह'शब्दस्यार्थः । ( त० दी० ) । ३ अनेकेषामेकत्र स्थापनं संग्रहः, इति काव्यज्ञा वदन्ति । ४ बह्वर्थकवाक्यानामेकत्र संकलनम् । ५ ग्रहणम् । ६ संक्षेपः । ७ महोद्योगः । ८ व्याडिप्रणीतो व्याकरणग्रन्थविशेषः ।

**संघः**—१ प्रव्रजितविशेषोपग्रहेण वर्तमानपरिषत् । ( न्या० वा० १ । १ । १४ । पृ० ७९ ) । २ सजातीयप्राणिसमूहः । यथा—"संघे शक्तिः कलौ नृणाम्" इत्यादौ,—'संघ'शब्दस्यार्थः । ३ जन्तुविशेषः ।

**संघातः**—पदार्थसमुदायसंयोगः । ( स्व० ) यथा—दिव्येन तेजसा संयुक्तानामाप्यानां परमाणूनां परस्परसंयोगो द्रव्यारम्भकः संघाताख्यः; ( स च हिमकरकादिपरमाणुद्रवत्वप्रतिबन्धकः ) । ( प्रशस्त० द्रवत्वनि० पृ० ९२ ) । एवमन्येषामपि संघात ऊह्यः ।

**संज्ञः**—१ चेतना । २ संहतजानुकः । ३ गन्धद्रव्यविशेषः । ४ बुद्धिः ( स्त्री० ) । ५ आख्या । ६ हस्तैरर्थसूचनम् । ७ गायत्री । ८ सूर्यपत्नी ।

**संज्ञा**—[ १ ] संकेतवत्प्रातिपदिकम् (विशिष्टनाम) । (प० मा०) । यथा—"संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्" ( वै० २ । १ । १८ ) इत्यादौ,—'यव-वराह-वेतस-स्वर्ग-वायु' इत्यादिशब्दः । ( वै० उ० २ । १ ।१८) ( वै० वि० २ । १ । १८ । पृ० ९३ )

---

१ तथा हि— स हि (संग्रहः) न द्रवत्वमात्रकारितः; काच-काञ्चन-द्रवत्वेन संग्रहानुपपत्तेः । नापि स्नेहमात्रकारितः; स्त्यानैर्घृतादिभिः संग्रहानुपपत्तेः । तस्मात्, अन्वयव्यतिरेकाभ्यां स्नेह-द्रवत्व-कारितः, इति । ( वै० उ० २ । १ । २ । पृ० ७२ ) । तेन, द्रुतसुवर्णादीनां न संग्रहः, इति । ( मु० गु० पृ० २३२ )

२ लक्षणस्वरूपविभागप्रकारकज्ञानानुकूलः संक्षिप्तो व्यापारः, इत्यर्थः । ( वाक्य० )

३ अत्रोक्तम्—"विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः । निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः" इति ।

[ २ ] 'रूढ'शब्दवदस्यार्थोऽनुसंधेयः । ( श० प्र० श्लो० १७ ) । यथा—"संज्ञा-संज्ञि-संबन्धज्ञानमुपमितिः" इत्यादौ,—'गवया'दिशब्दः संज्ञा । ( नील० ३ ) । एवम्—घटादिशब्दोऽपि ।

संज्ञा त्रिविधा,—नैमित्तिकी, पारिभाषिकी, औपाधिकी चेति । केचिद्दण्ड्याचार्यप्रभृतयस्तु,—रूढनाम्नो जाति-द्रव्य-गुण-क्रिया-त्मकार्थचतुष्टयभेदेन चातुर्विध्यमङ्गीचक्रुः । ( श० प्र० श्लो० १७ ) । अन्ये तु, पूर्वं विभक्तायास्त्रिविधसंज्ञाया अन्यथोदाजह्रुः—( १ ) संज्ञा त्रिविधा,—पारिभाषिकी, नैमित्तिकी, औपाधिकी चेति । तत्र—आधुनिकसंकेतशालिनी, अनुगतप्रवृत्तिनिमित्तशून्या च संज्ञा पारिभाषिकी । यथा—चैत्रमैत्रादिः, आकाशादिश्च । अनादिसंकेतशालिनी, अनुगतप्रवृत्तिनिमित्तका च संज्ञा नैमित्तिकी । यथा—पृथिवी-जलादिः, पशु-भूतादिश्च । यौगिकी संज्ञा औपाधिकी । यथा—पाचकपाठकादिः, इति । ( म०

---

१ तथा हि—गोगवयादीनां शब्दानां गोत्वादिजात्या, पश्वाद्यादीनां शब्दानां लाङ्गूल-धनादिद्रव्येण, धन्य-पिशुनादीनां शब्दानां पुण्य-द्वेषादिगुणेन, चल-चपलादीनां च शब्दानां कर्मणा, अवच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेव शब्दानाम्, इति । ( श० प्र० श्लो० १८ । टी० पृ० १९ )

२ तदस्माभिः ( शब्दशक्तिप्रकाशिकाकृद्भिः ) परित्यक्तम्; तत्र कारणं तु,—जड-मूक-मूर्खादीनां शब्दानाम्, अन्यशून्यादीनां शब्दानां चासंग्रहः, इति । ( श० प्र० श्लो० १८ । टी० पृ० १९ )

३ तत्तच्छरीरनिष्ठचैत्रत्वादेराकाशत्वादेश्चाननुगतस्यैवात्र प्रवृत्तिनिमित्तत्वात्, इति भावः । (म० प्र० ४ । पृ० ४६ )

४ पशुत्वादेरुपाधित्वेऽपि, 'रोमवल्लाङ्गूलवत्त्वं पशुत्वम्, बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वम्' इत्याद्यनुगतत्वात्, इति भावः ।

५ पङ्कजादियोगरूढानां तु नैमित्तिकत्वेऽप्यौपाधिकत्वमविरुद्धम्; रूढ्या पद्मत्वादिमतो, योगेन च पङ्कजनिकर्तुरुपस्थितौ 'पद्मं पङ्कजनिकर्तृ' इत्येव शाब्दबोधात्, इति ।

६ अत्रायं विशेषः—'करणा-धिकरण'शब्दाश्च संकेतिता एव । पाचकपाठकादयस्तु संकेतशून्यत्वान्न संज्ञाः; तेषामपि संज्ञात्वे तु,—'अनुगतप्रवृत्तिनिमित्तशून्यसंकेतवती पारिभाषिकी, संकेतशून्यत्वे सति यौगिकी औपाधिकी, अनुगतप्रवृत्तिनिमित्तसंकेतवती नैमित्तिकी,' इति निर्वाच्याः, इति ।

प्र० पृ० ४ । पृ० ४६ ) । ( २ ) संज्ञा त्रिविधा,—पारिभाषिकी, औपाधिकी, नैमित्तिकी चेति । तत्राद्या, आधुनिकसंकेतशालिनी । यथा—चैत्रादिः । द्वितीया, उपाधिप्रवृत्तिनिमित्तिका । यथा पशु-भूता-ऽऽकाशादिः । तृतीया, जातिप्रवृत्तिनिमित्तिका । यथा—पृथिवीजलादिः । ( ३ ) भाष्यकृतस्तु,—आकाशादिसंज्ञाः पारिभाषिक्य एव, इत्याहुः । ( प० मा० ) शिष्टं तु 'रूढ'शब्दव्याख्याने संपादितमेव, इति नात्र कथितम् ।

**संज्ञी**—'संज्ञा'शब्दप्रतिपाद्योऽर्थः । ( स्व० ) यथा—"संज्ञासंज्ञिसंबन्धज्ञानमुपमितिः" इत्यादौ,—'गवयादि'रूपोऽर्थः संज्ञी । ( नील० )

**संततिः**—[1]अविच्छिन्नधारा । इयं संततिर्द्विविधा,—दैशिकी, कालिकी चेति । तत्र दैशिकी मूर्तानामेव । यथा—तैलादीनाम् । कालिकी संततिस्तु ज्ञानत्वसुखत्वादीनाम् । २ काव्यज्ञास्तु,—[ १ ] गोत्रम् । [ २ ] A पुत्रः । B दुहिता च । ३ विस्तारः । ४ पङ्क्तिश्च, इत्याहुः ।

**संतानः**—१ एकधर्मावच्छिन्नत्वेन ज्ञानम् । ( गौ० वृ० २ । ८४ ) । यथा—बौद्धमते, आलयविज्ञानसंतानः । २ वंशः, इति काव्यज्ञा वदन्ति ।

**संदर्भः**—१ [3]कथनम् । २ वक्तृतात्पर्यविशेषः । ३ रचना । ४ प्रथनम् । ५ प्रबन्धः ।

**संदिग्धः**—१ ( हेत्वाभासः ) [ क ] 'अनैकान्तिक'शब्दवदस्यार्थोऽनुसंधेयः । ( वै० २ । २ । ३६ ) ( ३ । १ । १५ ) ( त० व० २ । ३ । ४८ )

---

१ अत्र दैशिकसंततित्वं च स्वाधिकरणदेशीयनानावच्छेदकवृत्तिधर्मत्वम् ।

२ अत्र कालिकसंततित्वं च नानाकालीनकार्यमात्रवृत्तिधर्मत्वम् । ( चि० २ । परिशि० मुक्तिवादः । पृ० ४५ )

३ अत्रोक्तम्—"गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठया गिरा । नानार्थवत्त्वं वेद्यत्वं संदर्भः कथ्यते बुधैः" इति ।

४ तदुक्तम्—"विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्" इति । ( वै० उ० २ । १ । ३६ ) ( प्रशस्त० गुणनि० )

[ ख ] यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः, स सन्नेव संदेहजनकत्वात्संदिग्धः। यथा—'यस्माद्विषाणी, तस्माद्गौः' इति।

[ ग ] 'एकस्मिंश्च द्वयोर्हेत्वोर्यथोक्तलक्षणयोर्विरुद्धयोः संनिपाते संशयदर्शनादयमन्यः संदिग्धः' इति केचिदाहुः। यथा—मूर्तत्वामूर्तत्वं प्रति मनसः क्रियावत्त्वास्पर्शत्वयोः, इति। ( प्रशस्त० २। पृ० ४७ ) ( वै० ३। १। १९ )। २ संदेहविषयः। ( स्व० ) यथा—"संदिग्धासिद्धः" ( न्या० बिन्दु० टी० ) इत्यादौ,—'संदिग्ध' शब्दार्थः। ३ संलिप्तः, इति काव्यज्ञा आहुः।

**संदिग्धानैकान्तिकत्वम्**—[ १ ] ( हेत्वाभासः ) साध्यतदभावसंशयकत्वम्। [ २ ] [ क ] पक्षांशे साध्याभावसंशयात्मकं पक्षवृत्तित्वावगाहि व्यभिचारज्ञानम्।

[ ख ] हेतौ व्यभिचारसंशयः। ( ग० बाध० )। यथा—'धूमो वह्न्यभाववद्वृत्तिर्न वा' इत्यादिसंशयः। ( स्व० ) यथा वा—बौद्धमते, "सर्वज्ञः कश्चित् वक्तृत्वात्" ( न्या० बिन्दु० टी० ) इत्यादौ।

**संदेहः**—१ 'संशय'शब्दवदस्यार्थोऽनुसंधेयः। २ आलंकारिकाश्च,—अर्थालंकारविशेषः[1], इत्याहुः।

**संधिः**—१ संयोगः। ( अमरः ३। २। ११ )। २ नृपाणां षड्गुणान्तर्गतो[2] मैत्रीकरणरूपव्यापारः, इति नीतिशास्त्रज्ञा[3] आहुः। ३ वैयाकरणास्तु,—वर्णद्वयजातो वर्णविकारः। यथा—'अच्'—संधिः[4], 'हल्'—संधिः, इत्याहुः। ४ नाटकाङ्गविशेषः[5], इत्यालंकारिका आहुः। ५ अस्थिद्व-

१ तदुक्तं काव्यप्रकाशे—"ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः" इति। ( का० प्र० उ० १०। श्लो० ६ )

२ अत्रोक्तम्—"संधिविग्रहयानानि संस्थाप्यासनमेव च। द्वैधमाश्रयणं चैव षड्गुणा नीतिवर्णने" इति; "संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" इति च। (अमरः, २।८।१८)

३ अत्राधिकं तु, शुक्रनीति-युक्तिकल्पतरु-हितोपदेशादौ द्रष्टव्यम्।

४ 'श्री, ईश' इति स्थिते 'श्रीश' इत्यच्संधिः। 'तत्, लय' इति स्थिते 'तल्लय' इति हल्संधिः।

५ अत्रोक्तम्—"अन्तरैकार्थसंबन्धः संधिरेकान्वये सति" इति। ( सा० द० परि० ६। श्लो० ३३१ )

यसंयोगस्थानम्, इति शारीरज्ञा आहुः । ६ धर्मशास्त्रज्ञास्तु,—यस्मिन् काले आदित्यस्य खण्डमण्डलस्योपलब्धिः, सः । यथा—'अहोरात्रयोः संधिः' इत्यादौ, इत्याहुः । ( मिता० १ ) । ७ चौरादिकृतसुरुङ्गा । यथा—"संधिं कृत्वा तु मे चौर्यम्" ( स्मृतिः ) इत्यादौ । ८ भगः । ९ संघट्टनम् । १० 'सत्यादियुगादीनामाद्यन्तौ कालौ' इति पौराणिका आहुः।

**संध्या**—१ एकरूपकालोत्तरभाविपररूपकालयोरवकाशविशेषः । यथा—दिवारात्रस्य मध्यवर्तिकालः संध्या भवति । २ सायाह्नः । ३ संध्याकाले उपास्यदेवताविशेषः । ४ संध्योपासना । यथा—"अनर्हः कर्मणां विप्रः संध्याहीनो यतः स्मृतः" ( स्मृतिः ) इत्यादौ 'संध्या'शब्दस्यार्थः । ५

---

१ अत्रोक्तम्—"ससंधयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ संधिः पञ्चदशः स्मृतः" इति ।

तत्र सत्ययुगस्य चत्वारि वर्षशतानि संध्या, संध्यांशश्च । त्रेतायास्त्रीणि वर्षशतानि संध्या, संध्यांशश्च । द्वापरस्य द्वे वर्षशते संध्या, संध्यांशश्च । कलेरेकवर्षशतं संध्या, संध्यांशश्च । ( मनु० अ० १ । श्लो० ६९–७० )

२ स च* ( कालः ) दिवाशेषदण्डसहितरात्रिप्रथमदण्डात्मकः कालः, तयोश्चतुर्दण्डात्मककालश्च । तथा च—"त्रियामां रजनीं प्राहुस्त्यक्त्वाऽऽद्यन्तचतुष्टये । नाडीनां तदुभे संध्ये दिवसाद्यन्तसंज्ञिते" इति । युगस्य तु पूर्वा संध्या, उत्तरश्च संध्यांशः । ( मनु० टी० कुल्लू० १ । ६९ )

३ संध्याद्वयकालस्तु अहोरात्रसंबन्धिमुहूर्तात्मकः । तथा च दक्ष आह—"अहोरात्रस्य यः संधिः सूर्यनक्षत्रवर्जितः । सा च संध्या समाख्याता मुनिभिस्तत्त्वदर्शिभिः" इति ।

४ अत्रार्थे प्रमाणम्,—"संध्यामुपासते ये तु नियतं संशितव्रताः" इति । ( स्मृतिः )

५ अत्र व्यास आह—"उपास्ते संधिवेलायां निशाया दिवसस्य च । तामेव संध्यां तस्मात्तु प्रवदन्ति मनीषिणः" इति । ( मनुरपि, अ० २ । श्लो० १०१ )

संध्यात्रयसाधारणलक्षणमाह योगियाज्ञवल्क्यः—"त्रयाणां चैव देवानां ब्रह्मादीनां समागमः । संधिः सर्वसुराणां च तेन संध्या प्रकीर्तिता" इति । "एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते" इति । ( मनु० २ । १०३ ) ( छन्दोगप० ) ( वाच० )

---

* तं चान्यरीत्याप्याहुः—पूर्वदिवसीयरात्रिशेषदण्डादिपरदिनसूर्योदयपर्यन्तः, सूर्यास्तात्पूर्वोत्तरदण्डात्मकः कालः, इति ।

वेदान्तिनस्तु,—प्रबोध-गाढनिद्रावस्थयोः संधिभवः स्वप्नः । यथा—“संध्ये सृष्टिराह हि” ( ब्रह्मसू० ३ । २ । १ ) इत्यादौ,—‘संध्या’शब्दस्यार्थः, इत्याहुः ।

**संनिकर्षः**—१ प्रत्यक्षजनकः संबन्धः । यथा—चाक्षुषप्रत्यक्षे चक्षुर्विषययोः संसर्गः । संनिकर्षो द्विविधः—लौकिकः, अलौकिकश्चेति । शिष्टं तु ‘इन्द्रियार्थसंनिकर्ष’शब्दव्याख्याने दृश्यम् । ( प्रशस्त० गु० पृ० ४२–४३ ) । २ ‘संनिकृष्टत्व’शब्दवदस्यार्थोऽनुसंधेयः । ( वै० उ० ७ । २ । २१ )

**संनिकृष्टत्वम्**—सांनिध्यम्; तच्च, १ [ क ] संयुक्तसंयोगाल्पीयस्त्वम् । [ ख ] अल्पसंयोगान्तरितत्वम् । ( वै० उ० ७ । २ । २१ । पृ० ३४२ ) ( दि० गु० पृ० २०८ ) । यथा—पञ्चवट्यास्त्र्यम्बकेरश्ममपेक्ष्य जनस्थानसंनिकृष्टत्वम् । ( स्व० ) । यथा वा—“सद्वृत्तसंनिकर्षो हि क्षणार्धमपि शस्यते” ( पुराणम् ) इत्यादौ ‘संनिकर्ष’शब्दस्यार्थः । २ तदपेक्षयाऽल्पतरतपनपरिस्पन्दान्तरितजन्मत्त्वम् । ( वै० उ० ७ । २ ।

---

१ अत्रार्थे व्युत्पत्तिः—‘जाग्रत्सुषुप्तिसंधौ भवति’ इति संध्यः स्वप्नः । ( तत्त्वप्रकाशिका० ३ । २ । १ )

२ योऽयं ‘संनिकर्ष’शब्दः संयोग-समवाय-विशेषण*विशेष्यभाव-व्यापकत्वादुपात्तः, इति सोऽयं संनिकर्षः प्रत्यक्षस्य कारणं भवति । ( न्या० वा० १ । पृ० ३३ )

३ मध्वमतानुयायिभिरयं षड्विधसंनिकर्षो नाङ्गीक्रियते; किं तु—सर्वेन्द्रियाणां स्वस्वविषये (स्वविषयप्रतियोगिकाभावेन (?)) साक्षादेव रश्मिद्वारा संनिकर्षः । ( प्र० प० पृ० ११ )

४ अत्रायं कार्यकारणभावः—‘संनिकृष्टत्वबुद्धिरपरत्वे निमित्तकारणम्’ इति बोध्यम् । ( वै० उ० ७ । २ । २१ । पृ० ३४२ )

५ तच्च ‘दिक्कृतं संनिकृष्टत्वम्’ इति विज्ञेयम् ।

६ तदर्थस्तु,—तदधिकरणकालध्वंसाधिकरणक्षणवृत्तिजन्मवत्त्वम्, इति । ( प० मा० ) । एतच्च, ‘कालकृतं संनिकृष्टत्वम्’ इति विज्ञेयम् ।

---

* विशेषण-विशेष्यभावोऽत्र न विषयतारूपः; अपितु—स्वरूपसंबन्धावच्छिन्नाधाराधेयभावः । ( नील० १ पृ० १८ )

† एतेन, ‘वैशेषिकमते संनिकृष्टत्व-विप्रकृष्टत्वे ( दूरत्व-समीपत्वे ), परत्वापरत्वाभ्यामतिरिक्ते एव; नव्यमते तु ते ताभ्यामनतिरिक्ते एव’ इत्युक्तम्, इति विज्ञेयम् ।

२१ । पृ० ३४३ ) । यथा—युधिष्ठिरमपेक्ष्यार्जुनस्य भीमसंनिकृष्टत्वम् । ( स्व० ) । शिष्टं च 'अपरत्व'शब्दव्याख्यानावसरे संपादितम्, इत्यत्र विरम्यते । ३ निकटसंबन्धः ।

**संनिधानम्** / **संनिधिः**—१ अव्यवधानम् । ( मु० ४ ) यथा—"संनिधानं तु पदस्यासत्तिरुच्यते" ( भा० प० ४ । श्लो० ८४ ) इत्यादौ,—'संनिधान' शब्दार्थः । २ सामीप्यम् ( संनिकृष्टत्वम् ) । ३ अविनाभाववृत्तिः । (वात्स्या० २ ।२ । ६१ ) यथा—तदर्थे "व्यक्त्याकृतिजातिसंनिधावुपचारात्संशयः" ( गौ० २ । २ । ६१ ) इत्यादौ,—'संनिधि' शब्दस्यार्थः । ४ 'इन्द्रियविषयता, इति केचिदाहुः । ( मेदि० )

**संनिपातः**—१ 'पात' शब्दस्य ( १ ) अर्थवदस्यार्थोऽनुसंधेयः । २ शाब्दिकाश्च,—संश्लेषः ( संबन्धः ) । यथा—"संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" (व्याक० परिभा०) इत्यादौ,—'संनिपात' शब्दस्यार्थः, इत्याहुः । ३ भिषजस्तु,—कफादिधातुत्रयस्य वैषम्यरूपत्रिदोषजनितो ज्वरविशेषः, इत्याहुः । ४ गायकास्तु,—तालविशेषः, इत्याहुः ।

**संनिहितत्वम्**—१ 'संनिकृष्टत्व' शब्दवदस्यार्थोऽनुसंधेयः । २ 'संनिधि' शब्दवदस्यार्थोऽनुसंधेयः ।

---

१ अत्र—वृत्तिकारस्तु,—सामीप्यम् ( मिलनम् ) संनिधिः, इत्याह । ( गौ० वृ० २ । १२४ )

२ अत्र मूढमतमाह—"तदवस्थं ( संनिपातज्वरावस्थं पुरुषम् ) तु तं दृष्ट्वा मूढो व्याहरते जनः । धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये ॥ अन्यया ब्रुवते केचित् यक्षिण्या ब्रह्मराक्षसैः । पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हतम् । कुलदेवार्चनाहीनं धर्षितं कुलदैवतैः । नक्षत्रपीडामपरे गरकर्मेति चापरे ॥ संनिपातमिमं प्राहुर्भिषजः कूटपालकम्" इति । ( भावप्र० )

३ कारणपूर्विकां संनिपातज्वरसंप्राप्तिमाह—"त्रिदोषजनकैर्वातपित्तश्लेष्मणामरोहगाः । बहिर्निरस्य कोष्ठाग्निं रसगा ज्वरकारिणः" इति । ( भावप्र० )

४ अत्रोक्तम्—"एक एव गुरुर्यत्र संनिपातः स चेष्यते" इति । ( संगीतदा० )

**संन्यासः**—१ [क] काम्यकर्मत्यागः। ( कि० व० पृ० १३ ) [ख] वेदान्तिनस्तु,—A सर्वसमर्पणम्;B विहितकर्मणां विधानेन फलानिच्छया काम्यकर्मत्यागो वा संन्यासः, इत्याहुः। २ काम्यकर्मत्यागोपयोगि[1]चतुर्थाश्रमः। [2] ३ पौराणिकाश्च,–चैत्रे मासि क्षत्रियादिकर्तव्यः शिवव्रतविशेषः, इत्याहुः। ४ जटामांसी—( दम्भवर्तनम् )। ( शब्दच० )

**संपत्तिः**—१ [१] ज्ञानम्। [२] मायावादिनस्तु,–भ्रमात्मकं ज्ञानम्। यथा–'संपदा[3]त्मा' इत्यादौ, इत्याहुः। २ प्राप्तिः। ३ ऐश्वर्यं च, इति काव्यज्ञा वदन्ति।

**संप्रतिपत्तिः**—१ निश्चयः। ( गौ० वृ० २। ३ ) यथा—"विप्रतिपत्तौ च संप्रतिपत्तेः" ( गौ० २। ३ ) इत्यादौ,–'संप्रतिपत्ति' शब्दस्यार्थो निश्चयः। २ प्रत्यभिज्ञा। ( वै० उ० २। २। ३९ ) यथा–"संप्रतिपत्तिभावाच्च" ( वै० २। २। ३९ ) इत्यादौ,–'संप्रतिपत्ति' शब्दस्यार्थः प्रत्यभिज्ञा। ३ उत्पत्तिः। ( गौ० वृ० ३। १९ ) यथा–"पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसंप्रतिपत्तेः" ( गौ० ३। १९) इत्यादौ,–'संप्रतिपत्ति' शब्दस्यार्थ उत्पत्तिः। ४ व्यवहारज्ञास्तु,–[१] वाद्युक्तार्थविषयस्वी[4]कारः। [२] उ[5]त्तरविशेषश्च ( सत्योत्तरम् ), इत्याहुः।

---

१ तदुक्तं गीतायाम्—"काम्यानां कर्मणां न्यासं ( त्यागम् ) संन्यासं कवयो विदुः" इति। ( गीता० अ० १८। श्लो० २ )

२ चतुर्थाश्रमिणां धर्मभेदेन नामभेदा दश यथा—"तीर्थाश्रमवनारण्यगिरिपर्वतसागराः। सरस्वती भारती च पुरीति दश कीर्तिताः" इति। ( बृहच्छंकरविजये विद्यारण्यधृतं वाक्यम् )

३ अत्र संपत्तिस्तु, अनुरूपात्मभावे यस्य यद्रूपता उचिता तस्य तथाभवनम्। ( सि० च० )

४ तदुक्तम्—"श्रुत्वाऽभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते। सा तु संप्रतिपत्तिः स्यात्" इति ( स्मृतिः )।

५ अत्रोक्तम्—"मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा। प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः" इति ( स्मृतिः )। ( मिताक्षरायां कात्यायनः। अ० २। श्लो० ७ )

संप्रदानत्वम्—( कारकम् ) [ १ ] [ क ] गत्यादिभिन्ने यद्धातूपस्थाप्ये यादृशार्थे विग्रहस्थचतुर्थ्या यः स्वार्थो बोधयितुं शक्यते, स तद्धातूपस्थाप्यतादृशक्रियायां संप्रदानत्वमुच्यते । यथा—'ब्राह्मणाय दानं धनस्य' इत्यादौ,—ब्राह्मणस्य संप्रदानत्वम् । ( श० प्र० श्लो० ७० )

[ ख ] धात्वर्थतावच्छेदकफलभागित्वेनोद्देश्यत्वम् । यथा—'विप्राय गां ददाति' इत्यादौ,—विप्रस्य संप्रदानत्वम् ।

---

१ 'ग्रामाय गतः' इत्यादौ,—विग्रहस्थचतुर्थ्या धात्वर्थे बोध्यमपि कर्मत्वं, न गत्यादिभिन्ने चतुर्थ्या बोधयितुं शक्यते; 'वृक्षाय सेचकः' इत्यादौ,—गत्यादिभिन्ने चतुर्थ्या बोधनीयोऽपि 'संवर्धयितुं' इत्यादितुमर्थो न विग्रहस्थया, इति न तत्र प्रसङ्गः । ( श० प्र० श्लो० ७० । टी० पृ० ९७ )

२ 'संप्रदान'शब्दस्तु, स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्तः, इति 'स्वत्वप्रतियोगित्वं*संप्रदान(त्व)म्' इत्यादिको न प्रयोगः । ( श० प्र० श्लो० ७० । टी० पृ० ९७ )

३ अत्र ददातेः † स्वत्वजनकस्त्यागोऽर्थः; तन्निविष्टे च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं निरूपितत्वं वा चतुर्थ्या बोध्यते, इति तदेव तत्र संप्रदानत्वम्; 'ब्राह्मणप्रतियोगिकं ब्राह्मणनिरूपितं वा यद्धनवृत्ति स्वत्वम्, तज्जनकस्त्यागः' इत्येवं तत्र प्रत्ययात्; धात्वर्थतावच्छेदकीभूतस्वत्वाख्यफलवत्तया धनादेर्दानकर्मत्वात् । ( श० प्र० श्लो० ७० टी० पृ० ९६ )

४ तथा च—पितृस्वर्गोद्देशेन कृतगोदानादिस्थले,—दानजन्यस्वर्गात्मकफलभागित्वेन पितुरुद्देश्यत्वेऽपि, पितृस्वर्गादिकस्य धात्वर्थतावच्छेदकत्वाभावेन न पित्रादेः संप्रदानत्वम्, इति 'पित्रे गां ददाति' इति न प्रयोगः । ( का० व्या० कार० ४ । पृ० ८ )

५ अत्र—संबन्धित्वेन परेच्छाविषयत्वं‡ चतुर्थ्यर्थः, स च धात्वर्थतावच्छेदकफलेऽन्वेति; वृत्तित्वं द्वितीयार्थः । तथा च—'विप्रसंबन्धिपरेच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपरस्वत्वानुकूलत्यागानुकूलकृतिमान्' इत्यन्वयधीः । ( का० व्या० कार० ४ । पृ० ८ )

६ अत्र "कर्मणा यमभिप्रैति स§ संप्रदानम्" ( पाणि० १ । ४ । ३२ ) इति सूत्रेण विप्रस्य संप्रदानसंज्ञा । गौणमुख्यसाधारणे "संप्रदाने चतुर्थी" भवति । ( वाच० )

---

* 'दानानुयोगित्वं संप्रदानत्वम्' इति कश्चिदुक्ति ।

† मैथिलास्तु,—स्वीकारजन्यस्य स्वत्वस्य जनकस्त्यागो दानम्, इत्याहुः । ( श० प्र० )

‡ अत्र—'चैत्राय यच्छति' इत्यादिप्रयोगवारणाय 'पर' इति पदं दत्तम् । ( का० व्या० कार० ४ । पृ० ८ )

§ तदर्थश्च—तत्क्रियाकरणीभूतेन तत्क्रियाकर्मणा, यमभिप्रैति ( फलमभिप्रैति ), सः ( फलभागित्वेनोद्देश्यः ), संप्रदानसंज्ञकः, इति ।

[ ग ] क्रियाजन्यफलभागितया[1] कर्तुरिच्छाविषयत्वम् । ( ग० व्यु० का० २ । पृ० ४३ )

[ घ ] धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धविशिष्टतयेष्टत्वम्[2] । यथा—'ब्राह्मणाय[3] गां ददाति' इत्यादौ,—ब्राह्मणस्य संप्रदानत्वम् । ( ग० व्यु० कार० ४ )

[ ङ ] शाब्दिकास्तु,—प्रकृतधात्वर्थे यत्कर्म तत्संबन्धित्वेनेच्छोद्देश्यत्वम्, इति वदन्ति ।

संप्रदानं त्रिविधम्[4],—प्रेरकम्[5], अनुमन्तृ[6], अनिराकर्तृ[7] ( उदासीनं ) चेति ।

---

१ 'ब्राह्मणाय गां ददाति' इत्यादौ,—क्रिया च दानम्, तज्जन्यं फलं तु स्वत्वम् । तथा च—दानस्य *स्वत्वहेतुत्वे प्रमाणम्—[ क ] "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः । प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इत्यादि । ( मनु० अ० १० । श्लो० ११५ ) [ ख ] "प्रदानं स्वाम्यकरणम्" इति च । अत्राधिकं तु 'दान' 'प्रतिग्रह' शब्दव्याख्याने द्रष्टव्यम् ।

२ स च संबन्धस्तादृशाश्रयत्वभिन्नोऽवश्यं ग्राह्यः । तेन, 'विप्राय गां ददाति' इत्यादौ,—स्वस्वत्वध्वंसविशिष्टाया: परस्वत्वजनकेच्छाया 'दा' धात्वर्थत्वे,—गोर्धात्वर्थतावच्छेदकीभूतपरस्वत्वात्मकफलाश्रयत्वेनेष्टत्वेऽपि नातिव्याप्तिः; तत्राश्रयत्वभिन्नो यो धात्वर्थतावच्छेदकफलसंबन्धः, स निरूपकत्वम्, तादृशसंबन्धवत्त्वेनेष्टत्वं च ब्राह्मणस्यैव, न तु गोः, इति । ( ग० व्यु० का० ४ )

३ तथा चात्र,—निरूपितत्वेन कर्तुरिच्छाविषयत्वं चतुर्थ्यर्थः; स्वत्वजनकत्यागो ददात्यर्थः; निरुक्तचतुर्थ्यर्थस्य द्वितीयान्तार्थगोवृत्तित्वस्य च धात्वर्थतावच्छेदकस्वत्वेऽन्वयः । एवं च—'ब्राह्मणनिरूपितत्वेनेच्छाविषय-गोनिष्ठ-स्वत्वजनकत्यागकर्ता' इति बोधः । (ग० व्यु० का० ४)

४ तदुक्तं वाक्यपदीये—"अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् । प्रेरणानुमतिभ्यां च लभते संप्रदानताम्" इति ।

५ अत्र प्रेरकत्वं च,—प्रकृतधात्वर्थक्रियाजन्यफलभागितयेच्छाविषयत्वे सति, कर्तृसंबन्धित्यागादिविषयकेष्टसाधनताबोधौपयिकव्यापारवत्त्वम् । ( वै० सा० द० )

६ अत्रानुमन्तृत्वं च,—जातेष्टसाधनताबोधेऽप्रामाण्यशङ्कया शिथिलस्य कर्तुस्तादृशशङ्काविधूननक्षमप्रमाणोपन्यासेन प्रवर्तनम्, कर्मनिष्ठस्वत्वादिफलाभ्युपगममात्रानुकूलव्यापारवत्त्वं वा । ( वै० सा० द० )

७ अत्रानिराकर्तृत्वं च,—प्रकृतधात्वर्थक्रियाजन्यफलभागितयेच्छाविषयत्वे सति, कर्तृप्रवृत्तिनिवृत्त्य-न्यतरानुकूलव्यापाराभाववत्त्वम् । ( वै सा० द० )

---

* अत्रायमाशयः—ब्राह्मणाय त्यक्तायां गवि 'गोरियं ब्राह्मणस्य, न तु मम' इत्यादिः सार्वजनीनप्रतीतिरेव तत्र प्रमाणम्, इति । ( श० प्र० श्लो० ७० । टी० पृ० ९७ )

तत्राद्यम्, 'विप्राय ( याचकाय ) गां ददाति' इत्यादौ विप्रः । द्वितीयम्, 'उपाध्यायाय गां ददाति' इत्यादावुपाध्यायः । तृतीयं च देवता । यथा—'सूर्यायार्घ्यं ददाति' इत्यादौ सूर्यः[1] । ( ल० म० का० ४ । पृ० १०१ ) । अत्राधिकं च 'दान' शब्दव्याख्यानावसरे संपादितम्, इत्यत्र तदुपेक्षितम् । ( स्व० ) । [ २ ] क्वचित्—विषयित्वम्[2] । यथा—'चैत्राय कुप्यति, क्रुध्यति' इत्यादौ,—चतुर्थ्यर्थः संप्रदानत्वम्[3] । एवम्—'पटाय यतते' इत्यादौ,—उद्देश्यत्वरूपं संप्रदानत्वं चतुर्थ्यर्थो धात्वर्थकृतौ बोध्यते । ( श० प्र० श्लो० ७० । टी० पृ० ९९ ) । शिष्टं तु 'कोप' 'क्रोध' 'चतुर्थी' इत्यादितत्तच्छब्दव्याख्याने दृश्यम् ।

**संप्रदायः**—[ १ ] गुरुपरंपरागतः सदुपदेशः[4] । [ २ ] तदुपदेशयुतो जनः । यथा—वैष्णवसंप्रदायान्तर्गतो मध्वसंप्रदायः[5] ।

---

१ नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति, इति सूर्यस्योदासीनता विज्ञेया । ( वै० सा० द० पृ० २०० )

२ अत्रेदं बोध्यम्—'मित्रं द्रुह्यति, शिष्यमीर्ष्यति, पुत्रमसूयति' इत्यपि प्रयोगात्,—द्रोहादिकर्मणः संप्रदानत्वं वैकल्पिकमुन्नीयते । "कोपपूर्वकस्य द्रोहादेः 'द्रुहादि' धातुवाच्यत्वे तत्कर्मणः संप्रदानत्वम्; द्रोहादिमात्रस्य तथात्वे तु कर्मत्वमेव" इति पुनः कौमारा आहुः । ( श० प्र० श्लो० ७० । टी० पृ० १०० )

३ अत्रेदं बोध्यम्—सोपसर्गयोः क्रुध-द्रुहोः कर्मणः कर्मतैव, न तु संप्रदानता । अत एव—'शिष्यस्याभिक्रोद्धा, मित्रस्याभिद्रोग्धा' इत्यादौ,—कृद्योगे कर्मणि षष्ठ्येव प्रमाणम् । ( श० प्र० श्लो० ६९ )

४ ईश्वर एव सर्वसंप्रदायप्रद्योतकः । तथा हि—'ईश्वरो 'भूतावेश' न्यायेन*निर्माणकायमधिष्ठाय सर्वसंप्रदायप्रद्योतकः' ( कु० ) इति पातञ्जला आहुः ।

५ संप्रदायप्रवर्तकभेदास्तु पद्मपुराणे—"श्रीमन्नारायणो ब्रह्मा नारदो व्यास एव च । श्रीलमध्वः पद्मनाभो नृहरिर्माधवस्तथा ॥ अक्षोभो जयतीर्थश्च ज्ञानसिंधुर्महानिधिः । विद्यानि-

---

* अत्राहुः—नन्वशरीरात् कथं 'वेद-घटादि' शब्दव्यवहारसंप्रदायः ? । उच्यते—सर्गादावदृष्टोपगृहीतभूतभेदान्मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाददृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानात् विवक्षासहितान्मीनकलेवरकण्ठताल्वादिक्रियाजन्यसंयोगाद्वेदोत्पत्तिः । एवम्—कुलालादिशरीरावच्छेदेनादृष्टसहकृतप्रयत्नवदीश्वरसंयोगात् तद्बुद्धीच्छासहितचेष्टोत्पत्तौ सकलघटानुकूलव्यापारात् घटोत्पत्तिः । एवम्—प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीरावच्छेदेनापि, अदृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः । ततस्तत्सुश्रीलो बालो व्युत्पद्यते, सोऽयं 'भूतावेश' न्यायः, इति । ( चि० २ । परिशिष्टे, ईश्वरवादः, पृ० २३ )

**संप्रश्नः**—( लिङ्ङ्र्थः ) संप्रधारणम्; तच्च, उपस्थितक्रिययोर्मध्ये एकतरक्रियाधर्मिकेष्टसाधनत्वानिर्णयेच्छा। यथा—'किं भो वेदमधीयीय, उत तर्कम्?' इत्यादौ,—लिङ्ङ्र्थः[1]। ( वै० सा० द० लका. पृ० १३१ )

**संप्रसादः**—१ सम्यक् प्रसन्नता। २ योगशास्त्रज्ञास्तु,–चित्तस्य नैर्मल्यसंपादको यत्नविशेषः, इत्याहुः। ३ वेदान्तिनस्तु,—[१] Aसुषुप्तिस्थानम्[2] ( प्राणः )। ( शारी० भा० ) B पूर्णसुखम्[3]। ( मध्वभा० )। [२] जीवः। यथा–" य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरु-

---

धिश्च राजेन्द्रो जयधर्ममुनिस्तथा॥ पुरुषोत्तमो ब्रह्मण्यो व्यासतीर्थमुनिस्तथा। श्रीमल्लक्ष्मीपतिः श्रीमान्माधवेन्द्रपुरी तथा॥ संप्रदायविहीना ये मन्त्रास्ते निष्फला मताः। अतः कलौ भविष्यन्ति चत्वारः संप्रदायिनः॥ श्रीमध्व–रुद्र–सनका वैष्णवाः क्षितिपावनाः" इति। ( पद्मपु० ) ( वाच० )

तन्त्रोक्ता वैष्णवादिसंप्रदाया यथा—"श्रीशिव उवाच,–वैखानसः सामवेदी श्रीराधावल्लभी तथा। गोकुलेशो महेशानि! तथा वृन्दावनी भवेत्॥ पञ्चरात्रः पञ्चमः स्यात् षष्ठः श्रीवीरवैष्णवः। रामानन्दी हविष्याशी निम्बार्कश्च महेश्वरि!॥ ततो भागवतो देवि! दश भेदाः प्रकीर्तिताः। शिखी मुण्डी जटी चैव द्वित्रिदण्डी क्रमेण च॥ एकदण्डी महेशानि! वीरशैवस्तथैव च। सप्त पाशुपताः प्रोक्ता दशधा वैष्णवा मताः" इत्यादि। ( शक्तिसंग० त० ) ( वाच० )

१ अत्र—'स्वोद्देश्यकत्वसंबन्धेन संबोध्यविशिष्टा मन्निष्ठा च वेदाध्ययन-तर्काध्ययनान्यतरभावना, इष्टसाधनत्वप्रकारकनिर्णयेच्छाविषयः' इति बोधः। ( वै० सा० द० लका० पृ० १३१ ) ( पृ० ६०–६१ )

२ अत्रायं विवेकः—"ॐ भूमा संप्रसादादध्युपदेशात् ॐ" ( ब्रह्मसू० १।३।८ ) इत्यधिकरणे, "स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः। प्रतिन्यायं प्रतियोन्याद्रवति" इति बृहदारण्यके ( ४।३।१५–१७ ),—स्वप्नजागरितस्थानाभ्यां सह प्रयोगात् संप्रसादः सुषुप्तिस्थानमुच्यते, इति शंकरभारतीमतम्। ( शारी० भा० टी० रत्नप्र० १।३।८ )

३ मध्वाचार्यमते तु,–तत्र, "यो वै भूमा तत्सुखम्, नाल्पे सुखमस्ति, भूमैव सुखम्" इति छान्दोग्यश्रुतौ ( ७।२३ ),—भूम्नः पूर्णसुखरूपत्वाभिधानात् संप्रसादः पूर्णसुखम्, इति। ( मध्वभा० टी० तत्त्वप्र० १।३।८ )

पसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच" ( छान्दो० उप० ८ । ३ । ४ ) इत्यादौ, इत्याहुः । ( ब्रह्मसू० भा० १ । ३ । १८ )

**संबन्धः**—१ [ १ ] A संबन्धिभिन्नत्वे सति, संबन्ध्याश्रितः । B स्वभिन्नसंबन्ध्याश्रित; स्वभिन्नप्रतियोगिकः पदार्थः । ( सि० च० १ । पृ० ३ ) । यथा—घटभूतलयोः संयोगः । यथा वा—प्रत्यक्षस्थले इन्द्रियार्थसंनिकर्षः ( स्व० ) । [ २ ] संबन्धव्यवहारहेतुः । ( सि० च० ) यथा—'घटवद्भूतलम्' इति शाब्दबोधस्थले संयोगः । (स्व० ) । संबन्धो द्विविधः,—वृत्तिनियामकः, वृत्त्यनियामकश्चेति । तत्र वृत्तिनियामकश्च संयोग-समवाय-स्वरूप-कालिकादिभेदेनानेकविधः । वृत्त्यनियामकस्तु, विषयविषयिभाव-प्रतियोग्यनुयोगिभाव-आधाराधेयभाव-स्वस्वामिभाव-तादात्म्यादिभेदेनानेकविधः । तत्र संयोग-समवायावेव मुख्यौ; तद्भिन्ना गौणाः । वृत्तिनियामकस्तु कदाचिद्विरोधितानियामको भवति । ( स्व० ) । २ धर्मशास्त्रज्ञास्तु,—गोत्रजत्वादिः । यथा—"योनिसंबन्धः" इत्यादौ,—'संबन्ध' शब्दस्यार्थः, इत्याहुः । ३ नीतिशास्त्रज्ञास्तु,—नृणां संसर्गः । स च त्रिविधः,—विद्याजन्यः, योनिजन्यः, प्रीतिजन्यश्च, इत्याहुः । ४ समृद्धिः ।

---

१ लक्षणं च संबन्धत्वम्; तच्च ( १ ) यत्किंचित्पदार्थानुयोगिकत्वविशेषः । ( ग० २ । व्याप्ति० सिद्धा० ) । ( २ ) सांसर्गिकविषयताश्रयत्वम् । ( राम० १ । पृ० ४० )

२ तथा हि—[ १ ] साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धिं प्रति येन संबन्धेन साध्याभावप्रकारकनिश्चयः प्रतिबन्धकः, सः* । यथा—पर्वते संयोगेन वह्निसाधने दैशिकविशेषणतासंबन्धः* । [ २ ] स्वीययादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिज्ञानं प्रति येन संबन्धेन स्वप्रकारकं† ज्ञानं विरोधि, सः‡ । यथा—संयोगेन घटवत्ताबुद्धिविरोधितानियामको दैशिकविशेषणतासंबन्धः‡, इत्यादिरूह्यः ।

३ अत्रोक्तम्—"संबन्धस्त्रिविधः पुंसां विप्रेन्द्र ! जगतीतले । विद्याजो योनिजश्चैव प्रीतिजश्च प्रकीर्तितः । मैत्रं तु प्रीतिजं प्रोक्तं स संबन्धः सुदुर्लभः" इति । ( ब्रह्मवै० ब्रह्मख० अ० १० ) ( वाच० )

---

* अयं 'साध्यवत्ताग्रहविरोधितानियामकसंबन्धः' इति गीयते ।

† अत्र च स्वशब्देनाभावो ग्राह्यः ।

‡ अयं च 'स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसंबन्धः' इत्युच्यते ।

५ हितं च, इत्यजय आह। ६ सम्यग्बन्धः संबन्धः, इति काव्यज्ञा आहुः।

**संबन्धि**—संबन्धस्य प्रतियोग्य-नुयोगि च। यथा—'घटवद्भूतलम्' इत्यादौ,—संयोगस्य घटः प्रतियोगी, भूतलं त्वनुयोगि भवति। ( राम० १। पृ० ३९ )

**संबोधनम्**— [ क ] वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा। यथा—'चैत्र! त्वया भुज्यताम्' इत्यादौ,—'चैत्र' पदोत्तरवर्तिप्रथमाविभक्तेरर्थः। ( ग० व्यु० संबु० पृ० ११७ )

[ ख ] शाब्दिकास्तु,—A क्रियाविनियोगफलकाभिमुखीकरणम्। ( ल० म० )। B अनभिमुखस्याभिमुखीकरणं संबोधनम्, इत्याहुः। ( काशिका० )

**संबोध्यत्वम्**—१ [ क ] A क्रियाकरणाय वक्त्रभिप्रेतत्वम्। B वक्तृनिष्ठविलक्षणबोधविशेष्यत्वं वा। यथा—'चैत्र! व्रज' इत्यादौ,—प्रथमार्थः। ( श० प्र० श्लो० ९४। पृ० १३० )

[ ख ] शाब्दिकास्तु,—संबोधनविषयत्वम्, इत्याहुः। ( ल० म० )।

---

१ अत्र संबन्धिता च, आधारानाधारसंबन्धिमात्रसाधारणः स्वरूपसंबन्धविशेषः, इति विज्ञेयम्। ( मू० म० १ )

२ अत्र—"संबोधने च" ( पाणि० २। ३। ४७ ) इत्यनेन सूत्रेण प्रथमा संबोधनमेवाह। तथा च—प्रथमार्थतादृशेच्छायाः प्रकृत्यर्थविशेष्यतया*भानम्। ( ग० व्यु० संबो० पृ० ११८ )

३ [ क ] संबोधनपदार्थस्य क्रियायामेवान्वय उक्तो हरिणा—"संबोधनपदं यच्च तत्क्रियाया विशेषणम्" इत्यादि। ( वाक्यप० ) [ ख ] "स्थितस्याभिमुखीभावमात्रं संबोधनं विदुः। प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते" इति। ( वाक्यप० )

४ समुदितार्थस्तु, अन्यत्रासक्तस्याभिमुखीकरणलक्षणोऽभीष्टक्रियासु विनियोगाय ज्ञापनादिरूपव्यापारविशेषः, इति। ( वाच० )

५ अत्रोक्तं हरिणा—"प्राप्ताभिमुख्यः संबोध्यः क्रियासु विनियुज्यते" इति। ( वाक्यप० )

६ अत्र—'तादृशसंबोध्यत्ववांश्चैत्रोऽनुमतव्रजनवान्' इत्याकारको बोधः। ( श० प्र० श्लो० ९४। पृ० १३० )

---

* अत्रेदं ज्ञेयम्—'संबोधनविभक्त्यन्तप्रकृत्यर्थोऽन्यत्र विशेषणतया नान्वेति' इति। ( ग० व्यु० संबो० पृ० ११८ )

२ प्रशंस्यत्वमपि । यथा—"सुमित्रामातर्[1]! नैतत्ते विचित्रं चित्रयोधिनः" इत्यादौ,—'संबुद्धि' सुबर्थः । ( श० प्र० श्लो० ९४ । पृ० १३० )

**संभवः**[2]—१ ( अनुमानम् ) [ क ] अविनाभाववृत्त्या च संबद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणम् । तदप्यनुमानमेव ।

[ ख ] भूयःसहचाराधीनज्ञानम् । यथा—'संभवति ब्राह्मणे विद्या; संभवति सहस्रे शतम्' इति ( गौ० वृ० २ । २ । १ ) ( १९ ) ( त० दी० ) (त० व० पृ० ९९ )

[ ग ] अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् । यथा—द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्[3]; आढकस्य सत्ताग्रहणात् प्रस्थस्य, इति । ( वात्स्या० २ । २ । १ )

[ घ ] वेदान्तिनस्तु,—अल्पप्रमासाधनं बहुलज्ञानम् । यथा—'शतमस्यास्ति' इति ज्ञाने पञ्चाशज्ज्ञानम्, इत्याहुः । ( प्र० च० परि० १ । पृ० ४४ ) । संभवो द्विधा,—संभावनात्मकः, निर्णयात्मकश्चेति । तत्रादिमो न प्रमाणम्; अनिश्चायकत्वात् । यथा—'ब्राह्मणेषु चतुर्दशविद्याभिज्ञत्वं संभवति' इति । द्वितीयस्तु 'शते पञ्चाशत्[4]' इति । ( सि०

---

१ अत्र—'मातृ' शब्दस्य ऋकारादेरकारादेशः । (श० प्र० श्लो० ९४ । टी० पृ० १३०)

२ अत्र—'संभवः प्रमाणान्तरम्' इति पौराणिका आहुः । 'संभवोऽ*प्यनुमानमेव, न तु प्रमाणान्तरम्' इति वैशेषिका नैयायिकाश्च प्राहुः । ( त० व० पृ० १०० ) (नील० पृ० ३४ ) ( गौ० २ । २ । २ )

३ खार्या द्रोणाढकप्रस्थाद्यवगमः; स चानुमानमेव । खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्या द्रोणादिसत्त्वमवगमयति, इत्यनुमानान्तर्गततया प्रमाणान्तरत्वं दूषितम् । तथा हि—खारीत्वं खारीपरिमाणम्; महापरिमाणे स्वावान्तरपरिमाणसमावेशोऽनुभवसिद्धः । तथा च—'खारीपरिमाणं द्रोणादिपरिमाणव्यापकम्' इति व्यापकस्थित्या व्याप्यस्थितेरावश्यकत्वात् अनुमानेनैव गतार्थता, इति । ( तत्त्वकौमुदी० ) ( वाच० )

४ अत्र 'शतवान्' इत्युक्ते 'पञ्चाशद्वान्' इति ज्ञानं संभवति; तस्यानुमानेनैव निर्वाहात्; शतस्य पञ्चाशद्व्याप्यत्वात्, इति भावः । ( नील० पृ० ३४ )

---

* अत्र भाष्यम्—"संभवोऽप्यविनाभावित्वात् ( व्याप्तिमूलकत्वात् ) अनुमानमेव" इति । (प्रशस्त० २ । पृ० २८ )

च० ) । २ उत्पत्तिः । ३ आधेयस्याधारे समावेशनयोग्यत्वरूपो व्यापारः । ४ उत्कटकोटिकसंदेहः । ( गदा० ) । ५ संकेतः । ६ 'अपायः' इत्यजय आह । ७ हेतुः । ( वाच० )

**संभावना**—१ [ क ] उत्कटैकतरकोटिकसंशयः । ( त० प्र० ४ । पृ० ६९ ) ( नील० ४ । पृ० ३१ ) ( त० व० ) यथा—"भूयाद्यत्र गतो भवान्" इत्यादौ मरणसंभावना । (नील० ४ । पृ० ३०)

[ ख ] वैयाकरणास्तु,—क्रियासु योग्यताध्यवसायः (लिङ्गर्थविशेषः) । यथा—'सर्पिषोऽपि स्यात्' इत्यादौ,—लिङ्गाद्यर्थः, इत्याहुः ।

[ ग ] माध्व-वेदान्तिनोऽप्याहुः—'बाह्यालीप्रदेशेषु पुरुषेणानेन भवितव्यम्' इत्यूहापरनामकसंभावनाज्ञानम् ; अन्यतरकोटिप्रापकप्राचुर्यनिमित्तोऽन्यतरकोटिप्रधानकः संशय एव, इति । ( प्र० प० पृ० ९ ) ।

२ आलंकारिकाश्च,—अर्थालंकारविशेषः, इत्याहुः ।

**संमूर्छनम्**—एतस्यार्थो 'मूर्छन'शब्दस्य ( २ ) व्याख्याने दृश्यः ।

**संयमः**—एकवस्तुविषयकं धारणा-ध्यान-समाधि-त्रयम् । यथा—"अस्मान् साधु विचिन्त्य संयमधनान्" ( शाकुन्त० ४ । १६ ) इत्यादौ,—'संयम' शब्दस्यार्थः ।

---

अत्रायं प्रयोगः—[ क ] 'शतं पञ्चाशद्वत्, तद्घटितत्वात्' इति ( त० व० पृ० १०० ) । [ ख ] 'देवदत्तः पञ्चाशद्वान्, शतवत्त्वात् यथाऽहम्' इति च ।

१ अत्र च,—कोट्यंशे त्वौत्कट्यं च विषयताविशेषः । ( नील० ४ । पृ० ३१ ) ( ग० सत्प्र० )

२ समुदायश्लोकस्तु—"गच्छ गच्छसि चेत्कान्त ! पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" इति । ( नील० ४ । पृ० ३० ) शिष्टं 'व्यञ्जन' शब्दे दृश्यम् ।

३ अत्र सूत्रम्—"त्रयमेकत्र संयमः" इति ( पात० पाद० ३ । सू० ४ ) तत्र भाष्यम्—"एकविषयाणि त्रीणि साधनानि 'संयमः' इत्युच्यते" इति ।

**संयोगः**[1]—१ ( गुणः ) [ क ] संयुक्तप्रत्ययनिमित्तम्[2] ( प्रशस्त० गुण० पृ० ३० )

[ ख ] संयुक्त[3]व्यवहारहेतुः । ( त० सं० ) यथा—घटभूतलसंयोगः[4] । ( स्व० ) स च A अप्राप्तयोः प्राप्तिः । ( भा० प० गु० ) ( प्रशस्त० गु० पृ० ३१ ) B अप्राप्तिपूर्विका प्राप्तिः । ( वै० उ० ७।२।९ ) । संयोगो द्विविधः,—कर्मजः, संयोगजश्चेति । तत्र कर्मजोऽपि द्विविधः,—

---

१ विभागजनककर्मजगुणवृत्ति-गुणत्वव्याप्य-जातिमत्त्वं संयोगलक्षणम् । ( ल० व० ) संयोगं प्रति युतसिद्धिः प्रयोजिका । ( वै० ७ । २ । १३ ) । ( वै० उ० ७ । २ । ९ ) संयोगोऽव्याप्यवृत्तिरनित्यः*सर्वद्रव्यवृत्तिश्च । ( वाक्य० ) । संयोगो द्रव्य-गुण-कर्म-हेतुः । तत्र—द्रव्यारम्भे निरपेक्षः; तथा भवतीति सापेक्षेभ्यो निरपेक्षेभ्य इति वचनात् । गुणकर्मारम्भे तु सापेक्षः; "संयुक्तसमवायादग्नेर्वैशेषिकम्" ( वै० १० । २ । ७ ) इति वचनात् । ( वै० उ० ७ । २ । ९ ) ( प्रशस्त पृ० ३० )

संयोगस्य गुणहेतुत्वमुच्यते—बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्न-धर्म-अधर्म-भावना-शब्द-तूलपरिमाण-उत्तरसंयोग-नैमित्तिकद्रवत्व-परत्व-अपरत्व-पाकजाश्च, एते संयोगासमवायिकारणकगुणाः । तत्र,—भावनान्तेषु गुणेषु आत्ममनोयोगो हेतुः; शब्दविभागाजन्ये शब्दे भेर्याकाशसंयोगः;† तूलपरिमाणे प्रचयः; उत्तरसंयोगे संयोगजसंयोगेऽवयवसंयोगः; नैमित्तिकद्रवत्वे तेजःसंयोगः; परत्वापरत्वयोर्दिक्कालसंयोगः; पाकजे रूपादौ तेजःसंयोगोऽसमवायिकारणं भवति । ( प० मा० ) । कर्मणि हेतुभूतः संयोगस्तु नोदनादिः । (वै० उ० ५ । २ । १) (प्रशस्त० गु० पृ० ३१) । संयोगसंस्कारश्च (वै० उ० ७ । २ । ९) (प्रशस्त०) तत्र द्रष्टव्यः ।

२ "अत्रोच्यते—संयोगस्तु विरोधी स्यात् गुणत्वे सति कर्मणः" इति । (ता० र० श्लो० ४३)

३ संयुक्तव्यवहारासाधारणकारणम्, इत्यर्थः । ( त० कौ० ) । 'असाधारणत्व' विशेषणेन साधारणकारणकालादिव्यावृत्तिः । ( त० दी० )

४ स च संयोगत्वसामान्यवान्, अनित्यः संबन्धः, इति विज्ञेयम् ।

---

* [ क ] मनसोऽपि विभुत्वे सुषुप्त्यनुपपत्त्या न विभुनोः संयोगः संभवति; अतो न विभुद्वयसंयोगः; अतः,—सर्वः संयोगोऽनित्यः, इति भावः, इति । [ ख ] विभुनोस्तु न संयोगः; कर्म-युतसिद्ध्यादिरूपकारणाभावात्, इति । ( वै० उ० ७ । २ । ९ )

† स च 'अभिघातः' इत्युच्यते । ( वै० वि० ७ । २ । ९ )

अन्यतरकर्मजः[1], उभयकर्मजश्च[2] । तत्राद्यः ( अन्यतरकर्मजः ), श्येनशैलादिसंयोगः । द्वितीयो ( उभयकर्मजः ), मेषयोर्मल्लयोर्वा मेघयोर्वा संनिपातः । संयोगजस्तु[3], A उत्पन्नमात्रस्यैव[4], चिरोत्पन्नस्य[5] वा निष्क्रियस्य कारणसंयोगिभिरकारणैः कारणाकारणसंयोगपूर्वकः कार्याकार्यगतः संयोगः । स च एकस्मात्, द्वाभ्याम्, बहुभ्यश्च भवति । एकस्मात्तावत् तन्तुवीरणसंयोगात् द्वितन्तुकवीरणसंयोगः । द्वाभ्यां तन्त्वाकाशसंयोगाभ्यां द्वितन्तुकाकाशसंयोगः । बहुभ्यश्च तन्तुतुरीसंयोगेभ्यः एकः पटतुरीसंयोगः ।......................नास्त्यजः संयोगः । परमाणुभिराकाशादीनां प्रदेशवृत्तिरन्यतरकर्मज एव संयोगः । विभूनां तु परस्परतः संयोगो नास्ति; युतासिद्ध्यभावात् ।

विनाशस्तु सर्वस्य संयोगस्यैकार्थसमवेताद्विभागात्; क्वचिच्च—आश्रयविनाशादपि[6] । ( प्रशस्त० पृ० ३२ ) B संयोगजश्च चतुर्विधः,—क्वचित्,—एकसंयोगजन्य एकसंयोगः, संयोगद्वयजन्य एकसंयोगः, बहुसंयोगजन्य एकसंयोगः, एकसंयोगजन्यं संयोगद्वयं चेति । तत्राद्यः, तन्तुवीरणसंयोगात्पटवीरणसंयोगः । द्वितीयः, द्वाभ्यां तन्तुभ्यामाकाशस्य यौ द्वौ संयोगौ ताभ्यां जायमानो द्वितन्तुकपटाकाशसंयोगः । तृतीयः, दशभिस्तन्तुभिराकाशस्य ये दश संयोगास्तैर्जायमानो

---

१ स च क्रियावता निष्क्रियस्य । यथा—स्थाणोः श्येनेन, विभूनां च मूर्तैः सह (संयोगः) । ( प्रशस्त० गु० पृ० ३१ )

२ स च विरुद्धदिक्क्रिययोः संनिपातः । ( प्रशस्त० पृ० ३१ )

३ अवयवसंयोगजन्यः, इत्यर्थः ।

४ यथा—उत्पन्नमात्रस्य निष्क्रियस्य द्वितन्तुकस्य पटस्य, कारणसंयोगिना ( कारणस्य तन्तोः संयोगिना )अकारणेन वीरणेन ( तृणविशेषेण ) यः संयोगः स एकस्मात् कारणस्य तन्तोरकारणेन वीरणेन संयोगात् कार्ये द्वितन्तुकपटेऽकार्ये वीरणे जायते । एवमग्रेऽपि ।

५ यथा—अङ्गुलीतरुसंयोगात्कायतरुसंयोगादिः, कपालतरुसंयोगात्तरुकुम्भयोः संयोगः ।

६ तथा हि—यदा तन्त्वोः संयोगे सति, अन्यतरतन्त्वारम्भकेंऽशौ ( तन्त्ववयवे ) कर्मोत्पद्यते, तेनांश्वन्तराद्विभागः क्रियते; विभागाच्च तन्त्वारम्भकसंयोगविनाशः; संयोगविनाशात्तन्तुविनाशे तदाश्रितस्य तन्त्वन्तरसंयोगस्य विनाशः, इति । ( प्रशस्त० गुण० पृ० ३२ )

दशतन्तुकपटस्यैक आकाशसंयोगः । चतुर्थस्तु, द्रव्यानारम्भको यः पार्थिवजलपरमाण्वोः संयोगस्तेन जायमानौ द्व्यणुकारम्भकौ द्वौ संयोगाविति । ( प्रशस्त० गु० पृ० ३१ ) ( त० व० परि० ११ । पृ० २०० ) संयोगस्तु विभागादाश्रयनाशाद्वा नश्यति च । ( वै० ७ । २ । ९ ) ( भा० प० गु० श्लो० ११६–१२० ) ( न्या० म० १ ) ( त० दी० ) ( त० व० पृ० २००–२०१ )

२ धर्मशास्त्रज्ञास्तु,—उदयात्प्राग्दशम्याः शेषैः संयोगः, इत्याहुः ।

**संवादः**—१ समयवादः । ( वात्स्या० ४ । २ । ४७ ) यथा—"ज्ञानग्रहणाभ्यासस्तद्विद्यैः सह संवादः" ( गौ० ४ । २ । ४७ ) इत्यादौ,—'संवाद'शब्दस्यार्थः । २ संमतिः । ३ अविरुद्धार्थज्ञानम् । ( स्व० )

**संवादकः**—[ १ ] पूर्वोक्तसंवादकर्ता । [ २ ] 'पूर्वमुपदर्शितमर्थं प्रापयन्संवादक उच्यते' इति बौद्धा आहुः । ( न्या० बि० टी० पृ० ३ )

**संशयः**—( अप्रमा, अविद्या च ) [ क ] समाना-नेक-धर्मोपपत्तेर्विप्र-

---

१ अयमाशयः—यत्र द्रव्यानारम्भकः पार्थिवजलपरमाण्वोः संयोगस्ततो द्व्यणुकारम्भकौ द्वौ संयोगौ । ततो युगपत् द्व्यणुकद्वयं ( पार्थिवजलद्व्यणुकद्वयम् ) उत्पद्यते; तत्र पार्थिवद्व्यणुकस्य जलपरमाणुनैकः संयोगः, जलद्व्यणुकस्य पार्थिवपरमाणुनाऽपरः संयोगश्चैतदुभयं पूर्वोक्तानारम्भकसंयोगेनैकेनैवोत्पद्यते; कारणाकारणसंयोगेन कार्याकार्यसंयोगजननावश्यंभावादिति । ( त० व० परि० ११ । पृ० २०० ) ( प्रशस्त० गु० पृ० ३१ )

२ आश्रयनाशात्संयोगनाशस्तु,—यत्र तन्तुद्वयं चिरसंयुक्तमनुत्पन्नक्रियं च वर्तते, तत्र तावत्,—संयुक्ततन्तुद्वयस्य एकतन्त्ववयवे कर्म, ततो विभागः, तत आरम्भकसंयोगनाशः, ततस्तन्तुनाशः, ततः संयोगनाशः, इति बोध्यम् । ( त० व० परि० ११ । पृ० २०१ )

३ तदुक्तम्—"उदयात्प्राग्दशम्यास्तु शेषः संयोग उच्यते । उपरिष्टात्प्रवेशस्तु तस्मात्तं परिवर्जयेत्" इति । ( ति० त० ) ( वाच० )

४ इदं तु बोध्यम्— [ १ ] संशयश्च प्रत्यक्षरूपः; संनिकर्षजन्यत्वात्, इति; अत एवोक्तम्—"परोक्षज्ञानमनाहार्यं निश्चयश्चेति सिद्धान्तात्" इति । [ २ ] संशयो न्यायस्याङ्गं भवति; यस्मात् नानुपलब्धे, न निर्णीते न्यायः प्रवर्तते । ( न्या० वा० १ । पृ० १४ ) [ ३ ] अत्र;—विशेषादर्शनम्, कोटिद्वयस्मरणम्, धर्मिज्ञानं च संशयमात्रे हेतुः, इति विज्ञेयम् । ( सि० च० ) ( त० प्र० ४ । पृ० १२१ )

संशयलक्षणं तु, [क] स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छे-

तिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः। (गौ० १।१।२३) (ता० र० श्लो० ९६)। तत्र—(१) 'समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशयः' इति,—स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः 'किं स्वित्' इत्यन्यतरन्नावधारयति। तदनवधारणं ज्ञानं (विमर्शः) संशयः। 'समानमनयोर्धर्ममुपलभे, विशेषमन्यतरस्य नोपलभे' इत्येषा बुद्धिरपेक्षा संशयस्य प्रवर्तिका वर्तते; तेन, विशेषापेक्षो विमर्शः संशयः। (२) अनेकधर्मोपपत्तेरिति,—समानजातीयमसमानजातीयं चानेकम्, तस्याने-

---

दकीभूतापरकोटिप्रकारता*-शालिज्ञानत्वम्। (दि० गु०)। [ख] अवच्छेद्यावच्छेदकभावापन्नविषयता†-वत्त्वम्। (ग० सप्र०)

१ वार्तिककृतस्तु,—समानो हि धर्मः, यो विवक्षिततज्जातीयवृत्तित्वे सति, अन्यजातीयवृत्तिः, सः। अयं साधारणो धर्म उपलभ्यमानः संशयहेतुः, इत्याहुः। (न्या० वा० १। २३। पृ० ९३)

अत्रायं विशेषः—समानधर्मवत्तया धर्मिज्ञानस्यान्वय-व्यतिरेकाभ्यां संशयहेतुत्वमवधार्यते। (न्या० म० ४। पृ० ३४)। तदर्थश्च—तत्कोटिसाधारणधर्मवत्तया धर्मिज्ञानस्य तत्कोटिसंशयहेतुत्वमवधार्यते। अन्वयव्यतिरेकेति,—तुरगादौ वेगेन गच्छतोऽनेकवृक्षेन्द्रियसंनिकर्षेऽपि 'यस्यैव धर्मिणो ज्ञानम्, तत्रैव पनसत्वादिसंशयः, नान्यत्र,' इति धर्मिनियमार्थं धर्मिज्ञानस्योत्कटकोटिकसंशयहेतुत्वमिति भावः। (त० प्र० ख० ४। पृ० १३०—१३१)

२ तदर्थश्च, वस्तुस्वरूपानवधारणात्मकः प्रत्ययः, इति। (न्या० वा० १। पृ० १३)

३ वार्तिककृत उद्योतकराचार्याश्च,—अनेकप्रत्ययहेतुर्वा धर्मोऽनेकधर्मः। यत एव प्रत्ययो भवति 'इदं एकमनेकम्' इति। तत्रैकप्रत्ययहेतुरभेदः। अनेकप्रत्ययहेतुधर्मो विशेषः। यथा—शब्दस्य विभागजत्वम्; सामान्यविशेषसमवायेभ्यः शब्दस्य सदादिना विशेषेण निर्भक्तस्य तस्मिंस्तु 'द्रव्यं, गुणः, कर्म वा' इति विभागजत्वात्संशयः, इत्याहुः। (न्या० वा० १। २३। पृ० ९५)

---

* (१) अत्र संशयीयविषयतायाः प्रतिबन्धकतावच्छेदकत्वकथनं च 'संशये विशेष्यताद्वयम्' इति पक्षाभिप्रायेणेति विज्ञेयम्। (२) 'संशये च, उभयप्रकारतानिरूपिता विशेष्यता एकैव; समुच्चये तु विशेष्यताद्वयम्' इति संशय-समुच्चययोर्भेदः, इति च विज्ञेयम्।

† संशयीयविशेष्यतयोरवच्छेद्यावच्छेदकभावस्तु समुच्चयज्ञानव्यावर्तनायावश्यं स्वीकार्यः, इति सूक्ष्मतर्किभिर्विभाव्यम्।

कस्य धर्मोपपत्तेर्विशेषस्योभयथा दृष्टत्वात् समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते; गन्धवत्त्वात् पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च । अस्ति च शब्दे विभागजत्वं विशेषः, तस्मिन् 'द्रव्यं गुणः कर्म वा' इति संदेहः; विशेषस्योभयथा दृष्टत्वात् 'किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः, आहोस्विद्गुणस्य सतः, इति, अथ कर्मणः सतः' इति विशेषापेक्षा 'अन्यतमस्य व्यवस्थापकं धर्मं नोपलभे' इति बुद्धिरिति । ( ३ ) विप्रतिपत्तेरिति,—व्याहतमेकार्थदर्शनं विप्रतिपत्तिः ; व्याघातो विरोधोऽसहभाव इति । अस्त्यात्मेत्येकं दर्शनम्, नास्त्यात्मेत्यपरम् । न च सद्भावासद्भावौ सहैकत्र संभवतः; न चान्यतरसाधको हेतुरुपलभ्यते; तत्र तत्त्वानवधारणं संशय इति । ( ४ ) उपलब्ध्यव्यवस्थातः खल्वपि,—सच्चोदकमुपलभ्यते तडागादिषु, मरीचिषु वाऽविद्यमानमुदकमिति; ततः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः 'किं सदुपलभ्यते, अथासत्' इति संशयो भवति । ( ५ ) अनुपलब्ध्यव्यवस्थातः,—सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं निरुद्धं वा; ततः क्वचिदनुपलभ्यमाने संशयः; 'किं सन्नोपलभ्यते, उतासत्' इति संशयो भवति; विशेषापेक्षा पूर्ववत् । पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, 'उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे' एतावता विशेषेण पुनर्वचनम् । समानधर्मा-

---

१ अत्रान्यदप्युदाह्रियते—एको ब्रूते 'शब्दो नित्यः' इति, अपरो 'अनित्यः' इति; तयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमपश्यतो भवति संशयः 'किमयं शब्दोऽनित्य उत नित्यः' इति । ( त० भा० पृ० ४१ )

२ तथा च मतविशेषाः—'संशयस्य, निर्णायकाभावसहकृताः साधारणधर्मा-साधारणधर्म-विप्रतिपत्त्यु-पलब्ध्य-नुपलब्धयः पञ्च कारणानि' इति केचित् ( न्यायभाष्यकृतो वात्स्यायनाः पक्षिलस्वामिनः ) आहुः । ( त० व० परि० १० ) । तथथा—( १ ) स्थाणुपुरुषयोः साधारणधर्ममूर्ध्वतादिलक्षणं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं, पुरुषत्वनिश्चायकं शिरःपाण्यादिकं चानुपलभमानस्य दोलायमानं संशयज्ञानमुत्पद्यते 'किमयं स्थाणुर्वा, पुरुषो वा' इति । ( २ ) शब्दे व्याकाशादिविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति 'किं शब्दो नित्यो न वा' इति । ( ३ ) इन्द्रियेषु वैशेषिकसांख्ययोर्भौतिकत्वाभौतिकत्वरूपां विप्रतिपत्तिं प-

धिगमात् समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति । स्थानवतां लक्षणवचनमिति समानम् । ( वात्स्या० १ । १ । २३ )

[ ख ] धर्मितावच्छेदकावच्छेदेनान्यतरकोट्यवगाहि ज्ञानम् । (त०प्र०)

[ ग ] विरुद्धोभयारोपसामग्रीद्वयसमाजादुभयारोप एक एव भवति, सः । ( चि० १ )

[ घ ] A एकधर्मिकविरुद्धभावाभावप्रकारकज्ञानम् । ( गौ० वृ० १ । १ । २३ ) ( ४ । ३ ) ( मु० गु० ) । B एकस्मिन्धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यज्ञानम् । यथा—'पर्वतो वह्निमान्, न वा' इति ज्ञानं संशयः ।

[ ङ ] प्रसिद्धानेकविशेषयोः ( स्थाणुपुरुषयोः ) सादृश्यमात्रदर्शनात्, उभयविशेषानुस्मरणात्, अधर्माच्च 'किंस्वित्' इत्युभयावलम्बी विमर्शः संशयः । (प्रशस्त० गुणनि० पृ० ३९) । यथा—दूरवर्तिनि उच्चैस्तरे

---

श्यतो, निश्चायकं चापश्यतः संशयो भवति 'किमिन्द्रियाणि भौतिकानि, उताभौतिकानि' इति । ( ४ ) कूपखननानन्तरं जलोपलब्धौ सत्यां निर्णायकाभावे संशयो भवति 'किं प्राक् सदेवोदकं कूपखननेनाभिव्यक्तमुपलभ्यते, उतासदेवोत्पन्नम्' इति । ( ५ )—'अस्मिन् वटे पिशाचोऽस्ति' इति वार्तां श्रुतवतो वटसमीपं गतस्य पुरुषस्य पिशाचानुपलब्धौ, निर्णायकाभावे संशयो भवति 'किं विद्यमान एव पिशाचोऽन्तर्धानशक्त्या नोपलभ्यते, उताविद्यमान एव' इति ।

'उपलब्ध्य-नुपलब्ध्योः साधारणधर्म एवान्तर्भावः, त्रीण्येव कारणानि' इत्यपरे ( न्यायवार्तिककृत ) आहुः ।.................'असाधारण-विप्रतिपत्त्योरपि साधारणधर्म एवान्तर्भावः । अतः साधारणधर्मेणैव संशयः' इति वैशेषिका आहुः । ( प्र० प० पृ० ३–४ ) ( त० व० परि० १२ । पृ० २१४–२१५ )

'धर्मिज्ञानसहितविरुद्धोभयविधिबुद्धिसामग्रीसमाजादेवोभयविषयकारोप एको भवति, स एव संशयः' इति समुदितार्थः । ( मू० म० १ )

समुदितार्थश्च—[ क ] एकधर्मावच्छिन्नविशेष्यक-भावाभावप्रकारक-ज्ञानम् । ( न्या० बो० ) । [ ख ] धर्मिकधर्मिनिष्ठविशेष्यतानिरूपित-विरुद्धनानाधर्मनिष्ठप्रकारता-निरूपितप्रकारिताशालिज्ञानम्, इति ( वाक्य० ) ( त० व० )

'अयं स्थाणुर्वा पुरुषो वा' इतिज्ञानम् । ( त० सं० ) ( वै० उ० २ । २ । १७ ) ( त० कौ० ) ।

न्यायवार्तिककृन्नये संशयस्त्रिविधः,—असति विशेषदर्शने साधारणधर्मज्ञानजन्यः, विशेषादर्शने सति असाधारणधर्मज्ञानजन्यः, विशेषादर्शने सति विप्रतिपत्तिजन्यश्चेति । आद्यो यथा—उच्चैस्तरत्वं स्थाणुत्वसाधारणं ज्ञात्वा 'अयं स्थाणुर्न वा' इति संदिग्धे; 'स्थाणुः पुरुषो वा' इति वा ज्ञानम् । द्वितीयो यथा—शब्दत्वं नित्यानित्यव्यावृत्तं शब्दे गृहीत्वा 'शब्दो नित्यो न वा' इति संदिग्धे; यथा वा,—नित्यादनित्याच्च व्यावृत्तेन भूमात्रासाधारणेन गन्धवत्त्वेन विशेषमपश्यतो भवति 'भुवि नित्यत्वानित्यत्व'संशयः । तृतीयो यथा—तत्र शब्देन कोटिद्वयोपस्थितिद्वारा 'प्रामाण्यं स्वतो ग्राह्यं परतो ग्राह्यं वा' इति मानसः संशय उत्पद्यते । ( न्या० वा० ) ( त० भा० पृ० ४१–४२ ) ( त० प्र० ) ( गौ० वृ० १ । १ । २३ ) ( मु० ) ( सि० च० )

कणादनये द्विविधः संशयः,—बहिर्विषयकः, अन्तर्विषयकश्च । बहिर्विषयकोऽपि द्विविधः,—दृश्यमानधर्मिकः, अदृश्यमानधर्मिकश्च । तत्र दृश्यमानधर्मिको यथा—ऊर्ध्वत्वविशिष्टस्य धर्मिणो दर्शनात् 'अयं

---

१ अयं संशयाकारस्तु विरुद्धभावद्वयकोटिकसंशयाङ्गीकारेणोपपद्यते । परे तु,—'स्थाणुत्वतदभाव-पुरुषत्वतदभाव-कोटिक' इति तद्वाक्यार्थः, इत्याहुः । ( नील० )

२ अत्र वैशेषिका आहुः—असाधारणधर्मः संशायको भवन् व्यावृत्त्यैव भवति । यथा—शब्दत्वव्यावृत्तिर्नित्येऽनित्ये चास्तीति 'शब्दो नित्यो न वा' इति संशयः । व्यावृत्तिश्च साधारणधर्म एव, इति नाधिक्यम् । तथा च सिद्धान्तः—साधारणधर्मादेकस्मादेव सर्वत्र संशयः, इति । ( त० व० परि० १२ । पृ० २१४–२१५ )

३ तन्मते,—द्विविधोऽपि संशयः साधारणधर्मवत्ताज्ञानादेव भवति, नान्यस्मात्, इति विज्ञेयम् ।

४ अत्र भाष्यम्—"प्रत्यक्षविषयेऽपि,—स्थाणुपुरुषयोरूर्ध्वतामात्रदर्शनात्, वक्रकोटरादिविशेषानुपलब्धितः स्थाणुत्वादिसामान्यविशेषानभिव्यक्तावुभयविशेषानुस्मरणादुभयत्र आकृष्यमाणस्यात्मनः प्रत्ययो दोलायते 'किं नु खल्वयं स्थाणुः स्यात्, पुरुषो वा' इति" । ( प्रशस्त० गु० पृ० ३४ )

स्थाणुः, पुरुषो वा' इति । अदृश्यमानधर्मिको[1] यथा—अरण्ये अटाद्यन्तरिते गो-गवयादिपिण्डे विषाणमात्रदर्शनात् 'अयं गौर्गवयो[2] वा' इति । ( वै० उ० २ । २ । १८ ) । आन्तरसंशयो[3] हि विद्याऽविद्याभ्यां भवति । यथा—मौहूर्तिकः सम्यगादिशति चन्द्रोपरागादि, असम्यगपि । तत्र स्वज्ञाने 'सम्यगादिष्टमुपरागादि, असम्यग्वा' इति संशयो जायते । ( वै० २ । २ । २० ) (त० व० परि० १२ । पृ० २१६)

**संशयः**—( पक्षता ) [ क ] बाधप्रतिबध्यतावच्छेदकीभूतस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता,

---

१ अत्र भाष्यम्—"अप्रत्यक्षविषये तावत्,—साधारणलिङ्गदर्शनात्, उभयविशेषानुस्मरणात्, अधर्माच्च संशयो भवति । यथा—अटव्यां विषाणमात्रदर्शनात् 'गौर्गवयो वा' इति" । ( प्रशस्त० गुणनि० पृ० ४९ )

२ वस्तुतः,—तथापि विषाणधर्मिक एव संदेहः 'विषाणमिदं गोसंबन्धि, गवयसंबन्धि वा' इति । विवक्षामात्राच्चु द्वैविध्याभिधानम् । ( वै० उ० २ । २ । १८ )

३ अत्र भाष्यम्—"अन्तस्तावत्,—"आदेशिकस्य सम्यक् मिथ्या चादिश्य पुनरादिशतस्त्रिषु कालेषु संशयो भवति 'किं नु सम्यक् मिथ्या वा' इति" । (प्रशस्त० गुणनि० पृ० ३९)

४ सा च, पूर्वपक्षीया, आचार्यमतसिद्धा च पक्षता, इति बोध्यम् । ( वाच० )

५ स्वनिष्ठविषयितायां च बाधप्रतिबध्यतावच्छेदकत्वमावश्यकम् । तेन, वह्निव्याप्यसाध्यकस्थले 'पर्वतो वह्निव्याप्यवान्' इत्यादौ,—'वह्निमान्, न वा पक्षः' इत्येतादृशसंशयव्युदासः; तत्र—वह्निव्याप्याभावाभावत्वेन वह्निव्याप्यस्य पृथग्भानेऽपि, संशयत्वघटकीभूतस्वनिष्ठवह्निमत्पक्षविषयितायां वह्निव्याप्याभावनिश्चयप्रतिबध्यतावच्छेदकत्वविरहात्, इति । ( ग० पक्ष० पृ० ४ )

६ विषयितायां स्वनिष्ठत्वनिवेशनेन, अवच्छेदकावच्छेदेनानुमितौ 'पक्षतावच्छेदकसामानाधिकरण्यमात्रेण कोटिद्वयावगाहिनिश्चयस्य' अवच्छेदकावच्छेदेन साध्यादिमत्तानिश्चयप्रतिबन्धकत्वेऽपि पक्षतात्वकारणम्, इति । ( ग० पक्ष० पृ० ४ )

[illegible] शुद्धवह्नित्वावच्छिन्नसाध्यकस्थले 'पर्वतो वह्निमान्' इत्यादौ,—'वह्न्यभाववान् पर्वतः' इत्येतादृशबाधप्रतिबध्यस्य 'महानसीयवह्निमान्नवा पक्षः' इत्येतादृशस्य ( संशयस्य ) पक्षता- [illegible] ।
( ग० पक्ष० पृ० ४ )

तच्छालिङ्गज्ञानम् । यथा—पर्वते धूमेन वह्निसाधने 'पर्वतो वह्निमान्न वा' इति संशयः पक्षता ।

[ ख ] अथवा—स्वघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपितविरोधविषयतानिरूपितविषयतानिरूपिता प्रकारिता, सामानाधिकरण्यसंबन्धेन तद्विशिष्टप्रकारितावज्ज्ञानम् ।

[ ग ] केचित्तु,—साध्यनिश्चय-साध्याभावनिश्चय-प्रतिबध्यतावच्छेदकविशेष्यताशालिज्ञानं संशयः, इत्याहुः । ( ग० पक्ष० पृ० ३–४ ) शिष्टं तु 'पक्षता'शब्दव्याख्याने द्रष्टव्यम् ।

**संशयसमः**—( जातिः ) [ क ] सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने

---

१ समुदितस्य सुगमार्थस्तु,—बाधस्य प्रतिबध्या या संशयीयैका कोटिः, तस्याः प्रतिबध्या या साध्यस्य प्रतिबध्या च संशयीयाऽपरकोटिः, तद्विषयकं ज्ञानम्, इति । वह्निमान् धूमादित्यादौ,—बाधस्य ( वह्न्यभावस्य ) प्रतिबध्या कोटिः ( वह्निः ), तस्य प्रतिबध्या, साध्यस्य ( वह्नेः ) प्रतिबध्या चापरकोटिः ( वह्न्यभावः ), तद्विषयकं 'पर्वतो वह्निमान्नवा' इति ज्ञानम्; इति लक्षणसमन्वयः । ( स्व० )

२ 'व्याप्यवृत्तित्वविशिष्टकोटिद्वयावगाहिज्ञानं संशयः' इति मते,—संशये समुच्चयव्यावृत्तविषयितां प्रदर्श्य,—'एकधर्मिक-नानाविरुद्धकोट्यवगाहिज्ञानं संशयः' इति मते संशयत्वं निर्वक्ति 'अथवा' इत्यादिना ग्रन्थेन ।

३ अत्र 'स्व'पदेन, संशयविषयैककोटिनिरूपिता प्रकारिता ग्राह्या ।

४ अयं भावः—'संशये च धर्मिणि, उभयप्रकारतानिरूपितैकविलक्षणविषयता समुच्चयवैलक्षण्यायोपगम्यते' इति तादृशविषयताया विभिन्नरूपेणोभयनिश्चयप्रतिबध्यतावच्छेदकतया नासंभवः, इति । ( ग० पक्ष० पृ० ४ )

५ तच्चिन्त्यम् । चिन्ताबीजं तु,—वह्नित्व-वह्न्यभावत्वो-भयपुरस्कारेण वह्न्यभावावगाहिनि 'पर्वतो वह्न्यात्मकवह्न्यभाववान्' इति समुच्चयेऽतिव्याप्तिः, इति । अत्राधिकं तु कोडपत्रादावन्वेषणीयम् ।

६ हेतुज्ञानेऽप्रामाण्यशङ्काधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेश्याभासोऽयम् । ( गौ० वृ० ५ । १ । १४ ) ।

नित्यानित्यसाधर्म्यात्संशयसमः। ( गौ० ५। १। १४ )। अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते,— सति प्रयत्नानन्तरीयकत्वेऽस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम्, अस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशयः, इति। ( वात्स्या० ५। १। १४ )।

[ ख ] यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते, स संशयसमः; सव्यभिचार एव। ( वात्स्या० १। २। ७ )

[ ग ] समानधर्मदर्शनादियत्किंचित्संशयकारणबलात्संशयेन प्रत्यवस्थानम्। यथा—शब्दोऽनित्यः कार्यत्वाद्घटवदित्युक्ते सामान्ये गोत्वादौ दृष्टान्ते घटे चैन्द्रियकत्वं तुल्यम्। यथा कार्यत्वान्निर्णायकादनित्यत्वं निर्णीयते, तथैन्द्रियकत्वात्संशयकारणादनित्यत्वं संदिह्यताम्। ( गौ० वृ० ५। १४ )

[ घ ] साधारणधर्मं प्रदर्श्य संशयोद्भावनम्। यथा—शब्दोऽनित्यः कार्यत्वादित्यादौ,—शब्दस्यानित्येन घटेन सह कार्यत्वरूपं साधर्म्यं यथाऽस्ति, तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यमस्ति, इत्युभयसाधर्म्यदर्शनात्संशयः स्यात्; एकपरिशेषे नियामकाभावात्, इति। ( नील० पृ० ४४ )

**संसर्गः**—१ [ १ ] संबन्धः। यथा—"पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणम्" ( मु० २ ) इत्यादौ। [ २ ] संसर्गताख्यविषयतावान्। यथा—"शब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते"

---

१ 'नित्यानित्यसाधर्म्यात्' इति ( पदं ) संशयकारणोपलक्षणम्। (गौ० वृ० ५। १। १४)

२ तथा चोक्तम्—"संदेहहेतुसद्भावात्सति निर्णयकारणे। संशयस्य प्रसङ्गो यः स संशयसमो मतः" इति। ( ता० र० प० २। श्लो० ११६ )

( ग० व्यु० १ ) इत्यादौ,—'घटवद्भूतलम्' इति शाब्दबोधीयः संयोगाख्यः संसर्गः । ( स्व० ) । २ व्यवहारशास्त्रज्ञास्तु,—विभागानन्तरं 'यत्तव धनं तन्मम' इति कृतसमयेन एकत्रावस्थानरूपो धनसंबन्धः ( संसृष्टिः ) संसर्गः, इत्याहुः । ३ धर्मज्ञास्तु,—पातकिसंबन्धः, इत्याहुः ।

**संसर्गमर्यादा**—[ क ] समभिव्याहारज्ञानकार्यतावच्छेदककोटिप्रविष्टसंबन्धता । ( कृष्णं० ) यथा—"शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते" ( ग० व्यु० का० १ ) इत्यादौ,—'संसर्गमर्यादा'शब्दस्यार्थः ।

[ ख ] 'आकाङ्क्षादिसहकारिसहकृता पदशक्तिः' इति केचित् । ( वैयाकरणादयः ) आहुः । ( काव्यप्र० कमला० उल्ला० २ )

---

१ पातकिसंसर्गस्य पापहेतुत्वमाह मनुः—"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह" इति । ( मनु० अ० ११ । श्लो० ५४ ) । "यो येन पतितेनैषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये" इति । ( मनु० अ० ११ । श्लो०१८१ ) । "प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा । न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः" इति ( मनु० अ० ११ । श्लो० ४७ ) । विष्णुः—"यश्च येन पापात्मना सह संसृज्येत स तस्यैव प्रायश्चित्तं कुर्यात्" इति । एवं गौतमोऽपि । के ते संसर्गप्रकारा इत्याहतुर्मनु-बृहस्पती—"एकशय्यासनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम् । याजनाध्यापनं योनिस्तथा च सहभोजनम् ॥ नवधा संकरः प्रोक्तो न कर्तव्योऽधमैः सह" इति । ( मनु० अ० ११ । श्लो० १८० ) । कूर्मपुराणे व्यासः—"महापातकिनस्त्वेते यश्च तैः सह संवसेत् । संवत्सरं तु पतितैः संसर्गं कुरुते तु यः ॥ यानशय्यासनैर्नित्यं जानन्वै पतितो भवेत्" इति ।

अत्रेदं बोध्यम्—महापातकिसंसर्गस्यैव कलौ पापहेतुत्वम्, नान्यपापिसंसर्गस्य । यथोक्तं पराशरेण—"कृते संभाषणात्पापं, त्रेतायां चैव स्पर्शनात् । द्वापरे चान्नमादाय, कलौ पतति कर्मणा" इति । अत्र सर्वस्मृतिव्याकुलनाद्वयं ब्रूमः—कलावपि महापातकिसंसर्गस्यैवान्यपापिसंसर्गस्यापि पापहेतुत्वमस्त्येव; परं तु,—तत्पापं स्वल्पमेव, तन्निर्णेजनाय तदनुगुणं प्रायश्चित्तं कार्यमेव, इति । ( स्व० )

**संसर्गाभावः**—( अभावः ) [ क ] तादात्म्यातिरिक्तसंसर्गारोपजन्यप्रतीतिविषयाभावः । ( त० प्र० ख० ४ । पृ० ५६ )
[ ख ] अन्योन्याभावभिन्नोऽभावः—( त० प्र० ) ( मु० १ । पृ० ४२ ) यथा—"नास्ति घटो गेहे इति सतो घटस्य गेहसंसर्गप्रतिषेधः" (वै० ९ । १ । १०) इति सूत्रे प्रतिपाद्योऽभावः ।

---

१ तल्लक्षणं च [ क ] तादात्म्यसंबन्धानवच्छिन्नप्रतियोगिताकाभावत्वम् । (ग० २। सिद्धान्त०) [ ख ] अन्योऽन्याभावभिन्नाभावत्वम् । ( मु० १ । पृ० ४२ ) । अन्ये तु,—संसर्गाभावत्वं च [ १ ] संसर्गारोपजन्यप्रतीतिविषयाभावत्वमेव । [ २ ] अखण्डोपाधिः, इत्याहुः। ( त० प्र० ४ । पृ० ५७ ) । संसर्गाभावग्रहे प्रतियोगियोग्यतैव तन्त्रम् । यत्तु 'संसर्गाभावग्रहे प्रतियोग्य-धिकरणो-भययोगत्वं तन्त्रम्' इति कैश्चिदुक्तम्; तन्न समीचीनम्;—'आकाशे रूपात्यन्ताभाव'प्रत्यक्षस्य, 'निवृत्तः कोलाहलः' इति ध्वंसप्रत्यक्षस्य चानुपपत्त्या तद्ग्रहेऽधिकरणयोग्यतापेक्षा नास्ति, इति । ( सर्व० औलू० ) ( वै० उ० ९ । १ । ८ ) ( वै० वि० ९ । १ । ८ । पृ० ३८१ ) । अत एव,—त्वक्संयुक्तकालविशेषणतया वायुस्पर्शनाशप्रत्यक्षं पक्षधरमिश्रैः स्वीकृतम् ।

२ अत्रार्थे 'संसर्गाभाव'पदस्य व्युत्पत्तिः—'संसर्गेण* संबन्धेन ( तादात्म्यातिरिक्तेन ), अवच्छिन्नप्रतियोगिताकोऽभावः' इति मध्यमपदलोपी समासः शाकपार्थिववत् ज्ञातव्यः ।

३ ध्वंसप्रागभावयोः किंचित्संबन्धावच्छिन्नप्रतियोगिताकत्वानङ्गीकारे तु—इदं लक्षणान्तरम्, इति विज्ञेयम् ।

४ तदर्थश्च [ क ] गेहे घटस्य यः संसर्गः संयोगस्तस्य प्रतिषेधः । स च, [ १ ] 'यदि कदाचिदपि न घटस्तदाऽत्यन्ताभाव एव, भविष्यतः प्रागभावः, भूतस्य प्रध्वंसाभावः,' इति वैशेषिका आहुः । ( वै० उ० ९ । १ । १० ) । [ ख ] 'सतः ( पूर्वं तत्र वर्तमानस्य ) घटस्यैव गेहसंसर्गप्रतिषेधः गेहे संसर्गाभावः; तद्विशेषोऽत्यन्ताभावः 'नास्ति गेहे घटः' इति प्रत्यक्षविषयः,' इति समुदितसूत्रार्थः, ( इति नैयायिका आहुः ) । ( वै० वि० ९ । १ । १० । पृ० ३८४ )

५ अत्रेदं बोध्यम्—[ १ ] संसर्गाभावश्च नञादिनिपातेन, धातुना च बोध्यते । तत्र निपातेन प्रातिपदिकार्थाभावस्य बोधने,—अनुयोगिनि सप्तम्यपेक्षा; यथा—गेहे घटो नास्ति, इत्यादौ । विभक्त्यर्थसंसर्गाभावस्य धात्वर्थादौ बोधने तु,—नायं नियमः; यथा—गगनं न पश्यति, न कलञ्जं भक्षयेत्, इत्यादौ; तत्र दर्शने गगनकर्मत्वस्य, कलञ्जभक्षणे च बलवदनिष्टसाधनत्वस्य नञा संसर्गाभावस्य बोधनात्, न तत्र सप्तम्यपेक्षा, इति ।

---

* अयं भावः—'ध्वंस-प्रागभावयोरपि किंचित्संबन्धावच्छिन्नप्रतियोगिताकत्वमस्ति' इत्यभिप्रायेणेयं व्युत्पत्तिः ।

[ ग ] अधिकरणे प्रतियोग्यारोपहेतुकनिषेधधीविषयोऽभावः । संसर्गाभावस्त्रिविधः,—प्रागभावः, ध्वंसः, अत्यन्ताभावश्चेति । (भा० प० श्लो० १२–१३ ) । केचित्तु,–उत्पादविनाशशाली'सामयिक'नामा चतुर्थोऽयमभावः, इत्याहुः । ( मु० १ । पृ० ४३ ) (वै० वि० ९ । १ । ९ )

**संसारः**—१ [ क ] दुःखादीनां कार्यकारणभावः। स चानादिः; पूर्वापरकालानियमात् । ( न्या० वा० १ । पृ० २६ )

[ ख ] जन्ममरणप्रबन्धः प्रेत्यभावापरनामा । ( वै० उ० ६ । २ । १९ ) । यथा–"संसारसागरनिमग्नमनन्त ! दीनमुद्धर्तुमर्हसि हरे ! पुरुषोत्तमोऽसि" इत्यादौ,–'संसार'शब्दस्यार्थः ।

[ ग ] A अन्ये (वल्लभीया मायावादिनो) वेदान्तिनश्च,—मिथ्याज्ञानज-

---

[ २ ] 'प्रातिपदिकार्थस्यात्यन्ताभावबोधस्थलेऽनुयोगिनि सप्तम्यपेक्षा । क्वचित्—नञर्थस्य सुबर्थाभावस्य'अस्ति'क्रियाविशेष्यतावच्छेदकतया भानम् । यथा–'नास्ति गेहे घटः' इत्यादौ,–घटस्य गृहवृत्तित्वाभावो बोध्यते' इत्याहुः । ( वै० वि० ९ । १ । १० । पृ० ३८५ )

१ अयं भावः—यत्र भूतले पूर्वमपसारितं घटादिकं पुनरानीतं च तत्रायमभावः, इति । नैयायिकास्तु,—तत्र घटकालस्याभावसंबन्धाघटकत्वात्, घटसत्त्वकाले न घटात्यन्ताभावबुद्धिः । तथा च—तत्रात्यन्ताभाव एव प्रतीयते; कालविशेषविशिष्टस्वरूपस्य ( घटानधिकरणकालीनस्वरूपस्य ) संसर्गत्वोपगमादेव घटवति 'घटो नास्ति' इति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे मानाभावः, इति । ( दि० पृ० ४३ )

२ अत्रायं भावः–[ क ] दुःखादयो मिथ्याज्ञानपर्यवसाना अविच्छेदेन वर्तमानाः संसारः, इति । ( न्या० वा० १ । पृ० २६ ) [ ख ] मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन वर्तमानाः 'संसार'शब्दार्थः, इति । ( सर्व० औलू० )

३ अयं भावः—"धाता यथापूर्वमकल्पयत्" इति वेदे खण्डप्रलयस्य प्रसिद्धत्वेन संसारस्य प्रवाहानादित्वम्, नत्वनादित्वमेव इति । ( त० प्र० ४ । पृ० १८ )

४ जन्म-मरण-प्रवाहो प्रेत्यभावः; स एव पुंसां बन्धलक्षणः । तस्य च 'अजरं जरीभावः' इति नामान्तरमागमे । ( वै० वि० ६ । २ । १५ )

५ ( १ ) संसारित्वं च क्रमेण दुःखोत्पादः । ( न्या० ली० गु० मोक्षनि० पृ० ४२ ) । यथा—शरीराभिमानिनो जीवस्य संसारित्वम् । ( २ ) सांसारिकं सुखं तु,—धर्मीरक्षदेहावच्छेद्यं सुखम् । ( प० च० )

न्यसंस्काररूपवासना । B देहारम्भकादृष्टविशेषः । C स्वादृष्टोपनिबद्धदेहपरिग्रहः, इत्याहुः ।

[ घ ] मध्वाचार्यास्तु,—भूतबन्धः संसारः, इत्याहुः ।

[ ङ ] सांख्यास्तु,—सूक्ष्म ( लिङ्ग- )-शरीरं पूर्वपूर्वस्थूलशरीरत्यागपूर्वकमभिनवस्थूलशरीरं यदुपादत्ते, स संसारः, इत्याहुः । २ विश्वम् । ३ सङ्गतिः । ( वाच० )

संसृष्टिः—१ संसर्गः ( संबन्धः ) । ( राम० २ । पृ० १६४ ) यथा—"पक्षे साध्यसंसृष्टत्वज्ञानम्" ( मुक्ता० २ । पृ० १६ ) इत्यादौ,–'संसृष्टि'शब्दस्यार्थः । २ अलंकारविशेषः (एकार्थसमवायस्वभावा संसृष्टिः ), इत्यालंकारिका आहुः । ३ व्यवहारशास्त्रज्ञास्तु,—विभागानन्तरं मैत्र्यात् पुनः स्वस्वधनेषु भ्रात्रादीनां कृतः संसर्गः ( विभक्तधनस्य मिश्रीकरणम् ) । यथा—"संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः" ( याज्ञव० २ । १४३ ) इत्यादौ,–'संसृष्टि'शब्दस्यार्थः, इत्याहुः । ४ 'वमनादिना संशुद्धिः,' इति भिषज आहुः । ( वाच० )

संस्कारः—१ ( गुणः ) [ क ] संस्कारत्वजातिमान् । ( त० दी० ) ( प्र० प्र० ) ( त० कौ० )

[ ख ] सामान्यगुणा-त्मविशेषगुणो-भयवृत्तिगुणत्वव्याप्यजातिमान्।(सि०

---

१ अत्र संसारगतिप्रकारस्तु,—"ॐ तदनन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ" ( ब्रह्मसू० ३ । १ । १ ) इत्यादिनोक्तो द्रष्टव्यः ।

२ तदुक्तं वाराहे—"भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्" इति। (मध्वभा०३।१।१)

३ तदुक्तम्—"संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" इति । ( सांख्यका० ४० )

४ तदुक्तं काव्यप्रकाशे—"सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः" इति।(काव्यप्र०१०।१३९)

५ अत्रोक्तं बृहस्पतिना—"विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः । पितृव्येणाथ वै प्रीत्या स तु संसृष्ट उच्यते" इति । ( याज्ञ० २ । १४३, मिताक्षरा० )

६ संस्कारोऽनित्यः ( वाक्य० गु० पृ० २२ ) । तल्लक्षणं च वेगाद्यन्यतमत्वम् । ( ल० व० )

७ तस्यायमर्थः—सामान्यगुणो ( वेगः, स्थितिस्थापको वा ), आत्मविशेषगुणस्तु ( भावना ), एतदुभयवृत्तिः गुणत्वव्याप्या च जातिः ( संस्कारत्वम् ), तद्वान् संस्कारः, इति ।

८ सा च जातिः*संस्कारत्वात्मिका भवति, इति विज्ञेयम् । ( त० दी० पृ० ३८ )

---

* 'संस्कारत्वं न जातिः,' इति व्यवस्थापने मायतन्त चषकादौ । ( वाच० )

च० पृ० ३९ ) । अयं (गुणरूपः) संस्कारस्त्रिविधः,—वेगः, भावना, स्थितिस्थापकश्चेति । ( त० सं० ) ( प्रशस्त० २ । पृ० ३३ ) । २ धर्मज्ञास्तु,—सतो गुणान्तराधानात्मकः प्रतियत्नः । यथा—अलंकारादेरुद्दीपनम्, अन्नादेर्निशातनम्, वस्त्रादेर्मार्जनम्, दर्पणादेर्निर्मलीकरणम्, व्रीह्यादेश्च यज्ञाङ्गतासंपादनाय वैदिकमार्गेण प्रोक्षणादिः, संस्कारः, इत्याहुः । ३ काव्यप्रकाशकृन्मम्मटभटस्तु,—शास्त्राभ्यासजन्यव्युत्पत्तिः, इत्याह । ४ वैयाकरणास्तु,—व्याकरणोक्तदिशा शब्दानां साधनप्रकारः, इत्याहुः । कर्मज्ञास्तु,—विप्रादीनां वैदिककर्मार्हत्वप्रयोजको गर्भाधानादिक्रियाकलापः संस्कारः, इत्याहुः ।

**संस्थानम्**—१ [ १ ] अवयवसमुच्चयः । ( स्व० ) यथा—"सहजसंस्थानशून्यचरणवान् खञ्जः" इत्यादौ,—'संस्थान'शब्दस्यार्थः । (श० प्र० श्लो० ९४ । टी० पृ० १३४ ) [ २ ] [ क ] केचित्तु,—अवयवारम्भकसंयोगविशेषः, इत्याहुः ।

[ ख ] प्रचयाख्यः संयोगः । ( न्या० वा० १ । १४ । पृ० ८१ ) २ सम्यक् स्थितिः । ३ आकारः । ४ चिह्नम्, इत्यजय आह । ५ 'मृत्युः । ६ चतुष्पथश्च' इति काव्यज्ञा आहुः ।

---

१ अत्रोच्यते—"यज्जातीयः समुत्पाद्यस्तज्जातीयस्य कारणम् । स्वयं यस्तद्विजातीयः संस्कारः स गुणो भवेत्" इति ( ता० र० श्लो० ४८ )

२ अत्र मतभेदाः—( १ ) प्रोक्षणाभ्युक्षणादिषु संस्कारः पुरुषस्यैव धर्मः, इति नैयायिका आहुः ।( कु० ) । ( २ ) 'प्रोक्षिता एव व्रीहयः पुरोडाशाय कल्पन्ते, नाप्रोक्षिताः' इति प्रोक्षणादिजन्यसंस्कारो यज्ञाङ्गपुरोडाशेषु, इति स द्रव्यधर्म एव, इति मीमांसका मन्यन्ते । ( ३ ) एवम्—'स्नानाचमनादिजन्याः संस्कारा देहे उत्पद्यमाना अपि तदभिमानिनीवे कल्प्यन्ते,' इति वेदान्तिन आहुः । ( वाच० )

३ एवम्—विप्रादीनां देहसंस्काराश्चाष्टाचत्वारिंशत् मन्वन्तरेषु ज्ञेयाः । एवम्—मन्त्राणां सिद्धिदानाय दशविधाः संस्कारास्तन्त्रादौ द्रष्टव्याः ।

४ ते च इदानींतनानां संस्कारा दशविधा एव विशिष्यन्ते—गर्भाधानम्, पुंसवनम्, सीमन्तोन्नयनम्, जातकर्म, नामकरणम्, निष्क्रमणम्, अन्नप्राशनम्, चूडाकर्म, उपनयनम्, विवाहश्च, इति; अन्ते त्वौर्ध्वदैहिकसंस्कारोऽप्येकादशो विज्ञेयः ।

**संहतम्**—१ [ १ ] मिलितम् । [ २ ] सांख्यास्तु,—आरम्भकसंयोगयुक्तम्, इत्याहुः । ( सांख्यभा० १ । ६६ ) ( १४० ) । २ संघातः ।

**संहारः**—१ [ क ] प्रलयः । ( हेमच० ) । यथा—"चतुर्णां महाभूतानां सृष्टि-संहार-विधिरुच्यते" (प्रशस्त०) इत्यादौ,—'संहार'शब्दस्यार्थः । [ ख ] 'ध्वंस'शब्दवदस्यार्थोऽनुसंधेयः । २ संक्षेपः । ३ नरकविशेषः । ४ विसर्जनम् । ५ 'कालिकाभैरवविशेषः'[1], इति तान्त्रिका आहुः ।

**संहिता**—१ A मन्वादिप्रणीतं धर्मशास्त्रम् । B पुराणम् । C इतिहासादि । २ वेदभागः[2] । यथा—ऋक्संहिता, यजुःसंहिता, सामसंहिता चेति । ३ शाब्दिकास्तु,—स्वारसिकार्धमात्राकालव्यवायेनैवोच्चारणम्[3] । यथा—'सुद्ध्युपास्यः,दध्यत्र' इति संहिता, इत्याहुः[4] ।

**सकर्मकः**—( धातुः ) [ क ] आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकः[5] । यथा—चैत्रो ग्रामं गच्छतीत्यादौ,—संयोगानुकूलव्यापारबोधको

१ ते चाष्टौ,—"असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च । कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः" इति । ( तन्त्रसा० ) ( वाच० )

२ स च क्वचित् मन्त्ररूपः, क्वचिच्च कर्मप्रतिपादकः, क्वचित्तु गानरूपः, इति विज्ञेयम् ।

३ तथाच सूत्रम्—"परः संनिकर्षः, संहिता" इति ( पाणि० १ । ४।१०९ )।

४ अत्र व्याकरणनियमः—"संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते" इति ।

५ 'अग्नौ घृतं जुहोति' इत्यादौ,—अग्न्यादेः कर्मत्ववारणाय 'आश्रयानवच्छिन्न' इति फलविशेषणम् । ( ग० व्यु० का० २ )

६ अत्रेदं बोध्यम्—परे तु,—धातोः फलं व्यापारश्च द्वयमर्थ इति, धातोः स्वार्थफलावच्छिन्नस्वार्थक्रियान्वयबोधकत्वं सकर्मकत्वम् । 'जानाति' इत्यादौ सकर्मकत्वव्यवहारो*भाक्तः, इत्याहुः । प्राञ्चस्तु,—सर्वत्र क्रियामात्रं धात्वर्थः । द्वितीयासाकाङ्क्षतुमन्तधातुत्वप्रयुक्त एव च धातूनां सकर्मकत्वव्यपदेशः, न तु फलावच्छिन्नक्रियावाचित्वप्रयुक्तः; 'ज्ञा' प्रभृतावव्याप्तत्वात्, इत्याहुः । ( श० प्र० श्लो० ७३ । पृ० १०६–१०७ ) ( त० प्र० ख० ४ । पृ० ८३ )

७ अत्रायं विशेषः—वृक्षात्पर्णं पततीत्यादावपि, अधःसंयोगावच्छिन्नस्पन्दस्य 'पत' धात्वर्थ-

* जानात्यादीनां धातूनां तु, नामार्थान्वितोद्देश्यत्वातिरिक्तविषयत्वरूपविभक्त्यर्थान्वय्यर्थकत्वात्मकं गौणं सकर्मकत्वमेव, इति ज्ञेयम् । ( का० व्या० पृ० ३ )

'गम्' धातुः सकर्मकः। (ग० व्यु० का० २) (का० व्या० पृ० ३) (वै० सा० धात्वर्थ० पृ० ६० ) ( वै० सा० द० धात्वर्थ० पृ० ६१ )
[ ख ] 'फलान्वितव्यापारबोधकः' इति प्राञ्चो नैयायिका आहुः ।
[ ग ] शाब्दिकास्तु,—A 'स्वार्थफलव्यधिकरणव्यापारवाची । B स्वार्थव्यापारव्यधिकरणफलवाची वा धातुः सकर्मकः' इत्याहुः । (वै०सा०)

---

त्वेन धात्वर्थतावच्छेदकसंयोगात्मकफलशालिनो भूतलादेरपि कर्मत्वविवक्षायां 'वृक्षात्पर्णं भूमितलं पतति' इति प्रयोग इष्ट एव । अत एव—"द्वितीयाश्रितातीतपतित०" (पाणि० २ । १ । २४ ) इत्यादिसूत्रे पतितशब्दप्रयोगे द्वितीयासमासविधानम्; तदुदाहरणं च, नरकं पतितः 'नरकपतितः' इति साधु संगच्छते । परे तु,—यदि च तत्र सकर्मकत्वव्यवहारो नेष्टः, तदा कर्तृभिन्नान्वयिफलावच्छिन्नव्यापारबोधकस्यैव धातोः सकर्मकत्वम् । यथा गम्यादेः, न तु पतेः; अधःसंयोगरूपफलस्य पर्णे ( कर्तरि ) एवान्वितत्वात्; 'अधः' इत्यस्य संबन्धिसाकाङ्क्षतया, संबन्धित्वेन पर्णस्यैवान्वयात्, इत्याहुः । (का० व्या पृ० ४ ) ( ग० व्यु० का० २ )

१ अत्र—'स्व'शब्देन धातुर्ग्राह्यः ।

२ अत्र व्यधिकरणत्वं च कर्तृभिन्नतदधिकरणावृत्तित्वम् । तथा च—'ग्रामं गच्छति' इत्यादौ,—संयोगरूपं फलं ग्रामे, तदनुकूलव्यापारस्तु कर्तरि चैत्रे*तिष्ठति, इति फलव्यापारयोर्वैयधिकरण्यं संगच्छते, इति ।

३ अत्र व्यधिकरणत्वं च तदधिकरणावृत्तित्वम्; † । ( वै० सा० द० ) व्यापाराधिकरणमात्रावृत्तिफलवाचकत्वम्, इति परमार्थः । तथा हि—पच्यादेः, व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्मकत्वम् । कर्तृकर्मोभयनिष्ठफलबोधकस्यापि गम्यादेः, व्यापाराधिकरणमात्रावृत्तिफलबोधकतया सकर्मकत्वम् । 'भू'प्रभृतीनां तु, व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न ‡ सकर्मकत्वम्; फलस्य सत्तायाः, तत्संबन्धरूपव्यापारस्य चैकस्मिन्नेव धर्मिणि ( घटोऽस्तीत्यत्र घटादौ ) सत्वात् । (वाच० ) । आत्मानं जानाति, इच्छतीत्यादौ चेत्थं सकर्मकत्वव्यवस्था—द्वावात्मानौ,—शरीरात्मा, अन्तरात्मा चेति । तत्रान्तरात्मा तत्कर्म करोति, येन शरीरात्मा सुख-दुःखे अनुभवतीति "कर्मवत्कर्मणा तुल्यक्रियः" ( पाणि० ३ । १ । ८७ ) इति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्मकत्वमवधेयम् । ( वै० सा० पृ० ४३ ) । अत्राधिकं तु 'धातु'शब्दव्याख्यानावसरे संपादितं, तत्तत्र द्रष्टव्यम् ।

---

* अत्रोक्तम्—"फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः" इति ।

† अत्र—व्यापारानधिकरणवृत्तिफलबोधकत्वं सकर्मकत्वम्, इति चिन्त्यम् । ( स० )

‡ अत्रोक्तं भर्तृहरिणा—"आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः" इति । वाक्यपदीये )

[ घ ] प्राञ्चो वैयाकरणास्तु,—'व्याकरणशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थको धातुः सकर्मकः' इत्याहुः । ( ल० म० धात्वर्थ० पृ० ९ )

[ ङ ] मीमांसकास्तु,—'प्रत्ययार्थव्यापारव्यधिकरणफलवाचको धातुः सकर्मकः' इत्याहुः ।

**सकलम्**—१ 'सर्व'शब्दवदस्यार्थोऽनुसंधेयः । २ 'कलासहितः सकलः' इति शब्दव्युत्पत्तिज्ञा आहुः ।

**सखण्डोपाधिः**—( उपाधिः; सामान्यम् ) बहुपदार्थघटितो धर्मः । यथा—शिष्टत्वे-न्द्रियत्व-विषयत्वादिरूपः, प्रमेयत्व-कुण्डलित्वादिरूपश्च धर्मः सखण्डोपाधिः । ( सि० च० १ । पृ० ३ ) ( ल० व० ) ( त० कौ० पृ० २० )

**सङ्गः**—१ [ १ ] कर्तृत्वाभिमानः । यथा—"सङ्गं त्यक्त्वा फलानि च" इत्यादौ,—'सङ्ग'शब्दस्यार्थः । ( ल० म० ) । [ २ ] अनुरागः । २ संबन्धः ।

**सजातीयम्**—[ १ ] तद्वृत्तियत्किंचिद्धर्मवत् । यथा—घटत्वेन वृत्तित्वाभावो, घटत्वावच्छिन्नवह्न्यभावसजातीयः । ( ग० चतु० मिश्र० ) । विस्तरश्च 'सादृश्य' शब्दव्याख्यानावसरे व्यक्तीभविष्यति । [ २ ] कचित्—लक्ष्यतावच्छेदकसाक्षाद्व्यापकजात्यवच्छिन्नम् । यथा—गोसजातीयोऽश्वः ।

---

१ तेन 'अध्यासिता भूमयः' इत्यादिप्रयोगः सिद्ध्यति, इति विज्ञेयम् । (ल० म० धा० पृ०५)

२ स च क्लृप्तपदार्थेऽन्तर्भवति, न त्वखण्डोपाधिवत् सप्तपदार्थातिरिक्तः पदार्थः, इति विज्ञेयम् । ( सि० च० १ । पृ० ३ )

३ तच्चोपलक्षणम्,—भावत्वा-भावत्व-शरीरत्व-कारणत्वा-ऽऽकाशत्व-कालत्व-दिक्त्वादिः। (सि० च० १ । पृ० ३ )

४ अत्र च,—व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन साजात्यं बोध्यम् । ( दीधि० २ । व्याप्तिनिरू० )

५ अत्र साक्षाद्व्यापकत्वं च, तद्व्यापकाव्यापकत्वे सति, तद्व्यापकत्वम् । ( प्र० च० )

६ तथा हि—गोर्लक्षणस्य सास्नादिमत्त्वस्य सजातीयव्यावृत्तिप्रयोजनकत्वे,—गोत्वं लक्षणलक्ष्यतावच्छेदकम्, तस्य साक्षाद्व्यापकं पशुत्वम्, तदवच्छिन्नोऽश्वो भवति, इति । (प्र० च० पृ० ३)

**सत्**—१ सत्यं वस्तु । यथा—नैयायिकमते घटपटादि सर्वं जगत्सत्; मायावादिमते तु परब्रह्मैव सत् । २ साधु । ३ प्रशस्तम् । यथा—सत्स्वभाव इत्यादौ । ४ विद्यमानम् । यथा—'सच्चिदानन्दः' इत्यादौ, इति माध्वा आहुः ।

**सत्कार्यवादः**—( वादः ) कार्यस्य सत्त्वनिर्णायकः कथाविशेषः । तत्प्रपञ्चस्तु 'वाद'शब्दे द्रष्टव्यः ।

**सत्ता**—१ ( सामान्यम् ) द्रव्य-गुण-समवेता, गुण-कर्म-समवेता वा जातिः । ( सर्व० औलू० ) । २ विद्यमानत्वम् । तच्च [ क ] कालसं-

---

१ अत्र—सत्ताविशिष्टं 'सत्' इत्यस्यार्थो बोध्यः ।

२ न्यायमते घटादीनामुत्पत्तिनाशवत्त्वेऽपि मिथ्यात्वाभावेन कालसंबन्धित्वरूपं सत्यत्वं संगच्छते, इति विज्ञेयम् ।

३ तन्मते, तत्र सत्यत्वं च त्रिकालाबाध्यत्वमेव, इति चिन्त्यम् ।

४ इयं सत्ता 'द्रव्यं*सत्, गुणः सन्' इत्याद्यनुगतप्रतीत्यैव*सिद्ध्यति । तथा चानुमानम्—'सत्ता न द्रव्याद्यात्मिका; विलक्षणबुद्धिवेद्यत्वात्' इति । ( वै० उ० ७ । २ । २७ ) ( वै० वि० ७ । २ । २७ ) ( वै० १ । २ । ८—१७ )
इयं सत्ता वैशेषिकमत एव प्रसिद्धा । नव्यास्तु,—इमां सत्तां नास्वीचक्रुः । ( दि० १ । पृ० ३६ )

५ इयं च, वैशेषिकमते 'परसत्ता,‡ परसामान्यं वा' इत्युच्यते, द्रव्य-गुण-कर्म-वृत्तिश्चेति बोध्यम् । ( भा० ५० )

६ 'मायावादिमते सत्ता त्रिविधा,—पारमार्थिकी, व्यावहारिकी, प्रातीतिकी ( प्रातिभासिकी ) चेति । (वेदा० सा० ) । तत्र,—पारमार्थिकी ब्रह्मणः सत्ता; त्रिकालाबाध्यत्वात् । व्यावहारिकी च घटादीनां सत्ता; व्यवहारकालेऽबाध्यत्वात्; सा तु तत्त्वज्ञाननाश्या । प्रातिभासिकी तु शुक्तौ रजतादेः; अधिष्ठानज्ञानबाध्यत्वात्, प्रतिभासकालमात्रसत्त्वाच्च, इति; सा चाधिष्ठानसाक्षात्कारनाश्या । ब्रह्मसत्तयैव सर्वेषां सत्ताव्यवहारः; सदुत्पन्नत्वात्' इति ( वेदा० ५० ) इति प्रसंगतोऽधिकं विज्ञेयम् ।

---

* अत्र सूत्रम्—"सदिति यतो द्रव्यगुणकर्मसु, सा सत्ता" इति । ( वै० १ । २ । ७ )

† अयमाशयः—'सन्' इति प्रतीतिविषयो भावत्वमेव, ( अत एव—सामान्यादिष्वपि 'सत्' इति व्यवहारः । ) न त्वतिरिक्ता द्रव्यादित्रिकवर्तिनी सत्ताख्या जातिः, इति । तेन, 'परमपरं सामान्यम्, परं सत्ता' इति वैशेषिकविभागो निर्युक्तिकत्वादनादेयः, इति । ( दि० १ । पृ० ३६ )

‡ तत्र प्रमाणम्—"भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव" इति । ( वै० १ । २ । ४ ) ( ३ )

बन्धः। यथा—'घटो भवति' इत्यादौ 'भू' धात्वर्थः। यथा वा—"भूतले घटसत्तादशायाम्" इत्यादौ,—'सत्ता' शब्दस्यार्थः।

[ ख ] 'आत्मधारणानुकूलव्यापारः सत्ता,' इति शाब्दिका वदन्ति। ३ अर्थक्रियाकारित्वम्। यथा—'यत्सत् तत्क्षणिकम्' इत्यादौ, इति बौद्धा आहुः। ४ प्रामाणिकत्वम्, इत्यन्ये आहुः।

**सत्त्वम्**—१ 'सत्ता' शब्दवदस्यार्थोऽनुसंधेयः। २ सांख्यास्तु,—प्रकाशादिसाधनं प्रकृत्यवयवः (प्रकृतेः सत्त्वगुणः) पदार्थः। यथा—"सत्त्वात्संजायते ज्ञानम्" इत्यादौ,—'सत्त्व' शब्दस्यार्थः, इत्याहुः। ३ वैयाकरणाश्च,—द्रव्यम्। यथा—"सत्त्वे निविशतेऽपैति,............सोऽसत्त्वप्रकृतिर्गुणः" (व्या० का०), "सत्त्वप्रधानानि नामानि" (निरुक्त०) इत्यादौ,—'सत्त्व' शब्दस्यार्थः, इत्याहुः। ४ योगशास्त्रज्ञास्तु,—चित्तम्। यथा—"सत्त्वे तप्यमाने तत्संक्रान्तः पुरुषोऽपि तप्यते" (पात० भा०) इत्यादौ,—'सत्त्व' शब्दस्यार्थः, इत्याहुः। ५ प्राणाः, इत्यौपनिषदा आहुः। ६ पिशाचादिः, इति मान्त्रिका आहुः। ७ आयुः, इति भिषज आहुः। ८ 'व्यवसायः। ९ बलं' चेति काव्यज्ञा आहुः। १० 'स्वभावः। ११ आत्मा। १२ जन्तुश्च', इत्यन्ये वदन्ति। (शब्दच०)

**सत्प्रतिपक्षः**[3]—( हेत्वाभासः, दुष्टहेतुः ) [ क ] बोधोपस्थितिसमर्थपरा-

---

१ अत्रोक्तं भर्तृहरिणा—"आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते। अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः" इति। ( वाक्यप० )

२ तदुक्तम्—"सत्त्वं लघु*प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः" इति। ( सांख्यका० १३ )

३ [ १ ] अयं च 'प्रकरणसमः' इत्युच्यते। ( म० प्र० २। पृ० २७ ) ( त० भा० पृ० ४९) [ २ ] अत्र,—'तुल्यबलयोरेव सत्प्रतिपक्षत्वम्, नातुल्यबलयोः' इति नियमः। तेन, एकतरत्र तर्कादिबलसत्त्वे तस्यैवान्यतरबाधकता, इति बोध्यम्।

४ स च प्राचीनमतानुसारी व्यावहारिकः, 'सत्प्रतिपक्षः' इत्युच्यते। अत † एव—'सन् (वि-

---

* अत्र—लघुत्वं प्रकाशकत्वं च सत्त्वस्य लक्षणम्, इति। ( सांख्यचन्द्रि० १३ )

† 'अत एव' इत्यस्यार्थस्तु, 'प्रकृतपरामर्शस्य विरोधिपरामर्शस्यासत्त्वदशायां सत्प्रतिपक्षव्यवहारविरहादेव' इति।

मर्शकालीन-साध्यसिद्धिसमर्थपरामर्शविषयः । ( दीधि० २ ) यथा— 'पर्वतो वह्निमान्धूमात् महानसवत्, 'पर्वतो वह्न्यभाववान् पाषाणमयत्वात् कुड्यवत्' इति । (त० कौ० २ । पृ० १४)

---

धमानः ) प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमाणो हेतुः, विरोधिपरामर्शो वा यस्य परामृश्यमाणस्य हेतोरसौ सत्प्रतिपक्षः' इति विग्रहमपि वर्णयन्ति । अतस्तदनुसारेणैव व्यवहारौपयिकं लक्षणमाह ( मणिकारः ) । ( दीधि० २ । पृ० २०८ )

तल्लक्षणं तु सत्प्रतिपक्षत्वम् । तच्चात्र [ क ] साध्यविरोध्युपस्थापनसमर्थसमान-* बलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम् † । बलं च व्याप्तिपक्षधर्ममते । [ ख ] विरोधिबोधकान्यगमकतौपयिकरूपसंपत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यकत्वम् । ( चि० २ । पृ० ९४–९५ )

१ अत्रेदमवधेयम्—'पर्वतो वह्निमान् धूमात्' इत्यादिसद्धेतुस्थलेऽपि,—'वह्निव्याप्यधूमवान्, वह्न्यभावव्याप्यपाषाणमयत्ववांश्च पर्वतः' इति परामर्शद्वयसंवलनदशायां 'प्रकृतोऽयं धूमो हेतुः सत्प्रतिपक्षितः' इति व्यवह्रियते, इत्यनुभवमनुरुध्येदमुक्तम् ।

एतस्य दूषकताबीजं च समानबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाजनकत्वम्;............ एकत्र व्याप्तिभङ्गज्ञानद्वारा वाऽस्य दूषकत्वम् । ( चि० २ । पृ० ९५ )

रत्नकोषकारास्तु,—‡ सत्प्रतिपक्षाभ्यां (विरोधिपरामर्शद्वयेन) प्रत्येकं स्वसाध्यानुमितिः संशयरूपा जन्यते; विरुद्धोभयज्ञानसामग्र्याः संशयजनकत्वात्; संशयद्वाराऽस्य दूषकत्वम्, इत्याहुः । ( चि० २ । पृ० ९६ )

२ अत्र च,—द्वयोरपि हेत्वोः परस्परसाध्याभावसाधकत्वान्मिथः सत्प्रतिपक्षत्वम् ।

---

* अत्र चोपस्थितौ समानबलत्वं चानाप्तोक्तत्वेनानिश्चितत्वम्, प्रकृतसाध्यानुमापकबलशालित्वे सति प्रकृतसाध्याभावानुमापकबलशालिहेत्वन्तरकत्वं वा, इति विज्ञेयम् ।

† तदर्थस्तु,—साध्यस्य ( साध्यसिद्धेः ), विरोधिन्याः ( 'पक्षो न साध्यवान्' इत्याद्युपस्थितेः ), यद्वा—साध्यविरोधी ( साध्यवत्ताज्ञानप्रतिबन्धकज्ञानविषयः, बाधः साध्याभावादिमत्पक्षादिः ), तदुपस्थितेर्वा, जननयोग्यया समानया बलोपस्थित्या ( तथाविधव्याप्त्यादिबुद्ध्या ), प्रतिरुद्धं कार्यं यस्य, तादृशलिङ्गत्वम्, इति । अत्र समानबलत्वं चागृहीताप्रामाण्यकसाध्यसिद्ध्यौपयिकपरामर्शकालीनत्वम् । ( दीधि० २ । हेत्वा० पृ० २०८–२०९ )

निष्कृष्टार्थस्तु,—प्रकृतानुमितिविरोध्यनुमितियोग्यपरामर्शप्रयुक्ताग्रिमक्षणावच्छिन्नानुत्पादप्रतियोगिप्रकृतानुमितिजनकतावच्छेदकीभूतपरामर्शीयविषयताविशेषविशिष्टत्वम्, इति । ( ग० व्यावहारि० सत्प्र० निर० पृ० ७ )

‡ एतन्मते,—'तद्वत्ताबुद्धौ तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वं नास्ति' इत्यवधेयम् ।

[ ख ] अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वेनोपस्थितिकालीना-गृहीताप्रामाण्यकतदभावव्याप्यवत्त्वेनोपस्थितिविषयः । ( मु० २ । पृ० १६० )

[ ग ] यस्य साध्याभावसाधकं हेत्वन्तरम्, स सत्प्रतिपक्षः । यथा—'शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्, 'शब्दोऽनित्यः कार्यत्वात्पटवत्' इति । ( त० सं० )

---

एतज्ज्ञानं च साक्षादनुमितिप्रतिबन्धकम्; 'वह्निव्याप्यधूमवान्', 'वह्न्यभावव्याप्यपाषाणमयत्ववांश्च पर्वतः' इति द्विविधपरामर्शे सति, एकस्मादप्यनुमितेरसंभवात्; परस्परं प्रतिबन्धात्, इति । ( त० कौ० २ । पृ० १४ )

अत्र च, [ क ] परस्परानुमितिप्रतिबन्ध एव फलम्, तदेव दूषकताबीजम्, इति बोध्यम् । ( म० प्र० २ । पृ० २७ ) । [ ख ] परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् । ( मु० २ । पृ० १६० )

१ अत्रत्यपदप्रयोजनमुच्यते—( १ ) नित्यत्वव्याप्यशब्दत्ववत्ताज्ञानशून्यकालीन-अनित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेऽपि सत्प्रतिपक्षव्यवहाराभावात् कालीनान्तं तदुपस्थितिविशेषणम् । ( २ ) गृहीताप्रामाण्यकनित्यत्वव्याप्यवत्ताज्ञानकालीन-अनित्यत्वव्याप्यकृतकत्वपरामर्शसत्त्वेऽपि तद्व्यवहाराभावात् 'अगृहीताप्रामाण्यक' इति प्रथमोपस्थितिविशेषणम् । (३) तादृशकालीन-अनित्यत्वव्याप्यवत्तापरामर्शसत्त्वेऽपि, तत्राप्रामाण्यग्रहकाले तथा व्यवहाराभावात् 'अगृहीताप्रामाण्यक' इति द्वितीयोपस्थितिविशेषणम् । ( दि० २ । हेत्वा० पृ० १६० )

२ समुदितार्थं प्राञ्च आहुः—यत्संबन्धि यत्साध्यम्, तदभावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति, स सत्प्रतिपक्षः,* इति । नवीनाः पुनरेवं वर्णयन्ति—यत्संबन्धिसाध्याभावव्याप्यहेत्वन्तरस्य सत्त्वं पक्षे, स सत्प्रतिपक्षः, इत्यर्थः, इति । ( नील० २ । पृ० २६ )

३ 'सत्प्रतिपक्ष'शब्दस्य व्युत्पत्त्यादिकं प्रदर्शयन्ति—'साध्याभावसाधकहेत्वन्तरं प्रतिपक्षः, तद्वान् सत्प्रतिपक्षः' इति । ( त० कौ० )

४ अत्रानुमानद्वये श्रावणत्वं हि हेतुः सत्प्रतिपक्षः, इति विज्ञेयम् ।

---

( चि० ) । एतन्मते,—संशयरूपानुमितिरेव सत्प्रतिपक्षस्य फलम् । ( म० प्र० २ । पृ० २७ ) ( मु० २ )

* प्राचामयमाशयः—प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतुः, ततोऽन्यस्मिन्हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षता, इति; एतत्सूचनाय 'हेत्वन्तर' इति । ( नील० २ । पृ० २६ )

**सत्प्रतिपक्षः**—( हेतुदोषः ) [ १ ] पक्षे साध्यधीप्रतिबन्धकपरामर्शः[1] । यथा—जलमुष्णं स्पर्शत्वादित्यादौ,—नेदमुष्णमतेजस्त्वादित्यादिः । (न्या० म० २ । पृ० २१ ) ( भा० प० श्लो० ७८ )

[ २ ] A साध्याभाव[2]व्याप्यवत्पक्षः[3]; B साध्यवदन्यत्वव्याप्यवत्पक्षः; C पक्षनिष्ठः साध्याभावव्याप्यः; D पक्षनिष्ठः साध्यवद्भेदव्याप्यः । (दीधि०) ( दि० २ । पृ० १६० ) । E साध्यवदवृत्तिव्याप्यवत्पक्षः; F पक्षनिष्ठः साध्यवदवृत्तिव्याप्यः; G पक्षवृत्त्यभावप्रतियोगित्वव्याप्यवत्साध्यम्;

---

१ अयं प्राचीनमतानुसारी व्यावहारिकः सत्प्रतिपक्षः ।

समुदिततदर्थस्तु,—[ क ] पक्षे साध्यधीप्रतिबन्धकः परामर्शः (प्रतिहेतुपरामर्शो) यस्य हेतोस्तत्त्वं सत्प्रतिपक्षत्वमिति । इत्थं चात्र,—प्रतिहेतुस्तन्निष्ठव्याप्त्यादिर्वा दोषः; तद्वत्ता चापरहेतुः एकज्ञानविषयत्वसंबन्धेन; 'साध्यव्याप्यवान्, साध्याभावव्याप्यवांश्चायम्' इति समूहालम्बनपरामर्शस्वीकारात् । ( म० प्र० २ । पृ० २७ ) [ ख ] स्वसाध्यविरुद्धसाध्याभाववत्तापरामर्शकालीन-साध्यव्याप्यवत्तापरामर्शः, इति ( मु० २ । पृ० १७० ) ......

२ व्यवहारमात्रोपयोगिनो निरुक्तरूपस्य हेत्वाभासनिरूपणप्रस्तावे *उपयोगाभावात्, तरीत्या सत्प्रतिपक्षविभाजकधर्माश्रयान् सत्प्रतिपक्षस्वरूपाणि प्रदर्शयति 'साध्याभावव्याप्यवत्पक्षः†' इत्यादिना ।

३ विभाजकं तु, ‡ प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधित्वे सति, प्रकृतपक्षसाध्यग्रहाविरोधि-प्रकृतपक्षसाध्यवैशिष्ट्यग्रहविरोधि-रूपोन्नायकत्वम्§ । ( दीधि० २ । पृ० २१३ )

---

* अयं भावः—उपस्थितिघटितस्योक्तरूपस्य ( प्राचीनमतानुसारिसत्प्रतिपक्षव्यवहारौपयिकरूपस्य ) स्वरूपत एवोपयुक्तस्य (न तु ज्ञातस्य सतः ), आभासतायामप्रयोजकत्वात्, इति । ( दि० २ । हेत्वा० पृ० १६० )

† अत्र [ १ ] 'बाधव्याप्यो यः, स एव सत्प्रतिपक्षो भवति' इति सिद्धान्तो बोध्यः । ( मु० २ ) [ २ ] सत्प्रतिपक्षे यथासिद्धान्तं पञ्चावयवादिप्रयोगमिच्छन्ति । ( दीधि० २ )

‡ समुदितार्थश्च,—प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती, विशिष्टपक्ष-विशिष्टसाध्य-ग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदक-निरुक्तपक्षसाध्यवैशिष्ट्यग्रहप्रतिबन्धकतावच्छेदक-विषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृश-विशिष्टनिरूपितविषयिता, तादृशत्वम्, इति । ( ग० सत्प्र० )

§ अत्रोन्नायकत्वं च, यादृशविशिष्टविषयकत्वेन परामर्शस्यानुमितिजनकत्वम्, तत्त्वम् । तच्च साध्याभावव्याप्यवत्पक्षादिकम् । (दीधि० २ । पृ० २१३ )

H साध्यनिष्ठः पक्षवृत्त्यभावप्रतियोगित्वव्याप्यश्च। यथा—'ह्रदो वह्निमान् धूमात्' इत्यादौ,—वह्न्यभावव्याप्यवद्ध्रदादिः सत्प्रतिपक्षः। ( ग० २ )

**सत्यम्**—१ प्रमितिविषयः। यथा—घट-पटादि सर्वं जगत् सत्यम्। यथा वा—वेदान्तिमते, भूतपञ्चकम्[2]। २ यथार्थकथनम्[3]। यथा—"सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्"(मनु० ४।१३८) इत्यादौ,—'सत्य' शब्दस्यार्थः। ३ नान्दीमुखश्राद्धीयो देवविशेषः। ४ कृतयुगम्[5]। ५ शपथः[6]। ६ यथार्थज्ञानम्[7]। यथा—सत्यरजते 'इदं रजतम्' इति ज्ञानम्। ७ 'त्रिकालाबाध्यम्। यथा—"सत्यं ज्ञानमनन्तं ब्रह्म" ( तै० ब्र० उप० ) इत्यादौ,—परमात्मा सत्यः' इति वेदान्तिन आहुः। ८ स्वीकारः[8]। ९ 'तपोलोकादूर्ध्वस्थो लोकविशेषः[9]' इति पौराणिका आहुः।

**सदाचारः**[10]—[ १ ] मन्वाद्युक्तदेशप्रचलिताचारः[11]। यथा—"वेदः स्मृतिः

---

१ एतेषां ( ८ ) सत्प्रतिपक्षस्वरूपाणामन्यतमत्वादिनाऽनुगमकरणान्न सत्प्रतिपक्षविभागव्याघातः इति। ( दि० २। हेत्वा० पृ० १६० )

२ अत्रार्थे व्युत्पत्तिः—'सन्ति पृथिव्यप्तेजांसि च, त्यौ वाय्वाकाशौ च' इति। तथा च श्रुतिः—"सच्च त्यच्च भूतपञ्चकम्; तं च सत्यमित्याचक्षते" (?) इति। ( बृह० उ० २।३।१–३ ) ( तैत्ति० उ० २।६।१ )

३ तदुक्तं ब्रह्मपुराणे—"यथार्थकथनं यच्च सर्वलोकसुखप्रदम्। तत्सत्यमिति विज्ञेयमसत्यं तद्विपर्ययः" इति।

४ अत्रोक्तम्—"इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः" इति। ( श्राद्धत० )

५ अत्रेदमधिकं ज्ञेयम्—संधिसंध्यंशाभ्यां सहितं सत्ययुगमानं तु, दैवमानेन ४८०० वर्षाः, मनुष्यमानेन १७२८००० वर्षाः, इति।

६ शपथरूपसत्यस्यापालने दोषो यथा—"कृत्वा शपथरूपं यः सत्यं हन्ति न पालयन्। स कृतघ्नः कालसूत्रे वसेदेव चतुर्युगम्" इति। ( ब्रह्मवै० पु० प्र० अ० ३८ )

७ अत्र याथार्थ्यं च, तदभाववति तत्प्रकारकत्वाभावः; तदेव ज्ञाने सत्यत्वम्, इति ज्ञेयम्।

८ अत्रार्थे 'सत्य'शब्दोऽव्ययम्, इति विज्ञेयम्।

९ अत्रोच्यते—"षड्गुणेन तपोलोकात्सत्यलोको विराजते। अपुनर्मारका यत्र ब्रह्मलोकाभिधः स्मृतः" इति। ( विष्णुपु० अंश० २। अ० ७ )

१० अत्र व्युत्पत्ति-विग्रहौ—"साधवः क्षीणदोषाश्च, सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते" इति।

११ तदुक्तम्—[ क ] "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते॥ तस्मिन् देशे य आचारः पारंपर्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते" इति। ( मनु० अ० २। श्लो० १७–१८ )

सदाचारः स्वस्य च प्रियमात्मनः । एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्" ( मनु० २ । १२ ) इत्यादौ,—'सदाचार'शब्दस्यार्थः ।

[ २ ] शिष्टाचारः । यथा—आधुनिकशिष्टानामाचारः । ( चि० १ । पृ० ११२ )

**सद्धेतुः**—( हेतुः ) [ क ] पञ्चरूपोपपन्नो हेतुः । ( त० भा० प्रमाणनि० पृ० १४ )

[ ख ] व्याप्त्यादिविशिष्टहेतुः । ( नील० २ पृ० २४ )

[ ग ] प्रमितव्याप्तिपक्षधर्मताको हेतुः । ( ग० सत्प्र० ) । यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—धूमः सद्धेतुः । ( ख० ) शिष्टं तु, 'लिङ्ग', 'अनुमान'शब्दव्याख्याने दृश्यम् ।

---

१ स्वधर्मत्यागे हानिरुक्ता—"तस्मात्स्वधर्मं न हि संत्यजेच्च न हापयेच्चापि तथाऽऽत्मवंशम् । यः संत्यजेच्चापि निजं हि धर्मं तस्मै प्रकुप्येत दिवाकरश्च" इति । (वामनपु० अ० १४)

२ तथा च तत्त्वचिन्तामणौ स्मृतिः—"यस्मिन्देशे य आचारः पारंपर्यक्रमागतः । श्रुति-स्मृत्यविरोधेन सदाचारः स उच्यते" इति । ( चि० १ । मङ्गलवा० पृ० ११२ )

३ पञ्च रूपाणि तु,—पक्षसत्त्वम्, सपक्षसत्त्वम्, विपक्षासत्त्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । ( त० भा० प्रमाणनि० पृ० १३ )

४ अत्रेदं बोध्यम्—पञ्चरूपोपपन्न एव हेतुः स्वसाध्यं साधयितुं क्षमते, न त्वेकेनापि रूपेण हीनः, इति । ( त० भा० प्रमाणनि० पृ० १३ )

५ 'स्वसाध्यानुमित्यौपयिकप्रमात्मकपरामर्शवान्' इति यावत् । ( ग० सत्प्र० )

६ अत्रायमर्थः—पर्वतत्वसामानाधिकरण्येन वह्नेः साध्यत्वविवक्षायामेव धूमः सद्धेतुर्भवति, न तु, पर्वतत्वावच्छेदेन वह्नेः साध्यत्वविवक्षायां धूमः सद्धेतुः; तत्र,—पर्वतत्वावच्छेदेन वह्नेरभावात्,* इति ।

७ उक्तानि पञ्च रूपाणि धूमवत्त्वादावन्वयव्यतिरेकिण्येव हेतौ विद्यन्ते । तथा हि—( १ ) धू-

---

* अयं भावः—अवच्छेदकावच्छेदेन वह्नेः साध्यत्वे,—सामानाधिकरण्येन वह्न्यभावस्य प्रसिद्धत्वेन तस्य च बाधरूपत्वात्तत्रासौ हेतुर्हेत्वाभास एव भवति । 'अतः सामानाधिकरण्येनैव वह्नेः साध्यत्वं विवक्षणीयम्, तथा च सति,—तत्र सामानाधिकरण्येन वह्न्यभावस्य सत्त्वेऽपि तद्विषयकनिश्चयस्य तत्रत्यसाध्यवत्ताबुद्धि प्रत्यप्रतिबन्धकत्वेन हेत्वाभासलक्षणानाक्रान्तत्वान्न तस्य बाधत्वम् । अवच्छेदकावच्छेदेन वह्न्यभावविषयकनिश्चयस्य प्रतिबन्धकत्वेऽपि तादृशवह्न्यभावस्य चाप्रसिद्धत्वेन तत्र न कोऽपि हेत्वाभासदोषः, इति सामानाधिकरण्येन वह्निसाध्यकस्थलीयधूमः सद्धेतुर्भवति' इति सूक्ष्मदर्शिभिः सुधीभिर्विभावनीयम् । ( ग० २ । हेत्वा० सामान्यनि० 'अत्र वदन्ति' कल्पे, पृ० २६)

**सद्यः**—( अव्ययम् ) १ तत्क्षणम् । यथा—"सद्यः शौचं विधीयते" इत्यादौ । २ क्वचित्–एकं दिनम् ।

**सन्**—( धात्वंशः प्रत्ययः ) [ क ] कर्तुरिच्छा¹ । (तर्का० ४ । पृ० ११)। यथा–'घटं चिकीर्षति' इत्यादौ,–'सन्'प्रत्ययार्थः । (स्व०) । यथा वा– 'पिपठिषति' इत्यादौ,–सन्नर्थः । ( ल० म० )

[ ख ] इच्छा । यथा—'पाकं चिकीर्षति, ओदनं बुभुक्षते' इत्यादौ,–

मवत्त्वं पक्षस्य ( पर्वतस्य ) धर्मः; तस्य पर्वते विद्यमानत्वात् । (२) एवं सपक्षे सत्त्वम्; सपक्षे ( महानसे ) विद्यमानत्वात् । ( ३ ) एवम्–विपक्षात् ( महाह्रदात् ) व्यावृत्तिः; तत्र धूमो नास्ति, इति । (४) एवम्—अबाधितविषयं धूमवत्त्वम् ; तथा हि—धूमवत्त्वस्य हेतोर्विषयः साध्यो धर्मः; तच्चाग्निमत्त्वम्, तत्केनापि प्रमाणेन न बाधितम्; न खण्डितम्, इत्यर्थः । ( ५ ) एवम् —'असन् प्रतिपक्षो यस्य' इत्यसत्प्रतिपक्षं धूमवत्त्वम्; तथा हि– साध्यविपरीतसाधकं हेत्वन्तरं 'प्रतिपक्षः' इत्युच्यते; स च धूमवत्त्वे हेतौ नास्त्येव; अनुपलम्भात्, इति । ( त० भा० प्रमाणनि० पृ० १४ )

१ अयं धातुप्रकृतिको बोध्यः । ( श० प्र० श्लो० १०९ )

२ स्वसामानाधिकरण्य-स्वनिष्ठविषयतानिरूपितविषयित्वो-भयसंबन्धेन प्रकृतधात्वर्थप्रधानीभूतव्यापारविशिष्टेच्छा, इत्यर्थः ।

३ अत्रेदं बोध्यम्—सन्नुत्तराख्यातस्याऽऽश्रयत्वे लक्षणा; सविषयकार्थकप्रकृतिकाख्यातस्य लक्षणाया आश्रयत्वे 'घटं जानाति' इत्यादौ क्लृप्तत्वात्, इति । तर्का० ४ । पृ० ११ )

४ अत्र,—सन्नर्थेच्छायां धात्वर्थस्य कर्मत्व-समानकर्तृकत्वे-तदुभयसंबन्धेन विशेषणता बोध्या । ( ल० म० )

५ अत्र—सन्नर्थेच्छायां द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसंबन्धेन, धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठ-*स्वसमानकर्तृकत्वसंबन्धेन, अन्वयात् 'पाकधर्मिका, निरुक्तसंबन्धेन कृतिमती या इच्छा, तद्वान्' इत्यादिरर्थः । ( श० प्र० श्लो० १०९ । टी० पृ० १९२ )

* अत्र,—समानकर्तृकत्वस्य निवेशात्, अन्यदीयकृतिविषयपाकादाविच्छावति 'अयं चिकीर्षति, पिपक्षति' इत्यादिको न प्रयोगः, इति चिन्तामणिकृत आहुः । सौन्दडस्तु प्राह—पाकं चिकीर्षतीत्यादौ,—द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थ एवान्वयः । तदर्थस्य तु समानकर्तृकत्व-विषयत्वाभ्यां सन्नर्थेच्छायाम् । तथा च,—'पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावान्' इत्यादिरेवार्थः; कारकविभक्तेः क्रियायामेव स्वार्थबोधकत्वात् । अत एव—'गृहं तिष्ठासति' इत्यादिको न प्रयोगः; स्थितेर्गृहकर्मकत्वबाधात्; अन्यथा,–गृहधर्मिकां स्थितिप्रकारकेच्छां बोधयन्नयमेव प्रमाणं स्यात्, न तु 'गृहे तिष्ठासति' इत्यादिः, इति । ( श० प्र० श्लो० १०९ । टी० पृ० १९२ )

सनोऽर्थः । ( श० प्र० श्लो० १०९ । टी० पृ० १९२ )

[ ग ] धात्वर्थविशेष्यकेच्छा । यथा—'पाकं चिकीर्षति' इत्यादौ,—कृतिविशेष्यकेच्छा 'चिकीर्षा'पदार्थः।सा च, 'पाककृतिर्भवतु' इतीच्छैव । ( ग० व्यु० का० २ । पृ० ९९ )

**सपक्षः**—१ [ क ] निश्चितसाध्यधर्मा धर्मी । ( त० भा० प्रमाणनि० पृ० १९ ) ( चि० २ । पक्ष० )

[ ख ] निश्चितसाध्यवान् । यथा—पर्वते धूमेन वह्निसाधने,—महानसः सपक्षः । ( त० सं० ) ( त० भा० पृ० १९ )

[ ग ] वेदान्तिनस्तु,—साध्यसमानधर्मवान् धर्मी सपक्षः, इत्याहुः । ( प्र० च० पृ० २३ ) । २ काव्यज्ञास्तु,—A समानपक्षः । B पक्षसहितश्च, इत्याहुः ।

**सपिण्डता**—[ क ] दाया-ऽशौचादिग्रहणप्रयोजको ज्ञातिधर्मविशेषः ।

[ ख ] साक्षात्परंपरया वैकदेहारम्भदेहत्व-श्राद्धदेयैकपिण्डान्वययोग्यत्व-एतदन्यतरवत्त्वम् । यथा—पुत्रादीनां मातुलादीनां च सपिण्डता । तथा च सापिण्ड्यं हि द्विविधम्,—एकशरीरावयवान्वयेन सापिण्ड्यम्,

---

१ तल्लक्षणं च, [ क ] साध्यप्रकारकनिश्चयविशेष्यत्वम् । ( न्या० बो० २ । पृ० १७ ) [ ख ] विशेष्यतासंबन्धेन साध्यप्रकारकनिश्चयवत्त्वम् । ( वाक्य० २ । पृ० १६ )

२ अत्र व्युत्पत्तिः—'समान (एकः ), पिण्डः ( पिण्डदानक्रिया, मूलपुरुषशरीरं * वा ), यस्य' स सपिण्डः; तस्य भावः सपिण्डता, इति । ( मिताक्षरा, अ० १ । श्लो० ५२ ) ( धर्मसि० परि० ३ । पूर्वा० पृ० ५० )

३ इदं च पुत्रादि-मातृसंतान-भ्रातृपितृव्यादिपुत्रान्तेषु संभवति ।

---

* तथा हि—पुत्रस्य पितृशरीरावयवान्वयेन पित्रा सह सापिण्ड्यम् । एवम्—पितामहादिभिरपि पितृद्वारेण तच्छरीरान्वयात्सापिण्ड्यम् । एवम्—मातृशरीरावयवान्वयेन मात्रा; तथा—मातामहादिभिरपि मातृद्वारेण । तथा—मातृष्वसृ-मातुलादिभिरपि; एकशरीरावयवान्वयात् । तथा—पितृव्यपितृष्वस्रादिभिरपि । तथा—पत्न्यासह पत्न्या एकशरीरारम्भकतया । एवम्—भ्रातृभार्याणामपि परस्परमेकशरीरारब्धैः सहैकशरीरारम्भकत्वेन, इति । (मिताक्ष० अ० १ । श्लो० ५२)

निर्वाप्यपिण्डान्वयेन[1] सापिण्ड्यं[2] च । तत्र 'शरीरावयवान्वयसापिण्ड्यं अशौच[3]-विवाह[4]-दायग्रहण-एतेषु त्रिष्वप्युपयुज्यते' इति हेमाद्रि-माधव-विज्ञानेश्वर-स्मृतिचन्द्रिकाकार-मित्रमिश्र-कमलाकरादीनां मतम् । कामधेनु-हारलता-कल्पतरु-पारिजातकारादीनां तन्मतानुसारिजीमूतवाहनस्य च मतं तु,—'सपिण्डता हि विषयभेदेन त्रिविधा,—आशौचोपयोगिनी, विवाहोपयोगिनी, दायग्रहणोपयोगिनी च । तथा च—शरीरान्वयसापिण्ड्यमाशौचे विवाहे चोपयुज्यते; निर्वाप्यपिण्डान्वयेसापिण्ड्यं तु दायग्रहणे ह्युपयुज्यते' इति । अधिकं तु तत्तद्धर्मशास्त्रग्रन्थेष्वन्वेषणीयम्, इत्यलं विस्तरेण ।

---

१ निर्वाप्यपिण्डान्वयः श्राद्धीयान्नपिण्डसंबन्धः, इत्यर्थः ।

२ इदं तु पुत्रादिभ्रातृभार्यापर्यन्तेष्वेव* संभवति, न तु मातृसंतान-भ्रातृपितृव्यादिपुत्रादिषु । ( मिता० १ । ५२ )

३ अत्रोक्तम्—"वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः । पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते" इति । ( धर्मसिंधौ धृतं वाक्यम् ) । "पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" इति ( याज्ञव० १ । ५३ ) तथा च—पित्रादयः षट् सपिण्डाः, पुत्रादयश्च षट्, आत्मा च सप्तमः, इति । ( मिता० १ । ५३ )

४ यथोदाहृतं ( शु० त० ) रघुनन्दनेन—"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्" इति ( मत्स्यपु० ) । हारलतायां कूर्मपुराणं च-"सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ पिता पितामहश्चैव तथैव प्रपितामहः । लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्" इति । भ्रात्रादीनामपि सापिण्ड्यमुक्तं बौधायनेन-"प्रपितामहः पितामहः पिता स्वयम्, सोदर्यभ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रो वा, एतानविभक्तदायादान् सपिण्डानाचक्षते । विभक्तदायादान् सकुल्यानाचक्षतेऽसत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति" इति । किंच—स्त्रीणामपि भर्तृसापिण्ड्येन सापिण्ड्यम् । अनूढायाः कन्यायास्तु त्रिपौरुषं सापिण्ड्यम् । तथा च-'गोत्रैक्ये सति, पिण्डलेपयोर्दातृत्वभोक्तृत्वान्यतरवत्त्वमाशौचसापिण्ड्यम् । साक्षात्परंपरया वा सप्तमपर्यन्तदेहसंबन्धवत्त्वं विवाहसापिण्ड्यम् । त्रिपुरुषपर्यन्तं देयपिण्डदातृत्वभोक्तृत्वान्यतरवत्त्वं दायग्रहणे सापिण्ड्यम्', इति वङ्गदेशीयानां जीमूतवाहनादीनां मतं बोध्यम् । (वाच०)

---

* तत्रोक्तम्—"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः । पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्" इति । ( मत्स्यपु० )

**सप्तमी**—( विभक्तिः ) अधिकरणतायामाधेयत्वे वा शक्ता सुप् । ( श० प्र० श्लो० ६६ । टी० पृ० ८७ ) । यथा–'गेहे[3] पचति' इत्यादौ,–'गेह' पदोत्तरवर्तिनी सप्तमी । ( स्व० )

**सप्तम्यर्थश्च**, १ ( १ ) A न्यायमते,—आधारत्वम्, आधेयत्वं वा सप्तम्यर्थः; कर्तृकर्मणोराधारत्वम्, इति फलितोऽर्थः । यथा–'भूतले घटोऽस्ति' इत्यादौ,–भूतलपदोत्तरसप्तम्यर्थः ।( वै० सा० द० ) । B वैयाकरणमते तु,—आश्रयः (अधिकरणम्) सप्तम्यर्थः; कर्तृकर्मद्वारा धात्व-

---

१ तल्लक्षणं च सप्तमीत्वम्; तच्च, [ क ] 'पच'धात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिक-स्वार्थाधेयत्वबोधा-नुकूलसुप्सजातीयत्वम् । [ ख ] चैत्रधर्मिक-स्वार्थाधिकरणत्वान्वयबोधक-सुप्समानानुपूर्वीकत्वं वा, इत्यपि वदन्ति । ( श० प्र० श्लो० ६६ । टी० पृ० ८७ )

२ 'ग्राममध्यास्ते' इत्यादौ,—अधिकरणत्वं बोधयन्त्यपि द्वितीयादिः, न तत्र शक्ता; 'ग्रामाय गच्छति' इत्यादौ,—कर्मत्वादिष्वेव चतुर्थ्यादिः शक्ता; इति द्वितीया-चतुर्थ्यादीनां निरासः। ( श० प्र० श्लो० ६६ । टी० पृ० ८७ )

३ अत्र—आधेयत्वं सप्तम्यर्थः, तस्य च क्रियायामन्वयः । 'भुवि गच्छति' इत्यादौ तु,—कर्तृघटितपरंपरासंबन्धावच्छिन्नाधारत्वमेव सप्तम्यर्थः । ( ग० व्यु० का० ७ । पृ० ११६)

४ तच्चाखण्डोपाधिः, इति प्राञ्च आहुः । ( वै० सा० द० पृ० ८६) । नव्यास्तु,—स्वरूपसंबन्धविशेष एव तत्, इत्याहुः ।

५ अत्र विप्रतिपत्तिः—'सप्तम्यर्थ आधारत्वं वा, आधेयत्वं वा' इति । तत्र—'अधिकरणत्वमात्रं सप्तम्यर्थः । तथा च—'भूतलनिष्ठाधिकरणतानिरूपको घटः' इत्याकारको बोधः । तत्र—निष्ठत्वम्, निरूपकत्वं च संसर्गमर्यादया भासते' इति प्राञ्चो नैयायिका आहुः । नव्यनैयायिकास्तु,—'प्राग्भिरुक्तं युक्तं न; तथाङ्गीकारे तु,—निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात् 'भूतले न घटः' इत्यादौ,—नञर्थान्वयासंभवः । अतः,—तत्राधेयत्वमात्रं सप्तम्यर्थः । तथा च—'भूतलनिरूपिताधेयत्वाश्रयो घटः' इत्यन्वयबोधः स्वीकार्यः; तत्र निरूपितत्वम्, आश्रयत्वं च संसर्गः, इत्थं च—'भूतले न घटः' इत्यादौ,—आश्रयतासंबन्धावच्छिन्नाधेयताप्रतियोगिकोऽभावो नञा बोध्यते, इति सर्वं सुस्थम्' इति प्राहुः । ( का० व्या० पृ० ११ )

६ तत्र कारकत्वनिर्वाहार्थं परंपरासंबन्धस्यापि क्रियान्वयित्वरूपकारकत्वघटकताऽऽवश्यकी, इति बोध्यम् । ( वै० सा० द० सुबर्थ० पृ० ८७ )

७ अत्र,—'भूतलवृत्तिघटो वर्तमानसत्ताश्रयः' इति बोधः । नञ्समभिव्याहारे तु,—'तादृशसप्तम्यर्थाभावो घटांशे भासते' इति नैयायिकानां मतम् । (वै० सा० द० सुबर्थ० पृ० ८७)

र्थाश्रयः, इत्यर्थः। यथा—'भूतले घटोऽस्ति, गेहे तण्डुलं पचति' इत्यादौ,—भूतलादिपदोत्तरसप्तम्यर्थः। अधिकरणं तु त्रिविधम्, औपश्लेषिकम्[2], वैषयिकम्[3], अभिव्यापकं[4] चेति। तत्राद्यस्योदाहरणे,—'कटे[5] शेते, गुरौ वसति' इति। द्वितीयस्योदाहरणं 'मोक्षे इच्छति' इति। तृतीयस्योदाहरणं तु 'तिलेषु तैलम्' इति। ( वै० सा० सुबर्थ० पृ० ८६ )

( २ ) क्वचित्,—निरूपकत्वम्, निरूप्यत्वं वा सप्तम्यर्थः। यथा—'भूतले वर्तते घटः' इत्यादौ,—'भूतल'पदोत्तरवर्तिसप्तम्या अर्थः। यथा वा—"इति हेतुस्तदुद्भवे" ( काव्यप्र० १ ) इत्यादौ,—हेतुतायाम्, उ-

---

१ अत्र—"सप्तम्यधिकरणे च" ( पाणि० २। ३। ३६ ) इति सूत्रम्। तदर्थश्च,—शाब्दिकमते, 'कर्तृकर्मान्यतरद्वारा क्रियाश्रयोऽधिकरणम्, तत्र सप्तमी' इति। 'गेहे चैत्र ओदनं पचति, स्थाल्यामोदनं पचति' इत्यादौ,—गेहस्य कर्तृद्वारा, स्थाल्याश्च कर्मद्वारा क्रियाश्रयत्वादधिकरणत्वम्। तथा च—'क्रियारहितं वाक्यमप्रमाणम्' इति परंपरया क्रियाश्रयात्मकाधिकरणस्यैव सप्तम्यर्थत्वम्। इत्थं च यत्र न क्रियाश्रवणम् ( गेहे घट इत्यादौ ), तत्र कारकत्वनिर्वाहाय क्रियाध्याहार आवश्यकः। एवं च—'गेहे घटः' इत्यादौ,—क्रियापदाध्याहारेणैवाधिकरणत्वबोधः, इति। तार्किकमते तु,—'यत्राधिकरणत्वम्, आधेयत्वादिर्वा सप्तम्या बोध्यते, तद्वाचकपदात्सप्तमी' इति सूत्रार्थः। तथा च—'अधिकरणत्वमात्रम्, आधेयत्वमात्रं वा सप्तम्यर्थः; स च यत्र क्रियायामन्वेति तत्र 'कारकत्व'व्यवहारः। 'भूतले घटः' इत्यक्रियवाक्यादपि शाब्दबोधस्यानुभवसिद्धत्वात्, तद्वदेव 'गेहे* घटः' इत्यादावपि क्रियापदं विनाऽपि 'गेहाधेयत्ववान् घटः' इति बोधो नानुपपन्न इति, अत्रत्या* सप्तमी न कारकविभक्तिः, अपि तु कारकार्थान्यैव, इति। ( का० व्या० पृ० ११ )

२ सामीप्यसंबन्धनिबन्धनम्, इत्यर्थः; आधेयव्याप्यतावच्छेदकयत्किंचिदवयवकम्, इति यावत्। ( वै० सा० द० सुबर्थ० पृ० ८६ )

३ विषयतासंबन्धनिरूपकम्, इत्यर्थः। ( वै० सा० द० सुबर्थ० पृ० ८६ )

४ आधेयव्याप्यतावच्छेदक-यावदवयवकम्, इत्यर्थः। ( वै० सा० द० सुबर्थ० पृ० ८६ )

५ अत्र 'परंपरया कटाभिन्नाश्रयकः, शयनानुकूलो व्यापारः' इति बोधः। एवमन्यत्राप्यूह्यम्। ( वै० सा० द० सुबर्थ० पृ० ८६ )

---

* अत्र प्रमाणम्—"सप्तम्यधिकरणे च" (पाणि० २। ३। ३६ ) इत्यत्र,—'च'कारेण, अकारकाधारवाचिनोऽपि सप्तमी विधीयते, इति। अत एव—"साध्यवद्भिन्ने यः साध्याभावः" (दीधि० व्याप्तिनि०) इति सप्तमीतत्पुरुषेण व्याख्यानं संगच्छते। ( ग० व्यु० का० ७। पृ० ११६ )

ध्रुवपदार्थोत्पत्तिनिरूपितत्वं सप्तम्या बोध्यते। ( ३ ) क्वचित्—अवच्छेद्यताविशेषः। यथा—'वीणायां शब्दः, कर्णे शब्दः, वृक्षाग्रे कपिसंयोगः' इत्यादौ,—सप्तम्यर्थः। (ग० व्यु० का० ७। पृ० ११६)। २ निमित्तत्वम्। यथा—'चर्मणि[1] द्वीपिनं हन्ति, मशकनिवृत्तौ धूमं करोति' इत्यादौ,—सप्तम्यर्थः। ( का० व्या० पृ० ११ )। ३ उत्पत्तिः। यथा—'शरदि[2] पुष्पन्ति सप्तच्छदाः' इत्यादौ,—सप्तम्यर्थः। ४ समानाधिकरणत्वम्[3]; तच्च द्विविधम्,—क्वचित्-कालिकम्, क्वचित्तु—दैशिकम्। तत्राद्यं समानकालीनत्वादिकम्। यथा—'गोषु[4] दुह्यमानासु गतः' इत्यादौ; ( का० व्या० पृ० १२ )। यथा[5] वा—'घने[6] वर्षति चौर आगतः' इत्यादौ,—सप्तम्यर्थः। ( म० प्र० पृ० ६–७ )। द्वितीयं तु ( दैशिकसामानाधिकरण्यम् ) यथा—'इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वात्'

---

१ अत्र—'चर्मोद्देश्यक-द्वीपिकर्मकहनन-कर्ता' इति बोधः। अधिकं तु 'निमित्तत्व'शब्दव्याख्याने द्रष्टव्यम्।

२ अत्र 'शरदुत्पत्तिकपुष्पाश्रयाः सप्तच्छदाः' इति वाक्यार्थः। (का० व्या० पृ० १२)

३ अत्रार्थे—"यस्य च भावेन भावलक्षणम्" ( पाणि० २। ३। ३७ ) इत्यनेन सूत्रेण सप्तम्यनुशिष्यते। सूत्रार्थस्तु,—[क]यस्य धर्मेण धर्मान्तरं निरुक्तस्वसामानाधिकरण्येन प्रतिपाद्यते, तत्र सप्तमी, इति। ( का० व्या० पृ० १२ )। [ ख ] यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं व्यावर्तनम्, तद्वाचकपदात्सप्तमी, इति। (ग० व्यु० का० ७। पृ० ११७)

४ अत्रेदमधिकं विज्ञेयम्—वर्तमानार्थककृत्समभिव्याहारस्थले ( गोषु 'दुह्यमानासु' गत इत्यादौ ),—समानकालीनत्वम्; गोषु 'दोग्धव्यासु' गत इत्यादिभविष्यदर्थककृत्स्थले,—प्राक्कालीनत्वम्; गोषु 'दुग्धासु' गत इत्यादावतीतार्थककृत्स्थले,—उत्तरकालीनत्वं संबन्धतया भासते, इति। एवम्—पयसि 'पीते' तृषा शाम्यति, इत्यादावतीतार्थककृत्समभिव्याहारात्कार्यकारणभावोऽपि संबन्धतया भासते, इत्यादिकमूहनीयम्। ( ग० व्यु० का० ७। पृ० ११७ )

५ अत्र [ क ] सप्तम्यर्थे समानकालीनत्वे गोविशेषणकर्मताविशेषणस्य गोदोहनस्यान्वयः। इत्थं च—'तादृशगोदोहनसमानकालीनातीतगमनानुकूलकृतिमान्' इत्यर्थः। ( का० व्या० पृ० १२ )। [ ख ] समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थः, तस्याश्च समानकालीनत्वादिकं क्रियान्तरे संबन्धः, इति। ( ग० व्यु० का० ७। पृ० ११७ )

६ अत्र—'वृष्टिसमानकालीनागमनाश्रयश्चौरः' इति बोधः। ( म० प्र० पृ० ७ )

( ग० अवयवे ) इत्यादौ; "द्रव्यकर्मान्यत्वे सति सामान्यवान् गुणः" इत्यादौ च,—सति सप्तम्यर्थः। ( म० प्र० पृ० ६—७ )

**सम्**—( अव्ययम् ) १ सम्यगर्थः। २ प्रकर्षः। ३ संगतिः। ४ शोभनम्। ( शब्दच० )। ५ समुच्चयः। ( हेमच० )

**समनियतत्वम्**—व्याप्यत्वे सति, व्यापकत्वम्। ( ग० अव० ) यथा—"लक्ष्यतावच्छेदकसमनियतो धर्मोऽसाधारणधर्मः" इत्यादौ,—गोर्लक्षणस्य सास्नादिमत्त्वस्य लक्ष्यतावच्छेदकीभूतगोत्वसमनियतत्वम्। यथा वा—अभिधेयत्वस्य पदार्थत्वसमनियतत्वम्। ( त० दी० १ )

**समभिव्याहारः**—१ [ क ] सहोच्चारणम्। ( म० प्र० ४। पृ० ५६ )। यथा—"यत्पदं यत्पदेन सह यादृशानुभवजनकम्, तत्पदस्य तत्पदसमभिव्याहारस्तादृशान्वयबोधे आकाङ्क्षा" इत्यादौ,—'समभिव्याहार' शब्दस्यार्थः। ( न्या० म० ४। पृ० २१ )

[ ख ] पदानां पूर्वापरीभावः। यथा—'घटमानय' इत्यादौ,—क्रियापदस्य द्वितीयान्तघटपदसमभिव्याहारः। ( स्व० )

[ ग ] 'साक्षात्परंपरया वा तत्पदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वम्,' इति केचिदाहुः। २ 'शेषशेषिवाचकपदयोः सहोच्चारणम्' इति मीमांसका आहुः। ३ 'साहित्यम्' इति काव्यज्ञा आहुः।

**समभिव्याहृतत्वम्**—१ एकवाक्यतापन्नत्वम्। यथा—"पदानां समभिव्याहृतत्वमाकाङ्क्षा" इत्यादौ,—'समभिव्याहृतत्व'शब्दस्यार्थः। ( श० प्र० पृ० ३ )। २ साहित्यम्। ३ सहोच्चारितत्वम्। ४ अव्यवहितत्वं च, इत्यन्ये आहुः।

---

१ अत्र—'सति' इत्यनन्तरं 'सतः' इत्यध्याहार्यम्। अन्यथा,—लक्षणीयक्रियाऽभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः।

तथा च—तत्र च 'अस्' धातोरर्थ आधारता; गुणान्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्वृत्तित्वं संबन्धतया भासते, इति चिन्तामणिकारोक्तसामानाधिकरण्यलाभनिर्वाहः। ( गु० व्यु० का० ७। पृ० ११७ )

* तथा चात्र 'गुणकर्मान्यत्वसमानाधिकरणसत्त्वात्' इति शाब्दबोधः। ( म० प्र० पृ० ७)

**समभिहारः**—[ १ ] पौनःपुन्यम् । यथा—"क्रियासमभिहारेण विराध्यन्तं क्षमेत कः" ( माघ० २ । ४३ ) इत्यादौ,—'समभिहार'शब्दस्यार्थः । [ २ ] 'सातत्यम्' इति शाब्दिका आहुः । [ ३ ] 'भृशम्' इति काव्यज्ञा आहुः ।

**समम्**—( अव्ययम् ) १ साहित्यम् । यथा—"समं रामेण लक्ष्मणः" इत्यादौ । २ 'एकदा' ( युगपत् ) इत्यर्थः । यथा—"सममेव समाक्रान्तं द्वयं द्विरदगामिना" ( रघु० ४ । ४ ) इत्यादौ ।

**समयः**—१ [ क ] 'अस्य शब्दस्येदमर्थजातमभिधेयम्' इत्यभिधानाभिधेयनियमनियोगः ( शक्तिः ) । तस्मिन्नुपयुक्ते शब्दादर्थसंप्रत्ययो भवति । ( वात्स्या० २ । १ । ५४ )

[ ख ] ईश्वरसंकेतः 'अस्माच्छब्दादयमर्थो बोद्धव्यः' इत्याकारः । यथा—"सामयिकः शब्दादर्थप्रत्ययः" ( वै० ७ । २ । २० ) इत्यादौ,—'समय'शब्दस्यार्थः ।

'समयश्च जातिमात्रे; व्यक्तेराक्षेपत एवोपस्थितेः' इति तौतातिका आहुः । 'जातौ व्यक्तौ चोभयशक्तिः; किंतु—जात्यंशे ज्ञाता, व्यक्त्यंशे स्वरूपसती प्रयोजिका' इति प्राभाकरा आहुः । 'समयः शक्तिरेव; व्यक्त्याकृतिजातयः पदार्थाः' इति वृद्धा आहुः । ( वै० उ० ७ । २ । २० । पृ० ३४१ ) ( वै० वि० ) ( भवा० ) । अन्यत्सर्वं 'शक्ति,' 'संकेत'

---

१ [ १ ] यः शब्दो यस्मिन्नर्थे भगवता संकेतितः, स तमर्थं प्रतिपादयति । तथा च—शब्दार्थयोरीश्वरेच्छैव संबन्धः, स एव समयः; तदधीनः शब्दादर्थप्रत्ययः । ( वै० उ० ७ । २ । २० ) [ २ ] मम्मटभट्टस्तु,—"नाभिधा" समयाभावात् " ( काव्यप्र० २ । २२ ) इत्यादिग्रन्थेनाभिधा-समययोर्भेदमुररीचकार ।

---

* अत्र—नैयायिकैः साध्यसमो दोष उद्भाव्यते । मीमांसकमते तु,—नायं दोषः; अभिधा-समययोस्तैर्भेदाङ्गीकारात्, इति विज्ञेयम् ।

शब्दव्याख्याने द्रष्टव्यम्। २ नियमबन्धः। ३ शास्त्रम्। ४ कालः। ५ सिद्धान्तः। ६ शपथः। ७ आचारः। ८ अङ्गीकारः। ९ क्रियाकारकः। १० निर्देशः। ११ भाषा। (मेदि०)। १२ संपत्। १३ कालविज्ञानम्। (शब्दच०)

**समर्थः**—१ यत्किंचिदर्थकारी (यत्किंचित्कार्यप्रयोजकः)। २ शाब्दिकास्तु,—संगतार्थः (अन्वयान्वयिभावापन्नोऽर्थः), इत्याहुः। ३ 'शक्तः। ४ हितश्च,' इति काव्यज्ञा आहुः। (अमरः, ३। ३। ८६)

**समर्थनम्** / **समर्थना**—१ (लोडर्थः) पराशक्यधर्मिक-स्वशक्यत्वाध्यवसायः। यथा—'पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणि' इत्यादौ,—लोडर्थः। (श० प्र० श्लो० १००। टी० पृ० १६४)। २ [१] 'इदमित्थमेव' इति निश्चयहेतूपन्यासेन निश्चायकव्यापारविशेषः' इति केचिदाहुः। [२] युक्तायुक्तत्वेन परीक्षणम्। (अमरः, २। क्षत्रियव०। श्लो० २५। टी०)

**समवहितत्वम्**—१ [१] एककालीनत्वम्। (मू० म० १)। यथा—'घटसमवहितः पटः' इत्यादौ,—'समवहितत्व'शब्दार्थः। [२] सहवृत्तित्वम्। यथा—"(मण्यादिसमवहितेन वह्निना दाहो न जन्यते" (त० दी०) इत्यादौ,—'समवहितत्व'शब्दस्यार्थः। (स्व०)। २ 'सम्यगवधानयुक्तत्वम्' इति साहित्यशास्त्रज्ञा आहुः।

---

१ अत्र समर्थत्वं च 'सामर्थ्य'शब्दस्यार्थवदनुसंधेयम्।

२ अत्रत्य-सूत्रम्,—"समर्थः पदविधिः" (पाणि० २। १। १) इत्यनुसंधेयम्।

३ तथा च—'स्वेतराशक्यं यत् पर्वतोत्पाटनम्, तद्धर्मिक-स्वशक्यत्वाध्यवसाय-वान्' इत्येवं तत्रान्वयबोधः। (श० प्र० श्लो० १००। टी० पृ० १६५)

४ अथ वा—'पर्वतमप्युत्पाटयानि, समुद्रमपि शोषयाणि' इत्यादौ,—निपातस्यैवापेर्थोन्वयितं पराशक्यत्वमर्थः; तिङ्स्तु स्वशक्यताध्यवसायमात्रम्; अध्यवसायोऽवधारणम्, इति। (श० प्र० श्लो० १००। टी० पृ० १६५)

**समवायः**—१ ( पदार्थः ) इहेदमिति यतः कार्यकारणयोः, स समवायः ।

१ समवायसत्त्वे प्रमाणं तु ( १ ) अनुमानम्; तच्च, 'गुणादिगोचरो विशिष्टव्यवहारः संबन्धनियतः; भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् 'सघटं भूतलम्' इति व्यवहारवत्' इति । ( न्या० ली० पृ० ५४ ) । ( २ ) [ क ] 'घटे घटत्वं रूपं च समवेतम्, तन्तुषु पटः समवेतः, इह कर्म समवेतम्' इत्यनुगतसमवायाकारप्रतीत्या तत्सिद्धिः । ( न्या० म० १ । पृ० ९ ) । [ ख ] वस्तुतस्तु—स्वाश्रयसमवेतत्वसंबन्धेनावयवनीलादेरवयविनीलादौ हेतुत्वात्कारणतावच्छेदकसंबन्धघटकतया समवायसिद्धिः । अन्यथा,—स्वाश्रयवृत्तित्वसंबन्धेन हेतुत्वे नीलकपालसंयुक्तशुक्लकपालादावपि नीलोत्पत्त्यापत्तेः । ( म० प्र० १ । पृ० १ [ ग ] अत्र—समवायसंबन्धेन पटत्वावच्छिन्नं प्रति तादात्म्यसंबन्धेन तन्तुत्वेन हेतुत्वात्कार्यतावच्छेदकसंबन्धविधया समवायसिद्धिः । (दि० १ । पृ० ३९) । [ घ ] युतसिद्धयोः संयोग इवायुतसिद्धयोः समवाय आवश्यकः, इत्यपि बोध्यम् । ( त० कौ० )

समवायलक्षणं च, [ क ] नित्यसंबन्धत्वम्* । ( त० सं० ) ( मु० ) । [ ख ] संबन्धप्रतियोग्यनुयोगिभिन्नत्वे सति संबन्धत्वम् । तेन, प्रतियोग्यनुयोगिस्वात्मकस्वरूपसंबन्धे नातिव्याप्तिः । ( राम० १ । पृ० ३९ ) ( ता० र० श्लो० ५४ ) । [ ग ] 'इह गवि गोत्वम्' इत्यादिप्रत्ययविषयसंबन्धत्वम् । ( प० मा० पृ० ३८ )

२ तदर्थश्च, [ क ] कार्यकारणयोरवयवावयविनोर्यतः संबन्धात् 'इहेदम्' इति प्रत्ययः, स समवायः, इति । ( वै० वि० ७ । २ । २६ ) [ ख ] अयुतसिद्धानामधार्याधारभूतानां यः संबन्धः 'इह' प्रत्ययहेतुः, स समवायः, इति । ( प्रशस्त० १ । पृ० २५ )

३ अत्र भाष्यम्—"अयुतसिद्धानामाधार्याधारभूतानां यः सबन्धः 'इह' प्रत्ययहेतुः, स समवायः । द्रव्य-गुण-कर्म-सामान्यविशेषाणां कार्यकरणभूतानाम्, अकार्यकारणभूतानां वाऽयुतसिद्धानामाधार्याधारभावेनावस्थितानाम् 'इहेदम्' इति बुद्धिर्यतो भवति, यतश्चासर्वगतानामधिगतान्यत्वानामविष्वग्भावेनावस्थितानाम्, स समवायाख्यः संबन्धः । कथम् ?; । यथा 'इह कुण्डे दधि' इति प्रत्ययः संबन्धे सति दृष्टः; तथा 'इह तन्तुषु पटः, इह वीरणेषु कटः, इह द्रव्ये च द्रव्यगुणकर्माणि, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणे गुणत्वम्, इह कर्मणि कर्मत्वम्, इह नित्यद्रव्येषु अन्त्या विशेषाः' इति 'इह' प्रत्ययदर्शनात्, अस्त्येषां संबन्धः, इति विज्ञायते । न चासौ संयोगः; संबन्धिनामयुतसिद्धत्वात्, अन्यतरकर्मादिनिमित्तस्याभावात्, विभागान्तत्वादर्शनात्, अधिकरणाधिकर्तव्ययोरेव च भावादिति । भाववल्लक्षणभेदात्..........भाववत्सर्वत्रैकः समवायः........स च द्रव्यादिभ्यः पदार्थान्तरम्; स च प्रमाणतः कारणानुपलब्धे-

* अत्र,—संयोगादिवारणाय नित्यत्वम् । गगनादिवारणाय 'संबन्धः' इति । संबन्धत्वं चात्र A स्वरूपत्वानवच्छिन्नसांसर्गिकविषयताश्रयत्वम् । तेन, गगनादीनां स्वरूपत्वेन संबन्धत्वेऽपि न क्षतिः । B संयोगसमवायान्यतरत्वम् । ( प० मा० पृ० ३८ )

( वै० ७ । २ । २६ ) । स च, अयुतसिद्धयोः संबन्धः । ( त० भा० १ ) यथा—घट-कपालयोः संबन्धः समवायः । 'सर्वत्र समवायस्त्वेक एव, नित्यश्च' इति न्यायवैशेषिकसिद्धान्तः । 'समवायो नाना, अनित्यश्च' इति प्राभाकरा नव्याश्चाहुः । 'प्रत्यक्षः समवायः' इति नैयायिका आहुः । 'समवायोऽतीन्द्रियः, अनुमेय एव' इति वैशेषिका

---

नित्यः, तस्मात्स्वात्मवृत्तिः; अत एव चातीन्द्रियः; सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्, स्वात्मगतसंवेदनाभावाच्च । तस्मात् 'इह' बुद्ध्यनुमेयः समवायः । ( प्रशस्त० पृ० ६७ )

१ स च यथा—अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, विशेष-नित्यद्रव्ययोश्च, संबन्धः । ( त० सं० ) ( प० मा० पृ० ३८ )

२ तदुक्तम्—"घटादीनां कपालादौ, द्रव्येषु गुणकर्मणोः । तेषु जातेश्च, संबन्धः समवायः प्रकीर्तितः" इति । ( भा० प० श्लो० ११ )

३ "—एकत्वं च स्वाश्रयान्योन्याभावासमानाधिकरण-पदार्थविभाजको-पाधिमत्त्वम्।(प्र०च०) अत्रैकत्वसाधने प्रमाणभूतं सूत्रं च—"तत्त्वं भावेन" इति । ( वै० ७ । २ । २८ )

४ नित्यत्वेऽनुमानम्—'स चायं ( समवायः ) नित्यः; अकारणकत्वात्; भावानां हि समवायिकारणादुत्पत्तिनियमः; तदनुरुद्धे च निमित्तासमवायिनी' इति । तथा च—समवायस्य समवायिकारणकल्पनेऽनवस्थादिदोषप्रसङ्गः, इति समवायस्य नित्यत्वम् । ( वै० उ० ७ । २ । २६ । पृ० ३५० )

५ अत्रेदं बोध्यम्—नैयायिकानां मते समवायत्वं न जातिः; तद्बाधकस्यासंबन्धस्य सत्त्वात् । यद्यपि समवायत्वजातिबाधको व्यक्त्यभेद एव, तथापि यन्मते ( प्राभाकरादिमते ) उत्पाद-विनाशशीला बहवः समवायाः, तन्मतेऽसंबन्ध एव जातिबाधकः, इति ज्ञेयम् । (वै० उ० १ । १ । ३ )

६ समवायस्य प्रत्यक्षत्वसाधकानुमानं च,—'समवायो लौकिकप्रत्यक्षविषयः; योग्यप्रतियोगिकत्वे सति, विशेषणतया योग्यवृत्तित्वात्, भूतलादिवृत्तिघटात्यन्ताभावादिवत्' इत्यादि । (वै० वि० ७ । २ । २८ )

७ एतन्मते च [ क ] 'समवायप्रत्यक्षं प्रति, इन्द्रियसंबद्धविशेषणतासंनिकर्षो हेतुः' इति कार्यकारणभावो ज्ञेयः । ( मु० ) ( वै० वि० ७ । २ । २८ ) [ ख ] 'इह कपाले घटसमवायः' इति प्रत्यक्षं विशेषणतासंनिकर्षेणैव भवति, इति । ( प्र० प्र० ) (त०कौ०)

८ वैशेषिकमते समवायस्यातीन्द्रियत्वे प्रमाणमनुमानम्; तच्च, [ क ] 'समवायोऽतीन्द्रियः; चेतनान्यत्वे सति, असमवेतभावत्वान्मनोवत्, आकाशादिवद्वा' इति । (वै० वि० ७। २ । २८ ) ( वै० उ० ७ । २ । २८ ) [ ख ] 'समवायो न प्रत्यक्षः; संबन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् । कथमन्यथा, घटाकाशसंयोगो न प्रत्यक्षः । न च, समवायस्य सर्वे आश्रयाः प्रत्यक्षाः; परमाण्वादेरयोग्यत्वात्' इति । ( न्या० म० १ । पृ० ७ )

९ अनुमानं तु,—'गुणक्रियादिविशिष्टबुद्धिर्विशिष्यविशेषणसंबन्धविषया; विशिष्टबुद्धित्वात्

आहुः । 'सर्वत्र स्वरूपस्यैव सबन्धत्वोपपत्तौ समवायो न पदार्थान्तरम्' इति भट्टा वेदान्तिनः, सांख्याश्च मन्यन्ते । ( ता० र० श्लो० ६४ ) ( वै० उ० ७ । २ । २८ ) ( वै० वि० ४ । २ । ११ ) (दि०१) ( सि० च० ) ( राम० १ । पृ० १२२ ) । २ समवायो नाम समूहः । ३ मेलनं च । यथा—'सेनायां समवेताः' ( अमरः, २ । ८ । ६१ ) इत्यादौ, इति काव्यज्ञा आहुः ।

**समवायिकारणम्**—( कारणम् ) [ क ] यत्समवेतं कार्यमुत्पद्यते, तत् । यथा—तन्तवः पटस्य, पटश्च स्वगतरूपादेः समवायिकारणम् । (त०सं०)

---

'दण्डी पुरुषः' इति विशिष्टबुद्धिवत्' इति । ( मु० १ । पृ० ३९ ) । इदमप्यनुमानं समवायसद्भावे प्रमाणं भवति । ( वै० वि० ७ । २ । २६ ) ( मु० १ । पृ० ३९ )

१ तत्र माध्वानामयमाशयः—[ १ ] गुणादीनां गुण्यादिभिः ( द्रव्यादिभिः ) अभेदेन समवायाभावात्; आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात् । वर्णात्मकशब्दस्याद्रव्यत्वेनाकाशविशेषगुणत्वाभावात्, इति । ( प्र० प० पृ० ११ ) [ २ ] गुणकर्मसामान्यादिभिर्द्रव्यस्य भेदाभेदौ; तत्र यावद्द्रव्यभाविना गुणकर्मसामान्यादिना द्रव्यस्यात्यन्ताभेद एव; अयावद्द्रव्यभाविना तु भेदः, इति । ( प्र० च० परि० २ । पृ० ५२ )

२ लक्षणं तु समवायिकारणत्वम्;* तच्च, [ क ] समवायसंबन्धावच्छिन्नकार्यतानिरूपित-तादात्म्यसंबन्धावच्छिन्नकारणत्वम् † । ( न्या० बो० १ । पृ० ९ ) । [ ख ] समवायसंबन्धेन कार्याधिकरणत्वम् । ( ल० व० ) ( वाक्य० १ । पृ० १० )

३ समुदितार्थश्च, [ क ] यस्मिन्समवायेन संबद्धं सत् कार्यमुत्पद्यते, तत् । ( न्या० बो० )। [ ख ] यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते, तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणम्, इति । ( नील० १ । पृ० १७ )

४ तथा हि—तन्तुषु समवायेन संबद्धं सत् पटात्मकं कार्यमुत्पद्यते, तत् ( तन्तुः ) पटस्य समवायिकारणं भवति, इति । ( न्या० बो० १ । पृ० ९ )

---

* अत्र नियमः—'समवायिकारणत्वं तु द्रव्यमात्रवृत्ति' इति । ( भा० प० श्लो० २३ ) ( वै० १० । २ । १ ) ।

अत्राहुरपरे,—द्रव्यस्य समवायिकारणत्वेऽपि निमित्तकारणत्वमप्यस्ति । तथा हि—पटं प्रति तन्तूनां समवायिकारणत्वेऽपि, तुरीतन्तुसंयोगद्वारा निमित्तकारणत्वमपि तेषां विद्यते तुरीवत्, इति । ( त० व० २ । ३३ ) ( वै० उ० १० । २ । २ )

† तथा हि—समवायसंबन्धेन घटाधिकरणे कपालादौ कपालादेस्तादात्म्यसंबन्धेनैव सत्त्वात् 'समवायेन घटं प्रति, तादात्म्येन कपालं कारणम्' इति कार्यकारणभावः, इति; समवायसबन्धावच्छिन्नघटत्वावच्छिन्नकार्यतानिरूपित-तादात्म्यसंबन्धावच्छिन्नकारणतायाः कपालादौ सत्त्वाल्लक्षणसमन्वयः । ( न्या० बो० १ । पृ० ९ )

[ ख ] स्वसमवेतकार्योत्पादकम्; तच्च द्रव्यमेव भवति ।

[ ग ] 'उपादानं कारणम्' इति सांख्य-मायावादि-वेदान्तिप्रभृतय आहुः ।

**समवायित्वम्**—१ समवायानुयोगित्वम् । यथा—कपाले घटसमवायित्वम्, गुणक्रिययोश्च समवायित्वं द्रव्ये ( स्व० ) । २ विद्यमानत्वम्, इति काव्यज्ञा वदन्ति ।

**समवेतम्**—१ कस्मिंश्चित् ( द्रव्य-गुण-कर्मात्मके ) वस्तुनि समवायसबन्धेन विद्यमानम् । यथा—मृदा समवायेनोत्पाद्यं घटात्मकं कार्यं कपाले समवेतं भवति । २ मिलितम् । ३ समूहान्वितम्, संगतं च । यथा—'सेनायां समवेताः सैनिकाः' ( अमरः २ । ८ । ६१ ) इत्यादौ, इति काव्यज्ञा आहुः ।

**समव्याप्तत्वम्**—'समनियतत्व'शब्दवदस्यार्थोऽनुसंधेयः ।

**समष्टिः**—१ सम्यग्व्याप्तिः । २ वेदान्तिनस्तु,—संघीभूतः समस्तः पदार्थः । यथा—मायावादिमते हिरण्यगर्भः । (वेदान्तसा०) । यथा वा—अन्येषां वेदान्तिनां मते च गरुडानन्तविष्वक्सेनादयः समष्टिजीवाः, इत्याहुः । ( तत्त्वसंख्या० ) । ३ 'समस्तत्वम्' इति काव्यज्ञा आहुः ।

**समाख्या**—१ अन्वर्था संज्ञा । यथा—अयोनिजेषु शरीरेषु 'मनु-मरीचि-दुर्वासः' संज्ञा । (वै० उ० ४ । २ । ८) (वै० वि० ४ । २ । ८ ) । २ मीमांसकास्तु,—यौगिकः शब्दः । सा च ( समाख्या ) द्विविधा,—वैदिकी, लौकिकी चेति । तत्राद्या यथा—"होतृचमसः, हारियोजनः" इ-

---

१ अस्मिन्मते, उपादानत्वं च परिणामित्वम्, इति; 'उपादानं निमित्तं च' इति 'द्विविधमेव कारणम्', इति च ज्ञेयम् । ( प्र० च० पृ० १३ )

२ अत्रोदाह्रियते—"समष्टिरीशः सर्वेषां स्वात्मतादात्म्यवेदनात् । तदभावात्तदन्ये तु ज्ञायन्ते व्यष्टिसंज्ञया" इति । ( पञ्चद० )

३ अत्रोक्तम्—"स्थानं क्रमो, योगबलं समाख्या" इति । ( शास्त्रदीपिका )

४ याज्ञिकैः परिकल्पिता, इत्यर्थः । ( लौ० भा० टी० पृ० २८ )

५ अनया वैदिकसमाख्यया, होतुश्चमसभक्षणाङ्गत्वं* बोध्यते । ( लौ० भा० विधिनि० पृ० २८)

६ तदर्थस्तु—"हरिरसि हारियोजनः" इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः । (लौ० भा० विधिनि० टी० पृ० २८ )

---

* अत्र चमसस्थसोमभक्षणे श्रुतिः—"हविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" इति । (तैत्तिरीय० ६ । २ । ११)

त्यादिः । द्वितीया यथा–"आध्वर्यवम्" इत्यादिः, इत्याहुः । ३ कीर्तिः, इति काव्यज्ञा आहुः ।

**समाधानम्**—१ [ क ] उद्भावितदूषणनिवर्तकवाक्यप्रयोगः । ( स्व० ) यथा–'चक्षुर्मात्रग्राह्यत्वविशिष्टगुणत्वात्मके रूपलक्षणे परमाणुरूप-प्रभाभित्तिसंयोगाद्यव्याप्त्यतिव्याप्त्युद्भावनेन परेण दूषिते, 'त्वगग्राह्य-चक्षुर्ग्राह्य-गुणविभाजकधर्म-वत्त्वम्' इति नीलकण्ठ्यां समाधानम् ।

[ ख ] केचित्तु,—A 'विवादभञ्जनम् । B पूर्वपक्षस्य सम्यगुत्तरानुगुणसिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणम्' इत्याहुः । २ 'ध्येयवस्तुनि चित्तस्य निरन्तरस्थापनम्' इति योगशास्त्रज्ञा आहुः ।

**समाधिः**—१ 'समाधान'शब्दवदस्यार्थोऽनुसंधेयः । २ A योगशास्त्रज्ञास्तु,–चित्तस्याभिमतविषयनिष्ठत्वम् । ( गो० वृ० ४ । १०३ ) । B एकाग्रतया मनसः स्थापनरूपो ( ध्येयमात्रस्फुरणरूपः ) ध्यानविशेषः, इत्याहुः । ३ आलंकारिकास्तु,–अर्थालंकारविशेषः, इत्याहुः । ४ साहित्यशास्त्रज्ञाश्च,–काव्यगुणविशेषः समाधिः, इत्याहुः । ५ 'सम्–आधिः ( मानसी व्यथा )' इति काव्यज्ञा आहुः ।

---

१ आध्वर्यवं काण्डम्, इत्यर्थः । अनया लौकिकसमाख्यया, "पुरोऽध्वर्युर्विराजति" इत्यादिना यजुर्वेदेन विहितानां पदार्थानामङ्गत्वमध्वर्योर्बोध्यते, इति । ( लौ० भा० टी० पृ० २८ )

२ अत्र सूत्रम्—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति । ( पात० पा० ३ । सू० ३ )

अथापि पुराणम्—"तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति । ( वाच० )

३ तत्रोक्तम्—"समाधिः सुकरे कार्ये दैवाद्वस्त्वन्तरागमात्" इति । ( सा० द० परि० १० । श्लो० ७४० । पृ० ३३९ )

४ तत्रोक्तम्—"श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः । इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः" इति ( काव्याद० ) । तस्यौजस्यन्तर्भावो यथा—"श्लेषः समाधिरौदार्यं प्रसाद इति वै पुनः । गुणाश्चिरंतनैरुक्ता ओजस्यन्तर्भवन्ति ते" इति । ( सा० द० परि० ८ । श्लो० ६१४ )

५ अत्रेदं ज्ञेयम्—समाधिरारोहावरोहक्रमरूपः । आरोह उत्कर्षः, अवरोहोऽपकर्षः, तयोः क्रमो वैरस्यानावहो विन्यासः । यथा—"चञ्चद्भुजेत्यादि",—अत्र पादत्रये क्रमेण बन्धस्य गाढता । चतुर्थपादे त्वपकर्षः । तस्यापि च तीव्रप्रयत्नोच्चार्यतया ओजस्विता, इति । ( सा० द० परि० ८ । श्लो० ६१४ । टी० पृ० १८२ )

**समानः**—१ ( वायुः ) [ क ] आहारेषु पाकार्थं वह्नेः समनयनात्समानः । ( दि० १ । २ )

[ ख ] भुक्तपरिणामाय जठरानलस्य समुन्नयनात्समानः । स च प्राणान्तर्गतो वायुः । ( सि०च० ) । २ एकः । यथा—"समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः" (गौ० १ । १ । २९) इत्यादौ; यथा वा—"यत्समानाधिकरण" ( चि० २ । व्याप्ति० ) इत्यादौ,—'समान'शब्दस्यार्थः । ३ तुल्यः । यथा—"सिंहसमानगुणयोगान्माणवकः सिंहः" इत्यादौ,—'समान'शब्दस्तुल्यार्थकः । ४ 'साधुः' इत्यन्ये वदन्ति ।

**समानधर्मः**—१ [ क ] विरुद्धकोटिद्वयसाधारणधर्मः । ( गौ० वृ० १ । १ । २३ ) यथा—स्थाणु-पुरुषयोः समानो धर्म आरोह[1]-परिणाहौ । ( वात्स्या० १ । १ । २३ )

[ ख ] कोटिद्वयसहचरितधर्मः । ( दि० गु० ) । यथा—'रङ्गं रजतं न वा' इति संशये हेतुभूतः, रङ्ग-रजतयोः सामान्यधर्मश्चाकचिक्य-शुभ्रत्वादिः ( स्व० ) । २ 'साधर्म्य'शब्दवदस्यार्थोऽनुसंधेयः । ( मु० १ )

**समानपदत्वम्**—'एकपदत्व'शब्दवदस्यार्थोऽनुसंधेयः ।

**समानप्रकारकत्वम्**—१ स्वस्मिन् (यत्किंचिज्ज्ञानादौ) यद्धर्मावच्छिन्नविशेष्यतानिरूपित-यद्धर्मावच्छिन्नप्रकारताकत्वम्, ततोऽन्यत्र (ज्ञानादौ) तादृशविशेष्यतानिरूपित-तादृशप्रकारताकत्वम् । यथा—संशयनिश्चययोः । २ प्रतिबध्यप्रतिबन्धकभावस्थले,—प्रतिबध्यज्ञाने यद्धर्मावच्छिन्नविशेष्यतानिरूपितयद्धर्मावच्छिन्नप्रकारताकत्वम्, प्रतिबन्धकज्ञाने च तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारतानिरूपक[2]त्वम् । यथा—नव्यमते, 'पर्वतो वह्न्यभाववान्'[3] इति निश्चयस्यापि 'पर्वतो महानसीयवह्निमान्' इति बुद्धिसमानप्रकारकत्वम् । (स्व०)

---

१ तादृशधर्मज्ञानं च 'स्थाणुर्वा पुरुषो वा' इत्याकारकसंशये प्रयोजकम्, इति विज्ञेयम् ।

२ अत्रेदमवधेयम्—'तदभाववत्तानिश्चयनिष्ठायां तद्वत्ताबुद्धिप्रतिबन्धकतायां समानप्रकारकत्वं तन्त्रम्' इति नव्यानां सिद्धान्तः । प्राचां सिद्धान्तस्तु 'तत्र समानविषयकत्वमेव तन्त्रम्' इति ।

३ अत्रेदं तत्त्वम्—'विशेषतद्वत्ताबुद्धिं प्रति सामान्यतदभाववत्तानिश्चयस्यापि प्रतिबन्धकत्वम्' इति सर्वानुभवमनुरुध्येदमुक्तम्, इति ।

**समानवित्तिवेद्यत्वम्**—'तुल्यवित्तिवेद्यत्व'शब्दवदस्यार्थोऽनुसंधेयः । (त० प्र० ख० ४ । पृ० २१ )

**समानविभक्तिकत्वम्**[1]—[ क ] स्वप्रकृतिकविभक्तिसजातीय[2]विभक्तिकत्वम्[3] । यथा—'नीलो घटः' इत्यादौ,—नीलपद-घटपदयोः समानविभक्तिकत्वम् ।

[ ख ] केचित्तु,—A विरुद्धविभक्त्यनवरुद्धत्वम् । यथा—'नीलमुत्पलम्, नीलोत्पलम्' इत्यादौ च समानविभक्तिकत्वम् । ( म० प्र० ४ । पृ० ४८ ) । B विरुद्धविभक्तिराहित्यम्[4] । ( त० प्र० ४ । पृ० ४६–४७) C विशेषणपदस्य विशेष्यपदाप्रकृतिकविभक्त्यप्रकृतित्वम्[5] । यथा—'नीलघटमानय, नीलं घटमानय' इत्यादौ,—समानविभक्तिकत्वम, इत्याहुः ( ग० व्यु० १ । पृ० ३ )

**समानविषयकत्वम्**—[ १ ] A तुल्यरूपविशेष्यविशेषणताशालित्वम्, B तद्विषयविषयकत्वं वा । यथा—'पर्वतो वह्निमान्, पर्वतो महानसीयवह्निमांश्च' इति निश्चययोः समानविषयकत्वम् । [ २ ] क्वचित्—अभाव-

---

१ इदं च, अभेदान्वयविषयकशाब्दबोधे प्रयोजकं भवति ।

अत्रेदमधिकं बोध्यम्—'समानविभक्तिकत्ववत्, समानवचनकत्वमप्यभेदान्वयबोधे तन्त्रम्' इति नियमः । तत्र व्यवस्था—'यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वम्, तत्र विशेष्यविशेषणपदयोः समानलिङ्गवचनकत्वनियमः' इति । तेन, 'पुरूरवोमाद्रवसौ विश्वेदेवाः, त्रयः समुदिता हेतुः,' 'पितरो देवताः, जात्याकृतिव्यक्तयः पदार्थाः, प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इत्यादिषु विभिन्नलिङ्गवचनकस्थलेऽप्यभेदान्वयबोध उपपद्यते, इति । ( व्यु० का० १ । पृ० १–३ )

२ अत्र—विभक्तौ तादृशविभक्तिसाजात्यं च विभक्तिविभाजकप्रथमात्वादिनाऽवगन्तव्यम् । तेन, 'वेदाः प्रमाणम्, शतं ब्राह्मणाः' इत्यादौ,—समानविभक्तिकत्वं संपद्यते । ( ग० व्यु० का० १ । पृ० १ )

३ तच्च व्यासस्थलेऽभेदान्वयबोधप्रयोजकं भवति, इति बोध्यम् ।

४ तच्च, 'स्तोकं पचति' इत्यादौ,—विभक्तिशून्यभागेऽप्यस्ति, इति ज्ञेयम् । (त० प्र० ख० ४ । पृ० ४६–४७ )

५ केषांचिन्मते, इदं च 'विरुद्धविभक्तिराहित्यरूपा समासव्याससाधारणाकाङ्क्षा' इत्युच्यते; तत्तु, 'वैयाकरणखसूचिमानय' इत्यादौ,—न प्राप्नोति, इति चिन्त्यम् । ( ख० )

प्रतियोगितावच्छेदकतया ग्राह्यवृत्तिधर्मावगाहित्वम् । ( ग० बाध० ) यथा—'पर्वतो महानसीयवह्न्य[2]भाववान्' इति निश्चयस्यापि 'पर्वतो वह्निमान्' इति बुद्धिसमानविषयकत्वम् । ( स्व० )

**समानाकारकत्वम्**—[ क ] स्वस्मिन्यादृशी तद्बुद्धिविशेष्यकत्वावच्छिन्नतत्प्रकारिता, तादृशतद्बुद्धिविशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वम् । ( कु० ३ ) । यथा—'पर्वतो वह्निमान्' इति निश्चयस्य 'पर्वतो वह्निमान् न वा' इति संशयसमानाकारक[3]त्वम् । (स्व०) (ग० हेत्वा० ल० २ । पृ० ११) [ ख ] 'स्वस्मिन्यादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वम्, तादृशनिरूप्यनिरूपकभावापन्नविषयताकत्वम्' इत्यस्मद्गुरुचरणाः प्राहुः ।

**समानाधिकरण[4]त्वम्**—१ एकाधिकरणवृत्ति-कत्वम् । यथा—"हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिः" इति व्याप्तिस्वरूपनिरुक्तौ—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—लक्षणघटकीभूत-धूम-घटात्यन्ताभावयोः समानाधिकरणत्वम् । २ कोटिद्वयसहचरितत्वम् । यथा—"धूमधूमाभावसमानाधिकरणो वह्निः" (ग० सव्यभि०) इत्यादौ,—'समानाधिकरणत्व' शब्दार्थः । ३ शाब्दिकास्तु,—विभिन्नविभक्तिराहित्ये सति, अभेदेनैकार्थबोधजनकत्वम् । (वृत्ति०) । यथा—'नीलो घटः, परमराज्यम्, महानवमी' इत्यादौ,—नीलपदादि-घटपदाद्योरेकधर्मि[5]बोधकपदत्व-

---

१ अत्रेदमवधेयम्—'तदभाववत्तानिश्चयस्य तद्वत्ताबुद्धिप्रतिबन्धकतायां समानविषयकत्वं तन्त्रम्' इति प्राचीनानां सिद्धान्तः, इति ।

२ अत्रेदं बोध्यम्—सामान्यतद्वत्ताबुद्धिं प्रति, विशेषतदभाववत्तानिश्चयस्यापि समानविषयकत्वेन प्रतिबन्धकत्वं प्राचीनानामभिमतम् । अतः, 'पर्वतो महानसीयवह्न्यभाववान्' इति निश्चयस्य 'पर्वतो वह्निमान्' इति बुद्धिं प्रति प्रतिबन्धकत्वं संगच्छते, इति ।

३ 'इदं च 'संशये विषयताद्वयम्' इति पक्षाभिप्रायकम्' इति तु सूक्ष्मतरं विभावनीयं विद्वद्भिः ।

४ अत्र—'समानम् ( एकम् ), अधिकरणम् ( आश्रयः ), ययोः, तयोर्भावः' इति व्युत्पत्तिर्द्रष्टव्या ।

५ अत्रोदाहरन्ति—[ १ ] "लटः शतृशानचावप्रथमासमानाधिकरणे" ( पाणि० ३ । २ । १२४ ) इत्यत्र—'पचन्तं देवदत्तं पश्य, पचमानं देवदत्तं पश्य' इति; [ २ ] "तत्पुरुषः समानाधिकरणः कर्मधारयः" ( पाणि० १ । २ । ४२ ) इत्यत्र तु—'परमराज्यम्, महानवमी' इति च । ( काशिका० )

रूपं समानाधिकरणत्वम्, इत्याहुः । शिष्टं तु 'सामानाधिकरण्य'शब्द-व्याख्याने दृश्यम् ।

**समाप्तपुनरात्तत्वम्**—[ क ] क्रियान्वयेन शान्ताकाङ्क्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानम् । (राम० १ । पृ० १) । यथा—'उदयति चन्द्रः कुमुदबन्धुः' इत्यादौ,—समाप्तपुनरात्तत्वं दोषः । [ ख ] केचित्तु,—निराकाङ्क्षबोधजनकवाक्योत्तरत्वविशिष्टतद्वाक्यघटकीभूतपदार्थान्वितविशेषणबोधकपदवत्त्वम्, इति वदन्ति । ( स्व० )

**समाप्तिः**—१ अवसानम्; तच्च, तत्तद्वस्तु-काल-चरमसंबन्धः । यथा—'समाप्ते यज्ञकर्मणि' इत्यादौ । (स्व०) । २ [ क ] A चरमवर्णः । (त० प्र० १) B चरमवर्णजन्यं तद्द्वितीयक्षणोत्पन्नं तत्सजातीयं वर्णान्तरम् । C केचित्तु,—आरब्धकर्मजन्यश्चरमवर्णपर्यन्तवर्णसमूहरूपग्रन्थादिः, इत्याहुः । [ ख ] A चरमवर्णध्वंसः । ( त० प्र० १ ) ( मू० म० १ । पृ० २३ ) B चरमकृतिध्वंसः । यथा—ग्रन्थसमाप्तिः । C स्वोत्पत्तिक्षणध्वंसः स्वस्य समाप्तिः । ( म० प्र० )

[ ग ] A चरमवर्णजन्यम्, आरब्धकर्मचरमवर्णांशे लौकिकप्रत्यक्षात्मकम्, आनुपूर्वीविशेषविशिष्टतावद्वर्णविषयकसमूहालम्बनानुसंधानं समाप्तिः, इ-

---

१ अत्र व्युत्पत्तिः—'समाप्ते ( वाक्यसमाप्तौ ), पुनरात्तता ( ग्रहणम् )' इति । तच्च ( समाप्तपुनरात्तत्वम् ), विशेष्यवाचकपदनिष्ठः काव्यदोषः, उत्थाप्याकाङ्क्षास्थल एव प्रवर्तते, नतूत्थिताकाङ्क्षास्थले, इति बोध्यम् । ( दि० मञ्जू० )

२ नियताकाङ्क्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसंधानम्, इति समुदितार्थः । ( राम० १ । पृ० २ )

३ तदुदाहृतं चन्द्रालोके—"समाप्तपुनरात्तं स्यादेष पीयूषभोजनम् । नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः" इति ।

४ समाप्तिस्तु—'यस्मिन्ननुष्ठिते संपूर्णमिदं कर्म' इति प्रमा । सा च, ग्रन्थादौ चरमवाक्यलिखने; यागादौ चरमाहुतौ; पटादावन्त्यतन्तुसंयोगे; ग्रामगमनादौ ग्रामचरणचरमसंयोगे प्रमा । एवं तत्र तत्रोहनीया । ( वै० उ० १ । १ । १ । पृ० ५ )

५ स च ग्रन्थसमाप्तिः, इति बोध्यम् ।

६ "आद्या प्रवृत्तिरारम्भः" इति जैमिनीयारम्भलक्षणानुसारात् इदं लक्षणम् । तस्य ( चरमकृतिध्वंसस्य ) च स्वप्रतियोगिविषयत्वेन ग्रन्थनिष्ठत्वं बोध्यम् । ( म० प्र० )

त्यन्ये आहुः । (मू॰ म॰ १ । पृ॰ २४) । B ज्ञानविशेष एव समाप्तिः, इत्यपरे आहुः । ( म॰ वा॰ पृ॰ ९ ) । २ परिच्छेदः । ३ वधः । ४ समाधानम् । ( विश्वः ) । ५ समर्थनम् । ( मेदि॰ ) । ६ प्राप्तिः । ( शब्दच॰ ) ( वाच॰ )

**समासः**—१ संक्षेपः । यथा—"विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः" (तत्त्वसं॰८।९) इत्यादौ,—'समास'शब्दस्यार्थः संक्षेपः(प्र॰च॰पृ॰९४)। २ समर्थनम् । ( मेदि॰ ) । ३ समाहारः । ४ [ क ] अनेकेषां पदानामेकपदीभवनम् । समासवाक्यं द्विविधम्,—योगरूढम्, यौगिकं चेति । तत्राद्यम्, पङ्कज-कृष्णसर्पाऽधर्मादिपदम् । द्वितीयं तु, कर्मधारयादिः सप्तविधः समासः ।

[ ख ] यादृशमहावाक्योत्तरः ( त्व-तलादिः ) स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुः, तादृशं तद्वाक्यं तथाविधार्थे समासः । स चायं समासः [क]A सप्तविधः,—कर्मधारयः, द्विगुः, तत्पुरुषः, अव्य-

---

१ अत्र समासत्वं चाखण्डोपाधिः; संकेतविशेषेण समासपदवत्त्वं वा । (म॰ प्र॰४ । पृ॰४३)

२ अत्र वाक्यस्य महत्त्वं च प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्यान्वयबोधं प्रत्ययोग्यत्वं वाच्यम्; । तेन, उपकुम्भादौ नाव्याप्तिः, न वा 'नीलघटत्वत्वम्' इत्यादौ नीलघटत्वादिभागेऽतिप्रसङ्गः । ( श॰ प्र॰ श्लो॰ ३१ । टी॰ पृ॰ ४४ )

३ इदं च यौगिकसमासस्य लक्षणम्; न तु योगरूढसमासस्य, इति विज्ञेयम् ।

४ अत्र—प्राचीनास्तु ( वाग्भटादयः ) पञ्चविधान् भेदानादाय येषां समासानां पञ्चविधत्वं वदन्ति, ते च समासा अपि पूर्वोक्तसप्तविधान्तर्गता एव भवन्ति । तथा हि—( १ ) कश्चित्समासः पूर्वपदार्थधर्मिकान्वयबोधजनकतया पूर्वपदप्रधान उच्यते । यथा—'प्राप्तजाया, अर्धपिप्पली, पूर्वकायः' इत्यादिकस्तत्पुरुषः । यथा वा—उपकुम्भाद्यव्ययीभावः, पुरुषसिंहादिकर्मधारयश्च । ( २ ) कश्चिन्मध्यमपदार्थधर्मिकधीजनकतयैव मध्यमपदप्रधानः। यथा—'पटानधिकरण-प्रतियोगितानवच्छेदक' इत्यादिकस्तत्पुरुषः; 'पटस्य नाधिकरणम्' इत्यादिविग्रहे मध्यमपदार्थस्यैव विशेष्यत्वात् । ( ३ ) कश्चिदन्त्यपदार्थधर्मिकधीहेतुत्वादन्त्यपदप्रधानः । यथा—राजपुरुषादिकस्तत्पुरुषः, नीलोत्पलादिकः कर्मधारयः, द्विगाव्यर्थ्यव्ययीभावश्च । ( ४ ) कश्चित्सर्वपदार्थधर्मिकबुद्धिहेतुत्वात् सर्वपदप्रधानः । यथा—इतरेतरद्वन्द्वः, द्वन्द्वमात्रं वा । ( ५ ) कश्चित्स्वाघटकान्यपदार्थधर्मिकज्ञानजनकत्वादन्यपदार्थप्रधानः । यथा—बहुव्रीहिः, खलेयवाद्यव्ययीभावश्च, इति । नित्यानित्यभेदेनापि समासस्य द्वैविध्यं जयादित्यादिभिरुक्तम् । ( श॰ प्र॰ श्लो॰ ३३ । टी॰ पृ॰ ४५ ) तत्राविग्रहोऽस्वपदविग्रहो वा नित्यसमासः । ( त॰ प्र॰ ख॰ ४ । पृ॰ ४२ )

यीभावः, बहुव्रीहिः, द्वन्द्वः, उपपदसंज्ञकश्चेति; । B 'केवलसमासः' इत्यपि केचिदाहुः । ( श० प्र० श्लो० २९–३२ )

[ ग ] वैयाकरणास्तु,—'द्व्यादिपदानामेकपदतासंपादकः पदसाधुतार्थकः संस्कारविशेषः । स च समासः षड्विधः,—"सुपां सुपा, तिङा,

१ 'समासश्चतुर्विधः,*—अव्ययीभावः, तत्पुरुषः, द्वन्द्वः, बहुव्रीहिश्च' इति केचिच्छाब्दिका आहुः । तत्र—पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, उभयपदार्थप्रधानो द्वन्द्वः, अन्यपदार्थप्रधानो बहुव्रीहिः, इत्यादिलक्षणमपि प्रायिकम्; उन्मत्तगङ्गम्, सूपप्रति' इत्याद्यव्ययीभावे, 'अर्धपिप्पली, पूर्वकायः' इत्यादितत्पुरुषे, 'द्वित्राः' इत्यादिबहुव्रीहौ, 'कुशपलाशम्' इत्यादिद्वन्द्वे च परस्परव्यभिचारात् परस्परमव्याप्त्यतिव्याप्त्योः, इत्यलं विस्तरेण ।

२ अत्रोच्यते कविना सोपहासम्—"द्वन्द्वोऽपि द्विगुरपि चाहं सततं मद्गृहेऽव्ययीभावः । तत्पुरुष । कर्म धारय येन सदा स्यां बहुव्रीहिः" इति । ( उद्भटः )

३ अत्र सूत्रम्—"समर्थः पदविधिः" इति । ( पाणि० २ । १ । १ ) अत्र सामर्थ्यं द्विविधम्,—व्यपेक्षावत्त्वम्, एकार्थीभावश्च । तत्र—( १ ) A स्वार्थपर्यवसायिपदानामाकाङ्क्षादिवशात् यः परस्परं संबन्धः, सा व्यपेक्षा । B परस्परनिरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वे सति एकार्थोपस्थितिजनकत्वम् । 'राज्ञः पुरुषः' इत्यादौ वाक्ये,—सत्यामाकाङ्क्षायाम्, यो यो यस्मिन् संनिहितो योग्यश्च स तेन तेन संबध्यते; यथा—'राज्ञः पुरुषोऽश्वश्च, राज्ञो देवदत्तस्य च पुरुषः, ऋद्धस्य राज्ञोऽश्वो धनं च' इत्यादि । वृत्तौ तु नैवम्; वृत्तीनामेकार्थीभावात् । ( २ ) एकार्थीभावस्तु विशेष्यविशेषणभावावगाह्येकोपस्थितिजनकत्वम् । तथा च—राजादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः; पुरुषांशे विशेषणतयोपस्थितस्य नाश्वादिसंबन्धिता राजादीनाम्; जनितान्वयाच्च । निराकाङ्क्षतया न देवदत्तादेः स्वामितया पुरुषादावन्वयः, इति द्रष्टव्यम् । 'देवदत्तस्य गुरुकुलम्' इत्यादौ,—देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः । संबन्धस्तूपस्थितगुरुद्वारक एव षष्ठ्यर्थः । अथ वा—संबन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव केषांचित् † संबन्धान्वयः ।

* प्राचीनवैयाकरणोक्तविभागस्य प्रायिकत्वमाह—"समासस्तु चतुर्धेति प्रायोवादस्तथाऽपरः । योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ भौतपूर्व्यात् सोपि रेखागवयादिवदास्थितः" इति ।

† तदुक्तं भर्तृहरिणा—"संबन्धिशब्दः सापेक्षो नित्यं सर्वं समस्यते । वाक्यवत्साव्यपेक्षाऽपि वृत्तावपि न हीयते" इति । ( वाक्यप० ) । वार्तिककारमतमपि भर्तृहरिमततुल्यमेव । प्राचीनानां तु विरुद्धा गाथा—"सापेक्षे प्रत्ययो न स्यात्समासो वा कथंचन । सापेक्षं तद्विजानीयादसमस्तविशेषणम्" इति ।

नाम्ना, धातुना,ऽथ तिङां तिङा, । सुबन्तेने,ति च ज्ञेयः समासः षड्विधो[1] बुधैः'' इति । (वै० सा० समा० कारि० २८) । तत्र,—सुपां सुपा समासो यथा—'राजपुरुषः' इत्यादिः । सुपां तिङा यथा—'पर्यभूषयत्' इत्यादिः । सुपां नाम्ना यथा—'कुम्भकारः' इत्यादिः । सुपां धातुना यथा—'कटप्रूः, आयतस्तूः' इत्यादिः । तिङां तिङा यथा—'पिबत-खादता, पचत-भृज्जता' इत्यादिः । तिङां सुबन्तेन यथा—'जहिस्तम्बः' इत्यादिः,' इत्याहुः ।

**समाहारः**—[ १ ] साहित्यम्; तच्च A तुल्यवदेक[2]क्रियान्वयित्वरूपम् । ( न्या० म० ) यथा—'मार्दङ्गिक-वैणविकं वादय' इत्यादौ,—समाहारः[3] । (स्व०) B [क] अपेक्षाबुद्धिविशेषविषयत्वम् । ( न्या० म० ४ । पृ० १३) [ ख ] बुद्धिविशेषविशेष्यत्वम् । यथा—'पाणिपादम्[4]' इत्यादौ ( समाहारद्वन्द्वे ) समाहारः । ( श० प्र० श्लो० ४८ ) [ २ ] समुच्चयः । [ ३ ] अनुद्भूतावयवविशेषः (समूहः), इति वैयाकरणा आहुः । (वाच०)

**समाहारद्वन्द्वः**—( द्वन्द्वसमासः ) [ क ] एकवचनान्यसुबाकाङ्क्षाविहीनः समासः । यथा -'पाणिपादम्, हस्त्यश्वम्' इति समाहारद्वन्द्वः । (श० प्र०

---

१ अयं षड्विधोऽपि समासः "सह सुपा" ( पाणि० २ । १ । ४ ) इत्यत्र योगविभागेन भाष्ये व्युत्पादितः, स्पष्टः शब्दकौस्तुभादौ ।

२ तुल्यवत्* समभावेनेत्यर्थः । इदं च पत्नीयजमानयोरेकयागान्वयिनोरतिव्याप्तिवारणाय । तथाच—पत्न्यनुमतिद्वारा, यजमानस्य च साक्षादेव यागान्वयित्वम्, ( न ) तुल्यवत्, इति नातिव्याप्तिः । ( म० प्र० ४ । पृ० ४६ )

३. अत्र—शिष्टं तु 'समाहारद्वन्द्व'शब्दव्याख्याने द्रष्टव्यम् ।

४ अत्र, एके (प्राञ्चो नैयायिकाः) आहुः,—'पाणि'पदं पाणिप्रतियोगिकम्, 'पाद'पदं तु पादसमाहारं लक्षयति; न पाणिपादसमाहारे शक्तिः, इति । शाब्दिकास्तु,—समाहारे † शक्तिः, इत्याहुः ।

---

* तथा च—क्रियायाः ( विधेयभूतायाः ) एकरूपस्तुल्यः संबन्धः समाहारः, इति समुदितार्थः । यथा—केषांचिन्मते,—'पाणिपादं वादय' इत्यत्र वादनक्रियायां तुल्यवदेव पाणिपादयोरन्वयः । ( त० प्र० ख० ४ । पृ० ५० )

†. तथाच—समाहारे द्वन्द्वे द्वित्व-भित्वादिनैव समूहस्य बोधात् समूहत्वमेव प्रवृत्तिनिमित्तम्, इति विज्ञेयम् ।

श्लो० ४८ । पृ० ६६ )

[ ख ] 'समूहार्थको द्वन्द्वसंज्ञकः समासः' इति शाब्दिका आहुः ।

**समाहारद्विगुः**—( द्विगुसमासः ) [ क ] स्वोपस्थाप्यार्थस्य समाहारलक्षको यदीयान्त्यशब्दः, स द्विगुः समाहारद्विगुः । यथा—'पञ्चपूली' इत्यादिः । ( श० प्र० श्लो० ३८ । टी० पृ० ५४ )

[ ख ] तद्धितार्थोत्तरपद-द्विगुभ्यां भिन्नो द्विगुः । यथा—'पञ्चपूलीं छिनत्ति, पञ्चपाचकी' इत्यादिरपि । (श० प्र० श्लो० ३८ । टी० पृ० ५४)

**समीपत्वम्**—'संनिकृष्टत्व'शब्दवदस्यार्थो ज्ञेयः ।

**समुच्चयः**—१ [ क ] विरोधानवगाही कोटिद्वयसामानाधिकरण्यावगाही च निश्चयः । यथा—'पर्वतो वह्निमान्, वन्ह्यभाववांश्च' इति ज्ञानम् । ( स्व० )

[ ख ] धर्मितावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहिज्ञानम् । (त०

---

अन्ये प्राञ्चो नैयायिकास्तु,—उत्तरपदे पाणिपादसाहित्ये लक्षणा; पदान्तरं तु ('पाणि' पदम्) तादृशलक्षणाया निरूढत्वसंपादकम्; तथाविधसाहित्यस्य च स्वाश्रयनिष्ठत्वादिसंबन्धेनैव द्वितीयाद्यर्थकर्मत्वादौ साकाङ्क्षत्वात् 'पाणिपादं वादय' इत्यादेर्नायोग्यत्वम्, इत्याहुः । ( श० प्र० श्लो० ४८ । टी० पृ० ७० ) ( न्या० म० ४ । पृ० १३ )

नव्यास्तु ( चूडामणिभट्टाचार्यादयः ),—'पाणिपादं वादय' इत्यत्र,—पाणिपादमात्रप्रतीतेः ( समाहाराप्रतीतेः ), न समाहारे लक्षणा, न वा शक्तिः । 'इतरेतर'—'समाहार' संज्ञा च 'नदी—वृद्धि' इत्यादिवत्पारिभाषिकैव । तथा च,—समाहारे एकवद्भावेन न* द्विवचनापत्तिः, इति प्राहुः । ( न्या० म० ४ । पृ० १३ ) ( म० प्र० ४ । पृ० ४६ )

५ 'पाणिपादम्, हस्त्यश्वम्' इत्यादितो हि, करचरणादीनां बहूनामप्यवगतावेकवचनमेव प्रमाणम् । ( श० प्र० श्लो० ४९ । टी० पृ० ७६ )

१ अत्र हि,—योगलभ्यानां पञ्चाभिन्नपूलानां समाहारः परस्थपूलशब्देन लक्ष्यते, न तु तत्र द्विगोः शक्तिः; अन्यलभ्ये शक्त्ययोगात् । अत एव न लक्षणाऽपि; शक्यसंबन्धस्यैव लक्षणात्वेन वाक्ये तदसंभवात्, इति । ( श० प्र० श्लो० ३८ । टी० पृ० ५४ )

२ एवं च—'द्विगोः कर्मधारयान्तर्गतत्वेऽपि न क्षतिः' इति तु विभावनीयम् । ( श० प्र० श्लो० ३८ । टी० पृ० ५४ )

३ गादाधरीयबाधग्रन्थफक्किकाया अयमेवाभिप्रायः, इति प्रतिभाति ।

४ अव्याप्यवृत्तित्वज्ञानकाले कोटिद्वयोपस्थितौ सत्यामिदं ज्ञानमुत्पद्यते, इति विज्ञेयम् ।

---

* "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" ( पाणि० २ । ४ । २ ) इति सूत्रं प्रमाणमत्र द्रष्टव्यम् ।

प्र० २ ) यथा—'वृक्षः कपिसंयोग-तदभाववान्' इति ज्ञानम् । २ द्वन्द्व-समासविशेषः । स च [ क ] यत्र, असंबद्धे एकैकशः क्रियान्वयः । यथा—'धवं छिन्धि, खदिरं च छिन्धि' इति समुच्चये,—तुल्यवदसंबद्धयोः क्रियान्वयधीः ।

[ ख ] शाब्दिकास्तु,—यत्र, परस्परनिरपेक्षाणामनेकेषामेकस्मिन्क्रियादावन्वयः, सः । यथा—देवदत्तो यज्ञदत्तश्च गच्छतीत्यत्र,—देवदत्त-यज्ञदत्तयोः परस्परसापेक्षत्वाभावेपि एकस्मिन् गमनेऽन्वयः, इति । तद्वाचकश्च प्रायेण चकारः; क्वचित्—'तथा' इत्यादिशब्दोऽपि वाचको भवति, इत्याहुः ।

**समुदायत्वम्**—[ १ ] [ क ] अनेकपर्याप्तो धर्मः । ( ग० अवय० ) यथा—"जलादित्रयोदशभेदसमुदायः पृथिव्यां साध्यते" इत्यादौ,—'समुदायत्व' शब्दार्थः । ( त० दी० २ । पृ० २३ )

[ ख ] अपेक्षाबुद्धिविशेषविषयत्वम् । यथा—घट-पट-स्तम्भ-कुम्भैतत्समुदायत्वम् । ( स्व० ) [ २ ] 'त्रित्वादिपर्याप्तसंख्याविशेषः,' इत्येक आहुः । एवम्—'समूहत्व'शब्दोऽपि व्याख्येयः ।

**समूहः**—१ 'समूहालम्बन'शब्दवदस्यार्थोऽनुसंधेयः । ( वै० सा० द० ) २ समुदायः, इति काव्यज्ञा आहुः ।

**समूहालम्बनम्**—[ क ] नानाप्रकारतानिरूपितं नानामुख्यविशेष्यताशालि ज्ञानम् । ( ग० व्यु० १ ) यथा—'अयं घटः, अयं पटः,

---

१ अत्रायं विशेषः—प्राधान्येन यत्र क्रियान्वये तात्पर्यम्, स समुच्चयः, इति । ( त० प्र० ख० ४ । पृ० ५२ )

२ अन्वयश्च विशेष्यतया विशेषणतया वा । तत्राद्यम्, 'चैत्रो गच्छति, पचति च' इत्यादौ,—क्रियासमुच्चये । द्वितीयम्, 'ईश्वरं गुरुं च भजस्व' इत्यादौ,—द्रव्यसमुच्चये । ( वाच० )

३ शिष्टं तु 'च' 'द्वन्द्व'शब्दव्याख्याने दृश्यम् ।

४ अत्र स्मर्यते—'समुदायः प्रत्येकानतिरिक्तः' इति नैयायिकानां सिद्धान्तः, इति ।

५ अत्र—ज्ञाने विशेषणद्वयदानेन, 'धवखदिरौ द्वौ' इति, 'खड्गी चैत्रः कुण्डली' इति च वाक्यजन्यबोधयोः समूहालम्बनात्मकत्वं निराकृतम्, इति बोध्यम् । ( ग० व्यु० १ ) । संशये तु, नानाप्रकारतानिरूपिताया एकविशेष्यतायाः सत्त्वात् न समूहालम्बनत्वम् ।

अयं स्तम्भः, अयं कुम्भश्च' इत्येकं ज्ञानम् । ( स्व० )

[ ख ] यत्र विशेष्यताभेदेन प्रकारताभेदः, तज्ज्ञानम् ।

**सम्यग्ज्ञानम्** [ १ ] [ क ] यथार्थज्ञानम् । यथा—सत्यरजते 'इदं रजतम्' इति ज्ञानम् । ( स्व० )

[ ख ] अविसंवादकं ज्ञानम् । [ २ ] 'यतश्चार्थसिद्धिः,तत्' इति बौद्धा आहुः । ( न्या० बि० टी० पृ० ३–६ ) । [ ३ ] 'येन स्वभावेन जीवादयः पदार्था व्यवस्थितास्तेन स्वभावेन मोहसंशयरहितत्वेनावगमः' इत्यार्हता आहुः । ( सर्व० आर्ह० पृ० ३१–३२ )

**सर्गः**–१ 'सृष्टि'शब्दवदस्यार्थोऽनुसंधेयः । २ काव्यादेः परिच्छेदः । यथा—रघुवंशस्य प्रथमः, द्वितीयश्चेत्यादयः ( १९ ) सर्गाः । यथा वा–"सर्गोऽयमादिर्गतः" ( नैषध० ) इत्यादौ,—'सर्ग'शब्दस्यार्थः । ३ अभिमतिः । (हेमच०) । यथा–"यदि सर्ग एष ते" (रघु० ३ । ५१) इत्यादौ,–'सर्ग' शब्दस्यार्थोऽभिमतिरूपो निश्चयः ( मल्लिनाथः ) । ४ स्वभावः । ५ उत्साहः । ६ निर्मोक्षः । ७ निर्मोहः । ( मेदि० )

**सर्वगतत्वम्**—१ 'विभुत्व'शब्दवदस्यार्थोऽनुसंधेयः । २ 'सर्वत्र वर्तमानत्वम्' इति पौराणिका वदन्ति ।

**सर्वतन्त्रसिद्धान्तः**—( सिद्धान्तः ) [ क ] सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः । ( गौ० १ । १ । २८ ) । यथा—'घ्राणादीनीन्द्रियाणि, गन्धादय इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, प्रमा-

---

१ नानाविशेष्यतानिरूपितनानाप्रकारताशालिज्ञानम्, इत्यर्थः । ( कृष्णं० )

२ एतन्मते सम्यग्ज्ञानं द्विविधम्,—प्रत्यक्षम्, लैङ्गिकं चेति ।

३ तन्मते सम्यग्ज्ञानं पञ्चविधम्,—मतिः, श्रुतम्, अवधिः, मनःपर्यायः, केवलं च, इति । ( सर्व० आर्ह० पृ० ३२ )

४ तदर्थस्तु,—"सर्वतन्त्राविरुद्धोऽर्थः स्वतन्त्रेऽधिकृतश्च यः । स सर्वतन्त्रसिद्धान्तो यथा–मानेन मेयधीः" इति । ( ता० र० श्लो० ५९ )

५ 'इदं विशेषणं च, मनस इन्द्रियत्वस्य सर्वतन्त्रसिद्धान्तत्ववारणाय' इति ज्ञेयम् । ( गौ० वृ० १ । १ । २८ )

णैरर्थस्य ग्रहणम्' इति। ( वात्स्या० १। १। २८ )। यथा वा—जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः। ( गौ० वृ० १। २८ )

[ ख ] नव्यास्तु,—वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोऽर्थोऽपि सर्वतन्त्रसिद्धान्तः, इति वदन्ति। ( गौ० वृ० १। २८ )

**सर्वनाम**[1]-[ क ] स्वो[2]च्चारणानुकूलबुद्धिप्रकारविशिष्टम्[3]। ( ग० शक्ति० )

[ ख ] वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नम्। ( ग० शक्ति० पृ० ६९ ) यथा—"सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः" इत्यादौ,—तच्छब्दार्थः। ( हनु० नाट० श्लो० १ )

**सर्वम्**[4]—१ [ क ] स्वार्थान्वयि[5]तावच्छेदकधर्मव्यापक-तादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्याप्य-पर्याप्तिकधर्मावच्छिन्नम्। यथा—'सर्वे घटा रूपवन्त[6]ः' इत्यादौ,—'सर्व'पदार्थः। ( ग० शक्ति० पृ० ९६ )

---

१ अत्र च—'सर्वनाम'पदेन 'सर्वनाम'* संज्ञायुताः त्यत्तदादयः† शब्दा गृह्यन्ते; अतो न काप्यनुपपत्तिः।

२ स्वं तदादिपदम्। ( ग० शक्ति० )

३ अत्र—त्यदादिसर्वनाम्नः शक्तिस्तु, स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयकत्व-स्वजन्यत्व-एतदुभयसंबन्धेन तदादिसर्वनामप्रकारकबोधविषयकः संकेतः। ( ग० शक्ति० पृ० ७३ )

४ सर्वपदप्रवृत्तिनिमित्तं च, [ क ] उद्देश्यतावच्छेदकव्यापक-विधेयव्याप्य-पर्याप्तिको धर्मः। तथाविधश्च धर्मः, 'सर्वे घटा रूपवन्तः' इत्यादौ घटनिष्ठयावत्त्वमेव; तस्य व्यासज्यवृत्तितया तत्पर्याप्तेर्घटत्वव्यापकत्वात्, रूपादिव्याप्यत्वात्; शब्दात् घटत्वादिव्यापके रूपादिव्याप्यत्वलाभे, तयोरपि व्याप्यव्यापकभावोऽर्थाल्लभ्यते, इति [ ख ] कश्चित्—अशेषत्वादिः। क्वचित्—यावत्त्ववदनेकत्वम्। ( ग० शक्ति० पृ० ९३ )

५ अत्र—अन्वयित्वं चोद्देश्यविधेयभाव-विशेष्यविशेषणभाव-साधारणम्। (ग० व्यु० पृ० ९६)

६ अत्र च,—'सर्वशब्दः स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वं तादृशपदार्थान्तरे बोधयति' इति नियमः; ( स्व० ) एवं च—'सर्वे घटा रूपवन्तः' इति वाक्यात् 'घटत्वव्यापकं रूपवत्त्वम्' इति शाब्दबोधो जन्यते, इति बोध्यम्। ( दि० ४। पृ० १७९ )

---

* सर्वनामसंज्ञाविधायकसूत्रं च "सर्वादीनि सर्वनामानि" इति ( पाणि० १। १। २७ )

† त्यद्-तद्-यद्-एतद्-इदम्-अदस्,—इत्यादयः।

[ ख ] प्राञ्चस्तु,—व्यापकत्वावच्छिन्नम्, इत्याहुः । (दि० १।पृ० १७९)

[ ग ] 'बुद्धिविषयो यावत्त्वावच्छिन्नः समूहः 'सर्व'पदार्थः' इति शाब्दिका वदन्ति ।

[ घ ] 'संपूर्णम्; सकलं च' इति काव्यज्ञा आहुः । २ वेदान्तिनस्तु, विष्णुः, इत्याहुः ।

**सविकल्पकम्**[3]—( प्रत्यक्षम् ) [ क ] विशिष्टग्रहणम् ।

[ ख ] वैशिष्ट्यावगाहि, सप्रकारकं[4] वा ज्ञानम् । ( न्या० म० पृ० ४ ) ( त० सं० ) यथा—'डित्थोऽयम्, ब्राह्मणोऽयम्, श्यामोऽयम्, पाचकोऽयम्' इति प्रत्यक्षज्ञानम् । ( त० सं० )

[ ग ] माध्ववेदान्तिनस्तु,—विशिष्टाकारगोचरं प्रत्यक्षम् । तदष्टविधम्,—तत्र ( १ ) द्रव्यविकल्पको यथा—'दण्डि' इति । ( २ )

---

१ अत्रेदमवधेयम्—"सर्वेभ्यो* दर्शपूर्णमासौ" ( आह्रियेते, कर्तव्यौ ) इत्यादौ,—सर्वान्तर्गतघटोद्देशेन दर्शपूर्णमासाद्यसंभवेन 'सर्व'शब्दस्य संकोचः ( प्रकृत-निरपेक्ष-पुत्रादितत्तत्फलपरत्वम् ) कार्यः, इति ।

२ तत्रोक्तम्—"असतश्च सतश्चैव सर्वस्य प्रभवाप्ययौ । सर्वस्य सर्वदा ज्ञानात्सर्वमेतं प्रचक्षते" इति । ( विष्णुपु० )

३ अत्र—विकल्पः प्रकारता । तथा च—तल्लक्षणं तु प्रकारतानिरूपकज्ञानत्वम् †, इति । ( न्या० बो० १ । पृ० ११ )

४ नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि ज्ञानमित्यर्थः । ( त० दी० १ । पृ० १८ ) ( त० कौ० )

५ किंचिन्निष्ठप्रकारताशालि ज्ञानम्, इत्यर्थः । ( त० प्र० १ )

---

* अत्र—योगसिद्ध्यधिकरणे हि, "यः पुत्रकामो यः पशुकामः"( श्रुतिः ) इत्यादिना यज्ञक्रतूनुपक्रम्य "एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते, सर्वेभ्यो दर्शपूर्णमासौ" इत्याम्नातम् ।

† अयं भावः—विषयताया ज्ञाननिरूपितत्वात् ज्ञानस्य च विषयतानिरूपकत्वेन, A 'प्रकारतानिरूपकज्ञानत्वं तल्लक्षणम् । एवम्—B विशेष्यतानिरूपकज्ञानत्वम्; C संसर्गतानिरूपकज्ञानत्वम्, इत्यपि लक्षणानि संभवन्ति ।

निर्विकल्पके तु, अतिरिक्ता तुरीया विषयता स्वीक्रियते; त्रिविधविषयतामध्ये एकापि तत्र नास्ति, इति । (न्या० बो० १ पृ० ११) (वाक्य० १ । पृ० १२) (नील० १ । पृ० १८)

गुणविकल्पको यथा—'शुक्लः' इति । ( ३ ) क्रियाविकल्पको यथा—'गच्छति' इति । ( ४ ) जातिविकल्पको यथा—'गौः' इति । ( ५ ) विशेषविकल्पको यथा—'विशिष्टः परमाणुः' इति । ( ६ ) समवायविकल्पको यथा—'पटसमवायिनस्तन्तवः' इति । ( ७ ) नामविकल्पको यथा—'देवदत्तः' इति । ( ८ ) अभावविकल्पको यथा—'घटाभाववद्भूतलम्' इति, इत्याहुः । ( प्र० प० पृ० ११ )

[ घ ] मायावादिवेदान्तिनस्तु,—ज्ञातृज्ञेयभेदादिसहितं ज्ञानं सविकल्पकम्, इत्याहुः ।

[ ङ ] योगशास्त्रज्ञास्तु,—संप्रज्ञाताख्यः समाधिविशेषः, इत्याहुः ।

अत्र सौगताः कीर्तिदिङ्नागादयो नास्तिकास्तु,—'सविकल्पकं न प्रत्यक्षम्, न च प्रमाणम्; तस्य घटत्वादिरूपालीकोपरक्तत्वाद्वन्ध्यापुत्रज्ञानवत् । निर्विकल्पकं तु स्वलक्षणवस्तूपरक्तत्वात्स्यादेव प्रत्यक्षम्, प्रमाणं च;' इत्याहुः । ( वै० उ० ८ । १ । २ ) ( सि० च० १। पृ० २२ )

**सव्यभिचारः**—(हेत्वाभासः, दुष्टहेतुः) A अनैकान्तिकः सव्यभिचारः । ( गौ० १ । २ । ४६ ) । व्यभिचार एकत्राव्यवस्था; सह व्यभिचा-

१ तेषामयमाशयः—'सविकल्पकं हि न प्रमाणम् । तथा हि—अभिलापसंसर्गयोग्यप्रतिभासं हि तत् । न ह्यभिलापेन नाम्ना संभवत्यर्थस्य संबन्धः; येन 'घटः' इति 'पटः' इति वा नामानुरञ्जितः प्रत्ययः स्यात् । न च जात्यादि नामार्थसत्; येन तद्वैशिष्ट्यं विषयेषु इन्द्रियेण गृह्येत । न च, सतः स्वलक्षणस्यासता संबन्धः संभवति । न च,असत् इन्द्रियगोचरः । तस्मात्,—इन्द्रियेणालोचनं जन्यते; आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तत्रार्थे प्रवर्तयत् 'प्रत्यक्षम्' इति, 'प्रमाणम्' इति चोच्यते', इति । ( वै० उ० ८ । १ । २ । पृ० ५८३ )

२ अत्र व्युत्पत्तिः—'व्यभिचारेण सहितः सव्यभिचारः' इति । साधारणस्थले व्यभिचारश्च A हेतुनिष्ठसाध्याभाववद्वृत्तित्वादिरूपः ( वाक्य० २ । पृ० १६ ) । B साध्यतावच्छेदकनिष्ठहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादिरूपो वा । ( ग० २ । हेत्वा० सा० ) । असाधारणस्थले साध्यव्यापकीभूताभावप्रतियोगित्वम् । अनुपसंहारिस्थले तु, अत्यन्ताभावाप्रयोगिसाध्यकत्वादि व्यभिचारः, इति ।

तल्लक्षणं च, [ क ] वक्ष्यमाण-'सव्यभिचारत्व' दोषवत्त्वम् । ( स्व० ) । [ ख ] साधारण-असाधारण-अनुपसंहार्येतदन्यतमत्वम् । ( मु० २ । पृ० १५९ ) ( नील० २ । पृ० ५५ ) ( न्या० बो० २ । पृ० १७ )

रेण वर्तत इति सव्यभिचारः । निदर्शनम्—नित्यः शब्दोऽस्पर्शत्वात् । स्पर्शवान् कुम्भोऽनित्यो दृष्टः, न च तथा स्पर्शवान् शब्दः; तस्मादस्पर्शत्वान्नित्यः शब्द इति । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते; स्पर्शवांश्चाणुर्नित्यश्चेति । आत्मादौ च दृष्टान्ते 'उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः' इति । अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति अस्पर्शा बुद्धिरनित्या चेति । एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति । (वात्स्या०)[1]

B 'सव्यभिचार'पदं साधारणमात्रे प्रयुञ्जतीदानींतनाः । (दीधि० सव्य०

**सव्यभिचारत्वम्**—( हेत्वाभासः, हेतुदोषः ) [ क ] साध्य भयकोट्युपस्थापकतावच्छेदकरूपवत्त्वम् । तच्च साधारणत्वा ( म० प्र० २ । पृ० २१ ) ( चि० २ । सव्य० पृ० ८

१ शिष्टं विभागादिकं तु 'अनैकान्तिक'शब्दव्याख्यानावसरे संपादितम्, इति विरम्यते ।

२ अत्रायमर्थः—[ क ] उभयकोटी साध्यतदभावौ, तदुपस्थापकतावच्छेदकं च रूपं साधारणत्वादित्रितयम्, तज्ज्ञाने सति 'पक्षः साध्यवान्न वा' इति संशय उदेति, इति । [ ख ] 'यथाकथंचित् कोटिद्वयोपस्थितिः ( साध्य-तदभाव-एतद्द्वयोपस्थितिः ) स्मृत्यनुभवसाधारणी संदेहजननी । नियामकं तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानम् । अत एव,—'धारावाही संदेहः' इति मते तु—धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्ट( धर्मवत्ता )-ज्ञानं साध्यसंदेहजनकम्, तद्रूपवत्त्वम्* । [ ग ] यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं साध्यसंदेहजनकम्, तद्वत्त्वम् †, इति । ( दीधि० २ । पृ० १९० )

३ अत्र त्रितयं तु,—साधारणत्वम्, असाधारणत्वम्, अनुपसंहारित्वं, चेति ज्ञेयम् ।

* पर्यवसितार्थस्तु,—तद्धर्मपर्याप्तधर्मितावच्छेदकताकयत्किंचित्संशयनिरूपितायां जनकतायामवच्छेदकीभूता या तद्धर्मनिष्ठधर्मितावच्छेदकतानिरूपकप्रकारता, तन्निरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति ( ग० सव्य० )। इदं च, 'साध्य-तदभाव-साहचर्यावच्छिन्नकारणता'मतमङ्गीकृत्योक्तम्, इति विज्ञेयम् ।

† पर्यवसितार्थस्तु,—यत्किंचित्संशयजनकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति ( ग० सव्य० )। इदं च 'कोटिद्वयसहचरितत्वादिना ज्ञातस्योर्ध्वत्वादेरूर्ध्वत्वत्वादिना धर्मिणि ज्ञानमेव संदेहजनकम्, न तु तदानीं साहचर्यादिज्ञानमपेक्ष्यते' इति मतमभिप्रेत्योक्तम्, इति विज्ञेयम् । ( दीधि० २ । सव्य० पृ० १९० )

[ ख ] विरुद्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसंबन्धाव्याप्तिः । ( चि० २ । सव्य० पृ० ८९ ) । यथा—'शब्दो नित्यः शब्दत्वात्' इत्यादौ,—साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यादि । ( दीधि० २ । सव्य० पृ० १९२ )

[ ग ] यद्वा—साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् । ( चि० २ । सव्य० पृ० ८६ )

[ घ ] केचित्तु,—साध्यसंदेहजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वं सव्यभिचारत्वम्, इत्याशशङ्किरे । ( चि० २ । सव्य० पृ० ८४ )

[ ङ ] दीधितिकृतस्तु,—विशिष्टसाध्यसाधनग्रहाविरोधिनो ज्ञानस्य

१ 'विरुद्धान्येति,' 'साध्यतावच्छेदकविशिष्टसाध्यहेतुसामानाधिकरण्यग्रहाविरोध्यर्थकं' अर्थतो विरोधिविशेषणम् । तेन, साध्यसाधनयोरप्रसिद्धेरवृत्तित्वस्य परस्परासामानाधिकरण्यादीनां च निरासः । ( दीधि० २ । पृ० १९२ )

२ दलद्वयनिष्कृष्टार्थस्तु,—यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपम्*, तद्रूपत्त्वम्, इति । ( दीधि० २ । सव्य० पृ० १९२ )

३ साधारणमन्वयेन, असाधारणं व्यतिरेकेण, अनुपसंहारी पक्ष एवोभयसाहचर्येण, कोटिद्वयोपस्थापकः । ( चि० सव्य० पृ० ८४ )

४ तदर्थस्तु [ क ] साध्यसंदेहजनककोटिद्वयोपस्थितिजनका†—पक्षधर्मताज्ञानविषयत्वम् । [ख] धर्मिणि यद्रूपावच्छिन्नवत्ताज्ञानं साध्यसंदेहजनकम्, तद्रूपावच्छिन्नत्वम् । तच्च रूपं साधारणत्वादि, इति । ( दीधि० २ । सव्य० पृ० १८५ )

* समुदितार्थस्तु,—सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीन-यादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकम्, तादृशधर्मवत्त्वम्, इति । ( ग० सव्य० पृ० ४३ )

† पर्यवसितार्थश्च,—साध्यविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदको यो धर्मस्तदवच्छिन्नजन्यतानिरूपितायाम्, तदवच्छिन्नसहकारितावच्छेदकसाध्याभावविषयकत्वघटितधर्मावच्छिन्नजनकतावच्छेदकावच्छिन्नजन्यतानिरूपितायां च जनकतायामवच्छेदकीभूता या प्रकारता, तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वम्, इति । ( ग० सव्य० पृ० १२ ) ।

अत्र—'तदवच्छिन्नसहकारितावच्छेदक' इत्यत्र तच्छब्देन साधारणधर्मवत्ताज्ञानविशिष्टोपस्थितित्वं ग्राह्यम्, इति बोध्यम् ।

विषयतया व्याप्तिग्रहविरोधितावच्छेदकं रूपम्। तच्च रूपं साधारणत्वम्, असाधारणत्वम्, अनुपसंहारित्वं च, इति प्राहुः। (दीधि० २। सव्य० पृ० २०३)

**सव्यम्**—१ वामभागः। (अमरः)। यथा—"यत्सव्यं पाणिं पादौ प्रोक्षति, शिरश्चक्षुषी श्रोत्रे हृदयमालभ्य" (श्रुतिः) इत्यादौ,—'वाम' शब्दस्यार्थः। २ प्रतिकूलम्। ३ विष्णुः। (शब्दमा०)

**सह**—(अव्ययम्) १ [१] [क] साहित्यम्; तच्च, A स्वान्वयितत्कर्तृत्वादिकारकावच्छिन्नायाः समानकर्तृकायाः समभिव्याहृतक्रियायाः

---

१ व्याप्तिश्चान्वयतो व्यतिरेकतश्च नानारूपा। प्रातिस्विकरूपेणोपादाय तावदवगाही ग्रहो वाच्यः। साध्यसाधनयोरप्रसिद्धेरसिद्धिभेदस्य वारणाय 'अविरोधिनः' इत्यन्तम्। (दीधि० २। पृ० २०३)

२ व्याप्तिग्रहप्रतिबन्धलक्षणैकप्रयोजनकत्वेन साधारणादीनामेकहेत्वाभासत्वम्; साधारणेन व्यापकत्वस्याव्यभिचारितत्वस्य वा, असाधारणेन सामानाधिकरण्यस्य, अनुपसंहारिणा च व्यतिरेकव्याप्तेर्ग्रहस्य प्रतिबन्धात् (साधारणादौ लक्षणसमन्वयः)। (दीधि०२।पृ०२०३)

३ अत्र—(१) 'तुल्यवदेकक्रियान्वयित्वं साहित्यम्' इति प्रवादस्यापि 'एककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वं समानकालीनत्वम्' इत्यत्र तात्पर्यम्। (श० प्र० श्लो० ९४। टी० पृ० १३५)। (२) भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपि गर्दभ्यां "एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ,—'सह वर्तमाना' इत्यध्याहारात् 'वर्तमानत्व' क्रियामादायैव साहित्यबोधः, इति वदन्ति। (ग० व्यु० का० ३। पृ० ९१) (ल० म०)

४ अत्र विशेषम्—'पुत्रेण समं मित्रं प्राप्तश्चैत्रः' इत्यादौ तु,—तात्पर्यवशात् पुत्रकर्तृकमित्रप्राप्तिकालीनमित्रप्राप्तिकर्तृत्वम्, कदाचिच्च पुत्रकर्मकप्राप्तिकालीनमित्रकर्मकप्राप्तिकर्तृत्वं चैत्रस्य बुध्यते; समभिव्याहृतायाः प्राप्त्यादिक्रियायाः कर्तृत्वे इव कर्मत्वेऽप्यन्वयितया तत्प्रत्येकावच्छिन्नप्राप्त्यादिकालीनत्वबोधने सहाद्यव्ययस्य सामर्थ्यप्रच्यवात्। न च, 'अन्यकर्तृकधनप्राप्तिदशायां ग्रामप्राप्तिरपि मैत्रे, 'धनेन सहायं ग्रामं प्राप्तः' इति प्रयोगापत्तिः' इति वाच्यम्; 'घटत्वेन सह घटमवगाहते बुद्धिः' इत्यादौ,—क्वचित् कर्तृत्वावच्छिन्नायाः समानकर्मकत्वस्येव, सर्वत्र कर्मत्वावच्छिन्नायाः समभिव्याहृतक्रियायाः समानकालीनत्वस्येव समानकर्तृकत्वस्यापि सहाद्यर्थे निवेशनीयत्वात्। (श० प्र० श्लो० ९४। टी० पृ० १३६)

समानकालीनत्वम् । यथा—'पुत्रेण सहागतः, सूपेन सार्धं भुक्तः[3], चक्रेण साकं दण्डेन[4] जनितः, पुत्रेण समं मित्राय[5] दानम्' इत्यादौ,—सहाद्यव्ययार्थः साहित्यम् । ( श० प्र० श्लो० ९४ । टी० पृ० १३९ ) । B सहभावः; स च सामानाधिकरण्यम् । यथा—'पत्न्या सहाग्निमादध्यात्[6], घटेन सह पटवद्गृहम्' इत्यादौ,—'सह' शब्दार्थः । ( श० प्र० श्लो० ९४ । टी० पृ० १३७ )

[ ख ] A समभिव्याहृतपदोपस्थाप्यक्रियाकालः[7] । B क्रियासमानका-

---

१ अत्रेदं विज्ञेयम्—'पटः पटत्वेन सह भासते' इत्यादौ,—पटत्वनिष्ठविषयतायाः समानकालीनत्वमिव समानप्रतियोगिकत्वमपि 'सह' शब्दार्थोऽङ्गीकर्तव्यः; विभिन्नज्ञानीयविषयतायां तादृशाप्रयोगात्, इति । ( श० प्र० श्लो० ९४ । टी० पृ० १३७ )

२ अत्र, सहार्थैकदेशे च कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याधेयत्वं तृतीयया बोध्यते । तेन 'पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान्' इत्याकारो बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १३५ )

३ अत्र,—'सूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान् ( ओदनः )' इति बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १३५ )

४ अत्र,—चक्रनिष्ठकरणताकोत्पत्तिकालीन-दण्डनिष्ठकरणताकोत्पत्ति-मान् ( घटः )' इति बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १३५ )

५ अत्र,—'पुत्रसंप्रदानताकदानकालीनं मित्रसंप्रदानताकं दानम्' इत्याकारो बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १३५ )

६ अत्र,—पत्नीकर्तृकस्याग्न्याधानस्यालौकिकत्वेन तत्समानकालीनत्वस्य प्रापयितुमशक्यत्वात् सामानाधिकरण्यरूपसहभावमात्रं 'सह' शब्दार्थः स्वीकृतः । ( श० प्र० श्लो० ९४ । टी० पृ० १३७ )

७ तस्य क्रियान्वयिनि नामार्थ एवान्वयः । तादृशकालविशिष्टे नामार्थे क्रियान्वये च,—क्रियायामपि तादृशकालावच्छिन्नत्वं भासते; उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् । अतः—क्रियाद्वयसमानकालीनत्वलाभः, इति । ( ग० व्यु० कार० ३ । पृ० ९० ) एवम्—'सह भोजनात्'* इत्यत्र,—एकपङ्क्तिः; क्वचिच्च—'सह भोजनम्' † इत्यादौ,—एकदैकपात्रभोजनाद्यपि सहार्थो ज्ञेयः । ( ग० व्यु० कार० ३ )—

---

* समुदायश्लोकस्तु,—"आलापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात्" इति । ( स्मृतिः ) •

† समुदायश्लोकस्तु,—याजनं योनिसंबन्धं स्वाध्यायसहभोजनम् । सद्यः पतति कुर्वाणः पतितेन न संशयः" इति ( स्मृतिः ) । ( ग० व्यु० कार० ३ । पृ० ९० )

लीनक्रिया । यथा—'पुत्रैः सहागतः पिता' इत्यादौ,—'सह' शब्दार्थः । ( ग० व्यु० कार० ३ । पृ० ९० )

[ ग ] तत्क्रियाकालीनत्वम् । यथा—'शिष्येण सहागतो गुरुः' इत्यादौ । (म० प्र० पृ० ६) । [ २ ] समभिव्याहृतपदोपस्थाप्यो यत्किंचिद्धर्मः । ( स्व० ) । यथा—'शिष्येण सह गुरुर्ब्राह्मणः,' 'पुत्रेण ( सह ) पिता सुन्दरः' इत्यादौ,—'सह' शब्दस्यार्थः । ( का० व्या० पृ० ८ ) ।

—;अत्रेयं व्यवस्था—सहशब्दार्थस्तत्क्रियाकालः । स च, क्वचित्,—तत्क्रियान्वयिप्रथमान्तपदार्थेऽन्वेति, क्वचिच्च,—समभिव्याहृतक्रियायाम् । यथा—'सपुत्र आगच्छति' इत्यस्य 'पुत्रेण सहागच्छति यः' इति विग्रहात् प्रथमान्तान्यपदार्थ एव पुत्रागमनकालान्वयः, न तु क्रियायाम् । 'पुत्रेण सह नागच्छति' इत्यादौ च क्रियायामेव तादृशसहार्थान्वयः, इति 'पुत्रागमनकालीनागमनकर्तृत्वाद्यभावः प्रथमान्तार्थे प्रतीयते, इति । भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपि गर्दभ्यां "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ,—'सह वर्तमाना' इत्यध्याहारात् वर्तमानत्वक्रियामादायैव साहित्यबोधः, इति वदन्ति । ( ग० व्यु० कार० ३ । पृ० ९१ )

१ तस्याः कर्तृत्वादिसंबन्धेन पुरुषादावन्वयः; तादृशसंबन्धेन तद्विशिष्टे च 'आगतः, आगच्छति' इत्यादिपदोपस्थाप्यागमनकर्तृत्वादीनामन्वये न व्युत्पत्तिविरोधः; विधेयस्योद्देश्यतावच्छेदकप्रकाराभेदविरहात्, इति । ( ग० व्यु० का० ३ । पृ० ९० )

२ अत्र गौणक्रियान्वयिनि* तृतीया; सहार्थयोगे "सह युक्तेऽप्रधाने" ( पाणि० २ । ३ । १९ ) इत्यनेन साहित्यप्रतियोगिवाचकपदात् तृतीया, इति फलितोऽर्थः । ( ग० व्यु० का० ३ । पृ० ८९ )

३ अत्र कर्तृत्वं तृतीयार्थः; तस्य 'सह' शब्दार्थैकदेशक्रियायामन्वयः; 'सह' शब्दार्थस्य तादृशकालीनत्वस्य च धात्वर्थेऽन्वयः । इत्थं च—'शिष्यकर्तृकागमनकालीनागमनकर्ता गुरुः' इति बोधः । ( म० प्र० पृ० ६ )

४ अत्र—'सह' शब्दार्थो ब्राह्मण्यम्, सौन्दर्यादि । तस्य समानकालीनत्वसंबन्धेन ब्राह्मणसुन्दरादि-पदार्थैकदेशेऽन्वयः ।

परे तु,—सहार्थः साहित्यम् एकधर्मान्वयित्वरूपम् । तृतीयार्थो वृत्तित्वम्, संख्यामात्रं वा । तथा च—'शिष्यसाहित्यवान् गुरुर्ब्राह्मणः' इत्यादिबोधः, इत्याहुः । ( का० व्या० पृ० ८ )

* अयमर्थः—'पुत्रेण सहागतः पिता' इत्यादौ,—पितुः क्रियासंबन्धः साक्षाच्छब्देनोच्यते; पुत्रस्य तु प्रतीयमानः; इति पुत्रस्याप्राधान्यम्, इति वैयाकरणा आहुः । ( काशिका, २ । ३ । १९ )

२ शाब्दिकास्तु,—सह विद्यमानत्वम्। यथा—"सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ,—'सह' शब्दार्थः, इत्याहुः। ( ल० म० ) ३ साकल्यम्। ४ सादृश्यम्। ५ यौगपद्यम्। ६ समृद्धिः। ७ संबन्धः। ( मेदि० )। ८ सामर्थ्यम्। ( शब्दमा० )

**सहकारः**—१ सहकर्मकरणम् ( सहकारित्वम् )। २ सुगन्धिराम्रः, इति काव्यज्ञा आहुः। ( अमरः, २। ४। ३३ )

**सहकारित्वम्**—स्वभिन्नत्वे सति स्वकार्यकारित्वम्। यथा—दण्डस्य मृत्तिकाकार्यघटकारित्वम्।

**सहचरितत्वम्**—१ 'सामानाधिकरण्य' शब्दवदस्यार्थोऽनुसंधेयः। २ कचित्,—व्याप्तिमत्त्वम्। यथा—"साध्येनासहचरितो व्याप्यत्वासिद्धः" इत्यादौ,—'सहचरितत्व' शब्दार्थो व्याप्तिः। ( स्व० )

**सहचारः**—'सामानाधिकरण्य' शब्दवदस्यार्थोऽनुसंधेयः। ( दीधि० २ )

**सहायता**—अन्यकर्तृकक्रियायामप्राधान्येनान्वयित्वम्। यथा—'देवदत्तो यज्ञदत्तेन सह तण्डुलं पचति' इत्यादौ,—यज्ञदत्तस्य पचनक्रियायां सहायता।

**सहावस्थायित्वम्**—एकदेश-एकक्षणा-वच्छिन्नसामानाधिकरण्यम्। यथा—घट-पटयोः, ज्ञानेच्छयोश्च सहावस्थायित्वम्। ( स्व० )

**सहितत्वम्**—'साहित्य' शब्दवदस्यार्थोऽनुसंधेयः।

**सहृदयः**—१ प्रशस्तचित्तः। यथा—व्यास-गोतम-कणादादयः सहृदयाः। २ आलंकारिकास्तु,—काव्यार्थभावनाधीनपरिपक्वबुद्धिः ( शोहकी )। ( सा० द० )। यथा—"काव्यं यथायोगं कवेः सहृदयस्य च यश आनन्दादि करोति" ( काव्यप्र० १। २ ) इत्यादौ; "परिष्कुर्वन्त्वर्थान् सहृदयधुरीणाः कतिपये" इत्यादौ च,—'सहृदय' शब्दस्यार्थः, इत्याहुः। ( रसगङ्गाधरः )

**सांकर्यम्**—[ १ ] ( दोषः ) 'संकर' शब्दवदस्यार्थोऽसंधेयः। [ २ ] 'एकत्र मेलनम्' इति पदार्थविज्ञानवन्त आहुः।

**सांख्यम्**—१ सम्यग्दर्शनम् । यथा—"एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु" ( गीता० २ । ३९ ) इत्यादौ,—'सांख्य' शब्दस्यार्थः । २ [ १ ] [ क ] सम्यग्दर्शनप्रतिपादकं शास्त्रम् । यथा—देवहूतीं प्रति भगवतोपदिष्टं सांख्यदर्शनम् ( भक्तियोगः ) । ( भाग० स्क० ३ । अ० २६—२७ )

[ ख ] सांख्योक्तो योगः । [ २ ] नास्तिककपिलप्रणीतो दर्शनविशेषः ।

**सांख्यः**—[ १ ] ज्ञानवान् । [ २ ] A सांख्यमतप्रवर्तकः; B सांख्यद-

१ तदुक्तम्—"शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते" ( व्यासस्मृतिः ) इति । ( गीता, मध्वभा० अ० २ । श्लो० ३९ )

२ अत्रार्थे व्युत्पत्तिः—'संख्यायते इति संख्या सम्यग्ज्ञानम्, तत्संबन्धि' ( अण् ) इति सांख्यम् ।

एतत्सांख्यस्य प्रवर्तको देवहूतीपुत्रः श्रीभगवदवतारः कपिलः श्रीमद्भागवतादौ प्रसिद्धः । तदुक्तम्—"कपिलस्तत्त्वसंख्याता भगवानात्ममायया । जातः स्वयमजः साक्षादात्मप्रज्ञप्तये नृणाम्" इति । ( भाग० स्क० ३ । अ० २५ । श्लो० १ )

३ अत्रोक्तम्—"पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यतत्त्वग्रामविनिर्णयम्" इति । ( भाग० स्क० १ । अ० ३ ) । अन्यच्च—"सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते" इति । ( मात्स्यपु० अ० ३ )

४ भगवदुक्तो योगस्तु,—योग आध्यात्मिकः पुंसामतो निःश्रेयसाय मे । अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य वै" इत्यादिना ग्रन्थेन, इति विज्ञेयम् । ( भाग० ३ । २५ । १३ )

५ एवम्—पतञ्जलिप्रणीतस्य योगशास्त्रस्यैकाध्यायात्मकपादचतुष्टयस्यापि 'सांख्यप्रवचन' संज्ञा ज्ञेया । ( सांख्य० भा० १ । १ । प्रस्ता० पृ० ७)

६ अत्रेदं बोध्यम्—नास्तिककपिलेन स्वयं पूर्वप्रणीतस्य सांख्यप्रवचनसंज्ञकस्य तत्त्वसमासाख्यस्य द्वाविंशति-(२२) संख्यकस्य संक्षिप्तसूत्रस्य विस्तररूपेण षडध्यायात्मकः "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यारभ्य,—"यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः" इत्येतत्पर्यन्तः सूत्रोपबद्धो ग्रन्थो विरचितः, इति ।

७ नास्तिककपिलप्रणीतसांख्यस्य पतञ्जलिप्रणीतयोगशास्त्रस्य चानुपादेयत्वमुक्तं भारते मोक्षधर्मेषु—"सांख्यं योगः पाशुपतं वेदारण्यकमेव च । ज्ञानान्येतानि भिन्नानि नात्र कार्या विचारणा" इति । ( गीता० मध्वभा० अ० २ । श्लो० ३९ )

८ अत्रार्थे 'संख्या ज्ञानम्, तद्वान् ( अच् ) सांख्यः' इति व्युत्पत्तिर्ज्ञेया ।

९ तदुक्तं महाभारते—"संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशतितत्त्वानि, तेन सांख्याः प्रकीर्तिताः" इति । ( सांख्यभा० पृ० ८ )

र्शनग्रन्थश्च । स च ( तत्प्रवर्तकः ) आस्तिक-नास्तिक-भेदेन द्विविधः,— तत्राऽऽस्तिकौ द्वौ,—देवहूतीपुत्रः कपिलः, सेश्वरसांख्यो योगशास्त्रप्रवर्तकः पतञ्जलिनामा ब्राह्मणश्च । नास्तिकस्तु, निरीश्वरसांख्यो देवहूतीपुत्रा-दन्यः कपिलनामा कश्चिद्ब्राह्मणः । अत्र शिष्टं तु मत्कृते 'षड्दर्शनसार-निरुक्ति' नामके प्राकृतभाषाबद्धे चोपन्यासे दृश्यम् ।

---

१ स च राजयोगाख्यमेकाध्यायं पादचतुष्टयात्मकं "अथ योगानुशासनम्" इत्यारभ्य,—"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्तिरिति" इत्येतत्पर्यन्तं सूत्रोपबद्धं योगशास्त्रं प्रणिनाय, इति ।

२ देवहूतीपुत्रस्तु सांख्यप्रवर्तकः श्रीवासुदेवावतार आस्तिक एव; "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इति श्रुतेः । "सिद्धानां कपिलो मुनिः" इति-स्मृतेश्च ।

३ तन्मतं तु संक्षेपेणोच्यते—'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः; सा चैकैव । पुरुषास्तु परं भिद्यन्ते; ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः । ते च पङ्गवोऽपरिणामित्वात् । प्रकृतिरन्धा; जडत्वात् । यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमते । तस्याश्चाद्यः परिणामो बुद्धिरन्तः-करणविशेषः; बुद्धिरेव महत्तत्त्वम् । सा च बुद्धिर्दर्पणवन्निर्मला । तस्याश्च बहिरिन्द्रियप्रणा-डिकया विषयाकारो यः परिणतिभेदो 'घटः' इति, 'पटः', इत्याकारः, तत् 'ज्ञानम्' 'वृत्तिः' इति चाख्यायते । स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहात् 'अहं जानामि' इति योऽभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसंनिकर्षादिन्द्रि-यप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः, स प्रत्ययः । अत एव,— ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्माः सर्वं एव बुद्धेः परिणामविशेषाः सूक्ष्ममात्रया प्रकृतावेव वर्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च । पुरुषस्तु पुष्करपलाशव-न्निर्लेपः प्रतिबिम्बते परं बुद्धौ' इति । ( वै० उ० ८ । १ । १ । पृ० ३५६ )
तन्मते तत्त्वानि *पञ्चविंशतिः,—मूलप्रकृतिः, महत्तत्त्वम्, अहंकारः, पञ्चतन्मात्राणि ( शब्द-स्पर्श-रूप-रस-गन्धाः ), पञ्च भूतानि ( पृथिव्यप्तेजोवाय्वाकाशाः ), पञ्च ज्ञाने-न्द्रियाणि ( चक्षुस्त्वग्रसनघ्राणश्रोत्राणि ), पञ्च कर्मेन्द्रियाणि ( पायूपस्थपाणिपादवाचः ), मनः, पुरुषश्चेति । ( सांख्यसू० अ० १ । सू० ६१ )
तन्मते परमात्मा न स्वीक्रियते । परिणामवादं स्वीकुर्वन्ति, इत्यलं विस्तरेण ।

---

* तत्र चतुर्धा विभागः—केवला प्रकृतिः, केवला विकृतिः, प्रकृति-विकृत्युभयम्, अनुभयं चेति । तद्यथोक्तम्—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति । ( सांख्यकारिका० ३ )

**सांवादिकः**—संवाददाता । स च नैयायिकः । ( जटा० ) ( वाच० )

**सांसिद्धिकम्**—( द्रवत्वम् ) स्वभावनिर्वृत्तम्; निमित्तान्तराजन्यमित्यर्थः । यथा–जलनिष्ठं द्रवत्वं सांसिद्धिकम् । हिमादीनां घनीभावः कारणविशेषेण; द्रवीभावस्तु सांसिद्धिकः । घृतादीनां तु घनीभावः सांसिद्धिकः; द्रवीभावस्तु नैमित्तिकः; इति तयोर्विशेषः । ( स्व० ) शिष्टं तु 'द्रवत्व' शब्दव्याख्यानादौ दृश्यम् ।

**साकाङ्क्षत्वम्**—१ अन्योऽन्यविषयाकाङ्क्षाजनकत्वम् । ( त० भा० ४ । पृ० १८ ) । यथा–'गामानय' इत्यादौ,–गवानयनयोः साकाङ्क्षत्वम् ।[1] नियतसाकाङ्क्षोदाहरणं तु 'चैत्रस्य गुरुकुलम्, मैत्रस्य दासभार्या' इत्यादि । २ 'साभिलाषत्वं साकाङ्क्षत्वम्' इति काव्यज्ञा आहुः ।

**साकारत्वम्**—१ धर्माश्रयत्वम् । ( मू० म० १ ) यथा–'अयं घटः' इति ज्ञानस्य घटत्वाश्रयत्वम् । ( स्व० ) । २ माध्वाः पौराणिकाश्च,–मूर्तिविशिष्टत्वम् । यथा–परमात्मनः साकारत्वम्, इत्याहुः ।

**साक्षात्**—१ [ १ ] प्रत्यक्षम् । यथा–"साक्षात् दृष्टो मया हरिः" इत्यादौ । [ २ ] केचित्तु,–लौकिकप्रत्यक्षम्, इत्याहुः । २ [ १ ] मायावादिवेदान्तिनस्तु,–अव्यवहितम् । ( बृह० उप० शांकरभा० ३ । ४ । १ ) तच्च सद्रूपं चैतन्यम्, इत्याहुः । [ २ ] परंपरासंबन्धराहित्यम् ।

---

१ इद च शाब्दप्रमितौ प्रयोजकम्, अत एव–'गौरश्वः पुरुषो हस्ती' इति, 'घटो घटः' इति च निराकाङ्क्षवाक्यान्न शाब्दप्रमितिः, इति विज्ञेयम् । ( त० भा० ४ । पृ० १८ )

२ अत्र–'पदानि साकाङ्क्षाणि, अर्थाः साकाङ्क्षा वा ?' इति प्रश्ने उत्तरमाह— ( १ ) अर्थास्तावत्, स्वपदश्रोतरि अन्योन्यविषयाकाङ्क्षाजनकत्वेन 'साकाङ्क्षाः' इत्युच्यन्ते; तद्द्वारेण तत्प्रतिपादकानि पदान्यपि 'साकाङ्क्षाणि' इत्युच्यन्ते । यद्वा—( २ ) पदान्येव 'स्वार्थे प्रतिपाद्यार्थान्तरविषयाकाङ्क्षाजनकानि' इत्युपचारात् साकाङ्क्षाणि, इति । ( त० भा० पृ० १८ )

३ स्वनिष्ठप्रकारतानिरूपितप्रकारितासंबन्धेन यत्किंचिद्धर्मविशिष्टत्वम्, इत्यर्थः ।

४ मध्वमते, परमात्मनोऽप्राकृतज्ञानानन्दादिगुणरूपशरीरस्वीकारेण साकारत्वं संगच्छते । पौराणिकमते तु, अपाञ्चभौतिके-च्छास्वीकृतलीलाविग्रहवत्त्वेन तस्य साकारत्वमुपपद्यते, इति ।

५ यथा—"यत्साक्षादपरोक्षाद्ब्रह्म" ( बृह० उप० ३ । ४ । १ ) इति श्रुतौ—'साक्षात्' इत्यस्यार्थः ।

यथा—A "द्रव्यत्वसाक्षाद्व्याप्या जातिः (पृथिवीत्वम् )" इत्यादौ,—'साक्षात्' शब्दार्थः । B "साक्षान्माता, साक्षाद्भगिनी" इत्यादौ,—'साक्षात्' शब्दार्थः । ३ 'तुल्यम् । यथा—"साक्षाल्लक्ष्मीरियं वधूः" इत्यादौ,—'साक्षात्' शब्दार्थः' इति काव्यज्ञा आहुः । ( अमरः, ३ । ३ । २४२ )

**साक्षात्कारः**—[ १ ] प्रत्यक्षात्मकं ज्ञानम् । ( न्या० म० १ । पृ० ३ ) यथा—"साक्षात्कारे सुखादीनां करणं मन उच्यते" ( भा० प० श्लो० ८६) इत्यादौ 'साक्षात्कार' शब्दस्यार्थः । [ २ ] लौकिकसंनिकर्षजन्यं प्रत्यक्षं साक्षात्कारः, इति केचिदाहुः ।

**साक्षात्कारि**—प्रत्यक्षात्मकं ज्ञानम् । यथा—"साक्षात्कारिप्रमाकरणं प्रत्यक्षम् । साक्षात्कारिणी प्रमा सैवोच्यते, येन्द्रियजा" ( त० भा० पृ० ९ ) इत्यादौ,—'साक्षात्कारि' शब्दस्यार्थः ।

**साक्षात्संबन्धः**—पारंपर्यरहितः संबन्धः । ( स्व० ) यथा भट्टमते "शब्दो द्रव्यम्; साक्षात्संबन्धेनेन्द्रियग्राह्यत्वात्, घटवत्" ( न्या० म० ४ । पृ० ३१ ) इत्यत्र,—'साक्षात्संबन्ध' शब्दस्यार्थः । स च संयोग-समवाय-एतदन्यतरः । (त० प्र० ख० ४ । पृ० १२६) । एवमन्योऽपि चिन्त्यः ।

**साक्षी**—[ १ ] बोद्धृत्वे सति, अकर्ता । यथा—A कलहे प्रवृत्ते कश्चनान्यः पुरुषः साक्षी । ( स्व० ) B मायावादिवेदान्तिमते,—उपाध्युपाहितं चैतन्यं साक्षी । यथा च—"साक्षी चेताः केवलो निर्गुणश्च" ( श्रुतिः ) इत्यादौ,—जीवेश्वरौ साक्षिणौ, इति । C माध्वमते तु,—स्वरूपेन्द्रियं ( न तु

---

१ अत्र साक्षाद्व्याप्यत्वं च, तद्व्याप्यव्याप्यत्वे सति तद्व्याप्यत्वं बोध्यम् ।

२ अत्र साक्षात्कारत्वं च 'साक्षात्करोमि' इत्यनुगतप्रतीतिसाक्षिको जातिविशेषः। (न्या०म०१)

३ अत्र साक्षात्त्वं च, इतरपदार्थाप्रतियोगिकत्वे सत्युद्दिष्टपदार्थप्रतियोगिकत्वम्, इति । (स्व०)

४ तन्मते,—जीवसाक्षीश्वरसाक्षि-द्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यम् । तत्र जीवसाक्षी च अन्तःकरणोपहितं चैतन्यम्; तच्च प्रत्यात्म नाना । ईश्वरसाक्षी तु मायोपहितं चैतन्यम्; तच्चैकम्; तदुपाधिभूतमायाया एकत्वात्, इति । ( वेदा० प० १ । पृ० १७ )

५ मायावादिमते—जीवेश्वरयोरन्तःकरण-माया-रूपस्वस्वोपाध्योर्जडत्वेऽपि तत्तदुपाधिवृत्तिचैतन्यस्यैव ( चित्तवृत्तिसुखादेरेव ) अवभासकत्वात्साक्षित्वमुपपद्यते । ( वेदा० परि० १। पृ० १८)

६ अत्रोक्तम्—"प्रत्यक्षं सप्तविधम्,—साक्षि-षडिन्द्रिय-भेदात् । तत्र स्वरूपेन्द्रियं* साक्षी-

---

* अत्र साक्षिलक्षणं तु आत्मस्वरूपज्ञानादिव्यञ्जकत्वमेव, इति स्पष्टम् ।

मनः) 'साक्षि' इत्युच्यते। (प्र० च० पृ० १९) D सांख्य-मते तु,—बुद्धेः साक्षी पुरुषः, इति। [ २ ] मध्वमतानुयायिनस्तु,—स्वप्रकाशात्मस्वरूपोऽनुभवः साक्षी, इत्याहुः। (वादावली, पृ० २२) [ ३ ] व्यवहारशास्त्रज्ञास्तु,—विवादविषयप्रमाता साक्षी। स च साक्षी प्रथमं द्विविधः,—कृतः, अकृतश्च। तत्राद्यः, साक्षित्वेनार्थिप्रत्यर्थिभ्यां निरूपितः। द्वितीयस्तु, ताभ्यामनिरूपितः। पुनश्च कृतस्य लिखित-स्मारित-यदृच्छाभिज्ञ-गूढ-उत्तरसाक्षिभेदेन पञ्चविधत्वम्; अकृतस्य च ग्रामादिभेदेन षड्विधत्वम्। एवं चैकादशविधाः साक्षिणः, इत्याहुः। अत्राधिकंतु नारदोक्तं वीरमित्रोदयादौ। (अ० २। पृ० १४२–१८८) द्रष्टव्यम्।

---

त्युच्यते; तस्य विषया आत्मस्वरूप-तद्धर्मज्ञानसुखादयः, भावरूपाविद्या मनस्तमश्च (?) ज्ञानसुखाद्याः कालो व्याकृताकाशश्चेत्याद्याः। स च स्वरूपज्ञानादिकं व्यनक्ति" इति। (प्र० च० पृ० १५)

१ अत्र सूत्रम्—"साक्षात्संबन्धात् * साक्षित्वम्" इति। (सांख्य० अ० १। सू० १६१)

२ तदुक्तम्—जाग्रत् स्वप्नः सुषुप्तं च † गुणतो बुद्धिवृत्तयः। तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः" इति। (सांख्य० भा० अ० १। सू० १४८)

३ तत्स्वरूपमुक्तं मनुना—"समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति" इति। (मनु० अ० ८। श्लो० ७४)

४ साक्षिप्रयोजनमुक्तं नारदेन—[ क ] "संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः। दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम्" इति। (वीरमित्रो० अ० २। पृ० १४२) [ ख ] गौतमेनापि—"विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था" इति।

५ तथा चोक्तं नारदेन—"ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम्। कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः॥ कुल्याः कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः" इति। (वीरमित्रो० अ० २। पृ० १४४)

---

* तथा च—अत्रार्थे पाणिनिसूत्रम्—"साक्षाद्द्रष्टरि संज्ञायाम्" इति। (पाणि० ५।२।९१)

† अत्रायं विवेकः—सुषुप्त्याद्यवस्थात्रयसाक्षित्वं तु सांख्यमते, बुद्धिनिष्ठसुषुप्त्यादित्रयद्रष्टृत्वमात्रं पुरुषे। (सांख्य० अ० १। सू० १४८) (सांख्य० भा० १। १६१)। मायावादिमते तु,—तादृशबुद्धिवृत्तीनां प्रकाशनम्, इति। (वेदा० प०)

साहश्यम्—[क] असाधारणान्यतद्गतबहुधर्मवत्त्वम् । (चि० ३ । पृ० ३–४)
[ख] तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । तच्च स्वरूपसंबन्धविशेषः ।

१ अत्र विप्रतिपत्तिः—'सादृश्यं च सप्तपदार्थातिरिक्तं वा न वा' इति । तत्र 'सादृश्यं सप्तपदार्थातिरिक्तम्' इति मीमांसकादय आहुः; 'तत् तदतिरिक्तः पदार्थो न भवति' इति नैयायिकाः प्राहुः । ( चि० ख० ३ )
तत्र मीमांसकमते सादृश्यस्यातिरिक्तत्वे प्रमाणं च, A 'सादृश्यं न षड्भावेष्वन्तर्भवति; व्यतिरेकित्वे सति* सामान्येतरवृत्तित्वे च सति सामान्यवृत्तित्वात् †, अभाववत्' इति; 'सादृश्यमभावेऽपि नान्तर्भवति, भावत्वेन प्रतीयमानत्वात्' इत्यनुमानम् । तेन,—सादृश्यं क्लृप्तसप्तपदार्थातिरिक्तं सिद्ध्यति, इति । B नव्या अपि,—सादृश्यमतिरिक्तमेव; न च, 'अतिरिक्तत्वे पदार्थविभागव्याघातः' इति वाच्यम्; तस्य ( पदार्थविभागस्य ) साक्षात्परंपरया वा तत्त्वज्ञानोपयोगिपदार्थमात्रनिरूपणपरत्वात् । एवम्—अधिकरणत्वम्, विषयत्वम्, प्रतियोगित्वादिकमप्यतिरिक्तः पदार्थः, इत्याहुः । ( दि० १ । पृ० २४–२८ )
२ तदुक्तम्—"सामान्यान्येव भूयांसि गुणा-(तुल्या)-वयवकर्मणाम् । भिन्नप्रधानसामान्यव्यक्तं सादृश्यमिष्यते" इति । ( चि० ख० ३ । पृ० २ )
३ तदर्थस्तु,—[ क ] तद्गतभूयोधर्मसदृश-‡-धर्मवत्त्वम् । तेन, 'चन्द्रवन्मुखम्' इत्यादौ,—आह्लादजनकत्वरूपसादृश्यघटकजनकताया जनकभेदेन भिन्नतया चन्द्रगताह्लादजनकत्वस्य चन्द्रमात्रवृत्तितया मुखे तदभावेऽपि, न क्षतिः । अवशिष्टं तु 'तुल्यत्व' शब्दार्थे संपादितं तत्र द्रष्टव्यम् । [ ख ] तत्रासाधारण्येन विद्यमाना ये भूयांसो धर्माः, तद्वत्त्वम्, इति । अत्र—सादृश्यनिरूपकेऽतिव्याप्तिवारणाय 'तद्भिन्नत्वे सति' इति विशेषणं दत्तम् । 'अनुयोगिता' संबन्धविवक्षणे§ तत् विशेषणं न देयमेव, इति । ( दि० १ । पृ० २७ )
४ तथा च—'सादृश्यं नातिरिक्तम्' इति भावः ।

---

* अत्र पदप्रयोजनम्—सामान्यत्वे व्यभिचारवारणाय 'सामान्येतरवृत्तित्व' इति पदम् । प्रमेयत्वे व्यभिचारवारणाय 'व्यतिरेकित्व' इति पदम् । भावत्वे च द्रव्यादिषट्कान्यतमत्वरूपे हेतुमति साध्यस्य सत्त्वान्न व्यभिचारः, इति । ( दि० १ । पृ० २४ )

† सादृश्यस्य सामान्यवृत्तित्वे प्रमाणं तु 'यथा गोत्वं नित्यम्, तथाऽश्वत्वमपि नित्यम्' इति सादृश्यप्रतीतिः । तथा च सादृश्यस्य द्रव्याद्यन्तर्भूतत्वे बाधकमपि,—'यदि सादृश्यं द्रव्याद्यन्तर्भूतं तदा द्रव्यादेः सामान्यावृत्तित्वेन 'यथा गोत्वं नित्यम्, तथाऽश्वत्वम्' इत्यबाधितप्रतीतिर्न स्यात्' इति ( दि० १ । पृ० २४ )

‡ अत्र ( 'चन्द्रवन्मुखम्' इत्यादौ ), धर्मे धर्मसादृश्यं च जनकतात्वादिना विज्ञेयम् । स च धर्मोऽनुगत एव, इति ।

§ अत्रायं भावः—'अनुयोगितासंबन्धेन तद्गतभूयोधर्मवत्त्वम्' इत्येव तत्सादृश्यम् । तद्गतधर्मरूपसंबन्धे तदनुयोगिकत्वानभ्युपगमेनैव सादृश्यप्रतियोगिन्यतिव्याप्तिवारणसंभवात् 'तद्भिन्नत्वे सति' इति विशेषणमनर्थकमेव, इति । ( राम० १ । पृ० २७ )

( त० व० ) यथा—'चन्द्रवन्मुखम्,' 'घटसदृशः पटः' इत्यादौ,—मुखादावाह्लादकत्वादिना चन्द्रादिसादृश्यम् । (मु० १ ) ( चि० ३ । पृ० ४) । साधारणासाधारणविरुद्धधर्मभेदेन सादृश्यं त्रिविधम् । ( ल० व० )

**साधकम्**—१ ( हेतुः ) [ १ ] साध्यज्ञापकम् । यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—पर्वते वह्नेः साधको धूमः । [२] साधनकर्ता । यथा—"साधकतमं करणम्" ( पाणि० १ । ४ । ४२ ) इत्यादौ,—कारकविशेषः । [ ३ ] सिद्धिकारकः । यथा—मन्त्रादिसिद्धिकारकः शिष्टः । ( तन्त्रे ) । २ ज्योतिःशास्त्रज्ञास्तु,—जन्मतारावधिकानि षष्ठपञ्चदशचतुर्विंशनक्षत्राणि, इत्याहुः ।

**साधकमानम्**—१ 'सिद्धि'शब्दवदस्यार्थो ( साध्यवत्तानिश्चयः )ऽनुसंधेयः । ( दीधि० २ । पक्ष० पृ० १३३ ) यथा—"नापि, साधकबाधकमानाभावः ( पक्षत्वम् )" (चि० पक्ष० पृ० ३२) इत्यादौ,—'साधकमान' शब्दस्यार्थः । २ साधकं प्रमाणम् । ( स्व० )

---

१ अत्रेदमधिकं बोध्यम्—सादृश्यवाचकास्तु, इवादिनिपाताः सदृशादिनामानि च सन्ति । तत्र—इवादिभिर्निपातैः सादृश्यस्याभिधाने प्रतियोग्यनुयोगिवाचकपदयोः:* समानविभक्तिकत्वमपेक्षितम् । यथा—'गौरिव गवयः, चन्द्रमिव † मुखं पश्यति' इत्यादि । तुल्यसदृशादिनाम्ना ( ‡तुलोपमातिरिक्तेन ) सादृश्यस्याभिधाने तु,—प्रतियोगिपदे तृतीया षष्ठी च§ स्यात् । यथा—'पित्रा पितुर्वा सदृशः पुत्रः' इति ।

२ अत्रोक्तम्—"जन्मसंपद्विपत्क्षेमं प्रत्यरिः साधको वधः । मित्रं परममित्रं च जन्मर्क्षात्तु पुनः पुनः ॥" इति । ( ज्यो० त० )

---

* अत्रेदं विज्ञेयम्—सादृश्याख्यसंबन्धे च एकस्य प्रतियोगिता, अन्यस्यानुयोगिता । तत्र प्रतियोगिन उपमानत्वम्, अनुयोगिन उपमेयत्वम्, इति ।

† अत्रेदं बोध्यम्—उपमानोपमेयभावस्य द्वयोः संभवेऽपि प्रसिद्धस्यैवोपमानता, इति । तन्निर्णयादिकं तु कविकल्पलतायां दृश्यम् ।

‡ तुलोपमाभ्यां योगे तु "षष्ठी शेषे" इति सूत्रेण षष्ठ्येव स्यात् । यथा—'तुला देवदत्तस्य नास्ति, उपमा कृष्णस्य नास्ति' इति ।

§ तद्विधायकं सूत्रं तु "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" इति (पाणि०२।३।७२)

**साधनम्**—१ ( हेतुः ) [ १ ] सिद्धिर्जनकम् । ( दि० गु० ) यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—धूमः साधनम् । [२] [ क ] कारणम् । ( मथुरा० ) यथा—'घटस्य साधनं दण्डः,' 'पटस्य साधनं तन्तुः' इत्यादौ,—'साधन' शब्दार्थः ।

[ ख ] 'इतरकारणकलापे यदतिशयितं कारणम्, तत्साधनम्' इति मध्वमतानुयायिन आहुः । ( प्र० च० पृ० १४ ) ।

[ ग ] 'कारकत्वेनान्वयि साधनम्' इति शाब्दिका वदन्ति । २ A सिद्धिः; B अनुमितिः । यथा—"पर्वते धूमेन वह्निसाधने" इत्यादौ—'साधन' पदार्थः । ३ अनुमानम् । (स्व०) । यथा—"द्रव्यत्वादेरपि धूमेन साधनात्" ( गौ० वृ० ५ । २७ ) इत्यादौ—'साधन'शब्दस्यार्थः ।

**साधनवैकल्यम्**—दृष्टान्ते साधनस्यावर्तमानत्वम् । ( स्व० ) ।

**साधनाप्रसिद्धिः**—( हेतुदोषः, असिद्धिः ) हेतौ हेतुतावच्छेदकस्याभावः । यथा—'पर्वतो वह्निमान् काञ्चनमयधूमात्' इत्यादौ,—धूमनिष्ठः काञ्चनमयत्वाभावः साधनाप्रसिद्धिः । ( मु० २ । पृ० १६२ ) ( नील० २ । पृ० २९ ) ( म० प्र० २ । पृ० २७ )

---

१ अत्र जनकत्वं च 'जनकज्ञानविषयत्वम्' इति वक्तव्यम् । तेन, धूमज्ञानस्यैव सिद्धिजनकत्वेन, धूमे सिद्धिजनकत्वाभावेऽपि, न क्षतिः ।

२ अत्र साधनत्वं द्विविधम्—साक्षात्साधनत्वम्, परंपरासाधनत्वं चेति । तत्र साक्षात्साधनत्वं च, अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वम् । यथा—स्वर्गोत्पत्तिं प्रत्यपूर्वस्य साधनत्वम् । परंपरासाधनत्वं च, अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मावच्छिन्नजनकत्वे सति, कार्यनियतपूर्ववर्तितावच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वम् । ( मथुरा० ) यथा—स्मृतिं प्रत्यनुभवस्य साधनत्वम् ।

३ अत्रेदं बोध्यम्—दृष्टान्ते साधनवैकल्यादयो निग्रहस्थानेऽन्तर्भवन्ति, इति । ( दि० १ )

४ सा च 'व्याप्यत्वासिद्धि' प्रभेदः, इति विज्ञेयम् । (नील० २। पृ० २९) (मु० २ । पृ० १६१ ) तल्लक्षणं च, साधने साधनतावच्छेदकवैशिष्ट्यावगाहिग्रहविरोधिग्रहविषयत्वम् । (ल० व०)

५ अत्र ( काञ्चनमयधूमादिहेतुकस्थले ),—[ क ] हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्, तद्धेतुकव्याप्तिज्ञानादेरभावः फलम् । ( मु० २ । पृ० १६२ ) । [ ख ] साध्याप्रसिद्धि-

**साधनासिद्धिः**—'साधनाप्रसिद्धि' शब्दवदस्यार्थोऽनुसंधेयः ।

**साधर्म्यम्**. [ १ ] समानधर्मः । यथा—'कमलमिव सुन्दरं मुखम्' इत्यादौ,—सौन्दर्यं मुख-कमलयोः साधर्म्यम् । [ २ ] [ क ] साधारणो धर्मः । यथा—"षण्णां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानं निःश्रेयसहेतुः" ( प्रशस्त० ) इत्यादौ,—'साधर्म्य' शब्दार्थः । ( न्या० कन्द० पृ० ६ ) [ ख ] अनुगतो धर्मः । ( वै० उ० १ । १ । ४ ) । यथा—अस्तित्वम्, ज्ञेयत्वम्, प्रमेयत्वम्, अभिधेयत्वं च द्रव्यादीनां सप्तानां पदार्थानां साधर्म्यं भवति । यथा वा—कारणत्वं पारिमाण्डल्यभिन्नानां पदार्थानां साधर्म्यं भवति । कार्यत्वानित्यत्वे कारणवतामेव साधर्म्ये भवतः; । आश्रितत्वं नित्यद्रव्यभिन्नानां पदार्थानां साधर्म्यं भवति; । निर्गुणत्वं क्रियाशून्यत्वं च गुणादिषट्कस्य; । गुणाधिकरणावृत्ति-गुणावृत्ति-धर्मवत्त्वं कर्मप्रभृतीनां पञ्चानाम्; । सामान्यशून्यत्वं सामान्यादीनां चतुर्णाम्; । सत्त्वाश्रयावृत्ति-जात्यवृत्ति-धर्मवत्त्वं विशेषादित्रयाणाम्; । प्रतियोगित्वानुयोगित्वान्यतरसंबन्धावच्छिन्न-समवायनिष्ठावच्छेदकताकभेदवत्त्वं समवायाभा-

---

प्रहदशायाम्,—हेतुतावच्छेदकविशिष्टे साध्यव्याप्तिग्रहप्रतिबन्धः फलम् । ( नील० २ । पृ० २६ ) । शिष्टं तु 'व्याप्यत्वासिद्धि' शब्दव्याख्यानावसरे संपादितं तत्तत्र दृश्यम् ।

१ समानो धर्मः, इति फलितोऽर्थः । ( मु० १ । पृ० ४५ )

२ अत्र—'ज्ञेयत्वा-भिधेयत्वा'दिशब्दानामीश्वरीयज्ञानविषयत्वा-ऽभिधाविषयत्वादिरूपोऽर्थो केवलान्वयित्वोपपत्त्यर्थं स्वीकर्तव्यः; भवति तदेव सप्तपदार्थानां लक्षणम् । ( मु० १ । पृ० ४५ ) वस्तुतः—विषयत्वमेव सप्तपदार्थानां लक्षणम्; तेन, ईश्वरानङ्गीकर्तृमतेऽपि जीवज्ञानविषयतादिकमादाय लक्षणसमन्वयः, इत्यवधेयम् ।

३ अत्र—आश्रितत्वं च, सर्वाधारतानियामकसंबन्धान्यसंबन्धेन वृत्तिमत्त्वम्; तेन, काले नातिव्याप्तिः । ( ल० व० )

४ गुणवदवृत्तिधर्मवत्त्वम्, इत्यर्थः । अत्रेदमधिकं बोध्यम्—गुणादिषट्कस्य गुणं विनाऽपि धीविशेषविषयत्वमादाय एकत्वादिप्रतीतेस्तद्व्यवहारस्य चोपपत्तिः कर्तव्या, इति । ( त० व० )

५ तदर्थश्च, समवायसंबन्धावच्छिन्नप्रतियोगिताक-जातिसामान्याभाव-वत्त्वम् ।

वयो:; । भावत्वं द्रव्यादिषट्कस्य; । अनेकत्वे सति भावत्वम्, समवायित्वं च द्रव्यादिपञ्चकस्य; । समवेतसमवेतत्वं द्रव्यादिचतुष्टयस्य; । समवायेन सत्तावत्त्वम्, कारणत्वं च द्रव्यादित्रयस्य; । नित्यानित्योभयवृत्तिसत्ताभिन्नजातिमत्त्वम्, कर्मावृत्तिजातिमत्त्वं वा द्रव्यगुणयो:; । असमवायिकारणत्वं गुणकर्मणो:; । समवायिकारणत्वं द्रव्यस्य; । तत्र—द्रव्यत्वम्, गुणवत्त्वं च पृथिव्यादीनां नवानां द्रव्याणाम्; । गुणसमानाधिकरण-मनोऽवृत्ति-धर्मवत्त्वं क्षित्याद्यष्टद्रव्याणाम्; । आत्ममन:संयोगाश्रयावृत्ति-द्रव्यविभाजक-धर्मवत्त्वं क्षित्यादिसप्तानाम्; । जगदाधारत्व-भूतत्वा-न्यतरवत्त्वं क्षित्यादीनां षण्णाम्;। पृथिव्यादीनां पञ्चानां भूतत्वम्, इन्द्रियप्रकृतित्वं च;। पृथिव्यादिचतुर्णां द्रव्यारम्भकत्वम्, स्पर्शवत्त्वं च; । रूपवत्त्वम्, द्रवत्वव-

---

१ अत्र भावत्वं च, समवाय-सामानाधिकरण्य-एतदन्यतरसंबन्धेन सत्तावत्त्वम् । ( दि० १ । १ । अभावनि० पृ० ४१ ) ( ल० व० )

२ अनेकभाववृत्ति*-पदार्थविभाजकोपाधिमत्त्वम्, इति फलितोऽर्थः । ( मु०१ । पृ० ४६ )

३ तदर्थश्च, [ क ] समवायसंबन्धेन संबन्धित्वम् । तेन, सामान्यादौ नाव्याप्ति: । ( मु० १। पृ० ४६ ) [ ख ] समवेतवृत्ति-पदार्थविभाजकोपाधिमत्त्वम् । ( ल० व० पृ० ३ )

४ तच्च, समवेतसमवेतवृत्ति-पदार्थविभाजकोपाधिमत्त्वम् । (ल०व० ) (दि०गु०१।पृ०४६ )

५ अत्र भाष्यम्—द्रव्यादीनां त्रयाणामपि सत्तासंबन्ध:, सामान्यविशेषवत्त्वम्, स्वसमवाय:, 'अर्थ' शब्दाभिधेयत्वम्,† धर्माधर्मकर्तृत्वं‡ च । ( प्रशस्त० पृ० ३ )

६ गुणाश्रयवृत्ति-सत्ताभिन्नजातिमत्त्वम्, इत्यर्थ: । ( ल० व० ) ( त० दी० १ । पृ० ५ )

७ द्रव्यारम्भकत्वं च द्रव्यसमवायिकारणवृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वम् । तेन, न द्रव्यानारम्भकघटादावव्याप्ति: ( मु० १ । पृ० ५९ )

---

* अत्र—अनेकभाववृत्तित्वं च, स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्य-एतदुभयसंबन्धेन भेदविशिष्टत्वे सति भाववृत्तित्वम्; तेन, गुणादौ संख्यारूपस्यानेकत्वस्याऽभावेऽपि नाव्याप्ति:। भावत्वरूपतादृशधर्ममादाय समवायेऽतिव्याप्तिवारणाय 'पदार्थविभाजकोपाधि' इति पदम् । ( दि० १ । पृ० ४५—४६ )

† अत्र सूत्रम्—"अर्थ इति द्रव्यगुणकर्मसु" इति । ( वै० ८ । २ । ३ )

‡ अत्रायं भाव:—विहितनिषिद्धभावनाविष्टतया द्रव्यादीनां तद्धेतुत्वम्, न ( ? ) स्वरूपत: । सामान्यादिषु स्वरूपतो द्रव्यादिकमनन्तर्भाव्य भावनावेशो न संभवति; नित्यत्वेनाव्यापारत्वात्; अभिन्नधर्मायोगेनाव्यापारित्वात्; स्वाश्रयावच्छेदमात्रेणैवोपयुज्यते, इति न तेषां तद्धेतुत्वम्, इति । ( टिप्प० )

त्त्वम्, प्रत्यक्षविषयत्वं च पृथिव्यादित्रयस्य; । गुरुत्ववत्त्वम्, रसवत्त्वं च पृथिवीजलयोः; । नैमित्तिकद्रवत्ववत्त्वं पृथिवीतेजसोः; । गन्धाश्रयावृत्ति-द्रव्यविभाजक-धर्मवत्त्वं जलाद्यष्टद्रव्याणाम् । रसासमानाधिकरण-द्रव्यविभाजक-धर्मवत्त्वं तेजःप्रभृतिसप्तद्रव्याणाम्; । रूपासमानाधिकरणद्रव्य-विभाजक-धर्मवत्त्वं वाय्वादीनां षण्णाम्; । स्पर्शवदवृत्ति-द्रव्यविभाजक-धर्मवत्त्वमाकाशादीनां पञ्चानाम्; । भूतावृत्ति-द्रव्यविभाजकधर्मवत्त्वं कालादीनां चतुर्णाम्; । कालोपाध्यसमानाधिकरण-शब्दवदवृत्ति-द्रव्यविभाजकोपाधिमत्त्वं दिगात्ममनसाम्; । स्वसमवायिकारणत्व-स्वकरणेन्द्रियत्वा-न्यतरसंबन्धेन सुखप्रत्यक्षवत्त्वमात्ममनसोः; । पृथिव्युदकज्वलनपवनजीवात्ममनसामनेकत्वा-परजातिमत्त्वे; । आकाशकालदिगात्मनां सर्वगतत्वम् ( विभुत्वम् ), परममहत्त्वम्, सर्वसंयोगिसमानदेशत्वं च; । पृथिव्युदकजीवात्मनां चतुर्दशगुणवत्त्वम्; । दिक्कालयोः पञ्चगुणवत्त्वम्; । सर्वोत्पत्तिमतां निमित्तकारणत्वम्; । विशेषगुणवत्त्वं भूतानाम्, आत्मनां च; । परत्वम्, अपरत्वम्, मूर्तत्वम्, कर्मवत्त्वम्, वेगवत्त्वं च पृथिव्यादिचतुष्टयस्य मनसश्च; । अव्याप्यवृत्तिविशेषगुणवत्त्वम्, क्षणिकविशेषगुणवत्त्वं[1] चाऽऽकाशात्मनां ( आकाश-जीव-परमात्मनाम् ) साधर्म्यं भवति, इति । ( प्रशस्त० १ । १ । पृ० २ ) ( भा० प० ) ( मु० १ ) ( सि० च० ) एवमन्येषामपि तत्तत्साधर्म्यं स्वयमूह्यम्, इत्यत्रैव विरम्यते । ( किर० १ । १ । पृ० ३९ )

१ क्षणिकविशेषगुणवत्त्वं च *चतुःक्षणवृत्तिजन्या†-वृत्तिजातिमद्विशेषगुणवत्त्वम् । ( मु० १ । पृ० ६१ )

२ तथा हि—रूपादीनां गुणानां सर्वेषां गुणत्वाभिसंबन्धः, द्रव्याश्रितत्वम्, निर्गुणत्वम्, निष्क्रियत्वं च साधर्म्यम्, इत्यादि । ( प्रशस्त० पृ० ११ )

* तथा हि—चतुःक्षणवृत्तीनि यानि जन्यानि ( घटादीनि ), तदवृत्तिर्या जातिः ( ज्ञानत्वादिः ), तद्वान् विशेषगुणः ( ज्ञानादिः ), तद्वत्त्वस्यात्मादौ सत्त्वाल्लक्षणसमन्वयः । ( दि० १ । १ । पृ० ६१ )

† अत्रेदं बोध्यम्—यद्याकाशजीवात्मनोरेव साधर्म्यमुच्यते, तदाऽस्मिन्परिष्कारे 'जन्य' इति पदं न देयम्; द्वेषत्वादिकं धर्ममादाय तत्र लक्षणसमन्वयः कर्तव्यः । ( मु० १ । १ । पृ० ६१ )

**साधर्म्यदृष्टान्तः**—अन्वयव्याप्तिग्रहणस्थलम् । यथा—धूमेन वह्न्यनुमाने,—महानसः ( यत्र यत्र धूमस्तत्राग्निर्यथा महानसः ) इति । ( प्र० च० पृ० २८ ) । अत्राधिकं तु 'दृष्टान्त,' 'अन्वयदृष्टान्त' शब्दव्याख्याने दृश्यम् ।

**साधर्म्यनिदर्शनम्**—[ १ ] [ क ] 'अन्वयदृष्टान्त' शब्दवदस्यार्थोऽनुसंधेयः । ( स्व० )

[ ख ] अनुमेयेन सामान्येन लिङ्गसामान्यस्यानुविधानदर्शनम् । तद्यथा—'यत् क्रियावत्, तत् द्रव्यं दृष्टं यथा शरः' इति । ( प्रशस्त० २ । पृ० ४८ ) । [ २ ] 'अन्वय्युदाहरण' शब्दवदस्यार्थोऽनुसंधेयः ।

**साधर्म्यनिदर्शनाभासः**—( निदर्शनाभासः ) लिङ्गानुमेयोभयाश्रयासिद्ध्यननुगतविपरीतानुगतः । यथा—'यदनित्यं तन्मूर्तं दृष्टं यथा परमाणुः, यथा कर्म; यथाऽऽकाशम्, यथा तमो घटवत् 'यन्निष्क्रियम् तदद्रव्यं दृष्टम्' इति च । ( प्रशस्त० २ । पृ० ४८ ) । एवं 'अन्वयदृष्टान्ताभास' शब्दोऽपि व्याख्येयः ।

**साधर्म्यसमः**—( जातिः ) [ क ] साधर्म्येणोपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यसमः । ( गौ० ५ । १ । २ ) । साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः । निदर्शनम्—'क्रियावानात्मा; द्रव्यस्य क्रियाहेतुगुणयोगात् ; द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्; तथा चात्मा; तस्मात्क्रियावान्' इति । एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते,—'निष्क्रिय आत्मा; विभुनो द्रव्यस्य निष्क्रियत्वात्; विभु चाकाशं निष्क्रियं

---

१ अनेन, निदर्शनाभासो निरस्तः । ( प्रशस्त० २ । पृ० ४८ )

२ 'साधर्म्यमात्रं गमकतौपयिकम्' इत्यभिमानात् सत्प्रतिपक्षदेशनाऽऽभासोयम् । वार्तिककृतस्तु 'अयमनैकान्तिकदेशनाऽऽभासः' इत्यङ्गीचक्रुः । ( गौ० वृ० ५ । १ । २ )

३ तदर्थश्च—उपसंहारे साध्यस्योपसंहरणे वादिना कृते, तद्धर्मस्य साध्यरूपधर्मस्य यो विपर्ययो व्यतिरेकः, तस्य साधर्म्येण केवलेन व्याप्त्यनपेक्षेण यदुपपादनम्, ततो हेतोः साधर्म्यसम उच्यते, इति । ( गौ० वृ० ५ । १ । २ )

च; तथा चात्मा; तस्मान्निष्क्रियः' इति । न चास्ति विशेषहेतुः 'क्रियावत्साधर्म्यात् क्रियावता भवितव्यम्, न पुनरक्रियसाधर्म्यान्निष्क्रियेण' इति । विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति । (वात्स्या० ५ । १ । २ )

[ ख ] वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते,—प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनम् । यथा—'शब्दोऽनित्यः कृतकत्वाद्धटवत्, व्यतिरेकेण वा व्योमवत्' इत्युपसंहृते,—नैतदेवम्; यद्यनित्यघटसाधर्म्यान्नित्याकाशवैधर्म्याद्वाऽनित्यः स्यात्, नित्याकाशसाधर्म्यादमूर्तत्वान्नित्यः स्यात् । विशेषो वा वक्तव्यः, इति । (गौ० वृ० ५ । १ । २)

[ ग ] साधर्म्येण, स्थापनाहेतुदूषकमुत्तरम् । यथा—'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत्'[1] इति स्थापनायामुत्तरम्—यदि सक्रियसाधर्म्यात्सक्रियस्तदा विभुत्वरूपान्निष्क्रियसाधर्म्यान्निष्क्रिय एव किं न स्यात् । न चात्र किंचिद्विनिगमकमस्ति, इति । ( नील० पृ० ४३ )

**साधर्म्योदाहरणम्**—'अन्वय्युदाहरण' शब्दवदस्यार्थोऽनुसंधेयः ।

**साधर्म्योपनयः**—'अन्वय्युपनय' शब्दवदस्यार्थोऽनुसंधेयः ।

**साधारणः**[2]—१ ( हेत्वाभासः, दुष्टहेतुः ) [ क ] सपक्षविपक्षवृत्तिर्हेतुः[3] । ( भा० प० २ । श्लो० ७४ ) । यथा—'पर्वतो वह्निमान्प्रमेयत्वात्' इत्यादौ,—प्रमेयत्वं हेतुः साधारणः[4] । ( त० सं० )

---

१ क्रियाहेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेव, इति बोध्यम् । ( नील० १ । पृ० ४३ )

२ सचानैकान्तिकप्रभेदः । तल्लक्षणं च वक्ष्यमाणं साधारणत्वमेव, इति बोध्यम् । 'अर्वाञ्चो नैयायिकास्तु, 'साधारणमेव हेतुं 'सव्यभिचार'- पदेन व्यवहरन्ति' इति दीधितिकृदाह । ( दीधि० २ । सव्य० पृ० १८३ )

३ इदं लक्षणं च प्राचीनमतमनुरुध्योक्तम् । अत्र ( प्राचीनमते ), 'साधारणहेतु' ज्ञानेन साध्यसंदेहाद्व्याप्तिग्रहो न भवति, इत्याशयः । ( गौ० वृ० १ । ४८ )

४ अत्र—प्रमेयत्वं हि सपक्षे महानसे, विपक्षे महाह्रदादौ च वर्तते; अतः साधारणः । ( त० सं० ) । एवम्—'पर्वतो धूमवान् वह्नेः' इत्यादावपि,—वह्निर्हि सपक्षे महानसे, विपक्षे तप्तायःपिण्डादौ च, वर्तते; अतः साधारणः । ( त० कौ० २ । पृ० १३ )

[ख] साध्यात्यन्ताभाववति साध्यवदन्यस्मिन्वा वर्तमानो हेतुः । यथा—'शब्दो नित्यो निःस्पर्शत्वात्' इत्यादौ,—निःस्पर्शत्वं साधारणः । (गौ० वृ० १ । ४९) (मु० २ । पृ० १९९) (त० सं०) (वाक्य०)

**साधारणः**—१ (जातिः) नित्यसमविशेषः । स च स्वव्याघातकमुत्तरं भवति । (सर्व० पूर्ण० पृ० ७०–७१) । २ व्यवहारशास्त्रज्ञास्तु,—अनेकस्वत्वकमेकं धनं साधारणम् । यथा[3]—"अलंकारोऽपि यो येन धृतः, स तस्यैव; अधृतः साधारणो विभाज्य एव" (याज्ञ० अ० २ । श्लो० १२२ । मिता० पृ० १६७) इत्यादौ,—'साधारण' शब्दस्यार्थः, इत्याहुः । (अमरः, ३ । १ । ८२) । ३ 'सदृशम्' इति साहित्यशास्त्रज्ञा आहुः । (अमरः, २ । १० । ३७) । ४ 'वेश्यादिनायिका साधारणी' इत्यालंकारिका आहुः । ५ 'कुञ्चिका' इति काव्यज्ञा आहुः ।

**साधारणकारणत्वम्**[4]—(कारणत्वम्) [क] कार्यत्वावच्छिन्नकार्यता-

---

१ इदं लक्षणं तु, नवीनमतानुसारेण पूर्वपक्षीयमुक्तम्, इति विज्ञेयम् । 'एतज्ज्ञानं च, विपक्षवृत्तित्वरूपव्यभिचारविषयकत्वात् व्यभिचारज्ञानविधया व्याप्तिग्रहे प्रतिबन्धकम्;* व्यभिचारज्ञाने सति व्याप्तिग्रहानुदयस्य सुप्रसिद्धत्वात्' इति नव्यानामाशयः, । (त० कौ० २ । पृ० १३) (मु० २ । पृ० १५९)

२ अत्र—निःस्पर्शत्वं हेतुर्हि, अनित्ये रूपादौ वर्तते, इति साधारणो भवति, इति ज्ञेयम् ।

३ अत्रान्यदप्युदाह्रियते—"साधारणं समाश्रित्य यत्किंचिद्वाहनादिकम्" इति । (स्मृतिः)

४ अत्रेदं ज्ञेयम्—अष्टौ साधारणकारणानि,—ईश्वरः, तज्ज्ञाने-च्छा-कृतयः, प्रागभावः, कालः, दिक्, अदृष्टम् (धर्माधर्मौ) च, इति । (वाक्य० १ । पृ० १०) । केचित्तु—प्रतिबन्धकसामान्याभावोऽपि नवमं साधारणकारणमङ्गीचक्रुः । (मु० १ । १)

५ अत्रेदं चिन्त्यम्—कार्यतायां कार्यत्वावच्छिन्नत्वं च कार्यत्वातिरिक्तधर्मानवच्छिन्नत्वम् । तेन, कार्यतायां 'अवच्छेद्यावच्छेदकयोरैक्यम्' इति शङ्कानवकाशः, इति । (स्व०) । अथ वा—अत्रावच्छेदकं (कार्यत्वम्) च, कार्यपदवाच्यत्वं प्रागभावप्रतियोगित्वं वा; अवच्छेद्यं (कार्यत्वम्) तु कारणपश्चाद्भावित्वरूपम् । तेन, अवच्छेद्यावच्छेदकयोर्नाभेदः, इति । (म० प्र० १ । पृ० ५)

---

* तथा च—अनुमिति-तत्करणा-न्यतरप्रतिबन्धकताघटितहेत्वाभाससामान्यलक्षणाक्रान्तत्वं साधारणस्य संभवति, इति भावः ।

निरूपितकारणत्वम् । यथा—ईश्वर-तज्ज्ञानादेः कार्यमात्रे (कार्यत्वावच्छिन्नं प्रत्येव) कारणत्वात् साधारणकारणत्वम् । (वाक्य० १ । पृ० १०) (न्या० बो० १ । पृ० ८)

[ ख ] सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम् । (म० प्र० १ । पृ० ९)

साधारणत्वम्[2]—( हेत्वाभासः, हेतुदोषः ) [ क ] पक्षादित्रय[3]वृत्तित्वम् । यथा—'पर्वतो वह्निमान् प्रमेयत्वात्' इत्यादौ,—प्रमेयत्वस्य[4] साधारणत्वम् । [ ख ] विपक्ष[5]वृत्तित्वम् । ( चि० २ । सव्य० पृ० ८७ )

---

१ अत्र—ईश्वरज्ञानस्य च, ज्ञानत्वेन कार्यत्वेन कार्यकारणभावात्* सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वेन, घटं प्रत्यपि साधारणकारणत्वम् । ( म० प्र० १ । पृ० ५ )

२ तल्लक्षणं च साधारण्यविभाजकमेव; तच्च, [ क ] † प्रकृतसाध्य-साधन-सामानाधिकरण्यग्रहाविरोधिनो ‡ ज्ञानस्य विषयतयाऽन्वयव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम्§ । [ ख ] विशिष्टसाध्यसाधनवत्त्वग्रहाविरोधिनो ज्ञानस्य विषयतया व्यापकत्वग्रहविरोधितावच्छेदकरूपवत्त्वम्, इत्यादि । ( दीधि० २ । साधा० पृ० १६४ )

३ अत्र—पक्षादित्रयं च पक्षः, सपक्षः, विपक्षश्च । तेषु वर्तमानत्वम्, इति विशिष्टस्यार्थः ।

४ अत्र—प्रमेयत्वात्मकहेतोः, पक्षे पर्वते, सपक्षे महानसे, विपक्षे महाह्रदादौ च वर्तमानत्वात्साधारणत्वम्, इति बोध्यम् ।

५ अत्र—[ क ] विपक्षः 'साध्याभाववान्' इति नव्यमतम् । 'विपक्षः 'निश्चितसाध्याभाववान्' इति प्राचीनमतम्' इति विज्ञेयम् । ( दीधि० २ । सव्य० पृ० १९३)

---

* अत्रायमाशयः—'कार्यमात्रं प्रतीश्वरज्ञानादिकं कारणम्' इति कार्यकारणभावः; न तु, 'घटं प्रति दण्डः, 'पटं प्रति तन्तुः कारणम्' इति विशिष्य कार्यकारणभाववत् 'घटादिकं प्रतीश्वरादिकं कारणम्' इति कार्यकारणभावः, इति ।

† समुदितार्थश्च,—विशिष्टसाध्य-विशिष्टसाधन-सामानाधिकरण्यग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशून्यनिश्चयनिष्ठविषयितायां निरूपितत्वसंबन्धेन विशेषणीभूयान्वयव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकरूपवत्त्वम्; 'तादृशप्रतिबन्धकतावच्छेदकीभूततथाविधनिश्चयवृत्तित्वविशिष्टस्वनिरूपितविषयिताकत्वम्;' इति यावत् । ( ग० साधा० )

‡ अत्र—'अविरोधिनः' इत्यन्तेन साध्याप्रसिद्ध्यादीनां निरासः । (दीधि० २ । पृ० १६४)

§ इदमेव साधारण्यविभाजकम् । यद्रूपज्ञानमनुमितिप्रतिबन्धकं तदेव विभाजकम् । (दीधि० २ । पृ० १८८.)

[ ग ]A साध्यात्यन्ताभाववद्वृत्तित्वम्[1]। ( चि० बाध० ) (न्या० बो०)। B साध्यवदन्यवृत्तित्वम्[2]; इत्यादि। यथा—'धूमवान्वह्नेः' इत्यत्र,—धूमवदन्यस्मिन् तप्तायःपिण्डे वह्नेः सत्त्वाद्वह्नेः साधारणत्वम्। ( न्या० म० २। पृ० २० )

[ घ ]A साध्यासमानाधिकरण-स्वसमानाधिकरणत्वम्। यथा—'धूमवान्वह्नेः' इत्यत्र,—वह्नेः[3] साधारणत्वम्। (न्या० म० २। पृ० २०)। B साध्यतावच्छेदके[4] हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वम्[5]। ( ग० सामा० ) ( नील० )। यथा—'पर्वतो वह्निमान्प्रमेयत्वात्' इत्यादौ,—प्रमेयत्वस्य साधारणत्वम्।

**साधारणधर्मः**—१ [ १ ] तदितरवृत्तित्वे सति तद्वृत्तिर्धर्मः। यथा—प्रमेयत्वं गोः साधारणधर्मः। ( स्व० ) यथा वा—'मुखं पद्ममिव सुन्दरम्' इत्यादौ,—सौन्दर्यादिः। [ २ ] 'समानधर्म'शब्दवदस्यार्थोऽनुसंधेयः। २ स्वाभाविकधर्मः। यथा—प्रजासर्जनादि[6]रूपो जन्तुमात्रधर्मः। ३ धर्म-

---

१ पर्यवसितार्थस्तु,—स्वप्रतियोग्यसमानाधिकरण-संबन्धविशेषावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाव-वद्वृत्तित्वम्। ( दीधि० २। बाध० पृ० २२४ )

२ इदं च पूर्वपक्षीयं साधारणत्वम्। ( स्व० ) तच्च 'व्यभिचार' इति व्यवह्रियते। ( दीधि० २। बाध० पृ० २२४ )

३ भवति हि, धूमासमानाधिकरणं यत् (धूमवदन्यत्वम्), तत्समानाधिकरणो वह्निः, इति। ( न्या० म० २। पृ० २० )

४ एतादृशसाधारणत्वस्य हेतुनिष्ठत्वं तु स्वविषयकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकत्वसंबन्धेन बोध्यम्।

५ इदं च सिद्धान्तसिद्धं साधारणत्वम्, इति बोध्यम्। 'अभिधेयत्वं प्रमेयत्वस्य व्यभिचारि' इत्याकारक-भ्रमात्मक-व्यभिचारग्रहस्य व्यापकसामानाधिकरण्यग्रहविरोधितया, तद्विरोधित्वान्यथानुपपत्त्येदं लक्षणं स्वीकार्यम्। तेन, तत्र प्रमेयत्वाभावाप्रसिद्ध्या पूर्वपक्षीयव्यभिचारग्रहासंभवेऽपि न क्षतिः। ( ग० २। सामा० ल० १। पृ० ५–६ )

६ तदुक्तम्—"प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः। तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः" इति। ( मनु० अ० ९। श्लो० ९६ )

अत्र—अग्न्याधानादिरपि स्त्रीपुंसयोः साधारणो धर्मः। ( मनु० टी० कुल्लूक० अ० ९। श्लो० ९६ )

ज्ञास्तु,–ब्राह्मणादिचातुर्वर्ण्यविहितो धर्मः । यथा–अहिंसादिः, इत्याहुः ।

**साधारण्यम्**—साधारणवृत्तिर्धर्मः । तच्च साधारणत्वादि ।

**साधुः**—१ प्रियकारी । यथा—"मातरं प्रैति साधुः" इत्यादौ,–'साधु' शब्दस्यार्थः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ ) । २ यः शब्दो यत्रेश्वरेण संकेतितः, स तत्र साधुः ( संज्ञाविशिष्टः ) । यथा– 'या काचिदोषधिर्नकुलदंष्ट्राग्रस्पृष्टा, सा सर्वाऽपि सर्पविषं हन्ति' इत्येतादृशी संज्ञा ( ईश्वरसंकेतः ), इति । ( वै० उ० २ । १ । १८–१९ । पृ० ९४ ) । ३ शाब्दिकास्तु,—यः शब्दो यस्मिन्नर्थे व्याकरणेन व्युत्पादितः, स तत्र साधुः (प्रयोगार्हः;) । (चि० ४) । स च व्याकरणव्यङ्ग्यसाधुताजात्याश्रयः शब्दः । यथा—"कर्मणि द्वितीया" ( पाणि० २ । ३ । २ ) इत्यादौ,—द्वितीया कर्मार्थे साधुः, इत्याहुः । ४ पौराणिकास्तु,—साधुलक्षणयुक्तो जनः, इत्याहुः । ५ काव्यज्ञाश्च,–

१ "न हिंस्यात्सर्वा भूतानि" ( श्रुतिः ) इत्याचाण्डालं साधारणो धर्मः । (मिता०१।१।पृ०१)

२ तदुक्तम्—"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्" इति । ( याज्ञ० अ० १ । श्लो० १२१ ) ( मनु० अ० १०।श्लो० ६३ )

३ अत्राधिकं च परिशिष्टे 'कर्मप्रवचनीय' शब्दव्याख्यानावसरे संपादयिष्यते ।

४ अत्र—तल्लक्षणं च भ्रमादिजन्यत्वाभावः । ( चि० ४ )

५ अत्र साधुत्वं च, अर्थविशेषे व्याकरणानुशिष्टजातीयत्वम्* । ( म० प्र० ४ )

६ अत्रोक्तम्—"अनपभ्रंशताऽनादिर्वृद्धाऽभ्युदययोग्यता † । व्यक्रियाव्यञ्जनीया वा जातिः काऽपीह साधुता" इति । ( भर्तृ० )

७ तल्लक्षणं तु—( १ ) "न प्रहृष्यति संमाने नापमाने च कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्" इति । ( गरुडपु० ) । ( २ ) यथालब्धेऽपि संतुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः ॥ निर्वैरः सदयः शान्तो दम्भाहंकारवर्जितः । निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते" इत्यादि । ( पद्मोत्त० ख० अ० ९९ )

साध्वीलक्षणं तु—"पतिं या नाभिचरति मनोवाक्कायसंयता । सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते" इति । ( मनु० अ० ९ । श्लो० २९ )

* अत्र—जातीयत्वोपादानान्नाधुनिकचैत्रादिशब्देऽव्याप्तिः । ( म० प्र० ४ )

† तदर्थस्तु,—अनपभ्रंशत्वम्, अनादित्वम्, अभ्युदयसाधनप्रयोगविषयत्वम्, व्याकरणव्यङ्ग्या जातिर्वा साधुता, इति । ( वाच० )

उत्तमकुलजातः; । ६ सुन्दरः; । ७ उचितः; । ८ मुनिः; इत्याहुः । ९ जिनः, इति जैना आहुः । ( हेमच० )

**साध्यम्**—१ [ १ ] साधनीयम् । तच्च [ क ] साध्यत्ववत् । यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ,—वह्निः साध्यम् । ( मु० २ ) । यथा वा—'देवदत्तो मरणशीलो मनुष्यत्वात् यज्ञदत्तवत्' इत्यादौ,—मरणशीलत्वं साध्यम् । (ख०)

[ ख ] व्यवहारशास्त्रज्ञास्तु,—A [ $a$ ] अष्टादशविवादेषु प्रमाणादिनोन्नाव्यः पदार्थः । [ $b$ ] साक्षि-लेख्या-नुमान-रूपक्रियादिना साधनीयं यत्, तत् ( रकम ) । यथा—"ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् । ऊने वाऽभ्यधिके वाऽर्थे प्रोक्ते साध्यं न सिध्यति" ( कात्या० वीरमित्रो० पृ० १२४ ) इत्यादौ,—'साध्य' शब्दस्यार्थः । B साध्यार्हः प्रतिज्ञेयः पक्षः, इत्याहुः । [ २ ] पक्षः । (गौ० वृ० १ । १ । ३७) यथा—"उदाहरणापेक्षस्तथेत्युपसंहारो, न तथेति वा, साध्यस्योपनयः" ( गौ० १ । ३७ ) इत्यादौ,—'साध्य' शब्दस्यार्थः पक्षः । २ शाब्दिकास्तु,—लिङ्गसंख्यानन्वयिनी क्रिया । यथा—'पचति, करोति' इत्यादिक्रिया, इत्याहुः । ३ पौराणिकास्तु,—द्वादशसंख्यको गणदेवता-

---

१ साध्यं च द्विविधम्,—धर्मः, धर्मविशिष्टो वा धर्मी । तत्राद्यो यथा—शब्दस्यानित्यत्वम्, इति । द्वितीयो यथा—अनित्यः शब्दः, इति । ( वात्स्या० १ । १ । ३६ )

२ अत्र साध्यत्वं च वक्ष्यमाणं ( [ १ ] इत्यत्रोक्तम् ) ग्राह्यम् । साध्यलक्षणमपि तदेव, इति ज्ञेयम् ।

३ तदुक्तं बृहस्पतिना—"प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम् । निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः" इति ।
अत्र—साध्यं साध्यार्हम्; प्रत्यर्थिधर्मविशिष्टं धर्मिवचनम्, इति यावत् । ( वीरमित्रो० लेख्य० पृ० ६९ )

४ अत्रोक्तं हरिणा—"साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना" इति । ( वाक्यप० ) शिष्टं तु 'क्रिया'शब्दव्याख्याने द्रष्टव्यम् ।

५ अत्र साध्यत्वं च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्, इति बोध्यम् ।

६ तदुक्तम्—"मनोमन्ता तथा प्राणो नरोऽपानश्च वीर्यवान् । निर्भयो नरकश्चैव दंशो नारायणो वृषः ॥ प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः" इति ।

विशेषः, इत्याहुः । ४ मौहूर्तिकाश्च,–स्वशास्त्रीययत्किंचित्संकेतविषयः । यथा—विष्कम्भादिषु (२७) योगेषु एकविंशो योगविशेषः, इत्याहुः । ५ मान्त्रिकादयस्तु,–स्वानुकूलताग्राहकः पदार्थः (मन्त्रविशेषादिः), इत्यङ्गीचक्रुः ।

**साध्यता साध्यत्वम्**—१ [ १ ] विषयताविशेषः[1][2] । तच्च A [ क ] पश्चावयवसाधनीयत्वम् । ( गौ०वृ० ५ । ४ )
[ ख ] अनुमितिविधेयत्वम् । यथा—'पर्वतो वह्निमान् धूमात्' इत्यादौ,–वह्नेः साध्यत्वम् । ( स्व० ) । B सिद्धिकर्मत्वम्[3] । ( त० प्र० ) ( दि० गु० ) यथा–'पर्वतो वह्निमान्' इति निश्चयविषयत्वं वह्नेः ।
[ ग ] वेदान्तिनस्तु,—यत्प्रतीतिर्लिङ्गेन जनयितव्या, स साध्यधर्मः, इत्याहुः । ( प्र० च० पृ० २३ ) । [ २ ] इच्छाविषयताविशेषः । यथा—'घटो जायताम्' इत्यत्र घटीया साध्यताख्या विषयता । यथा वा—'पाकः साध्यताम्' इतीच्छाविषयत्वम् । ( स्व० ) । २ अनन्तरभविष्यत्वम् । (त० प्र० ४ । पृ० १०२) यथा—यागस्य कृतिसाध्यत्वम्[4] । यथा वा—घटादेर्दण्डचक्रादिघटितसामग्रीसाध्यत्वम् । (स्व०)

**साध्यताघटकसंबन्धः**—येन संबन्धेन साध्यता विवक्ष्यते, स संबन्धः।यथा—पर्वतादौ संयोगेन वह्न्यादिसाधने,–संयोगसंबन्धः साध्यताघटकसंबन्धः । यथा वा–'तमः समवायेन गगनवत्' इत्यादौ,–समवायसंबन्धः । (दीधि०) (ग० संश०पक्ष० पृ० ९) । एवम्–प्रतियोगितावच्छेदकसंबन्धा-नुयोगितावच्छेदकादिसंबन्धाः स्वयमूह्याः । ( स्व० )

---

१ अत्रोक्तम्—"सिद्धः साध्यः सुसिद्धोऽरिः (?) क्रमाज्ज्ञेया मनीषिभिः" इति । (वाच०)
२ स च 'साधयामि साध्यविशेषं ( वह्न्यादिकम् )' इति प्रतीत्या गम्यते, इति विज्ञेयम् ।
३ कर्मत्वं चात्र विषयत्वम् । ( दि० गु० )
४ अत्रेदं बोध्यम्—साध्यत्वं चासिद्धधर्मः; भाविकालवृत्तिधर्मः, इत्यर्थः । साधनत्वं तु सिद्धो धर्मः; पूर्वकालवृत्तिधर्मः, इत्यर्थः । (त० प्र० ख० ४ । पृ० १०२)

**साध्यतावच्छेदकम्**[1]—येन धर्मेण, सबन्धेन वा, साध्यताऽवच्छिद्यते, सः[2] । यथा—पर्वते संयोगसंबन्धेन वह्नेः साधने ( 'पर्वतः संयोगेन वह्निमान्'[3] इत्यादौ ),—वह्नित्वं संयोगश्च साध्यतावच्छेदकः[4] । ( स्व० )

**साध्यतावच्छेदकसंबन्धः**—'साध्यताघटकसंबन्ध' शब्दवदस्यार्थोऽनुसंधेयः ।

**साध्यप्रसिद्धिः**—[ १ ] 'सिद्धि' शब्दवदस्यार्थोऽनुसंधेयः । [ २ ] साध्यस्य ज्ञानम् ।

**साध्यसंसृष्टत्वज्ञानम्**— [ १ ] 'सिद्धि'[5] शब्दवदस्यार्थोऽनुसंधेयः । (स्व०) । [ २ ] साध्यसंबन्धविषयकं ज्ञानम् । (मु० २ । पृ०१६४)

**साध्यसमः**[6]—( हेत्वाभासः, असिद्धः ) साध्याविशिष्टः[7] साध्यत्वात्साध्यसमः । ( गौ० १ । २ । ८ ) । द्रव्यं छायेति साध्यम्, गतिमत्त्वादिति हेतुः । साध्येनाविशिष्टः साधनीयत्वात्साध्यसमः । अयमप्यसिद्धत्वात् साध्यवत्प्रज्ञापयितव्यः । साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति ?, आहोस्विदावरकद्रव्ये संसर्पत्यावरणसंता-(संनिधा) नादसंनिधिसंतानोऽयं तेजसो गृह्यत इति ? । सर्पता •खलु द्रव्येण यो यस्तेजोभाग आव्रियते

---

१ अत्र व्युत्पत्तिः,—'साध्यतामवच्छिनत्ति ( विशेषयति )' ( ण्वुल् ) इति ।

२ अत्र—साध्यतावच्छेदकत्वं च स्वरूपसंबन्धविशेषः, विषयताविशेषो वा 'अवच्छेदकत्व' शब्दव्याख्याने द्रष्टव्यः ।

३ अत्र—वह्निः साध्यः, तन्निष्ठां साध्यतां वह्नित्वं संयोगश्चावच्छिनत्ति, । इति ज्ञेयम् ।

४ एवम्—'कारणतावच्छेदक-कार्यतावच्छेदके, लक्ष्यतावच्छेदक-लक्षणतावच्छेदके, उद्देश्यतावच्छेदक-विधेयतावच्छेदके, प्रतियोगितावच्छेदका-नुयोगितावच्छेदके,' इत्यादयः शब्दा यथायोग्यं व्याख्येयाः, इति ।

५ अयमर्थो, गदाधर्यो पक्षतायां सिद्धिग्रन्थे तत्रत्यशब्दार्थसंकलनवेलायामुपयुज्यते ।

६ अत्रोच्यते—"असिद्धः* साध्यतुल्यत्वाद्धेतुः साध्यसमो भवेत्" इति । (ता०र०श्लो०८३)

७ तदर्थश्च,—साध्येन वह्न्यादिनाऽविशिष्टः । कुत इत्यत आह—साध्यत्वादिति; साधनीयत्वादित्यर्थः । यथा हि साध्यं साधनीयम्, तथा हेतुरपि चेत् 'साध्यसमः' इत्युच्यते । अत एव च 'असिद्धः' इति व्यवह्रियते । ( गौ० वृ० १ । ४८ ) । विभागादिकं तु 'असिद्ध' शब्दव्याख्याने द्रष्टव्यम् ।

---

* अत्र,—व्याप्तस्य पक्षधर्मताप्रतीतिः 'सिद्धि' शब्दार्थः । ( ता० र० श्लो० ८४ )

तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः। ( वात्स्या० ३ । २ । ८ । )

**साध्यसमः**[1]—( जातिः ) [ क ] साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वात्[2]साध्यसमः । ( गौ० ५ । १ । ४ ) । हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः; तं दृष्टान्ते प्रसजतः साध्यसमः । (यथा—'आत्मा सक्रियः क्रियाहेतुगुणयोगात्' इत्यादौ),—यदि यथा लोष्टस्तथाऽऽत्मा प्राप्तस्तर्हि यथाऽऽत्मा तथा लोष्ट इति, साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः । अथ नैवम् । न तर्हि यथा लोष्टस्तथाऽत्मा । ( वात्स्या० ५ । १ । ४ )

[ ख ] पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यता[3]पादनम् । (गौ० वृ० ५।४)

[ ग ] दृष्टान्तस्य पक्षतुल्यता[4]कथनं साध्य[5]समः । यथा—'आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात्' इत्यादौ,–यदि यथा लोष्टस्तथाऽऽत्मेति त्वयोच्यते, तदा यथाऽऽत्मा तथा लोष्ट इत्यप्यायातम् । तथा च–यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेऽपि तत्साधनीयम् । नेति चेत्तर्हि यथा लोष्टस्तथाऽऽत्मेति न वाच्यम्; 'लोष्टसदृश आत्मा, नात्मसदृशो लोष्टः' इत्यत्र नियामकाभावादिति । ( नील० १ । पृ० ४३ )

---

१ आश्रयासिद्ध्यादिदेशनाभासोऽयम्, इति ज्ञेयम् । ( गौ० वृ० ५ । ४ )

२ सूत्रार्थस्तु,—उभयसाध्यत्वात्,—उभयं पक्षदृष्टान्तौ, तद्धर्मो हेत्वादिः, तत्साध्यत्वं तदधीनानुमितिविषयत्वम् । साध्यस्येव पक्षादेरपीति तुल्यतापादनमिति, लिङ्गोपहितभानमते लिङ्गस्यानुमितिविषयत्वात् साध्यसमत्वम्, हेतोश्च साध्यत्वे हेतुमान्दृष्टान्तोऽपि साध्यः, इत्याशयः । ( गौ० वृ० ५ । ४ )

३ तत्रायमाशयः—एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम् । तथा च—पक्षादेरनुमितिविषयत्वात्साध्यवदेतत्प्रयोगसाध्यत्वम्; अतः साध्यसमा । तथा हि—पक्षादेः पूर्वं सिद्धत्व एतत्प्रयोगसाध्यत्वाभावान्नानुमितिविषयत्वम् । पूर्वमसिद्धत्वे पक्षादेरज्ञानादाश्रयासिद्ध्यादयः । ( गौ० वृ० ५ । ४ )

४ तथा चोक्तम्—"दृष्टान्तहेतुपक्षाणां* सिद्धानामपि साध्यवत् । साध्यत्वापादनं तस्माल्लिङ्गात्साध्यसमो भवेत्" इति । ( ता० र० २ । श्लो० ११० )

५ 'साध्य' शब्दोऽत्र पक्षवाची । ( नील० पृ० ४३ )

---

* यथा वा—"नाभिधासमयाभावात्" ( काव्यप्र० २ । २२ ) इत्यत्र,—नैयायिकमते साध्यसमः । मीमांसकमते नायं दोषः; अभिधासमययोर्भेदात् ।

**साध्याप्रसिद्धिः**—( हेतुदोषः, असिद्धिः ) साध्ये साध्यतावच्छेदकस्याभावः । यथा—'पर्वतः काञ्चनमयवह्निमान् धूमात्' इत्यादौ,—वह्निनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः । ( गौ० वृ० १ । ४८ ) ( मु० २ । पृ० १६१ ) ( नील० ) ( न्या० म० २ । पृ० २१ ) (म० प्र० २ । पृ० २७ ) ( वै० वि० ३ । १ । १९ )

**सापिण्ड्यम्**—'सपिण्डता'शब्दवदस्यार्थोऽनुसंधेयः ।

**सापेक्षत्वम्**—१ 'असामर्थ्य' शब्दवदस्यार्थोऽनुसंधेयः । २ अभिलाषविशिष्टत्वम्, इति काव्यज्ञा आहुः ।

**साम**—१ [ १ ] वेदविशेषः । यथा—"अग्न आयाहि वीतये" इत्यादिः । [ २ ] सामवेदोक्तामृचमधिकृत्य गेयो गानविशेषः । यथा—"अग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि" इत्यस्या ऋचो गानं च—'ओग्ना इ, आयाही ३, वीइतोया २ इ, तोया २ इ, गृणानोह, व्यदातो २ इ, तोया २ इ; ना इहोतासा २३, त्सा २ इ, वा २३४ औहोवा, ही २३४ षी' इति । ( छन्द आर्चिकः१।१।१।१ ) २ नीतिशास्त्रज्ञास्तु,—राज्ञ उपायविशेषः, इत्याहुः। ३ शत्रुवशीकरणोपायः, इति मान्त्रिका आहुः । ४ पशुबन्धनरज्जुः । ५ प्रियवाक्यादिना सान्त्वनं च, इति काव्यज्ञा आहुः । ( वाच० )

---

१ स च व्याप्यत्वासिद्धिप्रभेदः । ( गौ० वृ० १ । ४८ ) ( मु० २ । पृ० १६१ ) ( वै० वि० ३ । १ । १५)

तल्लक्षणं च, साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहिग्रहविरोधिग्रहविषयत्वम् ।

२ एतज्ज्ञाने जाते,—साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः फलम् । तथा च—प्रतिबन्धकताघटितहेत्वाभाससामान्यलक्षणाक्रान्तत्वं साध्याप्रसिद्धेः संगच्छते, इति ।

३ अधिकं तु 'वेद' शब्दव्याख्याने द्रष्टव्यम् ।

४ अत्र प्रमाणम्—( १ ) "ऋच्यध्यूढं साम गीयते" इति (छान्दो० उ० १ । ६ । १)। ( २ ) "तस्मात्तिसृभिस्तुवन्ति तिसृभिरुद्गायन्ति तिसृभिर्हि साम संमितम्" इत्यादि ( ऐतरे० ब्रा० ३ । २३ )

५ इदं साम द्विविधम्,—तथ्यम्, अतथ्यं च । तत्र तथ्येन साम्ना साधुजनः साध्यः । अतथ्यं तु सामासाधुषु प्रयोक्तव्यम्, इति । ( मत्स्यपु० अ० २२१ ) । अधिकं तु शुक्रनीतिपरिशिष्टादौ विज्ञेयम् ।

**सामग्री**—कार्यायोगव्यवच्छिन्नः कारणसमुदायः । यथा—प्रत्यक्षस्य सामग्री इन्द्रियसंनिकर्षादिः; अनुमितेः सामग्री व्याप्तिज्ञान-परामर्शादिः; । यथा वा—घटादिकार्यस्य सामग्री दण्डचक्रादिः; पटादिकार्यस्य च तन्तु-तुरीसंयोग-कुलालादि-घटितसामग्री ।[1]

**सामयिकोभावः**—[ १ ] 'अत्यन्ताभाव' शब्दवदस्यार्थोऽनुसंधेयः । ( त० दी० ४ ) । [ २ ] केचित्तु,—'उत्पादविनाशशाली, अत्यन्ताभावादतिरिक्तोऽयमभावः' इति यदाहुः (वै० वि० ९ । १ । ५); तन्न[2][3]

---

१ अत्रेदं विज्ञेयम्—( १ ) समाने विषये,* प्रत्यक्षानुमितिसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला; भिन्नविषये तु,†अनुमितिसामग्री प्रबला । ( २ ) समानविषये प्रत्यक्षशाब्दसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला; भिन्नविषये तु, शाब्दसामग्री प्रबला । ( ३ ) समानविषये, अनुमितिशाब्दसामग्र्योर्मध्ये शाब्दसामग्री प्रबला; भिन्नविषये तु, अनुमितिसामग्री प्रबला । ( ४ ) मानस-लौकिक-प्रत्यक्षसामग्र्योर्मध्ये लौकिकप्रत्यक्षसामग्री प्रबला; मानससामग्री तु सर्वापेक्षया दुर्बला । परं तु—यदा फलविषयिणीच्छाऽस्ति तदा तत्रत्या दुर्बलापि सामग्री प्रबला भवति, इति विज्ञेयम् । ( त० प्र० ४ )

२ तदर्थश्च, ( १ ) 'सामयिकः समयविशेषे (प्रतियोगिविरहसमये) प्रतीयमानः, अभावोऽत्यन्ताभावः सामयिकाभावः' इति । ( नील० पृ० ४१ ) । ( २ ) धर्मशास्त्रज्ञास्तु 'सामयिक' पदमेवं व्याचक्षुः—समयः कालः, नियमो वा; तत्र भवः, उचितो वा ( ठञ् ) सामयिकः; तथा च—"निजधर्माविरोधेन यस्तु सामयिको भवेत्" इति स्मृत्या नियमबद्धः, इत्यर्थः, इति ।

३ अत्रेदमाकूतम्—'यत्र भूतले पूर्वं घटादिकं स्थितमथापसारितं तत्रायमभावः ( चतुर्थः संसर्गाभावः ) प्रतीयते, नात्यन्ताभावः' इति । ( वै० वि० ९ । १ । ५ ) ।
अयमभिप्रायः—[ क ] सामयिकाभावस्यात्यन्ताभावस्वरूपत्वाङ्गीकारेऽत्यन्ताभावस्य तु नित्यत्वे,

---

* अत्र कार्योत्पत्तिनिर्वाहाय सामग्र्योः प्रबलदुर्बलभावश्चिन्त्यते—समाने विषये, प्रत्यक्षानुमितिसामग्र्योर्मध्ये प्रत्यक्षसामग्री प्रबला यथा—'यत्र पर्वतादौ वह्न्यादिप्रत्यक्षजनिकायाश्चक्षुःसंनिकर्षादिघटितसामग्र्याः, तत्रैव वह्न्यनुमितिजनिकायाः परामर्शादिघटितसामग्र्याश्च युगपत्सत्त्वे 'प्रबलेन दुर्बलस्य बाधः' इति न्यायेन पूर्वोक्तप्रत्यक्षसामग्र्या, पर्वतादौ वह्निप्रत्यक्षमेवोत्पद्यते; न त्वनुमितिः' इत्यनुभवसिद्धः सिद्धान्तः । एवमग्रेऽप्यूह्यम् ।

† भिन्ने विषये तु, प्रत्यक्षानुमितिसामग्र्योर्मध्येऽनुमितिसामग्री प्रबला यथा—भूतलादौ घटादिप्रत्यक्षजनिकायाः घटचक्षुःसंयोगादिरूपायाः, पर्वतादौ तु वह्न्याद्यनुमितिजनिकाया व्याप्तिज्ञानादिघटितायाश्च सामग्र्या युगपत्सत्त्वेऽनुमितिसामग्र्याः प्राबल्येन तया, पर्वतादौ वह्न्याद्यनुमितिरेवोपपद्यते; न तु घटवद्भूतलादिप्रत्यक्षम्, इति । एवमग्रेऽप्यूह्यम् ।

सहन्ते नैयायिकाः; तथा हि—A यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च, तत्र ( घटानयनानन्तरमपि; अत्यन्ताभावस्य नित्यत्वेऽपि च ) घटकालस्य संबन्धीघटकत्वात् ( संबन्धाभावात् ) घटकाले न 'घटात्यन्ताभाव' बुद्धिः। ( दि० १। पृ० ४३ )। B घटाभाववति घटानयनेऽत्यन्ताभावस्यान्यत्र गमनाभावेऽप्यप्रतीतेः, घटापसरणे सति तु प्रतीतेश्च, भूतले घटसंयोगप्रागभाव-ध्वंसयोर्घटाभावप्रतीतेर्नियामकत्वं कल्प्यते; घटवति तत्संयोगप्रागभाव-ध्वंसयोरसत्त्वादत्यन्ताभावस्याप्रतीतिः, घटापसरणे च संयोगध्वंससत्त्वात् प्रतीतिः, इति। ( त० दी० पृ० ४१ )

**सामर्थ्यम्**—१ [ १ ] यत्किंचित्कार्यजननयोग्यत्वम्। ( दीधि० २। पृ० २०९) तच्च यथा—A "साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यकलिङ्गत्वम्" ( चि० २। पृ० ९४ ) इत्यादौ ग्रन्थे,–'समर्थ' शब्दार्थघटकम्, विरोधिपरामर्शस्य विरोध्यनुमितिजननयोग्यत्वरूपं सामर्थ्यम् ( ख० ) [ २ ] क्वचित्, आकाङ्क्षायोग्यतादिमत्त्वम्। ( गौ० वृ० २। ९२ ) यथा—आप्तोक्तस्य वचनस्य सामर्थ्यम्। ( वात्स्या० २। १। ९० )। २ समासाघटकपदनिराकाङ्क्षत्वे सति परस्परसमासघटकपदसाकाङ्क्षत्वम्। ( कृष्णं० )। यथा—'राजपुरुषः' इत्यादौ,–राजपदपुरुषपदयोः सामर्थ्यम्। एतच्च सामर्थ्यं द्वि-

---

भूतलादौ कदाचिदपि घटसत्त्वेन तदपसरणदशायां तदत्यन्ताभावबुद्ध्यनुपपत्तिः; तथाविधात्यन्ताभावस्याप्रतीयमानत्वात्, अतस्तदतिरिक्तोऽभावोऽङ्गीकार्यः, इति। ( ख० )। [ ख ] भूतलादौ घटसत्त्वदशायां न तदभाववत्ताबुद्धिः; अन्यदा तु जायते; अतः सामयिकाभावोऽतिरिक्त एवाङ्गीकर्तव्यः, इति। ( नील० पृ० ४१ )

१ तथा चायं भावः—[ क ] कालविशेषविशिष्टस्वरूपस्य संसर्गत्वोपगमादेव घटवति 'घटो नास्ति' इति प्रतीत्यभावोपपत्तौ चतुर्थसंसर्गाभावे मानाभावः, इति। ( दि० १। पृ०४३) [ ख ] घटाद्यनधिकरणकालावच्छिन्नभूतलादेरेव घटाभावादेः संसर्गतया, घटकाले च तच्छून्यकालविशिष्टभूतलादिरूपसंसर्गस्याभावेन तदा न तदत्यन्ताभावबुद्धिः, इति। ( नील० )

२ एवमेव तत्र तत्र सामर्थ्यं स्वयमूह्यम्।

विधम्[1],—व्यपेक्षा[2]रूपम्, एकार्थीभाव[3]श्चेति । शिष्टं तु 'समास' शब्दव्याख्याने दृश्यम् ।

**सामानाधिकरण्यम्**—१ [ १ ] [ क ] तदधिकरणवृत्तित्वम्[4] । यथा—वह्निधूमयोः[5] सामानाधिकरण्यम् । ( स्व० )

[ ख ] तद्वदनुयोगिक[6]प्रतियोगित्वम् । (ग० २। व्याप्तिनि० सिद्धान्तल०)। यथा—द्रव्यत्व-पृथिवीत्व[7]योः सामानाधिकरण्यम् । ( स्व० ) [ २ ] स्वावच्छेदकीभूतो यः कालस्तदवच्छिन्ना या स्वविशिष्टनिरूपिता यत्किंचि[8]द्व्यक्तिनिष्ठाऽऽधेयता, सा । यथा—यदा सिषाधयिषा नासीत्परं सिद्धिरासीत्तदा सिद्धि-सिषाधयिषाविरहयोः सामानाधिकरण्यम् । २ [ क ]

---

१ अयं च शाब्दिकविभागः, इति बोध्यम् ।

२ व्यपेक्षा च स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात्परस्परं संबन्धवत्त्वे सत्येकोपस्थितिजनकत्वम्, इति ।

३ तदर्थश्च, विशेषणविशेष्यभावावगाह्येकोपस्थितिजनकत्वम्, इति ।

४ इदं सामानाधिकरण्यं द्विविधम्,—दैशिकम्, कालिकं चेति । तत्र दैशिकं सामानाधिकरण्यं यथा—वह्निधूमयोः सामानाधिकरण्यम् । कालिकं सामानाधिकरण्यं तु यथा—एककालावच्छेदेन वर्तमानयोः ( विभिन्नदेशाधिकरणकयोरपि ) घट-पटयोः सामानाधिकरण्यम्, इति विज्ञेयम् ।

५ अत्रेदं प्रसङ्गतो विज्ञेयम्—अनुमितेः सामानाधिकरण्यमात्रावगाहित्वं च [ क ] पक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपित-शुद्ध*साध्यतावच्छेदकसंबन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नविधेयता-कत्वम् । यथा—'पर्वतो वह्निमान्' इत्याकारकानुमितेः, वह्निपर्वत[illegible] सामानाधिकरण्यमात्रविवक्षायाम् ( तयोरवच्छेद्यावच्छेदकभावाविवक्षायाम् ) सामानाधिककरण्यमात्रावगाहित्वम् । [ ख ] प्राञ्चस्तु,—पक्षतावच्छेदकाक्रान्तयत्किंचिद्व्यक्तिविषयकत्वं सामानाधिकरण्यमात्रावगाहित्वम्, इत्याहुः । ( ग० २ । पक्ष० पृ० ९० )

६ प्रतियोगितासंबन्धेन तद्वदनुयोगिकवत्त्वम्, इत्यर्थः । ( ग० २ । व्याप्ति० सिद्धा० )

७ तथा हि—द्रव्यत्ववान् ( घटः ), तदनुयोगिकः ( घटे पृथिवीत्वस्य समवायाख्यः संबन्धः ), तत्प्रतियोगित्वं पृथिवीत्वेऽस्ति, इति ।

८ इदं च 'एकक्षणावच्छिन्नसामानाधिकरण्यम्' इत्युच्यते ।

---

* अत्र—साध्यतावच्छेदकसंबन्धे शुद्धत्वं च, पक्षतावच्छेदकव्यापकत्वानवच्छिन्नत्वम्, इति बोध्यम् ।

अभेदान्वयबोधकत्वम् । यथा—'नीलो घटः' इत्यादौ,—नीलपद-घटपदयोः सामानाधिकरण्यम् । ( स्व० )

[ ख ] शाब्दिकास्तु,—A पदयोरेकार्थाभिधायित्वम् । B समानविभक्तिकत्वम् । यथा—'नीलो घटः' इत्यादौ,—नीलपद-घटपदयोः सामानाधिकरण्यम्, इत्याहुः । ( वै० सा० द० )

**सामान्यम्**—१ [ १ ] ( पदार्थः ) [ क ] या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तम्, तत्सामान्यम् । ( वात्स्या० २ । २ । ७१ ) ( प्रशस्त० १ । पृ० २ ) ( त० भा० )

[ ख ] नित्यत्वे सति स्वाश्रयान्योन्याभावसमानाधिकरणम् ।

[ ग ] नित्यत्वे सत्यनेकसमवेतम् । सामान्यं द्विविधम्,—परम्, अपरं

१ अत्र व्युत्पत्तिः,—'समानानां भावोऽनागन्तुको नित्यो धर्मः सामान्यम्' इति । ( प० मा० ) तच्च द्रव्य-गुण-कर्म-वृत्ति नित्यं चेति बोध्यम् ।

सामान्यलक्षणं च, [ क ] "सामान्यं नित्यमेकं स्यादनेकसमवायि च" इति । ( ता० र० श्लो० ५१ ) । [ ख ] अनुगतधर्मत्वम् ।

२ अत्र सूत्रम्—"सामान्यं विशेष* इति बुद्ध्यपेक्षम्" इति । ( वै० १ । २ । ३) । तथा च भाष्यम्—द्विविधं सामान्यम्,—परम्, अपरं च । स्वविषयसर्वगतम्, अभेदात्मकम्, अनेकवृत्ति, एकद्विबहुष्वात्मस्वरूपानुवृत्तिप्रत्ययकारणम्, ( स्वरूपाभेदेनाधारेषु प्रबन्धेन वर्तमानम्, अनुवृत्तिबुद्धिकारणम् ) । कथम् ? । प्रतिपिण्डं सामान्यापेक्षप्रबन्धज्ञानोत्पत्तावभ्यासप्रत्ययजनितात्संस्कारादतीतज्ञानप्रबन्धप्रत्ययावेक्षणाद्यदनुगतमस्ति तत्सामान्यम्, इति । तत्र सत्ता परं सामान्यमनुवृत्तिप्रत्ययकारणमेव । यथा—परस्परविशिष्टेषु चर्मवस्त्रकम्बलादिष्वेकस्मान्नीलद्रव्याभिसंबन्धात् 'नीलम्, नीलम्' इति प्रत्ययानुवृत्तिः । तथा—परस्परविशिष्टेषु द्रव्यगुणकर्मस्वविशिष्टा 'सत्, सत्' इति प्रत्ययानुवृत्तिः । सा चार्थान्तराद्भवितुमर्हतीति यत्तदर्थान्तरं सा सत्ता, इति सिद्धा सत्ता । सत्तासंबन्धात् 'सत्' इति प्रत्ययानुवृत्तिः । तस्मात्सत्ता सामान्यमेव ।

* तदर्थश्च—सामान्यं परम्, विशेषोऽपरं सामान्यम्, इति द्वयं बुद्ध्यपेक्षम्; बुद्धिरपेक्षा लक्षणं यस्य तत् । तथा च—सामान्यं द्विविधम्,—परम्, अपरं च । तत्र परसामान्यं सत्ता, द्रव्यत्वादिकमपरसामान्यम् । तत्र,—सामान्यविशेषयोः परापरयोर्लक्षणं बुद्धिरेव; अनुवृत्तत्वबुद्धिः सामान्यस्य, व्यावृत्तत्वबुद्धिर्विशेषस्य लक्षणम् । अनुवृत्तत्वमधिकदेशवृत्तित्वम् । व्यावृत्तत्वमल्पदेशवृत्तित्वम् । ( वै० वि० १ । २ । ३ । पृ० ५१–५२ )

चेति । तत्र—परं[1] सत्ता; महाविषयत्वात् । अपरं[2] द्रव्यत्व-गुणत्व-कर्मत्वादि;[3] अल्पविषयत्वात्; तच्च व्यावृत्तेरपि हेतुत्वात् सामान्यं सत्, विशेषाख्यामपि लभते । ( प्रशस्त० १ । पृ० २ ) ( वै० उ० १ । २ । ३ ) ( सर्व० औलू० ) ( मु० १ ) ( त० सं० ) । [ २ ] यत्किंचि… धिकरणवृत्तिपदार्थमात्रम् । यथा—'सामान्यलक्षणः संनिकर्षः' इ… दौ,—'सामान्य'शब्दार्थः । इदं सामान्यं द्विविधम्,—अखण्डम्, सखण्डं चेति । तत्र—अखण्डम्, साक्षात्संबद्धं सामान्यम् 'जातिः' इत्युच्यते । यथा—सत्ता-द्रव्यत्व-कर्मत्वादि । सखण्डं तु, परंपरया संबद्धं सामान्यम्…

---

अपरं द्रव्यत्व-गुणत्व-कर्मत्वादि; अनुवृत्ति-व्यावृत्ति-प्रत्ययहेतुत्वात् सामान्यं विशेषश्च भवति । तत्र द्रव्यत्वं परस्परविशिष्टेषु पृथिव्यादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, गुणकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा—गुणत्वं परस्परविशिष्टेषु रूपादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, द्रव्यकर्मभ्यो व्यावृत्तिप्रत्ययहेतुत्वाद्विशेषः । तथा—कर्मत्वं परस्परविशिष्टेषूत्क्षेपणादिष्वनुवृत्तिप्रत्ययहेतुत्वात् सामान्यम्, द्रव्यगुणेभ्यो व्यावृत्तिहेतुत्वाद्विशेषः । एवम्—पृथिवीत्व-रूपत्वो-त्क्षेपणत्व-गोत्व-पटत्वादीनां प्राण्यप्राणिगतानामनुवृत्ति-व्यावृत्ति-प्रत्ययहेतुत्वात् सामान्यविशेषभावः सिद्धः । तानि द्रव्यत्वादीनि प्रभूतविषयत्वात् प्राधान्येन सामान्यानि, स्वाश्रयविशेषकत्वाद्भक्त्या विशेषाख्यानि, इति लक्षणभेदादेषां द्रव्यगुणकर्मभ्यः पदार्थान्तरत्वं च सिद्धम् । ( प्रशस्त० सामान्यनि० पृ० ६३–६४ )

१ परत्वं चात्र व्यापकत्वम्, तच्च [ क ] अधिकदेशवृत्तित्वम् * । [ ख ] स्वरूपतः सर्वदेशसंबद्धत्वम् । ( वै० उ० १ । २ । ३ )

तथा हि—सत्ताया द्रव्यादित्रितयवृत्तित्वेन इतरसामान्यापेक्षयाऽधिकदेशवृत्तित्वात् परत्वं ज्ञेयम् । ( त० कौ० ) । सा चानुवृत्तेरेव हेतुत्वात्सामान्यमेव । ( प्रशस्त० पृ० २ )

अत्रेदमधिकं विज्ञेयम्—सत्ता-गुणत्वे च सर्वेन्द्रियग्राह्ये, समवायोऽभावश्च, इति । ( न्यायवा० १ । १ । १३ । पृ० ७६ ) । नव्याः पुनरिमां सत्तां नाङ्गीकुर्वन्ति, इति ।

२ अपरत्वं चात्र न्यूनदेशवृत्तित्वम्; तच्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् । (ल० व०…

३ तथा हि—द्रव्यत्वादीनां सत्तापेक्षयाऽल्पदेशवृत्तित्वादपरत्वं बोध्यम् ।

४ अत्र सूत्रम्—"द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च" इति । ( वै० १ । २ । …
तथा च—द्रव्यत्वादीनां सत्तापेक्षयाऽल्पदेशवृत्तित्वादपरत्वम्, पृथिवीत्वाद्यपेक्षयाऽधिकदेशवृत्तित्वात्परत्वम्; एवं च—परत्वमपरत्वं च तेषां विज्ञेयम् । ( मु० १ । १ )

५ अत्रार्थे व्युत्पत्तिः—'समानानां भावः सामान्यम्' इति । ( मु० १ । पृ० १२९ )

---

* तच्च स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम् । ( ल० व० पृ० ३८ )

'उपाधिः' इत्युच्यते । यथा—प्रमेयत्व-ज्ञेयात्वादि, दण्डित्व-कुण्डलित्वादि च । अयं च ( उपाधिः ) पदार्थमात्रवृत्तिः । ( प्र० प्र० ) ( दीधि० २ । पृ० ८१ ) ( त० कौ० पृ० २० ) इदं सामान्यं क्वचिन्नित्यं धूमत्वादि; क्वचिच्चानित्यं घटादि, इति । ( मु० १ । पृ० १२९ )। [ ३ ] साधारणो व्यापको वा धर्मः । यथा—"द्रव्यसामान्यलक्षणम्, 'हेत्वाभाससामान्यनिरुक्तिः" इत्यादौ,—'सामान्य'शब्दार्थः । २ 'सर्व' शब्दवदस्यार्थोऽनुसंधेयः । यथा—"प्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्व-एतदुभयाभावः" ( दीधि० ) ( मु० २ । व्याप्तिनि०) इत्यादौ,—'सामान्य'शब्दस्यार्थः । ३ साहित्यशास्त्रज्ञास्तु,—सादृश्यप्रयोजको धर्मः । यथा—'मुखं पद्ममिव सुन्दरम्' इत्यादौ,—सौन्दर्यादि साधारणधर्मः सामान्यम्, इत्याहुः । ४ मीमांसकाश्च,—अधिकविषयकम् । यथा—'ब्राह्मणाय दधि दीयताम्, कौण्डिन्याय तक्रम्' इत्यादौ,—दधिदानमधिकब्राह्मणविषयकत्वेन सामान्यम्, इत्याहुः । ५ आलंकारिकास्तु,—अलंकारविशेषः, इत्याहुः ।

१ इदमत्राकूतम्—प्रमात्वमेव हि परंपरासंबन्धेन ( स्वाश्रयविषयत्वसंबन्धेन ) घटादिनिष्ठं प्रमेयत्वरूपम्, इति प्रमात्वान्नातिरिक्तं प्रमेयत्वम् । एवम्—दण्डत्वमेव परंपरासंबन्धेन ( स्वाश्रयदण्डसंयोगसंबन्धेन) पुरुषादिनिष्ठं दण्डित्वरूपम्, इति दण्डित्वादि दण्डत्वान्नातिरिक्तम्, इति । ( त० कौ० पृ०२० )

'सर्वासु प्रतियोगितासु' इत्यर्थः। तथा चात्रायं नियमोऽनुसंधेयः—'सामान्यादि'पदं स्वसमभिव्याहृतपूर्वपदार्थतावच्छेदकव्यापकत्वमुत्तरपदार्थे, उत्तरपदार्थतावच्छेदके वा भासते' इति । तेन, प्रतियोगितात्वव्यापकत्वमुभयाभावे बोध्यते, इति विज्ञेयम् ।

३ अत्रेदमधिकं विज्ञेयम्—सामान्यशास्त्रं च विशेषशास्त्रेण* बाध्यते । यथा—"मा हिंस्यात्सर्वा भूतानि" इति हिंसानिषेधः सर्वविषय; "वायव्यँश्वेतमालभेत" इत्यादि हिंसाशास्त्रं विशेषः । तेन,—सामान्यशास्त्रं वैधेतरविषय एव प्रसरति, इति ।

४ तदुक्तम्—"सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः" इति । (सा० द० परि० १०। श्लो० ७४५ । पृ० २४९ )

* अत्र—'बाध्य-बाधक-भावस्तु समान एव विषये, न तु भिन्ने विषये प्रवर्तते' इति नियमो द्रष्टव्यः ।

**सामान्यगुणत्वम्**—[ क ] रूप-स्पर्शान्यत्वे सति, द्रव्यविभाजकोपाधि-व्याप्यतावच्छेदक-संयोगविभागवेगद्रवत्वावृत्ति-जातिशून्यगुणत्वम् । (दि० गु० पृ० १९३ ) ( ल० व० ) । यथा—संख्यादीनां गुणानां सामान्यगुणत्वम् ।

[ ख ] यद्रूपावच्छिन्नसमानाधिकरणं यत्किंचिद्द्रव्यविभाजकोपाधिद्वयं भवति, तद्भिन्ना स्थितिस्थापकवृत्तिभिन्ना च या जातिस्तादृशजातिमद्भिन्न-गुणत्वम् । ( नील० गु० पृ० ३९ )

**सामान्यच्छलम्**—( छलम् ) [ क ] संभवतोऽर्थस्यातिसामान्ययोगाद-

१ अत्रत्यपदप्रयोजनं कथ्यते—( १ ) मलीयशुक्लरूपे, वायोरनुष्णाशीतस्पर्शे च पृथिव्यादि-शुक्लरूप-स्पर्श-व्यावृत्तजातिविशेषे मानाभावात्,—शुक्लरूपा-नुष्णाशीतस्पर्शयोरतिव्याप्तिवार-णाय सत्यन्तं दलं दत्तम् । ( २ ) शब्दविशेषजनकतावच्छेदकजात्यवच्छिन्न-कठिनावयव-द्वयविभागे, तेजोवेगातिशयेऽत्यन्ताग्निसंयोगनाश्यतावच्छेदकवैजात्यावच्छिन्न-घृतादिवृत्ति-द्रवत्वे चाव्याप्तिवारणाय 'अवृत्ति' इत्यन्तं जातिविशेषणम् । ( ३ ) कर्मादावतिव्याप्तिवार-णाय विशेष्यदलं दत्तम् । ( ४ ) पृथिवीत्वादिव्याप्यतावच्छेदकतत्तत्संख्यात्वादिशून्यत्वस्य तत्तत्संख्यायामभावादव्याप्तिः; तद्वारणाय 'जाति'पदं दत्तम्, इति । (दि० गु० पृ० १९३)

२ तथा हि लक्षणसमन्वयः—द्रव्यविभाजकतावच्छेदकं पृथिवीत्वादि, तद्व्याप्यतावच्छेदकं च गन्धत्वादि, तच्छून्यत्वस्य संख्यादौ सत्त्वाल्लक्षणसमन्वयः, इति । (दि० गु० पृ० १९३)

३ सामान्यगुणाश्चैकादश,—संख्या, परिमाणम्, पृथक्त्वम्, संयोगः, विभागः, परत्वम्, अपरत्वम्, गुरुत्वम्, नैमित्तिकद्रवत्वम्, वेगः, स्थितिस्थापकश्चेति* । ( मु० गु० पृ० १९२–१९३ )

४ तथा हि—यद्रूपम् ( संख्यात्व-संयोगत्व-विभागत्वादि ), तदवच्छिन्नः ( संख्या-संयोग-विभागादिः ), तत्समानाधिकरणं यत्किंचित् द्रव्यविभाजकोपाधिद्वयम् ( पृथिवीत्व-जल-त्वादि ) भवति; तद्भिन्ना ( संख्यात्व-संयोगत्वादिभिन्ना ), या जातिः ( रूपत्वादिः, ज्ञा-नत्वादिश्च ), तद्वद्भिन्नगुणत्वं संख्यादौ वर्तते, इति लक्षणसमन्वयो बोध्यः ।

५ अत्र व्युत्पत्तिः—'सामान्यनिमित्तं छलं सामान्यच्छलम्' इति । (वात्स्या० १ । २ । ५४)

६ यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम् । यथा—ब्राह्मणत्वं विद्याचरणसंपदं क्व-चिदाप्नोति क्वचिदत्येति । ( वात्स्या० १ । २ । ५४ )

* अत्र—केषांचिन्मते, स्थितिस्थापकस्य पृथिव्यादिद्रव्यचतुष्टयवृत्तित्वाङ्गीकारात्, तन्मता-भिप्रायेण स्थितिस्थापकस्य सामान्यगुणेष्वन्तर्भावः कृतः; तस्य पृथिवीमात्रवृत्तित्वाङ्गीकारे तु विशेषगुणत्वमेव, इति विज्ञेयम् ।

संभूतार्थकल्पना सामान्यच्छलम् । ( गौ० १ । २ । ५४ ) 'अहो खल्वसौ ब्राह्मणो विद्याचरणसंपन्नः' इत्युक्ते कश्चिदाह—'संभवति हि ब्राह्मणे विद्याचरणसंपत्' इत्यस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसंभूतार्थकल्पना क्रियते—'यदि ब्राह्मणे विद्याचरणसंपत्संभवति, व्रात्येऽपि संभवेत्, व्रात्योऽपि ब्राह्मणः, सोऽप्यस्तु विद्याचरणसंपन्नः' इति । (वात्स्या० १ । २ । ५४ )

[ ख ] सामान्यविशिष्टसंभवदर्थाभिप्रायेणोक्तस्यातिसामान्ययोगादसंभवदर्थकत्वकल्पनया दूषणाभिधानम् । यथा—'ब्राह्मणोऽयं विद्याचरणसंपन्नः' इत्युक्ते,—'ब्राह्मणत्वेन विद्याचरणसंपदं साधयति' इति कल्पयित्वा परो वदति—कुतो ब्राह्मणत्वेन विद्याचरणसंपत् ?; बाल्ये व्यभिचारात्, इति । ( गौ० वृ० १ । ५३ )

**सामान्यतो दृष्टम्**—( अनुमानम् ) [ क ] A व्रज्यापूर्वकम् ( अन्यत्र दृष्टस्य ) अन्यत्र दर्शनम्, इति । यथा चादित्यस्य । तस्मादस्त्यप्रत्यक्ष- ( क्षा ) स्याप्यादित्यस्य व्रज्येति । B यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः संबन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते । यथा—इच्छादिभिरात्मा । इच्छादयो गुणाः; गुणाश्च द्रव्यसंस्थानाः; तद्यदेषां स्थानं स आत्मेति । ( वात्स्या० १ । १ । ५ )

[ ख ] A कार्यकारणभिन्नलिङ्गकमनुमानम् । यथा—पृथिवीत्वेन द्रव्यत्वानुमानम् । B अन्वयव्यतिरेक्यनुमानम् । यथा—'वह्निमान् धूमात्' इत्यादि । ( गौ० वृ० १ । ५ )

**सामान्यप्रत्यासत्तिः**—'सामान्यलक्षण'शब्दवदस्यार्थोऽनुसंधेयः ।

---

१ तदुक्तम्—"सामान्यच्छलमेतत्स्यादतिसामान्ययोगतः । तात्पर्यवैपरीत्येन कल्पितार्थस्य बा-( बो )धनम्" इति । ( ता० र० १ । श्लो० ९६ )

२ अत्र—सामान्यविशिष्टः संभवदर्थश्च 'एतद्ब्राह्मणः । अतिसामान्यं तु ब्राह्मणत्वसामान्यम्', इति ज्ञेयम् ।

**सामान्यलक्षणः**—( अलौकिकः संनिकर्षः ) अलौकिकप्रत्यक्षविशेषे कारणं संनिकर्षविशेषः । स च [ १ ] [ क ] इन्द्रियसंबद्धविशेष्यकज्ञानप्रकारीभूतं सामान्यम् । यथा—घटत्व-धूमत्वादि ।

---

१ अयं संनिकर्षश्च, अतीतानागतानामिन्द्रियासंनिकृष्टानां सामान्याश्रयाणां सर्वेषां व्यक्तीनामलौकिकं प्रत्यक्षं* जनयति, इति बोध्यम् ।

मीमांसका मायावादिवेदान्तिनश्च,—सामान्यलक्षणं संनिकर्षं नाङ्गीचक्रुः । ( म० प्र० ४ । पृ० ३९ )

तन्न सहन्ते नैयायिकाः—[ क ] यदि सामान्यलक्षणा प्रत्यासत्तिर्नास्ति तदाऽनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंशयो न स्यात्; प्रसिद्धधूमे वह्निसंबन्धावगमात् कालान्तरीय-देशान्तरीयधूमस्य मानाभावेनाज्ञानात् । सामान्येन तु सकलधूमोपस्थितौ धूमान्तरे विशेषादर्शनेन संशयो युज्यते । (चि० २ । पृ० १८–१९) । अतः सामान्यलक्षणाऽऽवश्यकी † इति ।

अत्र—सामान्यं च सखण्डाखण्डभेदेन द्वेधा । सखण्डे चाखण्डमेव‡ परंपरया संबद्धं प्रत्यासत्तिः । येन संबन्धेन चेन्द्रियसंबद्धे सामान्यं ज्ञायते, तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः, इति । ( दीधि० २ । पृ० ८१ )

२ अत्र—'इन्द्रियसंबद्ध' इत्युक्त्या, इन्द्रियसंबन्धस्य संयोगादेरिन्द्रियप्रतियोगिकत्वात् तद्घटितस्येन्द्रियसंयुक्तविशेष्यकज्ञानप्रकारीभूतधूमत्वादेः प्रत्यासत्तित्वं जन्यत्वघटितव्यापारत्वं च निर्वहति, इति विज्ञेयम् । ( दि० १ । पृ० १२७ )

अत्र—बहिरिन्द्रियस्य संबन्धश्च लौकिको ग्राह्यः । तेन, एतादृशसंबन्धघटितं सामान्यं बहिरिन्द्रियप्रत्यक्षस्थले ह्युपयुज्यते । ( मु० १ । पृ० १२९ ) ( सि० च० ) । ज्ञानस्य तदिन्द्रियजन्यत्वं च नियामकम् । एवं च—अणुत्वेन यत्किंचिदणूपस्थितावपि सकलाणुगोचरो मानसो बोधः, इति वदन्ति । ( दीधि० २ । पृ० ८१ )

३ अत्रार्थे 'सामान्यं लक्षणं स्वरूपं यस्य' इति व्युत्पत्त्या सामान्यमेव प्रत्यासत्तिः । (दीधि० २ । पृ० ८० ) ( मु० १ । पृ० १२७ )

४ अत्रेदं विज्ञेयम्—सामान्यं ज्ञायमानमेव स्वाश्रयाणां संनिकर्षः । ज्ञायमानघटत्वसंनिकर्षेण 'घटाः' इत्याकारकं सकलघटानां प्रत्यक्षं जन्यते, इति । ( त० कौ० )

५ तथा हि—यत्रेन्द्रियसंयुक्तो धूमादिः, तद्विशेष्यकं 'धूमः' इति ज्ञानं जातम्, तत्र ज्ञाने धूमत्वं प्रकारः; तत्र धूमत्वेन संनिकर्षेण 'धूमाः' इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते, इति । ( मु० १ । पृ० १२७ ) ( दीधि० २ । पृ० ८१ )

---

* 'सामान्यलक्षणायाः प्रत्यासत्त्याः सामान्यप्रकारकज्ञानजनकत्व'नियमात् । ( दीधि० २ )

† दीधितिकृता तु स्वमते सामान्यलक्षणायाः प्रत्यासत्तित्वं निराकृतम्, इति विज्ञेयम् ।

‡ अत्रत्यप्रपञ्चः 'सामान्य'शब्दव्याख्याने द्रष्टव्यः ।

[ ख ] ज्ञानप्रकारीभूतं सामान्यम्[1] । यथा—घटत्व-परमाणु[2]त्वादि । [ २ ] सामान्य[3]विषयकं ज्ञानम्[4] । यथा—घटत्व[5]ज्ञानम् । (मु० १ । पृ० १३० ) ( सि० च० )

**सामान्यलक्षणा**—( प्रत्यासत्तिः ) 'सामान्यलक्षण'शब्दवदस्यार्थोऽनुसंधेयः ।

**सामान्यविधिः**—(विधिः) १ विशेषापवाद्यो विधिः। यथा—'कौण्डिन्याय तक्रम्' इति विशेषापवादः 'सर्वेभ्यो दधि दीयताम्' इति सामान्यविधिः। यथा वा—मतविशेषे, "अग्नीषोमीयं पशुमालभेत" इति विशेषापवाद्यो

---

१ इदं तु मानसप्रत्यक्षस्थले ह्युपयुज्यते । ( मु० ) ( सि० च० )

२ अणुत्वेन यत्किंचिदणूपस्थितावपि सकलाणुगोचरो मानसो बोधो भवति, इति भावः।

३ तदर्थश्च,—इन्द्रियसंबद्धविशेष्यकं सामान्यप्रकारकं ज्ञानम्, इति । ( मु० १ । पृ० १३० )

४ अत्रार्थे व्युत्पत्तिः,—'सामान्यं लक्षणं निरूपकं ( विषयः ) यस्य तत्' इति । ( मु० १ । पृ० १३० ) ( दीधि० २ । पृ० ८० )

इदानीं सामान्यलक्षण-ज्ञानलक्षणयोः संनिकर्षयोर्भेद उच्यते—[ १ ] तत्र—A सामान्यलक्षणसंनिकर्षः सामान्याश्रयसकलव्यक्तिविषयकं ज्ञानं जनयति । B ज्ञानलक्षणसंनिकर्षस्तु, यस्य (सामान्यस्य) ज्ञानं (संनिकर्षः) अस्ति तस्यैव ज्ञानं जनयति, इति (भा० प०) (मु०) [ २ ] कारणतावच्छेदकभेदेन कार्यतावच्छेदकभेदेन च तयोर्भेद उच्यते—तत्र—A सामान्यलक्षणायाः कार्यकारणभावश्च 'तत्तत्संबन्धावच्छिन्नघटत्वादिप्रकारिताशालिज्ञानत्वेन, स्वरूपतस्तत्संबन्धावच्छिन्नघटत्वादिप्रकारिताक-तत्तसंबन्धावच्छिन्नघटत्वाद्याश्रयताशालिमुख्यविशेष्यकप्रत्यक्षत्वेन' इति । B ज्ञानलक्षणायाः कारणतावच्छेदकं तु, सामान्यतः संसर्गावच्छिन्नघटत्वादिविषयताशालिज्ञानत्वम्; घटत्वादिप्रकारकज्ञानादिव घटत्वादिविषयक(घटत्वादिविशेष्यक)-ज्ञानादपि घटत्वादिप्रकारकोपनीतभानोदयात् । केचित्तु,—ज्ञानलक्षणायाः सप्रकारक-घटत्वादिज्ञानत्वं कारणतावच्छेदकम्, इत्याहुः ।

केचित्तु ( भाषापरिच्छेदकारादयः ),—'संसर्गावच्छिन्नतद्विषयताशालिज्ञानत्वेन कारणता, योगजधर्माजन्य-सामान्यलक्षणाप्रत्यासत्त्यजन्य-तद्विषयकप्रत्यक्षत्वेन* कार्यता,' इत्याहुः । ( मू० म० २ । पृ० २६१–२७१ )

५ तथा हि—'अयं घटः' इति घटत्वविषयकलौकिकप्रत्यक्षेण 'सर्वे घटाः' इति सकलघटविषयकालौकिकप्रत्यक्षं जायते, इति । ( सि० च० )

---

* तद्विषयिता चालौकिकी ग्राह्या; तेन, तल्लौकिकप्रत्यक्षे न व्यभिचारः । ( म० म० २ । पृ० २७१ )

"न हिंस्यात्सर्वा भूतानि" इति हिंसासामान्यनिषेधविधिः सामान्यविधिः। शिष्टं 'सामान्य' शब्दे दृश्यम् ( स्व० ) । २ मीमांसकास्तु,–अनारभ्य विधिः। यथा–सामिधेन्यृचा सप्तदशत्वस्यानारभ्याधीतत्वेन सामान्यविधिः। यथा वा–"यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति"(तैत्ति० सं० ३ । ५ । ७ ) इत्यादौ,–पर्णताया अनारभ्याधीताया दर्शपूर्णमासरूपप्रकृतियागेऽन्वयः इत्याहुः। ( लौ० भा० पृ० २२–२३ )

**सामासिकम्**—( योगरूढं नाम ) समासात्मकं नाम। यथा–कृष्णसर्पादि। कृदन्तस्य 'पङ्कज'इत्यादियोगरूढस्य सामासिक एवान्तर्भावः। ( श० प्र० श्लो० २९ । पृ० ४३ )

**सार्थकः**—१ ( शब्दः ) यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य वा वृत्त्युपस्थाप्ययादृशार्थावगाहिबोधं प्रत्यनुकूलः, स तथाविधेऽर्थे सार्थकः। यथा–पट-पाचकाद्याः प्रकृतयः, सुप्तिङाद्याः प्रत्ययाः, चादयो निपाताश्च, स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्य जनयन्ति। सार्थकः शब्दस्त्रिविधः,–प्रकृतिः, प्रत्ययः, निपातश्चेति। ( श० प्र० श्लो० ६ । पृ० ८ )। २ 'समूहः सार्थः,' इति काव्यज्ञा आहुः।

**साहचर्यम्**—१ साहित्यम् । २ सामानाधिकरण्यम् । ( त० दी० ) ( न्या० बो० )। ३ समभिव्याहारः।

**साहाय्यम्**—'सहायता' शब्दवदस्यार्थोऽनुसंधेयः।

**साहित्यम्**—१ [ १ ] A तत्तत्क्रियाकालवृत्तित्वम्; B सहवर्तमानत्वं वा।

---

१ तथा हि—सामान्यविधिश्चास्पष्टत्वात्तस्य विशेषेणोपसंहारो भवति। तथा चोक्तम्—"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" इति। ( लौ० भा० टी० पृ० २३ )

२ वाक्यानि पुनः, शब्दान्तरमसहकृत्यापि स्वोपस्थाप्यार्थस्य बोधं जनयन्ति, इति न तत्रातिव्याप्तिः। ( श० प्र० श्लो० ६ । पृ० ८ )

३ शशविषाणादिकः शब्दोऽपि, शशीयत्वादिना विषाणादेरन्वयबोधमादधानस्तादृशविषयताकबोधने सार्थक एव; परं त्वयोग्यः। ( श० प्र० श्लो० ६ । पृ० ८ )

यथा—"एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ,—'सह'शब्दस्यार्थः । ( स्व० ) । [२] [ क ] तुल्यवदेकक्रियान्वयित्वम् । ( न्या० म० ४ ) ( दि० ४ ) [ ख ] अन्ये तु,—परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वम्, इत्याहुः । ( श्राद्ध० ) ( वाच० ) [ ३ ] शाब्दिकास्तु,—समभिव्याहृतत्वं सहितत्वम्, इत्याहुः । ( सि० कौ० ) [ ४ ] बुद्धिविशेषविषयत्वम् । ( श० प्र० ) । २ काव्यज्ञास्तु,—पद्यात्मकं काव्यं साहित्यम्, इत्याहुः । शिष्टं तु 'सह'शब्दव्याख्याने दृश्यम् ।

**सिद्धम्**—१ 'इदमित्थंभूतं च' इत्यभ्यनुज्ञायमानमर्थजातम् । यथा—'सिद्धान्त' इत्यादौ,—'सिद्ध'शब्दस्यार्थः । ( वात्स्या० १ । १ । २६ ) । २ A सिद्धिविषयः । B निश्चितम् । ३ 'परिनिष्ठितम्' । यथा—'परब्रह्म सिद्धम्' इत्यादौ—'सिद्ध' शब्दार्थः, इति मायावादिवेदान्तिनो वदन्ति । ४ 'देवयोनिविशेषः' इति पौराणिका आहुः । ५ मौहूर्तिकास्तु,—'विष्कम्भादिषु मध्ये (२१) एकविंशो योगः' इत्याहुः । ६ 'कृष्णधत्तूरम्' इति भिषज आहुः । ७ 'मन्त्रविशेषः; सिद्धियुक्तमन्त्रश्च' इति मान्त्रिका आहुः । ८ शाब्दिकास्तु,—'क्रियाविशेषः' इत्याहुः । ९ 'निष्पन्नम्' इति काव्यज्ञा आहुः ।

**सिद्धसाधनम्**—( दोषः ) प्रमाणान्तरेणावगतार्थसाधनम् ( अनुमानम् ) ।

---

१ अत्र—[ क ] 'वर्तमान' इत्यध्याहारात् 'वर्तमानत्वक्रियामादायैव साहित्यबोधः' इति वदन्ति । ( ग० व्यु० का० ३ । पृ० ९१ ) । [ ख ] 'विद्यमान' इत्यध्याहारात्* विद्यमानत्वमपि 'सह'शब्दार्थः । अत एव—'विद्यमानसहार्थे तृतीयेयम्' इति शाब्दिकमतमपि वरीवर्ति । ( का० व्या० पृ० ८ )

२ तदर्थश्च,—'एककारकान्वयित्वेन तुल्ययोरेकजातीयक्रिययोरन्वयित्वम्(समानकालीनत्वम्),' इति । (श० प्र० श्लो० ९४ । टी० पृ० १३५)

---

* अत्र पुत्रेषु भारवहनकर्तृत्वाभावेऽपि 'सह'शब्दप्रयोगादध्याहार आवश्यकः, इति ज्ञेयम् । ( का० व्या० पृ० ८ )

यथा—पर्वते वह्निनिश्चयानन्तरमपि पुनस्तत्साधनाय विहितं 'पर्वतो वह्निमान् धूमात्' इत्यनुमानम् । ( स्व० )

अत्र मतभेदः—'सिद्धसाधनं च पक्षताविघटकत्वेनाश्रयासिद्धेऽन्तर्भवति' इति प्राञ्चः ( जरन्नैयायिकाः ) आहुः । नव्यास्तु,—'सिषाधयिषितपक्षविघटनद्वारा सिद्धसाधनं दूषणम्, न स्वतः; सत्यपि सिद्धसाधने ( साध्यनिश्चये ) सिषाधयिषयाऽनुमित्युदयान्न सिद्धसाधनं हेत्वाभासान्तरम्; किं तु निग्रहस्थानान्तरम्' इत्याहुः । ( चि० २ ) ( न्या० म० २ । पृ० २१ ) ( म० प्र० २ । पृ० २८ ) ( त० दी० २ । पृ० २७ ) ( सि० च० )

---

१ अत्र 'सिषाधयिषाया असत्त्वे'* इति ग्रन्थ आदौ पूरणीयः; सिषाधयिषायाः सत्त्वे तु† अनुमितेरुदयेन तदा सिद्धसाधनस्य न दोषत्वम् ( पक्षताविघटकत्वम् ), इत्यवधेयम् ।

२ अत्रायं विशेषः—साध्य-पक्षतावच्छेदकयोरैक्ये सिद्धसाधनम् । यथा—'पर्वतः‡ पर्वतत्ववान् धूमात्' इत्यादौ,—सिद्धसाधनम् । ( स्व० ) । केचित्तु,—पक्षतावच्छेदकभेदे न सिद्धसाधनं दोषः । यथा—'नित्ये वाङ्मनसे' इत्यत्र । यथा वा—घटत्वावच्छेदेनेतरभेदस्य सिद्धत्वेऽपि द्रव्यत्वावच्छेदेनेतरभेदसाधने न सिद्धसाधनम्, इत्याहुः । ( वै० उ० १।१।५ )

३ तन्मते, पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतम् । तथा च—संदिग्धसाध्यवतः पक्षस्याभावादाश्रयासिद्धिः, इति भावः । (नील० २)(प्र० च० पृ० ३१)

४ नव्यानामयमाशयः—सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव सिद्धान्तसिद्धपक्षतात्वस्वीकारात्, सत्यामपि सिद्धौ ( साध्यनिश्चये ) सिषाधयिषादशायां चानुमित्युदयेन सिद्धेरनुमितिप्रतिबन्धकत्वाभावान्न व्यापकत्वघटितहेत्वाभासलक्षणाक्रान्तत्वं सिद्धिविषयस्य ( साध्यवत्पक्षस्य ), इति न सिद्धसाधनस्य हेत्वाभासत्वं ( दुष्टहेतुत्वम् ) संभवति, इति । (म० प्र० २ । पृ० २८ ) (नील० २ । पृ० २७)

---

* अत्र 'न हि करिणि दृष्टे चीत्कारेण तमनुमिमतेऽनुमातारः' इत्यनुभवो द्रष्टव्यः । ( तत्त्वचिन्तामणौ वाचस्पतिमिश्रः )

† अत्र 'प्रत्यक्षकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः' इत्यनुभवो द्रष्टव्यः । (चिन्तामणौ वाचस्पतिमिश्रः )

‡ अत्र—पूर्वं पक्षतावच्छेदक ( पर्वतत्व ) विशिष्टपक्षज्ञानेनैव साध्यसिद्ध्युपपत्तौ पुनस्तत्साधनं सिद्धसाधनम्, इति भावः ।

**सिद्धान्तः**—१ [ क ] तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः । ( गौ० १ । १ । २६ )

[ ख ] शास्त्रितार्थनिश्चयः । ( गौ० वृ० १ । २९ )

[ ग ] प्रामाणिकत्वेनाभ्युपगतोऽर्थः । ( त० दी० पृ० ४३) ( त० भा० पृ० ४२ ) ( सर्व० अक्ष० पृ० ११३ )

[ घ ] तत्तच्छास्त्रसिद्धार्थः । ( दि० १ ) । तन्त्रभेदात्तु खलु स चतुर्विधः,–सर्वतन्त्रसंस्थितिः, प्रतितन्त्रसंस्थितिः, अधिकरणसंस्थितिः, अभ्युपगमसंस्थितिश्च, इति । (गौ० १ । १ । २७)(त० भा० पृ०४२) । २ अबाधितार्थः (म० प्र० पृ० ३) । यथा–"न्यायसिद्धान्तमञ्जरी" इत्यादौ,–'सिद्धान्त'शब्दस्यार्थः । ( न्यां० म० पृ० १ ) । ३ मीमांसकास्तु,–पञ्चावयवयुक्ताधिकरणस्य चरमोऽङ्गविशेषः सिद्धान्तः, इत्याहुः । ४ ज्योतिषज्ञास्तु,–ज्योतिःशास्त्रग्रन्थविशेषः । यथा–सूर्यसिद्धान्तसोमसिद्धान्तादिः, इत्याहुः । ५ वादिजनास्तु,–प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासकः सिद्धपक्षस्य स्थापनरूपो वाक्यस्तोमः, इत्याहुः ।

---

१ अत्रेयं व्युत्पत्तिः—'सिद्धस्य संस्थितिः सिद्धान्तः' इति । संस्थितिरित्थंभावव्यवस्था, धर्मनियमः । ( वात्स्या० १ । १ । २६ । अवतर० पृ० २७ )

२ समुदितार्थश्च,—[ क ] तन्त्रार्थसंस्थितिस्तन्त्रसंस्थितिः । ........अधिकरणानुषक्तार्था संस्थितिरधिकरणसंस्थितिः । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः, तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः । ( वात्स्या० १ । १ । २६ ) । [ ख ] तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य, तादृशो योऽभ्युपगमस्तस्य समीचीनतयाऽसंशयरूपतया स्थितिः, इति ।

अत्र—"अभ्युपगम्यमानोऽर्थः सिद्धान्तः" इति भाष्यम् । 'अभ्युपगमव्यवस्था सिद्धान्तः'। अभ्युपगमः 'इदमित्थंभूतं वा,' इति न्यायवार्तिकटीका । ( गौ० वृ० १ । २५ ) (न्या० वा० १ । पृ० १७ )

३ तथा चोक्तं तार्किकरक्षायाम्—"अभ्युपेतः प्रमाणैः स्यादाभिमानिकसिद्धिभिः । सिद्धान्तः सर्वतन्त्रादिभेदात्स च चतुर्विधः" इति । ( ता० र० श्लो० ५८ )

४ तल्लक्षणमुक्तम्—"त्रुट्यादिप्रलयान्तकालकलनामानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः । भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः" इति । ( सि० शि० )

**सिद्धिः**—१ निश्चयः; स च क्वचित्,–[१] साध्यवत्तानिश्चयः[1]। (दीधि० २) (ग० सत्प्र०)। यथा–पर्वते धूमेन वह्निसाधने 'पर्वतो वह्निमान्' इति निश्चयः[2]। इयं सिद्धिर्द्विविधा,—पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिनी, पक्षतावच्छेदकव्यापकत्वावगाहिनी चेति[3] । (ग० पक्ष०)। [२] व्याप्तस्य पक्षधर्मताप्रतीतिः सिद्धिरुच्यते । यथा—"असिद्धो हेत्वाभासः" इत्यादौ,–'सिद्धि'शब्दस्यार्थः। (ता० र० श्लो० ८४)। २ सांख्यास्तु,–आध्यात्मिकादिदुःखत्रयविघातास्त्रयो मुख्यसिद्धयः, इत्याहुः[5] । (सांख्य० भा० ३ । ४४)। ३ योगशास्त्रज्ञास्तु,–ऐश्वर्यम्[6] ।

१ पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहिनिश्चयः, इत्यर्थः । (नील० २) (ग० २ । पक्ष०)

२ इयं सिद्धिः, असत्यामनुमित्सायां,* कामिनीजिज्ञासा कार्यमात्रस्येव, अनुमितेः पृथक् प्रतिबन्धिका भवति; अनुमित्सा तु तत्रोत्तेजिका भवति, इति ज्ञेयम् । (ग० पक्ष०)

३ द्वौ प्रकारौ तु विभक्तानुमितिदिशा परिष्करणीयौ ।
अत्रानुभवमनुरुध्य प्रतिबध्यप्रतिबन्धकभावः कल्प्यते—'पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति, पक्षतावच्छेदकावच्छेदेनैव सिद्धिर्विरोधिनी (न तु पक्षतावच्छेदकसामानाधिकरण्येनापि सिद्धिर्विरोधिनी)। पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानुमितिं प्रति तु, उभयविधाऽपि सिद्धिर्विरोधिनी' इति । (मु० २ । पक्ष०) (दीधि० २)

५ अत्र सूत्रम्—"ऊहादिभिः सिद्धिः" इति (सांख्य० सू० अ० ३ । सू० ४४)। तदर्थश्च—[क] ऊहादिभेदैः सिद्धिरष्टधा भवति, इति । [ख] इदं सूत्रं कारिकयाऽपि व्याख्यातम्; यथा—"ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः" इति । (सां० भा० ३ । ४४)

६ अत्र सूत्राणि—"ते समाधावुपसर्गा व्युत्थाने† सिद्धयः" (पात० पा० ३ । सू० ३७), "जन्मौषधिमन्त्रतपःसमाधिजाः‡ सिद्धयः" इत्यादीनि । (पात० पा० ४ । सू० १)

* 'अनुमित्सा' शब्दः 'सिषाधयिषा'शब्दव्याख्यानेनैव व्याख्येयः ।

† तदर्थश्च,— ते प्रतिभादयः (सिद्धयः), समाहितचित्तस्योत्पद्यमाना उपसर्गाः (विघ्नाः); • तत्त्वदर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः (प्रियाः) इति,। (भाष्य०)

‡ तत्र,—जन्मना सिद्धिर्यथा—यक्षगन्धर्वादीनामाकाशगमनादिसिद्धिः, देवहूतीपुत्रकपिलादीनां तु स्वाभाविकी सिद्धिः । ओषधिभिः,—असुरभवने माण्डव्यादिमुनीनां रसा[य]नेन, इत्येवमादिः । मन्त्रैरणिमादिलाभः केषांचित् । तपसा विश्वामित्रादीनां सिद्धिः; • संकल्पसिद्धिः 'कामरूपी यत्र तत्र कामगः' इत्येवमादिः । समाधिजाः सिद्धयस्तु परमाण्वादिमूलप्रकृत्यन्तवस्तूनां साक्षात्कारः, ऋतंभराख्याऽध्यात्मप्रसादश्च, इत्यादयः । (पात० १ । ४७–४८)

ताश्च योगसाध्याणिमाद्यष्टसिद्धयः, इत्याहुः । ४ तान्त्रिकास्तु,—मन्त्रैसिद्धिः, इत्याहुः ।

**सिषाधयिषा**—[ क ] तत्साध्यविशिष्टतत्पक्षविषयकत्वप्रकारिकाऽनुमितिविषयिणीच्छा । दीधि० २। पक्ष० पृ० १२४ )

[ ख ] अनुमितित्वप्रकारकेच्छा । ( ग० सार्व० पक्ष० ) । यथा— 'पर्वते वह्न्यनुमितिर्मे जायताम्' इत्याकारिकेच्छा । ( ख० )

**सीमा**—१ 'मर्यादा'शब्दवदस्यार्थोऽनुसंधेयः । ( ग० व्यु० कार० २ । ख० २ । पृ० ७९ ) । २ अवधिः । ३ स्थितिः । ४ अण्डकोशः । ( मेदि० ) । यथा—"सीम्नि पुष्कलको हतः" इत्यादौ,—'सीमन्' शब्दस्यार्थः । ( सि० कौ० सुब० )

**सु**—( अव्ययम् ) १ प्रशंसा । यथा—'सुरूपः' इत्यादौ,—'सु'शब्दस्यार्थः ।

---

१ अष्टौ सिद्धयस्तु,—*अणिमा, महिमा, लघिमा, गरिमा, प्राप्तिः, प्राकाम्यम्, वशित्वम्, ईशित्वं चेति ।

२ इयं सिद्धिरुत्तममध्यमाधमभेदेन त्रिविधा,—तत्रोत्तमा, मनोरथानामैक्य-परकायप्रवेशादिः । मध्यमा, ख्याति-वाहन-भूषादिलाभः । अधमा तु धनित्व-पुत्रदारादिलाभः, इति । ( तन्त्रसा० )

३ तत्साध्यविशिष्टतत्पक्षविषयकत्वं च तत्साध्यतावच्छेदकावच्छिन्नतत्संसर्गावच्छिन्नविधेयतानिरूपित-तत्पक्षतावच्छेदकावच्छिन्नोद्देश्यता-त्वावच्छिन्ननिरूपकताकत्वम् । ( ग० पक्ष० )

४ अत्रेदं चिन्त्यम्—सिद्धौ सत्यामपि सिषाधयिषासत्त्वेऽनुमितिदर्शनात्सिषाधयिषाया अनुमितावुत्तेजकत्वमुक्तम् । तच्चोत्तेजकत्वम्, तत्साध्यविशिष्टतत्पक्षविषयकत्वा-नुमितित्व-प्रत्यक्षातिरिक्तत्वै-तत्क्षणानन्तरक्षणानुमितित्वै-तन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकविषयिताकत्वरूपेणानुगतेन वाच्यम्, इति ( ग० पक्ष० )। परे तु,—'पर्वते वह्निमनुमिनुयाम्' इत्याद्यनुगतेच्छानामनुगतरूपेणैवोत्तेजकत्वम्; 'प्रत्यक्षातिरिक्तं ज्ञानं जायताम्' इत्याद्यननुगतेच्छानां तु तत्तद्व्यक्तित्वेनैवोत्तेजकत्वं वाच्यम्, इत्याहुः । (दि० २ । पक्षता० पृ० १४९)

---

* तदर्थस्तु,—भूतजयेनाणिमाद्यष्टसिद्धयः प्राप्नुवन्ति । तत्र—अणिमा परमाणुवत्सूक्ष्मस्वरूपेणावस्थानम् । महिमा विभुत्वप्राप्तिः। लघिमा कार्पासवल्लघुत्वभवनम् । गरिमा मेरुपर्वतवद्गुरुत्वभवनम् । प्राप्तिः, अङ्गुल्या चन्द्रमण्डलस्पर्शनम् । प्राकाम्यं सत्यसंकल्पत्वम् । वशित्वं सर्वप्राणिनियन्तृत्वम् । ईशित्वं च सर्वभूतोत्पादनशक्तिमत्त्वम्, इति ।(पात० ३।४५)

२ अनुमतिः । यथा—'सु-कृतम्' इत्यादौ,—'सु'शब्दार्थः । ३ पूजा । यथा—'सुसाधुः' इत्यादौ; 'सुसंस्तुतम्' इत्यादौ च,—'सु'शब्दार्थः । ४ भृशम् ( अतिशयः ) । यथा—'सुततः' इत्यादौ,—'सु'शब्दस्यार्थः । ५ कृच्छ्रम् । यथा—'सुदुष्करम्' इत्यादौ,—'सु'शब्दार्थः । ६ शुभम् । यथा—'सुगन्धः' इत्यादौ,—'सु'शब्दस्यार्थः । ( गण० ) । ७ अनायासः ( मेदि० ) । यथा—'सुलभः' इत्यादौ,—'सु'शब्दार्थः । ८ समृद्धिः । यथा—'सुभिक्षम्' इत्यादौ,—'सु'शब्दार्थः । ( स्व० )

**सुखम्**—१ [ १ ] ( गुणः ) [ क ] धर्ममात्रासाधारणकारणकगुणः । ( सि० च० गणनि० पृ० ३९ ) ( त० कौ० )

---

१ सुखं जगतामेव* काम्यम् ( इच्छाविषयः ), स्वतः पुरुषार्थः; धर्मेण जन्यते; तथा च—धर्मत्वेन सुखत्वेन कार्यकारणभावः,† इति ( भा० प० गु० श्लो० १४६ ) ( मु० गु० पृ० २२० )

लक्षणं तु [ क ] 'सुख्यहम्' इत्याद्यनुव्यवसायगम्यसुखत्वं जातिविशेषः । ( त० दी० ) [ ख ] काम्य-भावत्वम् । [ ग ] इतरेच्छानधीनेच्छाविषयत्वे सति भावत्वम्‡ । (न्या०बो०)

अत्र मतभेदः—'सुखं चात्मधर्मः' इति नैयायिका आहुः । 'तच्च चित्तधर्मः§' इति सांख्या आहुः ।

अत्रेदं विज्ञेयम्—कणादमहर्षिश्च कण्ठतः, सुखदुःखयोः "इष्टानिष्टकारणविशेषाद्विरोधाच्च मिथः सुखदुःखयोरर्थान्तरभावः" ( वै० १० । १ । १ ) इत्यनेन कारणभेदात् ¶भिन्नपदार्थत्वमुक्तवान् ।

---

* अत्रेदं तत्त्वम्—सुखेच्छा तु सुखत्वप्रकारकज्ञानेनैव जन्यते, नेष्टसाधनत्वज्ञानेनापि । तथा-च—उपायेच्छाया इष्टसाधनत्वविषयकज्ञानेनापि जन्यत्वेन तादृशज्ञानजन्योपायेच्छाविषयत्वेऽपि, इतरेच्छा (फलेच्छा-)-नधीनेच्छाविषयत्वाभावेन नोपायेऽतिव्याप्तिः । अत एव (सुखानन्तरमिष्टान्तरस्याभावात्) सुखस्य स्वतः पुरुषार्थत्वमुपपद्यते, इति । (मु० गु० पृ० २२१)

† अयं (सामान्यकार्यकारणभावः) प्राचां मतेनोक्तः । नवीनमते तु,—"नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या भगवति नित्यसुखसिद्धौ,—धर्मस्य कार्यतावच्छेदकं जन्यसुखत्वम्, सुखत्वावान्तरजातिर्वा, इति बोध्यम् । ( दि० गु० पृ० २२० ) शिष्टं च 'आत्म'शब्दव्याख्याने द्रष्टव्यम् ।

‡ दुःखाभावस्य काम्यत्वेऽपि स्वतः पुरुषार्थत्वेऽपि च तस्य भावत्वाभावान्नातिव्याप्तिः ।

§ अत्र सांख्यानां मायावादिनां चायमाशयः—सुखं चित्तधर्मोऽप्यध्यस्ततया प्रतिबिम्बरूपेण वाऽऽत्मनि वर्तते, इति ।

¶ तथा चायमर्थः—दुःखाभिन्नं सुखं न भवति । तथा च—सुखं दुःखमिश्रितत्वेन 'दुःखाभिन्नमस्ति' इति प्रत्ययस्तु भ्रम एव, इति । ( वै० उ० १ । १ । १ )

[ ख ] अनित्येच्छानधीनेच्छाविषयः। ( प्र० प्र० )

[ ग ] A सुखत्वसामान्यवत्; B निरुपाध्यनुकूलवेद्यम्। (प० च० पृ० ३०)

[ घ ] सर्वात्मनामनुकूलवेदनीयम्। ( त० भा० ) ( त० सं० )

[ २ ] क्वचित्—दुःखाभावः। यथा—भारवाहकस्य भारापगमे दुःखाभावे:। [ ३ ] 'बुद्धिसत्त्वस्य परिणामविशेषः' इति सांख्या आहुः। [ ४ ] निद्रा; इति केचिदाहुः। [५] स्वर्गः, इति मीमांसका आहुः। २ सुखकरम्; ३ सुखी च, इति काव्यज्ञा आहुः। ३ 'वृद्धिनामौषधिविशेषः' इति भिषज आहुः। ४ वरुणपुरी, इति पौराणिका आहुः। न्यायमते सुखं चतुर्विधम्,—वैषयिकम्, आभिमानिकम्, मानोरथिकम्, आभ्यासिकं चेति। तत्र—आद्यं विषयसाक्षात्कारजन्यम्। द्वितीयं राज्याधि-

---

कार्यभेदेनापि सुखस्य दुःखाद्भेदमाहुः—'अनुग्रहाभिष्वङ्गनयनप्रसादादि सुखस्य* कार्यम्' इति प्रशस्तपादाचार्यादयः। ( वै० उ० १०। १। १। पृ० ४१७ )

१ इदं च जीवेश्वरसुखसाधारणलक्षणम्, इति विज्ञेयम्।

२ अत्र—अनुकूलमिच्छाविषयः, उपाधिः प्रयोजकः, इत्यर्थः। ( प० च० पृ० ३० )

३ अत्रानुकूलत्वं चेष्टत्वम्। ( सि० च० ) तथा च—यदनुभवाय चित्तमनुकूलं भवति तत्, इत्यर्थः, इति कश्चिदाह। तन्न,—'इच्छाविषयत्वेन ज्ञानविषयः' इति तु वयं ब्रूमः।

४ अयमाशयः—भारवाहकस्य भारापगमे 'सुखी संवृत्तोऽहम्' इति प्रत्ययस्य दुःखाभावविषयकत्वेनोपगमात्, दुःखाभावे सुखत्वमुपचर्यते, इति। दृष्टश्च दुःखाभावेऽपि 'सुख'शब्दप्रयोगो बहुधा लोके; यथा—ज्वराद्यपगमे लौकिका व्याचक्षाणा भवन्ति 'सुखिनः संवृत्ताः स्मः' इति। ( न्या० वा० १। १। २२। पृ० ९० )( मु० १। आत्मनि० पृ० १०३ ) अधिकं शिष्टं तु 'दुःख'शब्दव्याख्यानावसरे संपादितमेव,इति।

५ पातञ्जलास्तु,—वैषयिकसुखानां परिणामदुःखादिभिः † दुःखत्वमेव वैराग्यार्थं मन्यन्ते।

---

* अत्र भाष्यम्—"अनुग्रहलक्षणं सुखम्, स्रगाद्यभिमेतविषयसांनिध्ये सति, इष्टोपलब्धीन्द्रियार्थसंनिकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगात् यत् यत् अनुग्रहाभिष्वङ्ग-नयनादिप्रसादजनकमुत्पद्यते, तत्सुखम्। तदिदमतीतेषु विषयेषु ( स्रक्चन्दनादिषु ) स्मृतिजम्, अनागतेषु संकल्पजम्"।

यत्तु, विदुषामसत्सु विषयानुस्मरणे-च्छा-संकल्पेष्वाविर्भवति, तत्, विद्या-शम-संतोष-धर्मविशेष-निमित्तम्, इति। ( प्रशस्त० २। पृ० ३२ )

† अत्र सूत्रम्—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव. सर्वं विवेकिनः" इति। ( पात० पा० २। सू० १५ )

पत्य-पाण्डित्य-गर्वादिजन्यम् । तृतीयं विषयध्यानजन्यम् । तुरीयं च सूर्यनमस्कारायासादिजन्यं लाघवरूपम्, इति । (सि० च०) । मीमांसकमते च सुखं द्विविधम्,—सांसारिकम्, पारमार्थिकं च । तत्राद्यम्, प्रयत्नोत्पाद्यं साधनाधीनं सुखम् । द्वितीयं तु स्वर्गः, इति ।

वेदान्तिमते च सुखं द्विविधम्,–नित्यम्, जन्यं च । तत्र,–विषयसंपर्कात् वैषयिकं सुखं जन्यम् । ब्रह्मस्वरूपं सुखं तु नित्यम्, इति ।[1]

**सुगतः**—१ 'बुद्ध'शब्दवदस्यार्थोऽनुसंधेयः । २ सुष्ठु गतियुक्तः । (अमरः, ३ । ४ । २ ) ( १९ )

**सुतराम्**—( अव्ययम् ) अवधारितार्थस्यातिशयौचित्यम्[2] । यथा–"धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्यमाणः सुतरां दयालुः" ( रघु० स० २ । श्लो० ५२ ) इत्यादौ,–'सुतराम्' इत्यस्यार्थः[3] ।

**सुप्**—( विभक्तिः ) [ क ] प्रकृत्यर्थधर्मिक-स्वार्थसंख्यान्वयबोधिका विभक्तयः सुप उच्यन्ते[4] । यथा—'घटोऽस्ति' इत्यादौ,–'घट'पदोत्तरवृत्तिः 'सु' विभक्तिः । ताः ( सुपः ) प्रथमा-द्वितीयादिभेदेन सप्तविधाः[5] ।

---

१ तदेतद्वेदान्तिमतं ( मायावादिमतम् ) मुक्तिवादे मणिकृता निराकृतम्; यथा–'न च नित्यसुखाभिव्यक्तिर्मुक्ति इत्युपक्रम्योक्तम्—स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वे मुक्तसंसारिणोरविशेषप्रसङ्गात् । पुरुषप्रयत्नं विना तस्य सत्त्वात्, अपुरुषार्थत्वाच्च । 'अविद्यानिवृत्तिः प्रयत्नसाध्या' इति चेत्;—अविद्या यदि मिथ्याज्ञानम्, अर्थान्तरं वा ?; उभयथाऽपि सुख-दुःखाभाव-साधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात्, इति । ( चि० २ । परिशिष्ट० मुक्ति० पृ० ४६-४७ ) । तथा च—दुःखध्वंसस्यैव परमप्रयोजनत्वम्, स एव मोक्षः, इति । ( चि० २ परिशि० मुक्ति० पृ० ४० )

२ अत्र व्याकरणम्—'सु'–अतिशयेऽर्थे "द्विवचनविभज्योपपदे तरबीयसुनौ" ( पाणि० ५ । ३ । ५७ ) इत्यादिना तरप्, 'आम्' इति ।

३ अत्र—कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्यातिशयौचित्यम्, इति विज्ञेयम् ।

४ 'तिङस्तु स्वार्थभावनाद्यन्वयिन्येव स्वार्थसंख्यामवबोधयन्ति, न तु प्रकृत्यर्थे' इति तासां व्युदासः । ( श० प्र० श्लो० ६३ । टी० पृ० ८४ )

५ अत्रेदं विज्ञेयम्—( १ ) 'विशेषणविभक्तिः प्रयोगसाधुत्वार्था* ( निरर्थिकैव )' इति प्राञ्च

---

* तथा च—एतन्मते, "अपदं न प्रयुञ्जीत" इति महाभाष्यप्रामाण्यमनुसृत्य विशेषणपदे विभक्तिः प्रयोक्तव्या, इति ज्ञेयम् ।

( श० प्र० श्लो० ६३ । टी० पृ० ८४ ) । सुप् प्रकारान्तरेण द्विधा,—कारकार्था ( कारकविभक्तिः ), तदन्या ( कारकार्थान्या ) चेति। तत्र,—वृत्त्या कारकस्य बोधिका[1] कारकार्था । तदन्यस्य बोधिका कारकार्थान्या । ( श० प्र० श्लो० ६७ । टी० पृ० ८८ )

[ ख ] वैयाकरणास्तु,—व्याकरणपरिभाषिताः 'सु' प्रभृति—'सुप्' पर्यन्ताः ( 'सुप्' प्रत्याहारान्तर्गताः ) एकविंशतिसंख्यकाः[2] प्रत्ययविशेषाः । यथा—'रामः' इत्यादौ,—'राम'पदोत्तरवृत्तिः 'सु'विभक्तिः,इत्याहुः। शिष्टं तु 'विभक्ति'शब्दव्याख्याने दृश्यम् ।

सुप्तिः[3]—'सुषुप्ति'शब्दवदस्यार्थोऽनुसंधेयः । यथा—"निर्विकल्पकासत्त्वे, सुप्तोत्थितस्य 'अयं घटः' इति विशिष्टज्ञानं न स्यात्" ( त० कौ० १ । पृ० ८ ) इत्यादौ ग्रन्थे,—'सुप्ति' शब्दार्थः सुषुप्तिः ।

---

आहुः । ( २ ) नव्यास्तु,—'अभेदो वा * विशेषणविभक्त्यर्थः । यथा—'नीलं घटमानय' इत्यादौ,—नीलपदोत्तरवृत्तेः 'अम्' विभक्तेरर्थोऽभेदः' इत्याहुः । ( तर्को० ४ । पृ०१२ )

१ तदर्थश्च,—धात्वर्थे स्वार्थबोधिका, इति । ( श० प्र० श्लो० ६७ । टी० पृ० ८८ )

२ 'ते के?' इत्याकाङ्क्षायामाह—"सु-औ-जस्, अम्-औट्-शस्, टा-भ्यां-भिस्, ङे-भ्याम्-भ्यस्, ङसि-भ्याम्-भ्यस्, ङस्-ओस्-आम्, ङि-ओस्-सुप्" इति ।(पाणि० ४ । १ । २)

३ अत्रोच्यते प्रसङ्गतो व्यवहारोपयोगि—"क्षुधितस्तृषितः कामी विद्यार्थी कृषिकारकः । भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत्" इति । अन्यच्च—"मक्षिका भ्रमरः सर्पो राजा वै बालकस्तथा । परश्वापि च मूर्खश्च सप्त सुप्तान्न बोधयेत्" इति । ( नीतिसारे )

---

* अस्मिन्पक्षे वाक्य-समासयोः (व्यास-समासयोः) पर्यायता न घटते,—वाक्ये ('नीलं घटम्' इत्यादौ ),—अभेदस्य पदार्थत्वेन प्रकारत्वान्न संसर्गत्वम् । 'नीलघटम्' इत्यादौ कर्मधारये च लक्षणाया अस्वीकारेणाभेदस्यापदार्थत्वेन संसर्गत्वम्, इति । ( तर्को० ४ । पृ० १२ ) अत्र वयं ब्रूमः—अभेदस्य पदार्थत्वेऽपि "शाब्दबोधे पदार्थस्य प्रकारता-विशेष्यत्वाभ्यां भानं च पदादुपस्थितस्यैव; संसर्गतया भानं तु पदादुपस्थितस्यानुपस्थितस्यापि च भवति' इति नियमात्, संसर्गतयाऽपि भाने बाधकाभावः । अत एव,—गदाधर्यादौ विभक्त्यर्थविचारे—'राज्ञः पुरुषः' इत्यादौ,—षष्ठ्यर्थस्य संसर्गतावादोऽपि प्राचां संगच्छते, इति ।

**सुरा**—पैष्टयाख्यो मद्यविशेषः । यथा—"न सुरां पिबेत्" (श्रुतिः) इत्यादौ,—'सुरा' शब्दस्यार्थः । (मनु० अ० ११ । श्लो० ९३)

**सुवर्णम्**—१ (आकरजं तेजः) पार्थिवभागसंयुक्तो द्रवद्रव्यविशेषः । यथा—

---

१ अत्रेदं बोध्यम्—यद्यपि 'सुरा'शब्दवाच्याः 'गौडी, माध्वी, पैष्टी,' इति तिस्रः । तथापि 'सुरा'शब्दो पैष्टीमात्रे मुख्यः; गौडीमाध्व्योर्गौणः । तथोक्तं भविष्यपुराणे—"सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे" इति । (मनु० टी० कुल्लू० अ० ११ । श्लो० ९०)

२ पैष्टी तण्डुलपिष्टसाध्या, अन्नविकारः । (कुल्लू०) (मिता०) । तदन्यन्मद्यम् ।

३ कामतः सकृत्सुरापानेऽपि प्रायश्चित्तं तु—"सुरां पीत्वा द्विजो मोहात् (रागमूढतया) अग्निवर्णां* सुरां पिबेत् । तया स काये निर्दग्धे मुच्यते किल्बिषात्ततः" इति । (मनु० अ० ११ । श्लो० ९०) । 'अकामतः (जलबुद्ध्या) सुरापाने तु,—द्वादशवार्षिकं ब्रह्महत्याव्रताचरणम् । छर्दनानन्तरं तु त्रैवार्षिकं पिण्याकादिभक्षणं प्रायश्चित्तम् । केवलतालुमात्रसुरासंयोगे तु वर्षपर्यन्तं सकृत्पिण्याकादिभक्षणं प्रायश्चित्तं बोध्यम्' इति । मत्या मद्यपाने, गौडी-माध्व्योरज्ञानतः पाने च कृच्छ्रातिकृच्छ्रसहितः पुनः संस्कारः । अकामतोऽमुख्यसुरापाने तु वर्षपर्यन्तं प्रतिरात्रं सकृत् पिण्याकादिभक्षणम्, तप्तकृच्छ्रपूर्वकं पुनरुपनयनादि च ज्ञेयम् । (याज्ञ० अ० ३ । श्लो० २५३–२५५) (मनु० अ० ११ । श्लो० ९२)

४ सुवर्णस्य तैजसत्वं प्रकारान्तरेण साधयतां मतमुपन्यस्यति—पीतिमगुरुत्वाश्रयस्यात्यन्ताग्निसंयोगेऽपि पूर्वरूपापरावृत्तिदर्शनात्, पूर्वरूपपरावृत्तिप्रतिबन्धकं विजातीयं द्रवद्रव्यं कल्प्यते; तथा चानुमानम्—'अग्निसंयोगि-पीतिमगुरुत्वाश्रयः† विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तः, अत्यन्ताग्निसंयोगे सत्यपि पूर्वरूपविजातीयरूपानधिकरणपार्थिवत्वात्, जलमध्यस्थपीतपटवत्' इति । (मु० १ । तेजो० पृ० ८१)

५ सुवर्णस्य तैजसत्वे प्रमाणम्,—(१) तत्रानुमानं यथा—'सुवर्णं तैजसम्, असति प्रतिब-

---

* अयमर्थः—त्रैवर्णिकानामुत्पत्तिप्रभृति पैष्टीप्रतिषेधः । ब्राह्मणस्य तु मद्यमात्रनिषेधोऽप्युत्पत्तिप्रभृत्येव । राजन्यवैश्ययोस्तु न कदाचिदपि गौड्यादिमद्यप्रतिषेधः । शूद्रस्य तु न सुराप्रतिषेधः; नापि मद्यमात्रप्रतिषेधः, इति । (मिताक्ष० अ० ३ । श्लो० २५३ । पृ० ८१) (मनु० अ० ११ । श्लो० ९३–९४ । कुल्लूक०)

† अत्रोक्तम्—"पीतिमा च गुरुत्वं च दाहे यस्य च रक्तता । तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥ अनुच्छिन्नद्रवत्वं तु वस्तु यत्त्विह भासते । सुवर्णव्यवहारोऽयं तन्त्रत्वात्तत्र प्रवर्तते ॥ वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यं प्रवर्तते । रसः स्वभावमधुरो ध्वनिश्च मधुरो यथा ॥ भूसंसर्गवशाच्चास्य रूपं नैव प्रतीयते । स्फटिकस्य जपायोगात् यथा (अस्य ?) रूपं न भासते" इति । (न्या० ली० तेजोनि० पृ० ९)

'सुवर्णाङ्गुलीयकम्' इत्यादौ,—'सुवर्ण'शब्दार्थः। एवम्—'हिरण्य' 'रौप्य' इत्यादयः शब्दा व्याख्येयाः। २ कर्षपरिमाणम्। यथा—प्रायश्चित्तप्रत्याम्नायादौ 'सुवर्ण' शब्दार्थः कर्षपरिमाणम्। ३ धनम्, ४ धत्तूरम्, इत्यादि।

**सुषुप्तिः**— [ १ ] [ क ] प्रदेशविशेषावस्थितमनःसंयोगः। ( नील० गु० पृ० ३८ ) स च प्रदेशः पुरीतदात्मकः।

[ ख ] निद्रानाड्यवच्छिन्नात्ममनोयोगः। ( कृष्णं० )

[ ग ] पुरीतता मनसः संयोगः। ( दि० १ । ३ । पृ० ११९ )

---

न्धकेऽत्यन्तानलसंयोगेऽपि * अनुच्छिद्यमानद्रवत्वात्, यन्नैवम् तन्नैवम् † यथा पृथिवी' इति। ( मु० तेजोनि० पृ० ८१) । ( २ ) आगमोऽपि—"अग्नेरपत्यं प्रथमं हिरण्यम्" इति। ( दि० १ । पृ० ८१ )

१ ब्राह्मणस्वामिकसुवर्णचौर्यं महापातकम्। तत्संग्रहस्तु 'पातक'शब्दव्याख्याने टिप्पण्यां द्रष्टव्यः।

२ सुषुप्तेरुत्पत्तिभाङ्गुर्नव्याः—प्रथमम्, सुषुप्त्यनुकूलमनःक्रियया मनसाऽऽत्मनो विभागः, तत आत्ममनःसंयोगनाशः, ततः पुरीत-‡दात्मकोत्तरदेशेन मनसः संयोग उत्पद्यते; सैव सुषुप्तिः, इति। ( दि० १ । ३ । पृ० ११५ )

अत्रेदं बोध्यम्—सुषुप्तौ न किंचिदपि § ज्ञानमुत्पद्यते; सुषुप्तिकाले पुरीतति त्वगिन्द्रियाभावेन तत्र स्थितमनसस्त्वक्संयोगासंभवात्; पुरीतद्भिन्नदेशावच्छिन्नमनःसंयोगस्य ( त्वङ्मनःसंयोगस्य ) ज्ञानसामान्यं प्रति कारणत्वात्, इति। ( राम० १ । पृ० ११४–११५ )

---

* अत्रोक्तम्—"अग्नौ सुवर्णमक्षीणम्" इति। ( याज्ञ० )

† अत्र विज्ञेयम्—अत्यन्तानलसंयोगे सति घृतादौ ( पार्थिवे ) द्रवत्वनाशदर्शनेन, जलमध्यस्थघृतादौ द्रवत्वनाशादर्शनेन, असति प्रतिबन्धके पार्थिवद्रवत्वनाशा-त्यन्ताग्निसंयोगयोः कार्यकारणभावावधारणात्; सुवर्णस्यात्यन्तानलसंयोगे सत्यनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः; तस्मात्,—पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः; रूपवत्तया वाय्वादिष्वनन्तर्भावात् तैजसत्वसिद्धिः। तस्योष्णस्पर्श-भास्वररूपयोरुपष्टम्भक-पार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः। तस्मात् 'सुवर्णं तैजसम्' इति सिद्धम्। ( त० दी० १ । पृ० ८–९ )

‡ पुरीतत्, 'अन्त्र' इत्याख्यो नाडीविशेषः, इति ज्ञेयम्। ( अमरः, २ । ६ । ६६ । )

§ अत्र श्रुतिः—[ १ ] "अथ यदा सुप्तो भवति तदा न कस्यचन ( न कंचन ) वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते" इति ( शतपथ-ब्रा० १४ । बृह० ५ । १ । २१ ) ( ४ । १ । १९ )।

[ २ ] "यत्रैतत्पुरुषः सुप्तः स्वप्नं ( स्वप्नसृष्टं फलम् ) न कंचन पश्यति" इति ( कौषीत० उप० ३ । ३ ) ( ४ । १५ ) ( ४ । १६ ) । [ ३ ] "तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति" इत्यादिः। ( छान्दो० उ० ८ । ६ । ३ )

यथा—"पुरुषः सुप्तः स्वप्नया चरति" "तौ ह सुप्तं पुरुषमाजग्मतुः" (कौषीत० ४ । १९-१९ ) इत्यादौ,-'स्वप्' धात्वर्थः स्वापः; स एव सुषुप्तिः । [ २ ] मायावादिवेदान्तिनस्तु,-ज्ञानशून्यो जीवस्यावस्थो-विशेषः, इत्याहुः । [ ३ ] 'प्रबोधसहकार्यभावेन क्लेशस्यानभिव्यक्तिः' इति योगिन आहुः । ( सर्व० पातञ्जल० पृ० १६९ ) । [ ४ ] 'निद्रा' इति काव्यज्ञा आहुः । ( अमरः १ । ७ । ३६ )

**सूक्ष्मम्**—अत्यल्पः पदार्थः । यथा-अणुपरिमाणयुतः परमाण्वादिः । यथा वा—अध्यात्मपदार्थः सूक्ष्मशरीरम् । यथा वा- केषांचिद्वेदान्तिनां मते, अपञ्चीकृतानि पृथिव्यादीनि पञ्च महाभूतानि सूक्ष्माणि, तन्निर्मितं शरीरं सूक्ष्मशरीरम् । २ 'अर्थालंकारविशेषः' इत्यालंकारिका आहुः ।

---

१ अत्र श्रुतिः—"यत्र सुप्तो न कंचन कामं कामयते, न कंचन स्वप्नं पश्यति, तत् सुप्तमिति" इति । ( बृह० उ० ४ । ३ । १९ )

२ अत्रेदं विज्ञेयम्—'सांख्यमते सुषुप्त्यवस्था च द्विविधा; अर्धलय-समग्रलय-भेदात् । तत्रार्धलये विषयाकारा वृत्तिर्न भवति; किं तु—स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति । समग्रलये तु बुद्धेर्वृत्तिसामान्याभावो मरणादाविव भवति' इति । ( सांख्य० भा० अ० १ । सू० १४८ ) । किं च—मायावादिमते,—समग्रलये तु जीवः परमात्मनैक्यमाप्नोति । तत्र ( शारी० भा० १ । १ । ९ ) श्रुतिः—"यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य । तदा संपन्नो भवति, स्वमपीतो भवति, तस्मादेनꣳ स्वपितीत्याचक्षते" इति ( छान्दो० ६ । ८ । १ ) । मध्वमते तु,—"तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद, नान्तरम्" ( बृह० उप० ६ । ३ । २१ ) इति श्रुत्या 'जीवः सुषुप्त्यवस्थायां परमात्मन आलिङ्गनमात्रं प्राप्नोति' इति प्रतिपाद्यते' इत्यलं विस्तरेण ।

३ तदुक्तम्—"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" इति । इदं च लोकान्तरगामि भोगोपभोगसमर्थं 'लिङ्गशरीरम्' इत्युच्यते ।

• सांख्यास्तु,—'महदहंकारैकादशेन्द्रियपञ्चतन्मात्राणां समुदायः सूक्ष्मशरीरम्*; शान्तघोरमूढैरिन्द्रियैरन्वितत्वात् विशेषः' इति प्रतिपेदिरे । ( सांख्य० कौ० कारि० ४० )

४ तदुक्तम्—"संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा । कयाऽपि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते" इति । ( सा० द० परि० १० । श्लो० ७४८ । पृ० २४१ )

---

* अत्रोक्तम्—"सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते" इति । ( सांख्य० का० श्लो० ३९ ) । सूक्ष्माः सूक्ष्मदेहाः परिकल्पिता ( अनुमिताः ) । तथा च—'परलोके कर्म-

३ 'कतकवृक्षः' इति भिषज आहुः । ४ 'कैतवम्' इति काव्यज्ञा आहुः ।

**सूत्रम्**—१ शास्त्रीयबह्वर्थप्रतिपादकसंक्षिप्तवाक्यविशेषः । शास्त्रीयसूत्राणि षड्विधानि,—ब्रह्ममीमांसासूत्रम्[2], धर्ममीमांसासूत्रम्, न्यायसूत्रम्, वैशेषिकसूत्रम्, सांख्यसूत्रम्, योगसूत्रं चेति[3] । २ नाटकज्ञास्तु,—नाटकोपकरणं प्रस्तावः । यथा—'सूत्रधारः' इत्यादौ,—'सूत्र'शब्दस्यार्थः, इत्याहुः । ३ तन्तुः, इति काव्यज्ञा आहुः ।

**सृष्टिः**—१ उत्पत्त्यनुकूलव्यापारविशेषः । ( स्व० ) । यथा—

---

१ अत्राधिकं च 'दर्शन' इत्यादिशब्दव्याख्यानादौ तत्र तत्र दृश्यम् ।

२ अत्र वेदान्तिनः सूत्रलक्षणमाहुः—"अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" इति । ( मध्वभा० १।११ । प्रस्ताव० पृ० ३ )

३ पाणिन्यादिप्रणीतानि* व्याकरणसूत्राणि तु वेदाङ्गान्येव, न तु शास्त्रीयसूत्रषट्कान्तर्भूतानि; एवम्—आश्वलायना-पस्तम्बादिमहर्षिप्रणीतानि धर्म-गृह्य-श्रौत-सूत्राणि बहूनि सन्ति ।

४ इदानीं सृष्टिक्रमः कथ्यते—[ क ] 'प्राणिनां भोगभूतये परमेश्वरस्य† सिसृक्षा जायते; ततो लब्धवृत्तिकादृष्टविशिष्टात्मसंयोगात्, दोधूयमानेषु पवनपरमाणुषु प्रथमतः कर्मोत्पत्तिः; ततो द्वयोः पवनपरमाण्वोः संयोगः; ततो द्व्यणुकोत्पत्तिः; ततस्त्रिषु द्व्यणुकेषु कर्मोत्पत्तिः; ततस्तेषां संयोगः; ततस्त्र्यणुकोत्पत्तिः; एवं चतुरणुकाद्युत्पत्तिक्रमेण महावायुरुत्पद्य विहायसि दोधूयमानस्तिष्ठति । ततस्तस्मिन्वायौ, जलपरमाणुभ्यो द्व्यणुकादिक्रमेण महाजलराशिरुत्पन्नः पोप्लूयमानः‡ तिष्ठति । ततस्तस्मिन्महोदधौ, पृथिवीपरमाणुतो द्व्यणु-

---

फलभोगः सूक्ष्मदेहं विनाऽनुपपन्नो भोगत्वात् स्थूलदेहारब्धकृष्यादिजनितस्य सस्यस्य स्वदेहेनैव भोगवत्','स्वदेहारब्धकर्मादिफलं यत् तत् स्वदेहेनैव भोग्यम्, नेतरेण; अन्यथा,—कृतहानाकृताभ्यागमप्रसङ्गः' इत्यादिस्तर्कस्तत्रानुसंधेयः ।

* शाब्दिकास्तु सूत्रलक्षणमाहुः,—"संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" इति ।

† सर्गादौ भगवानीश्वरः शरीरद्वयं ( प्रयोज्य-प्रयोजकवृद्धशरीरद्वयम् ) परिगृह्य तथा व्यवहरति । ततस्तद्व्यवहारात् बालः पूर्ववत्संकेतं गृह्णाति । ( न्या० म० ४ । पृ० ५ )

‡ अत्रेदं चिन्त्यम्—केचित् ( वेदान्तिनः ),—'जलोत्पत्तेः ( जलसृष्टेः ) पूर्वमेव तेज उत्पद्यते ( तेजःसृष्टिः )' इत्याचक्षते । ( त० व० ) । अत्र वयं ब्रूमः—'यदाचक्षते केचित्, तन्नु युक्तमेव'; "ज्वलने सति जलस्य नाशः" इति भाष्यादौ प्रलयप्रक्रमे प्रतिपादनात्; अतः,—तेजःसृष्ट्यनन्तरमेव जलसृष्टिर्युक्ता । अन्यथा 'तेजोनाशानन्तरमेव पृथिवीजलनाशः' इति

कादिक्रमेण महापृथिव्युत्पद्य संहताऽवतिष्ठते । ततः तस्मिन्नेव जले, तैजसेभ्य उत्पन्नो महातेजोराशिर्देदीप्यमानस्तिष्ठति, इति । तत्र तेजःपरमाणुसहितपृथिवीपरमाणुभिरीश्वराभिध्यानादण्डमुत्पद्यते, तस्मिन्ब्रह्मोत्पद्यते', इति । (त० व०१२५-१२७) (सि०च०)

[ ख ] 'चतुर्णां महाभूतानां सृष्टिविधिरुच्यते—ततः पुनः ( खण्डप्रलयानन्तरम् )प्राणिभोगभूतये परमेश्वरस्य सिसृक्षानन्तरं सर्वात्मगतवृत्तिलब्धादृष्टापेक्षेभ्यस्तत्संयोगेभ्यः पवनपरमाणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगेभ्यो द्व्यणुकादिक्रमेण महावायुः समुत्पन्नो नभसि दोधूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव वायावाप्येभ्यः परमाणुभ्यस्तेनैव क्रमेण महान् सलिलनिधिरुत्पन्नः पोप्लूयमानस्तिष्ठति । तदनन्तरं तस्मिन्नेव ( सलिलनिधौ ), पार्थिवेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्ना महापृथिवी संहता ( घनीभूता )ऽवतिष्ठते । तदनन्तरं तस्मिन्नेव महोदधौ‡ तैजसेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण समुत्पन्नो महांस्तेजोराशिर्देदीप्यमानस्तिष्ठति । एवं समुत्पन्नेषु चतुर्षु महाभूतेषु परमेश्वरस्याभिध्यानमात्रात् ( इच्छामात्रात्, न तु व्यापारान्तरात् ), तैजसेभ्योऽणुभ्यः पार्थिवादिपरमाणुसहितेभ्यो महदण्डमारभ्यते । तस्मिंश्चतुर्वदनकमलं सकललोकपितामहं ब्रह्माणं सकलभुवनसहितमुत्पाद्य प्रजासर्गे नियुङ्क्ते । स च महेश्वरेण नियुक्तो ब्रह्माऽतिशयज्ञानवैराग्यैश्वर्यसंपन्नः सर्वप्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपज्ञानवैराग्यभोगायुषः सुतान् प्रजापतीन्मानसान्मनून् देवर्षिपितृगणान् मुखबाहूरुपादतश्चतुरो*वर्णानन्यानि चोच्चावचानि भूतानि सृष्ट्वा † आशया-( वासना- )-नुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः संयोजयति' इति । ( प्रशस्त० १ । पृ० ६ ) ( प० मा० कालनि० पृ०९३ ) ( त० व० परि० ५ । पृ० १२६—१२७ )

महाप्रलयानन्तरं तु न सृष्टिः; सर्वमुक्तौ सर्वोत्पत्तिनिमित्तस्यादृष्टस्यापायात्, सर्वमोक्षप्रवृत्तौ ( मुक्तौ ) प्रयोजनाभावाच्च । न हि,—बीजप्रयोजनाभ्यां विना कार्योत्पत्तिः, इति । ( प० मा० कालनिरू० पृ० ९३ ) ( त० व० परि० ५ । पृ० १२५-१२७ )

५ अत्रेदं विज्ञेयम्—'प्रथमतो जगदुत्पत्तौ परमाण्वाद्यवयवाः समवायिकारणम्, परमाणुद्वयसंयोगादिकमसमवायिकारणम्, ईश्वर-तज्ज्ञानेच्छाकृति-काल-कर्मादृष्टादि निमित्तकारणम्' इति वैशेषिकमतम्, इति (सि०च०) । एवमन्यत्राऽपि, भावकार्योत्पत्तौ कारणत्रयमूह्यम् ।

प्रतिपाद्येत, परंतु तथा न प्रतिपाद्यते, इति जलसृष्टेः पूर्वमेव तेजःसृष्टिर्युक्ता, इति । ( स्व० ) । तथा च श्रुतिः—"तस्माद्वा एतस्मादात्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधीभ्योऽन्नम्, अन्नात्पुरुषः" इति । ( तैत्तिरीय-उप० २ । १ )

* अत्र श्रुतिः—"ब्राह्मणोऽस्य मुखमासीत्, बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत" इति । ( ऋग्वे० पु० सू० )

† अत्रेदं बोध्यम्—'एषा चादिसृष्टिरयोनिजैव; तत्रोच्चा धर्मविशेषसहकृतेभ्योऽणुभ्योऽवचा चाधर्मविशेषसहकृतेभ्यो जायते । ब्रह्माऽयोनिजोऽतिशयितधर्मविशेषसहकृतेभ्योऽणुभ्यो जायते, ईश्वराभिध्यानमात्रात्' इति । ( प्रशस्त० टिप्प० पृ० १९ )

"ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः" इत्यादौ,—'सृज्'धात्वर्थः सृष्टिः। ( मणिम० स० १। श्लो० २ )। स च व्यापारो, जगदुत्पत्तावीश्वरेच्छारूपः, घटाद्युत्पत्तौ तु कुलालादीनां कर्मादिः।

**सेकः**—[ क ] द्रवद्रव्यक्रियानुकूलव्यापारः। यथा—'वृक्षायोदकमासिञ्चति' इत्यादौ,—'सिच्' धात्वर्थः। ( ग० व्यु० का० ४। ९४ ) [ ख ] 'क्षरणम्' इति कश्चिदाह। ( वाच० )। अत्रावशिष्टं तु 'चतुर्थी' इत्यादिशब्दव्याख्याने ( पृ० २४६ ) दृश्यम्।

---

१ अत्र—"तदैक्षत बहु स्यां प्रजायेय" ( छान्दो० उ० ६। २। ३ ), "तत्सृष्ट्वा, तदेवानुप्राविशत्" ( तैत्ति० उ० २। ६। १ ) इत्यादिश्रुतयोऽनुसंधेयाः। मनुराह—"ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः॥ सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु बीजमवासृजत्" इत्यादि। ( मनु० अ० १। श्लो० ६-८)

पौराणिका नवविधं सर्गं जगुः—"सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु यः। कालद्रव्यगुणैरस्य त्रिविधः प्रतिसंक्रमः" इत्यादि। ( भाग० स्क० ३। अ० १० )

२ श्लोकसमुदायेन सृष्टिक्रममाहुर्वेदान्तिनः—"ससर्ज भगवानादौ त्रीन् गुणान् प्रकृतेः परः। महत्तत्त्वं ततो विष्णुः सृष्टवान् ब्रह्मणस्तनुम्॥ महत्तत्त्वादहंकारं ससर्ज शिवविग्रहम्। दैवान् देहान् मनः खानि खं च स त्रिविधात्ततः॥ आकाशादसृजद्वायुं वायोस्तेजो व्यजीजनत्। तेजसः सलिलं तस्मात् पृथिवीमसृजद्विभुः॥ ततः कूटस्थमसृजद्विधिं ब्रह्माण्डविग्रहम्। तस्मिंस्तु भगवान् भूयो भुवनानि चतुर्दश" इति। ( मणिमञ्जरी, स० १। श्लो० २-५ )

मत्स्य उवाच—"तपश्चचार प्रथमममराणां पितामहः। आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः॥ पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम्। नित्यं शब्दमयं पुण्यं शतकोटिप्रविस्तरम्॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः। मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः" इत्यादिसृष्टिप्रकारः सविस्तरो मत्स्यपुराणादौ द्रष्टव्यः।

३ अत्र—वृक्षादिनिष्ठत्वेनेच्छैव हि चतुर्थ्यन्तार्थः; तस्याश्च, स्वविषयसंयोगादिजनकत्व-स्वजन्यत्व*-एतदुभयसंबन्धेन सेकादिक्रियायामन्वयः। ( ग० व्यु० का० ४। पृ० ९४ )

---

* तेन, 'अनान्तरस्य वृक्षादिनिष्ठजलसंयोगादिरिच्छाविषयः, अन्येन च जनेनान्योद्देशेन क्षिप्तजलादेर्वृक्षादिसंयोगः; तत्रापि 'वृक्षायोदकमासिञ्चति जनः' इत्यादिप्रयोगापत्तिः' निरस्ता। ( ग० व्यु० का० ४। पृ० ९४ )

**सेना**—तत्तद्गजाश्वादिसमुदायः[1] "यथा-सेनानिवेशान्पृथिवीक्षितोऽपि जग्मुः" ( रघु० ७ । २ ) इत्यादौ,–'सेना'शब्दस्यार्थः ।

**सेवनम्**[2]—१ [ १ ]. भजनम् । [ २ ] आराधनम् । २ आश्रयणम् । ३ उपभोगः ।

**सौत्रान्तिकः**—( बौद्धः ) तदर्थ-तन्मते च 'बौद्ध'शब्दव्याख्याने ( पृ० ९६०–९६१ ) दृश्ये ।

**स्तुतिः**—[ क ] गुणवत्तया ख्यापनम्[3] । ( चि० १ । पृ० १०२ ) यथा–"निर्विघ्नसमाप्तिकामो देवतास्तुतिमाचरेत्" इत्यादौ ग्रन्थे,–'स्तुति' शब्दार्थः । ( चि० मङ्ग० १ । पृ० १०० ) (वै० सा० द० पृ० १ )

[ ख ] सर्वोत्कृष्टगुणवत्ताप्रतिपादकशब्दः । ( म० वा० पृ० १० )

[ ग ] 'आरोप्यमाणगुणकथनम्' इति प्रामाणिका आहुः ।

[ घ ] 'ज्ञानविशेषोपधायकः शब्दः' इति नव्या आहुः । ( मू० म० मङ्ग० १ । १०४ )

**स्तुतिः**—( अर्थवादः ) [ १ ] [ क ] विधेः फलवादलक्षणा या प्रशंसा, सा स्तुतिः । संप्रत्ययार्थं 'स्तूयमानं श्रद्दधीत' इति; प्रवर्तिका च; फलश्रवणात्प्रवर्तते । ( वात्स्या० २ । १ । ६३ )

[ ख ] साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम् । यथा—"सर्वजिता वै देवाः सर्वमजयन्" ( इति विधेः ) "सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति" इत्येवमादि वाक्यं स्तुतिः । ( वात्स्या० २ । १ ।

---

१ अत्र सेनात्वं च, [ क ] अनियतदिग्देशसंबन्धिषु गजतुरगस्यन्दनेषु परप्रत्यासत्त्युपगृहीतेषु वधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसंख्या । ( न्या० वा० १ । १ । १४ । पृ० २९ ) । [ ख ] तत्तदश्वादिविषयकज्ञानविषयत्वम् । (त० प्र० ख० ४ । पृ० ५०)

२ अत्रेदं विज्ञेयम्—'वैष्णवमते, जीवस्य मोक्षदशायामपि जीव-परमात्मनोः सेव्यसेवकभावो वर्तत एव; तदानीमपि तयोर्भेदस्य सत्त्वात्' इति ।

३ उत्कर्षवत्तया* ज्ञानानुकूलः शब्दः, इत्यर्थः । तेन, व्यापारान्तरे तादृशि नातिप्रसङ्गः ।

---

* अत्र—'ज्ञान'पदेन भ्रमो गृह्यते । तेन, तादृशि स्वरूपाख्याने नातिव्याप्तिः । भगवत्स्तुत्यादिषु तत्प्रयोगो भाक्तः । ( मू० म० मङ्ग० १ । पृ० १०३–१०४ )

६३ ) ( गौ० वृ० २ । १ । ६४ ) । यथा वा—"अहरहः संध्यामुपासीत" इति विधेः "संध्यामुपासते येतु सततं शंसितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्" इत्याद्यर्थवादवाक्यं स्तुतिः । [ ग ] विधेयस्तावकं वाक्यम् । यथा—"वायव्य५ श्वेतमालभेत भूतिकामः" इति विधेः, "वायुर्वै[1] क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति" इत्यादिः । ( तैत्तिरीयसंहिता, २ । १ । १ ) ( म० प्र० ४ । पृ० ६४ ) । [ २ ] स्तोत्रम्; तच्च[2] गुणकर्मादिभिः प्रशंसनम्[3] । यथा—'यो देवदत्तश्चतुर्वेदाभिज्ञः' इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति ।

**स्तोत्रम्**[4]—'स्तुति'शब्दवदस्यार्थोऽनुसंधेयः ।

**स्तोभः**—१ [ १ ] अर्थशून्यो गानादिस्वरपरिपूरणार्थः शब्द[5]विशेषः । यथा—सामवेदे 'इडा-होई' प्रभृतयः । [ २ ] वेदान्तिनस्तु,—व्यर्थाक्षरवत्त्वम् । यथा—"अस्तोभमनवद्यं च" इत्यादिसूत्रलक्षणे 'स्तोभ' शब्दस्यार्थः, इत्याहुः । ( तत्त्वप्रका० १ । १ । १ । पृ० ३ ) । २ हेलनम् । ३ स्तम्भनम् । ( हेमच० )

**स्तोमः**—१ आत्मगुणाविष्करणम् । यथा–'स्तोमयति' इत्यादौ; "सामस्तोममस्तौषन्" ( श्रुतिः ) इति पुराकल्पे च 'स्तोम'शब्दस्यार्थः । २

---

१ इदं वाक्यं हि, 'वायूद्देश्यकः श्वेतपशुकरणको यागः प्रशस्तः' इति प्राशस्त्यबोधनेन विध्यर्थे स्तौति । तथा च–विध्युद्देशेनैकवाक्यत्वादर्थवादः प्रमाणम् । (शाब० भा० १ । २ । ७)

२ स्तोत्रं चतुर्विधम्,—द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च । तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्" इति ( मत्स्यपु० अ० १२३ )

३ गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनम्, इत्यर्थः । ( ऋग्वेदभाष्ये सायणः )

४ अत्रेदमवधेयम्—'प्रगीतमन्त्रसाध्यं स्तोत्रम्; अप्रगीतमन्त्रसाध्यं शस्त्रम्' इति स्तोत्र-शस्त्रयोर्भेदः, इति ।

५ इदं च वर्णमात्रस्तोभस्य लक्षणम् । वाक्यस्तोभस्य तु नव विधा भवन्ति,—"आशास्तिः स्तुति-संख्याने प्रणवः परिदेवनम् । प्रैषमन्वेषणं चैव सृष्टिराख्यानमेव च" इति । ( साम्नो गानग्रन्थ० )

समूहः । ३ यज्ञः । ४ स्तवः । ५ धनम् । ६ मस्तकम् । ७ शस्यम् । ८ लौहाग्रदण्डः । ( वाच० )

**स्त्रीत्वम्**—१ क्वचित्,–योनिमत्त्वम् । यथा–'अजा, अश्वा, शूद्रा, श्यामा, चपला, ब्राह्मणी, गौरी, सुकेशी, गर्भिणी' इत्यादौ । २ क्वचित्,–भार्यात्वम् । 'यथा–आचार्यानी, मनावी, 'अर्यी, शूद्री' इत्यादौ । ३ क्वचित्,– लिङ्गरूपसंज्ञाविशेषः । यथा–'अटवी' इत्यादिशब्देषु । ( ग० व्यु० स्त्रीप्रत्य० पृ० ११८–११९ )

---

१ अत्र—प्रातिपदिकप्रकृतिकाः "स्त्रियाम्" ( पाणि० ४ । १ । ३ ) इत्यनेन सूत्रेण विहिताष्टाबादयः स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति । ( ग० व्यु० स्त्रीप्र० पृ० ११८ )

२ अत्र—( १ ) स्त्रीपुंधर्मश्च,—"अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने । रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मेऽन्नपक्त्यां च पारिणाह्यस्य चेक्षणे" इति । ( मनु० अ० ९ । श्लो० २–११ ) ( मनु० अ० ५ । श्लो० १४७–१६६ )

अधिवेत्तारं प्रत्याह—"आज्ञासंपादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः" ( याज्ञ० अ० १ । श्लो० ७६ ) । "व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च । कदन्नं च कुवासश्च कर्म चावस्करोज्झनम्" इति । ( याज्ञ० अ० १ । श्लो० ७० । मिताक्षरायां नारदः )

( २ ) अविभाज्यं स्त्रीधनं च—"अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्" ( मनु० अ० ९ । श्लो० १९४ ) । "पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यं च स्त्रीधनं तत्प्रकीर्तितम्" इति । ( याज्ञ० अ० १ । श्लो० १४८ )

( ३ ) स्त्रीपुरुषभेदस्तु रतिमञ्जर्याम्—"पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम्" इति ।

३ अत्र—भार्यात्वं च ( स्त्रीप्रत्ययप्रतिपाद्यम् ) संबन्धविशेषः; तत्रैव निरूपकत्वेन प्रकृत्यर्थान्वयः । ( ग० व्यु० स्त्री० पृ० ११९ ) तथा च—'आचार्यनिरूपकभार्यात्ववती' इति शाब्दबोधः । एवमुत्तरत्रापि बोध ऊह्यः ।

४ अत्रेदं विज्ञेयम्—'खट्वा-ऽटवी-देवता'पदे च स्त्रीप्रत्यया नार्थबोधकाः; तत्र प्रकृत्यर्थे योनिमत्स्वरूपस्त्रीत्वस्यायोग्यतयाऽनन्वयात् । न च, 'शब्दगतं स्त्रीत्वादिरूपधर्मान्तरमेव तत्र परंपरासंबन्धेनाथ॰ऽतया भासते' इति श्रीपतिदत्तोक्तं युक्तम्; तद्भाने मानाभावात्, इति । (ग० व्यु० स्त्री० पृ० ११९ ) । अत्राधिकं वैयाकरणादिमतं च 'लिङ्ग'शब्दव्याख्याने टिप्पण्यां ( पृ० ६५०–६५१ ) प्रतिपादितं, तत्तत्र द्रष्टव्यम् ।

**स्त्रीलिङ्गम्**—( नाम ) [ क ] स्त्रीलिङ्गत्वेन परिभाषितं पदम्[1] । यथा—'तटी' इत्यादिपदम् ।
[ ख ] क्वचित्—योन्यादिमत्त्वलक्षणस्त्रीत्ववाचकं पदम् । यथा—"न विप्रा वेदमुच्चरेत्" इत्यादौ,—'विप्रा' पदम्[2] । ( श० प्र० श्लो० ५३ । टी० पृ० ६९)

**स्थलम्**—१ [ १ ] तत्तत्पक्षसाध्यादिवाचकप्रयोगः । यथा—"पर्वतपक्षकवह्निसाध्यकधूमहेतुकस्थले" इत्यादौ ग्रन्थे,—'स्थल'शब्दस्यार्थः ।
[ २ ] तत्तद्व्यवहारजन्यशाब्दबोधविषयः । यथा—पर्वते वह्निसाध्यकस्थलं हि, 'पर्वतो वह्निमान्' इति शब्दबोधविषयो वह्निमत्पर्वतादि । ( स्व० ) २ 'उदाहरणवाक्यम्' इति केचिद्वदन्ति । ३ 'जलशून्योऽकृत्रिमो भूभागः । यथा—ऊषरं स्थलम्' इति काव्यज्ञा आहुः । (अमरः, २ । १ । ५)

**स्थानम्**—१ क्वचित्,—ज्ञापकम् । ( गौ० वृ० १ । ५९ ) यथा—'निग्रहस्थानम्' इत्यादौ; "वेदाः स्थानानि विद्यानाम्" ( याज्ञ० १ । ३ ) इत्यादौ च,—'स्थान'शब्दस्यार्थः । (स्व०) । २ स्थितिः; सा च क्वचित्,—स्वाभिप्रायबोधानुकूला स्थितिः । यथा—'गोपी कृष्णाय तिष्ठते' इत्यादौ,—तिष्ठतेरर्थः[3] । ( ल० म० ) । ३ 'प्रसङ्गः । यथा—"स्थानेऽन्तरतमः" ( पाणि० १ । १ । ५० ) इत्यादौ,—आदिश्यमानस्य यणादेः ( कारणीभूते ) इगादौ स्थानम्' इति शाब्दिका वदन्ति । ४ 'आश्रयः' इति काव्यज्ञाः संगिरन्ते[4] । ५ मीमांसकास्तु,—देशसामान्यम् (स्थानं क्रमश्चेत्यनर्थान्तरम् )[5] । यथा—"ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वा-

---

१ परिभाषायाः प्रयोजनं चेह पदसंस्कारः । स च, 'तटी' इत्यादौ,—स्त्रीत्वेन ङीबादिप्रसवः । ( श० प्र० श्लो० ५३ । टी० पृ० ६९ )

२ अत्र—टाबादिना प्रत्ययेनैव ( न तु प्रकृत्या ), स्वार्थस्य योन्यादिमत्त्वलक्षणस्त्रीत्वं प्रकृत्यर्थेऽनुभूयते, इति ज्ञेयम् । ( श० प्र० श्लो० ५३ । टी० पृ० ६९ )

३ अत्र 'कृष्णसंप्रदानकबोधानुकूला स्थितिः' इति शाब्दिकमते बोधः । ( ल०म० का० ४ । पृ० १०३ )

४ लक्षणं च संनिधिविशेषत्वम् । ( लौ० भा० टी० पृ० २६ )

५ अत्रोक्तम्—"स्थानं क्रमो, योगबलं समाख्या" इति । ( पार्थसारथिः )

६ अत्र मीमांसकाः स्थानं विभजन्ते—स्थानं द्विविधम्,—पाठसमानदेश्यम्, अनुष्ठानस०

दशकपालं निर्वपेत्'' इत्येवंक्रमविहितेषु, "इन्द्राग्नी रोचनादिव," "वैश्वानरोऽजीजनत्" इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं 'प्रथमस्य प्रथमम्, द्वितीयस्य द्वितीयम्' इत्येवंरूपो विनियोगः; यथासंख्यपाठात्', इत्याहुः । (लौ० भा० पृ० २६) । ६ सादृश्यम् । ७ अवकाशः । ८ संनिवेशः । ९ 'वसतिः; सा च लोकविशेषः' इति पौराणिका आहुः । १० नीतिवेदिनस्तु,–'उपचयापचयहीनं साम्यावस्थानम्' इत्याहुः ।

**स्थाने**—( अव्ययम् ) १ [ १ ] योग्यम् । यथा–"स्थाने तच्चलमर्त्यगण्डनृपतेः" (प्रतापरु०) इत्यादौ,–'स्थाने' इत्यस्यार्थः । [२] औचित्यम् । यथा–"स्थाने भवानेकनराधिपः सन्" ( रघु० ५ । १६ ) इत्यादौ,–'स्थाने' इत्यस्यार्थः । [ ३ ] युक्तम् । यथा–"स्थाने वृता भूपतिभिः परोक्षैः"( रघु० ७ । १३ ) इत्यादौ,–'स्थाने' इत्यस्यार्थः । २ सत्यम् । ३ सादृश्यम् । ४ करणार्थः । ( शब्दर० )

**स्थितिः**—१ स्वोत्पत्त्यवस्था । यथा–'स्थितिस्थापकः' इत्यादौ,–'स्थिति' शब्दस्यार्थः । २ 'स्वभावः' इत्यन्ये आहुः । ३ 'वसतिः' इति काव्यज्ञा आहुः । ४ 'गतिनिवृत्तिः । यथा—'तिष्ठति' इत्यादौ,' इति शाब्दिका आहुः ।

**स्थितिस्थापकः**—( गुणः ) [ क ] क्रियाविशेषजनकः, ( क्रियाविशेष-

---

मानदेश्यं च । तत्राद्यमपि द्विविधम्,—यथासंख्यपाठः, यथासंनिधिपाठश्चेति । तत्र यथासंख्यपाठत्वेन समानदेशत्वं समुदाहरति—'ऐन्द्राग्नम्' इत्यादिना । ( लौ० भा० टी० पृ० २६ )

१ स च, सम्यग्वर्तिनां स्वस्वधर्मानुष्ठायिनां जनानां लोकविशेषात्मकं स्थानम् । अत्रोक्तमग्निपुराणे—"प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् । क्षत्रियाणां तथा चैन्द्रं संग्रामेष्वनुवर्तिनाम् ॥ ( वैश्यानाम् ? ) गान्धर्वं शूद्रजातीनां परिचर्यानुकारिणाम्" इत्यादि ।

२ संस्कारप्रभेदोऽयम्, कार्मुक-कटादि-पृथिवीमात्रवृत्तिः, अतीन्द्रियो*ऽनित्यश्चेति । (त० सं० ) । स च, आकृष्टतरुशाखादौ स्पन्दं प्रति कारणमपि भवति । केचित्तु,—'अयं

---

* तस्यातीन्द्रियत्वे मानं च 'आकृष्टतरुशाखादीनां परित्यागे पुनर्गमनं स्थितिस्थापकसाध्यम्' इति । ( मु० गु० पृ० २३३ ) । तथा च—शरादीनां नमनोत्तरं त्यागे यथास्थाननियतसंयोगजनककर्मजनकतया सिद्ध्यति सः । ( प० मा० )

जन्यः), स्वजन्यक्रियानाश्यो गुणविशेषः। (दि० गु० पृ० २३३)। स तु ऋजुत्वापादकः संस्कारः।

[ख] अन्यथाकृतस्य पुनस्तदवस्थापादकः संस्कारः। (त० सं०)

[ग] A आश्रये पूर्वावस्थापादकः संस्कारः। स यथा—आकृष्टतरुशाखादेः पूर्वावस्थां जनयति। (प्र० प्र०)। B स्वोत्पत्त्यवस्थापादको गुणः।

**स्नेहः**[2]—१ (गुणः) [क] स्नेहत्वजातिमान्। (प्र० प्र०)

---

स्पर्शवद्विशेष-वृत्तिः* (पृथिव्यादिचतुष्टयवृत्तिः),' इत्याहुः। (प्र० प्र०) (भा० प० श्लो० १६०) (त० कौ०) (दि० गु० पृ० १९३)

तल्लक्षणं च पृथिवीमात्रसमवेतसमवेतसंस्कारत्वव्याप्यजातिमत्त्वम्। (सि० च० गु पृ० ३५)

१ पूर्वसंयोगविजातीयसंयोगनाशकत्वे सति‡ पूर्वसंयोगसजातीयसंयोगजनकः, इति समुदितार्थः। (वाक्य० गु० पृ० २२)

२ स्नेहश्चिक्कणता, जलमात्रवृत्तिः§, चणकचूर्णादिव्यञ्जकश्च। पयोघृततैलादौ स्नेहोपलम्भस्तु पय आद्यन्तर्गतजलोपाधिकः (जलगत एवोपलभ्यते)। स्नेहो जलपरमाणुगतो नित्यः, जलद्व्यणुकादिरूपकार्यगतोऽनित्यः, इति। (त० कौ०) (प्र० प्र०) (प्रशस्त० २। पृ० ३३)। (त० सं०) (भा० प०) (वाक्य०)

अत्र विचार्यते—न च, 'सांसिद्धिकद्रवत्वादेव संग्रहसंभवे किं स्नेहेन' इति वाच्यम्; चणकचूर्णादिना जल-द्रवत्वयोरुत्कर्षस्यानाधानादन्यस्य च संग्रहहेतोरभावे तदुत्कर्षस्याकस्मिकत्वप्रसङ्गात्; अतः स्नेह आवश्यकः, इति। (प० च०)

---

* अत्र भाष्यम्—"स्थितिस्थापकस्तु, स्पर्शवद्द्रव्येषु वर्तमानो घनावयवसंनिवेशविशिष्टेषु कालान्तरावस्थायिषु स्वाश्रयमन्यथाकृतं यथावस्थितं स्थापयति। स्थावरजङ्गमेषु विकारेषु धनुः-शाखा-दन्त-शृङ्गादिषु सूत्रवस्त्रादिषु (सूत्र-चर्म-वस्त्र-कम्बलादिषु) भुग्नसंवर्तितेषु तस्य कार्यं संलक्ष्यते। नित्यानित्यत्वनिष्पत्तयोऽस्यापि गुरुत्ववद्द्रष्टव्याः" इति। (प्रशस्त० गु० पृ० ५३)

† सा जातिस्तु स्थितिस्थापकत्वमेव; स च जातिविशेषः क्रियाविशेषजनकतावच्छेदकतया सिध्यति, इति बोध्यम्। (दि० गु० पृ० २३३)

‡ अत्र—क्रियावारणाय सत्यन्तं दलं दत्तम्। विभागवारणाय विशेष्यदलम्। (वाक्य० गु० पृ० २२)

§ अत्र भाष्यम्—"स्नेहोऽपां विशेषगुणः, संग्रह-मृजादिहेतुः। अस्यापि गुरुत्ववन्नित्यानित्यत्वनिष्पत्तयः" इति। (प्रशस्त० २। गु० पृ० ३३। अत्र—'मृजा शुद्धिः' इत्यर्थः।

[ ख ] चूर्णादिपिण्डीभाव[1]हेतुर्गुणः । ( त० सं० ) यथा—"प्रदीपैः स्नेहमादत्ते दशयाऽभ्यन्तरस्थया"[2] इत्यादौ,—तैलसंयुक्तजलगतः स्नेहः । जले स्नेहो द्विविधः,—प्रकृष्टस्नेहः, अपकृष्टस्नेहश्च । तत्र—तैलादौ प्रतीयमानः प्रकृष्ट[3]स्नेहोऽग्नेः ( दीपादिज्वालादेः ) अनुकूलः । पानीयगतस्तु स्नेहोऽप्रकृष्टस्नेहो वह्निं नाशयति । ( मु० गु० पृ० २३२ ।

[ ग ] स्निग्धधीर्यद्विशिष्टार्थे स्नेहश्चिक्कणता च सः । ( ता० २० श्लो० ४८ ) । २ 'प्रेमै'[4] इत्यालंकारिका वदन्ति ।

**स्पर्धा**—पराभिभवेच्छा । यथा—स्पर्धते, इत्यादौ ।

**स्पर्शः**—१ ( गुणः ) [ १ ] [ क ] त्वगिन्द्रियमात्रग्रहणो यो-

---

१ अत्रेदं बोध्यम्—[ क ] सत्यपि द्रवत्वे द्रुतसुवर्णादिभिः, सत्यपि च स्नेहे हिमकरकादिभिः पिण्डीभावाजननात्, स्नेहसहितमेव द्रवत्वं पिण्डीभावकारणम्, इति । (त० व०पृ०२३०)। [ ख ] पिण्डीभावे स्नेहस्यैवासाधारणकारणत्वम्; न तु जलादिगतद्रवत्वस्य । तथा सति,—द्रुतसुवर्णादिसंयोगे चूर्णादेः पिण्डीभावापत्तेः, हिमकरकादिभिः पिण्डीभावापत्तेश्च । अतः स्नेहस्यैवासाधारणकारणत्वम् । वस्तुतस्तु—'द्रुतजलसंयोगस्यैव पिण्डीभावहेतुत्वम्; स्नेहस्य पिण्डीभावहेतुत्वे मानाभावात्' इति । जले 'द्रुतत्व'विशेषणात् करकादिष्वावृत्तिः । (न्या० बो० १ । पृ० ६ )

२ अत्रोद्भटः—"अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः" इति ।

३ अत्र प्रसङ्गतः स्नेहनविधिरुच्यते—"स्नेहश्चतुर्विधः प्रोक्तो घृतं तैलं वसा तथा । मज्जा च तां पिबेन्मर्त्यः किंचिदभ्युदिते रवौ ॥ स्थावरो जङ्गमश्चैव द्वियोनिः स्नेह उच्यते । तिलतैलं स्थावरेषु जङ्गमेषु घृतं वरम् ॥ द्वाभ्यां त्रिभिश्चतुर्भिर्वा यमकस्त्रिवृतो महान्" इति । (भावप्र०)

४ प्रेमरूपस्नेहश्च वत्सलरसस्य स्थायिभावः; स च रसो भरतसंमतः । तदुक्तम्—"स्फुटं चमत्कारितया वत्सलं च रसं विदुः । स्थायी वत्सलता स्नेहः पुत्राद्यालम्बनं मतम्" इति । ( सा० द० )

५ स तु बाह्यैकेन्द्रियग्राह्यः, पृथिवी-जल-तेजो-वायु-वृत्तिः*, द्रव्यप्रत्यक्षे त्वक्सहकारी,

---

* अत्र विवेकः—[ १ ] कठिनसुकुमारस्पर्शौ पृथिव्या एव, इति । ( भा० प० ) । [ २ ] तत्र वायुगतस्पर्शस्तु बहुविधः । तथा चोक्तम्—"वायव्यश्च गुणः स्पर्शः, स्पर्शश्च बहुधा स्मृतः । उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ॥ तथा खरो मृदू रूक्षो लघुर्गुरुतरोऽपि च" इति । ( भार० शा० अ० १८१ )

कठिनस्याप्युपलक्षणमिदम्; यथोक्तम्—"वायोश्चापि गुणः स्पर्शः, स्पर्शश्च बहुधा स्मृतः ।

ऽर्थः[1], स स्पर्शः । ( वै० उ० ३ । १ । १ ) ( प्रशस्त० पृ० १२ )
[ ख ] त्वगिन्द्रियमात्रग्राह्यो गुणः । ( त० सं० १ )
[ ग ] त्वङ्मात्रग्राह्यजाति (स्पर्शत्व-)-मान् । ( त० कौ० १ ) यथा—'त्वचा घटं स्पृशति' इत्यादौ,—'स्पृश्'धात्वर्थः स्पर्शः । ( स्व० ) न्याय-वैशेषिक-मते, स्पर्शस्त्रिविधः,—शीतः, उष्णः, अनुष्णाशीतश्चेति । तत्र,—शीतो जले वर्तते; उष्णस्तेजसि; अनुष्णाशीतः पृथिवीवाय्वोर्वर्तते । तत्र,—द्विविधायामपि ( नित्यायामनित्यायां च ) पृथिव्यां स्पर्शोऽनित्यःपाकजश्च; जलतेजोवायुषु च द्रव्येष्वपाकजः, नित्यगतो नित्यः अनित्यगतोऽनित्यश्चेति । ( प्रशस्त० पृ० १४ ) ( वै० उ० ७ । १ । ६ ) ( त० सं० ) चित्रस्पर्शस्तु रूपस्थलीययुक्त्या ( पृ० ६३० ) स्वीकरणीय एव, इति । ( वै० वि० ७ । १ । ६ । पृ० २९२ )

[ २ ] A केचित्तु,—'स्पर्शः संयोगविशेष एव, नातिरिक्तः' इति मन्यन्ते । B बौद्धास्तु,—'नामरूपेन्द्रियाणां मिथः संयोगः स्पर्शः' इत्याहुः । ३ वेदान्तिनस्तु,—संबन्धः ( संनिकर्षः ) । ( गीता—मध्वभा० ) । यथा—"मात्रास्पर्शास्तु कौन्तेय ! शीतोष्णसुखदुःखदाः" ( गीता० २ ।

---

रूपानुविधायी * च । ( वै० उ० ३ । १ । १ ) (त० सं०) ( प्रशस्त० पृ० १२ )
लक्षणं तु स्पर्शत्वम्; तच्च, त्वगिन्द्रियमात्रग्राह्य-गुणत्वसाक्षाद्व्याप्य-जातिमत्त्वम् । (वै० उ० ७ । १ । ६ । पृ० २८८ )

१ अत्र—'अर्थ'शब्देन, धर्मी भावभूत उच्यते । तेन,—स्पर्शत्वादौ, स्पर्शाद्यभावे च नातिव्याप्तिः ।

तथा च—त्वगिन्द्रियग्रहणवृत्ति-गुणत्वावान्तरजातिमत्त्वम्, इति पर्यवसितोऽर्थः; तेन, नातीन्द्रियस्पर्शाद्यनुपग्रहः । ( वै० उ० ३ । १ । १ )

२ अत्र—स्पर्शत्वेऽतिव्याप्तिवारणाय 'गुण'पदम् । संयोगादावतिव्याप्तिवारणाय 'मात्र'पदम्, इति । ( त० दी० १ । पृ० १३ )

---

रूक्षः शीतस्तथैवोष्णः स्निग्धश्च विशदः खरः ॥ कठिनश्चिक्कणः श्लक्ष्णः पिच्छलो दारुणो मृदुः । एवं द्वादशविस्तारो वायव्यो गुण एव च" इति ( भार० आश्व० अ० ५० ) ।
तदर्थस्तु,—रूपसमानाधिकरणात्यन्ताभावाप्रतियोगी, इति; 'रूपवति स्पर्शो नियमेन वर्तते' इति सुगमोऽर्थः ।

१४ ) इत्यादौ,—'स्पर्श'शब्दस्यार्थः, इत्यङ्गीचक्रुः । ३ वैयाकरणास्तु,—'कादयो मावसानाः ( २५ ) वर्ग्यवर्णाः' इत्याहुः । ४ काव्यज्ञास्तु,—'ग्रहणम्; ५ दानम्; ६ युद्धं च' इत्याहुः । ७ 'रोगः' इति भिषज आहुः ।

**स्पर्शतन्मात्रम्**—१ स्पर्शः । २ सांख्यास्तु,—'वायूपादानकारणं स्पर्शमात्रगुणको सूक्ष्मभूतविशेषः' इत्याहुः ।

**स्पार्शनम्**—त्वगिन्द्रियजन्यं प्रत्यक्षम् । यथा—"द्रव्यस्पार्शनप्रत्यक्षं प्रति, स्पर्शः कारणम्" इत्यादौ ग्रन्थे,—'स्पार्शन'शब्दस्यार्थः । स्पार्शनं च द्विविधम्,—स्पर्शविषयकम्, स्पर्शवद्द्रव्यविषयकं चेति ।

**स्पृहा**—( दोषः ) धर्माविरोधेन प्राप्तीच्छा । ( गौ० वृ० ४ । ३ ) । यथा—'पुष्पेभ्यः स्पृहयति' इत्यादौ,—'स्पृह'धात्वर्थः (स्व०) । यथा वा—"स्पृहावती वस्तुषु केषु मागधी" इत्यादौ ( रघु० ३ । ५ ); यथा वा—"मिथुने स्पृहावती" ( कुमार० ) इत्यादौ च,—'स्पृहा'शब्दार्थः ।

**स्फुटत्वम्**—१ तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वम् । ( स्व० ) । यथा—"दोषलक्षणे कृते, दुष्टहेतुलक्षणस्य स्फुटतया लाभेन" इत्यादौ,—'स्फुटत्व'शब्दस्यार्थः । ( ग० हेत्वा० सामा० लक्ष० १ ) । २ ज्योतिषज्ञास्तु,—A'सूर्यादिग्रहाणां मेषादिराशिष्वंशविशेषस्थितिः । B तत्तद्देशकलादिगतिश्च' इत्याहुः । ३ A 'विकाशनम् । B विदलनं च' इति काव्यज्ञा आहुः ।

**स्फोटः**—वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः । ( सर्व०

---

१ अत्र व्युत्पत्तिः,—[क] 'स्फुट्यते व्यज्यते वर्णैः' इति स्फोटः, इति; [ख] 'स्फुटत्यर्थोऽस्मात्' इति स्फोटः, इति च यौगिकशब्दाभिधेयत्वं शब्दब्रह्मणः सूचयति । ( वै० सा० पृ० २१२ )

तल्लक्षणं च स्फोटत्वम्; तच्च, 'स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मात्, अनेन वा' इति व्युत्पत्त्याऽर्थप्रकाशकत्वम् । प्रकाशश्च ज्ञानम् । तथा च—अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्यवस्यति । वर्णस्यैव तत्त्वाभ्युपगमे 'वर्णस्फोटः,' पदादीनां तत्त्वाभ्युपगमे तु 'पदादिस्फोटः' इति व्यवहारः । ( वै० सा० द० पृ० २१२ )

स्फोटस्यावश्यकत्वमाह—[ क ] पदानां वर्णसमूहरूपाणामाशुविनाशितयैकक्षणावस्थायित्वाभावादप्रत्यक्षत्वं तावन्निरूढम् । तथा च—पदाप्रत्यक्षे तु पदार्थस्मृतेः ( शाब्दबोधहेतोः ) असंभवः स्यात्; अतः स्फोटः कथनाङ्गीकर्तव्यः, यतोऽर्थप्रत्ययः, इति । [ ख ] वर्णानां

पाणिनि० ) ( त० प्र० ख० ४ । पृ० १२६ ) । अष्टौ स्फोटा भवन्ति,—( १ ) वर्णस्फोटः, ( २ ) पदस्फोटः, ( ३ ) वाक्यस्फोटः, ( ४ ) अखण्डपदस्फोटः, ( ५ ) अखण्डवाक्यस्फोटः, ( ६ ) वर्णजातिस्फोटः, (७) पदजातिस्फोटः, (८) वाक्यजातिस्फोटश्च, इति । तत्र 'वाक्यस्फोट एव वास्तवः, अन्येषां त्ववास्तवत्वम्'इति वैयाकरणानां सिद्धान्तः । ( वै० सा० पृ० ९९ )

अत्र मीमांसका वेदान्तिनश्च,—'प्रत्येकपदशक्तिसाचिव्येनाकाङ्क्षादिवशात्पदाद्वाक्यार्थशाब्दबोधस्तदा पदस्फोटः । यदा तु तन्निरपेक्षैव सा बोधं जनयति तदा वाक्यस्फोटः' इत्याहुः । ( वै० सा० द० पृ० ४२५ ) । पुनश्च स्फोटो द्विविधः,—सखण्डः, अखण्डश्च । तत्र पदवाक्ययोरखण्डत्वं चाविद्यमानावयवकत्वम् ।

---

प्रत्युच्चारणमन्यथा प्रतीयमानतयाऽनित्यत्वेन, आशुविनाशिनां च तेषां मेलनासंभवेन तत्समुदायस्यापि संबन्धित्वाभावेन, प्रत्येकं वर्णेषु वृत्तौ व्यभिचारेण च, पूर्वपूर्ववर्णानुभवजन्यसंस्कारबीजवत्यन्त्यवर्णजनितपरिपाकशालिनि हृदये झटिति समुदीयमानस्य स्फोटरूपस्यैव नित्यतया तत्रैव नित्यसंबन्धस्य योग्यतया वृत्तिमत्त्वमुचितम्, इति । तथा च पातञ्जलभाष्यकृद्व्यास आह—"तदेतेषामर्थसंकेतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते, तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्धमन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते" इति ।

२ पूर्वपूर्ववर्णानुभवसहितचरमवर्णानुभवव्यङ्ग्यः,* इत्यर्थः ।

३ स च शाब्दिकमतप्रसिद्धः† । नैयायिकमते तु 'स्फोटो नाङ्गीक्रियत‡ एव; यद्यङ्गीक्रियेत तदाऽपि वर्णवत्सोऽनित्य एव' इति मन्तव्यम् ।

१ अत्र—वर्णस्फोटमारभ्याखण्डवाक्यस्फोटपर्यन्तं पञ्च व्यक्तिस्फोटा भवन्ति । शिष्टास्तु त्रयो जातिस्फोटा भवन्ति, इति बोध्यम् । ( वै० सा० )

---

* अत्र—'स्फोटस्याभिव्यक्तौ प्राकृतो ध्वनिः कारणम्; चिर-चिरतर-स्थितौ तु प्राकृतध्वनिजातवैकृतध्वनिः कारणम्' इति विवेको ज्ञेयः । ( ल० म० १ )

† अत्र महाभाष्यम्—"अथ गौरित्यत्र कः शब्दः ? । येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणानां संप्रत्ययो भवति, स शब्द उच्यते" इति । [ ख ] तथा च भागवते ( १२ । ६ । ४० ) स्फोटश्रवणस्यात्मलिङ्गत्वमुक्तम्—"शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् । येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः" इति । ( मञ्जूषायाम् )

‡ अयं भावः—'पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलम्भ एव स्फोटव्यञ्जकः' इति शाब्दिकैः स्वीकरणीयम् । तथा च—नैयायिकमतेऽपि, तादृशचरमवर्णोपलम्भेनैवार्थप्रत्ययोपपत्तावलं स्फोटाङ्गीकारेण, इति । ( न्या० म० ४ । पृ० ३२ ) ( त० प्र० ४ । पृ० १२७ )

**स्मयः**—१ (दोषः) गुणवति निर्गुणत्वधीः । (गौ० वृ० ४ । ३) । २ 'अद्भुतरसस्थायिभावः' इत्यालंकारिका आहुः । ३ 'गर्वः' इति काव्यज्ञा आहुः । ४ 'कातर्यम्' इति नाटकज्ञा आहुः । 'गायकः' इति गानशास्त्रज्ञा आहुः ।

**स्मरणम्**—१ 'स्मृति'शब्दवदस्यार्थोऽनुसंधेयः । २ 'अर्थालंकारविशेषः,' इत्यालंकारिका आहुः । ३ 'चिन्तनम्,' इति काव्यज्ञा वदन्ति ।

**स्मार्तः**—१ स्मृतिशास्त्राभिज्ञः । २ स्मृतिविहितं कर्म । यथा—"स्मार्तं वैदिकवच्चरेत्," "अन्योऽपि स्मार्तमाचरेत्" इत्यादौ,—गृह्याग्न्युपासन-वैश्वदेव-दानादि स्मार्तं भवति ।

**स्मृतिः**—१ [१] (बुद्धिः) संस्कारमात्रजन्यं ज्ञानम् । (त० सं०)

१ सा च मानेऽन्तर्भवति । (गौ० वृ० ४ । ३)

२ तदुक्तम्—"सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते" इति । (सा० द० परि० ... श्लो० ६६८)

३ स्मृतिश्च, वैशेषिकनये बुद्ध्यन्तर्गतविद्याप्रभेदः; (प्रशस्त० पृ० २५) । लिङ्गा...नुस्मरणाद्यपेक्षादात्ममनसोः संयोग-*विशेषात्, पटुभ्यासादरप्रत्ययजनिताच्च†,—दृष्टश्रुतानुभूतेष्वर्थेषु विशेषा-‡ऽनुस्मरणेच्छाद्वेषहेतुः, तदतीतविषया स्मृतिः, इ(प्र)-शस्त० २ । पृ० ३२)

४ चक्षुराद्यजन्यत्वे सति संस्कारजन्यम्, इत्यर्थः । तेन ('मात्र'पदोपादानेन), प्रत्यभिज्ञायां नातिव्याप्तिः; प्रत्यभिज्ञायाश्चक्षुर्जन्यत्वात्, इति । (नील० १ । पृ० १४) । अत्र प्राञ्चो नैयायिकाः,—'स्मृतिलक्षणे न 'मात्र'पदमावश्यकम् । न च, 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञायामतिव्याप्तिः' इति वाच्यम्; 'तत्र संस्कारजनित-तत्तास्मृतिरेव हेतुः, न तु संस्कारोऽपि' इत्यतिव्याप्तिविरहात्' इत्याहुः । (त० कौ० १ । पृ० ६) । मध्वाचार्यानुयायिनस्तु,—'स्मृतिः§ मनोजन्या (न तु संस्कारजन्या); संस्कारस्तु, मनसस्तदर्थसंनिकर्षरूप एव । यथा—योगीन्द्रियाणां योगजो धर्मः,' इत्याहुः । (प्र० प० पृ० ९)

५ तथा चेदं बोध्यम्—'भावनाख्यः संस्कारोऽनुभवेन जन्यते, स्मृतिं जनयति च' इति ।

* अत्र सूत्रम्—"आत्ममनसोः संयोगविशेषात् (प्रणिधानादिसंनिधानादसमवायिकारणात्) संस्काराच्च स्मृतिः" इति । (वै० ९ । २ । ६)

अत्र—'स्मृतौ संयोगविशेषोऽसमवायिकारणम्, संस्कारो निमित्तकारणम्, आत्मा समवायिकारणम्,' इति विज्ञेयम् । (वै० उ० ९ । २ । ६)

† स्पष्टं चैतत् 'संस्कार'शब्दव्याख्याने ।

‡ अत्र पाठान्तरम्,—'विशेषानुव्यवसायेच्छानुस्मरणद्वेषहेतुः' इति । (प्रशस्त० २ । पृ० ४९–५०)

§ अत्र प्रमाणम्—"मानसप्रत्यक्षा स्मृतिः" (?) इत्युक्तिः ।

यथा—'मातुः स्मरति' इत्यादौ,—'स्मृ' धात्वर्थः । स्मृतिर्द्विविधा,—यथार्था, अयथार्था चेति । तत्र,—आद्या, प्रमाजन्या । द्वितीया, अप्रमाजन्या ( त० सं० ) । जागरे तदुभयं संभवति; स्वप्ने तु सर्वमेव ज्ञानं स्मरणम्, अयथार्थं च, इति (त० भा०) । [ ३ ] योगशास्त्रज्ञास्तु,—'अनुभवप्राप्तिपूर्वा वृत्तिः,' इत्याहुः । ४ धर्मज्ञास्तु,—'धर्मशास्त्रम् । तच्च,

संस्कारस्तूद्बुद्ध एव स्मृतिं जनयति । उद्बोधश्च* सहकारिलाभः । सहकारिणश्च संस्कारस्य सदृश-†दर्शनादयः, इति । ( त० भा० पृ० ३७ )

अत्र मतभेदः—स्मृतिं संस्कारं च प्रति, 'अनुभवस्यानुभवत्वेनैव जनकत्वम्,' इति प्राचां मतम् ‡ । नवीनानां मते§ तु,—अनुभवस्य ज्ञानत्वेन जनकत्वम्, इति । ( नील० गु० पृ० ३८ )

१ द्वयोर्लक्षणे च, संस्कारसंबन्धावच्छिन्नानुभवप्रमाभ्रमनिष्ठजनकतानिरूपितजन्यते बोध्ये । ( वाक्य० गु० पृ० २१ )

२ अत्र वेदान्तिन आहुः—'स्मृतिरपि ( प्रमाजन्याऽपि ) प्रमाणमेव ( प्रमा )'¶ इति । ( प्र० प० पृ० ४ )

३ अत्र सूत्रम्—"अनुभूतविषयासंप्रमोषः स्मृतिः" ( पात० पा० १ । सू० ११.) । सर्वाः स्मृतयः, प्रमाण-विपर्यय-विकल्प-निद्रास्मृतीनामनुभवात् प्रभवन्ति । (भोजवृत्ति०) (भा०)

४ अत्रार्थे 'स्मृति'शब्दस्य व्युत्पत्तिः—'स्मर्यते वेदधर्मोऽनेन' ( करणे क्तिन् ) इति ।

* अत्र कश्चिदाह—'स्मृतिजननाय संस्कारोद्दीपनमुद्बोधः,' इति । ( वाच० )

† तथा चोक्तम्—"सादृश्यादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः" इति । (त०भा०पृ०३७)

‡ प्राचामयमभिप्रायः—तत्तद्विषयकस्मृतिं तादृशसंस्कारं च प्रति तत्तद्विषयकानुभवत्वेनैव हेतुता, न तु तत्तद्विषयकज्ञानत्वेन; अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवाभावात् । न च, 'विनिगमनाविरहः' इति शङ्क्यम्; व्याप्यधर्मपुरस्कारेण कारणत्वसंभवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वात्, इति । ( नील० गु० पृ० ३८ )

§ नव्यानां पुनरयमाशयः—तत्तद्विषयकस्मृतिं तादृशसंस्कारं च प्रति तत्तद्विषयकज्ञानत्वेनैव हेतुता, न त्वनुभवत्वेन; संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैवानुभवजन्यसंस्कारस्य नाशेन, सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात्, इति । ( नील० गु० पृ० ३८–३९ )

¶ अयं भावः—'स्मृतेः प्रमारूपत्वेन 'प्रमाकरणत्व'रूप-प्रमाणलक्षणाक्रान्तत्वादनुभवस्यापि प्रत्यक्षादिचतुष्टयस्येव प्रमाणान्तरत्वमिष्टमेव,' इति । ( स्व० )

वेदार्थानुभवजन्यं वेदार्थानुवादकं धर्मे च प्रमाणं मुनिप्रणीतं वाक्यरूपम् । यथा—मनुस्मृति-याज्ञवल्क्यस्मृत्यादिः' इत्याहुः ।

**स्यन्दनम्**—१ प्रस्रवणम् । तच्च, संनिकृष्टदेशस्य द्रवद्रव्यस्य च संयोगानुकूलव्यापारः । ( वाक्य० १ । पृ० ९ ) यथा—"स्यन्दनासमवायिकारणं द्रवत्वम्" इत्यादौ ग्रन्थे,—'स्यन्दन'शब्दस्यार्थः ।

२ गमनत्वव्याप्यजातिमत् । यथा—"भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च" (भा० प० श्लो० ७) इत्यादौ,—'स्यन्दन'शब्दस्यार्थः । ३ 'जलम् । ४ रथश्च,' इति काव्यज्ञा आहुः । ५ 'तिनिश'वृक्षः ( तिवस ), इति भिषज आहुः । ( अमरः, २ । ४ । २६ )

**स्याद्वादः**—( वादः ) यत्र वादे दिगम्बराः ( जैनाः ) सर्वत्र सप्तभङ्गीनयाख्यं न्यायमवतारयन्ति, सः । सप्तभङ्गीनयस्तु,—( १ ) 'स्यादस्ति, ( २ ) स्यान्नास्ति, ( ३ ) स्यादस्ति च नास्ति च, ( ४ ) स्यादवक्तव्यः, ( ५ ) स्यादस्ति चावक्तव्यः, ( ६ ) स्यान्नास्ति चावक्तव्यः, ( ७ ) स्यादस्ति च नास्ति चावक्तव्यः,' इति । ( सर्व०

---

१ तदुक्तं मनुना—"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्" इति । ( मनु० अ० २ । श्लो० ६ ) ( गौ० १ । १ )

२ अत्रोक्तम्—"श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः" इति । (मनु० अ० २। श्लो० १०) इयं स्मृतिरपि सात्त्विक-राजस-तामस-भेदेन त्रिविधा,—तत्र सात्त्विक्यो यथा—"वासिष्ठं चैव हारीतं व्यासं पाराशरं तथा । भारद्वाजं काश्यपं च सात्त्विक्यो मुक्तिदाः शुभाः" इति । ( पद्मपु० उत्त० अ० ४३ ) । राजस्यस्तामस्यस्तु तत्रैवान्वेषणीयाः, इति विस्तरभयादत्र न संगृहीताः, इति ।

३ अत्र सूत्रम्—"द्रवत्वात् स्यन्दनम्" इति ( वै० ५ । २ । ४ ) । तदर्थश्च,—स्यन्दनं द्रवत्वादसमवायिकारणादुत्पद्यते । तथा हि—क्षितौ पतितानामपां बिन्दूनां परस्परसंयोगेन महत् जलावयवि स्रोतोरूपं यज्जायते, तस्य यत् स्यन्दनं दूरसंसरणं तत् द्रवत्वादसमवायिकारणादुत्पद्यते; गुरुत्वान्निमित्तकारणात्, अप्सु समवायिकारणेषु । ( वै० उ० ५ । २ । ४ )

४ अत्र—[ क ] स्याच्छब्दः खल्वयं निपातस्तिङन्तप्रतिरूपकोऽनेकान्तद्योतकः । ( सर्व० आर्ह० ) । [ ख ] 'स्यात्' इत्यव्ययम्, तिङन्तप्रतिरूपकम्, कथंचिदर्थकम् । 'स्यादस्ति, कथंचिदस्ति' इत्यर्थः । एवमग्रेऽपि । ( शारी० भा० टी० २ । २ । ३३ । पृ० ३४ )

आर्हतदर्शने, अनन्तवीर्यः । पृ० ४१ ) ( शारीर० भा० २ । २ । ३३ । पृ० ३४ ) यथा—'घटः स्वस्वरूपेणास्ति, पटस्वरूपेण नास्ति' इत्यादि । ( स्व० ) । एवम्—एकत्व-नित्यत्वादिष्वपीममेव सप्तभङ्गीनयं योजयन्ति । ( शारीर० भा० २ । २ । ३३ )

**स्वगतम्**—१ स्वस्मिन्विद्यमानम् । यथा—"पटश्च स्वगतरूपादेः समवायिकारणम्" ( त० सं० ) इत्यादौ ग्रन्थे,—'स्वगत'शब्दस्यार्थः । यथा वा—वेदान्तिमते, "एकमेवाद्वितीयं ( ब्रह्म )" इत्यादिश्रुतौ ( छा० उ० ६ । २।१ ) 'एकमेव' इति शब्दार्थ-स्वगतभेदाभेदनिवृत्ति-घटक'स्वगत'शब्दार्थः । २ नाटकशास्त्रज्ञास्तु,—अश्राव्यं वाक्यं स्वगतम्, इत्याहुः ।

**स्वतन्त्रत्वम्**—१ इतरसत्तानधीनसत्ताकत्वम्[3] । यथा—परमेश्वरस्य राज्ञश्च वा स्वातन्त्र्यम् । ( स्व० ) । २ समभिव्याहृतक्रियाकारकान्तरानधीनत्वे सति, कारकत्वम्[4] । ( ग० व्यु० कार० ३ ) यथा—'चैत्रस्तण्डुलं पचति' इत्यादौ,—चैत्रस्य स्वातन्त्र्यम् । ( स्व० ) ।३ केचित्तु,—क्वचित्, 'शब्दाप्रयोज्यत्वं स्वतन्त्रत्वम्,' इत्याहुः । ( मू० म० १ )

**स्वतो ग्राह्यत्वम्**—स्वग्राहकसामग्र्या ग्राह्यत्वम् । यथा—मीमांसकमते,—ज्ञानप्रामाण्यं स्वतोग्राह्यं ( ज्ञानग्राहकसामग्र्या ग्राह्यम् ) भवति ।

---

१ अयं भावः—घटादेर्हि सर्वात्मना सदेकरूपत्वे,—प्राप्यात्मनाऽप्यस्त्येव सः, इति तत्प्राप्तये यत्नो न स्यात्; 'अतो घटत्वादिरूपेण कथंचिदस्ति, प्राप्तत्वादिरूपेण कथंचिन्नास्ति,' इत्येवमनेकरूपत्वं वस्तुमात्रस्यास्थेयम्, इति । ( शा० भा० टी० र० प्र० २ । २ । ३३ )

२ एवम्—एकत्वमनेकत्वं चेति द्वयमादाय A '( १ ) स्यादेकः, ( २ ) स्यादनेकः, ( ३ ) स्यादेकोऽनेकश्च, ( ४ ) स्यादवक्तव्यः, ( ५ ) स्यादेकोऽवक्तव्यः, ( ६ ) स्यादनेकोऽवक्तव्यः, ( ७ ) स्यादेकोऽनेकश्चावक्तव्यश्च' इति । B तथा—'स्यान्नित्यः, स्यादनित्यः' इत्याद्यूह्यम् ; ( शारी० भा० टी० रत्नप्र० २ । २ । ३३ । पृ० ३४ )

३ तदर्थस्तु,—[ क ] इतरव्यापारानधीनव्यापारवत्त्वम् । [ ख ] 'स्वरूप-प्रमिति-प्रवृत्ति-लक्षणे सत्तात्रैविध्ये परानपेक्षत्वम्,' इति मध्वमतानुयायिवेदान्तिन आहुः । ( प्र० च० परि० २ । पृ० ४७ )

४ इदं च, "स्वतन्त्रः कर्ता" ( पाणि० १ । ४ । ५४ ) इति सूत्रे,—कर्तुः स्वातन्त्र्यम् । तच्च समभिव्याहृतक्रियाकारकान्तरानधीनव्यापारवत्त्वम्, इति ।

'तन्न' इति नैयायिकमतम् । अत्राधिकं तु 'प्रमात्व'शब्दव्याख्याने सविस्तरं संपादितम्, इत्यत्रैव विरम्यते ।

**स्वतो व्यावर्तकत्वम्**
**स्वतो व्यावृत्तत्वम्** } —'विशेष'पदार्थटिप्पणे( पृष्ठे ७१८–७१९ )

अनयोः प्रपञ्चः संपादितः; स तत्र द्रष्टव्यः ।

**स्वत्वम्**—[ क ] 'यथेष्टविनियोगयोग्यत्वम्'[2] इति प्राञ्च आहुः । ( का० व्या० पृ० ६ ) (त०दी०) यथा–'चैत्रस्य धनम्'इत्यादौ,—धने चैत्रनिरूपितं स्वत्वम् । ( स्व० ) ।

[ ख ] १ 'द्रव्याणां यथेष्टक्रयविक्रयादिक्रियासु विनियोजको धर्मविशेषः; स च, अतिरिक्तः[3] पदार्थः ( न तु यथेष्टविनियोगयोग्यत्वरूपः )' इति नव्याः ( दीधितिकारादयः ) आहुः । ( का० व्या० पृ० ६ )

---

१ अत्र विप्रतिपत्तिः—'स्वत्वं लौकिकम्, अलौकिकं वा' इति । तत्र,—'स्वत्वमलौकिकम् ( शास्त्रैकसमधिगम्यम् )' इति पूर्वपक्षः ( जीमूतवाहनादीनां मतम् ) । 'तच्च लौकिकमेव ( लोकप्रसिद्धमेव ),' इति सिद्धान्तः ( विज्ञानेश्वर-मित्रमिश्रादीनां मतम् )' इति मिताक्षरा-वीरमित्रोदयादौ सिद्धान्तितम् ।

तच्च स्वत्वं 'जन्मनैवोत्पद्यते,' इति मिताक्षराकारादयः ( विज्ञानेश्वरप्रभृतयः ) आहुः । 'तच्च विभागेन, पित्रादिमरणादिनैव वोत्पद्यते,' इति वङ्गदेशीयाः ( जीमूतवाहनप्रभृतयः ) आहुः । तत्रापि,—'समुदायद्रव्ये स्वत्वम्,' इति मिताक्षराकृदादय आहुः । 'प्रदेशभेदे,' इति वङ्गदेशीया आहुः, इत्यलम् । ( वीरमित्रो० अ० २ । पृ० ५२१–५५० ) अत्राधिकं च वीरमित्रोदय-जीमूतवाहनादौ द्रष्टव्यम्; अप्रकृतत्वेन विस्तारतस्तन्निरूपणस्य मयोपेक्षितत्वात्, इति ।

२ तत्रायमर्थः—यथेष्टविनियोगयोग्यत्वं च, शास्त्रानिषिद्धविनियोगोपायः क्रयप्रतिग्रहादिस्तद्विषयत्वम् । तच्च न वहिरिन्द्रियवेद्यम्; प्रतिग्रहादेर्मानसज्ञानविशेषरूपस्य बहिरिन्द्रियायोग्यत्वात्, इति । ( का० व्या० पृ० ६ )

३ तदर्थश्च,—दानादिनाश्यः प्रतिग्रहजन्योऽतिरिक्तः ( सप्तपदार्थातिरिक्तः कश्चनानिर्वाच्यः) पदार्थः । ( ल० म० ) । तत्रायमाशयः—प्रतिग्रहादिनाशोत्तरमपि स्वत्वव्यवहारात् 'दानादितः स्वत्वं नश्यति, प्रतिग्रहादितश्च स्वत्वमुत्पद्यते'* इत्यादिप्रत्यय-व्यवहार-प्रामाण्यानु-

---

* अत एव—निबन्धादौ भाविन्यपि स्वत्वम् । अन्यथा,—प्रतिमासं प्रतिवर्षं वा देयत्वेन प्रतिश्रुतस्य धान्यादिरूपस्य भावित्वेन तत्र स्वत्वोत्पत्त्यनुपपत्तेः, इति । ( लीलावतीरहस्ये-चूडामणिः ) ( श्रीकृष्णतर्कालंकारः )

**स्वधर्मः**—१ यत्किंचिद्व्यक्तिवृत्ति पदार्थमात्रम्। यथा—घटवृत्तिर्धर्मो घटत्वादिः। २ धर्मज्ञास्तु,—स्वानुरूपो वेदाद्युक्तः (अविगीतः) आचारादिधर्मः। यथा—"श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" (गीता, अ० ३। श्लो० ३५) इत्यादौ 'स्वधर्म'शब्दस्यार्थः, इत्याहुः।

**स्वधा**—१ [क] पित्रुद्देश्यकत्यागः। यथा—'पितृभ्यः स्वधा' इत्यादौ,—'स्वधा'शब्दस्यार्थः। (ग० व्यु० का० ४। पृ० १००)

[ख] पितृदेवोद्देशेन हविस्त्यागः। यथा—"इदमन्नं पित्रे स्वधा" इत्यादौ,—'स्वधा'शब्दार्थः।

---

रोधेन स्वत्वमतिरिक्तः पदार्थः। तच्च स्वत्वं दानादितो नश्यति, प्रतिग्रहादितश्च * जायते। तच्च बहिरिन्द्रिययोग्यम्; 'स्वं पश्यामि' इति प्रतीतेः। वस्तुतः—स्वत्वस्यानुमितिरेव, न तु साक्षात्कारः, इति। (का० व्या० पृ० ६) (नील०)

१ तदुक्तम्—"यो यस्य विहितो धर्मः स तज्जातिः (तेः) प्रकीर्तितः। तस्मात्स्वधर्मं कुर्याच्च द्विजो नित्यमनापदि" इति। (वाचस्पत्ये नरसिंहपुराणम्)

२ वेदादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागः, इति फलितोऽर्थः। (ग० व्यु का० ४। पृ० १००)

३ अत्र—निपातस्वधायोगे त्यागोद्देश्यवाचकपदात् "नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" (पाणि० २। ३। १६) इत्यनेन सूत्रेण चतुर्थी।

४ अत्र—'स्वधा'शब्दार्थत्यागस्य विषयतयाऽन्नादावन्वयः; तस्य ('स्वधा'शब्दस्य) निपातत्वेन, तदर्थस्य भेदेनान्वयस्य व्युत्पत्तिसिद्धत्वात् †। तथा च—'पित्रुद्देश्यकत्यागविषय इदमन्नम्' इति बोधः।

---

* अत्र मनुवचनम् (१०। ११५)—"सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इति। स्वत्वोत्पत्तौ साधारणोपायास्तु गौतमेनोक्ताः—"स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इति। असाधारणोपायास्तु,—"ब्राह्मणस्याधिकं लब्धम्, क्षत्रियस्य विजितम्, निर्विष्टं वैश्यशूद्रयोः" इति। (मिता० अ० २। दायभा०)। केचित्तु (जीमूतवाहनादयः),—'प्रतिग्रहो न स्वत्वजनकः; अपि तु—यथेष्टविनियोगार्हताप्रयोजकः। तथा च—'उत्पन्नमपि स्वत्वं संप्रदानव्यापारेण 'ममेदम्' इति ज्ञानेन (स्वीकारेण) यथेष्टव्यवहारार्हं क्रियते' इत्याहुः। (वीरमित्रो० अ० २। पृ० ५४२) अत्राधिकं तु, परिशिष्टे 'अन्वयबोध'शब्दव्याख्याने द्रष्टव्यम्।

[ ग ] स्वस्वकरणको हविस्त्यागः । यथा–"इदं पित्रे स्वधा" इत्यादौ,–'स्वधा'शब्दस्यार्थः । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ ) २ पौराणिकाः कर्मज्ञाश्च,—मातृकाविशेषः । यथा–"नमः स्वधायै स्वाहायै" ( पितृगाथा ) इत्यादौ 'स्वधा'शब्दस्यार्थः, इत्याहुः ।

**स्वप्नः**— A प्रदेशविशेषावस्थितमनःसंयोगः । (नील० गु० पृ०३८); B मेध्यामनःसंयोगो वा । यथा—"न कंचन स्वप्नं पश्यति" ( बृह० उ० ४ । ३ । १९ ) इत्यादौ,—'स्वप्न'शब्दार्थः, यथा वा–"स्वप्नज्ञानं मानसविपर्ययः" इत्यादौ अन्ये,—'स्वप्न'शब्दार्थः ।

**स्वप्नज्ञानम्**—( बुद्धिप्रभेदोऽविद्या ) [ १ ] जाग्रदवस्थायां बाह्यवस्त्वनुभवजन्यमयथार्थं स्मरणम्; । तच्च निराकारमेव । ( त० भा० प्रमेयनि० पृ० ४० ) [ २ ] [ क ] निद्रादुष्टान्तःकरणजं ज्ञानम् ।

---

१ अत्र—'पित्रुद्देश्यकस्य 'स्वधा'पदकरणकस्य हविस्त्यागस्य कर्मेदम्' इत्याकारको बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ )

२ इयं च दक्षकन्या, ब्रह्मणो मानसी कन्या च पितृपत्नी । अत्राधिकं तु ( ब्रह्मवै० पु० ) तत्र द्रष्टव्यम् ।

३ 'प्रदेशविशेषस्तु, A पुरीतद्बहिर्देशयोः संधिः; B निरिन्द्रियात्मप्रदेशो वा चिन्त्यः ।

४ [ क ] स्वप्नज्ञानं तु, पुरीतद्बहिर्देशयोः संधौ मनसि स्थितेऽदृष्टविशेषेण, चिन्ताविशेषेण धातुदोषेण वा जन्यते; तच्च मानसविपर्ययेऽन्तर्भवति । ( सि० च० गु० पृ० ३४ ) ( दी० गु० पृ० ३८ ) [ ख ] स्वप्नज्ञानमनुभूतपदार्थस्मरण (संस्कार)-कफपित्तादिधातु-स्य शुभाशुभादृष्टैर्जन्यते; तच्च बाधितार्थविषयकम् । ( नील० गु० पृ० ३८ ) ।

तत्र ( स्वप्नज्ञाने ) असमवायिकारणं स्वप्नः, धात्वदृष्टादिकं निमित्तकारणम्, आत्मा समवायिकारणम्, इति ज्ञेयम् ।

५ तथा हि—[ क ] स्वप्ने तु,—सर्वमेव ज्ञानं स्मरणम्, अयथार्थम्; दोषवशेन 'तत्' इति स्थाने 'इदम्' इत्युदयात् । सर्वं ज्ञानं निराकारमेव, न तु ज्ञानेन स्वस्वाकारो जन्यते साकारज्ञानवादनिराकरणात् । (त० भा० प्रमेय-नि० पृ० ४०) । [ ख ] "तथा स्वप्नः" ( वै० ९ । २ । ७ ) । तदर्थश्च,—स्मृतौ यथा संस्कारः कारणं तथा स्वप्नसंज्ञकमानसज्ञानेऽपि, इत्याह 'तथा' इति,—'तथा, आत्ममनःसंयोगविशेषात् पूर्वानुभवजनितसंस्काराच्च स्वप्नमानसज्ञानविशेषो भवति । अत्र संयोगे विशेषो मेध्यामनःसंयोगात्मकदोषविशिष्टत्वम्' । अत एव,— तदानीं भ्रम एव भवति । पूर्वानुभवश्च ऐहिको जन्मान्तरीयो वा । ( वै० वि० ९ । २ । ७ । पृ० ४०९ )

*तदुक्तं प्रशस्तदेवाचार्यैः—"अतीतज्ञानप्रत्यवेक्षणात्स्मृतिरेव" इति । उक्तं च वृत्तिकारैः–

[ ख ] मानसविपर्ययः । ( त० दी० गु० पृ० ३८ ) ( सि० च० )

[ ग ] A मिथ्याप्रत्ययप्रवाहः । ( न्या० ली० गु० पृ० ३१ ) B सिद्धाभिभूतज्ञानम् । ( न्या० ली० गु० पृ० ९९ )

[ घ ] उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्येन्द्रियद्वारेण यदनुभवनं मानसं तत् । तत्तु त्रिविधम्,—( १ ) किंचित्, संस्कारपाटवात्; ( २ ) किंचित्, धातूनां वात-पित्त-श्लेष्मणां दोषात्, ( ३ ) किंचित्, अदृष्टविशेषात् ( धर्माधर्माभ्यां ) अप्युत्पद्यते । तत्राद्यं ( १ ) यथा—कामी क्रुद्धो वा यदा यमर्थमादृतश्चिन्तयन्स्वपिति तदा सैव चिन्तासन्ततिः प्रत्यक्षाकारा संजायते । ( प्रशस्त० २ । पृ० २९ ) । यथा वा—पुराणादिश्रवणजनितसंस्कारवशाज्जायते 'कर्णार्जुनीयं युद्धमिदम्' इत्याकारम् । द्वितीयं (२) यथा—तत्र,—A वातदोषादाकाशगमन-वसुन्धरापर्यटन-व्याघ्रादिभयपलायनादीनि पश्यति । B पित्तोपचयदोषमहिम्ना

"अनुभूतवस्तुस्फुरणार्थतया न स्मरणादर्थान्तरं स्वप्नज्ञानम्" इति । ( वै० उ० ९ । २ । ८ । पृ० ४११ ) । तेन,—यत्तु, 'नीलकण्ठ्यां स्मृतिरूपत्वं स्वप्नज्ञानस्य खण्डितम्, तद्व्याख्यादि तात्पर्यानाकलनादेव,' इति मम भाति । ( स्व० )

१ स्वप्नज्ञानं कथमुत्पद्यते ?—यदा बुद्धिपूर्वादात्मनः शरीरारम्भव्यापारादहनि खिन्नानां प्राणिनां निशि विश्रामार्थमाहारपरिणामार्थं वाऽदृष्टकारितप्रयत्नापेक्षादात्मान्तःकरणसंबन्धान्मनसि क्रियाप्रबन्धादन्तर्हृदये निरिन्द्रियात्मप्रदेशे निश्चलं मनस्तिष्ठति, तदा 'प्रलीनमनस्क' इत्याख्यायते । प्रलीने च तस्मिन्नुपरतेन्द्रियग्रामो भवति । तस्यामवस्थायां प्रबन्धेन ( प्रवाहेन ) प्राणापानसंतानप्रवृत्तावात्ममनःसंयोगविशेषात्स्वापाख्यात्, संस्काराच्चेन्द्रियद्वारेणेवासत्स्वपि विषयेषु प्रत्यक्षाकारं ज्ञानमुत्पद्यते । ( प्रशस्त० गु० पृ० २५ )

२ अत्र च मानसं ज्ञानं ज्ञानलक्षणरूपालौकिकसंनिकर्षाद्भवति, स्मरणं च संस्कारात्, इति विशेषः । ( वै० वि० ९ । २ । ७ )

३ अत्र भाष्यम्—"धातुविशेषात्,—वातप्रकृतिः, तद्दूषितो वाऽऽकाशगमनादीनि पश्यति । पित्तप्रकृतिः, पित्तदूषितो वाऽग्निप्रवेश-कनकपर्वतादीन् पश्यति, यत् स्वयमनुभूतेष्वननुभूतेषु वा । श्लेष्मप्रकृतिः, श्लेष्मदूषितो वा सरित्समुद्रहिमप्रतरणादीन् पश्यति, यत् यत्स्वयमनुभूतेष्वननुभूतेषु वा प्रसिद्धार्थेषु वा । अदृष्टात्,—यत्स्वयमनुभूतेष्वननुभूतेषु प्रसिद्धेष्वप्रसिद्धेषु च यच्छुभावेदकं गजारोहण-छत्रलाभादि तत्सर्वं संस्कार-धर्माभ्यां भवति; विपरीतं ( अशुभावेदकम् ) तु तैलाभ्यञ्जनोष्ट्रारोहणादि संस्काराधर्माभ्यां भवति; अत्यन्ताप्रसिद्धेष्वदृष्टादेव भवति" इति ( प्रशस्त० गु० पृ० २५ )

वह्निप्रवेश-वह्निज्वालालिङ्गन-कनकपर्वत-विद्युल्लताविस्फुरण-दिग्दाहादिकं पश्यति । C श्लेष्मदोषप्राबल्यात्तु, समुद्रसंतरण-नदीमज्जन-धारासारवर्षण-रजतपर्वतादि पश्यति । तृतीयं (३) यथा—तज्जन्मानुभूतेषु जन्मान्तरानुभूतेषु वा सिद्धोपप्लुतान्तःकरणस्य यत् ज्ञानमुत्पद्यते, तत्र—शुभावेदकं धर्मात्,—गजारोहण-पर्वतारोहण-छत्रलाभ-पायसभक्षण-राजसंदर्शनादिविषयकम्; अधर्मात्तु,—तैलाभ्यञ्जना-न्धकूपपतनो-ष्ट्रारोहण-पङ्कमज्जन-स्वविवाहदर्शनादि-विषयकं स्वप्नज्ञानमुत्पद्यते, इति । ( वै० उ० ९ । २ । ७ ) ।
[ ३ ] सांख्या मायावादिवेदान्तिनस्तु,—संस्कारमात्रजन्यः 'स्वप्नावस्था' शब्दवाच्यो बुद्धेर्विषयाकारः परिणामः, इत्याहुः ।
स्वप्नस्थपदार्थविषये सत्यत्व-मिथ्यात्वाभ्यां विप्रतिपत्तिः । तत्र,—'स्वप्नदृष्टपदार्थस्य मिथ्यात्वम्' इति मायावादिवेदान्तिनोऽङ्गीचक्रुः । द्वैतवादिनः श्रीपूर्णप्रज्ञाचार्यास्तु,—'स्वप्नसृष्टपदार्थानां सत्यत्वमेव । तथा हि—स्वप्नेऽपि

१ अत्र सूत्रं विनियुञ्जन्ति—"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति । (ब्रह्मसू० अ० ३ । पा० २ । सू० ३ )
श्रुतिश्च—'स यत्र प्रस्वपिति' इत्युपक्रम्य—"न तत्र रथा रथयोगा न पन्थानो भवन्ति, अथ रथान्रथयोगान् पथः सृजते" इत्याम्नायते । ( बृह० उप० ६ । ३ । ९–१० )
२ "सूचकश्च हि श्रुतेराचक्षते च तद्विदः" ( ब्रह्मसू० अ० ३ । पा० २ । सू० ४ ) सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः; तथा हि श्रूयते छान्दोग्यश्रुतिः (अ० ५ । २ । ९)—"यदा कर्मसु काम्येषु स्त्रियः स्वप्नेऽभिपश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने" इति । तथा—"पुरुषं कृष्णं कृष्णदन्तं पश्यति, स एनं हन्ति" इति । आचक्षते च स्वप्नाध्यायविदः—"कुञ्जरारोहणादीनि स्वप्ने धन्यानि, खरयानादीन्यधन्यानि" इति । ( शारी० भा० ३ । २ । ४ ) । अत्र—शुभाशुभसूचकत्वं स्वप्नभेदस्य मत्स्यपुराणादौ ( अ० २४२ ) सविस्तरमुक्तम्, तत्तत्र द्रष्टव्यम् ।
३ ईश्वरोऽ*नादिमनोगतांश्च संस्कारान् उपादानीकृत्य स्वेच्छामात्रेण प्रदर्शयति ( पदार्थान् ) । तदुक्तं ब्रह्माण्डे—"मनोगतांश्च संस्कारान्स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते ॥ यदन्यथात्वजाग्रत्वं सा भ्रान्तिस्तत्र तत्कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत्" इति । ( मध्वभाष्ये, ब्रह्माण्डपु० ३ । २ । ३ )

* अत्र श्रुतिः,—"य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः" इति विज्ञेया । "न तत्र रथा रथयोगाः" ( बृह० उ० ६ । ३ । १० ) इत्यादौ तु 'ईश्वरं विना' इति पूरयित्वाऽन्वयो योज्यः, इति । ( मध्वभाष्य० ३ । २ । १—३ )

( स्वप्नावस्थायाम् ) गजादिदर्शनं चेद्यथार्थमेव; मानसवासनाजन्यत्वाद्गजादीनाम्[1]। तेषु यद्बाह्यत्वज्ञानम्, तद्विपर्यय एव' इति प्राहुः। ( प्र० प० पृ० ९ )

**स्वप्नान्तिकम्**[2]—( बुद्धिप्रभेदोऽविद्या ) [ क ] तत्कालोत्पन्नानुभवजनितसंस्कारजन्यं[3] ज्ञानम्।

[ ख ] केचित्तु,–स्वप्नमध्ये प्रमाभूतं यत् ज्ञानम्, तत् स्वप्नान्तिकम्। यथा–'शय्यायां शयानोऽस्मि' इत्यादि, इत्याहुः। ( वै० उ० ९।२।८)

**स्वभावः**—हेत्वन्तरानपेक्षो वस्तुधर्मविशेषः। यथा–"स्वभावो[4] दुरतिक्रमः" इत्यादौ,–'स्वभाव'शब्दार्थः। तत्र प्राणिस्वभावस्तु द्विविधः[5],—निसर्गः, स्वरूपं चेति।

**स्वम्**—१ [ क ] A समभिव्याहृतपदोपस्थाप्यः पदार्थः। ( ग० शक्ति० पृ० ११६–११७ ) B निष्कृष्टार्थस्तु,–साक्षात्परंपरया वा यः स्वार्थस्य

---

१ अत्र गजादिरूपकार्यस्योपादानं वासना, ईश्वरः कर्ता, अदृष्टादिकं निमित्तम्, इति द्रष्टव्यम्। ( प्र० प० टी० वेदेश० पृ० १४ )

२ तदर्थस्तु,—स्वप्नान्तकं स्वप्नस्यान्ते भवम्; स्वप्नानुभवजसंस्कारजम्, इति यावत्।

३ तथा च [ क ] इदं ज्ञानं स्वप्नावस्थाजातानुभवजनितसंस्कारेण जायते, किं तु–'स्मृत्यात्मकम्, न मानसम्' इति विशेषः। ( वै० वि० ९।२।८ )। [ ख ] स्वप्नान्तिकस्वप्नज्ञानयोरेतावान् विशेषः—स्वप्नज्ञानं पूर्वानुभवजनितात्संस्कारादुत्पद्यते; स्वप्नान्तिकं तु तत्कालोत्पन्नानुभवजनितसंस्कारादेव। तदुक्तं प्रशस्तदेवाचार्यैः—"अतीतज्ञानप्रत्यवेक्षणात्* स्मृतिरेव" इति। ( वै० उ० ९।२।८ )। अत्र सूत्रम्—"स्वप्नान्तिकम्" इति। ( वै ९।२।८ ) तदर्थश्च,—स्वप्नज्ञानं यथात्ममनःसंयोगविशेषसंस्कारोभयजन्यम्, तथा स्वप्नान्तिकाख्यं ज्ञानमपि, इति। ( वै० वि० ९।२।८ )

४ अत्रान्योऽपि चार्वाकमतश्लोक उदाह्रियते—"अग्निरुष्णो जलं शीतं शीतस्पर्शस्तथाऽनिलः। केनेदं चित्रितं तस्मात्स्वभावात्तद्व्यवस्थितिः" इति। ( सर्व० चार्वा० )

५ तदुक्तम्—"बहिर्हेत्वनपेक्षी तु स्वभावोऽथ प्रकीर्तितः। निसर्गश्च स्वभावश्च इत्येष भवति द्विधा। निसर्गः सुदृढाभ्यासजन्यः संस्कार उच्यते। अजन्यस्तु स्वतः सिद्धः स्वरूपो भाव उच्यते" इति। ( उज्ज्वलदत्त० )

---

* तथा हि संपूर्णभाष्यम्—"स्वप्नान्तिकं यद्यप्युपरतेन्द्रियग्रामस्य भवति; तथाप्यतीतज्ञानप्रबन्धस्य प्रत्यवेक्षणात्स्मृतिरेवेति"। ( प्रशस्त० गु० पृ० २५ ) ( ४२ )

विशेष्यः, यश्च स्वसमभिव्याहृतक्रियाकारकपदार्थः, तदुभयम् । यथा—'चैत्रः स्वपुत्रं पश्यति' इत्यादौ,–'स्व'पदार्थः।(ग० शक्ति० पृ०१२२) [ ख ] तद्घटितवाक्यघटकक्रियान्वितैः समभिव्याहृतपदोपस्थाप्यः । यथा–'चैत्रः स्वपुत्रं पश्यति' इत्यादौ,–'स्व'पदार्थश्चैत्रः । २ व्यवहारज्ञास्तु,–स्वकीयम् ( धनादि ), इत्याहुः । ३ आत्मा । ४ ज्ञातिः ।

**स्वरः**—१ उदात्ता-नुदात्त-स्वरित-रूपो वर्णोच्चारणयत्नविशेषः । २ 'व्यञ्जनवर्णभिन्ना अकारादयो वर्णाः' इति शाब्दिका आहुः । ३ तान्त्रिकास्तु,–प्राणादिवायोर्व्यापारविशेषः, इत्याहुः । ४ भिषजस्तु,–प्रकुपितवायोर्व्यापारविशेषः, इत्याहुः (सुश्रुते) । ५ गायकास्तु,–निषादादयस्तन्त्रीकण्ठोत्थागानजध्वनयः, इत्याहुः । ६ केचिच्छकुनज्ञास्तु,–इष्टानिष्टफलसूचको नासिकानिर्गतो वायोर्व्यापारविशेषः, इत्याहुः । ७ मध्वाचार्यास्तु,–स्वरतेस्तु स्वरः ( विष्णुः ), इत्याहुः । ( तैत्ति० शिक्षा० मध्वभा ०पृ० १ )

**स्वरसः**—१ विवादशून्यत्वम् । यथा–'घटत्वेन घटो नास्ति' इति प्रत्ययस्य विवादशून्यत्वम् । ( ग० चतुर्द० खण्डन० पृ० ७२ ) । २ स्वाभिप्रायः । यथा—वाक्यादौ रचनाभङ्गीविशेषरूपः । ३ भिषजस्तु,–क्वाथैः,

---

१ अत्र—तच्छब्देन 'स्व'पदं ग्राह्यम् ।

२ तेन, 'चैत्रस्य भ्राता स्वपुत्रं पश्यति' इत्यादौ,—'स्व'शब्देन न चैत्रप्रतीतिः ।

३ अत्राधिकं तु 'स्वत्व'शब्दव्याख्यानावसरे संपादितं, तत्तत्र द्रष्टव्यम् ।

४ एषाम् (अचाम् ९) उदात्तादिस्वरवत्त्वात् 'स्वर'पदाभिधेयता । अत्र शिक्षा–"उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि" इति ।

५ ते च स्वराः सप्त,—"षड्ज ऋषभगान्धारौ मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः" इति । ( भरतः ) ( अमरः, १ । ७ । १ )

तत्र निषादादिस्वराणां प्राणिविशेषस्वरतुल्यता नारदोक्ता यथा—"षड्जं रौति मयूरो हि वृषो नर्दति चर्षभम् । अजा विरौति गान्धारं क्रौञ्चो नर्दति मध्यमम् ॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् । अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः" इति । (अमर०टी०) एवम्—स्वराणामुत्पत्तिस्थानादिकं च भरतशास्त्रादौ विज्ञेयम् ।

६ अत्र च विवादविषयस्तु,–'घटत्वेन पटो नास्ति' इत्याकारको व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयकः प्रत्ययः, इति बोध्यम् । (व्यधि० अभा० खण्डन०)

७ अत्रोक्तं वैद्यके–"सद्यः क्षुण्णादार्द्रद्रव्यादुद्धृतयन्त्रादिपीडनात् । यो रसस्त्वभिनिर्याति स्वरसः स प्रकीर्तितः" इति । ( वाच० )

इत्याहुः । ४ अन्ये तु,–शिलापिष्टकल्कविशेषः, इत्याहुः । ( शब्दर० ) ( वाच० )

**स्वरूपम्**—१ स्वात्मकः पदार्थः । यथा–'घटस्वरूपं द्रव्यम्' इत्यादौ,–'स्वरूप'शब्दस्यार्थः । काव्यज्ञास्तु,—२ स्वभावविशेषः । (अमरः, १। नाट्य० ३८ ) । ३ पण्डितः । ४ सुन्दरश्च, इत्याहुः । ( अमरः, २ । ३ । १३१ )

**स्वरूपयोग्यत्वम्**—(जनकत्वम्) तदवच्छेदकधर्मवत्त्वम् । यथा–अरण्यस्थस्यापि दण्डस्य[1], घटं प्रति जनकत्वं स्वरूपयोग्यत्वम् । ( सि० च० १ । पृ० २० ) । यथा वा–परमाणुवृत्तिरूपादेश्चक्षुरविषयत्वेऽपि चक्षुर्विषयत्वस्वरूपयोग्यत्वम्[2] ।

**स्वरूपसंबन्धः**[3]—संबन्धान्तरेण विशिष्टप्रतीतिजननायोग्यत्वम्[4] । (चि०१) यथा–'भूतले घटो नास्ति' इत्यादौ,–घटाभावादेर्भूतलेन संबन्धः । स द्विविधः,–केवलस्वरूपः, विशेषणता चेति । तत्राद्यो भावाभावान्यतरप्रतियोगिकः । यथा–आधेयत्व[5]-प्रतियोगित्वादीनां संबन्धः । द्वितीयस्त्रिविधः,–दैशिकविशेषणता, दिक्कृतविशेषणता, कालिकविशेषणता चेति । तत्राद्यश्चाभावमात्रप्रतियोगिकः । यथा—भूतलादिना घटाभावादीनां संबन्धः । द्वितीयतृतीयौ तु दिक्कालानुयोगिकौ जन्यमात्रप्रतियोगिकौ च । यथा—गन्ध-घटादीनां सबन्धौ दिक्कालाभ्याम्, इति । ( स्व० )

---

१ अत्र च—अरण्यस्थदण्डस्यापि घटकारणतायामवच्छेदकीभूतदण्डत्ववत्त्वात्स्वरूपयोग्यत्वरूपं जनकत्वं युज्यते, इति बोध्यम् ।

२ तदर्थस्तु,—चक्षुर्जन्यज्ञानविषयत्वावच्छेदकीभूतधर्मवत्त्वम्, इति । स च धर्मोऽत्र रूपत्वम्, तच्च परमाणुवृत्तावपि रूपादौ वर्तते, इति सर्वं सुस्थम् ।

३ ( १ ) [ क ] अनुयोगि-प्रतियोग्य-न्यतरस्वरूपः संबन्धविशेषः, इत्यर्थः । [ ख ] धर्मिद्वयात्मकः । (२) अन्ये तु,—षट्पदार्थातिरिक्तः (न धर्मिद्वयरूपः) पदार्थविशेषः, इत्याहुः ।

४ स्वरूपसंबन्धत्वं च संबन्धान्तरमन्तरेण विशिष्टप्रतीतिजनकत्वम् ।

५ इमावेव 'सर्वाधारताप्रयोजकसंबन्धौ' इति केनीयेते । ( त० दी० १ । कालनि० पृ० १० )

**स्वरूपासिद्धः**[1]—( हेत्वाभासः ) [ क ] यो हेतुराश्रये नावगम्यते, सः । यथा—'सामान्यमनित्यं कृतकत्वात्'[2] इत्यादौ,—कृतकत्वं स्वरूपासिद्धम् । यथा वा—'शब्दो गुणश्चाक्षुषत्वात्'[3] इत्यादौ,—चाक्षुषत्वं स्वरूपासिद्धम् । स्वरूपासिद्धश्च, शुद्धासिद्ध-भागासिद्ध-विशेषणासिद्ध-विशेष्यासिद्धाऽसमर्थविशेषणाऽसमर्थविशेष्य-भेदेन बहुविधः । (त० भा० पृ०४९) (त० सं० २ ) ( सि० च० २ )

[ ख ] यो हेतुः पक्षे न वर्तते, स स्वरूपासिद्धः[4] । यथा—'तप्तायःपिण्डो वह्निमान् धूमात्' इत्यादौ,—धूमो हेतुः स्वरूपासिद्धः । यथा वा—'शशादिरश्वो विषाणित्वात्'[5] इत्यादौ,—विषाणित्वं हेतुः स्वरूपासिद्धः । ( प्र० प्र० )

[ ग ] पक्षनिष्ठाभावप्रतियोगी[6] हेतुः । यथा—'ह्रदो द्रव्यं धूमात्'[7] इत्यादौ,—धूमः स्वरूपासिद्धः । ( त० कौ० २ )

---

१ स चासिद्धप्रभेदः । लक्षणं तु वक्ष्यमाणा स्वरूपासिद्धिरेव । सा च हेतुनिष्ठ-पक्षावृत्तित्वादिः' 'स्वरूपासिद्धि'शब्दे द्रष्टव्या । ( सि० च० )

२ अत्र—कृतकत्वं हेतुराश्रये ( सामान्ये ) नास्ति, इति । ( त० भा० हे० पृ० ४५ )

३ अत्र—'चाक्षुषत्वं शब्दे ( पक्षे ) नास्ति; शब्दस्य श्रावणत्वात्, इति चाक्षुषत्वं स्वरूपासिद्धं भवति' इति ज्ञेयम् । ( त० सं० ) अयमेव हेतुः 'शुद्धासिद्धः' इत्युच्यते । ( सि० च० २ । पृ० २८ )

४ स च, क्वचित्—स्वरूपविरहात्, क्वचित्—संदेह-सिषाधयिषयोरभावात् सिद्धसाधने ( अन्तर्भवति ) । ( वै० उ० ३ । १ । १५ । पृ० १५६ )

५ अत्र सूत्रम्—"यस्माद्विषाणी तस्मादश्वः" इति । ( वै० ३ । १ । १६ )

६ तदर्थश्च—पक्षे ( ह्रदे ) निष्ठो ( वर्तमानः ), धूमस्याभावः, तस्य प्रतियोगी धूमो भवति, इति, 'ह्रदो द्रव्यं धूमात्' इत्यादौ,—धूमो हेतुः स्वरूपासिद्धः ।

७ स्वरूपासिद्धत्वज्ञानं परामर्शप्रतिबन्धकम्; 'ह्रदे धूमो नास्ति' इति ज्ञाने सति, 'द्रव्यत्वव्याप्यधूमवान् ह्रदः' इति परामर्शासंभवात्*; एतस्य ( परामर्शस्य ) ह्रदे धूमसंबन्धावगाहित्वात्, इति । ( त० कौ० २ )

---

* अत्र,—'परामर्श' पदं, पक्षे हेतुवैशिष्ट्यावगाहिज्ञानमात्रपरम्; अधिकस्याप्रयोजकत्वात् । तथा च—पक्षे हेतुवैशिष्ट्यावगाहिज्ञानप्रतिबन्धकज्ञानविषयत्वरूप-हेत्वाभाससामान्यलक्षणाक्रान्तत्वाद्धेत्वाभासत्वं तस्योपपद्यते, इति विज्ञेयम् ।

**स्वरूपासिद्धिः**—( हेतुदोषः ) पक्षे व्याप्यत्वाभिमतस्याभावः[1] । यथा—'घटः पृथिवी पटत्वात्' इत्यत्र,—घटरूपपक्षे हेत्वभावः । ( न्या० म० २ ) यथा वा—'ह्रदो द्रव्यं धूमात्' इत्यादौ,—ह्रदनिष्ठो धूमाभावः स्वरूपासिद्धिः । ( मु० २ ) ( गौ० वृ० १ । ४८ ) ( वै० वि० ३ । १ । १५ ) ( न्या० बो० ) ( न्या० म० २ । पृ० २१ )

**स्वर्गः**—१ [ क ] सुखविशेषः[2] । ( मु० गु० ) । यथा—'यागात्स्वर्गो भवति' इत्यादौ,—'स्वर्ग'शब्दस्यार्थः । यथा वा—"यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते" इत्यादौ,—'स्वर्'शब्दस्यार्थः । ( स्व० )

[ ख ] अधर्मानारब्धदेहावच्छेद्यसुखम् । ( प० च० ) । २ पौरा-

---

१ सा चासिद्धिप्रभेदः । भागासिद्धिरत्रैवान्तर्भवति । ( त० भा० )

स्वरूपासिद्धेर्लक्षणं तु,—प्रकृतपक्षसाधनग्रहाविरोधित्वे सति, हेतुप्रकारकपक्षविशेष्यकज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम्, इति । (ल० व०)

अत्रेदं विज्ञेयम्—स्वरूपासिद्धेर्हेतवः पञ्चतर्काः; ते च,—आत्माश्रयः, अन्योन्याश्रयः, संशयः, चक्रकाश्रयः, अनवस्था चेति । ( ता० र० श्लो० ९० )

२ इदमुपलक्षणम्,—A 'हेत्वभाववत्पक्षः, B हेतुमदन्यःपक्षः, C पक्षावृत्तिर्हेतुः, D पक्षे हेत्वभावः, E पक्षनिष्ठहेत्वभाववत्त्वम्, F पक्षनिष्ठं हेतुमदन्यत्वम्, G हेतुनिष्ठं पक्षावृत्तित्वम्; H हेतुनिष्ठं पक्षवृत्तित्ववदन्यत्वम्; I हेतुमन्निष्ठं पक्षान्यत्वादिकम्, J हेतुनिष्ठं पक्षनिष्ठाभावप्रतियोगित्वम्, K विशिष्टहेतौ पक्षादेर्विशेष्याभाववत्त्वादिकम्, L पक्षादेर्हेत्वसमानाधिकरणधर्मवत्त्वम्' इत्यादयः स्वरूपासिद्धिव्यक्तयो 'बाध'वदूह्याः । ( स्व० ) एतासां विभाजकं तु,—प्रकृतपक्षप्रकृतसाधनग्रहाविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्ट्यग्रहविरोधितावच्छेदकं रूपम्, इति । ( दीधि० २ । पृ० २१७ ) ।

३ स च, इच्छामात्रा-( त्र ) साधना-( न ) साध्यं* सुखम् ।

---

* अत्राम्नायत—"यन्न दुःखेन संभिन्नं, न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं 'स्वः' पदास्पदम्" इति ( श्रुतिः ) ।

अत्र—दुःखासंभिन्नत्वं च, स्वावच्छेदकशरीरानवच्छिन्नत्वम् । तेन, दुःखसमानकालीनि सुखे नातिव्याप्तिः ।

णिकास्तु,—देवानामावासस्थानं लोकविशेषः[1] । स च, भूरादिषु[2] सप्तसु लोकेषूर्ध्वस्थस्तृतीयः, इत्याहुः ।

**स्वस्ति**[3]—१ आशीः । यथा—'स्वस्ति भवते[4]' इत्यादौ,—स्वस्त्यर्थः । २ कल्याणम् ( कुशलम् ) । यथा—'स्वस्त्यस्तु मह्यम्[5]' इत्यादौ,—'स्वस्ति' शब्दस्यार्थः । ( ग० व्यु० का० ४ ) । यथा वा—'स्वस्त्यस्तु प्रजाभ्यः[6]' इत्यादौ,—'स्वस्ति' शब्दस्यार्थः । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ ) । ३ पुण्यम् । ४ स्वीकारसूचनम् ।

---

१ तदुक्तं महाभारते—"उपरिष्टाच्च स्वर्लोको योऽयं स्वरिति संज्ञितः । ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने ! ॥ नातप्ततपसः पुंसो नामहायज्ञयाजिनः । नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल ! ॥ धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः । दानधर्मरता लोकाः शूराश्चाहवलक्षणाः ॥ तत्र गच्छन्ति" इत्यादि ।

तत्र गुणप्रशंसा—"न शोको न जरा तत्र नायास-परिदेवने । ईदृशः स मुने ! लोकः स्वकर्मफलहेतुकः"............... । "न वर्तयन्त्याहुतिभिस्तेनाप्यमृतभोजनाः । तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः" इत्यादिः ।

तत्र दोषास्तु,—"कृतस्य कर्मणस्तत्र भुज्यते यत्फलं दिवि । न चान्यत्क्रियते कर्म मूलच्छेदेन भुज्यते ॥ सोऽत्र दोषो मम मतस्तस्यान्ते पतनं च यत्" इत्यादयः । ( भार० व० अ० २६० )

२ भूरादयस्तु,—भूर्लोकः, भुवर्लोकः, स्वर्लोकः, महर्लोकः, जनलोकः, तपोलोकः, सत्यलोकश्च, इति ।

३ अत्र व्याकरणम्—'अस्ति ( सु–अस्–क्तिच् )' इति विभक्तिप्रतिरूपकमव्ययम् । एतद्योगे ( 'स्वस्ति' शब्दयोगे ) क्षेमादिसंबन्धिनि चतुर्थी भवति, इति ।

४ अत्र—आशीश्च परहितविषयकेच्छा ( नतु स्वहितविषयकेच्छा ) विज्ञेया ।

५ अत्र—चतुर्थ्यर्थः संबन्धः; तस्य स्वस्त्यर्थहितेऽन्वयः । एवं च—'भवदीयहितविषयिणी मदीयेच्छा' इति बोधः । ( ग० व्यु० का० ४ )

६ चतुर्थ्यर्थः संबन्धः, तस्य च कल्याणेऽन्वयः । ( ग० व्यु० का० ४ ) । शाब्दबोधस्तु पूर्ववज्ज्ञेयः ।

७ अत्र—'प्रजानिष्ठं कुशलम्' इत्यर्थः; 'स्वस्ति'शब्दस्य कुशलवाचित्वात् । कुशलस्याशंसास्थले तु,—'स्वस्त्यस्तु प्रजाभ्यः' इतिवत् 'स्वस्त्यस्तु प्रजानाम्' इत्यपि प्रमाणम्; "आशास्यैधनकुशलायुष्यार्थयोगे चतुर्थी वा" इति भागुरिस्मृतेः, इत्यपि वदन्ति । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ )

**स्वहस्तितत्वम्**—स्वीकृतत्वम् । ( राम० ) । यथा—"अनुभवस्य त्वया स्वहस्तितत्वात्" ( दि० ) इत्यादौ ग्रन्थे,—'स्वहस्तितत्व'शब्दस्यार्थः ।

**स्वागतम्**—१ शोभनमागमनम् । (कुमा० टी० २ । १८) । यथा—"स्वागतं स्वानधीकारान्" ( कुमार० स० २ । श्लो० १८ ) इत्यादौ,—'स्वागत'शब्दस्यार्थः । २ कुशलम् । ३ कुशलप्रश्नः । ( हारा० ) यथा—"स्वागतं वो महाभागाः ! वयं किं करवाम ते" ( भाग० ९ ) इत्यादौ,—'स्वागत'शब्दस्यार्थः । ४ देवतापूजकास्तु,—षोडशोपचारमध्ये द्वितीयोपचारः । यथा—"आसनं स्वागतं पाद्यम्" इत्यादौ,—'स्वागत'शब्दस्यार्थः, इत्याहुः ।

**स्वादः**—१ प्रीतिः । २ प्रीणनम् । ३ रसिकास्तु,–'रसानुभवः । यथा–"रसास्वादेन तरला ये माद्यन्ति विपश्चितः" ( प्रतापरु० ) इत्यादौ,—'स्वाद'शब्दस्यार्थः' इत्याहुः । ४ 'लेहनम्,' इति काव्यज्ञा आहुः ।

**स्वाध्यायः**—१ अध्ययनम् । (अमरः, २ । ७ । ४७) । यथा—"स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणि' ( स्मृतिः ) इत्यादौ,—'स्वाध्याय' शब्दस्यार्थः । २ अध्ययनकर्म ( आम्नायादि ) । यथा—"स्वाध्यायोऽध्येतव्यः" ( श्रुतिः ) इत्यादौ,—'स्वाध्याय'शब्दस्यार्थः । ३ 'अर्थानुसंधानपूर्वक-मन्त्रजपादिः' इति नारदपञ्चरात्रविद आहुः ।

**स्वापः**—१ [ क ] 'स्वप्न'शब्दवदस्यार्थोऽनुसंधेयः (स्वप्नज्ञानम्) । (कृष्णं०) [ ख ] 'निद्रा' इति काव्यज्ञा आहुः । २ 'सुषुप्तिः' इति वयं ब्रूमः । ३ 'अज्ञानम्' इति वेदान्तिन आहुः । ४ 'स्पर्शाज्ञता' इति मेदिनीकार आह ।

**स्वाभाविकम्**—यस्मिन्सति कारणविलम्बाद्विलम्बो यस्योत्पत्तौ न भवति, तस्य तत् स्वाभाविकम् । यथा—"न ह्यग्नेः स्वाभाविकादौष्ण्यान्मोक्षः संभवति; स्वाभाविकस्य यावद्द्रव्यभावित्वात्" इत्यादौ ग्रन्थे,—'स्वाभाविक'शब्दस्यार्थः । यथा वा—जलस्य 'शीत'स्पर्शः स्वाभाविकः ।

**स्वारसिकः**—A सकलजनसाधारणः । (कृष्णं०) । B सकलजनाभिप्रेतः । यथा—कश्चन सुष्ठु शब्दप्रयोगः स्वारसिकः ।

**स्वारसिकलक्षणा**—( लक्षणा ) अधुनातनतात्पर्यविषयीभूतार्थनिष्ठा लक्षणा । यथा—'वटे गावः शेरते' इत्यादौ,—'वट'पदस्य वटसमीपे; 'गङ्गायां घोषः' इत्यादौ वा,—'घोष'पदस्य मत्स्यादौ लक्षणा स्वारसिकी। ( स्व० )

**स्वार्थम्**—१ ( अनुमानम् ) [ क ] न्यायाप्रयोज्यानुमानम् ( न्या० बो० २ । पृ० १९ ) । तच्च A ज्ञानात्मकम् । ( न्या० बि० परि० २ । टी० पृ० २१ ) । B तच्च व्याप्तिपक्षधर्मतासंवेदनम् । ( न्या० ली० पृ० ९९ )

[ ख ] यत्तु, स्वयमेव महानसादौ विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वते धूमं पश्यन्वह्निमनुमिनोति, तत्स्वार्थानुमानम् । ( त० भा० पृ० ११ ) । तच्चार्थ( ज्ञान )-रूपम् ( न तु, परार्थानुमानवच्छब्दरूपम् ) । २ स्वप्रयोजनम् । यथा—'मनीषिणः स्वार्थमुद्दिश्य प्रयतन्ते'

---

१ अत्र व्युत्पत्तिः—'स्वस्य ( वक्तुः ), रसः ( इच्छा ), तदधीना लक्षणा' इति ।

२ अत्रार्थे 'स्वार्थ'शब्दस्य व्युत्पत्तिरर्थश्च,—'स्वस्यार्थः प्रयोजनं ( साध्यसंशयनिवृत्तिरूपम् ) यस्मात्' इति व्युत्पत्त्या, स्वीयसंशयनिवृत्तिप्रयोजनकमनुमानम्, इति । ( नील० २ । पृ० २० )

३ अत्र भाष्यम्—"तत्तु ( अनुमानम् ) द्विविधम्,—दृष्टम्, सामान्यतो दृष्टम् । तत्र दृष्टम्,—प्रसिद्धसाध्ययोरत्यन्तजात्यभेदेऽनुमानम्; यथा—गव्येव सास्नामात्रमुपलभ्य देशान्तरे सास्नामात्रदर्शनाद्गवि प्रतिपत्तिर्भवति । प्रसिद्धसाध्ययोरत्यन्तजातिभेदे लिङ्गानुमेयधर्मसामान्यानुवृत्तितोऽनुमानम् सामान्यतोदृष्टम्; यथा—कर्षक-वणिग्राजपुत्राणां प्रवृत्तेः साफल्यमुपलभ्य वर्णाश्रमिणामपि दृष्टं प्रयोजनमनुद्दिश्य प्रवर्तमानानां फलानुमानमिति । तत्र लिङ्गदर्शनं प्रमाणम् ; प्रमितिरग्निज्ञानम् । अथवाऽग्निज्ञानमेव प्रमाणम् ; प्रमितिरग्नौ गुणदोषमाध्यस्थ्यदर्शनम् । तत्स्वनिश्चितार्थमनुमानम्" इति । ( प्रशस्त० २ । गु० पृ० ४५ )

४ स्वार्थानुमानस्य प्रयोजनं तु स्वानुमितिः ( स्वस्यैवानुमितिः ) । ( त० सं० ) तथा हि—कश्चित्पुरुषः स्वयमेव भूयोदर्शनेन 'यत्र धूमस्तत्राग्निः' इति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ संदिहानः पर्वते वर्तिनीमविच्छिन्नमूलामभ्रंलिहां धूमलेखां पश्यन् धूमदर्शनादुद्बुद्धसंस्कारो व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निः' इति । तदनन्तरं 'वह्निव्याप्यधूमवानयं पर्वतः' इति ज्ञानमुत्पद्यते; अयमेव 'लिङ्गपरामर्शः' इत्युच्यते । तस्मात् 'पर्वतो वह्निमान्' इति स्वस्य ज्ञानमनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् । ( त० सं० ) ( त० भा० पृ० ११ )

इत्यादौ,—'स्वार्थ'शब्दस्यार्थः । ३ स्वाभिधेयः । यथा—"स्वार्थकः स्वार्थबोधकृत्" इत्यादौ,–'स्वार्थ'शब्दस्यार्थः । ( शब्द० च० ) । ४ व्यवहारशास्त्रज्ञास्तु,—स्वस्वत्वकं धनं स्वार्थम्, इत्याहुः ।

**स्वाहा**—१ [ क ] अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागः । यथा–'इन्द्राय स्वाहा' इत्यादौ,—'स्वाहा'शब्दस्यार्थः । ( ग० व्यु० का० ४ । पृ० १०० ) ( अमरः, ३ । ४ । ८ )

[ ख ] स्वस्वकरणको हविस्त्यागः । यथा–'इदमग्नये स्वाहा' इत्यादौ,–'स्वाहा'शब्दस्यार्थः । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ ) । २ पौराणिकास्तु,–अग्निभार्या । ( अमरः, २ । ब्रह्मवै० २१ ) । यथा–"स्वाहयेव हविर्भुजाम्" (रघु० १ । ९६) इत्यादौ,—यथा वा–"स्वाहां तु दक्षिणे पार्श्वे" ( वैश्वदे० ) इत्यादौ,—'स्वाहा'शब्दस्यार्थः, इत्याहुः । ३ कर्मज्ञास्तु,–मातृकाविशेषः । यथा–"नमः स्वाहायै स्वधायै नित्यमेव नमो नमः" (पितृगाथा ) इत्यादौ,—'स्वाहा'शब्दस्यार्थः, इत्याहुः । ४ तान्त्रिकास्तु,—दुर्गाशक्तिविशेषः । यथा–"दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते" ( दुर्गापूजामन्त्रः ) इत्यादौ,—'स्वाहा'शब्दस्यार्थः, इत्याहुः ।

**स्वित्**—( अव्ययम् ) १ प्रश्नः । २ वितर्कः । यथा—"तस्मिन् द्रव्यं, गुणः,कर्म वा, इति संदेहः; विशेषस्योभयथा दृष्टत्वात् । किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः, आहोस्विद्गुणस्य सतः, इति" (वात्स्या० १ । १ । २३ ) इत्यादौ ग्रन्थे,—'स्विद्'शब्दस्यार्थः । ३ पादपूरणार्थम् ।

---

१ वेदादेश्चितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागः, इति फलितोऽर्थः । तेन, तान्त्रिकपूजाया-मर्घ्याचमनीयादिदाने 'स्वाहा,' 'स्वधा'शब्दप्रयोग उपपद्यते । ( ग० व्यु० का० ४ । पृ० १०१ )

२ अत्र–'देवोद्देश्यकस्य 'स्वाहा'पदकरणकस्य हविस्त्यागस्य कर्मेदम्' इत्याकारको बोधः । ( श० प्र० श्लो० ९४ । टी० पृ० १४३ )

३ अत्रोक्तम्—"प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी । बभूव दाहिका शक्तिरग्नेः स्वाहा स्वकामिनी ॥ ग्रीष्ममध्याह्नमार्तण्डप्रभाच्छादनकारिणी । स्वमग्नेर्दाहिका शक्तिर्भव पत्नी च सुन्दरी" इत्यादि । ( ब्रह्मवै० प्र० अ० ३७ )

**स्वीकारः**—'ममेदम्' इति ज्ञानात्मकः संप्रदानव्यापारः । शिष्टं तु 'प्रतिग्रह'शब्दव्याख्याने दृश्यम् । ( वीरमित्रो० दाय० पृ० ९४३ )

**स्वेदः**—१ पाकविशेषः ( सेका,दाहः ) । २ गात्रादितो जलादेर्निष्यन्दनम् ( घर्मः ) । यथा—"अयोनिजपार्थिवशरीरेषु यूकालिक्षादीनां शरीरं स्वेदजम्" इत्यादौ ग्रन्थे,—'स्वेद'शब्दस्यार्थः[1] । 'स च स्वेदः "एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च" इति द्विविधः । स चाग्निगुणजन्यस्त्रयोदशविधः, व्यायामोष्णसदनादिजन्यो दशविधश्च,' इत्यादि सुश्रुतग्रन्थे सविस्तरं प्रतिपादितम्, तत् तत्र दृश्यम् ।

---

## ह.

**ह**—१ पादपूरणम् । २ संबोधनम् । ३ नियोगः । ४ क्षेपः । ५ निग्रहः । ६ निन्दा । ७ प्रसिद्धिः । ८ शिवः । ९ जलम् । १० शून्यम् । ११ आकाशः । १२ रक्तम् । १३ स्वर्गः । १४ धारणम् । १५ पापहरणम् । १६ चन्द्रः । १७ सकोपवारणम् । १८ शुष्कम् । ( मेदि० ) ( शब्दर० ) ( अमरः ) ( एकाक्षरको० )

**हठयोगः**[2]—प्राणायामादिक्रियाभ्यासजन्यः, ( राजयोगं विनैव ) परमात्मसाक्षात्काररूपश्चित्तवृत्तिनिरोधः[3] ।

---

१ स्वेदजन्यजन्तूनाह—"संस्वेदजविकारांश्च यथा येभ्यो भवन्ति च । मानुषस्वेदमलजा मक्षिकाद्या भवन्ति च ॥ नवमेघप्रसिक्तायां पिपीलिकगदादयः । संस्वेदजास्तु विज्ञेया वृक्ष-गो-पशु-जन्तवः ॥ समिद्भ्यो माषमुद्गेभ्यः फलेभ्यश्चैव जन्तवः । जायन्ते कृमयो विप्राः ! काष्ठेभ्यो घुणकादयः ॥ तथा शुक्रविकारेभ्यः पूतिकाः प्रभवन्ति च । संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ॥ गोभ्यो हि महिषेभ्यश्च मानुषेभ्यश्च जन्तवः । मत्स्यादिभ्यश्च विविधा अन्तःकुक्षौ विशेषतः ॥ अथान्यानि च सूक्ष्माणि सूक्ष्मयूकास्तथैव च । गोभ्योऽश्वेभ्यस्तथा चैव अष्टापदकिनी ( भी ? ) नकाः ॥ मक्षिकाणां विकाराश्च उत्सृष्टोदककर्दमैः । शरावति विकाराश्च करीषेभ्यो भवन्ति हि ॥ एवमादिरसंख्यातो गणः संस्वेदजो मया । सर्वासां निहितो ह्येष प्राक्कर्मवशजः स्मृतः" इति । ( वाचस्पत्ये वह्निपु० )

२ अत्र विग्रहः—'हठेन ( बलात्कारेण ), योगः ( चित्तवृत्तिनिरोधः )' इति ।

३ स च तन्त्रप्रसिद्धः । तत्प्रकारस्तु हठदीपिकादावुक्तो द्रष्टव्यः ।

**हननम्**—१ "स्यात्प्राणवियोगफलव्यापारो हननं स्मृतम्" । यथा—"आततायिनमायान्तं हन्यादेवाविचारयन्" (स्मृतिः) इत्यादौ,—'हन्'धात्वर्थः । २ आलंकारिकास्तु,—'गतिः । यथा—"कुञ्जं हन्ति कृशोदरि!" इत्यादौ,—हन्तेरर्थः' इत्याहुः । ३ गुणकास्तु,—'गुणनम् । यथा—'त्रिभिर्हतम्, सप्तभिर्हतम्' इत्यादौ,—'हनन'शब्दार्थः,' इत्याहुः ।

**हन्त**—(अव्ययम्) १ हर्षः । २ अनुकम्पा । ३ विषादः । ४ वाक्यारम्भः । ५ आर्तिः । ६ वादः । ७ संभ्रमः । ८ खेदः । (शब्दच०) (मेदि०) । ९ अन्तःकल्पनम् । (अजयपालः) । (वाच०)

**हर्षः**—१ [१] चित्तोत्साहः; स च क्वचित्,—मिथ्याकारणं भवति । यथा—"हृष्टो दर्पति, दृप्तो धर्ममतिक्रामति, धर्मातिक्रमे खलु पुनर्नरकः" (आपस्त० ध० सू०) इत्यादौ,—'हर्ष'शब्दार्थः । (स्व०) । [२] इष्टाधिगमजन्य आनन्दः । २ पौराणिकास्तु,—कन्दर्पपिता, इत्याहुः । (वामनपु० अ० ५) । ३ आधुनिकास्तु,—'कलियुगीयो राजविशेषः' । यथा—'हर्षचरितम्' इत्यादौ,—'हर्ष'शब्दार्थः, इत्याहुः ।

**हवनम्**—[१] [क] प्राचीनमते,—अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारः । यथा—'संस्कृतेऽग्नौ घृतं जुहोति' इत्यत्र,—जुहोत्यर्थः । (ग० व्यु० का० २ । पृ० ४२)

---

१ अत्र—अधिकं तु 'हिंसा', 'वध'शब्दव्याख्याने द्रष्टव्यम् ।

२ वीरमित्रोदये (२ । पृष्ठे २२–२८) आततायिवधे सिद्धान्तसिद्धनिर्णयस्तु,—"हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् । कामतोऽपि चरेद्वीर ! द्वादशाब्दाख्यमुत्तमम्" इति । "शिखावानपि गोविप्रं न हन्याद्वै कदाचन" इति च (भविष्यपु०) । "आततायिन्यदोषोऽन्यत्र, गोब्राह्मणं यदा हन्यात्तदा प्रायश्चित्तं कुर्यात्" इति (संवर्तः) । "नाततायिवधे दोषोऽन्यत्र गोब्राह्मणात्, ख्यातः प्रायश्चित्तं कुर्यात्" इति (सुमन्तुः) ।

३ अत्र—धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता; आश्रया-*नवच्छिन्नावच्छेदकताश्रयफलवत्त्वविरहात्; संयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात् । घृतादेश्चाश्रयानवच्छिन्न-धात्वर्थतावच्छेदक-क्रियारूपफलाश्रयत्वात्कर्मत्वोपपत्तिः । (ग० व्यु० का० २ । पृ० ४२)

---

* अथ वा—'साक्षाद्धात्वर्थतावच्छेदकीभूतस्यैव फलस्यान्वयिनः कर्मत्वम्' इति वक्तव्यम्; अन्यथा,—'गगने लोष्टमुत्क्षिपति' इत्यादौ,—गगनादेरुत्क्षेपणादिकर्मताया दुर्वारतापत्तेः । एवं च—'वह्निं जुहोति' इति न प्रयोगापत्तिः । (श० प्र० श्लो० ७३ । टी० पृ० १०९)

[ ख ] 'अग्निसंयोगानुकूलक्रियानुकूल-घृतादिवृत्ति-'नोदनादि'-व्यापारः। (दि० गु० धर्मनि० पृ० २३४)। यथा—'घृतं जुहोति' इत्यादौ,—'हु' धात्वर्थः। ( का० व्या० का० ४ । पृ० ९ )

[ ग ] वह्न्यधिकरणकपतनावच्छिन्न-मन्त्रकरणक-क्रिया। यथा—'घृतं जुहोति' इत्यादौ,—'हु'धातोरर्थः। ( श० प्र० श्लो० ७३ । टी० )

[ घ ] वह्निसंयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रिया। यथा—'घृतं जुहोति' इत्यत्र,—'हु'धात्वर्थः। (श० प्र० श्लो० ७३। टी० पृ० १०९)

[ ङ ] 'वैध आधारे हविषः प्रक्षेपः' इति शाब्दिका वदन्ति।

[ च ] नवीनमते तु,—विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागो हवनम्, इति। (दायभाग०) (का० व्या० का० ४ ।पृ० ९)। [ २ ] देवतोद्देश्यकोऽग्नौ मन्त्रपूर्वकं हविःप्रक्षेपः। यथा—'ऋत्विजो जुह्वति' इत्यादावपि,—ऋत्विजां होतृत्वम्। ( का० व्या० का० ४ । पृ० ९ )

---

१ अत्र—'घृतवृत्त्य-ग्निसंयोगावच्छिन्नक्रियानुकूल-व्यापारानुकूलकृतिमान्' इत्यन्वयबोधः। ( का० व्या० का० ४। पृ० ५ )

२ 'वह्नौ जुहोति' इत्यत्र,—'सप्तम्यन्तस्यार्थो न धात्वर्थनिविष्टे पतनेऽन्वेति; वह्निवृत्तित्वविशिष्टपतने तद्वृत्तित्वस्यान्वये निराकाङ्क्षतापत्तेः; परं तु—तदवच्छिन्नक्रियायामेवान्वेति', इति। 'प्रतिमादौ घृतादिस्नपनं मन्त्रकरणकमपि नाग्न्यधिकरणकम्;' 'वह्नौ घृतस्य प्रक्षेपमात्रमग्न्यधिकरणकतत्पतनानुकूलमपि न मन्त्रकरणकम्'; अतस्तदुभयं न होमः। प्राजापत्येऽपि होमे मानस एव मन्त्रः करणम्, इति स होमः। (श० प्र० श्लो० ७३ । टी० पृ० १००)

३ अत्र—'तादृशी च क्रिया सघृतस्य करादेः प्रसारण-न्युब्जीकरणादिरेव। अत एव,—घृतादेः परित्यागित्वविरहाद्दास्विवादेर्न यष्टृत्वम्; किं तु होतृत्वमेव' इति विज्ञेयम्। ( श० प्र० श्लो० ७३ । टी० पृ० १०८ )

४ अत्र—धात्वर्थघटकपतने घृतस्याधेयत्वेनान्वयः। तथा च—'अग्न्यधिकरणकस्य (?) घृतवृत्तिपतनस्यानुकूलमन्त्रकरणकक्रियावान्' इत्येव तत्र बोधो भवति, इति विज्ञेयम्। ( श० प्र० श्लो० ७३। टी० पृ० १०८ )

५ अत्र—'वह्निसंयोगजनकं यद्घृतस्य पतनम्, तदनुकूलमन्त्रकरणकक्रियाविशेषवान्' इत्याकारको बोधः। ( श० प्र० श्लो० ७३ । टी० पृ० १०९ )

६ अत्र—प्रक्षेपश्च, अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापारः। ( का० व्या० का० ४ । पृ० ५ )

**हविष्ट्वम्**—त्यागकर्मत्वम् । यथा–"यथा मन्त्रकरणकहविस्त्यागः" इत्यादौ ग्रन्थे,—'हविः'शब्दस्यार्थः । ( त० प्र० ख० ४ । पृ० १२३ )

**हानम्**—१ [ १ ] [ क ] निवृत्तिप्रयोजकमनिष्टसाधनताज्ञानम् । (ख०) [ ख ] दुःखसाधनत्वज्ञानम् । यथा–'सर्पो मे दुःखसाधनम्' इति ज्ञानम् । ( सि० च० १ । पृ० २१ ) । [ २ ] केचित्तु,–ज्ञानम्; ( स्व० ) तच्च, क्वचित्,–तत्त्वज्ञानम्, इत्याहुः । ( न्या० वा० पृ० ४ ) २ काव्यज्ञास्तु,—परित्यागः ( इच्छाविशेषः ) । यथा–"हिमहानकृता न कृता क्वचन" ( भट्टिः ) इत्यादौ,–'हान'शब्दार्थः, इत्याहुः ।

**हासः**—१ [ १ ] प्रीत्या मुखकमलादेर्विकासः । यथा–'हसति' इत्यादौ,—'हस्'धात्वर्थः । [ २ ] 'कण्ठोष्ठपुटविस्फूर्जनपुरःसरं 'अहहह' इत्यट्टहासः' इति पाशुपता आहुः । ( सर्व० नकुली० ) । [ ३ ] दोषदर्शनपूर्वको हासः । यथा–"ततो जहासातिरुषा भीमं भैरवनादिनी" इत्यादौ । २ आलंकारिकास्तु,–'हास्यस्थायिभावको रसविशेषः,' इत्याहुः ।

**हि**—A ( अव्ययम् ) १ हेतुः । २ अवधारणम् । ३ विशेषः । ४ प्रश्नः । ५ संभ्रमः । ६ हेतूपदेशः । ७ असूया । ८ पादपूरणम् । ९ शोकश्च, इति । B १० वर्धनम् । ११ गतिश्च । यथा–'हिनोति' इत्यादौ,—'हि'धात्वर्थः ।

**हिंसा**—१ [ १ ] नवीनमते,—अनुनिष्पादितमरणफलकव्यापारः ( चि० ४ ); स च, कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रि-

---

१ हविर्द्रव्यं तु, आज्य-पशु-पुरोडाशादि यथाविधि विज्ञेयम् ।

२ स्वानिष्टसाधनताप्रकारकं ज्ञानम्, इत्यर्थः । ( प० च० )

३ तदुक्तम्—"विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत् । हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः" इति । ( सा० द० परि० ३ । श्लो० २२८ । पृ० ५९ )

४ सा च द्रोहेण मन्यते । ( गौ० वृ० ४ । ३ )

अत्रेदमधिकं विज्ञेयम्–"भोक्ताऽनुमन्ता संस्कर्ता क्रयिविक्रयिहिंसकाः । उपहर्ता घातयिता हिंसकाश्चाष्टधा मताः" इति । ( काशीख० ) ( मनु० ५ । ५१ )

५ तदर्थस्तु,—कार्यं तु सुखदुःखसंवेदनम्, तस्यायतनमधिष्ठानमाश्रयः शरीरम्, इति । ( वात्स्या० ३ । १ । ६ )

याणां वधः । (वात्स्या० ३ । १ । ६) । [ २ ] प्राचीनमते तु,–हिंसा [ क ] साक्षान्मरणानुकूलव्यापारः । ( दि० गु० पृ० २२९ ) [ ख ] अदृष्टमरणोद्देशेनानुष्ठीयमानत्वे सति अदृष्टाद्वारकमरणानुकूलव्यापारः । (म० प्र० ४ । पृ० ६१) यथा–"मा हिंस्यात्सर्वा भूतानि" इत्यादौ,—"न हिंस्यात्सर्वाणि भूतानि" इत्यादौ च,–हिंसा । यथा वा–"अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" ( श्रुतिः ) इत्यादौ च,–'हिंसा'शब्द-

---

१ वधोऽत्र, उपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा । ( वात्स्या० ३ । १ । ६ )

२ अनेन विशेषणेन, 'कूपादौ विनष्टे सति गवि तत्कूपकर्तुर्गोवधकर्तृत्वप्रसङ्गः' निवारितः, इति बोध्यम् ।

३ अनेन विशेषणेन, 'गङ्गामरणमुद्दिश्य कृतत्रिसंध्यस्तवपाठादेर्हिंसात्वं' निवारितम् । अत एव,—"*श्येनेनाभिचरन् यजेत" इत्यत्र,—श्येनस्य न हिंसारूपत्वम्; श्येनेनादृष्टद्वारैव शत्रुमरणजननात् । ( म० प्र० ४ । पृ० ६१ ) । तथा हि—श्येनो हि वधसाधनम्, न तु नरकसाधनम्; 'श्येनाच्च वधो वधाच्च नरकः' इत्येतस्मादेव हेतुमात्रादास्तिकानां न श्येनादौ प्रवृत्तिः, इति । ( न्या० म० ४ । पृ० २७ )

४ एतन्मते ( प्राचीनमते ),—श्येनो न स्वरूपतो निषिद्धः, किं तु,—फलतो निषिद्धः । नव्यनैयायिकानां मते तु,—श्येनः स्वरूपत एव निषिद्धः, तत्र हिंसात्वमस्त्येवेति ज्ञेयम् । ( न्या० म० ४ । पृ० २७ ) । अत्रत्यविषयस्तु 'अभिचार'शब्दव्याख्यानावसरे टिप्पण्यां ( पृ० ५७ ) संपादितो द्रष्टव्यः ।

५ अत्र मनुरप्याह—"तस्माद्यज्ञे वधोऽवधः" इति । ( मनु० अ० ५ । श्लो० ३९ ), "या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे । अहिंसामेव † तां विद्याद्वेदाद्धर्मो हि निर्बभौ" इति च । ( मनु० अ० ५ । श्लो० ४४ ) अत्र विशेषस्तु 'पशु'शब्दव्याख्याने द्रष्टव्यः ।

---

* अत्र—'श्येन' इति कर्मनामधेयम् "यथा वै श्येनो निपात्याऽऽदत्ते, एवमयं द्विषन्तं भ्रातृव्यं निपात्याऽऽदत्ते"(श्रुतिः) इत्यर्थवादे श्येनसाम्येन प्रकृतयागस्तवनात् । अभिचरन् शत्रुवधं कामयमानः । तथा च—'श्येननामको यागः शत्रुवधरूपेष्टसाधनत्वे सति कृतिसाध्यः' इत्यन्वयबोधः । ( म० प्र० ख० ४ । पृ० ६१ )

† अत्रायं भावः—वैधपशुहिंसा राजसत्वेन न ब्राह्मणविषया; अपितु काम्यविषयकत्वेन च क्षत्रियादिविषयैव; तत्रापि तस्या नरकसाधनत्वमस्त्येव । घृत-पिष्टादिरूपपशूनां तु न काम्यविषयत्वम्, अपि तु मोक्षफलकतत्त्वज्ञानसाधनयागाङ्गत्वमेव । तथा च मनुः—"कुर्याद्घृतपशुं संगे कुर्यात्पिष्टपशुं तथा । न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कदाचन" इति । ( मनु० अ० ५ । श्लो० ३७ ) अत्र 'संगे' इत्यस्य 'सम्,–( सम्यक्, ) गम्,–गतिः' इति व्युत्पत्त्या सम्यग्ज्ञानम्, इत्यर्थः; तत्त्वज्ञानम्, इति यावत् । 'संगे' इत्यस्य 'आसक्तौ' 'पशुबलिप्रसक्तौ' 'स्मार्तकर्मणि वा' इत्यादिकं तु कुल्लूकभट्ट-राघवानन्दादीनामपव्याख्यानमेव, इति ।

स्यार्थः, इति। [ ३ ] 'द्रोहः' इति परे मन्यन्ते। ( गौ० वृ० ४ । ३ ) २ 'चौर्य-वृत्तिनाश-इत्यादिकर्म,' इति काव्यज्ञा आहुः । ( अमरः, ३। ३ । २२८ )

**हितम्**—१ इष्टसाधनम् । यथा—'(यजनं) विप्राय हितम्' इत्यादौ,—'हित'शब्दस्यार्थः[2] । ( ल० म० सुबर्थ० का० ४ । पृ० १०४ ) । २ 'गतम् । ३ मङ्गलं च' इति काव्यज्ञा आहुः ।

**हिन्दुः**[3]—१ जातिविशेषः[4] । २ अर्वाचीनास्तु,—भरतखण्डस्थजनानां

---

१ अत्र विवेकः—"हिंसा चैव न कर्तव्या वैधहिंसा तु राजसी । ब्राह्मणैः सा* न कर्तव्या यतस्ते सात्त्विका मताः" इति । (वाचस्पत्ये बृहन्मनु०) (मनु० अ० ५। श्लो०४८—५०)

२ अत्र,—संबन्धश्चतुर्थ्यर्थः; 'विप्रसंबन्धि हितम्' इति बोधः। एवम्—सुखयोगेऽपि 'विप्राय सुखम्' इत्यादौ,—शाब्दबोधो विज्ञेयः । (ल० म० सुबर्थ० कार० ४। पृ० १०४—१०५)

३ अत्र व्युत्पत्तिः—'हीनं दूषयति' ( दुष,—डु, पृषो० ) इति ।

४ अत्रोक्तम्—"पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया । अष्टोत्तरशताशीतिर्येषां संसाधनात्कलौ ॥ पञ्च खानाः सप्त मीरा नव शाहा महाबलाः । हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्तिनः ॥ हीनं च दूषयत्येव हिन्दुरित्युच्यते प्रिये ! । पूर्वाम्नाये नव शतं षडशीतिः प्रकीर्तिताः ॥ फिरिङ्गभाषया मन्त्रास्तेषां संसाधनात्कलौ । अधिपा मण्डलानां च संग्रामेष्वपराजिताः ॥ इंरेजा नवषट् पञ्च लण्ड्रजाश्चापि भाविनः" इति । (मेरुतन्त्रे० † प्र० २३)

५ अत्रार्थे 'तुष्यतु दुर्जन'न्यायेन व्युत्पत्तिः—'सिन्धु'शब्दोऽपभ्रंशात् ( सकारस्थाने‡

---

* ननु,—'पश्विष्ट्यादौ हिंसाया वैधत्वेन मनुवचनादहिंसात्वमेवेति, न तद्धिंसाया नरकप्रयोजकत्वम्' इति चेन्न;—"मा हिंस्यात्सर्वा भूतानि" इति शास्त्रेण तद्धिंसाया अपि निषेधात् । न च, "मा हिंस्यात्सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यते' इति वाच्यम्; विरोधाभावात् । विरोधे हि बलीयसा दुर्बलं बाध्यते; न चास्ति विरोधः; भिन्नविषयत्वात् । तथा हि—'मा हिंस्यात्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते, न पुनरक्रत्वर्थत्वमपि । "अग्नीषोमीयं पशुमालभेत" इत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते, न त्वनर्थहेतुत्वाभावः; तथा सति वाक्यभेदप्रसङ्गात् । न च, अनर्थहेतुत्व-क्रतूपकारकत्वयोः कश्चिदस्ति विरोधः । तस्मात् 'समाने विषये एव बाध्यबाधकभावः' इति नियमात्प्रकृते तु भिन्नविषयत्वाद्बाध्यबाधकभावासंभवात्, निषिद्धत्वाच्च पशुहिंसाया श्येनवदनर्थप्रापकत्वमेव,' इत्यलं विस्तरेण । ( वाच० )

† 'इदं मेरुतन्त्रमप्रमाणम्' इति वाचस्पत्ये तारानाथतर्कवाचस्पतिराह । ( वाच० )

‡ अत एव,—अर्वाचीनाः सिन्धुपरिसरं भरतखण्डं 'हिन्दुस्थानम्' इति व्यवहरन्ति, 'दश, दस' इति स्थाने दाहा, 'सार, सारु' इति स्थाने 'हारु' इतिवत् ।

'हिन्दु' इति संज्ञा । यथा-"भरतखण्डस्य 'हिन्दुस्थानम्' इति नाम" इत्यादौ कल्पितवाक्ये,—'हिन्दु' शब्दस्यार्थः, इति प्रलपन्ति ।

**हिमम्**—१ (जलम्) कारणविशेषेण घनीभूतं जलम्[1] । यथा-"गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी" (देवीपु० अ० २) इत्यादौ,-'हिम'शब्दस्यार्थः । २ शीतस्पर्शवत् । (अमरः, १ । ३ । १९) यथा-'हिमांशुश्चन्द्रः' इत्यादौ,—'हिम' शब्दस्यार्थः । ३ ऋतुविशेषः । ४ चणिका । (वाचस्पत्ये राजनि०)

**हे**—(अव्य० हा-डे) १ संबोधनम् । २ आह्वानम् । ३ असूया । (मेदि०) । एवम्-'है' 'हो' इत्यादयः शब्दा व्याख्येयाः । (वाच०)

**हेतुः**—१ ज्ञापकः[2] । यथा-पर्वते धूमेन[3] वह्निसाधने ('पर्वतो वह्निमान् धूमात्' इत्यादौ) धूमः[4] । स चायं हेतुर्द्विविधः,-सद्धेतुः[5], असद्धेतुश्चेति । तत्राद्यः, पर्वतादिपक्षक-वह्न्यादिसाध्यक-स्थले धूमादिः । द्वितीयो हेत्वाभासः (दुष्टहेतुः) । २ [ १ ] A कारणम्[6] (उत्पादकम्) । यथा—

---

हकारोच्चारणात्) 'हिन्दुः' इति । तथा च—वेदप्रतिपाद्यधर्मस्य सिन्धुनदीपर्यन्तत्वाच्च तद्धर्मवन्तोऽपि सिन्धुनामानः, इति विज्ञेयम् ।

१ एवम्—करकाऽपि ज्ञेया । तत्प्रपञ्चस्तु, 'अप्'शब्दव्याख्याने (पृ० ११०) द्रष्टव्यः ।

२ अयमेव, 'लिङ्ग'शब्देन 'अनुमान'शब्देनापि च व्यवह्रियते, इति बोध्यम् ।

अत्र सूत्रम्—"हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम्" (वै० मि० सू० ९ । २ । ४) (?)

३ अत्र—A ज्ञापकज्ञानविषयत्वरूपं प्रयोजकत्वमेव हेतुत्वम्; B ज्ञानज्ञाप्यत्वरूपं हेतुमत्त्वं वा तृतीयार्थः । (ग० व्यु० का० ३ । पृ० ८७)

४ अत्र—केचित्तु,—परामर्शीयप्रकारत्वं हेतुत्वम्, इत्यङ्गीचक्रुः ।

५ अत्र विज्ञेयम्—पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्व-अबाधितविषयत्व-असत्प्रतिपक्षितत्वे-तत्पञ्चरूपोपपन्न एव हेतुः सद्धेतुर्भवति । कश्चित्, चतूरूपोपपन्नोऽपि हेतुः सद्धेतुर्भवति । यथा—'इदं वाच्यं ज्ञेयत्वात्' इत्यादौ,—ज्ञेयत्वं सद्धेतुः । कश्चित्, त्रिरूपोपपन्नोऽपि हेतुः सद्धेतुर्भवति । यथा—'सर्वं प्रमेयमभिधेयत्वात्' इत्यादौ,—अभिधेयत्वं सद्धेतुर्भवति, इति । (त० व० २ । पृ० २७)

६ अत्रेदं ज्ञेयम्—हेतुत्वात्मिका संगतिरपि कारणत्वरूपा, उपजीव्यत्वरूपा च भवति; नातिरिक्ता, इति । (मथु०) (जागदी०)

'मृत् घटस्य हेतुः' इत्यादौ,—मृदुत्पादिका । B कारकम् । यथा—'यज्ञमनु[1] प्रावर्षत्' इत्यादौ,—'अनु' शब्दस्यार्थः । [ २ ] स्वतन्त्रं प्रेरयन्[2] । (ल० म०) । [ ३ ] शाब्दिकास्तु,—फलसाधनयोग्यः पदार्थः । यथा—'धनेन[3] कुशलम्, विद्यया यशः' इत्यादौ,—तृतीयार्थो हेतुः, इत्याहुः । ( व्या० वृत्ति० ) । ३ फलम् । यथा—'अध्ययनेन[3] वसति' इत्यादौ,—तृतीयार्थः फलम् (अध्ययनम् ) । ४ आलंकारिकास्तु,—अर्थालंकारविशेषः, इत्याहुः ।

**हेतुः**[4]—( न्यायावयवः ) [ क ] पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकं वचनम् ।

---

१ अत्र—शिष्टं तु 'द्वितीया'शब्दव्याख्याने ( पृ० ३४५ ) द्रष्टव्यम् ।

२ अत्राधिकं तु 'णि'शब्दव्याख्याने ( पृ० २७३–२७५ ) द्रष्टव्यम् ।

३ अत्र—"हेतौ" ( पाणि० २ । ३ । २३ ) इत्यनेन सूत्रेणानुशिष्यते तृतीया ।

४ पञ्चावयवप्रयोगे कर्तव्ये—साध्यनिर्देशा-(प्रतिज्ञा-)नन्तरं 'कुतः' इत्याकाङ्क्षायां साधनताव्यञ्जकविभक्तिमल्लिङ्गवचनमेवोचितम् । अन्यथाऽनाकाङ्क्षाभिधाने निग्रहापत्तेः; लोके तथैवाकाङ्क्षानिवृत्तिरिति व्युत्पत्तेः; इति प्रतिज्ञानन्तरं हेतूपन्यासः । ( चि० २ । पृ० ७८ )
लिङ्गज्ञानं हेतुप्रयोजनम् । ( त० दी० २ । पृ० २२ )
लक्षणं च हेतुत्वमेव; तच्चात्र, [ क ] A अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याविषयक-*शाब्दधीजनकहेतुविभक्तिमच्छब्दत्वम् । B † हेतुत्वप्रतिपाद-

---

* अत्र—जनकान्तं न्यायावयवार्थकम् । निगमनवारणाय 'साध्याविषयक' इत्यादि । ( दीधि० २ । पृ० १७३ ) । साध्याविषयकत्वं च, [ क ] प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकीभूतसाध्यविषयताशून्यत्वम् । [ ख ] अथ वा—पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारत्व-पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नसंबन्धित्वावच्छिन्नप्रकारतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारत्व-एतदन्यतरशून्यत्वम् । ( ग० अवय० )
अत्रेदं बोध्यम्—'प्रकृतहेतुतावच्छेदक' इत्यादिप्रथमकल्पोऽनुषङ्गपक्षाभिप्रायक एव । 'अथ वा' इत्यादिद्वितीयकल्पस्त्वनुषङ्गपक्षाननुषङ्गपक्षैतदुभयसाधारणः, इति । द्वितीयकल्पेऽप्यन्यतरघटकः प्रथमभागो मतुप्प्रत्ययस्य निरर्थकत्वपक्षमभिप्रेत्य; द्वितीयभागस्तु सार्थकत्वपक्षमभिप्रेत्योक्तम् । 'एतत्सर्वं सूक्ष्मतरम्' इति विद्वद्भिर्विभावनीयम् ।
तदर्थस्तु,—विभक्त्यर्थहेतुत्वविशेष्यकान्वयबोधजनकन्यायावयवत्वम् । ( दीधि० २ । अव० पृ० १७४ )

[ ख ] साध्यसाधनम् । ( गौ० १ । १ । ३४ )। यथा—पर्वते धूमेन वह्निसाधने,—'धूमवत्त्वात्' इति वाक्यम् । ( त० भा० ) ( त० दी० )

---

कविभक्तिमन्न्यायावयवत्वम् । C *उदाहरणप्रयोजकजिज्ञासाजनकशाब्दज्ञानजनकन्यायावयवत्वम् । D † साध्याविषयकज्ञानजनकहेतुपञ्चम्यन्तानुमितिपरशब्दत्वम् । E प्रतिज्ञावाक्यधीजन्यकारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वम् । F ‡ पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वम् । G अन्ये तु,—अनुमितिहेतुज्ञानकरण-'धूमवत्त्वात्' इति शब्दजन्यज्ञानवृत्ति-प्रतिज्ञादिजन्यज्ञानावृत्तिजातियोगिज्ञानजनकवाक्यत्वम्, इत्याहुः । ( चि० अव० २ । पृ० ७८–७९ ) । [ ख ] ( १ ) प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्था-§पितार्थान्वितस्वार्थबोधकन्यायावयवत्वम्; । ( २ ) A स्वार्थविशिष्टवैशिष्ट्य-¶बोधजनकन्यायावयवत्वम् । B विशिष्टवैशिष्ट्यबोधजनकस्वार्थोपस्थितिजनकन्यायावयवत्वम् । C विशिष्टबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वम् । ( दीधि० २ । अवय० पृ० १७७ ) [ ग ] प्रकृतपक्षतावच्छेदकावच्छिन्नान्वितस्वार्थबोधजनकहेतुविभक्तिघटितत्वे सति प्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविशिष्टहेतुत्वविषयितावहिर्भूत-‖ विषयिताशून्यबोधजनकवाक्यत्वम् । ( ग० अव० ) । तद्यथा—$'एतद्धूमात्' इति शब्दवृत्त्यवयवविभाजकोपाधिमत्त्वम् । ( न्या० म० २ । पृ० २३ )

१ साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः, साध्यान्वितस्वार्थबोधकोऽवयवः, इति फलितार्थः । ( गौ० वृ० १ । १ । ३४ )

---

* अत्रायं भावः—क्वचिज्जिज्ञासानुत्पादेऽपि तद्योग्यतासत्त्वान्नाव्याप्तिः । अनुक्तोदाहरणस्थलेऽपि तादृशयोग्यतासत्त्वात् 'न्यायावयव' इति पदम् । ( दीधि० २ । अवय० पृ० १७४ )

† अत्र—'अयं न दण्डात्, दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यादौ,—प्रतिज्ञा-निगमनयोर्वारणाय 'साध्याविषय' इत्यादि । उपनयविशेषवारणाय 'हेतुपञ्चम्यन्त' इति पदम् । ( दीधि० २ । अवय० पृ० १७४ )

‡ तदर्थश्च,—प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वम्, इति । ( दीधि० २ । अवय० पृ० १७६ )

§ अत्र—निगमनवारणाय 'उपस्थापित' इत्यन्तं दत्तम् । (दीधि० २ । अवय० पृ० १७७ )

¶ तथा हि—एकवाक्यतया हेत्वर्थविशिष्टसाध्यस्य वैशिष्ट्यं भासते, न पुनरवयवान्तरार्थविशिष्टस्य कस्यचित्, इति । ( दीधि० २ । अवय० पृ० १७७ ) । अत्राधिकं तु ( ग० अवय० हेतुग्र० पृ० ७१ ) तत्र द्रष्टव्यम् ।

‖ अत्र विषयितायां तादृशविषयितावहिर्भूतत्वं च तादृशविषयिताशालिनिश्चयत्वसमनियतप्रतिबन्धकतानवच्छेदकत्वम् । (ग० अव० प्रतिज्ञाग्र० पृ० ४२) (हेतुग्रन्थे पृ० ५० । स्व०)

$ अत्र—एष चासौ 'धूमात्' इति शब्दश्च, इति विग्रहः । 'एतत्' शब्दो वह्निधूमन्यायघटकपरः । एवमुदाहरणादिलक्षणेऽपीयमेव रीतिर्बोध्या । ( म० प्र० २ । पृ० ३३ )

[ ग ] प्राचीनास्तु,—पञ्चम्यन्तलाक्षणिकपदवन्न्यायप्रविष्टवाक्यं हेत्ववयवः, इत्याहुः । ( म० प्र० २ । पृ० ३३ ) । सोऽयं हेतुर्द्विविधः,—अन्वयिहेतुः, व्यतिरेकिहेतुश्चेति । परे तु,—तृतीयोऽन्वयव्यतिरेकी, इत्यपि वदन्ति । ( गौ० वृ० १ । ३४ )[1]

**हेतुमत्**—कार्यम् । यथा—"हेतु-हेतुमतोः" इत्यादौ,—'हेतुमत्' शब्दस्यार्थः ।

**हेतुसमः**[2]—( जातिः ) "हेतोर्वैकल्यसाध्यार्थं पूर्वापरसहोदयम् । त्रेधाऽपि तस्य हेतुत्वभङ्गो हेतुसमो भवेत्"[3] । ( ता० र० २ । श्लो० ११८ )

**हेत्वन्तरम्**—( निग्रहस्थानम् ) [ क ] अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्[4] । ( गौ० ५ । २ । ६ )[5]

[ ख ] परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनम् ।

---

१ अत्र सूत्रे अनुसंधेये—"उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः" इति, "तथा वैधर्म्यात्" इति च । ( गौ० १ । १ । ३४–३५ )

२ अत्र—'अहेतुसमः' इति पाठो भाष्यकार-वृत्तिकाराणां संमतः, इति विज्ञेयम् ।

३ एतत्कारिकाव्याख्यानं तु 'अहेतुसम'शब्दव्याख्यानरीत्या दृश्यम् ।

४ सूत्रार्थश्च—अत्र च 'हेतौ' इत्यनेन हेत्ववयवांशो न विवक्षितः; अपि तु—साधकांशः; स च हेत्ववयवस्थ उदाहरणादिस्थो वा । 'अविशेषोक्ते' इति,—पूर्वोक्त इत्यर्थः । 'विशेषमिच्छतः' इति साभिप्रायम् । तेन, परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरम् । ( गौ० वृ० ५ । ४९ )

५ अत्र भाष्यम्—निदर्शनम्,—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा । कस्माद्धेतोः । एकप्रकृतीनां विकाराणां परिमाणात् । मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम् । यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति । दृष्टं च प्रतिविकारं परिमाणम् । अस्ति चेदं परिमाणं प्रतिव्यक्तम् । तदेकप्रकृतीनां विकाराणां परिमाणात्पश्यामो 'व्यक्तमिदमेकप्रकृति' इति । अस्य व्यभिचारेण प्रत्यवस्थानम्,—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात्सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते । तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति । तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति । सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् । हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते, नेदं व्यक्तमेकप्रकृति भवति; प्रकृत्यन्तरोपादानात् । अथ नोपादीयते दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति । ( वात्स्या० ५ । २ । ६ )

[ ग ] प्राञ्चस्तु,—A हेतौ विशेषणदान एव हेत्वन्तरम्, इत्याहुः । यथा—'शब्दोऽनित्यो बाह्येन्द्रियप्रत्यक्षत्वात्' इत्युक्ते,—सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते 'सामान्यवत्त्वे सति' इति विशेषणम् । ( गौ० वृ० ५ । ४९ ) (दि० १ ) B परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानम् । ( नील० पृ० ४९ )

**हेत्वप्रसिद्धिः**—'साधनाप्रसिद्धि'शब्दवदस्यार्थोऽनुसंधेयः ।

**हेत्वसिद्धिः**—( व्याप्यत्वासिद्धिः ) [ १ ] 'साधनाप्रसिद्धि'शब्दवदस्यार्थोऽनुसंधेयः । [ २ ] अपरे तु—व्यर्थविशेषणघटितं हेतुतावच्छेदकमेव हेत्वसिद्धिः, इत्याहुः ।

**हेत्वाभासः**—( हेतोर्दोषः ) [ क ] यस्य हि ज्ञानमनुमितिप्रतिबन्धकम्, सः । ( चि० २ । बाध० पृ० ११६ )

---

१ अत्रार्थे—पूर्वोक्तत्वं हेत्ववयवे उदाहरणादौ वा । ( गौ० वृ० ५ । ४९ )

२ एवं विशिष्टहेतुमुक्त्वा,—'यद्बाह्येन्द्रियप्रत्यक्षं तदनित्यम्' इत्युदाहरणे, न्यूनत्वेन विशिष्टोक्तौ । एवमुपनयविशेषणेऽपि । ( गौ० वृ० ५ । ४९ )

३ अत्र—'हेतोः, हेतौ वाऽऽभासः' इति व्युत्पत्त्या 'हेत्वाभास'पदस्य हेतुदोषः, इत्यर्थः । तल्लक्षणं च हेत्वाभासत्वम्; तच्चात्र, [ क ] A *अनुमितिकारणीभूताभावप्रतियोगि (अनुमितिप्रतिबन्धक)-यथार्थज्ञानविषयत्वम्;। B † यद्विषयकत्वेन (लिङ्ग-) ज्ञानस्य ‡ अनुमिति-

---

* अनुमितिप्रतिबन्धकीभूतयथार्थज्ञानविषयत्वम्, इति समुदितार्थः । ( त० दी० २ )

† अत्रेदमधिकं विज्ञेयम्—गदाधर्यां द्वितीय-हेत्वाभासलक्षणे, 'ह्रदो वह्निमान् धूमात्' इत्यादौ,—( १ ) प्रमेयत्वविशिष्टबाधस्य ( प्रमेयत्वविशिष्टवह्न्यभाववद्ध्रदस्य ) दोषत्वानङ्गीकारादलक्ष्यतया तत्रातिव्याप्तिवारणाय लक्षणघटक-'यत्'पदार्थे 'विशिष्टान्तराघटितत्व'विशेषणम्;। तत्रैव,—(२) वह्न्यभाववज्जलादिमद्वृत्तिजलवद्ध्रदादावतिव्याप्तिवारणाय 'यत्'पदार्थे 'विशिष्टद्वयाघटितत्व' विशेषणं च दत्तम् । तत्रैव,—(३) जातित्वेन ह्रदत्वावगाहि-'जातिमान्वह्न्यभाववान्' इत्यप्रतिबन्धकज्ञानमादायासंभववारणाय लक्षणघटक-'ज्ञान'पदार्थे 'अव्यापकविषयिताशून्यत्व'विशेषणमपि दत्तं गदाधरभट्टाचार्यैः, इति । एतत्प्रपञ्चस्तु तत्तच्छब्दव्याख्यानावसरे संपादितत्वाद्विस्तरभयाच्चात्रैव विरम्यते ।

‡ तथा च—अत्रानुमितिपदं ( अजहत्स्वार्थलक्षणया ) अनुमिति-तत्करणा-न्यतरपरम्, 'साध्यव्याप्यहेतुमान् पक्षः साध्यवान्' इत्याकारानुमितिपरं वा;। तेन, 'एकत्र हेतौ व्यभिचारादिमहेप्यन्यस्य परामर्शादनुमित्यनुत्पादेन व्यभिचारात्, व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिमद्धाभावस्यानुमितिजनकत्वेऽपि' न क्षतिः ( व्यभिचारादौ नाव्याप्तिः )। ( दीधि० २ । हेत्वा० पृ० १७८)

विरोधित्वम्, तत्त्वम्;* । C ज्ञायमानं सद्यदनुमितिप्रतिबन्धकम्, तत्त्वम् । ( चि० २ । सामा० पृ० ८३ ) ( मु० २ )। [ ख ] अत्र वदन्ति—† 'यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्तस्तदुत्तरमनुमितावनाहार्यमानसज्ञाने वा, पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः (अभावः), तत्त्वम्‡,' इति । [ ग ] केचित्तु,—यादृशपक्षक-यादृशसाध्यक-यादृशहेतौ यावन्तो दोषाः संभवन्ति, तावदन्यान्यत्वम्§, इति प्राहुः । ( दीधि० २ । सामा० पृ० १८० ) ( म० प्र० २ । पृ० २५ ) ( मु० २ ) । [ घ ] मिश्रानुयायिनस्तु,—A 'सामानाधिकरण्यसं-

---

* समुदितार्थस्तु,—[ क ] अनाहार्या-प्रामाण्यज्ञानानास्कन्दित-निश्चय-वृत्तित्वविशिष्टयादृशविशिष्टविषयिताव्यापिका 'पक्षः साध्यवान्साध्यव्याप्यहेतुमांश्च' इति समूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता भवति, तादृशविशिष्टत्वम्, इति । ( वै० वि० ३ । १ । १५ ) ( ग० २ । हेत्वा० सामा० पृ० ९ ) । वस्तुतस्तु—[ ख ] A यादृशविशिष्टविषयकनिश्चयत्वमनुमितिबन्धकताशून्यपक्षधर्मताज्ञानकालीनज्ञानावृत्ति भवति, तादृशत्वम् । B यादृशविशिष्टविषयकनिश्चयत्वव्यापकः पक्षधर्मताज्ञानकालीनत्वा-नुमित्यप्रतिबन्धकत्वो-भयाभावः, तादृशत्वम्, इति । ( ग० २ । हेत्वा० सव्य० पृ० ३० )

† समुदितार्थस्तु,—यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य विरोधिविषयिताप्रयुक्ततादृशोभयाभाववत्त्वम्, तद्रूपावच्छिन्नत्वम्, इति । ( ग० २ । हेत्वा० सामा० ) अत्र लघुभूतः परिष्कारः—'तादृशोभयाभावप्रयोजकविरोधिविषयितावत्त्वं यद्रूपविशिष्टविषयिताव्यापकं भवति, तद्रूपावच्छिन्नत्वम्' इति । ( ग० २ । हेत्वा० सामान्य० पृ० २२–२३ )

‡ इदं च 'सिद्धान्तसिद्धं हेतुदोषलक्षणम्' इति मन्यन्ते नैयायिकाः । तथा च लक्षणसमन्वयः—'ह्रदो वह्निमान् धूमात्' इत्यादौ,—वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयकनिश्चयानन्तरम्,—( 'ह्रदो वह्निमान् वह्निव्याप्यधूमवांश्च' इत्याकारकानुमितेः कदाचिदप्यनुदयेन ) घटाद्यनुमितय एव तादृशनिश्चयाव्यवहितोत्तरानुमितिसामान्यान्तर्गता भवन्ति, तासु च 'ह्रदत्वादिविशिष्टे यद्वह्नित्वाद्यवच्छिन्नवह्निवैशिष्ट्यावगाहित्वम्, वह्नित्वाद्यवच्छिन्नवह्निव्याप्तिविशिष्टधूमत्वाद्यवच्छिन्नवैशिष्ट्यावगाहित्वं च' तदुभयाभाववत्त्वमक्षतमेव, इति । तत्र ( तादृशोभयाभावे ), तादृशनिश्चयीयविरोधिविषयिता-( वह्न्यभाववद्ध्रदादिविषयिता- )-प्रयुक्तत्वमप्यक्षतम्; 'स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावं प्रति प्रयोजकत्वम्' इति नियमात् । ( ग० २ । हेत्वा० सामा० पृ० २० )

§ तत्तद्विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वम्, इत्यर्थः । ( ग० २ । हेत्वा० सामा० पृ० ३१ )

[ ख ] अनुमिति-तत्करणा-न्यतरप्रतिबन्धकज्ञानविषयो धर्मः ( हेत्वाभासत्वोपाधिः ) । (त० कौ० २) (म० प्र० २ । पृ० २९) । यथा— 'ह्रदो वह्निमान् धूमात्' इत्यादौ,—वह्न्यभाववद्ध्रदादिरूपो दोषो ( बाधः )

---

बन्धेन यस्य यस्य *'यादृशप्रतिबन्धकतायामवच्छेदकत्वम्, तत्तदवच्छेदकविशिष्टयादृशविशिष्टविषयकनिश्चयत्वं तत्प्रतिबन्धकतानतिरिक्तवृत्ति भवति, तत्त्वम् । B यादृशज्ञानान्तरविशिष्टत्वेन † यादृशविशिष्टविषयकज्ञानस्य प्रतिबन्धकता, तादृशज्ञानसहिततादृशविशिष्टज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविशिष्टपर्याप्तविषयताविरहविशिष्टत्वे सति, यादृशविशिष्टनिरूपितविषयितासामान्यमनुमितिप्रतिबन्धकतावच्छेदकं, तादृशविशिष्टत्वम्' इत्याशशङ्किरे ‡ । ( ग० २ । हेत्वा० साधा० पृ० ४९–५० )

१ तेन, व्यभिचार-विरोध-साधनाप्रसिद्धि-स्वरूपासिद्धिष्वनुमित्यप्रतिबन्धकत्वेऽपि तत्करणव्याप्तिपक्षधर्मताज्ञानप्रतिबन्धकत्वसत्त्वान्नाव्याप्तिः । (म० प्र० २ । पृ० २५) (ग० २ । हेत्वा० सामा० ल० १ । पृ० ३ )

२ अत्र—'तद्वत्ताबुद्धौ तदभाववत्तानिश्चयः प्रतिबन्धकः' इति नियमात्, वह्न्यभावविशिष्टस्य ह्रदस्य निश्चयः ( 'वह्न्यभाववान् ह्रदः' इत्याकारकः ) 'ह्रदो वह्निमान्' इत्यनुमितौ प्रतिबन्धको भवति, सः ( वह्न्यभावविशिष्टो ह्रदः ) दोषः, इति विज्ञेयम् ।

---

* अत्रेदं तत्त्वम्—बाधबुद्धिप्रतिबन्धकतायामप्रामाण्यग्रहाभाव एव सामानाधिकरण्यसंबन्धेनावच्छेदकः प्रसिद्धः, इति; । तेन, साधारण्यस्यानित्यदोषत्वाङ्गीकारेऽपि तत्र न हेत्वाभाससामान्यलक्षणस्यानुपपत्तिः । ( ग० २ । हेत्वाभा० साधा० पृ० ४९ )

† अत्रायं विवेकः—'बाधादिस्थले नित्यदोषत्वम्, साधारण्यादिस्थले तु ज्ञानद्वयप्रतिबन्धकतामादायानित्यदोषत्वम्' इति । तथा हि–नित्यदोषे च, विशेष्यीभूतनिरुक्तविषयताविरहेण तादृशज्ञानानधिकरणक्षणवृत्तित्वविशिष्टतादृशविषयताविरहस्य सर्वदैव सत्त्वेन; अनित्यदोषे तु, प्रतिबन्धकज्ञानदशायामेव तादृशक्षणरूपविशेषणविरहेण तादृशविरहस्य सत्त्वेन च; सामञ्जस्यात् ( लक्षणसमन्वयः ), इति । ( ग० २ । हेत्वा० साधा० पृ० ५० )

‡ अत्रेदं विज्ञेयम्—एतादृशीमाशङ्कां निराकर्तुं साधारण्यस्थले ज्ञानद्वयप्रतिबन्धकतां खण्डयति रघुनाथतार्किकशिरोमणिः, दीधितौ ( २ । पृष्ठे १९३ ) 'नच' इत्यादिना ग्रन्थेन । अत्रायमुपक्रमः—'विपक्षवृत्तित्वं साधारणत्वम्' इति मणिकारोक्तस्य सिद्धान्तसिद्धसाधारणलक्षणस्य तात्पर्यं प्रकटीकुर्वाणो दीधितिकारः 'पूर्वोक्तविपक्षवृत्तित्वरूपसाधारणत्वघटकं विपक्षत्वं साध्याभाववत्त्वमेव, न तु निश्चितसाध्याभाववत्त्वम्; तज्ज्ञानस्य व्याप्तिज्ञानाप्रतिबन्धकत्वात्' इत्युक्त्वा,—"न च ( हि ), वस्तुतो यत्र तन्निश्चयः, तद्वृत्तित्वज्ञानं प्रतिबन्धकम्" इत्यादिग्रन्थेन, साधारण्यादेरनित्यदोषत्वमङ्गीकर्तृभिर्मिश्रानुयायिभिः स्वीकृतां साधारण्यस्थले ज्ञानद्वयप्रतिबन्धकतां खण्डितवान्, इति । ( ग० २ । हेत्वा० साधा० पृ० ५० )

हेत्वाभासः । तत्र—( १ ) न्यायनये ( गोतमनये, वृत्तिकारनये च ) स ( हेत्वाभासः ) पञ्चविधः,—व्यभिचारः, विरोधः, सत्प्रतिपक्षः, असिद्धिः, बाधश्चेति । ( २ ) A वैशेषिकनये ( कणाद—प्रशस्तपादादीनां नये ) हेत्वाभासस्त्रिविधः,—असिद्धिः, विरोधः, संदिग्धत्वं ( अनैकान्ति-

---

१ अत्र नैयायिकसिद्धान्तस्तु,—[ क ] 'बाध-सत्प्रतिपक्ष-भिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तत्रैवान्तर्भवन्ति* । बाधव्याप्यस्यापि तु सत्प्रतिपक्षस्य स्वतन्त्रेच्छेन मुनिना (गोतमेन) पृथगुपदेशान्न बाधेऽन्तर्भावः । सत्प्रतिपक्षव्याप्यस्तु नानुमितिप्रबन्धकः; तद्वत्ताज्ञाने, तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वेऽपि तदभावव्याप्यव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावान्न हेत्वाभासलक्षणाक्रान्तत्वं तस्येति पञ्चैव हेत्वाभासाः, इति । ( म० प्र० २ । पृ० २८ )। [ ख ] यत्र च धर्मिणि यो धर्मो यादृशो हेत्वाभासस्तत्र च तद्व्याप्यमपि स एव हेत्वाभासो भवति विना सत्प्रतिपक्षम् । बाधव्याप्यस्तु सत्प्रतिपक्षनामा हेत्वाभासो भिन्न एव; महर्षिणा गोतमेन पृथगुपदेशात्, अविरोधाच्च,' इति । ( दीधि० २ । हेत्वा० पृ० २०४ ) ( मुक्ता० २ । पृ० १६७ )

२ अत्रेदं तात्पर्यम्—बाध-सत्प्रतिपक्षौ तु काश्यपीये ( काणादे ) मते न स्वतन्त्रौ; तत्र बाध आश्रयासिद्ध्यादौ † अनैकान्तिके वा पर्यवस्यति; सत्प्रतिपक्षोऽप्यन्यतरत्र ‡ व्याप्त्यादिसंशयमापादयन्ननैकान्तिकादावेव पर्यवस्यति, इति । ( वै० उ० ३ । १ । १७ । पृ० १६०–१६१ )

---

* अत्रायं भावः—सव्यभिचारत्वादयो ये दोषाः, तद्व्याप्या अपि त एव भवन्ति । यथा हि—सव्यभिचारत्वव्याप्यं सव्यभिचारत्वमेव, विरुद्धत्वव्याप्यं विरुद्धत्वमेव, इत्यादूह्यम् । परं तु—बाधव्याप्यो भिन्न एव, स च सत्प्रतिपक्षो भवति । सत्प्रतिपक्षव्याप्यस्तु न सत्प्रतिपक्षः; तस्यानुमितिविरोधित्वाभावेन हेत्वाभाससामान्यलक्षणानाक्रान्तत्वात्, इति ।

† अत्रेदमाकूतम्—पक्षस्य साध्यशून्यत्वे हि बाधत्वमाहुः । तच्च ( साध्यशून्यत्वम् ) अत्र नातिरिच्यते,—यत्र हि अश्वपिण्डं पक्षयित्वा 'अयं गौर्विषाणित्वात्' इति साध्यते, तत्र साध्यस्य गोत्वस्य पक्षे वृत्तिर्नास्तीति बाधत्वम् ( वाच्यम् ); तच्च कणादमतेऽनैकान्तिकत्वमेव । अत्रासिद्धिरप्यस्ति; पक्षेऽश्वपिण्डे विषाणित्वविरहात् । अत एवाहुः—"बाधाया ( धोऽय- )-मपक्षधर्मो हेतुरनैकान्तिको वा" इति । ( त० व० ३ । २ । श्लो० ५२–५३ । पृ० ८३ ) ( वै० उ० ३ । १ । १७ । पृ० १६१ )

‡ अत्रायमाशयः—"यत्र 'वायुर्न प्रत्यक्षः नीरूपबहिर्द्रव्यत्वाद्गगनवत्' इति साधिते 'वायुः प्रत्यक्षः, प्रत्यक्षस्पर्शाश्रयत्वात् घटवत्' इति प्रत्यवतिष्ठते, तत्र हि सत्प्रतिपक्ष इत्युच्यते ( नैयायिकैः ) । न चात्र द्वयोर्यथार्थत्वं संभवति । न ह्येकमेव वस्तु प्रत्यक्षमप्रत्यक्षं च भवितुमर्हति, इति सुतरामेवान्यतरस्य भ्रान्तत्वमुपेयम् । तथा च,—अस्यापि व्याप्त्यादिसंशयाधायकतयाऽनैकान्तिकादावेवान्तर्भावः," इति । ( त० व० पृ० ८५ )

कत्वम् ) चेति । B केषांचिन्मते,—'अनध्यवसितत्व'नामा चतुर्थोऽपि हेत्वाभासः, इति । ( प्रशस्त० ) ( वै० उ० ) ( मु० )

[ ग ] वेदान्तिनस्त्वाहुः—हेत्वाभासः ( हेतुदोषः ) 'उपपत्तिदोषः' इत्युच्यते । उपपत्तिदोषो द्विविधः,—( १ ) विरोधः, ( २ ) असंगतिश्चेति । तत्र—विरोधस्त्रिविधः,—A प्रतिज्ञाविरोधः, B हेतुविरोधः, C दृष्टान्तविरोधश्च । तत्र—A प्रतिज्ञाविरोधो द्विविधः,—प्रमाणविरोधः, स्ववचनविरोधश्च । तत्र—प्रमाणविरोधोऽपि द्विविधः,—प्रबलप्रमाणविरोधः, समबलप्रमाणविरोधश्च । तत्र—प्रबलप्रमाणविरोधस्योदाहरणं तु,—'प्रपञ्चो मिथ्या, दृश्यत्वात्, यद्दृश्यं तन्मिथ्या, यथा शुक्तिरजतम्' इति । समबलप्रमाणविरोधस्योदाहरणं तु,—'विमतं मिथ्या, दृश्यत्वात्, शुक्तिरजतवत्,' 'विमतं सत्यम्, प्रामाणिकत्वात्, आत्मवत्' इति ।

स्ववचनविरोधोऽपि द्विविधः,—अपसिद्धान्तः, जातिश्चेति । तत्र—पूर्वाचार्यैर्यत् प्रामाणिकतयाऽभ्युपगतं तद्विरुद्धाङ्गीकारोऽपसिद्धान्तः । यथा—निरीश्वरसांख्यमते ईश्वराङ्गीकारः । स्ववचन एव स्वव्याहतिर्जातिः । यथा—'मे माता वन्ध्या' इत्यादि ।

B हेतुविरोधोऽपि द्विविधः,—स्वरूपासिद्धिः, अव्याप्तिश्चेति । तत्र—स्वरूपासिद्धेरुदाहरणं तु,—'शब्दो नित्यश्चाक्षुषत्वात्' इति । अव्याप्तिस्त्रिविधः,—( क ) लिङ्गस्य साध्येन तदभावेन च संबन्धः, ( ख ) साध्यसंबन्धाभावे सति तदभावेनैव संबन्धः, ( ग ) उभयसंबन्धाभावश्चेति । तत्र

---

१ अयं जाति-निग्रहस्थान-हेत्वाभासेभ्यः संगृहीतः । ( प्र० च० )

२ अत्र—( १ ) 'सन् घटः' इत्यादिप्रत्यक्षेण; 'विमतं सत्यम्, अर्थक्रियाकारित्वात्, संप्रतिपन्नवत्' इत्याद्यनुमानेन; 'विश्वं सत्यम्' इत्यागमेन च जगतः सत्यत्वावधारणात् प्रबलप्रमाणविरोधो द्रष्टव्यः । ( प्र० च० पृ० २९ ) । ( २ ) अयं हेतुर्नैयायिकैः 'बाधितः' इत्युच्यते ।

३ (१) अत्रानुमानद्वये व्याप्तिपक्षधर्मतयोः साम्यात् समबलप्रमाणविरोधो ज्ञातव्यः । (प्र० च० पृ० २९ ) । ( २ ) अयं च हेतुर्नैयायिकैः 'सत्प्रतिपक्षितः' इत्युच्यते ।

४ अयं भावः—पूर्वाचार्यवचनस्यापि स्वयमङ्गीकृतत्वेन स्ववचनत्वादपसिद्धान्तः स्ववचनविरोधो भवति, इति । ( प्र० च० पृ० २९ )

५ अत्र—चाक्षुषत्वं शब्दे नास्ति; तस्य श्रावणत्वात्, इति ज्ञेयम् । ( प्र० च० पृ० २९ )

आद्या ( क ) यथा—'शब्दो नित्यः प्रमेयत्वात्'[1] इति । द्वितीया ( ख ) यथा—'शब्दो नित्यः कृतकत्वात्'[2] इति । तृतीया ( ग ) यथा—'सर्वमनित्यं सत्त्वात्'[3] इति ।

C दृष्टान्तविरोधोऽपि द्विविधः,—साध्यवैकल्यम्[4], साधनवैकल्यं चेति । तत्राद्यो यथा—'मनोऽनित्यम्, मूर्तत्वात्, परमाणुवत्' इति । द्वितीयो यथा—'मनोऽनित्यम्, मूर्तत्वात्, कर्मवत्' इति ।

( २ ) आकाङ्क्षाविरहोऽसंगतिः । असंगतेरुदाहरणं तु—ईश्वरवादिनं प्रति, 'क्षित्यादिकं सकर्तृकम्, कार्यत्वात्[5], घटवत्' इति ।

एवम्—उदाहरणाभासा अपि ( दोषाः ) उदाहरणलक्षणरहिता उदाहरणवदवभासमानाः । ते चानेकप्रकाराः,—तत्र साधर्म्योदाहरणे तावत्—( १ ) साध्यवैकल्यम् । यथा—'मनोऽनित्यम्, मूर्तत्वात्'[6] इति । ( २ ) साधनवैकल्यं यथा—'मनोऽनित्यम्, मूर्तत्वात्, कर्मवत्'[7] इति । ( ३ ) उभयवैकल्यं यथा—'मनोऽनित्यम्, मूर्तत्वात्, आकाशवत्' इति ।

वैधर्म्योदाहरणे—( १ ) साध्याभाववैकल्यम् । यथा—'मनोऽनित्यम्, मूर्तत्वात्' इत्यत्र,—'यदनित्यं न भवति, तन्मूर्तं न भवति, यथा कर्म' इति । ( २ ) साधनाभाववैकल्यं यथा—'मनोऽनित्यं मूर्तत्वात्' इत्यत्र,—'यदनित्यं न भवति तन्मूर्तं न भवति, यथा परमाणुः' इति । ( ३ ) उभयाभाववैकल्यं यथा—'मनोऽनित्यं मूर्तत्वात्' इत्यत्र,—'यदनित्यं न भ-

---

१ अयं हेतुः 'साधारणानैकान्तिकः' इत्युच्यते नैयायिकैः, इति ज्ञेयम् ।

२ अयं हेतुः 'विरुद्धः' इत्युच्यते नैयायिकैः, इति विज्ञेयम् ।

३ अत्र—सर्वस्यापि पक्षत्वेन उभयसंबन्धो नास्ति, इति । ( प्र० च० पृ० ३० ) । अयं हेतुः 'अनुपसंहारी' इति नैयायिकैरुच्यते, इति विज्ञेयम् ।

४ अत्रेदं विज्ञेयम्—'दृष्टान्ते साध्यवैकल्य-साधनवैकल्यादयः, उदाहरणाभासाद्याश्च यथायथं निग्रहस्थानादावन्तर्भवन्ति, इति न हेत्वाभासाधिक्यम्' इति नैयायिकानां सिद्धान्तः, इति । ( दि० १ )

५ अत्र—अनाकाङ्क्षितसाधनप्रयुक्तत्वादसंगतिर्भवति, इति विज्ञेयम् । ( प्र० च० पृ० ३० )

६ अत्र—'यन्मूर्तं तदनित्यम्, यथा परमाणुः' इति साध्यवैकल्यम् । ( प्र० च० पृ० ३४ )

७ अत्र—कर्मणोऽनित्यत्वेऽपि मूर्तत्वाभावात् साधनवैकल्यम्, इति विज्ञेयम् । ( प्र० च० पृ० ३४ )

वति, तन्मूर्तं न भवति, यथा घटः' इति । (प्र० च० पृ० २८–३९) इत्यलं विस्तरेण ।

**हेत्वाभासः**—( दुष्टो हेतुः ) [ क ] हेतुलक्षणाभावादहेतुर्हेतुसामान्याद्धेतुवदाभासमानः । ( वात्स्या० १ । २ । ४ )

---

१ अत्र—[ क ] 'हेतुवदाभासते' इति व्युत्पत्त्या 'हेत्वाभास' पदस्य दुष्टहेतुः, इत्यर्थः । ( ग० २ । हेत्वा० सामा० प्रस्ताव० पृ० २ ) । [ ख ] हेतोराभासः* सदृशः । ( न्या० बिन्दु० टी० परि० ३ । पृ० ६६ )

तल्लक्षणं च [ क ] सव्यभिचाराद्यन्यतमत्वम् । ( न्या० म० ) । [ ख ] † निरुक्तदोषवत्त्वम् ‡, इति ( दीधि० २ । हेत्वा० सामा० पृ० १७८ ) ( नील० २ । हेत्वा० पृ० २४ )

हेत्वाभासप्रयोजनं तु—[ १ ] द्वयं बुद्धेश्यम्,—परानुमितिप्रतिबन्धः, स्थापनाया असाधकतासाधनत्वं§ च । तत्राद्यं दूषणमात्रज्ञानादेव । द्वितीयं तु, अलिङ्गत्वज्ञापनात्, 'प्रतिबन्धकत्ववदनेनापि रूपेण दूषकत्वसंभवः' इत्यभिप्रायेण वाऽसाधकतासाधनत्वम्, इति । (चि० २ । हेत्वा० पृ० १११) । [ २ ] A विपरीतकोटिसाधकस्य (हेतोः) हेत्वाभासत्वज्ञानेन स्वस्य तत्त्वनिर्णयः ( प्रमितकोटिनिश्चयः, साध्यवत्ताज्ञाने प्रमात्वनिश्चयो वा ) भवति । B स्वस्य, परोक्तहेतौ हेत्वाभासत्वज्ञाने सति तत्र दोषोद्भावनेन, व्याप्त्यादिविशिष्टहेतोः संन्यायप्रयोगकरणेन च विजयोऽपि भवति, इति । (ग० २ । हेत्वा-सामा-प्रस्ताव० पृ० १–२)

अत्रेदं बोध्यम्—हेत्वाभासो निग्रहस्थानमेव । तथा च सूत्रम्–"हेत्वाभासाश्च¶ यथोक्ताः" इति (गौ० ५।२।२५) । तदर्थश्च–[ क ] हेत्वाभासाश्च निग्रहस्थानानि......हेत्वाभासलक्षणेनैव

---

* अत्र श्रुतमस्मद्गुरुमुखात्,—"अत्र 'सादृश्यं च पञ्चम्यन्तपदप्रतिपाद्यत्वेन,' इति साताराग्रामस्थाम्निपथगाकर्तारो 'गजेन्द्रगडकर' इत्युपाह्वा राघवेन्द्राचार्याः प्राहुः," इति ।

† अत्र,—निरुक्तदोषस्तु, 'हेत्वाभास (हेतुदोष)' शब्दव्याख्याने (पृ० ९९० । ९९२) द्रष्टव्यः ।

‡ अत्रेदं विज्ञेयम्—हेतौ तादृशदोषविशिष्टत्वं च स्वविषयकज्ञानविषयत्वविशिष्टप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन बोध्यम् । तेन, हेतुषु दोषसंबन्धः (दोषाणां हेतुनिष्ठत्वम्) संगच्छते, इति । ( दीधि० २ । हेत्वा० पृ० १७९ ) ( ग० हे० सामा० )

§ अत्रासाधकत्वं च, स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वम् । ( चि० २ । हेत्वा० पृ० १११ )

¶ अत्र—[ क ] 'च'कारः, 'साध्यविकलत्वादि दृष्टान्तदोषम्, अनुपदर्शितान्वयत्वादि युक्तिदोषम्, आत्माश्रयत्वादि ( न ? कं प्रति ) व्याघातम्' अनुक्तं त्रयमपि समुच्चिनोति । ( सा० सं० पृ० १२० ) । [ ख ] अत्र—'च'कारस्य 'दृष्टान्ते साधनवैकल्यादिसमुच्चायकत्वम्' इति केचिदाहुः । तन्न;—'यथोक्ताः' इत्यस्यानन्वयापत्तेः, इति । ( गौ० वृ० ५ । ६७ )

[ ख ] पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमानः । ( गौ० वृ० १ । ४ )

[ ग ] पक्षधर्मत्वादीनां पञ्चानां रूपाणां मध्ये एकेनापि रूपेण हीनो[2] हेतुः, सोऽपि कतिपयहेतुरूपयोगाद्धेतुवदवभासमानः[3] । ( त० भा० पृ० ४४ ) ( वै० उ० ३ । १ । १७ ) ( त० व० )

[ घ ] यस्य हेतोर्यावन्ति रूपाणि गमकतौपयिकानि, तदन्यतररूपहीनः[4] स हेतुराभासः । ( वै० उ० ३ । १ । १७ । पृ० १९९ )

---

निग्रहस्थानभावः, इति । ( वात्स्या० ५ । २ । २५ ) । [ ख ] हेत्वाभासाः पुनर्यथा येन रूपेण पूर्वं ( गौ० सूत्रे १ । २ । ४–९ ) उक्ताः, तेनैव रूपेण तेषां निग्रहस्थानत्वम्, इति न लक्षणान्तरमपेक्षितम्, इति । ( गौ० वृ० ५ । ६७ ) ( वात्स्या० ५ । २ । २५) (ता० र० परि० ३ । श्लो० १५४) । [ ग ] ते च ( हेत्वाभासाः ) निग्रहस्थानम्, निग्रहस्थानत्वं प्राप्तानां पुनरेषां पृथगुपदेशो वादे देशनीयत्वादिति भाष्यम्* । यस्मात्किलैते वादे देश्यन्ते; अतः पृथगुपदिश्यन्ते ( न्यायसूत्रेण १ । १ । १ ), इति । ( न्या० वा० १ । पृ० २० )

१ पञ्च रूपाणि तु,—पक्षसत्त्वम्, सपक्षसत्त्वम्, विपक्षासत्त्वम्, अबाधितत्वम्, असत्प्रतिपक्षितत्वं चेति । ( गौ० वृ० १ । ४४ ) ( वै० उ० ३ । १ । १७ )

२ तथा चोक्तं तार्किकरक्षायाम्—“हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः । हेत्वाभासाः पञ्चधा ते गोतमेन प्रपञ्चिताः” इति । ( ता० र० श्लो० ८० ) ( वै० उ० ३ । १ । १७ )

३ अत्र न्यायवार्तिकमपि—“अन्यतमलिङ्गधर्मानुविधानेन प्रवर्तमाना अहेतवः सन्तो हेतुवदवभासन्त इति हेत्वाभासाः” इति । ( न्या० वा० १ । पृ० २० )

४ एवं च—गमकतौपयिकान्यतररूपशून्यत्वं हेत्वाभासत्वम्; तेन,—अन्यतररूपशून्यत्वस्य निश्चयवत्, संदेहोऽप्यनुमितिप्रतिबन्धकः, वादिहेतोरसाधकतासाधकः । ‘न च, केवलान्वयि-केवलव्यतिरेकिणोर्हेत्वोरन्यतररूपशून्यतया हेत्वाभासत्वापत्तिः’; केवलान्वयिनि विपक्षासत्त्वस्य, केवलव्यतिरेकिणि सपक्षसत्त्वस्य गमकत्वौपयिकत्वाभावात् । एवं च—आश्रयासिद्ध-स्वरूपासिद्ध-भागासिद्धानां पक्षसत्त्वरूपविरहादाभासत्वम्, व्याप्यत्वासिद्ध-विरुद्ध-साधारणानैकान्तिकानां विपक्षासत्त्वरूपवैकल्यात्, असाधारणानैकान्तिका-नुपसंहारिणोः सपक्षसत्त्ववैकल्यात्, बाधित-सत्प्रतिपक्षितयोरबाधितत्वा-ऽसत्प्रतिपक्षितत्वविरहात् । एवम्—सोपाधित्वा-ऽप्रयोजकत्वयोरपि विपक्षासत्त्वनिश्चयाभावादगमकत्वम् । अनुकूलतर्काभाव-प्रतिकूलतर्कयोरपि विपक्षासत्त्वनिश्चयविरहात् । एवम्—साध्यविकल-साध-

---

* भाष्यं तु—“निग्रहस्थानेभ्यः पृथगुपदिष्टाः ( गौ० १ । १ । १ । त्रयोदशः पदार्थः ) हेत्वाभासा वादे चोदनीया भविष्यन्तीति” । ( वात्स्या० १ । १ । १ । पृ० ६ )

[ ङ ] असाधको हेतुत्वेनाभिमतः। ( सर्व० अक्ष० ) यथा—'ह्रदो वह्निमान् धूमात्' इत्यादौ,—धूमो हेत्वाभासः[1]। यथा वा—'वायुर्गन्धवान्स्नेहात्' इत्यादौ,—स्नेहः[2]; ( दि० २ )। यथा वा—'घटः पटोऽस्ति, कुड्यत्वात्' इत्यादौ,—कुड्यत्वं च हेत्वाभासः। ( स्व० )

गौतमे मते, A स च हेत्वाभासः पञ्चधा[3],—सव्यभिचारः, विरुद्धः, प्रकरणसमः, साध्यसमः, अतीतश्चेति। ( गौ० १ । २ । ४ )। B पर्या-

---

नविकलो-भयविकल-दृष्टान्ताभासानां यदि हेत्वाभासविधया दोषत्वम्, तदा,—सपक्षसत्त्वानिश्चयात्। यदि स्वातन्त्र्येण दृष्टान्ताभासतया, तथापि,—द्वारं हेतोः सपक्षसत्त्वानिश्चय एव। अनुपदर्शितान्वया-ऽनुपदर्शितव्यतिरेकास्तु न्यूना-ऽप्राप्तकाल-निग्रहस्थानपर्यवसन्ना एव। आत्माश्रया-ऽन्योन्याश्रय-चक्रका-ऽनवस्थास्तु व्याप्तिनिश्चयं विघटयन्तः सपक्षसत्त्व-विपक्षासत्त्वा-ऽन्यतररूपविकला एव हेत्वाभासतामापादयन्ति, इति। ( वै० उ० ३ । १ । १७ । पृ० १५९–१६० )

१ अत्र—'वह्न्यभाववद्ध्रदो बाधः, वह्न्यभावव्याप्यवद्ध्रदः सत्प्रतिपक्षः, धूमाभाववद्ध्रदः स्वरूपासिद्धिश्च,' एतद्दोषत्रयवान् धूमो भवति, इति धूमो हेत्वाभासः।

२ हेत्वाभासस्य 'पञ्चविधत्व'कथनमप्येतादृशस्थलाभिप्रायेणैव। तथा चात्र पञ्चानामपि दोषाणां संभवः। तथा हि—( १ ) A गन्धाभाववद्वृत्तिः स्नेहः साधारणानैकान्तिकः। B गन्धव्यापकीभूताभावप्रतियोगी स्नेहोऽसाधारणानैकान्तिकः। ( २ ) गन्धवदवृत्तिः स्नेहो विरुद्धः। ( ३ ) स्नेहाभाववान्वायुरसिद्धिः, तद्वान्स्नेहोऽसिद्धः ( स्वरूपासिद्धः )। ( ४ ) गन्धाभावव्याप्यवायुत्ववान् वायुः सत्प्रतिपक्षः, तद्वान्स्नेहः सत्प्रतिपक्षितः। ( ५ ) गन्धाभाववान्वायुर्बाधः, तद्वान्स्नेहो बाधितश्च, इति। एवम्—'घटः पटोऽस्ति, कुड्यत्वात्' इत्यादावपि,—हेतौ पञ्चदोषवत्त्वमुन्नेयम्, इति। ( स्व० )

३ अत्रेदं बोध्यम्—'एकस्यैव स्नेहस्य 'अनैकान्तिकः, विरुद्धः' इत्यादिपञ्चत्वव्यवहारः कथम्?' इत्याशङ्कायामुत्तरम्—'उपधेयसंकरेऽप्युपाध्यसंकरः' इति न्यायाद्दोषगतसंख्यामादाय, दुष्टहेतौ पञ्चत्वादिसंख्याव्यवहारः, इति। (दीधि० २ । हेत्वा० पृ० १७८)। तेन,—यत्र 'क्वचिद्धेतावेकविध एव दोषः, क्वचिद्द्वौ, क्वचित्तु त्रयः पञ्चविधा वा' इति संभवेयुः, तत्रापि तत्तद्व्यवहारः संगमनीयः, इति।

४ वृत्तिकारोऽपि "अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः" ( वै० ३ । १ । १५ ) इति सूत्रस्थ-'च' कारस्य बाध-सत्प्रतिपक्ष-समुच्चयार्थकतामुक्त्वा गौतमीयमेव मतमनुधावति। ( वै० उ० ३ । १ । १७ । पृ० १६१ )

यान्तरेण हेत्वाभासः पञ्चधा,—असिद्धः, विरुद्धः, अनैकान्तिकः, प्रकरणसमः, कालात्ययापदिष्टश्चेति। (त० भा०) । C पर्यायान्तरेणापि हेत्वाभासः पञ्चधा,—सव्यभिचारः, विरुद्धः, असिद्धः, सत्प्रतिपक्षितः, बाधितश्चेति। (न्या० म० २। पृ० २०) (त० सं०)। काश्यपमते (कणादमते) तु, A हेत्वाभासस्त्रिधा,—असिद्धः, विरुद्धः, संदिग्धश्चेति। B 'अनध्यवसितो नामातिरिक्तश्चतुर्थो हेत्वाभासः' इति केचिदाहुः। (प्रशस्त०) (त० व० ३। २। श्लो० ५६। पृ० ८४)

---

१ एवं च—अनुकूलतर्काभावादयोऽसिद्धभेदा एव। 'विशेषणासिद्ध-विशेष्यासिद्ध-असमर्थविशेषण-असमर्थविशेष्य-असमर्थोभय-संदिग्धासमर्थविशेषण-संदिग्धासमर्थविशेष्य-संदिग्धासमर्थोभय-इत्यादयः सहस्रधा भेदभिन्नासिद्धप्रभेदाः स्वरूपासिद्धेऽन्तर्भवन्ति। (वै० उ० ३। १। १७। पृ० १५८–१५९) (त० भा०-हेत्वा० पृ० ४५)। 'व्यर्थविशेषणस्तु व्याप्यत्वासिद्धेऽन्तर्भवति' च इति न हेत्वाभासाधिक्यम्, इति विज्ञेयम्।

२ अत्र भाष्यम्—"अनुमेयेन संबद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ विपरीतमतो यत्स्यादेकेन द्वितयेन वा। विरुद्धासिद्धसंदिग्धमलिङ्गं *काश्यपोऽब्रवीत्" इति। (प्रशस्त० २। पृ० ४४)

३ साध्यासाधकः पक्ष एव † वर्तमानो हेतुः 'अनध्यवसितः' इत्युच्यते। सोऽपि कणादमते संदिग्धादावन्तर्भवति, इति न त्रैविध्यविभागविरोधः, इति। (त० व० ३। २। श्लो० ५६। पृ० ८४)

४ [क] अत्र भाष्यम्—"एतेन, अप्रसिद्ध-विरुद्ध-संदिग्धा-ऽनध्यवसितवचनानामनपदेशत्वमुक्तं भवति" इति। (प्रशस्त० २। पृ० ४६)। [ख] लीलावतीकारा अप्याहुः—"हेत्वाभासाश्चत्वारः,—विरुद्धासिद्धसव्यभिचारानध्यवसिताः। 'बाध-प्रतिरोधावपि स्तः' इति चेन्न; तयोः ‡ व्याप्तिपक्षधर्मतापहारेणैवानुमानदूषकत्वात्, सिद्धसाधनवत्" इति। (न्या० ली० पृ० ४३)

---

* तथा हि काश्यपसूत्रम्—"अप्रसिद्धोऽनपदेशोऽसन् संदिग्धश्चानपदेशः" इति। (वै० ३। १। १५)

† तथा च भाष्यम्—"यश्चानुमेये विद्यमानः, तत्समानासमानजातीययोरसन्नेव, सोऽन्यतरासिद्धोऽनध्यवसायहेतुत्वादनध्यवसितः। यथा—'सत् कार्यमुत्पत्तेः' इति। अयमसिद्धो 'अनपदेशः' (वै० ३। १। १५) इति वचनादविरुद्धः" इति। (प्रशस्त० २। पृ० ४७)

‡ अत्रेदं चिन्त्यम्—'उत्पत्तिकालीनो घटो गन्धवान्पृथिवीत्वात्' इत्यादौ; 'मूलावच्छिन्नो वृक्षः कपिसंयोगी' इत्यादौ चासंकीर्णदोषस्थले बाधस्यैवातिरिक्तदोषत्वमवश्यमङ्गीकर्तव्यम्, इति। (भा० प० श्लो० ७९)। (चि० २)। मञ्जरीप्रकाशकारस्तु,—'आद्यक्षणावच्छिन्नो घटो गन्धवान् स्नेहात्' इत्यादौ,—व्यभिचारादिदोषपञ्चकमपि संभवति' इत्याह। (म० प्र० २। पृ० २५)

होमः[1]—याग एव विशिष्टदेशप्रक्षेपोपहितो 'होम' इत्युच्यते । ( का० व्या० कार० ४ । पृ० ९ ) । यथा—नित्यं गृहस्थकर्तव्येषु पञ्चसु यज्ञेषु मध्ये देवयज्ञः । यथा वा—आपस्तम्बीयैः क्रियमाणं, श्राद्धीयविप्रपाणौ श्राद्धीयान्नभागस्य मन्त्रेण दानम् ( पाणिहोमः ) । (श्रा०त०)

ह्नवः—( चौर्यम् ) बोधविषयमितरादर्शनयोग्यदेशेस्थापनम् । यथा—'गोपी कृष्णायात्मानं ह्नुते' इत्यत्र,—ह्नौतेरर्थः[2] । (ल० म० कार० ४ । पृ० १०३ )

ह्यः—( अव्ययम् ) अव्यवहितातीतदिवसः । ( वै० सा० द० ) । यथा—'ह्यस्तनेऽहमागतः' इत्यादौ ।

ह्रदः—१ अगाधजलाशयः[4] । ( अमरः १।१०।२९ ) । यथा—"ह्रदो वह्निमान् धूमात्' इत्यत्र,—वह्न्यभाववद्ध्रदो बाधः" इत्यादौ ग्रन्थे,—'ह्रद'शब्दस्यार्थः । ( स्व० ) । २ किरणः । ( रामाश्रमः )

ह्रस्वत्वम्—१ ( गुणः ) 'इदं ह्रस्वम्' इति व्यवहारसिद्धः परिमाणविशेषः । ( वै० वि० ७ । १ । १७ ) । २ 'एकमात्राकालोच्चार्यात्वम्' इति शाब्दिका आहुः । ३ 'भूमिजम्बूवृक्षस्य धर्मविशेषो ह्रस्वत्वम्' इति वनस्पतिशास्त्रज्ञा आहुः ।

ह्लादः—[ १ ] आनन्दविशेषः । यथा—"यथा प्रह्लादनाच्चन्द्रः" ( रघु० ४ । १२ ) इत्यादौ,—'ह्लादन'शब्दार्थः । [ २ ] आलंकारिकास्तु,—चमत्कृतिः । यथा—'चन्द्र इव मुखं लोकान्ह्लादयति' इत्यादौ,—'ह्लाद्' धात्वर्थश्चमत्कृतिः, इत्याहुः, इति संक्षेपः, इति शम् । ( स्व० )

---

१ अत्र—होमत्वं च 'मानसप्रत्यक्षगम्यो जातिविशेषः' इत्यन्ये आहुः । ( दि० गु० धर्मनि० पृ० २३४ )

२ अत्र—सपत्नीभियाऽस्मादेस्तथा स्थापनं बोध्यम् ।

३ एवं च—गोपीकर्तृका कृष्णसंप्रदानिका ( अर्थात् ) कृष्णवृत्तिबोधविषयात्मकर्मकतथावस्थानानुकूला क्रिया' इति बोधः ( वैयाकरणमते ) । ( ल० म० कार० ४ । पृ० १०३ )

४ जलगुणाश्च,—"ह्रदवारि वह्निजननं मधुरं कफवातहारि पथ्यं च" इति । ( वाचस्पत्ये, राजनि० )

इति श्रीमत्सकलसद्विद्वद्वृन्दसंसेव्यवैष्णवमतावतंसश्रीमध्वसिद्धान्तानुयायिनः,क-
र्णाटदेशीयमळकीग्रामनिवासि-श्रीयुतरामभट्टात्मजस्य, श्रीयुतसरस्वती-
तनूद्भवस्य, श्रीयुतभिकुशास्त्रिभ्योऽधीतन्यायशास्त्रस्य, मुंबई-
स्थैल्फिन्स्टन्-पाठशालायां न्यायाद्यनेकदर्शनाध्याप-
कस्य, आङ्गुभूपालप्रदत्त-'महामहोपाध्याय'
पदाङ्कितस्य च, **भट्ट-भीमा-**
**चार्यस्य कृतौ** न्यायकोशः
समाप्तः ।

**न्यायकोशस्य** { शब्दसंख्या १८९४ ; ग्रन्थसंख्या १९८०० } **वरीवर्ति**

अब्धीन्द्विभेन्दुमानेन ( १८१४ ) मिते शाके च नन्दने ।
वत्सरे भट्टभीमेन न्यायकोशः समापितः ॥ १ ॥ अनेन पुष्पकोशेन
कालान्तरविकासिना । समर्पितेनाञ्जलिना प्रीयतां पुरुषोत्तमः ॥२॥

खिस्त्यब्दाः १८९२ ॥

**॥ श्रीशः शंकरो भवतु ॥**

# अथ न्यायकोशपरिशिष्टम् ।

## अ.

**अकर्मकः**—( धातुः ) व्यापाराधिकरणमात्रवृत्तिफलवाचकः । ( वाच० )

**अजहत्स्वार्था**—( लक्षणा ) [ क ] स्वार्थापरित्यागेन परार्थलक्षणा । [ ख ] यत्र स्वार्थस्य विशेष्यतया क्रियान्वये प्रवेशः, सा । ( त० प्र० ख० ४ । पृ० ४४ ) यथा—'छत्रिणो यान्ति' इत्यादौ,—अजहत्स्वार्था लक्षणा ।

**अतद्गुणसंविज्ञानः**—( बहुव्रीहिः ) यत्र स्वार्थस्योपलक्षणतया विधेयान्वयः, सः । यथा—चित्रगुरित्यादौ । (त० प्र० ख० ४ । पृ० ४९ )

---

१ तेन, गम्यादेर्व्यापाराधिकरण-(कर्तृ)वृत्तिफलवाचित्वेऽपि नाकर्मकत्वम् । ( वाच० )

२ अत्रोक्तं हरिणा—"फलव्यापारयोरेकनिष्ठतायामकर्मकः" इति । एकनिष्ठतायां एकमात्रवृत्तितायामित्यर्थः । ( वाच० )

३ अत्राहुः—'छत्रपदे एव एकसार्थे लक्षणा; मतुबर्थश्च संबन्धी । तथा च—'एकसार्थवन्तो ( छत्रिणोऽछत्रिणश्च ) यान्ति' इति वाक्यार्थबोधः' इति न्यायमतम् । (त० प्र० ४ । पृ० ३९) ( दि० ४ । पृ० १८० )

अथ वा—'छत्रि' वाक्यलक्षणाभिप्रायेण ( मीमांसकमताभिप्रायेण ) चाजहत्स्वार्थत्वोक्तिः* । केचित्तु,—एकसार्थवत्त्वेन छत्रस्याप्यन्वयात्तथात्वम् । अत एव—शक्य-साधारण्यमप्युपपद्यते, इत्याहुः । अपरे तु,—प्रकृतावेव, एकसार्थवति लक्षणा; प्रत्ययश्च तात्पर्यग्राहकः । अथ वा—संबन्धिसामान्यशक्तमतुप्प्रत्यये एकसार्थसंबन्धित्वेन लक्षणा; छत्रपदं तात्पर्यग्राहकम्, इत्याहुः । ( त० प्र० ख० ४ । पृ० ३९ )

४ अत्र 'आदि' पदेन उदाहरणान्तरमपि बोध्यम्—'मञ्चाः क्रोशन्ति, यष्टीः प्रवेशय' इत्यादौ,—'मञ्च'पदस्य मञ्चस्थपुरुषे, 'यष्टि'पदस्य यष्टिधरे लक्षणाऽजहत्स्वार्थैव, इति । ( त० प्र० ख० ४ । ३९ )

---

* अत्रत्य-'अर्थ' पदस्य प्रतिपाद्यपरत्वाभिप्रायेण । तथा च—मीमांसकमते स्वबोध्यसंबन्धो हि लक्षणा; अस्ति वाक्यस्यापि विशिष्टं बोध्यम् । ( न्या० म० ४ । पृ० १२ ) । तथा हि—'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन 'चित्रगुः' इत्यत्र 'चित्रा गौः' इति वाक्यसत्त्वात्, तस्य च बोध्या ( चित्रा गौः ), तत्संबन्धश्चित्रगोः स्वामिन्यस्ति, इति । ( त० प्र० ख० ४ । पृ० ३९ )

**अतद्व्यावृत्तिः**—तद्भिन्ननिवर्तनम् । यथा—योगाचारबौद्धमते,—नीलत्वादिरूपो धर्मोऽनीलव्यावृत्तिरूपः, इति । ( दि० १ । आत्म० पृ० १०० ) । शिष्टं तु 'अपोह' शब्दव्याख्याने द्रष्टव्यम् ।

**अतिदेशः**—१ स्वविषयमुल्लङ्घ्यान्यविषये उपदेशः । यथा—"कालोपपाते तद्दैवते तद्दैवतं हुत्वा तद्वाऽतिदिश्यानेन जुहुयात्" ( कात्या० श्रौ० २९ । २ । ४ ) इत्यादौ,—'अतिदेश' शब्दार्थः । २ उपदेशः । यथा—"इत्यर्चितः स भगवानतिदिश्यात्मनः पदम्" ( भाग० ४ । ९ । २८ ) इत्यादौ,—'अतिदेश' शब्दार्थः ।

**अतिरिक्तत्वम्**—'व्यतिरेक' शब्दस्य ( १, B ) अर्थवदस्यार्थोऽनुसंधेयः ।

**अधर्मः**—अधर्मोऽप्यात्मगुणः, कर्तुरहितप्रत्यवायहेतुः, अतीन्द्रियः, अन्त्यदुःखसम्यग्ज्ञानविरोधी ।

तस्य तु साधनानि शास्त्रप्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसाऽनृतस्तेयादीनि, विहिताकरणं प्रमादश्च । एतानि दुष्टाभिसंधिं चापेक्ष्यात्ममनसोः संयोगादधर्मोत्पत्तिरिति । अविदुषो रागद्वेषवतः प्रवर्तकाद्धर्मात्प्रकृष्टात्स्वल्पाधर्मसहिताद्ब्रह्मेन्द्रप्रजापतिपितृमानुष्यलोकेष्वाशयानुरूपैरिष्टशरीरे-न्द्रियविषयदुःखादिभिर्योगो भवति । तथा प्रकृष्टादधर्मात्स्वल्पधर्मसहितात्प्रेततिर्यग्योनिस्थानेष्वनिष्टशरीरेन्द्रियदुःखादिभिर्योगो भवति । एवं प्रवृत्तिलक्षणाद्धर्मादधर्मसहिताद्देवमानुषतिर्यङ्नरकेषु पुनः पुनः संसारप्रबन्धो भवति । ज्ञानपूर्वकात्तु कर्मणः कृतादसंकल्पितफलाद्विशुद्धकुले जातस्य दुःखागमो( दुःखवियोगो )-पायजिज्ञासोराचार्यमुपगम्योत्पन्नषट्पदार्थतत्त्वज्ञानस्याज्ञाननिवृत्तौ विरक्तस्य रागद्वेषाभावात्तज्जयोर्धर्माधर्मयोरनुत्पत्तौ संचितयोः ( उपभोगात् ) निरोधे संतोषसुखं शरीरपरिखेदं चोत्पाद्य रागादिनिवृत्तौ निवृत्तिलक्षणः केवलो धर्मः परमार्थ(त्म)दर्शनजं सुखं कृत्वा निवर्तते । तदा निर्बीजस्य ( नित्यस्य ) आत्मनः शरीरादिनिवृत्तौ पुनः शरीराद्यनुत्पत्तौ दग्धेन्धनानलवदुपशमो मोक्षः, इति । ( प्रशस्त० गु० पृ० ३६ ) ( ९९ )

**अधिकरणसिद्धान्तः**—"अनुमेयस्य सिद्ध्याऽर्थ्यो योऽनुषङ्गेण सिद्ध्यति । स स्यादाधारसिद्धान्तो जगत्कर्ता यथेश्वरः" । ( ता० र० श्लो० ६१ )

**अनध्यवसायः**—१ [ १ ] अविद्याविशेषः । अनध्यवसायोऽपि प्रत्यक्षानुमानविषये ( एव ) संजायते । तत्र प्रत्यक्षविषये तावत्—प्रसिद्धार्थेष्वप्रसिद्धार्थेषु वा व्यासङ्गादनर्थित्वाद्वा 'किमिदम्' इत्यालोचनामात्रमनध्यवसायः । यथा—वाहीकस्य पनसादिष्वनध्यवसायो भवति । ..........अनुमानविषयेऽपि—नारकोरद्वीप-( नारिकेलद्वीप )-वासिनः सास्नामात्रदर्शनात् 'को नु खल्वयं प्राणी स्यात्?' इत्यनध्यवसायो भवति । ( प्रशस्त० २ । पृ० ४८ ) ( ४०–४१ ) । [ २ ] वेदान्तिनस्तु,—'किंसंज्ञकोऽयं वृक्षः' इति संज्ञाविषयकं जिज्ञासामात्रम्, इत्याहुः । ( प्र० प० पृ० ९ ) २ हेतुदोषविशेषः ।

**अनध्यवसितः**—( हेत्वाभासः ) यश्चानुमेये विद्यमानस्तत्समानासमानजातीययोरसंन्नेव सोऽन्यतरत्रासिद्धः, अनध्यवसायहेतुत्वादनध्यवसितः । यथा—सत् कार्यमुत्पत्तेः, इति । ( प्रशस्त० २ । पृ० २९–३० ) ( ४७ )

**अनवस्था**—( तर्कः ) अव्यवस्थितपरंपरारोपाधीनोऽनिष्टप्रसङ्गः । यथा—'यदि घटत्वं घटजन्यत्वव्याप्यं स्यात्, कपालसमवेतत्वव्याप्यं न स्यात्' इति । ( गौ० वृ० १ । ३९ । पृ० ३३ )

**अनित्यः**—उत्पत्तिमान् ध्वंसप्रतियोगी च । यथा—नैयायिकमते शब्दोऽनित्यः । ( त० प्र० ख० ४ । पृ० १२४ )

**अनित्यसमः**—( जातिः ) साधर्म्यादिविवक्षायां सपक्षत्वप्रसञ्जनम् । साधनत्वप्रतिवय(द)न् स ह्यनित्यसमोदयः ॥ (ता० र० प० २ । श्लो० १२४ )

**अनुत्पत्तिसमः**—अनुत्पन्ने साधनांशे हेतुवृत्तेरभावतः । भागासिद्धिप्रसङ्गः स्यादनुत्पत्तिसमो मतः ॥ ( ता० र० २ । श्लो० ११९ )

---

१ अयम्, 'अप्रसिद्धोऽनपदेशः' ( वै० सू० ३ । १ । १५ ) इति वचनादेव ( च ) सिद्धः । ( प्रशस्त० २ । पृ० ३० )

२ तथा च—अनध्यवसितत्वं च पक्षमात्रवृत्तित्वम् । यथा—'पर्वतो वह्निमान् पर्वतत्वात्' इत्यादौ,—पर्वतत्वहेतावनध्यवसितत्वम् ।

**अनुद्भूतत्वम्**—शुक्लत्वादिव्याप्यो धर्मः । ( सि० च० १ । पृ० ४ ) ( मु० १ । पृ० ११९ ) शिष्टं तु 'उद्भूतत्व' शब्दव्याख्याने द्रष्टव्यम् ।

**अनुपलब्धिसमः**—( जातिः ) स्वस्मिन् विषयिधर्माणां तदतद्रूपकल्पनात् । विपर्ययप्रसङ्गः स्यात् जातिश्चानुपलब्धितः ॥ ( ता० र० प० २ । श्लो० १२३ )

**अनुमा**—अनुमितिः । ( मु० २ ) यथा—"अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि" ( भा० प० श्लो० ६८ ) इत्यादौ,—'अनुमा' शब्दस्यार्थः ।

**अनुमानम्**—'अनुमानप्रमाणम्' इत्यस्यार्थस्तु अनुमितिप्रमाऽयोगव्यवच्छिन्नमनुमानम्; तच्च व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानम् ।

अत्रेदमवधेयम्—अनुमानप्रयोगे कर्तव्ये,—'पक्षः, साध्यम्, हेतुः, दृष्टान्तश्च' एतच्चतुष्टयं प्रायशः प्रयोक्तव्यम् । तत्र सद्धेतुस्थले,—व्यापकं साध्यम्, व्याप्यं हि लिङ्गम् ( हेतुः ) भवति ।

प्रकारान्तरेणानुमानं द्विविधम् । तथा चोक्तम्—"दृष्टं सामान्यतो दृष्टमिति चास्य विधाद्वयम् । पूर्वं प्रत्यक्षयोग्यार्थे तदयोग्यार्थमुत्तरम्" इति । ( ता० र० श्लो० २१ ) ( प्रशस्त० २ )

मायावादिनस्तु,—अनुमानं न त्रिविधम्; किं तु—अन्वयिरूपमेकमेव, इत्याहुः । ( वेदान्तप० १ । पृ० ३४ )

**अनुमितिः**—अत्रेदं बोध्यम्—'अन्वयव्यतिरेकव्याप्त्योरन्यतरानिश्चयेनाप्यनुमितिर्जन्यते' इत्यनुभवः; न तु, 'युगपदुभयव्याप्त्युपस्थित्यैव जन्यते' इति नियमः । ( चि० २ )

**अनुमित्सा**—'सिषाधयिषा' शब्दवदस्यार्थोऽनुसंधेयः ।

**अनुमेयः**—१ पक्षः । ( स्व० ) । यथा—"यस्तु सन्ननुमेये तत्समानासमानजातीययोः साधारणः स सन्नेव संदेहजनकत्वात्संदिग्धः ( सव्यभिचारः )" ( प्रशस्त० २ । पृ० ४७ ) इत्यादौ,—'अनुमेय' शब्दस्यार्थः । २ साध्यम् । यथा—'पर्वतो वह्निमान् धूमात्' इत्यत्र,—वह्निरनुमेयः । ( स्व० )

**अनुवादः**—यथा—"यन्न दुःखेन संभिन्नम्....तत्सुखं स्वःपदास्पदम्" इत्यादिवाक्यम् । यथा वा—'परिणतिसुरसमाम्रफलम्', 'परिणतिविरसं पनसफलम्' इत्यादिवाक्यं चानुवादः; प्रत्यक्षप्रमाणादिना तत्तदर्थनिर्णयात् । ( त० प्र० ख० ४ । पृ० १२ )

**अनुसंधानम्**—'उपनय'शब्दवदस्यार्थोऽनुसंधेयः । ( प्रशस्त० २ । पृ० २८ )

**अन्तर्धानम्**—[ ख ] स्वविषयकप्रत्यक्षविरोधिव्यापारः । यथा—'उपाध्यायादन्तर्धत्ते शिष्यः' इत्यादौ,—धात्वर्थः ।

**अन्यथासिद्धः**—यस्यानुकूलतर्काभावः, सोऽन्यथासिद्धः । ( ता० र० श्लो० ८८ ) यथा—घटं प्रति रासभोऽन्यथासिद्धः ।

**अन्वयबोधः**—'शाब्दबोध' शब्दवदस्यार्थोऽनुसंधेयः ।

---

१ अत्र,—पञ्चम्या वृत्तित्वमर्थः; तस्य धात्वर्थतावच्छेदके प्रत्यक्षेऽन्वयः । आख्यातस्य कृतिरर्थः । तथा च—'उपाध्यायसंबन्धिस्वविषयकप्रत्यक्षविरोधिव्यापारानुकूलकृतिमान् शिष्यः' इति वाक्यार्थः । ( का० व्या० पृ० १०—११ )

२ अत्रेयं व्युत्पत्तिः,—'अव्यय-निपाता-तिरिक्तनामार्थयोः* क्रिया-प्रातिपदिकार्थयोश्च साक्षात् भेदेनान्वयबोधो†ऽव्युत्पन्नः' इति । यथा—नैयायिकमते, 'राजपुरुषः' इत्यादौ,—राजपदार्थस्य पुरुषपदार्थे स्वस्वामिभाव( स्वत्व- )-संबन्धेनान्वयो वाच्यः; तथाविधान्वयस्य पूर्वोक्तव्युत्पत्तिविरुद्धत्वेन तं परित्यज्य, राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्य तादृशराजपदार्थस्याभेदेन पुरुषपदार्थेऽन्वयः स्वीकृतः । वैयाकरणमते तु, 'राजपुरुषः' इत्यादौ,—लुप्तषष्ठ्यादिविभक्त्या स्मृतया प्रतिपाद्येनैव स्वस्वामिभावसंबन्धेन ( न तु साक्षात् ) राजपदार्थस्य पुरुषादावन्वयः स्वीकृतः, इति । ( मु० ४ । पृ० १८२ )

---

* अत्रत्यपदप्रयोजनमुच्यते—'घटो न पटः' इत्यादौ,—घट-पटाभ्यां नञः साक्षादेवान्वयात् 'निपातातिरिक्त' इति पदं दत्तम् । 'चन्द्र इव मुखम्' इत्यादौ,—इवार्थसादृश्ये चन्द्रस्य प्रतियोगितया-( भेदेन )ऽन्वयात् 'अव्ययातिरिक्त' इति च पदं दत्तम् । 'नीलो घटः' इत्यादौ,—नामार्थयोः, 'स्तोकं पचति' इत्यादौ तु क्रिया-प्रातिपदिकार्थयोश्चाभेदेनान्वयात् 'भेदेन' इत्युक्तम् । 'भूतले घटः' इत्यादौ,—आधेयतासंसर्गेणापि घट-भूतलयोरन्वयात् 'साक्षत्' इति पदम् । 'प्रत्ययार्थमद्वारीकृत्य' इति 'साक्षात्' इत्यस्यार्थः । ( मु० ४ । पृ० १८१ ) ( दि० ) । 'भेदेन' इत्यस्य तु 'तादात्म्यातिरिक्तेन' इत्यर्थो बोध्यः ।

† एतस्या व्युत्पत्तेरावश्यकत्वमाह—'राजा पुरुषः' इत्यादावपि स्वस्वरूपभेदसंबन्धेन राजपदार्थ-

**अन्वाचयः**—( द्वन्द्वः ) [ क ] क्रियाभेदे त्वन्वाचयः । यथा—'एधानाहर्तुं वनं व्रज, शाकमप्यानेष्यसि' इति ।

[ ख ] प्रधानगुणभावेन यत्र क्रियान्वयतात्पर्यम्, सोऽन्वाचयः । ( त० प्र० ख० ४ । पृ० ९२ )

**अन्वीक्षा**—अत्र व्युत्पत्तिः—A 'प्रत्यक्षागमाभ्यामीक्षितस्य, अनु ईक्षणमन्वीक्षा' इति । ( वात्स्या० १ । १ । १ ) । B 'श्रवणात्, अनु ( पश्चात् ), ईक्षा, अन्वीक्षा' इति; उन्नयनम् । ( गौ० वृ० १।१।१ )

**अपक्षेपणम्**—तद्विपर्ययेण ( उत्क्षेपणविपर्ययेण ) संयोग-विभाग-कारणं कर्म । ( प्रशस्त० पृ० ३७ )

**अपरत्वम्**—व्याप्यत्वम् । यथा—"सामान्यं द्विविधं प्रोक्तं परं चापरमेव च" ( भा० प० श्लो० ८ ) इत्यादौ,—'अपरत्व' शब्दस्यार्थः ।

**अपरत्वम्**—( गुणः ) अत्र नव्या आहुः,—अल्पतरसूर्यपरिस्पन्दान्तरितजन्यत्वरूपकानिष्ठत्व-अल्पसंयोगान्तरितत्वरूपसंनिकृष्टत्वाभ्यां 'कालिक-दैशिकापरत्व' व्यवहारोपपत्तेर्नापरत्वस्य गुणान्तरत्वम्, इति । ( दि० गु० पृ० २०९ )

**अपूर्वम्**—अत्रेदं बोध्यम्—'परमापूर्वं वाच्यम्, कलिकापूर्वाणि तु कल्प्यानि' इति मीमांसकसिद्धान्तः, इति । ( त० प्र० ख० ४ । पृ० ११४ )

**अप्राप्तिसमः**—"अप्राप्य साधयेत्साध्यं हेतुं सर्वत्र साधयेत् । अप्राप्तेरविशिष्टत्वादित्यप्राप्तिसमे स्थितिः" । ( ता० र० परि० २ । श्लो० ११२ )

---

स्य पुरुषादावन्वयमादाय 'राजसंबन्धी पुरुषः' इति बोधवारणाय; कर्मतानिरूपकत्वसंबन्धेनापि ( भेदसंबन्धेन ) तण्डुलादिपदार्थस्य पचनक्रियायामन्वयमादाय 'तण्डुलकर्मकः पाकः' इत्याकारकबोधमादाय च 'तण्डुलः पचति' इति प्रयोगवारणाय चेयं व्युत्पत्तिरवश्यं स्वीकार्या, इति । ( मु० १ । ४ । पृ० १८२ ) ( ग० अवय० हेतु० )

अत्रेदमवधेयम्—'पचिक्रियायां तण्डुलादिकर्मकत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति, द्वितीयान्ततण्डुलपदसमभिव्याहृत-'पचति'पदसमभिव्याहाररूपाकाङ्क्षाज्ञानं कारणम्' इत्यावश्यककार्यकारणभावेनैव 'तण्डुलः पचति' इत्यादिप्रयोगवारणोपपत्त्याबलमेतादृश्या व्युत्पत्त्या, इति । ( ग० अवय० हेतुम० ) ( ग० व्यु० कार० २ )

[1] **अभावः**—[ क ] प्रतियोगिज्ञानाधीनोऽभावः ।

[ ख ] माध्वास्तु,—प्रथमप्रतीतौ यः 'नास्ति' इति प्रमाविषयः, सोऽभावः, इत्याहुः । ( प्र० च० परि० पृ० ४९ )

**अभिघातः**—स्थिरस्य वेगवद्द्रव्यसंयोगविशेषः ।

**अभिचारः**—वैरिवधाद्युत्कटकामना । (त० प्र० ख० ४ । पृ० १०)

**अभिनयः**—अभिलापकशब्दोच्चारणम् । यथा—"'यत्र धूमस्तत्र वह्निः' इति व्याप्तेरभिनयः" इत्यादौ ग्रन्थे,—'अभिनय' शब्दस्यार्थः । ( त० दी० २ । पृ० २० ) । यथा वा—"'पर्वतो वह्निमान्' इत्यनुमितेरभिनयः" इत्यादौ ग्रन्थे,—'अभिनय' शब्दस्यार्थः । ( सि० च० २ । पृ० २३)

**अभिलाषः**—( गुणः ) अभ्यवहारेच्छा ( भोजनेच्छा ) । (प्रशस्त० २ । पृ० ३३ )

**अभिविधिः**—अभिव्याप्तिः । यथा—"कार्तिकमारभ्य चैत्रं यावच्छीतं भवति," "काशीतः पाटलिपुत्रं यावद्वृष्टो देवः" इत्यादौ,—'यावत्' शब्दार्थोऽभिविधिस्तत्पर्यन्ताभिव्याप्तिः ।

**अर्थः**—विषयः । ( वात्स्या० १ । १ । १४ ) यथा—"गन्धरूपरसस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः" । ( गौ० १ । १ । १४ ) इत्यादौ,—'अर्थ' शब्दार्थो विषयः ।

**अर्थापत्तिः**—पुनरनुसंधीयमानशब्दासहकृतमनुपपत्तिज्ञानम् । ( ग० नियोज्यान्वयग्रन्थे )

---

[1] अभावपदार्थस्योपयोगमाह न्यायलीलावतीकारः—'अभावो वक्तव्यो निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत्' इति; कारणाभावे कार्याभावस्य सर्वमतसिद्धत्वादुपयोगित्वसिद्धिः । ( न्या० ली० पृ० १–२ )

अत्र,—कार्तिकपूर्वकालोत्तर-चैत्रोत्तरकालपूर्व-कालव्यापकत्वं चैत्रोत्तरकालावृत्तित्वसहितं शीतभवने यावच्छब्देन प्रत्याय्यते । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

अत्र,—काशीपश्चिमदेशपूर्व-पाटलिपुत्रपूर्वदेशपश्चिम-देशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावच्छब्देन प्रत्याय्यते । विशेषः पूर्ववत् ('मर्यादा' शब्दव्याख्यानोक्तरीत्या ) द्रष्टव्यः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

तथा चोक्तम्—"अर्थाः स्युरिन्द्रियग्राह्याः" इति । ( ता० र० श्लो० २९ )

**अर्थापत्तिसमः**—(जातिः) "व्याप्तिं विना वादिवाक्यादर्थाक्षेपाभिमानतः । विपरीतसमारोपमर्थापत्तिसमं विदुः" ( ता० र० २ । श्लो० १२० )

**अवधारणत्वम्**—एकाकारावगाहिज्ञानत्वम्, इति वेदान्तिन आहुः । ( प्र० प० टी० वेदेश० पृ० ६ )

**अवयवः**—( न्यायावयवः ) परार्थानुमानवाक्यैकदेशः । तदर्थस्तु,—पूर्वस्मृत्यपेक्षोऽन्त्यपदप्रत्ययः, स्मृत्यनुग्रहेण प्रतिसंधीयमानो विशेषप्रतिहेतुर्वाक्यम्, तस्य भागा एकदेशाः, इति । ( न्या० बो० )

**अवस्था**—सांख्य-मायावादिनां मते,–( १ ) जाग्रन्नामावस्था, इन्द्रियद्वारा बुद्धेर्विषयाकारः परिणामः । ( २ ) स्वप्नावस्था च, संस्कारमात्रजन्यो बुद्धेर्विषयाकारः परिणामः । ( ३ ) सुषुप्त्यवस्था तु द्विविधा,—अर्धलय-समप्रलय-भेदात् । तत्रार्धलये च,–स्वगतसुखदुःखमोहाकारैव बुद्धिवृत्तिर्भवति, ( न तु विषयाकारा वृत्तिर्भवति । समप्रलये तु,—बुद्धिवृत्तिसामान्याभावरूपा ( मरणादाविव ) भवति; पुरुषस्तदा तत्साक्षी न भवति, इति विज्ञेयम् ।

**अविद्या**—( बुद्धिः ) अविद्या च ( वैशेषिकमते ) दूरत्व-पित्तदोषेत्यादीन्द्रियदोष-जन्यो बुद्धिविशेषः ( अयथार्थबुद्धिः ) । ( प्रशस्त० गु० पृ० २३ )

**अविनाभावः**[2]—१ व्याप्तिः । ( स्व० ) यथा–"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमाद्दर्शनान्तरदर्शनात्" ( सर्व० बौद्ध० पृ० ७ ) इत्यादौ ग्रन्थे,–'अविनाभाव'शब्दार्थो व्याप्तिः । २ संबन्धमात्रम् । यथा–"मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे । अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" ( भट्टवार्तिके ) इत्यादौ,–'अविनाभाव' शब्दार्थः । ( काव्यप्र० उ० २ । पृ० २० ) । ३ मीमांसकास्तु,–A

---

१ अत्र,—ब्रह्मसूत्रं प्रमाणत्वेन मन्यन्ते–"मुग्धेऽर्धसंपत्तिः परिशेषात्" इति । ( ब्रह्मसू० ३ । २ । १० )

२ अत्र व्युत्पत्तिः—'अविना ( सत्त्वे ), भावः ( संबन्धः )' इति द्रष्टव्या ।

स्वदेशवृत्तित्वम्। B तादात्म्यं च। यथा—"व्यक्त्यविनाभावात्तु जात्या-व्यक्तिराक्षिप्यते" (काव्यप्र० २। पृ० १७) इत्यादौ,—'अविनाभाव' शब्दार्थः।

**अव्यभिचारः**—(व्याप्तिः) १ नियमः। यथा—"तस्याभावादव्यभिचारः" (वै० ४। १। १०) इत्यादौ ग्रन्थे,—'अव्यभिचार' शब्दस्यार्थः। २ व्यभिचारस्याभावः।

**अव्ययम्**—अत्रायं नियमः,—'नियतप्रयोगा हि केचिदव्ययाः' इति। (न्या० म० ख० ४। पृ० १४)। अत्राधिकं तु 'न' शब्दव्याख्यानावसरे व्यक्तीकृतम्।

**अव्यवधानम्**—१ तद्ध्वंसाधिकरणक्षणध्वंसानधिकरणक्षणध्वंसाधिकरणत्वे सति तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकत्वम्[2]। यथा—क्रमिकपदार्थोपस्थितीनामव्यवधानम्। २ तद्ध्वंसाधिकरणक्षणोत्पत्तिकत्वम्[3]। (त० प्र० ख० ४। पृ० ९३)

**अव्यवहितत्वम्**—तत्पूर्वकालीनध्वंसाप्रतियोगित्वम्। (ग० २। पक्ष० पृ० ३८)। यथा—"अनुमित्यव्यवहितपूर्ववृत्तिसिद्धिभिन्नसिद्ध्यभावः पक्षता" (दीधि०) इत्यत्रानुमित्यव्यवहितपूर्वक्षणे सिद्धावेव वा विशेषणीभूतमव्यवहितत्वम्।

**अव्याप्तिः**—२ हेत्वाभासविशेषः। शिष्टं तु 'हेत्वाभास' शब्दव्याख्याने (पृ० ९९४) द्रष्टव्यम्।

**अव्याप्यवृत्तिगुणत्वम्**—अव्याप्यवृत्तिगुणा द्विविधाः,—दैशिकाव्याप्यवृत्तयः, कालिकाव्याप्यवृत्तयश्चेति। तत्र,—दैशिकाव्याप्यवृत्तयो बुद्ध्याद-

---

१ अत्रायं विवेकः—'अविनाभावो गुरुमते जातेर्व्यक्तिदेशत्वम्; भट्टमते तु तादात्म्यम्' इति। (काव्यम० टी० कमला० पृ० १७)

२ इदं च भेदघटिताव्यवधानम्, इति बोध्यम्। (त० प्र० ख० ४। पृ० ९३)

३ इदं च भेदाभेदसाधारणमव्यवधानम्, इति बोध्यम्। (त० प्र० ख० ४। पृ० ९३)

योऽष्टौ, शब्दः, भावना, संयोगः, विभागश्चेति । कालिकाव्याप्यवृत्तिगुणास्तु रूपादयः, इति विज्ञेयम् ।[1]

**असंगतिः**—१ संगत्यभावः ( संदर्भाभावः ) । २ वेदान्तिनस्तु,—आकाङ्क्षाविरहः ( हेत्वाभासः ), इत्याहुः । ( प्र० च० पृ० ३० )

**असाधारणः**—( जातिः ) नित्यसमविशेषः । स च त्रिविधः,—व्यक्ताङ्गहीनत्वम्, अयुक्ताङ्गाधिकत्वम्, अविषयवृत्तित्वं चेति । ( सर्व० पूर्ण० पृ० ७०—७१ )

**असिद्धः**[2]—( हेत्वाभासः ) असिद्धश्चतुर्विधः,—उभयासिद्धः, अन्यतरासिद्धः, तद्भावासिद्धः, अनुमेयासिद्धश्चेति । तत्र—उभयासिद्धः,—उभयोर्वादिप्रतिवादिनोरसिद्धः ( हेतुः ) । यथा—'नित्यः शब्दः सावयवत्वात्' इति । अन्यतरासिद्धः,—वादिप्रतिवाद्यन्यतरस्यासिद्धो हेतुः । ( स्व० ) यथा—'कार्यत्वादनित्यः शब्दः' इति । तद्भावासिद्धो ( स्वसद्भावासिद्धः ) यथा—धूमाभावेऽग्न्यधिगतौ ( अग्न्यनुमाने ) । अनुमेयासिद्धो यथा—'पार्थिवं तमः कृष्णरूपवत्त्वात्' इति । एवमाश्रयासिद्धिरप्युभयथा ( अन्यतरासिद्धिरुभयासिद्धिश्च ) । ( प्रशस्त० २ । पृ० २९ ) ( ४७ )

**असिद्धिः**—( हेत्वाभासः ) सिद्ध्यभावः । असिद्धिश्चतुर्विधा,—"व्याप्तेः पक्षस्य हेतोश्च तज्ज्ञानस्याप्यभावतः" इति । ( ता० र० श्लो० ८९ )

**अहम्**—स्वोच्चरणकर्तृतावच्छेदकधर्मावच्छिन्नः ।[3]

**आकाङ्क्षा**—अत्रेदं ज्ञेयम्—आकाङ्क्षा च ( शाब्दबोधगोचरेच्छा ) शाब्देनैव विषयसिद्धिद्वारा निवर्त्यते । ( त० प्र० ख० ४ । पृ० २ )[4]

**आकारः**—अतथाभूतस्य तथाभूतेन सामान्यम् । तद्यथा—'स्थाण्वाकारः पु-

---

१ 'अत्रायं विशेषः—'रूपादेर्दैशिकाव्याप्यवृत्तित्वमपि' इति नियमः । (नील० १ । पृ० १२)

२ अत्र—'असिद्धत्वं च लिङ्गत्वेनानिश्चितत्वम्' इत्याहुः ।

३ अत्र—स्वोच्चारणकर्तृतावच्छेदकावच्छिन्नविषयकत्व-स्वतान्यत्व-एतदुभयसंबन्धेन 'अस्मत्' पदप्रकारकबोधविषयकः संकेतो 'अस्मत्' पदस्थलेऽभ्युपेयते ।

४ अत्रायं न्यायः—'शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्यते' इति । अनेन शब्दकल्पनाऽऽवश्यकी, इति विज्ञेयम् । ( त० प्र० ४ । पृ० २ )

मान्' इत्यपुरुषस्य स्थाणोराकारः पुरुषेण यत् सामान्यम्, सः । ( न्या० वा० १ । १ । १३-१४ । पृ० ७६ )

**आकाशम्**—अत्रेदं विज्ञेयम्—'शब्दलिङ्गाविशेषादेकत्वं सिद्धम् । तदनुविधानात्पृथक्त्वम् । विभुवचनात् ( वै० ७ । १ । २२ ) परममहत्परिमाणम् । शब्दकारणवचनात् ( वै० २ । २ । ३१ ) संयोगविभागौ । अतो गुणवचनादनाश्रितत्वाच्च द्रव्यम् । समानासमानजातीयकारणाभावाच्च नित्यम्' इति । ( प्रशस्त० १ । पृ० २० )

आकाशस्य 'प्रदेशः' इति तु व्यपदेशः, प्रदेशवद्भिर्घटादिभिः संयोगनिबन्धनो भाक्तः । भक्तिश्च प्रदेशवद्द्रव्यसंयोगित्वम् । ( वै० उ० ७ । १ । २२ । पृ० ३०६ )

**आकुञ्चनम्**—ऋजुनो द्रव्यस्याग्रावयवानां तद्देशैर्विभागः, संयोगश्च मूलप्रदेशैः, येन कर्मणाऽवयवी कुटिलः संजायते, तदाकुञ्चनम् । ( प्रशस्त० पृ० ९१ )

**आगमः**—'साक्षिपूर्वकं लिखितपत्रम् ( दस्तऐवज ) । यथा—"आगमो निष्फलस्तत्र भुक्तिः स्तोकाऽपि यत्र नो" ( वीरमित्रो० २ । दाय० ) इत्यादौ,—'आगम'शब्दस्यार्थः' इति व्यवहारशास्त्रज्ञा आहुः ।

**आङ्**—'यावत्', 'मर्यादा,' 'अभिविधिः,' एतेषामर्थवदस्यार्थोऽनुसंधेयः । ( ग० व्यु० का० २ । ख० २ । पृ०७६ )

**आदानम्**—यथेष्टविनियोगफलकः स्वीकारः । यथा—'विप्राद्धनमादत्ते' इत्यादौ,—'दा'धात्वर्थः। ( का० व्या पृ० १० ) । अधिकं तु 'पञ्चमी' शब्दव्याख्यानावसरे ( पृ० ४२२ ) संपादितम्, इति तत्र द्रष्टव्यम् ।

**आधारता**—अखण्डोपाधिः (स पदार्थान्तरमेव), इति नैयायिका आहुः । ( वै० सा० सुबर्थ० पृ० ८६ ) (ग० व्यु० कार० ७ । पृ० ११६ )

**आनुपूर्वी**—सा च यथा— 'घटः', इत्यत्र स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसंबन्धेन घकार-विशिष्ट-टत्वम्, इति चिन्त्या । ( त० प्र० ख० ४ । पृ० १२७ ) । एवमन्यत्राप्यूह्या ।

**आपः**—( जल-द्रव्यम् ) तस्य शरीरं च पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थं भवति। ( प्रशस्त० पृ० ४ )

**आभासः**—अङ्गविकलः। यथा–'लिङ्गाभासः' इत्यादौ,–'आभास'शब्दस्यार्थः।

**आरम्भः**—तस्य ( ज्ञातुः ) ईप्साप्रयुक्तस्य ( सुखसाधनावाप्तये ) समीहाविशेषः। ( वात्स्या० १।१।१। प्रस्तावना )

**आरोहणम्**—ऊर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रिया। यथा–'आरूढवानरो वृक्षः'[1] इत्यादौ। ( त० प्र० ख० ४। पृ० ४९ )

**आर्षम्**—( विद्या ) आम्नायविधातॄणामृषीणामतीतानागतवर्तमानेष्वर्थेष्वतीन्द्रियेषु धर्मादिषु ग्रन्थोपनिबद्धेष्वनुपनिबद्धेषु चात्ममनसोः संयोगविशेषाद्धर्मविशेषाच्च, यत् प्रातिभं ( अतीतं ) ज्ञानं यथात्मनिवेदनमुत्पद्यते, तत् 'आर्षम्' इत्याचक्षते। तत्तु प्रस्तावेन ( बाहुल्येन ) देवर्षीणाम्; कदाचिदेव लौकिकानाम्; यथा—"कन्यका ब्रवीति–'श्वो मे भ्राताऽऽगन्ता' इति हृदयं मे कथयति" इति। सिद्धदर्शनं न ज्ञानान्तरम्; कथम्?[2] यत्सूक्ष्मव्यहितविप्रकृष्टेष्वर्थेषु सिद्धानां द्रष्टॄणां दृश्यानामञ्जनपादलेपगुटिकादिसिद्धीनां दर्शनं तत्प्रत्यक्षमेव। अथ दिव्यान्तरिक्षभौमानां ग्रहनक्षत्रसंचारादिनिमित्तमुपलभ्य प्राणिनां धर्माधर्मविपाकदर्शनमिष्टम्, तदनुमानमेव।

अथ लिङ्गानपेक्षं धर्मादिषु दर्शनमिष्टम्, तदार्षप्रत्यक्षयोरन्यतरस्मिन्नन्तर्भूतम्, इति। (प्रशस्त० गुण० पृ० ३२) ( ९० )

**आश्रयासिद्धः**—( असिद्धः ) आश्रयासिद्धो द्विविधः,–असदाश्रयासिद्धः,

---

१ अत्र—'आरूढो वानरो यम्' इति व्यासे,—क्तप्रत्ययस्याश्रयोऽर्थः; द्वितीयाया आधेयत्वम्। तथा च–'वृक्षवृत्त्यूर्ध्वदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानरः' इत्यन्वयबोधः। समासे तु—'आरोहणकर्तृवानरसंबन्धी वृक्षः,' इत्यन्वयबोधः। संबन्धः स्वकर्तृकारोहणकर्मत्वम्। ( त० प्र० ख० ४। पृ० ४९ )

२ अत्र पाठान्तरम्—'कथम्? प्रत्यक्षानुमानाभ्याम्। तत्र प्रत्यक्षेण विप्रकृष्टपदार्थदर्शनम्। अनुमानेन तु, इति ( प्रशस्त० गुण० पृ० ३२ ).

साधकश्चेति। तत्राद्यो यथा—'गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत्' इति। द्वितीयो यथा—ईश्वरवादिनं प्रति,—'क्षित्यादिकं सकर्तृकम्, कार्यत्वात् घटवत्' इति। ( प्र० च० पृ० ३१ )

**आस्तिकः**—१ [ ख ] नरकभीरुः। ( त० प्र० ख० ४।पृ० १०९ ) यथा—न्यायकोशकर्ताऽहमास्तिकः।

**इच्छा**[3]—स्वार्थं परार्थं वाऽप्राप्तप्रार्थना। सा चात्ममनसोः संयोगात्सुखाद्यपेक्षात्स्मृत्यपेक्षाद्वोत्पद्यते, प्रयत्नस्मृतिधर्माधर्महेतुः। कामः, अभिलाषः, रागः, संकल्पः, कारुण्यम्, वैराग्यम्, उपधा, भावः, इत्येवमादय इच्छाभेदाः[4]। ( प्रशस्त० २। पृ० ३३ )

**इतरबाधग्रहः**—अस्य प्रयोजनं हि यथा—'पर्वतो वह्निमान्' इत्यादिस्थले,—'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शादपि 'महानसीयवह्निभिन्नवह्न्यभाववान्' इतीतरबाधग्रहबलात्, महानसीयवह्नित्वादिनाऽनुमितिः 'पर्वतो महानसीयवह्निमान्' इति जायते, इति। ( त० प्र० ख० ४ )

**इतरेतरः**—( द्वन्द्वसमासः ) [ ख ] शाब्दिकास्तु,—मिलितानामन्वय इतरेतरः, इत्याहुः।

**इदम्**—इदमर्थश्च लौकिकप्रत्यक्षविषयताविशिष्टम्। ( ग० शक्ति० टी० पृ० ११६ )। यथा—चक्षुःसंनिकृष्टे व्यक्तिविशेषे 'अयं घटः' इति प्रत्यक्षे घटस्येदमर्थता। ( स्व० )

---

१ अत्र—गगनारविन्दमाश्रयः; स च नास्त्येव, इत्याश्रयासिद्धिर्बोध्या। ( प्र० च० पृ० ३१ )

२ अत्र—साध्यस्य निश्चितत्वेन पक्षे साध्यसंदेहानुपपत्तौ संदिग्धसाध्यवतः पक्षस्याभावादाश्रयासिद्धिर्बोध्या। ( प्र० च० पृ० ३१ )

३ इच्छां प्रति बलवदनिष्टाननुबन्धित्वज्ञानमपि कारणम्।

४ कामाद्यर्थश्च—मैथुनेच्छा कामः; अभ्यवहरणेच्छाऽभिलाषः; पुनःपुनर्विषयानुरञ्जनेच्छा रागः; अनासन्नक्रियेच्छा संकल्पः; स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम्; दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम्; परवञ्चनेच्छा उपधा; अन्तर्निगूढेच्छा भावः; चिकीर्षाजिहीर्षादिक्रियाभेदादिच्छाभेदा भवन्ति। ( प्रशस्त० २। पृ० ३३ )

इन्द्रियम्[१]—तच्च "शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनम्" इति । (ता० र० श्लो० २८)

इन्द्रियार्थसंनिकर्षः—( संनिकर्षः ) तत्र ( षड्विधसंनिकर्षमध्ये ),–विशेषणविशेष्यभावो न विषयतारूपः; अपि तु,–स्वरूपसंबन्धावच्छिन्नाधाराधेयभाव एव, इति विज्ञेयम् । ( नील० १ । पृ० १८ )

उत्क्षेपणम्—( कर्म ) शरीरावयवेषु तत्संबद्धेषु च यदूर्ध्वभाग्भिःप्रदेशैः संयोगकारणम्, अधोभाग्भिश्च प्रदेशैर्विभागकारणं कर्मोत्पद्यते गुरुत्वप्रयत्नसंयोगेभ्यः, तत् । ( प्रशस्त० कर्मनि० पृ० ३७ ) ( ९६ )

उत्पत्तिः—[ १ ] सकलकारणयौगपद्यम् । [ २ ] आत्मन उत्पत्तिस्तु देहसंगतिः । ( ता० र० श्लो० २१ )

उत्पाद्यम्—२ 'निर्वर्त्य' इत्याख्यो विकृतिकर्मविशेषः । इदं च 'प्रकृति' कर्मासमभिव्याहारे संपद्यते; । प्रकृतिकर्मसमभिव्याहारे तु 'विकार्यम्' इत्युच्यते, इति विवेकः । शिष्टं तु, 'निर्वर्त्य,' 'विकार्य' इत्यादिशब्दव्याख्याने दृश्यम् । ( ग० व्यु० का० २ । पृ० ६९ )

उत्सर्गः—२ सामान्यशास्त्रम्[३] । यथा–'न हिंस्यात्सर्वा भूतानि' इति शास्त्रमुत्सर्गः । शिष्टं तु 'सामान्य'शब्दव्याख्याने (पृ० ९३१) दृश्यम् ।

उदासीनत्वम्—विहित-निषिद्ध-एतदुभयविपरीतत्वम् । यथा–'उदासीनं वाक्यम्' इत्यादौ,–'उदासीन'शब्दस्यार्थः । शिष्टं तु 'तटस्थ'शब्दव्याख्यानादौ दृश्यम् ।

उदाहरणाभासः—'निदर्शनाभास'शब्दवदस्यार्थोऽनुसंधेयः ।

उद्देशः–१ [ घ ] संज्ञामात्रेण पदार्थानामभिधानम् ।

---

१ तत्रान्तरिन्द्रियं मनः । तत्तु ( अन्तरिन्द्रियम् ) मायावादिमते 'अन्तःकरणम्' इत्युच्यते । ( वै० सा० )

२ तल्लक्षणं तु बलवद्बाधकापोद्यत्वम् ।

३ अत्रायं नियमः—'अपवादाभावे उत्सर्गस्य प्रवृत्तिः' इति ।

**उपचारच्छलम्**—( छलम् ) "उपचारप्रयोगेषु गौणलाक्षणिकेषु यः । मुख्यार्थासंभवाद्बाध उपचारच्छलं च तत्" इति । ( ता० र० परि० १ । श्लो० ९६–९७ )

**उपजीवी**—प्रयोज्यः । यथा—"शब्द-तदुपजीवि-प्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः शब्दः" ( गौ० वृ० १ । १ । ८ ) इत्यादौ ग्रन्थे,–'उपजीविन्' शब्दस्यार्थः ।

**उपधा**—( इच्छा ) परवञ्चनेच्छा । ( प्रशस्त० गु० कामनि० पृ० ३३ )

**उपनयः**—( न्यायावयवः ) [ ङ ] परामर्शित्ववचनम् ।

**उपपत्तिः**—हेतुः । उपपत्तिदोषास्तु 'हेत्वाभास' शब्दव्याख्याने प्रदर्शिताः, तत्र दृश्याः ।

**उपमानम्**—( प्रमाणम् ) [ क ] आगमाहितसंस्कारस्मृत्यपेक्षं च सारूप्यज्ञानमुपमानम्, । ( न्या० वा० १ । पृ० १६ )

[ ख ] "अव्युत्पन्नपदोपेतवाक्यार्थस्य हि संज्ञिनि । प्रत्यक्षप्रत्यभिज्ञानमुपमानमिहोच्यते" इति । ( ता० र० श्लो० २२ )

**उपमितिः**—( अनुभवः ) शक्तिपरिच्छित्तिः । ( त० प्र० ख० ४ । पृ० १ ) यथा–'गवयो गवयपदवाच्यः' इति ।

**उपलब्धिसमः**—( जातिः ) "अवधारणतात्पर्यं वादिवाक्ये विकल्पयत् । तद्बाधात्प्रत्यवस्थानमुपलब्धिसमो मतः" इति । ( ता० र० प० २ । श्लो० १२३ )

**उपसंहारः**—८ मीमांसकास्तु,–सामान्यप्राप्तस्य विशेषे नियमनम्, इत्याहुः । ( लौ० भा० टी० पृ० २३ )

**उपसर्गः**—अत्रेयं व्यवस्था–'उपसर्गाणां मध्ये यस्योपसर्गस्य किंचिदर्थे शक्तिर्न प्रामाणिकी, तस्य द्योतकत्वमेव । यथा—प्रादेः । यस्य च शक्तिः प्रामाणिकी, तस्य बोधकत्वमेव । यथा–निरुपादेः । अन्यथा,–'उपकुम्भम्' इत्यव्ययीभावसमासानुपपत्तेः; तस्य निरर्थकत्वेन निराकाङ्क्षत्वात्; "पूर्वे

---

१ "अप्राप्तिदेशवाक्यार्थस्त्रिविधः प्रतिगृह्यते । साधर्म्यं धर्ममात्रं च वैधर्म्यं चेति भेदतः" इति । ( ता० र० श्लो० २३ )

वाच्यं भवेद्यस्य सोऽव्ययीभाव इष्यते" इत्यनुशासनात् । प्रादेश्च निरर्थकत्वेऽपि 'स्या(त्वा)द्यन्तमिह नामेष्टम्" इत्यनुशासनेन स्या(त्वा)द्यन्तत्वेन तस्यापि नामत्वात्, नाम्नामेव समासविधानात्प्रादेः समास उपपद्यते' इति । ( त० प्र० ख० ४ । पृ० ७० )

**उपादानम्**—६ [ क ] अनुसंधीयमानशब्दसहकृतानुपपत्तिज्ञानम् । ( ग० नियोज्यान्वयग्रन्थे ) ।

[ ख ] प्राभाकरास्तु,—अनुपपत्तिज्ञानम् । यथा—"औपादानिको बोधः" इत्यादौ,—'उपादान' शब्दस्यार्थः, इत्याहुः । ( त० प्र० ख० ४ । पृ० ११२ ) । ७ 'गन्धपुष्पादिपूजासाधनसंपादनात्मक उपासनविशेषः' इति केचिदाहुः ।

**उपादानत्वम्**—( कारणत्वम् ) मायावादिमते,—[ १ ] जगदध्यासाधिष्ठानत्वम् । यथा—ब्रह्मणो जगदुपादानत्वम् । [ २ ] जगदाकारेण परिणामित्वम् । यथा—मायाया जगदुपादानत्वम् । ( वेदा० प० पृ० ६९ )

**उपाधिः**—( अनुमानदोषः ) प्रथमत उपाधिर्द्विविधः,—निश्चितः, शङ्कितश्चेति । ( ता० र० श्लो० १९ ) ( दीधि० )

**उपेक्षा**—४ [ ख ] स्वत्वध्वंसमात्रजनकस्त्यागः, इति मैथिला आहुः । यथा—'धनस्योपेक्षा' इत्यादौ । ( श० प्र० श्लो० ७० । टी० पृ० ८९ ) ( ९८ )

**एकशेषः**—( वृत्तिः ) व्याकरणशास्त्रसिद्धो वृत्तिविशेषः । एकशेषो द्विविधः,—सरूपैकशेषः, विरूपैकशेषश्च । तत्र,—सरूपैकशेषो 'घटौ,

---

१ अत्रायमर्थः—'अपूर्वं कृतिसाध्यत्वं यागे कृतिसाध्यत्वं विनाऽनुपपन्नम्' इत्यनुपपत्तिज्ञानसहकारेण 'स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्यः' इत्यौपादानिको यागविशेष्यकः पञ्चमो बोधः, स एव च प्रवर्तकः । ( त० प्र० ख० ४ । पृ० ११२ )

२ अत्रायं वैयाकरणानां नियमः 'यः शिष्यते, स लुप्यमानार्थाभिधायी' इति विज्ञेयः ।

३ अत्र "सरूपाणामेकशेष एकविभक्तौ" ( पाणि० १ । २ । ६४ ) इत्यनेन सूत्रेण 'घटश्च घटश्च घटौ' इत्येकशेषो बोध्यः ।

घटाः' इत्यादौ । विरूपैकशेषस्तु[1] 'वक्रदण्डौ[2], पितरौ[3], श्वशुरौ[4], भ्रातरौ[5], पुत्रौ, शिवौ[6],' इत्यादौ ।

**एतत्**—एतदोऽर्थश्च लौकिकप्रत्यक्षविषयताविशिष्टम् । ( ग० शक्ति० टी० पृ० ११६ ) । यथा–'एषोर्घ्यः' इति प्रत्यक्षेऽर्घ्यस्यैतदर्थता ।

**एव**—प्राचीनमते–'एव'कारस्यार्थो द्विविधः,—( १ ) अयोगव्यवच्छेदः, ( २ ) अन्ययोगव्यवच्छेदश्चेति । तत्रायोगव्यवच्छेदो द्विविधः,—A केवलायोगव्यवच्छेदः, B अत्यन्तायोगव्यवच्छेदश्च । B यत्रान्वयितावच्छेदकसामानाधिकरण्यमात्रेणायोगव्यवच्छेदः प्रतीयते,–यथा—'नीलं

---

१ अत्रायं नियमः—'विरूपाणामपि समानार्थकानामेवैकशेषः' इति ।

२ अत्र—लक्षणया 'वक्रदण्डश्च कुटिलदण्डश्च' इति बोधः । विग्रहोप्येवमेव ।

३ अत्र—'जनकशरीरत्वेन मातापित्रोरवगमात् शक्त्या पितुर्बोधः, लक्षणया च जनकस्त्रीत्वेन रूपेण मातुर्बोधः । विभक्त्युपनीतं पुंस्त्वं तु पितर्येवान्वेति' इति प्राञ्च आहुः । नव्यास्तु,—'एकयैव लक्षणया पितृत्व-मातृत्वाभ्यां बोधकं पितृपदम्*' इत्याहुः । ( त० प्र० ख० ४ । पृ० ५३ )

४ अत्र † 'श्वश्रूश्च, श्वशुरश्च' इति विग्रहः । अत्र च [ क ] श्वशुरपदे स्त्री-पुरुष-जनकदम्पत्योर्लक्षणा । ( दि० ४ ) [ ख ] जनकशरीरत्वेन, प्रातिस्विकरूपेण वा बोधः । ( त० प्र० ख० ४ । पृ० ५३ )

५ अत्र,—‡ भ्रातृपदेन भ्रातृ-स्वसारौ सोदरत्वेन, पुत्रपदेन च स्वापत्यत्वेन पुत्रदुहितरौ लक्ष्येते । ( त० प्र० ख० ४ । पृ० ५३ )

६ अत्र,—§'शिवपदं शिवदुर्गान्यतरत्वेन बोधकम्' इति प्राञ्च आहुः । 'शक्त्या शिवत्वेन, लक्षणया च शिवाया बोधकम्' इति तु नव्या आहुः । (त० प्र० ख० ४ । पृ० ५३)

---

* अत्र 'पितरौ' इत्यत्र,—'माता च पिता च पितरौ' इति विग्रहः । "पिता मात्रा" ( पाणि० १ । २ । ७० ) इत्यनेन सूत्रेणैकशेषो बोध्यः ।

† 'श्वशुरौ' इत्यत्र,—"श्वशुरः श्वश्र्वा"( पाणि० १ । २ । ७१ ) इत्यनेन सूत्रेणैकशेषो बोध्यः ।

‡ 'भ्रातरौ, पुत्रौ च' इत्यादौ,—'स्वसा च भ्राता च भ्रातरौ,' 'दुहिता च पुत्रश्च पुत्रौ' इति विग्रहौ । "भ्रातृ-पुत्रौ स्वसृ-दुहितृभ्याम्"( पाणि० १ । २ । ६८ ) इत्यनेन सूत्रेणैकशेषौ च बोध्यौ ।

§ 'शिवौ' इत्यत्र,—'शिवा च शिवश्च' इति विग्रहः । "पुमान् स्त्रिया" ( पाणि० १ । २ । ६७ ) इत्यनेन सूत्रेणैकशेषश्च बोध्यः ।

सरोजं भवत्येव' इत्यादौ; तत्रात्यन्तायोगव्यवच्छेदपरिभाषा । A यत्र चान्वयितावच्छेदकावच्छेदेनायोगव्यवच्छेदः प्रतीयते,—यथा—'शङ्खः पाण्डुर एव' इत्यादौ; तत्र केवलायोगव्यच्छेदपरिभाषा ।

( २ ) अन्ययोगव्यवच्छेदस्तु 'पार्थ एव धनुर्धरः' इत्यादावेवकारार्थः । एवम्—अन्यान्यपि अन्ययोगव्यवच्छेदस्योदाहरणान्यूह्यानि । तत्र—'जातिमत्येव सत्ता' इत्यादौ,—'सत्ता' पदेन लक्षणया तदधिकरणत्वमर्थः । तथा च—सत्ताधिकरणत्वे जातिमदन्यवृत्तित्वव्यवच्छेदः प्रतीयते । अथवा—'जातिमत्येव सत्ता' इत्यादौ,—सप्तम्या निरूपितत्वमर्थः । तथा च—'सत्ता जातिमन्निरूपितसमवायप्रतियोगिनी, सत्तासमवाये जातिमदन्यानुयोगिकत्वव्यवच्छेदश्च' इत्युभयान्वयविषयकसमूहालम्बनबोधः ।

( १ ) एवकारस्य अयोगव्यवच्छेदार्थकत्वे त्वन्यान्युदाहरणानि यथा—

A 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ,—ग्रहधातोर्विषयित्वमर्थः; आख्यातस्याश्रयत्वमर्थः; निरूपितत्वं द्वितीयार्थः । तथा च—'ज्ञानम्, अर्थनिरूपितविषयित्वाश्रयत्ववत्, अर्थनिरूपितविषयित्वाश्रयत्वायोगव्यवच्छेदवच्च' इत्यन्वयबोधः । अत्र—अयोगव्यवच्छेदोऽन्वयितावच्छेदकज्ञानत्वावच्छेदेन प्रतीयते, न तु सामानाधिकरण्यमात्रेण, इति विज्ञेयम् ।

B 'द्विजो वेदानधीत एव' इत्यादौ,—द्विजत्वावच्छेदेन वेदकर्मकाध्ययनकर्तृत्वायोगव्यवच्छेदो बोध्यते । अत एव—'नरो वेदानधीत एव' इत्यादिप्रयोगवारणम् ।

---

१ अत्रत्यक्रियासंगत-'एव'कारस्य कार्यतावच्छेदकं च 'शुद्धस्वरूपसंबन्धेन नीलभवनायोगव्यवच्छेदप्रकारक-सरोजत्वविशिष्टविशेष्यकशाब्दबोधत्वम्' इति ।

२ अत्र—अयोगे आत्यन्तिकत्वस्यान्वयितावच्छेदकव्यापकत्वरूपस्य व्यवच्छेदः । इत्थं च—अन्वयितावच्छेदकसामानाधिकरण्येनायोगव्यवच्छेदोऽत्यन्तायोगव्यवच्छेदः, इति ।

३ अत्रत्यविशेषणसंगत-'एव'कारस्य कार्यतावच्छेदकं च 'शङ्खत्वव्यापकत्वविशिष्टस्वरूपसंबन्धेन पाण्डुरत्वायोगव्यवच्छेदप्रकारक-शङ्खत्वावच्छिन्नविशेष्यक-शाब्दत्वम्' इति । ( ए० वा० पृ० २ )

४ अत्रत्यविशेष्यसंगत-'एव'कारस्य कार्यतावच्छेदकं तु 'पार्थत्वविशिष्टविशेष्यक-पार्थत्वव्याप्य-धनुर्धरत्वसमानाधिकरणविशेषणतासंबन्धेन धनुर्धरान्ययोगव्यवच्छेदप्रकारक-शाब्दत्वम्' इति । ( ए० वा० पृ० २ )

C 'चक्षू रूपं गृह्णात्येव' इत्यादौ,—'ग्रह'धातोर्ज्ञानमर्थः, द्वितीयाया विषयत्वमर्थः, आख्यातस्य जनकत्वमर्थः । तथा च–'रूपविषयकज्ञान-जनकं चक्षुः' इत्यन्वयबोधः ।

D 'ज्ञानं रजतं गृह्णात्येव' इत्यादिप्रयोगो भवत्येव । यदि च न भवति, तदा 'ज्ञानेनार्थो गृह्यत एव' इत्यादौ,–ज्ञानत्वावच्छेदनार्थग्राहकत्वायोगव्यव-च्छेदोऽर्थो वाच्यः, इति 'ज्ञानेन रजतं गृह्यत एव' इत्यादौ,—ज्ञानत्वा-वच्छेदेन रजतत्वप्रकारकत्वायोगव्यवच्छेदबोधस्यासंभवेन तथाविधप्रयोगो न भवति ।

E 'रूपं पृथिव्यां वर्तत एव' इत्यादौ,—सप्तम्या निरूपितत्वमर्थः, धातो-र्वृत्तिरर्थः, आख्यातस्याश्रयत्वमर्थः । तथा च–'पृथिवीनिरूपितवृत्त्याश्रय-त्वायोगव्यवच्छेदवत् रूपम्' इत्यन्वयबोधः । अत्र च–रूपत्वसामानाधि-करण्यमात्रेणान्वयबोधः, इति विज्ञेयम् ।

F रूपेण पृथिवी व्यावर्त्यत एव' इत्यादौ,—रूपे पृथिवीनिरूपितधात्व-र्थव्यावृत्त्ययोगव्यवच्छेदः प्रतीयते ।

G 'आत्मनैव ज्ञायते, इष्यते, क्रियते' इत्यादौ,—आत्मवृत्तित्वायोगव्यव-च्छेदः प्रतीयते । अत्र–आत्मपदोत्तरतृतीयाया वृत्तित्वमर्थः ।

H 'ऋतौ स्वदारान् गच्छेदेव' इत्यादौ,—सप्तम्या अवच्छेद्यत्वमर्थः, ए-वार्थश्चायोगव्यवच्छेदः; विध्यर्थश्चेष्टसाधनत्वम्, इष्टं च प्रत्यवायाभावरूपम्, द्वितीयार्थः कर्मत्वम् । तथा च–'ऋतुकालावच्छिन्नस्वदारकर्मकाभिगम-नायोगव्यवच्छेदः प्रत्यवायाभावसाधनम्' इत्यन्वयबोधः । अत्र–'यस्यायो-गव्यवच्छेदः प्रत्यवायाभावहेतुत्वेन विधिबोधितः, स प्रत्यवायजनकाभाव-प्रतियोगी' इति व्याप्तिस्वीकारेण तादृशाभिगमनाभावस्य प्रत्यवायहेतुत्व-सिद्धिः । अत्र च—ऋतुकालावच्छिन्नस्वदारकर्मकाभिगमनाभावस्य सामा-नाधिकरण्येन प्रत्यवायहेतुत्वं वाच्यम्; तथा च—यस्यां कस्यामपि (निशि) ऋतावभिगन्तुः पुरुषस्य ऋत्वन्तराभिगमनाभावेऽपि प्रत्यवायो न स्यात्; एवं नानादारवतः प्रभोः दारान्तराभिगमनाभावेऽपि प्रत्यवायो न स्यात्, इति । अत्र वदन्ति–'तत्तदृतुकालावच्छिन्नतत्तद्दारकर्मकत्व-तत्तत्पुरुषकर्तृ-

कत्व-एतदुभयाभाववदभिगमनसामान्यस्य तत्तत्पुरुषीयतादृशप्रत्ययवायं प्रति हेतुता' इति विशिष्य पुरुषभेदेनैव कार्यकारणभावः कल्प्यते ।

I 'इह भवने मैत्रेणैव पक्ष्यते तेमनम्' इत्यादौ,–भवनपदोत्तरसप्तम्या उत्पत्तिरर्थः । तथा च—'एतद्भवनोत्पत्तिकतेमनत्वावच्छेदेन मैत्रपक्ष्यमाणत्वायोगव्यवच्छेदः प्रतीयते । अधिकं तु चिन्त्यम् ।

J 'चैत्रो जलमेव भुङ्क्ते' इत्यादौ,—'चैत्रो जलान्यभोजनकर्तृत्वव्यवच्छेदवान्, जलकर्मकभोजनकर्तृत्ववांश्च' इति बोधः ।

K 'चैत्रः पायसस्यैव भोक्ता' इत्यादौ,—'चैत्रे पायसान्यभोक्तृभेदः, पायसभोक्ता' इत्यर्थः ।

L 'ज्ञानमर्थं गृह्णात्येव' इत्यादौ,—अर्थग्राहकत्वायोगव्यवच्छेद एव ज्ञानादौ प्रत्याय्यते । अन्ययोगव्यवेच्छदश्चान्यतादात्म्यम् ।

---

( २ ) अत्र नव्यास्त्वेवमाहुः—A 'एव'कारस्य अन्ययोगव्यवच्छेद एक एवार्थः । 'पृथिव्यामेव गन्धः' इत्यादौ,–सप्तम्या वृत्तित्वमर्थः, अन्ययोगश्चान्यसमवेतत्वादिः । तेन,–पृथिवीसमवेतत्वम्, पृथिव्यन्यसमवेतत्वव्यवच्छेदश्चार्थो बोध्यते ।

B 'वह्निमत्येव धूमः' इत्यादौ,—धूमे वह्निमत्संयुक्तत्वम्, वह्निमदन्यसंयुक्तत्वव्यवच्छेदश्च प्रतीयते ।

C 'घटत्वाभाववत्येव द्रव्यत्वाभावः' इत्यादौ,—द्रव्यत्वाभावे घटत्वाभाववद्भिन्नवृत्तित्वव्यवच्छेदः, घटत्वाभाववद्वृत्तित्वं च प्रतीयते ।

---

( ३ ) पक्षधरमिश्रास्त्वेवमाहुः—'व्यवच्छेदमात्रं 'एव'कारार्थः, पृथिव्यन्यसमवेतत्वादौ सप्तम्यादीनामेव लक्षणा' इति ।

( ४ ) वस्तुतस्तु—अन्ययोगव्यवच्छेदश्चैवकारार्थः । व्यवच्छेदश्चात्यन्ताभावः, अन्योन्याभावश्च । 'पृथिव्यामेव गन्धः' इत्यादौ,–'पृथिव्यां गन्धः, पृथिव्यन्यस्मिन्गन्धाभावश्च' इति बोधः । 'शङ्खः पाण्डुर एव' इत्यादौ,—'शङ्खतादात्म्यवान् पाण्डुरः, पाण्डुरान्यस्मिन्शङ्खान्योन्याभावश्च' इति

बोधः । 'पार्थ एव धनुर्धरः' इत्यादौ,—पार्थतादात्म्यवान् धनुर्धरः, पार्थान्यस्मिन्धनुर्धरत्वव्यवच्छेदश्च प्रतीयते, इति ।

( ५ ) स्वतन्त्रास्त्वेवमाहुः—'एव'कारो न कुत्रापि शक्तः, किं तु—तात्पर्यग्राहकः । 'पृथिव्यामेव' इत्यादौ च, कुत्रचित्पदे लक्षणया पृथिव्यन्यसमवेतत्वव्यवच्छेदः प्रतीयते, इति ।

**औग्र्यम्**—आत्मन्युत्कर्षप्रत्ययः । ( न्या० क० पृ० १ )

**औदार्यम्**—१ सन्मार्गवर्तिनी बुद्धिः । ( न्या० क० पृ० १० ) २ 'दानशीलत्वम्' इति काव्यज्ञा आहुः ।

**औपादानिकः**—[ १ ] अनुपपत्तिज्ञानसहकृतशब्दजनितो बोधः । यथा—"केषांचित् ( प्राभाकराणाम् ) मते,—'स्वर्गकामो यजेत' इत्यादिवाक्यात् 'स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्यः' इत्यौपादानिको बोध उत्पद्यते" इत्यादौ ग्रन्थे,— 'औपादानिक' शब्दस्यार्थः । [ २ ] केचित्तु,–औपादानिकस्तु अनुमित्यात्मक एव बोधः, इत्याहुः । ( त० प्र० ख० ४ । पृ० ११२ )

**कठिनत्वम्**—गुणान्तरम्, इति केचिदाहुः । "अकठिनैरपि तन्तुभिरारचय" इति ( न्या० ली० पृ० ९० )

**कथाभासः**—( १ ) अत्र त्रयः पक्षा अपि संभवेयुः । ( गौ० वृ० ९ । ४० ) । ( २ ) 'कथा, तस्याः षडङ्गानि प्राहुश्चत्वारि केचन' इति च । ( ता० र० )

**कर्म**—( पदार्थः ) उत्क्षेपणादीनां पञ्चानामपि कर्मत्वसंबन्धः, एकद्रव्यवृत्तित्वम्, क्षणिकत्वम्, मूर्तद्रव्यवृत्तित्वम्, अगुणवत्त्वम्, गुरुत्व-द्रवत्व-प्रयत्न-संयोग-जन्यत्वम्, स्वकार्यसंयोगविरोधित्वम्, संयोग-विभाग-निरपेक्षकारणत्वम्, असमवायिकारणत्वम्, स्वपराश्रयसमवेतकार्यारम्भकत्वम्,

---

१ अत्र व्युत्पत्तिः—उपादानम्, अनुपपत्तिज्ञानम्; तत्सहकृतशब्देन जनितो बोध औपादानिकः' इति । ( त० प्र० ख० ४ । पृ० ११२ )

२ कर्म पञ्चविधम् । अत्रोच्यते—"ऊर्ध्वे चाधश्चाभिमुखं तिर्यग्विश्वगतिक्रमात् । तानि पञ्चापि कर्माणि दश संयोगभेदतः॥" इति । ( ता० र० श्लो० ५२ )

समानासमानजातीयारम्भकत्वम्, ( समानजातीयानारम्भकत्वम् ), प्रतिनियतजातियोगित्वम्, दिग्विशिष्टकार्या(ना)रम्भकत्वं च विशेषः । ( प्रशस्त० पृ० ३७ ) ( ९६ )

**कर्म**—[ १ ] कर्म द्विविधम्,–संचितम्, प्रारब्धं चेति । [ २ ] केचित्तु,—'कर्म हि त्रिविधम्,–नित्यम्, काम्यम्, नित्यकाम्यं च । तत्र केवलं नित्यम्, संध्यावन्दनादि । केवलं काम्यम्, यागादि । नित्यकाम्यं तु एकादशीव्रतादि' इत्याहुः । जरन्नैयायिकास्तु,–सन्ध्यावन्दनादेरपि पापनिर्हरणादिरूपफलसत्वान्न केवलं नित्यत्वम्, इत्याहुः । ( त० प्र० ख० ४ । पृ० १०३ ) शिष्टं च 'कर्मन्' शब्दव्याख्याने दृश्यम् । [ ३ ] कर्माणि षट्,–A 'शान्तिकरणम्, वशीकरणम्, स्तम्भनम्, विद्वेषः, उच्चाटनम्, मारणं चेति;' एते षट् प्रयोगास्तन्त्राद्युक्ताः । B 'यजनम्, याजनम्, अध्ययनम्, अध्यापनम्, दानम्, प्रतिग्रहश्चेति;' एतानि ब्राह्मणस्य षट् कर्माणि । C "धौतिर्बस्तिस्तथा नेतिर्नौलिकी त्राटकस्तथा ॥ कपालभातिश्चैतानि षट् कर्माणि समाचरेत्" इत्यनेनोक्तानि ( शुद्धिकराणि ) षट् कर्माणि हठयोगाङ्गानि । ( घेरण्डसं० ) ( वाच० )

**कर्मत्वम्**—वैयाकरणास्तु,–व्याकरणशास्त्रीयपरिभाषासिद्धकर्मसंज्ञाविशिष्टत्वम् । तेन, 'अधिशय्यते प्रासादः' इत्यादौ,– कर्मणि लकारोपपत्तिः; अधिशेतेः कर्मसंज्ञाविशिष्टान्वितस्वार्थबोधकत्वात्, इत्याहुः । ( वाच० )

**कर्मधारयः**—( समासः ) [ १ ] 'स्तोकपक्ता' इत्यादौ,–क्रियाविशेषणैः कर्मधारय एव; 'महाकविर्महाविज्ञः' इत्यादौ,– कवित्वादाविव, प्रकृतेऽप्येकनामार्थैकदेशे पचनादावपरनामार्थस्याभेदान्वयबोधकतया तथात्वस्य ( कर्मधारयत्वस्य ) संभवात् । 'स्तोकं पक्ता' इत्यादौ,–अमस्तादात्म्यवाचित्वे तु तत्पुरुषः संभवत्येव ।

---

१ अत्र स्मृतिः—"नाभुक्तं क्षीयते कर्म" इति ।( न्या० ली० पृ० ४३ ) । श्रुतिरपि—"तावदेवास्य चिरम्" इति ।

२ एतन्मते नित्यत्वं च फलकामनानधीनकर्तृकत्वम् । ( त० प्र० ख० ४ । पृ० १०३ ) ।

३ 'एतद्व्रतस्य अकरणे प्रत्यवायश्रवणान्नित्यत्वम्; पुत्रादिकामनाश्रवणात् काम्यत्वमपि संगच्छते' । ( त० प्र० ख० ४ । पृ० १०३ )

'क्रियाविशेषणैः समास एवाव्युत्पन्नः' इति तु न देश्यम्; "स्तोकमत्रा स्तनाभ्याम्" इत्यादेः कालिदासाद्यैः प्रयुक्तत्वात् । ( श० प्र० श्लो० ३९ । टी० पृ० ९९ )। [ २ ] कर्मधारये समासे ( 'नीलोत्पलम्' इत्यादौ ) न शक्तिर्न वा लक्षणा । अतएव तत्पुरुषात्कर्मधारयो लघीयान् । ( न्या० प्र० ४ । पृ० १३ )। तथा हि—"निषादस्थपतिं याजयेत्" ( श्रुतिः ) इत्यत्र,—बहुव्रीहि-तत्पुरुष-समासावपेक्ष्य कर्मधारय एव लक्षणाद्यभावाल्लघीयान्, इति । ( त० प्र० ख० ४ । पृ० ९३–९४ ) ( मु० ४ । पृ० १८४ )

**कर्मप्रवचनीयाः**—( अव्ययम् ) क्रियाविशेषोपजनितसंबन्धावच्छेदहेतवः । ( वाच० ) । 'कर्मप्रवचनीय' संज्ञका अन्वादय एकादश सन्ति,—अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि । एकादशानां मध्ये केषांचिदर्थः सोदाहरणं कथ्यते । तथा हि—१ [ १ ] 'यज्ञमनु प्रावर्षत्; [ २ ] अन्वर्जुनं योद्धारः; २ [ १ ] वृक्षं

---

१ अत्र—नीलपदार्थस्योत्पलपदार्थेऽभेदसंबन्धेनैवान्वयोपपत्तौ शक्ति-लक्षणाऽनङ्गीकारः, इति भावः । ( न्या० म० ख० ४ । पृ० १३ ) ( मु० ४ । पृ० १८४ )

२ अत्रेदं समाधेयम्—निषादस्य संकरजातिविशेषस्य शूद्रान्तर्गततया "स्त्री-शूद्रौ नाधीयाताम्" इत्यनेन निषिद्धत्वाद्वेदसामान्यानधिकारेऽपि, "निषादस्थपतिं याजयेत्" इति विशेषश्रुतिबोधितयागनान्यथानुपपत्त्यैव यागमात्रोपयुक्तमध्ययनं निषादस्य कल्प्यते । तथा च—सामान्यशास्त्रघटक-'अध्ययन' पदस्य विशेषतः प्राप्ताध्ययनेतराध्ययनपरत्वं वाच्यम्; तेन,—'निषादस्य यागोपयुक्ताध्ययनेतराध्ययननिषेधः, शूद्रान्तरस्य स्वध्ययनमात्रनिषेधः सिध्यति' इति । ( मु० ४ ) ( दि० ४ । पृ० १८४ )

३ अत्र—'कर्मप्रवचनीय'शब्देन अनु, उप, इत्यादय एकादश गृह्यन्ते ।

४ अत्रायमर्थः—[ क ] कारकत्वरूपहेतुत्वं 'अनु' शब्दार्थः; "अनुर्लक्षणे" ( पाणि० १ । ४ । ८४ ) इति 'कर्मप्रवचनीय' संज्ञाविधायकसूत्रे 'लक्षण' पदस्य कारकहेतुपरत्वात् । तथा च—'यज्ञमनु प्रावर्षत्' इत्यादौ,—आधेयत्वं द्वितीयार्थः, तत्र यज्ञस्यान्वयः, आधेयत्वस्य च 'अनु' पदार्थे हेतुत्वेऽन्वयः, हेतुतायाश्च निरूपकत्वसंबन्धेन वृष्ट्यावन्वयः । [ ख ] अथ वा—जन्यत्वं 'अनु' शब्दार्थः, द्वितीयायाः निरूपितत्वम्, तस्य यज्ञान्वितस्यानुशब्दार्थे जन्यत्वेऽन्वयः; जन्यतायाश्चाश्रयत्वसंबन्धेन वृष्ट्यावन्वयः। ( ग० व्यु० का० २ । ख० २ । पृ० ७९ )

५ अत्र,—'अनु' शब्दार्थोऽपकर्षः ( हीनत्वम् ), द्वितीयार्थोऽवधिमत्त्वम्, तत्रार्जुनस्यान्वयः,

प्रति विद्योतते विद्युत्; [ २ ] मातरं प्रति साधुः; [ ३ ] यो मां प्रति स्यात्; [४] वृक्षं प्रति सिञ्चति;' इत्यादौ,—कर्मप्रवचनीयानामन्वादीनां यथासंभवं हेतुत्वादयोऽर्थाः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

**कारणम्**—[ घ ] कार्योत्पादकम् । अत्रेयं व्याप्तिरनुसंधेया—'यद्विशेषयोः कार्यकारणभावः, असति बाधके तत्सामान्ययोरपि' इति । यथा हि—घटविशेष-दण्डविशेषयोः कार्यकारणभावे घटसामान्य-दण्डसामान्ययोरपि कार्यकारणभावो निराबाध एव, इति ।

---

द्वितीयान्तार्थस्य ( अर्जुनावधिकत्वस्य ) चापकर्षेऽन्वयः, इति ।
अवधित्वस्यापादनतारूपत्वेपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

१ अत्र—"लक्षणेत्थंभूताख्यान-भाग-वीप्सासु प्रति-पर्य-नवः" ( पाणि० १ । ४ । ९० ) इत्यनेन सूत्रेण 'प्रति, परि, अनु,' एषां कर्मप्रवचनीयसंज्ञाऽनुशिष्यते । तत्र,—'प्रति' शब्दस्य 'लक्षण-इत्थंभूताख्यान-भाग-वीप्सा' एतदात्मकानां चतुर्णामर्थानां यथाक्रममुदाहरणानि कथ्यन्ते; तत्र प्रथमेऽर्थे ( लक्षणे ),—'वृक्षं प्रति विद्योतते विद्युत्' इत्युदाहरणम् । अत्र,—परिचायकत्वरूपं लक्षणत्वम्, परिशेषत्वरूपं लक्ष्यत्वं वा 'प्रति' शब्दार्थः । वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता¹ द्वितीयार्थश्चाधेयत्वम्, निरूपितत्वं वा । ( ग० व्यु० ख० २ । कार० २ । पृ० ७६ )

२ अत्र,—द्वितीयेऽर्थे ( इत्थंभूताख्याने ),—संबन्धः 'प्रति' शब्दार्थः, साधुत्वं च प्रियकारित्वम्, द्वितीयार्थश्च प्रतियोगित्वम्, प्रतियोगित्वनिरूपकत्वं वा; तस्य पूर्वोक्तसंबन्धेऽन्वयः । तादृशसंबन्धस्य च साधुत्वघटकक्रियायामन्वयः । इत्थं च—'मातृसंबन्धिप्रियकारी' इति बोधः । ( ग० व्यु० कार० २ । ख० २ । पृ० ७६ )

३ अत्र,—तृतीयेऽर्थे ( भागे ),—'प्रति'शब्दस्यार्थो भागः, भागश्च स्वत्वाश्रयः, द्वितीयार्थश्च संबन्धः, तस्य पूर्वोक्तभागेऽन्वयः । इत्थं च—'मत्संबन्धी यो भागः स्यात्' इति बोधः । ( ग० व्यु० कार० २ । ख० २ । पृ० ७६ )

४ अत्र,—चतुर्थेऽर्थे ( वीप्सायाम् )—'वृक्षं प्रति सिञ्चति' इत्यादौ,—*द्वितीयार्थः कर्मत्वम् । ( ग० व्यु० का० २ । ख० २ । पृ०७६ ) । एवम्—'परि, आनु' एतयोरर्थ ऊह्यः ।

५ अत्र—घटविशेषं प्रति दैवादागतरासभस्य कारणत्वे, घटसामान्य-रासभसामान्ययोरपि कार्यकारणभावापत्तिः; तद्वावारणाय 'असति बाधके' इत्युक्तम् । तथा च—तत्रान्यथासिद्धत्वरूपबाधकसत्त्वेन न तयोः कार्यकारणभावः, इति ।

---

* अत्र—चतुर्थेऽर्थे—'कर्मण्येव द्वितीया; यत्नबाध एव संज्ञाफलम्; प्रतिश्च निरर्थकः' इति ज्ञेयम् । ( ग० व्यु० का० २ । ख० २ । पृ० ७६ )

**कार्यसमः**—( जातिः ) "असिद्धतां वादिहेतोरुक्त्वा तं साधयेत्स्वयम् । तद्दूषणान्मूलहेतुभङ्गः कार्यसमो मतः" इति । ( ता० र० परि० २ । श्लो० १२७ )

**कालः**—कालः सर्वकार्याणां चोत्पत्तिस्थितिविनाशहेतुः । तद्व्यपदेशात्, क्षण-लव-निमेष-काष्ठा-कला-मुहूर्त-याम-अहोरात्र-अर्धमास-मास-ऋतु-अयन-संवत्सर-युग-कल्प-मन्वन्तर-प्रलय-महाप्रलय-व्यवहारहेतुश्च । काललिङ्गाविशेषादेकत्वं सिद्धम् । 'कारणे कालः' ( वै० ७ । १ । २९ ) इतिवचनात्परममहत्परिमाणम् । 'कारणपरत्वात्' ( वै० ७ । २ । २२ ) इति वचनात्संयोगः । तद्विनाशाद्विभागः । ( प्रशस्त० पृ० ७–८ )

**कालातीतः**—( बाधितः, हेत्वाभासः ) कालातीतो बलवता प्रमाणेन प्रबाधितः । ( ता० र० श्लो० ८६ )

**कालिकसंबन्धः**—( स्वरूपसंबन्धः ) महाकाल-जन्यपदार्थयोः, एककालवृत्तिमतोर्जन्यपदार्थयोश्च संबन्धः । स च, कालिकविशेषणताख्यः सर्वाधारताप्रयोजकः[1] । यथा—कालस्य सर्वाधारतया गन्धाद्याधारताप्रयोजकः कालिकाख्यः संबन्धः । एवं दिक्कृतविशेषणताऽपि बोध्या । (त० दी० १ । पृ० ७ )

**केवलव्यतिरेकि**—(लिङ्गम्)[2] असत्सपक्षम् । तदर्थस्तु,—पक्षव्यापकम्, सपक्षशून्यम्, विपक्षाद्व्यावृत्तम्, अबाधितविषयम्, असत्प्रतिपक्षम्, इति । केवलव्यतिरेकि लिङ्गं तु असाधारणो हेत्वाभासो भवति । ( ता० र० श्लो० १७ )

---

१ अत्रायं विवेकः—'गगनादिकं सर्वदैवास्ति' इत्यादिव्यवहारात्, कालिकविशेषणताख्यसंबन्धेन आकाश-परमाण्वादयो नित्या अपि काले वर्तन्ते । दिग्विशेषणताख्यया सर्वाधारतानियामिकया तु जन्यमात्रं दिशि तिष्ठति, इति । ( राम० १ । १ । पृ० ५६ )

२ अयं भावः—विभिन्नकालिकयोराधाराधेयभावविरहात् क्रियादेः सर्वाधारत्वशङ्कैव नावतरति, इति । ( नील० १ । कालनि० पृ० १० )

३ केवलव्यतिरेकिणि चत्वार्येव गमकतौपयिकानि रूपाणि । तेन, चतूरूपोपपन्नमेव तल्लिङ्गं स्वसाध्यं साधयितुं क्षमते, इति । ( वै० उ० । ३ । १ । १७ )

केवलव्यतिरेकिणि प्रतिज्ञाहेतू तुल्यावेव; उदाहरणोपनयनिगमनानि तु भिद्यन्ते। यथा—'जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्' इत्यत्र,—'यत्सात्मकं न भवति तत्प्राणादिमन्न भवति, यथा घटः,' 'न चेदं जीवच्छरीरं प्राणादिमन्न भवति,' 'तस्मान्न तथा' इति । ( त० कौ० २ । पृ० १३ )

**केवलान्वयि**—( लिङ्गम् ) [ ख ] असद्विपक्षम्[1] । तदर्थस्तु,—पक्षव्यापकम्, सपक्षवर्तमानम्, विपक्षशून्यम्, अबाधितविषयम्, असत्प्रतिपक्षम्, इति । ( ता० र० श्लो० १६ )

**क्रोधः**—दुःखे तत्साधने च 'इदं मे मा भूत्' इति स्पृहाविरोधिनी चित्तवृत्तिः 'क्रोधः' इति, 'ईर्ष्या' इति चोच्यते । ( वाचस्पत्ये पात० भा० )

**क्षणः**—[ च ] विभागानुत्पाद्यविभागप्रागभावसंबन्धकम(?)-विच्छिन्नकालः । [ छ ] 'निमेषस्य चतुर्थो भागः' इति टीकाकृत आहुः । ( न्या० ली० पृ० ३ )

**क्षरणम्**—द्रवद्रव्यविभागः । यथा—'पयः क्षरति गोस्तनात्' इत्यादौ,—क्षरतेरर्थः ।

**क्षेत्रज्ञः**[2]—( जीवात्मा ) शरीरसंबन्धेन ज्ञानवान् । यथा—अहम् ।

**गुणः**—( पदार्थः ) रूपादीनां गुणानां[3] सर्वेषां गुणत्वाभिसंबन्धः, द्रव्याश्रितत्वम्, निर्गुणत्वम्, निष्क्रियत्वम् ।..................तत्र,—बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नास्त्वन्तःकरणग्राह्याः[4] । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म-भावना-शब्द-तूलपरिमाण-उत्तरसंयोग-नैमित्तिकद्रवत्व-परत्वा-परत्व-पाकजाः संयोगजाः । शब्दोत्तरविभागौ विभागजौ । अपाकजरूपरसगन्धस्पर्शपरिमाणैकत्वैकपृथक्त्वगुरुत्वसांसिद्धिकद्रवत्वस्नेहानां यावद्द्रव्यभावित्वम् । शेषाणामयावद्द्रव्यभावित्वं चेति । ( प्रशस्त० ११ ) ( २४–२९ )

---

१ 'इदमपि लिङ्गं, केवलव्यतिरेकिवत् चतूरूपपन्नमेव स्वसाध्यं साधयितुं क्षमते' इति वयं ब्रूमः।

२ अत्र व्युत्पत्तिः—'इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः' इति । ( गीता, अ० १३ । श्लो० १ )

३ रूपादीनां सर्वेषां गुणानां प्रत्येकमपरसामान्यसंबन्धाद्रूपादिसंज्ञा भवन्ति । ( प्रशस्त० पृ० १२ ) ( २५ )

४ अत्राधिकं तु न्यायकोशे 'साधर्म्य' शब्दव्याख्याने द्रष्टव्यम् ।

**गुणः**—[ क ] स्वप्रयोज्याश्रयवृत्तिः पदार्थः । ( ग० १ । अवय० हेतुप्र० )

[ ख ] कार्यस्य ज्ञाप्यस्य वाऽऽश्रये आश्रितः । यथा—‘वह्निमान् धूमात्’ इत्यादौ,—धूमो गुणः, ‘जाड्यात्, जाड्येन वा बद्धः’ इत्यादौ जाड्यं गुणः । ( ग० व्यु० कार० ३ । पृ० ८७ )

**गुरुत्वम्**—गुरुत्वं जलभूम्योः, पतनकारणम्, अप्रत्यक्षम्, पतनकर्मानुमेयम्, संयोग-प्रयत्न-संस्कार-विरोधि । तस्य चाबादिपरमाणुरूपादिवन्नित्यानित्यत्वनिष्पत्तयः, इति । ( प्रशस्त० २ । पृ० ९२ )

**चक्षुः**—इन्द्रियम्, सर्वप्राणिनां रूपव्यञ्जकम्, अन्यावयवानभिभूतैस्तेजोऽवयवैरारब्धं च चक्षुः । ( प्रशस्त० १ । तेजोनि० पृ० ६ ) ( १७ )

**छलम्**—“अनिष्टमर्थमारोप्य तन्निषेधश्छलं मतम्” इति । (ता० र० श्लो० ९४)

**जल्पः**—( कथा ) “स च छलादिसंपन्नो जल्पोऽस्य विजयः फलम्” इति । ( ता० र० श्लो० ७८ )

**जागरणम्**—यथार्थप्रत्ययप्रवाहः । ( न्या० ली० गु० पृ० ३१ )

**जातिः**—१ “प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् । जातिमाहुरथान्ये तु स्वव्याघातकमुत्तरम्” । ( ता० र० परि० २ । श्लो० ९७ ) ।

२ ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चतस्रो जातयः । तत्र—ब्राह्मणजातिर्द्विविधा,—गौड-द्राविडभेदात् । तत्र गौडा पञ्चविधाः,—“सारस्वताः कान्यकुब्जा

---

१ अत्र “विभाषा गुणेऽस्त्रियाम्” ( पाणि० २ । ३ । २५ ) इति तृतीयापञ्चमीविधायकसूत्रस्थगुणशब्दस्यार्थः । तथा च—जाड्यादेः स्वप्रयोज्यबन्धनाश्रये, धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रये आश्रितत्वाद्गुणत्वम्, इति विज्ञेयम् । ( व्यु० का० ३ )

२ अत्रेदं विज्ञेयम्—‘जन्यगुरुत्वमेव पतनं प्रति कारणम्’ इति कार्यकारणभावकल्पनात्, ‘आकाशादीनां गुरुत्वाभावेनैव, परमाण्वादीनां तु जन्यगुरुत्वाभावेन च पतनासंभवः,’ ‘पार्थिवजलपरमाण्वोर्गुरुत्ववत्तया तस्य चाकाशादिदेशसंयोगे पतनप्रतिबन्धकत्वाकल्पनेऽपि न परमाणुपतनापत्तिश्च’ इति । ( दम० १ । १ । पृ० ५६ )

३ अत्र—[ क ] ‘गोलकमेव चक्षुः’ इति बौद्धा आहुः । [ ख ] उच्छृङ्खलमते तु,—‘गोलकमेव चक्षुः, न तैजसम्, तच्चाप्राप्यप्रकाशकारि भवति,’ इति विज्ञेयम् । ( दि० १ । तेजोनि० पृ० ८० )

गौड उत्कल-मैथिलाः'' इति । द्राविडा अपि पञ्चविधाः,—गुर्जराः, महाराष्ट्रीयाः, कर्नाटकाः, तैलंगाः, केवलद्राविडाश्चेति ।

**तत्त्वम्**—१ 'पञ्च भूतानि' इति केचिदाहुः । ( वाच० ) । २ शाक्तास्तु,—"मद्यं मांसं तथा मत्स्यो मुद्रा मैथुनमेव च । पञ्चतत्त्वमिदं प्रोक्तं देवि ! निर्वाणहेतवे ॥ मकारपञ्चकं देवि ! देवानामपि दुर्लभम्'' इत्याहुः ।( गुप्तसाधनतन्त्रे[1], पटले ७ ) । ३ वैष्णवास्तु,—"गुरुतत्त्वं मन्त्रतत्त्वं मनस्तत्त्वं सुरेश्वरि ! । देवतत्त्वं ध्यानतत्त्वं पञ्चतत्त्वं प्रकीर्तितम्'' इत्याहुः । ( निर्वाणतन्त्रे ) ( वाच० )

**तन्मात्रम्**—१ शब्दस्पर्शरूपरसगन्धाः पञ्च तन्मात्राणि । २ सांख्यास्तु,—सूक्ष्मपञ्चरूप आकाशादिः, इत्याहुः । ( वाच० )

**तमः**—भाऽभावः; द्रव्यगुणकर्मनिष्पत्तिवैधर्म्यात् । (न्या० क०पृ० १० )

**तर्कः**[2]—[ क ] अनिष्टप्रसञ्जनम्[3] । स च, एकधर्माभ्युपगमे द्वितीयस्य नियतप्राप्तिरूपः ।

**तर्काभासः**—"अङ्गान्यतमवैकल्ये तर्कस्याभासता भवेत्'' ।

**दाक्षिण्यम्**—तत्त्वज्ञानाभिनिवेशिनी बुद्धिः । ( न्या० क० पृ० १० )

**दिग्विशेषणता**—( स्वरूपसंबन्धः ) सर्वाधारतानियामको दिक्कृतविशेषणताख्यः ( दैशिकविशेषणता ) संबन्धविशेषः । अत्र शिष्टं तु 'कालिकसंबन्ध' शब्दव्याख्याने दृश्यम् ।

**दुःखम्**—(गुणः) [१] उपघातलक्षणं दुःखम्, विषाद्यनभिप्रेतविषयसांनिध्ये सति अनिष्टोपलब्धीन्द्रियार्थसंनिकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगात्,

---

१ इदं तन्त्रं तु, स्वच्छन्दकामभक्षैर्दुष्टैर्निर्मितत्वेन श्रुतिस्मृतिपुराणविरुद्धत्वेन च शिष्टैर्नाद्रियते ।

२ स च [ क ] अनुमानानुकूलाप्रतिबन्धानिश्चयोत्पत्तौ (?) व्यभिचारशङ्कानिवृत्तिद्वा[illegible]योगी । ( न्या० ली० गु० पृ० ३६ ) । [ ख ] प्रमाणानामनुग्राहकश्च* । [ ग ] स च तर्कः, "अङ्गपञ्चक†-संपन्नस्तत्त्वाज्ञानाय कल्पते'' इति ।

३ अत्रानिष्टं च द्विविधम्,—प्रामाणिकपरित्यागः, इतरपरिग्रहश्चेति । (ता० र० श्लो० ७१)

---

* अनुग्रहस्तु,—"पक्षे [illegible]जिज्ञासाविच्छेदस्तदनुग्रहः'' इति । ( ता० र० श्लो० ७५ )

† अङ्गपञ्चकं तु—"व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये । अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम्'' इति । ( ता० र० श्लो० ७२ )

अमर्ष-उपघात-दैन्य-निमित्तमुत्पद्यते । तत् दुःखम्, अतीतेषु सर्प-व्याघ्र-चौरादिषु स्मृतिजम्, अनागतेषु संकल्पजम्, इति । ( प्रशस्त० २ । पृ० ३२ ) (९१) [२] । देहेन्द्रियादिकं दुःखजनकत्वाद्दुःखत्वेनोपचर्यते । ( ता० र० श्लो० ३२ )

**दृष्टान्ताभासः**—'निदर्शनाभास' शब्दवदस्यार्थोऽनुसंधेयः ।

**द्रव्यम्**—द्विविधम्,–नित्यद्रव्यम्, अनित्यद्रव्यं चेति । तत्र,–अनित्यद्रव्यं कार्यरूपत्वादवयवसमवेतम् । नित्यद्रव्यं त्वसमवेतमेव ।

**धर्मः**—( गुणः ) पुरुषविशेषगुणः, प्रयत्नगुणकर्तुः प्रियहितमोक्षहेतुः, अतीन्द्रियः, अन्त्यसुखसंविज्ञानविरोधी, पुरुषान्तःकरणसंयोगजः, विशुद्धाभिसंधिजः, वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः । अस्य तु साधनानि,—श्रुति-स्मृति-विहितानि वर्णाश्रमिणां सामान्यविशेषभावेनावस्थितानि द्रव्य-गुण-कर्माणि ।

तत्र सामान्यानि,—धर्मे श्रद्धा, अहिंसा, भूतहितं, सत्यवचनम्, अस्तेयम्, ब्रह्मचर्यम्, अनुपधा, क्रोधवर्जनम्, अभिषेचनम्, शुचिद्रव्यसेवनम्, विशिष्टदेवताभक्तिः, उपवासः, अप्रमादश्च । ब्राह्मणक्षत्रियविशामिज्याध्ययनदानानि । ब्राह्मणस्य विशिष्टानि प्रतिग्रहाध्यापनयाजनानि, स्ववर्णनियताश्च संस्काराः । क्षत्रियस्य सम्यक्प्रजापरिपालनम्, असाधुनिग्रहः, युद्धेष्वनिवर्तनम्, स्वकीयाश्च संस्काराः । वैश्यस्य क्रयविक्रयकृषिपशुपालनानि, स्वकीयाश्च संस्काराः । शूद्रस्य पूर्ववर्णेषु पारतन्त्र्यम्, अमन्त्रिकाश्च क्रियाः । आश्रमिणां तु,—ब्रह्मचारिणो गुरुकुलनिवासिनः स्वशास्त्रविहितानि गुरुशुश्रूषा-ऽग्नीन्धन-भैक्षाचरणादीनि, मधु-मांस-दिवास्वप्नाभ्यञ्जनादिवर्जनं च । विद्या-व्रत-स्नातकस्य कृतदारस्य गृहस्थस्य शालीन-यायावर-वृत्त्युपार्जितैर्धनैर्भूत-मनुष्य-देव-पितृषु ब्रह्माख्यानां पञ्चानां महायज्ञानां सायंप्रातरनुष्ठानम्, एकाग्निविधानेन पाकयज्ञसंस्थानां नित्यानां शक्तौ विद्यमानायामग्न्याधेयादीनां हविर्यज्ञसंस्थानाम्, अग्निष्टोमादीनां च सोमयज्ञसंस्थानां ऋत्वन्तरेषु च ब्रह्मचर्यम्, अपत्योत्पादनं च । ब्रह्मचारिणो गृहस्थस्य वा ग्रामाद्बहिर्निःसृत्य वनेषु वासः, वल्कलाजिन-

केशश्मश्रुनखरोमधारणम्, वन्याम्बुहुतातिथिशेषभोजनानि वनस्थस्य ( वानप्रस्थस्य ) । त्रयाणामन्यतमस्य श्रद्धावतः सर्वभूतेभ्यो नित्यमभयं दत्वा संन्यस्य स्वानि कर्माणि यमनियमेष्वप्रमत्तस्य षट्पदार्थपरिसंख्यानात् योगस्य साधनं प्रव्राजितस्य, इति । दृष्टं च प्रयोजनमनुद्दिश्यैतानि साधनानि, भावप्रसादं चा( चो )पेक्ष्यात्ममनसोः संयोगाद्धर्मोत्पत्तिः, इति । ( प्रशस्त० उ० पृ० ३५–३६ ) ( १४ )

**नमस्कारः**—स्वापकर्षबोधानुकूलव्यापार[1]विशेषः । (चि० १ । पृ० १०३)

**नाशः**—[ २ ] सांख्यास्तु,—"नाशः कारणलयः" ( सांख्य० अ० १ । सू० १२१ ) इत्याहुः ।

**निःश्रेयसम्**—[ क ] अहितनिवृत्ति[2]रात्यन्तिकी । (न्या० क० पृ० ४)
[ ख ] 'नित्यनिरतिशयसुखाभिव्यक्तिः,' इति दीधितिकृदप्याह । ( ल० म० )

**निग्रहस्थानम्**—'इष्टार्थभङ्गरूपो विरोधोऽपि निग्रहस्थानम्' इति तर्कभाषाकृदाह । ( त० भा० पृ० ९१ ).

**निदर्शनाभासः**—स च द्विविधः,–साधर्म्यनिदर्शनाभासः, वैधर्म्यनिदर्शनाभासश्चेति । ( प्रशस्त० २ । पृ० ४८ )

**निमित्तम्**—( कारणम् ) 'अपरिणामित्वे सति यत्कारणं, तत् निमित्तकारणम्,' इति मध्वमतानुयायिन आहुः । ( प्र० च० पृ० १४ )

**निरनुयोज्यानुयोगः**—स चतुर्विधः,–छलम्, जातिः, प्रतिज्ञाहान्याद्याभासः, अनवसरग्रहणम् ( अप्राप्तकालग्रहणम् ) । ( ता० र० परि० ३ । श्लो० १९१ ) ( सा० सं० पृ० ११७ )

**निर्वर्त्यम्**[3]—( विकृतिरूपं कर्म ) अत्र विवेको विज्ञेयः–'प्रकृति' कर्मास-

---

१ व्यापारे च कायिक-वाचिक-मानस-रूपे विशेषो जातिविशेष एवानुभवसाक्षिकः । ( चि० १ । पृ० १०३ )

२ तस्याः सद्भावे प्रमाणम्,—'दुःखसन्ततिर्धर्मिणी अत्यन्तमुच्छिद्यते, सन्ततित्वाद्दीपसन्ततिवत्' इत्यनुमानम्, इति तार्किका आहुः । ( न्या० क० पृ० ४ )

३ इदं च 'उत्पाद्यम्' इति कैश्चिच्छाब्दकारैर्व्यवह्रियते, इति विज्ञेयम् ।

मभिव्याहारे 'निर्वर्त्यम्' इत्युच्यते । यथा–'कटं, घटं वा' करोति, 'भस्म करोति' इत्यादौ,—निर्वर्त्यम् । 'प्रकृति' कर्मसमभिव्याहारे तु 'विकार्यम्' इत्युच्यते । यथा–'काशान्कटं करोति, मृदं घटं करोति,' 'काष्ठं भस्म करोति' इत्यादौ,—विकार्यम्, इति । ( ग० व्यु० कार० २ । पृ० ६९ )

**निर्विकल्पकम्**—मध्वमतानुयायिवेदान्तिनस्तु,–निर्विल्पकं ज्ञानं नाङ्गीकुर्वन्ति । ( प्र० प० पृ० ११ )

**निवारणम्**—'वारण' शब्दवदस्यार्थोऽनुसंधेयः ।

**निवृत्तिः**—अत्यन्ताभावः । यथा–"विपक्षः साध्यधर्मनिवृत्तिमान्" ( ता० र० श्लो० २१ ) इत्यादौ,–'निवृत्ति' शब्दस्यार्थः ।

**पक्षसमः**—( हेत्वाभासः ) २ पक्षासिद्धः ( आश्रयासिद्धः ) ।

**परिणामः**—मायावादिमतेऽत्रायं विवेको ज्ञेयः–'परिणामो नाम, उपादानसमसत्ताककार्यापत्तिः । विवर्तो नाम, उपादानविषमसत्ताककार्यापत्तिः,' इति । ( वेदा० प० परि० १ । पृ० २२ )

**परिशेषः**—प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः । स द्विविधः,–विधिमुखः, निषेधमुखश्च । तत्राद्यो यथा–'चैत्रमैत्रयोरयं चैत्रः' इत्युक्ते,–अन्यास्मिन् मैत्रप्रमा । द्वितीयो यथा–'नायं चैत्रः' इत्युक्ते,–तस्मिन् मैत्रप्रमा; इयमनुमानजन्या । ( प्र० च० परि० १ । पृ० ४४ )

**पुराणम्**—पुराणान्यष्टादश; तत्संख्या तु (४०००००) चत्वारि लक्षाणि । तदुक्तं श्रीभागवते—तत्र ( १ ) ब्राह्मम् १०००० । ( २ ) पाद्मम् ५५००० । ( ३ ) वैष्णवम् २३००० । ( ४ ) शैवम् २४००० । ( ५ ) श्रीमद्भागवतम् १८००० । ( ६ ) नारदम् २५००० । ( ७ ) मार्कण्डेयम् ९००० । ( ८ ) आग्नेयम् १५४०० । ( ९ ) भविष्यम् १४५०० । ( १० ) ब्रह्मवैवर्तम् १८००० ।

---

१ अत्र प्रयोगः—'विमतो मैत्रः, चैत्रमैत्रयोरन्यतरत्वे सति अचैत्रत्वात्, व्यतिरेकेण चैत्रवत्' इति । ( प्र० च० परि० १ । पृ० ४४ )

( ११ ) लैङ्गम् ११००० । ( १२ ) वाराहम् २४००० । (१३) स्कान्दम् ८११०० । ( १४ ) वामनम् १०००० । ( १५ ) कौर्मम् १७००० । ( १६ ) मात्स्यम् १४००० । ( १७ ) गारुडम् १९००० । ( १८ ) ब्रह्माण्डम् १२००० । इति । ( भागवते स्क० १२ । अ० १३ । श्लो० ४–८ )

**पूर्वत्वम्**—३ क्रियाजन्यसंयोगप्रतियोगिदेशत्वम् । यथा–मुंबईतो 'झळकी' ग्रामं गच्छत उत्तरोत्तरदेशमपेक्ष्य पूर्वपूर्वदेशस्य पूर्वत्वम् ।

**पृथक्त्वम्**—( गुणः ) इदं च अन्योन्याभावाद्भिन्नमेव; अभावस्य प्रतियोगिसापेक्षनिरूपणत्वात् । पृथक्त्वस्य त्ववधिनिरूप्यत्वात्, इति । ( न्या० ली० गुणनि० पृ० २३ ) ( ता० र० श्लो० ४९ )

**पृथिवी**—अनित्यपृथिव्यां विषयरूपायां पाषाणे,–'वज्रं तु पार्थिवमपि न लोहलेख्यम्; शक्तिभेदात्, अबिन्धनविद्युत्तेजोवत्,' इति । ( न्या० ली० पृ० १३ )

**प्रकरणसमः**—( हेत्वाभासः, जातिर्वा ) [ क ] "प्रतिरुद्धः प्रकरणसमः स्यात्प्रतिसाधनैः" । ( ता० र० श्लो० ८३ )

[ ख ] "तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना । बाधेन प्रत्यवस्थानं परस्य प्रक्रियासमः" । ( ता० र० २ । श्लो० ११७ )

**प्रकृतिः**—५ व्याकरणशास्त्रोक्त-कर्मविशेषः ( विकार्यम् ) । यथा–'काशान्कटं करोति' इत्यादौ,–काशादि 'प्रकृति' कर्म, इति चिन्त्यम् ।

**प्रतिरुद्धः**—१ 'प्रकरणसम' शब्दवदस्यार्थोऽनुसंधेयः । ( ता० र० श्लो० ८३ ) । २ प्रतिरोधकर्मा ।

**प्रत्यक्षम्**—साक्षाद्धीः, इति प्राभाकरा आहुः । ( चि० १ )

**प्रमाणम्**—'अनुभूतिरपि प्रमाणम्' इति प्राभाकरा आहुः । केचित्तु,—शकुन-लिप्यादिकमपि प्रमाणान्तरमिच्छन्ति । उपक्रमोऽनुमानमेव, नातिरिक्तं प्रमाणम्, इति । ( प्र० प० पृ० ९ ) (प्र० च० पृ० ४४)

१ न्यायमते, साक्षात्त्वं च जातिविशेष एव । प्राभाकरमते तु, साक्षात्त्वं न जातिः; नियतव्यञ्जकाभावात्, इति । ( चि० १ । पृ० ५५६ )

**प्रमात्वम्**—'मीमांसकमते, प्रामाण्यस्य स्वतस्त्वं द्विविधम्,—उत्पत्तौ, ज्ञप्तौ चेति । (१) तत्र,—उत्पत्तौ स्वतस्त्वं नाम,—A ज्ञानकारणमात्रजन्यत्वम्; B येन ज्ञानं जायते तेनैव तद्गतं प्रामाण्यमपि जायते, इति । (२) ज्ञप्तौ स्वतस्त्वं नाम,—A ज्ञानग्राहकमात्रग्राह्यत्वम्; B येन ज्ञानं गृह्यते तेनैव तद्गतं प्रामाण्यमपि गृह्यते, इति ।

नैयायिकमते, परतस्त्वमपि द्विविधम्,—उत्पत्तौ, ज्ञप्तौ चेति । (१) तत्र—'उत्पत्तौ परतस्त्वं नाम, ज्ञानकारणातिरिक्तकारणजन्यत्वम् । (२) ज्ञप्तौ परतस्त्वं नाम, ज्ञानग्राहकातिरिक्तग्राह्यत्वम्,' इति वस्तुस्थितिः । ( प्र० च० परि० १ । पृ० ४९ ) । अत्राधिकं तु न्यायकोशे, 'प्रमात्व' शब्दव्याख्याने द्रष्टव्यम् ।

**बहिरिन्द्रियम्**—( इन्द्रियम् ) शब्दादिबाह्यविषयग्राहकमिन्द्रियम् । तच्च श्रोत्र-त्वक्-चक्षु-रसन-घ्राणात्मकम् ।

**बुद्धिः**—सर्वं जन्यज्ञानं त्वङ्मनःसंयोगादुत्पद्यते[1] । अन्ये तु,—'चर्ममनःसंयोगादनित्यज्ञानमुत्पद्यते' इति वदन्ति । ( मु० १ । ११९ )

**ब्राह्मणम्**—१ ( वेदः ) त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि,—विधिवचनानि, अर्थवादवचनानि, अनुवादवचनानि, इति । (वात्स्या० २ । १ । ६१ ) । २ ब्राह्मणजातिस्तु 'जाति' शब्दव्याख्याने द्रष्टव्या ।

**भागासिद्धिः**—( हेत्वाभासः ) तस्या उदाहरणान्तरं यथा—'घट-शब्दौ अभिधेयौ मूर्तत्वात्' इति । ( प्र० च० पृ० २४ )

**भारतम्**—महाभारतं 'लक्षसंख्यकम्' इति सर्वत्र श्रूयते । तत्र यत्संख्यको ग्रन्थ एतावता कालेनोपलब्धस्तत्संख्या प्रदर्श्यते:,—

---

१ अत्र—[ क ] 'ज्ञानसामान्यं प्रति, त्वङ्मनःसंयोगः कारणम्' इति कार्यकारणभावो* मन्तव्यः ।

२ इयम् 'अव्याप्ति' पदेन व्यपदिश्यते, इति विज्ञेयम् ।

---

* अत्र प्रमाणं तु,—सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्तमानेन मनसा ज्ञानाजननम्' इति । ( मु० १ । ३ । पृ० ११४ )

| पर्व. | अध्याय. | ग्रन्थसंख्या. | अवान्तरपर्व. |
|---|---|---|---|
| १ आदिपर्व | २२७ | ८८८४ | १८ |
| २ सभापर्व | ७८ | २५११ | ९ |
| ३ वनपर्व | २६९ | ११६६४ | १६ |
| ४ विराटपर्व | ६७ | २०५० | ४ |
| ५ उद्योगपर्व | १८६ | ६६९८ | ११ |
| ६ भीष्मपर्व | ११७ | ५८८४ | ५ |
| ७ द्रोणपर्व | १७० | ८९०९ | ८ |
| ८ कर्णपर्व | ६९ | ४९६४ | १ |
| ९ शल्यपर्व | ५९ | ३२०० | ४ |
| १० सौप्तिकपर्व | १८ | ८७० | २ |
| ११ स्त्रीपर्व | २७ | ७७५ | ५ |
| १२ शान्तिपर्व | ३२९ | १४७३२ | ४ |
| १३ अनुशासनपर्व | १४६ | ८००० | २ |
| १४ आश्वमेधिकपर्व | १०३ | ३३२० | १ |
| १५ आश्रमवासिपर्व | ४२ | १५०६ | ३ |
| १६ मौसलपर्व | ८ | ३२० | १ |
| १७ महाप्रस्थानिकपर्व | ३ | ३२० | १ |
| १८ स्वर्गपर्व | ५ | २०९ | १ |
| | १९२३ | ८४८१६* | ९७ |
| १९ हरिवंश | | २५००० | ३ |
| | | | १०० |

* एतावानेवेदानींतनकालपर्यंतं प्राप्तो ग्रन्थः, लक्षसंख्यको ग्रन्थस्तु न प्राप्तः, इति; उपलब्धेऽप्येतावति ग्रन्थे बहवः केचनाध्यायाः प्रक्षिप्ताः सन्ति, न तु ते भारतकृता निर्मिताः, इति च विज्ञेयम् ।

**भावः**—मध्वमतानुयायिवेदान्तिनस्तु,–प्रथमप्रतीतौ यः 'अस्ति' इति प्रतीतिविषयः, स भावः, इत्याहुः । ( प्र० च० परि० २ । पृ० ४८ )

**भाष्यम्**—"सूत्रार्थो वर्ण्यते येन पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः" इति ।

**मूर्तिः**—'व्यक्ति' शब्दवदस्यार्थोऽनुसंधेयः । ( गौ० वृ० २।२।१३२ )

**यदि**—असंदेहे संदेहवचनम् । ( श्रीधरः ) । यथा–"यद्येषोपरता देवी" ( भाग० १ । ३ । ३४ ) इत्यादौ,–'यदि' शब्दस्यार्थः ।

**वार्तिकम्**—"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते । तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः" इति । ( वाचस्पत्ये पराशरपु० अ० १८ )

**वेदः**—अत्रेदं विज्ञेयम्–"न नित्यत्वं वेदानाम्, कार्यत्वश्रुतेः" ( सां० ख्य० सू० ५ । ४५ ), "स तपोऽतप्यत, तस्मात्तपस्तेपानात्त्रयो वेदा अजायन्त" इति श्रुतेश्च । 'वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि' इति । ( सांख्य० भा० ५ । ४५ । पृ० १८२ )

**वैधर्म्यनिदर्शनाभासाः**—लिङ्गानुमेयोभयाव्यावृत्ताश्रयासिद्धाव्यावृत्तविपरीतव्यावृत्ताः ।..............तद्यथा–'नित्यः शब्दोऽमूर्तत्वात्' यदमूर्तं तन्नित्यं दृष्टं यथा परमाणुः, यथा कर्म, यथा स्थाली, यथा तमोऽम्बरवत् । यद्द्रव्यं तत् क्रियावद्दृष्टमिति च । ( प्रशस्त० २ । पृ० ४८ )

**संप्रधारणा**—१ 'संप्रश्न' शब्दवदस्यार्थोऽनुसंधेयः । ( वै० सा० द० ल० पृ० १३१ ) । २ 'समर्थन'शब्दस्य ( २ ) [ २ ] अर्थो विज्ञेयः । ( अमरः, का० २ । क्षत्रियव० । श्लो० २९ )

**हिंसा**—अत्र विशेषो ज्ञेयः—महाभारते शान्तिपर्वणि (अ० २७१ (२७३)। श्लो० १–२०) 'यज्ञपशुवधस्यापि दुष्कृतत्वं वधत्वं चोक्तम्' इति ।

इति श्रीमहामहोपाध्याय-न्यायकोशकृता विरचितं
न्यायकोशपरिशिष्टं समाप्तम् ।

शके १८१४ नन्दननामसंवत्सरे भाद्रपदशुक्लपक्षे समापितमिदं न्यायकोशपरिशिष्टम्, श्रीकृष्णार्पणमस्तु ॥ श्रीपाण्डुरङ्गो विजयतेतराम् ॥ शमस्तु ॥

परिशिष्टेन सहितस्य न्यायकोशग्रन्थस्य समग्रसंख्या तु ( २०४८४ )



